ವಾಕ್ಯಾರ್ಥಕುಶಲರಾದ, ಸರಳ ಸ್ವಭಾವದರವರಾದ, ಶ್ರೀ 1008 ಶ್ರೀ ವಿದ್ಯಾಶ್ರೀಶತೀರ್ಥರು ತಮ್ಮ ಪೂರ್ವಾಶ್ರಮದಲ್ಲಿ (ಡಾ. ಡಿ. ಪ್ರಹ್ಲಾದಾಚಾರ್ಯರು) ಪರಿಶುದ್ಧವಾಗಿ ಸಂಪಾದಿಸಿರುತ್ತಾರೆ. ಅವರ ಕೃತಿಯನ್ನು ಅವಲಂಬಿಸಿ ಪ್ರಕೃತ ತತ್ತ್ವಕಣಿಕಾ ವ್ಯಾಖ್ಯಾನವನ್ನು ಈ ಕೃತಿಯಲ್ಲಿ ಸೇರಿಸಲಾಗಿದೆ. ಮಹದುಪಕಾರ ಮಾಡಿದ ಪೂಜ್ಯ ಶ್ರೀಗಳಿಗೆ ಅನಂತ ಸಾಷ್ಟಾಂಗ ನಮಸ್ಕಾರಗಳು.

ಪಂಡಿತ ಸಮಾಜಕ್ಕೆ ಚಿರಪರಿಚಿತವ್ಯಕ್ತಿತ್ವ. ಅತ್ಯಂತ ಎತ್ತರದ ವ್ಯಕ್ತಿಯಾದರೂ ಸಹ ಸರಳ ಸ್ವಭಾವ. ನಡೆದಾಡುವ ದ್ವೈತವಾಙ್ಮಯ ಕೋಶ. ನಿರಂತರ ಶ್ರೀಮನ್ನ್ಯಾಯಸುಧಾದಿ ಉದ್ಗ್ರಂಥಪಾಠ ಪ್ರವಚನಾಸಕ್ತರು. ಶ್ರೀಜಯತೀರ್ಥವಿದ್ಯಾಪೀಠದ ಕುಲಪತಿಸ್ಥಾನಾಲಂಕೃತರಾದ ಗುರುಗಳಾದ ಪಂ. ಪೂ. ಆಚಾರ್ಯರವರು (ಪಂ. ರಂಗಾಚಾರ್ಯ ಗುತ್ತಲ್). ಪೂಜ್ಯ ಆಚಾರ್ಯರವರು ನನಗೆ ನಿರಂತರವಾಗಿ ವಿದ್ಯಾಪೀಠದಲ್ಲಿ ಎಲ್ಲ ಉದ್ಗ್ರಂಥಗಳನ್ನು ಪಾಠಹೇಳಿ ಅನುಗ್ರಹಿಸಿದವರು. ಪ್ರೀತಿ ಅಕ್ಕರೆಯಿಂದ ಸಲುಹಿದವರು. ಈ 70ರ ಇಳಿವಯಸ್ಸಿನಲ್ಲಿಯೂ ಸಹ ಎಂದೂ ಪಾಠ ಪ್ರವಚನ ಜಪವನ್ನು ಚಾಚೂ ತಪ್ಪದೆ ಮಾಡುತ್ತಿರುವವರು. ಈ ಕೃತಿಯ ಸಂಪಾದನೆಯನ್ನು ನೋಡಿ ವಿಷಯವನ್ನು ತಿದ್ದಿ ವಿಶೇಷವಾಗಿ ಅನುಗ್ರಹಿಸಿದ್ದಾರೆ. ಅವರ ಚರಣಾರವಿಂದಗಳಿಗೆ ಸಾಷ್ಟಾಂಗ ಭಕ್ತಿಶ್ರದ್ಧಾಪೂರ್ವಕವಾದ ನಮನಗಳು.

ಶ್ರೀಜಯತೀರ್ಥವಿದ್ಯಾಪೀಠದ ಪ್ರಾಂಶುಪಾಲರಾದ ಡಾ. ಸತ್ಯಧ್ಯಾನಾಚಾರ್ಯ ಕಟ್ಟಿಯವರ ವ್ಯಕ್ತಿತ್ವ ಎಲ್ಲರಿಗೂ ಚಿರಪರಿಚಿತವೆ. ಸರಳ ಸ್ವಭಾವ. ಪ್ರಾರಬ್ಧಾಂತಗಾಮಿತ್ವ ಅವರನ್ನು ಗುರುತಿಸುವ ಅಸಾಧಾರಣಗುಣ. ಪೂ. ಕಟ್ಟಿ ಆಚಾರ್ಯರು ದ್ವೈತವೇದಾಂತಾಧ್ಯಯನ ಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನ ಸಂಸ್ಥೆಗೂ ಸಹ ಗೌರವ ನಿರ್ದೇಶಕರು. ಪಾಠ ಪ್ರವಚನಕಾರ್ಯದಲ್ಲಿ ನಿರಂತರ ತಮ್ಮನ್ನು ತೊಡಗಿಸಿ ಜೀವನವನ್ನು ಸಾರ್ಥಕ ಗೋಳಿಸುತ್ತಿರುವವರು. ಈ ಕೃತಿಗೆ ಗೌರವ ಸಂಪಾದಕರೂ ಆಗಿರವ ಕಟ್ಟಿ ಆಚಾರ್ಯರು ಸಂಪಾದನಕಾರ್ಯಕ್ಕೆ ಸೂಕ್ತ ಸಲಹೆಗಳನ್ನು ನೀಡಿ ಪ್ರೋತ್ಸಾಹಿಸಿದವರು. ಈ ಕೃತಿ ಸಂಪಾದನೆಯ ಕಾರ್ಯವನ್ನು ಪ್ರೋತ್ಸಾಹಿಸಿ ಅನುಗ್ರಹಿಸಿದ್ದಾರೆ. ಅವರಿಗೆ ನನ್ನ ಸಾಸ್ಟಾಂಗ ನಮಸ್ಕಾರಗಳು.

ವಿಶ್ವಮಧ್ವಮಹಾಪರಿಷತ್ತಿನ ನಿರ್ದೇಶಕಸ್ಥಾನಾಲಂಕೃತರಾದ ಯುವನೇತಾರರಾದ ಉತ್ತಮವಾಗ್ಮಿಗಳೂ, ಕಾರ್ಯಕುಶಲರೂ, ಪಾಠ-ಪ್ರವಚನಾಸಕ್ಕರೂ ಆದ ಪಂ. ವಿದ್ಯಾಧೀಶಾಚಾರ್ಯರು ಈ ಕೃತಿಯನ್ನು ಸಂಪಾದಿಸಲು ಅನುಮೋದಿಸಿ ಅನೇಕ ಸೂಕ್ತ ಸಲೆಹಳನ್ನು ನೀಡುತ್ತ, ಮಂಕಾಲಿ ಧರ್ಮಾಚಾರ್ಯರ ವ್ಯಾಖ್ಯಾನದ ಹಸ್ತಪ್ರತಿಯನ್ನು ನೀಡಿ ಅನುಗ್ರಹಿಸಿದ್ದಾರೆ: ಅವರಿಗೆ ಸಾಷ್ಟಾಂಗಪ್ರಣಾಮಗಳು.

50ಕ್ಕೂ ಮಿಗಿಲಾದ ಕೃತಿಗಳನ್ನು ರಚಿಸಿದ, ಸಂಶೋಧಕರಾದ, ಪ್ರವಚನಕೇಸರಿಯಾದ, ಅನೇಕ ಪ್ರಶಸ್ತಿಭಾಜನರಾದ ಎಲ್ಲ ಮಾಧ್ವರಿಗೆ ಚಿರಪರಿಚಿತರಾದ ವ್ಯಕ್ತಿ ಪಂ. ಮಳಗಿ ಜಯತೀರ್ಥಾಚಾರ್ಯರು. ಮಾವಂದಿರಾದ ಜಯತೀರ್ಥಾಚಾರ್ಯರು ಗ್ರಂಥಸಂಪಾದನೆಗೆ ಪ್ರೋತ್ಸಾಹಿಸುತ್ತ ಅನೇಕ ಸೂಕ್ತ ಸಲಹೆಗಳನ್ನು ನೀಡಿ ಅನುಗ್ರಹಿಸಿರುವರು. ಅವರಿಗೆ ಅನೇಕ ನತಿತತಿಗಳು.

ಪೂರ್ಣಪ್ರಜ್ಞಸಂಶೋಧನ ಮಂದಿರದ ನಿರ್ದೇಶಕರಾದ ಅನೇಕಶಾಸ್ತ್ರಗಳಲ್ಲಿ ನಿಪುಣರಾದ ಅನೇಕ ಗ್ರಂಥಗಳನ್ನು ಸಂಶೋಧಿಸಿದ ಡಾ. ಆನಂದತೀರ್ಥಾಚಾರ್ಯ ನಾಗಸಂಪಿಗೆ ಅವರು ಹಾಗು ಪೂರ್ಣಪ್ರಜ್ಞವಿದ್ಯಾಪೀಠದ ಅಧ್ಯಾಪಕರಾದ ಯುವ ವಿದ್ವಾಂಸರಾದ ಡಾ. ತಿರುಮಲಾಚಾರ್ಯ ಕುಲಕರ್ಣಿಯವರು ವೇಂಕಟಪತ್ಯಾಚಾರ್ಯರ ವ್ಯಾಖ್ಯಾನದ ಸಾಫ್ಟ್‌ಕಾಪಿಯನ್ನು ನೀಡಿ ಈ ಗ್ರಂಥವನ್ನು ಸಂಪಾದಿಸಲು ಅನುಗ್ರಹಿಸಿರುವರು. ಅವರಿಗೂ ನನ್ನ ನಮಸ್ಕಾರಗಳು.

ಪ್ರೊ. ಕೆ.ಟಿ. ಪಾಂಡುರಂಗಿಯವರು ಪ್ರತಿಷ್ಠಾಪಿಸಿದ ಇನ್ನೊಂದು ಮಾನಿತವಾದ ಸಂಸ್ಥೆ ವಿದ್ಯಾಧೀಶಸ್ನಾತಕೋತ್ತರ ಸಂಶೋಧನ ಕೇಂದ್ರ. ಇದರ ನಿರ್ದೇಶಕರಾದ ಅನೇಕ ಕೃತಿಗಳನ್ನು ಸಂಪಾದಿಸಿದ ವಿದ್ವಾಂಸರಾದ ಡಾ. ಕೃಷ್ಣಾಚಾರ್ಯ ಉಪಾಧ್ಯಾಯರು ಗ್ರಂಥಸಂಪಾದನೆಗೆ ಅನೇಕ ಸೂಕ್ತಸಲಹೆಗಳನ್ನು ನೀಡಿ ಅನುಗ್ರಹಿಸಿರುವರು. ಅವರಿಗೂ ನನ್ನ ನಮಸ್ಕಾರಗಳು.

ಮಾಧ್ವದೇಹವನ್ನು ನೀಡಿ ವಿದ್ಯಾಪೀಠಕ್ಕೆ ನನ್ನನ್ನು ಕಳುಹಿಸಿ ಶಾಸ್ತ್ರಾಭ್ಯಾಸವನ್ನು ಮಾಡಿಸಿದ ಮಾತಾಪಿತೃಗಳಿಗೆ (ಶ್ರೀಮತಿ. ಶಾಮಲಾ ಮತ್ತು ಪುರುಷೋತ್ತಮಾಚಾರ್ಯ ದಂಪತಿಗಳಿಗೆ) ಸಾಷ್ಟಾಂಗ ಪ್ರಣಾಮಗಳು.

ಈ ಕೃತಿಸಂಪಾದನೆಗೆ ಸಹಕರಿಸಿದ ದ್ವೈತವೇದಾಂತಾಧ್ಯಯನ ಮತ್ತು ಸಂಶೋಧನ ಕೇಂದ್ರದ ಕಾರ್ಯದರ್ಶಿಗಳಾದ ಡಾ. ಏ.ಬಿ. ಶಾಮಾಚಾರ್ಯ, ಮತ್ತು ಡಾ. ಎಸ್.ಆರ್. ಪಾಂಡುರಂಗಿಯವರಿಗೂ ಅನೇಕ ಹೃತ್ಪೂರ್ವಕ ಕೃತಜ್ಞತೆಗಳು.

ಈ ಸಮಗ್ರಕೃತಿಯನ್ನು ಟೈಪ್ ಮಾಡಿ ಕೃತಿಗೆ ಸುಂದರವಾಗಿ ಅಂತಿಮ ಸ್ಪರ್ಶವನ್ನು ನೀಡಿದ ಪ್ರೇಮ್‌ಕುಮಾರ ಅವರಿಗೆ ಮತ್ತು ಅಚ್ಚುಕಟ್ಟಾಗಿ ಮುದ್ರಿಸಿದ ವಾಗರ್ಥಮುದ್ರಣಾಲಯದವರಿಗೆ ಹೃತ್ಪೂರ್ವಕವಾಗಿ ನನ್ನ ಕೃತಜ್ಞತೆಗಳು.

ಈ ಕೆಲಸದಲ್ಲಿ ಪ್ರತ್ಯಕ್ಷವಾಗಿ ಹಾಗು ಪರೋಕ್ಷವಾಗಿ ಉಪಕರಿಸಿದ ಎಲ್ಲರಿಗೂ ನನ್ನ ನಮಸ್ಕಾರ ಹಾಗು ಕೃತಜ್ಞತೆಗಳು.

# विषयानुक्रमणिका

## प्रथमाध्यायः

## द्वितीयोध्यायः

## तृतीयोध्यायः

## चतुर्थाध्यायः

---

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तन्त्रसारसङ्ग्रहः

मङ्गलाचरणम्

जयत्यब्जभवेशेन्द्रवन्दितः कमलापतिः ।
अनन्तविभवानन्दशक्तिज्ञानादिसद्गुणः ॥ १ ॥

## श्रीरघुनाथतीर्थविरचिता तत्त्वकणिका

ब्रह्मापीन्द्रो महत्या ध्रुवमिह सहितो मायया यस्य सेवां
कुर्याल्लक्ष्मीश्च पद्मं यदुदरममलं शत्रुहन्ता शुभास्यः ।
आदिर्देवः पुमान् योऽमितगुणगणयुक् भद्रपाणिश्च देवः
सोऽयं दक्षोऽद्य विष्णुः प्रमितिमतिदिशेद्रोधहीनो हरिर्नः ॥ १ ॥

महाज्वालं दक्षमादिपुरुषं मानुषेश्वरम् ।
रामं श्रीजानकीकामं सेवे हनुमदर्चितम् ॥ २ ॥

रसं पुमात्मानमथादिदेवं ध्रुवं धवं दृष्टिदशुक्लमस्य ।
गुरोर्गुरुं बादरसद्मवासं तं व्याससंज्ञं प्रणमामि मूर्ध्ना ॥ ३ ॥

नन्दितीर्थमुखानन्ददायिनः शिष्यसन्ततेः ।
अमन्दिकरुणां कुर्युः मन्त्रव्याख्यां चिकीर्षति ॥ ४ ॥

इह संसारापारकूपारे पतितं जनं जननी तनयमिवोद्दिधीर्षुः भगवत्प्रसादमन्तरा संसारतरणोपायाभावात् तस्य च वक्ष्यमाणरीत्या मन्त्राणां जपव्याख्यावमर्शैः उत्तरोत्तरमतिशयितैः विनाऽयोगेनार्थावमर्शनद्वारा भगवत्प्रसादहेतुत्वात् तानुद्दिधीर्षुः भगवान्नारायणस्तन्त्रसारसंहितामचीकॢत्। तां च सर्वप्राणिभिः अनवगाह्यमानां मन्वानो मुनिः संक्षेप(संक्षिप्नुवन्)रुचिः ग्रन्थादौ स्वेष्टदेवतोत्कर्षमुत्कीर्तयति— **जयतीति** ।। अनन्तविभवेत्यादिनाऽनन्तमन्त्रप्रतिपाद्यतोपयुक्तबहुरूपादिसम्पत्तिरुच्यते। तद्घटयति— **अब्जभवेशेति** ।। लक्ष्म्यादिमन्त्रप्रतिपाद्यता वा अनेनोच्यते। लक्ष्म्यादिवन्दितत्वेन तत्तत्पदप्रवृत्तिनिमित्तानां तत्र पुष्कलत्वादिति भावः।

नन्विदमनारम्भणीयं विषयप्रयोजनाभावात्। मन्त्रसिद्धिः प्रयोजनमिति चेन्न। स्वतः प्रयोजनत्वासंमतेः। मन्त्रसिद्धेरणिमाद्यैश्वर्यहेतुत्वेऽपि मुमुक्षूपादेयताऽसिद्धेः। न हि भगवत आचार्यस्य मुमुक्ष्वनुपयुक्तप्रमेयनिरूपणे प्रवृत्तिः सम्भाव्यते। न च भगवदर्चादिरूपक्रियायोगस्यावश्यं मुमुक्षूपादेयत्वात्तस्य च मन्त्रसाध्यत्वात् तन्निरूपणं नाप्रयोजनमिति वाच्यम्। भगवदर्चाया आवश्यकत्वासंमतेः। 'ध्यानप्रवचनाभ्यां च यथायोग्यमुपासनम्'(स.स्मृ-१२) इत्यादिना 'ऋतं च स्वाध्यायप्रवचने च'(तै.उ.१-२१) इत्यादौ सर्वत्र स्वाध्यायप्रवचनयोरेवावश्यकत्वप्रतीतेश्च। अस्तु वा तदावश्यकता। भागवतादौ तात्पर्यनिर्णयादौ च सा निरूपितैव। सदाचारशिक्षणार्थं प्रवृत्ते ग्रन्थे

धर्मेणेज्यासाधनानि साधयित्वा विधानतः।
स्नात्वा सम्पूजयेद्विष्णुं वेदतन्त्रोक्तमार्गतः।। (स.स्मृ-१३)

इति स्पष्टं चोक्तम्। तस्मात् भगवदर्चादिरूपक्रियायोगविधानं नाऽवश्यकम्। नापि मन्त्रजपविधानम्। 'गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत्'(स.स्मृ-११) इत्यादिना अष्टाक्षरादिमन्त्राणामुपलक्षणतया जपविधानान्। साकल्येनेहापि विधानादर्शनात्। कथञ्चिन्निरूपणीयत्वेऽपि सदाचारस्मृतिशेषत्वस्यैवोचितत्वेन ग्रन्थपृथक्त्वायोगः। न च ग्रन्थैक्ये साधारण्यप्रतीत्या कर्माद्यतिशयादिसिद्धिर्न

स्यादिति वाच्यम्। मन्त्रादेः कर्माद्यतिशयस्यैवायोगात्। 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते' (तं.सा.३-१५७) इति कर्मशेषत्वस्येहैवोक्तेश्च। कथञ्चिदतिशयसद्भावेऽपि मन्त्रोद्धारप्रकारः, तदावृत्तिप्रकारः, तदक्षरन्यासादिश्च पञ्चरात्रादौ निरूपित एव।

अत्रोच्यते। मन्त्रजपस्तावदावश्यक एव।

अमन्त्रका क्रिया क्वापि नैवार्चादिषु विद्यते।
यस्य राष्ट्रे महीपस्य मन्त्री वसति निर्भयः॥

तद्राष्ट्रे धनधान्यं तु समृद्धं वर्धतेऽधिकम्।
भूतानि च पलायन्ते ग्रहाश्चैव भयङ्कराः॥

राष्ट्राद्राजपुराद्राज्ञः सकाशाच्च निपीडिताः।
न फलं शक्यते वक्तुं कात्स्न्र्येन कमलासन॥

चतुर्मुखमुखैस्सर्वैर्दिव्यैर्वर्षशतैरपि।
मन्त्रेण स्थाप्यते देवो मन्त्रेणैव विसृज्यते॥

ज्ञानानां तत् परं ज्ञानं मन्त्रज्ञानं विदुर्बुधाः।
ऐहिकामुष्मिकं सर्वं मन्त्रेणैव प्रसिद्ध्यति॥ इत्यादेः।

न च मन्त्राणामनुष्ठेयार्थप्रकाशकतया कर्माङ्गत्वादप्राधान्यं शङ्कनीयम्। जपे विनियुक्तानां मन्त्राणां तदभावात्। अस्तु वा तदङ्गत्वम्। तथापि न प्राधान्यहानिः। न चैतिकर्तव्यतारूपत्वात् समिधादिवदप्राधान्यं दुर्वारमिति वाच्यम्। इतिकर्तव्यताप्राधान्यस्य 'प्रदानवदेव हि तदुक्तम्' (ब्र.सू.३-३-४२) इत्यादौ सूत्रकृतैव समर्थितत्वात्। न च यागाद्यपेक्षयाऽप्राधान्येऽपि भगवदर्चापेक्षया प्राधान्यं नोपपद्यते।

................प्राणायाम इतीरिताः।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।
यमाश्चैवं तपस्तुष्टिः स्वाध्यायो हरिपूजनम्। (तं.सा.४-१४८)

इत्यादिना नवसाधनान्यभिधाय 'प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः' इत्यनेन प्राणायामाहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहतपस्तुष्ट्याख्यानामष्टानां द्विगुणाधिक्य-मुक्त्वा 'स्वाध्यायोऽतः कोटिगुणः'(तं.सा.४-१५८) इति नवमस्य ततोऽप्याधिक्यमुक्त्वा 'ततोऽनन्तगुणा हरेः पूजा'(तं.सा.४-१५८) इति भगवदर्चाया अनन्तगुणत्वाभिधानात् । किञ्च भगवदर्चातः प्रधानं ध्यानमेव श्रूयते— 'तत्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः'(तं.सा.४-१५८) इत्युक्तेः । किञ्च ततोऽपि शास्त्रावमर्शनमधिकं साधनमस्ति । 'ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् । वरं दशगुणम्... ।'(तं.सा.४-१५३) इत्युक्तेः । किञ्च ततोऽपि व्याख्यानमधिकं साधनमस्ति । '...तस्माद्व्याख्यैकस्य शतोत्तरा । अपरोक्षदृशाऽप्येषा कर्तव्या विष्णुतुष्टिदा', 'य इमं परमं गुह्यं मद्भक्तेष्व-भिधास्यति'(तं.सा.४-१५४,१५५) इत्यादेः । तथा च प्रबलानां बहूनां साधनानां सद्भावेऽपि जपप्रकारनिरूपणे कारणाभावः । न चेतिकर्तव्यताप्राधा-न्यस्याङ्गीकारात् भगवदर्चादीतिकर्तव्यतारूपस्य जपस्य निरूपणं नासङ्गतमिति वाच्यम् । 'शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम्' (तं.सा.४-१५३) इतीतिकर्तव्यतामात्रस्य स्वातन्त्र्येण धर्मकारणत्वनिराकरणात् । शौचासनादेरपि निरूपणीयत्वप्रसङ्गाच्च । 'सर्वतः श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने'(तं.सा.४-१५२) इत्युक्तिविरोधाच्च ।

परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।
सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ।।

मुख्यमेषैव नान्यत्स्यात्सर्वं व्यर्थं तया विना ।
सैकाऽप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ।।

दर्शनं च तया हीनं व्यर्थमन्यत्किमुच्यते ।
योग्यं तु दर्शनं नैव तया हीनं भविष्यति ।। (तं.सा.४-१७२, १७४)

इत्यादिना भक्तेरेव सर्वप्राधान्योपपादनाच्च । तस्मात् सर्वप्राधान्यात् जपादि निरूपणीयमित्यनुपपन्नमिति वाच्यम् । जपस्तावत् मन्त्रोच्चारणरूपः, सततं

विष्णुशास्त्रावमर्शनरूपश्चेत्यनेकविधः। तत्र मन्त्रोच्चारणादिरूपस्य प्रधानसाधनत्वेऽपि नाभिमतसमाधिना। 'अप्रयत्नात्समाधिश्च दर्शनं चिरयाऽनया। अथवा सततं शास्त्रविमर्शेन भविष्यति ॥' (तं.सा.४-१७१) इति विकल्पनात्। न ह्यप्रधानं प्रधानेन विकल्प्यते। तुल्यबलयोरेव हि विकल्पः। विवृतं चैतत्सर्ववेदाधिकरणे। भक्तेः मुक्तावनुवर्तमानत्वेन फलरूपत्वात् तत्प्राधान्योक्तिर्न विरुद्ध्यते। तस्मात् 'व्याख्यैकस्य शतोत्तरा' इति व्याख्यानस्य शास्त्रावमर्शनादुत्तमत्ववर्णनं च न विरुद्धम्। सततशास्त्रावमर्शनस्य प्राधान्याङ्गीकारेऽपि शास्त्रावमर्शनमात्रस्य तदभावात्। अत एव 'अमन्त्रका क्रिया कापि नैवार्चादिषु विद्यते। एका' इत्यनेन मन्त्रोच्चारणरूपजपस्य कर्माङ्गत्वोक्तिर्न विरुद्ध्यते।

प्रारब्धकर्मण्यक्षीणे जपेन कथयाऽपि वा।
वर्तयन्ति महात्मानः तद्भक्तास्तत्परायणाः ॥ (गी.भा.६.३)

इत्यादिना ध्यानप्रतिबन्धदशायामेव जपाद्युक्तेः। न चैवं 'ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम्। वरं दशगुणम्' इत्येतत्कथमिति वाच्यम्। सततं शास्त्रावमर्शनात् निकृष्टस्य ध्यानादुत्कृष्टस्य शास्त्रावमर्शनरूपस्य जपस्यात्र विवक्षितत्वेऽपि उच्चारणादिरूपस्य जपस्य ध्यानात् निकृष्टत्वे बाधकाभावात्। 'सर्वतः श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने' इति वचनं तु न विरुद्धम्। समाधिना विकल्पितविवक्षितजपस्याऽद्यशब्देन ग्रहणात्। ध्यानान्तस्यैव वा ग्रहणोपपत्तेः। तथा चापरोक्षज्ञानव्यवहितसाधनसमाधिसमकक्ष्यस्य सततशास्त्रावमर्शनरूपस्य जपस्य सर्वसाधनप्राधान्यात् मुमुक्षूपादेयत्वाच्च तन्निरूपणमिह क्रियत इति शास्त्रमपीदं मुमुक्षूपादेयमिति सिद्धम्।

किञ्च भगवत्प्रसादो मोक्षाव्यवहितसाधनम्। 'यस्य प्रसादात्' इत्यादेः। प्रसादश्च स्तुत्योपलब्धो राज्ञीतीहापि स्तुतिसाध्यः। स्तुतिश्च गुणिनिष्ठगुणाभिधानम्। मन्त्रजपस्य गुणिनिष्ठगुणाभिधानरूपत्वेन साक्षात् प्रसादान्तरङ्गसाधनत्वात्प्राधान्यम्। न च मन्त्राणां कर्मकालेऽनुष्ठेयार्थप्रकाशनद्वारा

गुणिनिष्ठगुणाभिधानरूपत्वेऽपि जपकालेऽदृष्टार्थमुच्चारणमिति कथं स्तुतिरूपत्वमिति वाच्यम् । मन्त्राणां जपकालेऽदृष्टार्थत्वासंमतेः ।

मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ ततः ।। (तै.भा.१-१९)

इति मन्त्रार्थज्ञानावश्यकतोक्तेः ।

मननं सर्वसत्त्वानां त्राणं संसारसागरात् ।
मननत्राणसंयोगान्मन्त्र इत्युच्यते बुधैः ।।

अथवा गोपनीयत्वाद्धेतोः मन्त्रयतेः परम् ।
रप्रत्ययान्तः पुल्लिङ्गस्तथाऽयं लोकवेदयोः ।।

इति वचनात् यस्य मननं संसारसागरत्राणसाधनं तन्मन्त्रशब्दवाच्यमिति मन्त्रशब्दार्थपर्यालोचनया तदर्थज्ञानस्यावश्यकताप्रतीतेश्च । अत एव

आपिः क्विबन्तो व्याप्त्यर्थः स्मर्यते कर्तृसाधनः ।
ओंकारो वर्णव्यत्यासः स्यादाकारस्य च पद्मज ।।

इत्यादिना पञ्चरात्रे चर्यापादे विंशेऽध्याये मूलमन्त्रार्थकथनम्, 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' (अनु १-१-९) इत्यादिना प्रणवव्याहृत्यादिमन्त्राणां व्याख्यानं च युक्तम् ।

ननु— एवमुक्तेन मार्गेण जपतो मन्त्रमुत्तमम् ।
साधकस्य पुरस्स्वप्रास्सम्भवन्त्यविचारिताः ।।

इत्यादिना अभ्युदयफलस्यैव श्रवणात् कथं समाधिसमकक्ष्यत्वमिति चेन्न । 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः' इत्यादिवत् स्तुत्यर्थत्वोपपत्तेः । तत्तत्कामनानुसारिफलदातृत्वे हि तत्तदधिकारिभिः सेव्यत्वलाभात् । न हि प्रयोजनान्तरसाधकमित्येतावता मुमुक्षुर्व्यावर्त्यते । मोक्षसाधनत्वाक्षतेः । अत एव 'मा कर्म फलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि' इति फलेच्छैव निषिद्ध्यते । अत एव—

विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।
जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।। (तं.सा.४-१२४)

अपिः क्विबन्तो व्याप्त्यर्थः स्मर्यते कर्तृसाधनः ।
ओङ्कारो वर्णव्यत्यासः स्यादाकारस्य च पद्मज ।।

वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ।
वसुपूर्णकरं रत्नपर्वतस्थं विभावयेत् ।।

वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।
श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ।। (तं.सा.४-१२४-१२६)

इत्यादौ फलान्तरकथनं न विरुद्धम् । तत्तदधिकारिभेदेन सफलत्वप्रतिपादनेन स्तुतिबुद्ध्युपपत्तेः ।

यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।
तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ।। (तं.सा.४-१२७)

इत्यादिना स्पष्टमेव स्तुतिबुद्ध्युपपत्तेः ।

अकुर्वंश्च क्रिया भक्त्या निरपेक्षो भजन् हरिम् ।
सर्वमेतदवाप्नोति विशेषेण न संशयः ।। (तं.सा.४-१३०)

इति स्पष्टतरं तत्प्रतीतेश्च ।

नन्वस्तु विष्णुमन्त्राणां भगवन्निष्ठगुणाभिधानरूपत्वादावृत्तिः भगवत्प्रसादसाधनम् । तथापि लक्ष्म्यादिमन्त्राणामुद्धारो निरर्थक इति चेन्न ।

ब्रह्मान्ता गुरवः सर्वे सम्प्रदायप्रवर्तकाः ।
तत्तद्गुणानुसारेण पूज्या मान्याश्च सर्वशः ।।

सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला ।। ६

लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ।
एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन ।। (तं.सा.४-११२-११३)

गुणिनिष्ठगुणाभिधानरूपत्वेऽपि जपकालेऽदृष्टार्थमुच्चारणमिति कथं स्तुतिरूपत्वमिति वाच्यम् । मन्त्राणां जपकालेऽदृष्टार्थत्वासंमतेः ।

मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ ततः ।। (तै.भा.१-१९)

इति मन्त्रार्थज्ञानावश्यकतोक्तेः ।

मननं सर्वसत्त्वानां त्राणं संसारसागरात् ।
मननत्राणसंयोगान्मन्त्र इत्युच्यते बुधैः ।।

अथवा गोपनीयत्वाद्धेतोः मन्त्रयतेः परम् ।
रप्रत्ययान्तः पुल्लिङ्गस्तथाऽयं लोकवेदयोः ।।

इति वचनात् यस्य मननं संसारसागरत्राणसाधनं तन्मन्त्रशब्दवाच्यमिति मन्त्रशब्दार्थपर्यालोचनया तदर्थज्ञानस्यावश्यकताप्रतीतेश्च । अत एव

आपिः क्विबन्तो व्याप्त्यर्थः स्मर्यते कर्तृसाधनः ।
ओंकारो वर्णव्यत्यासः स्यादाकारस्य च पद्मज ।।

इत्यादिना पञ्चरात्रे चर्यापादे विंशेऽध्याये मूलमन्त्रार्थकथनम्, 'ओतत्ववाची ह्योङ्कारो वत्त्यसौ तद्गुणोतताम्' (अनु १-१-९) इत्यादिना प्रणवव्याहृत्यादिमन्त्राणां व्याख्यानं च युक्तम् ।

ननु— एवमुक्तेन मार्गेण जपतो मन्त्रमुत्तमम् ।
साधकस्य पुरस्स्वप्रास्सम्भवन्त्यविचारिताः ।।

इत्यादिना अभ्युदयफलस्यैव श्रवणात् कथं समाधिसमकक्ष्यत्वमिति चेन्न । 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः' इत्यादिवत् स्तुत्यर्थत्वोपपत्तेः । तत्तत्कामनानुसारिफलदातृत्वे हि तत्तदधिकारिभिः सेव्यत्वलाभात् । न हि प्रयोजनान्तरसाधकमित्येतावता मुमुक्षुर्व्यावर्त्यते । मोक्षसाधनत्वाक्षतेः । अत एव 'मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि' इति फलेच्छैव निषिद्ध्यते । अत एव—

विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।
जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।। (तं.सा.४-१२४)

अपिः किबन्तो व्याप्त्यर्थः स्मर्यते कर्तृसाधनः ।
ओङ्कारो वर्णव्यत्यासः स्यादाकारस्य च पद्मज ।।

वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ।
वसुपूर्णकरं रत्नपर्वतस्थं विभावयेत् ।।

वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।
श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ।। (तं.सा.४-१२४-१२६)

इत्यादौ फलान्तरकथनं न विरुद्धम्। तत्तदधिकारिभेदेन सफलत्वप्रतिपादनेन स्तुतिबुद्ध्युपपत्तेः ।

यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।
तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ।। (तं.सा.४-१२७)

इत्यादिना स्पष्टमेव स्तुतिबुद्ध्युपपत्तेः ।

अकुर्वंश्च क्रिया भक्त्या निरपेक्षो भजन् हरिम् ।
सर्वमेतदवाप्नोति विशेषेण न संशयः ।। (तं.सा.४-१३०)

इति स्पष्टतरं तत्प्रतीतेश्च ।

नन्वस्तु विष्णुमन्त्राणां भगवन्निष्ठगुणाभिधानरूपत्वादावृत्तिः भगवत्प्रसादसाधनम्। तथापि लक्ष्म्यादिमन्त्राणामुद्धारो निरर्थक इति चेन्न।

ब्रह्मान्ता गुरवः सर्वे सम्प्रदायप्रवर्तकाः ।
तत्तद्गुणानुसारेण पूज्या मान्याश्च सर्वशः ।।

सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला ।। ६

लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ।
एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन ।। (तं.सा.४-११२-११३)

इति लक्ष्म्यादिप्रसादस्यावश्यकत्वोक्तेर्युक्तमेव मन्त्राणामुद्धरणम् । मूलग्रन्थेषु विक्षिप्योक्तानां तत्तदधिकारिविशेषालम्बनेन तत्तत्प्रयोगभेदेनाक्षरादिन्यासभेदेन चाऽम्नातत्वेऽपीह सङ्ग्रहेण एकैकपक्षावलम्बनेन न्यासादिविकल्पमवधूय क्रोडीकारेण मालारूपेण चोद्धरणात् । जपाङ्गतयोपदिष्टानां होमादीनां भगवदर्पणादिरूपाङ्गविशेषशिक्षणाच्च नैतद्ग्रन्थवैकल्यम् । अत एव वक्ष्यति स्वयमेवाचार्यः—

निर्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।
ब्रह्मणे कथितात्तन्त्रसारादुद्धृत्य सादरम् ।
आनन्दतीर्थमुनिना कृतो ग्रन्थोऽयमञ्जसा ।। इति । (तं.सा.४-१७५)

ननु तथापि देवालयनिर्माणं तदङ्गभूशोधनादिप्रकारः प्रतिमानिर्माणादिप्रकारश्च कुतोऽत्र सङ्गृह्यते । न हीदमपि समाधिसमकक्ष्यम् । येनान्तरङ्गत्वज्ञापनाय पृथगिह निरूपणीयं स्यादिति चेन्न । मन्त्रजपस्योक्तविधयाऽनेकविधत्वात् । समाधिसमकक्ष्यमन्त्रजपस्य प्राधान्यसिद्धये पृथङ्निरूपणे प्रसक्ते मन्त्रजपशब्दवाच्ययोः मध्यमाधमयोर्निरूपणप्रसक्तौ तदङ्गभूतविष्ण्वर्चनादीनामपि निरूपणं प्रसक्तम् । अन्यथा मध्यमाधमयोर्निरूपणमफलं स्यादिति भगवदर्चाप्रकारनिरूपणोपयुक्तमेतन्निरूपणं नासङ्गतम् ।। १ ।।

## छलारि शेषाचार्यकृतः तन्त्रासार्थसङ्ग्रहः

लक्ष्मीनारायणं पूर्णज्ञानानन्दादिसद्गुणम् ।
मन्त्रवर्णाभिधेयं च वन्दे ब्रह्मादिवन्दितम् ।। १ ।।

(सत्यनिरूपा(निध्या)ख्ययतिराट् छलारिनृहरी गरू ।)
छलारीनरसिंहार्यसत्यनिध्याह्वयौ गुरू ।
मन्त्रविद्योपदेष्टारौ वन्देऽभिमतसिद्धये ।। २ ।।

बहुज्ञैर्बहुटीकाभ्यो बुद्ध्यारोहार्थमञ्जसा ।
मध्वोक्ततन्त्रसारार्थसङ्ग्रहः क्रियते मया ।। ३ ।।

अथ श्रीविष्णुप्रीत्यर्थं सर्वैर्भगवत्प्रतिपादकमन्त्रजपतत्पूजादेर्ज्ञातव्यत्वात्कर्तव्यत्वाच्च तस्याल्पायुष्यप्रज्ञादिमद्भिरतिविस्तृतविष्णूदिततन्त्रसारोक्तप्रकारेण ज्ञातुं कर्तुं च सर्वथाऽशक्यत्वात् मन्दसुजननानुजिघृक्षया यावतोऽननुष्ठाने क्रिया सफला न भवति यावतोऽनुष्ठाने च क्रिया सफला भवति तावत् समस्तमपि तन्त्रमार्गं सेतिकतव्र्यताकं सुखेन ज्ञातुमनुष्ठातुं चात्यावश्यकतन्त्रजातप्रतिपादकं विष्णूदिततन्त्रसारग्रन्थस्य सारसङ्ग्रहरूपं ग्रन्थं कर्तुकामः श्रीमदानन्दतीर्थभगवत्पादः स्वयमन्तरायविधुरोऽप्यन्येषां निरन्तरायपरिसमाप्त्यादिफलकं स्वस्यापि मोक्षगतानन्दातिशयफलकं स्वभावत एव कृतं लक्ष्मीपतिस्तुरूपं मङ्गलमसन्निहितशिष्यशिक्षायै ग्रन्थादौ निबध्नाति— **जयतीति** ।।

**कमलापतिर्**लक्ष्मीपतिः श्रीनारायणो **जयति** उत्कृष्टो वर्तते । सकलवाङ्मनोनियामिकाया रमाया अपि स्तुतेरावशयकत्वान्नारायण इत्याद्यनुक्त्वा **कमलापति**रित्युक्तम् । तत्स्तुतेः पृथगकरणं तु तस्या भगवतोऽत्यन्तान्तरङ्गताज्ञापनायेति ध्येयम् । स्तुत्यताप्रयोजकवैशिष्ट्योपपादनायाह— **अब्जेति** ।। अब्जभवः ब्रह्मा ईशः रुद्रः सर्वदेवाधीश्वरत्वेन प्रसिद्धब्रह्मरुद्रेन्द्रवन्द्यत्वे सिद्धे तदितरवन्द्यत्वं कैमुत्यन्यायेनैव सिद्धमिति भावः । ब्रह्मरुद्रादिवन्द्यत्वं न सम्भावितमित्यतश्चाह– **कमलापतिरिति** ।। तथाच स्वेच्छया ब्रह्मरूद्रादिपददातृत्वादिना 'यं कामये' इत्यादि श्रुतिप्रसिद्धाया रमायाः पतित्वेन तदधीनब्रह्मादिवन्द्यत्वं नासम्भावितमिति भावः । यद्वा कमलापतिरित्यनेन स्तुत्यत्वोपयोगीष्टत्वमुच्यते । सकलभक्तेष्टदातृत्वेन प्रसिद्धायाः कमलायाः पत्युर्भगवतः इष्टत्वात् । स्तुत्यत्वोपयोग्यधिकृतत्वमप्याह– **अनन्तेति** ।। **विभवः** ऐश्वर्यं **शक्तिः** सामर्थ्यं । विभवश्चानन्दश्च शक्तिश्च ज्ञानं च एतानि आदयो येषां ते तथोक्ताः । अनन्ताः अपरिच्छिन्नाः पूर्णा इति यावत् । विभवानन्दशक्तिज्ञानादयः सन्तः निर्दोषाः गुणाः तेजःप्रभेत्यादयो यस्य स तथोक्तः । 'ज्ञानैश्वर्यप्रभानन्दतेजः शक्तिभिरेव च' (अ.४.श्लो.८) इत्यादिना प्रतिपादितगुणवत्वस्यानन्तविभवानन्दशक्तिज्ञानादीति विशेषणेनोक्तत्वादधिकृतत्वं ज्ञेयम् ।।१।।

# श्रीवेङ्कटपत्याचार्यकृता टीका गुर्वर्थदीधितिः

सुजनमनोरथदानकामधेनू नृहरिचरणावभिष्टवीमि भक्त्या ।
यदुमुनिवरकृष्णयोश्च पादौ बहुमतिजयराजयोश्च सद्वन्द्यौ ॥ १ ॥

वेदेशस्वामिपादानां भजतामिष्टदौ सताम् ।
तच्छात्रशिष्यदासोऽहं चरणावाश्रयेऽन्वहम् ॥ २ ॥

यत्पादस्मृतिमात्रेण पाण्डित्यं प्राप्यते नरैः ।
तान्वन्दे यादवाचार्यानस्मद्विद्यागुरोर्गुरून् ॥ ३ ॥

श्रीमदाचार्यवाक्पङ्केरुहनित्यप्रबोधदः ।
श्रीनिवासार्यतरणिर्भासतां मद्धृदम्बरे ॥ ४ ॥

अथैषां कृपया पूर्वटीकाश्चालोच्य सादरम् ।
व्याकरिष्ये वचःशुद्ध्यै तन्त्रसारस्य सङ्ग्रहम् ॥ ५ ॥

अथ सर्वज्ञचूडामणिः परमकारुणिकः श्रीमदानन्दतीर्थार्यवर्यो भगवत्प्रतिपादकमन्त्रजपतत्पूजाहोमादेर्ज्ञानद्वारा सकलपुरुषार्थसाधनप्रसादहेतुतया सर्वैरनुष्ठेयत्वात् तदर्थं जपादिसन्मार्गे प्रवर्तमानानां यावदननुष्ठाने ज्ञानं न भवति तावत्समस्तमपि निखिलसद्धिताय निरूपयितुं विष्णुतन्त्रसारसङ्ग्रहाख्यं ग्रन्थं चिकीर्षुः स्वयं निरन्तरायोऽपि स्वभावादेव कृतं कमलापतिस्तुतिरूपं मङ्गलं शिष्यशिक्षायै ग्रन्थादौ निबध्नाति— **जयतीति ॥ कमलापतिर्जयति** उत्कृष्टो वर्तते। अर्थान्तरोत्कर्षार्थो जयिरकर्मकः। 'जयेर्जयाभिभवयोः' इत्यभियुक्तवचनात्।

निखिलवाङ्मनसनियामिकायाः रमायाः ग्रन्थारम्भेऽभिवन्द्यतासूचनाय **कमलापतिः** इति विशेष्यं निरदिक्षत्। तत्स्तुतेः पृथगकरणं तु तस्या अत्यन्तरङ्गप्रियत्वज्ञापनार्थम् । 'अत्यन्तरङ्गं यत् तस्मान्न हरेः पृथगीरिता। श्रीः स्वरूपविभेदेऽपि' (बृ.भा.अ३-शाकलब्राह्मणम्) इति बृहद्भाष्ये पृथगवचने निमित्तोक्तेः।

नन्वितरपरित्यागेनास्यैव कुतो वन्यत्वमित्यतः सर्वस्वभक्तेष्टदातृत्वेन प्रसिद्धायाः कमलायाः पतिरित्यनेनेष्टत्वस्याभिहितत्वात् सर्वशास्त्रार्थभूतस्य तस्याधिकृतत्वस्य सिद्धत्वात्। विशिष्टत्वे हेतुभूतं विशेषणद्वयमाह— **अब्जभवेति अनन्तेति च** ।। **अब्जभवो** ब्रह्मा, ईशो रुद्रः, इन्द्रः पुरन्दरस्तैः **वन्दितः** अभिवन्दितः स्तुतश्च। सर्वदेवताधीश्वरत्वेन प्रसिद्धब्रह्मरुद्रेन्द्रवन्यत्वे तदितरवन्यत्वं कैमुत्येनैव सेत्स्यतीति तन्मात्रग्रहणम्। अब्जभवपदस्य प्राक्प्रयोगोऽभ्यर्हिततया। 'अभ्यर्हितं पूर्वम्' इति स्मरणात्। न च ब्रह्मादिवन्दितत्वमसम्भावितमित्याह— **कमलापतिरिति** ।। तथा च कामतो ब्रह्मरुद्रादपिददातृत्वादिना श्रुतिप्रसिद्धाया रमायाः पतित्वेन तदधीनब्रह्मादिवन्यत्वं नासम्भावितमिति भावः। अनन्तत्वं विभवत्वं च प्रत्येकमानन्दादीनां विशेषणम्। न विद्यतेऽन्तो येषां ते अनन्ताः, विविधं भवनं येषां ते विभवाः। तथा च भगवद्गुणाः प्रत्येकमप्यमितगुणरूपक्रियाद्यात्मका इत्युक्तं भवति। तदुक्तं– 'सर्वे सर्वगुणात्मानः सर्वकर्तार एव च'(अनु.३-२-२०९) इति । **विभवो** महैश्वर्यं वा । **शक्तिः** सामर्थ्यम्। **आदिपदेन** तेजःप्रभृतीनां ग्रहणम् । अनन्ताश्च ते विभवानन्दशक्तिज्ञानादयश्च त एव सन्तः निर्दुष्टाः गुणा यस्येति विग्रहः। गुणानां निर्दुष्टत्वं नामाल्पत्वपारतन्त्र्यादिदोषासमानाधिकरणत्वम्। अत्राद्यविशेषणे सर्वोत्तमत्वेन वन्यत्वमभिप्रेतमिति न रमायामतिव्याप्तिः ।।१।।

## मङ्गाली धर्मचार्यविरचिततन्त्रसारसङ्ग्रहटिप्पणी

नरसिंहं रमानाथमगण्यगुणसागरम् ।
ब्रह्मादिपूज्यं वेदेहं पूर्णबोधेष्टदैवतम् ।।

गुरून् श्रीपूर्णबोधादीन् जयार्यानपि चाञ्जसा ।
परायतकुलोद्भूतवेङ्कटाचार्यदेशिकान् ।।

बहुज्ञबहुटीकोक्ततन्त्रसारार्थसङ्ग्रहम् ।
करिष्ये प्रीतये विष्णोः सन्मनोऽम्बुजवासिनः ।।

अथ परमकारुणिको भगवानानन्दतीर्थाचार्यसूर्यः सकलसज्जनानुजिघृक्षया

सर्वैः भगवत्प्रतिपादकमन्त्रजपतत्पूजाहोमादेः कर्तव्यत्वात् अब्जायुःप्रज्ञादिमद्भिरतिविस्तृतविष्णूदिततन्त्रसारोक्तप्रकारेणानुष्ठातुमशक्यत्वात् तदर्थं जपादिकमनुतिष्ठतां यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते तावत्समस्तमपि सेतिकर्तव्यताकं वक्तुं विष्णूदिततन्त्रसारसङ्ग्रहरूपं सकलपुरुषार्थप्रवर्षकं ग्रन्थं कर्तुकामः स्वयमन्तरायविधुरोऽपि अनवरतमीश्वरप्रवणकायकरणवृत्तिरपि अन्येषां निरंतरायपरिसमाप्त्यादिफलकं स्वस्यापि मोक्षगतानन्दातिशयापादकं स्वभावत एव कृतं श्रीरमानाथस्तवनरूपं मङ्गलमसन्निहितशिष्यशिक्षायै ग्रन्थादौ निबध्नाति— **जयतीति ।** कमलापतिर्नारायणः जयति उत्कृष्टो वर्तते । तथाचोक्तम्— 'जयेर्जेयाभिभवयो'रित्यादि । सकलवाङ्मनोनियामिकाया रमाया अपि स्तुतेरावश्यकत्वान्नारायण इत्याद्यनुक्त्वा **कमलापति**रित्युक्तम् । तत्स्तुतेः पृथगकरणं तु तस्या भगवदत्यन्तरङ्गताज्ञापनार्थमिति ज्ञेयम् । नन्वितरपरित्यागेन भगवत्स्तुतौ किं निमित्तमित्यतस्तस्य वन्द्यताप्रयोजकवैशिष्ट्योपेतत्वादिति भावेनोक्तम्— **अब्जभवेशेन्द्रवन्दित इति** ।। **अब्जभवः** ब्रह्मा । अभ्यर्हितत्वादब्जभवपदस्य पूर्वनिपातः । **ईशः** रुद्रः । सर्वदेवाधीश्वरत्वेन प्रसिद्धब्रह्मरुद्रेन्द्रवन्द्यत्वे सिद्धे तदितरवन्द्यत्वं कैमुत्यन्यायेन सेत्स्यतीति तन्मात्रग्रहणं कृतम् । **वन्दितः** नमस्कृतः, स्तुतश्चेत्यर्थः । वदि अभिवादनस्तुत्योरिति धातोः। न च ब्रह्मादिवन्द्यत्वमसम्भावितमित्यभिप्रेत्याप्याह— **कमलापतिरिति ।।** तथा च कामतो विधिरुद्रादिपदद्दातृत्वादिना श्रुतिप्रसिद्धाया रमायाः पतित्वेन तदधीनब्रह्मादिवन्द्यत्वं नासम्भावितमिति भावः। सम्भावकान्तरमाह— **अनन्तेति ।** अनन्तेति विभवादीनां प्रत्येकं विशेषणम् । **विभवः** ऐश्वर्यम् । **शक्तिः** सामर्थ्यम् । अनन्ताः विभवानन्दशक्तिज्ञानादयः सद्गुणा यस्य स तथोक्तः । **सद्गुणाः** उत्तमगुणाः । 'सच्छब्द उत्तमं ब्रूयात्' (भा.ता.१०-३-२७) इत्युक्तेः । गुणानामुत्तमत्वं नाम प्रत्येकशो निरवधिकत्वम् । तथा चोक्तम्- 'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते' (भाग.ता.६-७-४८) इति । सन्तो निर्दुष्टा इति वाऽर्थः । गुणानां निर्दुष्टत्वं नाम उत्पत्तिविनाशशून्यत्वं वृद्धिह्रासराहित्यम् । परानधीनत्वम् । दोषासमानाधिकरणत्त्वं च ।

एतेन निर्दोषत्वमपि भगवतो लभ्यते। गुणवत्त्वकथनेन वा निर्दोषत्वमुक्तं भवति। दोषाभावस्यापि गुणत्वेन लोकवेदसिद्धत्वात्। यथोक्तम् - 'दोषाभावो गुण इति प्रसिद्धेर्लौकिकेष्वपि' (अनु.१-२-१९) इति। अथवा विविधं भवनं येषां ते विभवाः। तादृशा आनन्दादिगुणा यस्य स तथोक्तः। तथा च भगवद्गुणाः प्रत्येकमप्य-नन्तरूपगुणक्रियावयवाद्यात्मका इति भावः॥ तदुक्तम्— 'सर्वे सर्वगुणात्मानः सर्वकर्तार एव च' (अनु.३-२-२०९) इति। तथा चैतादृशमहा-माहत्म्यो (माहात्म्यवतो) ब्रह्मादिवन्द्यत्वं नासम्भावितमित्यभिप्रायः। यद्वा अनन्तेति पृथग्वैशिष्ट्यमाचष्टे। कमलापतिरितीप्सितताम्। सर्वस्य भक्तेष्टदातृत्वेन प्रसिद्धकमलापतेर्भगवतः कथं नेष्टदातृत्वमितीष्टत्वस्य सिद्धत्वात्। 'ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव च' (तं.सा.४-८) इत्यादिना प्रतिपादितगुण-वत्त्वस्यानन्तविभवानन्दशक्तिज्ञानादीति विशेषणेनोक्तत्वादधिकृतत्वम्। न च लक्षणेन विना निर्धारणमिति विभवादनेकलक्षणाभिधानरूपं विशेषणद्वयम्। अत्राद्यलक्षणे सर्वोत्तमत्वेन वन्द्यत्वमभिप्रेत-मिति न रमायामतिव्याप्तिः ॥१॥

उपोद्घातः

**विधिं विधाय सर्गादौ तेन पृष्टोऽब्जलोचनः।**
**आह देवो रमोत्सङ्गविलसत्पादपल्लवः ॥ २ ॥**

**त. क.–** ननु तथापि नेदमारम्भणीयम्। प्रामाण्यानिश्चयात्। यदेव निश्चितप्रामाण्यं तदेवारम्भणीयम्। न चास्य प्रामाण्यनिश्चयोपायोऽस्ति। न च प्रामाण्यस्वतस्त्वेन नायं दोष इति वाच्यम्। अप्रामाण्यशङ्कायां तन्निश्चयो-पायस्यापेक्षणीयत्वात्। अन्यथा बाह्यागमस्यापि तत्प्रसङ्गः। अप्रामाण्यशङ्कायां करणन्तु अलौकिकार्थनिरूपणे पुंसां भ्रन्त्याद्युपलम्भः, आगमान्तरे अन्यथोपलब्धिः, ग्रन्थान्तरसंवादाभावश्च। न च भगवत्प्रणीततन्त्रसारशास्त्रसङ्ग्रह-रूपत्वादस्य प्रामाण्यनिश्चयोपपत्तिः। तत्रैवाश्वासायोगात्। न च भगवत्प्रणीतत्वा-त्तदुपपत्तिः। बौद्धादावपि तत्प्रसङ्गादित्यतस्तन्त्रसारशास्त्रेऽऽश्वासकारणमाह– **विधिं विधायेति** ॥ तन्त्रसारशास्त्रमिति शेषः। सर्गकाले विधिं **विधाय** उत्पाद्येत्यनेन

श्रोतरि वक्तरि च दोषाभाव उक्तः । न हि पितापुत्रयोरज्ञनादिनिबन्धनो विप्रलम्भः सम्भवति । यद्वा, सर्गादौ कार्ये विधिं **विधाय** नियोज्य तदुपायानभिज्ञेन **तेन** विधिना **पृष्टः** प्रार्थितस्तदुपायप्राप्त्यै बहुमन्त्रानुशासनात्मकं तन्त्रसारमाहेत्यर्थः । ततस्तदुक्तमन्त्रजपाराधितभगवदनुग्रहात् जगत्सृष्ट्यादिकं विदधे चेति शेषः ।

मन्त्रेण स्थाप्यते देवो मन्त्रेणैव विसृज्यते ।
ऐहिकामुष्मिकं सर्वं मन्त्रेणैव प्रसिद्ध्यति ।। इत्यादेः ।

न हि स्वाभिलषितकार्यसिद्ध्यर्थमुपदिशन् विप्रलम्भको भवति । न वा तदुक्तमन्त्रजातस्य सृष्ट्यादिकार्योपयोगिनोऽप्रमाणशास्त्रप्रमेयता सम्भवतीति भावः ।

ननु तथापि मन्वादिप्रणीतमन्त्रशास्त्रमालोच्याऽह चेत् पुनस्तदवस्थो दोषः । मन्वादीनां भ्रान्तिसम्भवादित्यत आह– **सर्गादाविति** ।। न हि मन्वादीनां सर्गादौ उत्पत्तिरस्तीति भावः । ननु तथापि करणापाटवादिना अन्यथोपदेशः स्यादित्यत उक्तम्– **अब्जलोचन इति** ।। सर्वेन्द्रियाणां नयनस्य प्राधान्यज्ञापनाय लोचनस्य स्वशब्देन ग्रहणम् । तस्यैव पटुकरणत्वं कथमित्यतः सर्गादौ विधिं विधायेति योज्यम् । न हि महदादितत्त्वसृष्टेः पूर्वं विधिमुत्पादयतः प्राकृतांशोपचयापचयनिबन्धनमपटुकरणत्वं भवति । ब्रह्मविष्णुशिवानां बहुलमैक्योक्तेः कथमेतदिति चोद्यं प्रसिद्धपपिरित्यागेनाप्रसिद्धविधिपदप्रयोगेण निराचष्टे । विधीयत इति विधिरित्यर्थः । न हि विधेयविधायकयोरैक्यं युज्यत इति भावः ।

ननु मन्वादीनामाधुनिकत्वात् तत्प्रणीतमन्त्रशास्त्रं मूलीकृत्यावचनेऽपि वेदस्यानादित्वात् तं मूलीकृत्यैवोक्तवानिति किं न स्यात् । तथा च वेदतात्पर्यमनालोच्यापि मन्त्रोद्धारसम्भवात् कथमेतद्विश्वसनीयमित्य आह– **रमेति** ।। रमा हि सकलवेदानां मुख्याभिमानिनी । साऽपि यदा भगवन्तं सेवते तदा कथं तस्य तत्तात्पर्यापरिज्ञानमिति भावः । ननु भागवतः शास्त्रोपदेशे पूर्णकामत्वेन प्रयोजनासम्मतेः, हुंफडादिप्रयोगे प्रयोजनाभावे च प्रवृत्त्यनुपपत्तेरुपदेश एवायमनुपपन्न इति चोद्यं परिहरति– **देव इति** ।। दिवु क्राडेत्यादेः केवलक्रीडैवेति भावः ।

तदेवं भगवत्प्रणीततन्त्रसारशास्त्रमप्रामाण्यशङ्काबीजगन्धविधुरमिति तत्संग्रह-रूपत्वादिदमपि तथा। यच्च पुंसां भ्रान्त्यादिदर्शनं तत्तु महापुरुषाणां विषये न भवति। अत एवाचार्योऽन्ते 'यस्य त्रीण्युदितानि' इत्यादिना स्वस्वरूपमाचष्टे। ग्रन्थान्तरसंवादाभावस्त्वसिद्ध एव। अत एव तन्त्रसारसंग्रहात् ग्रन्थान्तरे अन्यथोपलम्भस्तदप्रामाण्यमेवावहतीति न किञ्चिदनुपपन्नम् ।। २ ।।

**अ.सं–** नन्वयं ग्रन्थोऽनारम्भणीयः प्रमाणमूलकत्वाभावात्। पौरुषेयग्रन्थस्य प्रमाणमूलकस्यैवोपादेयत्वात् । न चास्य ग्रन्थस्य विष्णूदिततन्त्रसार एव मूलमिति वाच्यम्। तस्यैवानाप्तोक्तत्वेनाप्रामाण्यादित्यत एतन्मूलभूतस्य तन्त्रसारस्य विष्णवाख्याप्तोक्तत्वेन प्रामाण्यमुपपादयितुमेतद्ग्रन्थमूलभूततन्त्रसार-कर्त्तुर्विष्णोराप्तत्वमुपपादयितुमाह— **विधिमिति।** देवः विष्णुः **सर्गादौ** सृष्टिकाले आदौ सर्वेभ्यः पूर्वं **विधिं** चतुर्मुखं **विधाय** उत्पाद्य **तेन** विधिना पृष्टः सन् विधये प्रत्युत्तरमाहेत्यन्वयः। तत्र **आह** इत्यनेन वक्तुर्विवक्षाऽस्तीति ज्ञायते। 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदस्वप्नकान्तिगतिषु' इति धातोर्ज्ञानव्यवहारादिगुणपूर्णत्वार्थकेन देवपदेन विवक्षितार्थतत्त्वज्ञानं करणपाटवं चास्तीति ज्ञायते। गतेर्ज्ञानार्थकत्वात्। अभिलपनादिव्यवहारस्य च जिह्वेन्द्रियादिकरणसामर्थ्यसाध्यत्वात्। एवं विवक्षादित्रयवत्वोपपादनेन वक्त्रानुकूल्यमुक्तं भवति। **विधय** इत्युक्त्या चतुर्मुखस्य 'अधिकार्युत्तमो ब्रह्मा' इत्यादि प्रमाणेनोत्तमाधिकारित्वस्य प्रसिद्धत्वात् तत्त्वज्ञानयोग्यताऽस्तीति ज्ञायते। 'विधिं विधाय' इत्यनेन पुत्रत्वोक्त्या वक्तृप्रीतिविषयत्वं ज्ञायते। पुत्रस्य पितुः प्रीतिविषयत्वस्य सुप्रसिद्धत्वात्। ननु श्रोतरि योग्यतावक्तृप्रीति-विषयत्वयोस्सद्भावेऽपीन्द्रस्य विरोचनवत्सहश्रोतुरयोग्यत्वाद्विपरीतोपदेशः किं न स्यादित्यत उपदेशकाले विरिञ्चेतरस्य सृष्ट्यभावेन सहश्रोतुरभावात् अन्योपदेशो न भवतीत्याशयोनोक्तम् **सर्गादाविति।** विरिञ्चेतरसृष्ट्यभावकाल इति भावः। एवञ्च विप्रलिप्साप्रयोजकायोग्यतावक्तृप्रीत्यविषयत्वयोः श्रेतर्यभावाद्वक्तर्यविप्रलिप्सा चास्तीति ज्ञायते। एतेन श्रोत्रानुकूल्यमुक्तं भवति। **पृष्ट आहे**त्यनेन प्रसङ्गानुकूल्यं च सिद्धम्।

सकलगुणपूर्णः कः? तत्र किं प्रमाणम् ? जप्यमन्त्राः के ? तत्प्रतिपाद्यश्च कः ? कथञ्च तद्ध्यानं कर्तव्यं? कश्च पूज्यः? कथञ्च तत्पूजा कार्या? अज्ञानां साक्षाद्भगवत्पूजायाः कर्तुमशक्यत्वेन प्रतिमायामेव कर्तव्यत्वात्तदर्थं प्रतिमा निर्मातव्या । तन्निर्माणविधिश्च कः? प्रतिमालक्षणञ्च किम् । 'अप्रतिष्ठितबिम्बस्य पूजनं सिद्धिहानिकृत्' इत्युक्तेरवश्यं प्रतिष्ठा कार्या, सा च कथं कर्तव्या? इत्यादिना प्रकारेण स्वयं जानताऽपि विशेषार्थज्ञानाय स्थापनाय वा साज्जनानुग्रहणेच्छया वा चतुर्मुखेन कृततत्त्वप्रश्नोत्तरदानकाले परिहासादि-प्रसङ्गानामसम्भवादिति भवः । उपदेशाकाले उपदेष्टुः प्रसादाभावे उपदिष्टं न फलतीत्यत आह— **अब्जलोचन इति ।।** कमलवत् विकसितलोचनत्वोक्त्या प्रसन्नाताऽस्तीति ज्ञायते । प्रसादसम्भावकमाह– **रमोत्सङ्गेति ।।** रमायाः उत्सङ्गे अङ्के विलसन्तौ तत्पाणिभ्यां संवाह्यामानाविति यावत् । पादपल्लवौ चरणकिसलयौ यस्य स तथोक्तः । स्त्रीसन्निधाने हि पुरुषस्य प्रसन्नता भवतीति लोकप्रसिद्धमिति भावः । तथा च विवक्षितार्थतत्त्वज्ञानं करणपाटवमविप्रलिप्सा चेतीयमाप्तिस्तद्वान् हि आप्त इत्युच्यते । विष्णोस्तु भगवतस्तादृशत्वेन तत्कृतस्य तन्त्रसारस्याप्तोक्तत्वेन प्रामाण्यात्तन्मूलकस्यास्य ग्रन्थस्योपादेयत्वं सिद्ध्यतीति भावः । एतेनैवाधिकार्यादिराहित्येन विष्णूदिततन्त्रसारस्यानुपादेयत्वशङ्काऽपि परस्ता वेदितव्या । 'तेन ब्रह्मणा पृष्टः' इत्यनेन अधिकार्यादेस्सूचितत्वात् प्रश्नकर्तुरेव ब्रह्मणोऽधिकारित्वात् प्रष्टव्यार्थस्यैव विषत्वात् तज्ज्ञानस्यावान्तर-प्रयोजनत्वात् ज्ञानसाध्यमोक्षस्य च महाप्रयोजनत्वादिति । अस्मिन् ग्रन्थे मन्दाधिकारिणः 'अस्य संक्षेपशास्त्रत्वान्न विस्तरविरोधिता'(तं.सा.३-४७) इत्युत्तरत्र मन्दाधिकारित्वस्य सूचनात् । 'अहमेकोऽखिलगुणः' इत्यादिना गुणापूर्णत्वादेरेव विषयत्वसूचनात् । 'सर्वोत्तमं हीरं ज्ञात्वा' (१.७०) इत्यादिना एतद्ग्रन्थान्ते च 'ग्रन्यथोऽयं'(४.१६३) इत्यादिना फलस्य वक्ष्यमाणात्वात् । पृथगेतद्ग्रन्थस्याधि-कार्याद्यनुक्तिर्न दोषायेति भावः ।। २ ।।

**गु.दी.**– ननु यत् प्रमाणत्वे सतीष्टसाधनतावबोधकं तदेवारम्भणीयम् । अस्य च कथमारम्भणीयतोपयोगिप्रामाण्यादीत्याशङ्कां परिहर्तुं तन्त्रसारागतिप्रकारं

वदन्नाप्तिमूलतां दर्शयति— **विधिमिति ।।** **विधिं** विरिञ्चं विधायेत्यनेन पुत्रत्वोक्त्या श्रोत्रानुकूल्यं, तद्धि वक्तुः प्रेमास्पदत्वं तत्त्वज्ञानयोग्यत्वं च। विरिञ्चस्तु हरेः प्रेमविषयः। अनादितः सर्वदोषविहीनत्वेन तत्त्वज्ञानयोग्यश्चेति सुप्रसिद्धम्। ननु श्रोतुर्विरिञ्चस्यानुकूलत्वेऽपि इन्द्रविरोचनवत् सहश्रोतुरयोग्यत्वादन्यथोपदेशः किं न स्यादित्यतस्तदा विरिञ्चेतरेषां सृष्टिरेव नेत्याशयेनाह— **सर्गादाविति ।।** प्रसङ्गानुकूल्यं दर्शयति— **तेन पृष्ट इति ।।** सर्वोत्तमः सकलगुणपूर्णः कः? किं तत्र प्रमाणम्? जप्या मन्त्राश्च के? तत्प्रतिपाद्यश्च कः? कथं तद्ध्यानमनुष्ठेयम्? पूज्यश्च कः? पूजा च कथं कार्या? अज्ञानां पूजायाः साक्षात्कर्तुमशक्यत्वेन प्रतिमायामेव कर्तव्यत्वात् तदर्थं प्रतिमा कार्या। तन्निर्माणविधिश्च कः? किं तल्लक्षणम्? 'अप्रतिष्ठितविम्बस्य पूजनं सिद्धिहानिकृत्' इत्युक्तेरवश्यं प्रतिष्ठा कार्या। सा च कथं कर्तव्येत्यादि नानाप्रकारेण स्वयं जानताऽपि विशेषज्ञानाय स्थापनाय वा सकललोकानुग्रहेच्छया तेन विरिञ्चेन पृष्ट इत्यर्थः। तथा च निष्प्रयोजनस्य प्रश्नायोगाच्छ्रोतुः प्रयोजनोद्देशरूपं प्रसङ्गानुकूल्यमनेन सिद्ध्यति ।

उपदेशकाले उपदेष्टुः प्रसादाभावे उपदिष्टं न फलवद्भवति। यथोक्तं— 'नातिप्रसन्नहृदयो यद्दद्याद्गुरुरप्यसौ । न तत्सत्यं भवेत्' (म.ता.नि.१-१२५) इति तात्पर्यनिर्णये । अत आह— **अब्जलोचन इति ।।** प्रसादेन अब्जवद्विकसितलोचन इत्यर्थः। अनेन करणविशेषस्य पटुत्वोक्त्या सर्वकरणपाटवं लक्ष्यते। अब्जलोचनशब्दो हि भगवत्येव प्रसिद्धः। यथोक्तमैतरेयभाष्ये— 'प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान्नारायणः' (ऐ.भा.प्रघट्टक२-अध्याय१-खण्ड१)। 'पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः' इति (ऐ.भा.प्रघ्ट्टक३-अध्याय२-खण्ड३)। अन्यच्च प्रसादज्ञापकमाह— **रमोत्सङ्गेति ।।** **उत्सङ्गे** अङ्के। स्त्रीसन्निधानेन प्रसादो भवतीति लोकन्यायेनोक्तम्। वस्तुतस्तु भगवतो न रमाया अतिशयोऽस्ति। अन्यानपेक्षस्वरूपभूतनित्याभिव्यक्तज्ञानादिविशिष्टत्वादित्याह– **देव इति ।।** गत्याद्यर्थस्य दीव्यतेः पचाद्यच्। तेन 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः' इति न्यायेनोक्तलक्षणसार्वज्ञ्यसिद्ध्या विवक्षितार्थतत्त्वज्ञानम् ।

अयमाशयः— वाक्यप्रामाण्यं तावन्निर्दोषतया सम्भवति। निर्दोषता चापौरुषेयतयाऽऽप्तिमूलतया च। आप्तिश्च वक्त्राद्यानुकूल्यमेव। आप्तिमूलत्वात् तन्त्रसारस्य प्रामाण्यसिद्धिः। प्रमादाज्ञानविपर्ययाणां वक्तरि नारायणेऽसम्भवात्। विप्रलम्भस्य श्रोतृदोषभूततत्त्वज्ञानायोग्यत्ववक्तृप्रेमानास्पदत्वनिबन्धनस्य तदभावेनाभावनिर्णयात्। अपहासस्य श्रोतुः प्रयोजनानुद्देशाख्यप्रसङ्गदोषनिबन्धनस्य तदभावेनाभावनिश्चयात्। ब्रह्मादिप्रेक्षावत्प्रवृत्तिविषयत्वेनेष्टसाधनतावबोधकत्वं च सिद्ध्यति। अतस्तन्त्रसारस्यारम्भणीयतेति ।। २ ।।

**मञ्जाली—** नन्वयं ग्रन्थो नारम्भणीयः। प्रमाणमूलकत्वाभावात्। पौरुषेयग्रन्थस्य प्रमाणमूलकस्यैवोपादेयत्वात्। न चास्य विष्णूदिततन्त्रसार एव मूलमिति वाच्यम्। तस्यापि प्रामाण्ये निमित्ताभावादित्यत एतन्मूलभूततन्त्रसारस्य विष्णाख्याप्तोक्तत्वेन प्रामाण्यमुपपादयितुं विष्णोराप्तत्वमुपपादयति— **विधिमिति**। **अब्जलोचनः** भगवान्। अब्जलोचनशब्दोहि भगवत्येव प्रसिद्धः। तदुक्तमैतरेयभाष्ये 'पुण्डरीकाक्ष इति भगवान्नारायणः। पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः' (ऐ.भा.) इति।

एतेन वक्त्रानुकूल्यमुक्तं भवति। भगवतो विवक्षितार्थतत्त्वज्ञानादिमत्त्वस्य सिद्धत्वात्। दिवुक्रीडेत्यादिधातुव्याख्यानेन ज्ञानव्यवहारादिगुणपूर्णत्वार्थकेन देवपदेन वा विवक्षितार्थतत्त्वज्ञानं करणपाटवं लभ्यते। धातुव्याख्यानगतगतिशब्दस्य ज्ञानार्थत्वात् व्यवहारस्य च जिह्वेन्द्रियादिकरणसामर्थ्यसाध्यत्वात्। आह विधय इति शेषः। आहेत्यनेन विवक्षा ज्ञायते। विधय इत्यनेन चतुर्मुखस्यानादितस्सर्वदोषहीनत्वेन गुणाधिकत्वेन च प्रसिद्धत्वात् श्रोतुः तत्त्वज्ञानयोग्यताऽस्तीति ज्ञायते। 'विधिं विधाये'ति पुत्रत्वोक्त्या वक्तृप्रीतिविषयत्वम्। पुत्रे पितृप्रीतेः सुप्रसिद्धत्वात्। ननु श्रोतुरनुकूलत्वेऽपि इन्द्रेण सह श्रोतुर्विरोचनस्येव सहश्रोतुरप्रयोजकत्वादन्यथोपदेशः किं न स्यादित्यतः विरिञ्चेतरेषां सृष्टिरेव नास्तीत्याह— **सर्गादविति**। प्रश्नप्रकारमुत्तरत्र दर्शयिष्यामः। तथा च तत्त्वप्रश्नोत्तरकाले परिहासादिप्रसङ्गानामभावात्प्रसङ्गा-

नुकूल्यमपि सिद्धमिति भावः। एवञ्च विप्रलिप्साप्रयोजकायोग्यतावक्तृप्रीत्यविषयत्वयोः श्रोतर्यभावाद्वक्तरि अविप्रलिप्सा चास्तीति ज्ञायते। उपदेशकाले उपदेष्टुः प्रसादाभावे उपदिष्टं न फलवद्भवति। यथोक्तम्- 'नातिप्रसन्नहृदयः' (म.भा.ता.नि.१-१२५) इत्यादिना। अतो वाऽऽह— **अब्जलोचन इति।।** प्रसादेनाब्जवद्विकसितलोचन इत्यर्थः। प्रसादसम्भावकमाह- **रमोत्सङ्गेति।।** रमाया उत्सङ्गे अङ्के विलसन्तौ तत्पाणिभ्यां संवाह्यमानाविति यावत्, पादपल्लवौ चरणकिसलयौ यस्य स तथोक्तः। स्त्रीसन्निधाने पुरुषस्य प्रसन्नता भवतीति लोकन्यायेनोक्तम्। वस्तुतस्तु भगवतो न रमाया अतिशयोऽस्ति। अनन्यापेक्षस्वरूपभूतनित्याभिव्यक्त-निरवधिकक्रीडादिगुणविशिष्टत्वादिति चाह— **देव इति।।** तथा च वक्तृश्रोतृप्रसक्तीनामनुकूलतैवाप्तिः साऽस्यास्तीति आप्तिमूलत्वेन भगवत्कृततन्त्रसारस्य प्रामाण्यात् तन्मूलकस्यास्य ग्रन्थस्योपादेयत्वं सिद्ध्यतीति भावः।

एतेनैवाधिकार्यादिराहित्येन विष्णूदिततन्त्रसारस्यानुपादेयत्वशङ्कापि निरस्ता। तेन ब्रह्मणा पृष्ट इति प्रश्नकर्तुर्ब्रह्मणोऽधिकारित्वात्। प्रष्टव्यार्थस्यैव विषयत्वात्। तज्ज्ञानस्यावान्तरप्रयोजनत्वाततदिति। 'अस्य संक्षेपशास्त्रत्वान्न विस्तरविरोधिता' (तं.सा.३-४७) इत्युत्तरत्र मन्दाधिकारिकत्वस्य, 'अहमेकोऽखिलगुणः'(तन्त्रसार १.३) इत्यादिना गुणपूर्णत्वादेरेव विषयत्वस्य सूचनात्। 'सर्वोत्तमं हरिं ज्ञात्वा'(तन्त्रसार, १.७०) इत्यादिना एतदध्यायान्ते ज्ञानसाध्यमोक्षस्य महाप्रहाप्रयोजनत्वस्य, एतद्ग्रन्थान्ते च 'ग्रन्थोऽयम्'(४.१६३.) त्यादिना फलस्य वक्ष्यमाणत्वात् पृथगेतद्ग्रन्थस्याधि-कार्याद्यनुक्तिर्न दोषायेति भावः।।२।।

प्रणवलक्षणं तत्प्रतिपाद्यकथनं च

**तं. सा.** **अहमेकोऽखिलगुणो वाचकः प्रणवो मम।**
**अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः** ।। ३ ।।

**त. क.–** नन्वस्मिन् ग्रन्थे उद्धरिष्यमाणमन्त्रा विष्णुवाचका न वा ? नेति पक्षे तदुद्धरणं व्यर्थम्। न ह्यविष्णुविषया मन्त्रा आवृत्ता अपि विष्णुप्रीतिं

जनयन्ति । न वा विष्णुपूजायामुपयोक्ष्यन्ते । न वा समाधिसमकक्ष्या भवन्ति । मन्त्रपूजादीनां समानविषयत्वनैय्यत्यात् । नाद्यः । मन्त्राणां वचनादावर्तनीयत्वेऽपि कस्यचिदर्थस्यापि वाचकत्वासम्मतेः। न हि हुंफडादिशब्दानां कचिद्वाचकत्वमस्ति । कथञ्चिद्वाचकत्वाङ्गीकारेऽपि विष्णुवाचकत्वासम्मतेः । कथञ्चिन्मन्त्रान्तर्गतनारायणादिशब्दानां तद्वाचकत्वेऽपि तत्पूर्वोत्तरपदयोस्तद्वाचकत्वाभावात् । यदि च मन्त्रैकदेशवाच्यतामात्रेण विष्णुपूजादावप्युपयोगं प्राप्नोति तर्हि शिवपूजादावप्युपयोगः प्राप्नोति । अष्टाक्षरगतानामकारादीनां शिववाचकत्वश्रवणात् । तथा हि श्रुतिः– 'शिवमद्वैतं चतुर्थं मन्यन्ते' इत्याद्या । यदि च 'अउमप्रविशंभूमसखहा विष्णुवाचकाः' इति निघण्टुबलात् ओङ्कारान्तर्गता अकारादयो वर्णा विष्णुवाचका इति पक्षस्तर्हि वर्णान्तरवैय्यर्थ्यम् । एकेनैव विष्णोः प्रतिपादनात् । अस्तु वा नारायणादिपदघटितानां मन्त्राणां विष्णुवाचकत्वम् । तथापि लक्ष्म्यादिमन्त्राणां तदनुपपत्तिरेव । न चेष्टापत्तिः । इह तदुद्धरणवैय्यर्थ्यात् । न च लक्ष्म्यादिपूजादिरपीह कर्तव्यतयोच्यते ।

अपूजिता अधर्मादिदातारस्ते तथाऽभिधाः । (तं.सा.१-५३)
कृत्वाऽष्टकाष्टकोष्ठानि मध्ये ब्रह्मा चतुष्टये ।।

पूज्यो द्वये द्वये शक्रो यमो वरुण एव च ।
सोमः पूज्यश्च कोणेषु ब्रह्माद्याः कोणदेवताः ।।

पुनस्त्वन्ये त्रये कामं धातारं सविधातृकम् ।
स्कन्दश्च पूजयेत् कोणे सूर्यं चैव विनायकम् ।।

कालं कुवेरं च बहिः प्रत्येकं दिक्षु पूजयेत् ।
हारं हरिं गभीरं च गाहनं गहनं गुहम् ।।

भातमङ्गारकं चैव पूर्वस्यां दिशि पूजयेत् ।
दारुणं विदरं दूतं प्रद्योतद्योतनं हरिम् ।
मृत्युं शनैश्चरं चैव दक्षिणस्यां प्रपूजयेत् ।। (तं.सा.३.७३-७७)

इत्यादौ कथञ्चित् तत्पूजाविधानेऽपि,

अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम् ।
विष्णुस्मृतिविहीना तु पूजा स्यादासुरी तथा ॥

गृह्णन्ति देवता नैतां ततः स्याद्देशविप्लवः ।
व्याधिचोरादिभिस्तस्मादन्तर्ध्येयो हरिः सदा ॥

विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ।
भक्तस्याप्यन्यदेवेषु तस्मात् ध्येयो हरिः सदा ॥

संस्मृतो भगवान् विष्णुः सर्वमङ्गलदायकः ।
समस्ताभीष्टदायी स्यात्तेन ध्येयोऽखिलैर्जनैः ॥ (तं.सा.३.१४३-१४५)

न यज्ञा न च तीर्थानि नोपवासव्रतानि च ।
दैवतानि च सर्वाणि त्रातुं तं शक्नुयुः क्वचित् ॥

हरिर्हि सर्वदेवानां परमः पूर्णशक्तिमान् ।
स्वतन्त्रोऽन्ये तद्वशा हि.................. ॥ (तं.सा.१-७३,७४)

ब्रह्मादयश्च तद्भक्त्या भागिनो भोगमोक्षयोः ।
तस्मात्पूज्यश्च ज्ञेयश्च वन्द्यो ध्येयः सदा हरिः ॥ (तं.सा.१-७५)

दुर्गाशिवस्कन्दसूर्यविनायकमुखानपि ।
स्थापयेदुक्तमार्गेण तत्तन्मन्त्रैः स्मरन् हरिम् । (तं.सा.३-१४१)

इत्यादौ तत्तन्मन्त्रैः भगवत्स्मरणोक्तिविरोधः। न ह्यन्यपरैर्मन्त्रैरन्यस्मरणं सम्भवति। न चोभयपरास्ते मन्त्रा इति वाच्यम्। प्रमाणाभावात्। किञ्च तत्तन्मन्त्रगतपदवाच्यता विष्णोर्न रूढ्या। नापि योगेन। शचीपतित्व-सहस्राक्षत्वादीनां गुणानां भगवत्यनुपपत्तेरित्यतस्तत्साधयितुं 'ऋषिश्च देवतैकोऽहं' इत्यतः प्राक्तनो ग्रन्थसन्दर्भः। तत्र हुंफडादिशब्दवत् मन्त्राणां वाचकत्वमेव नास्तीत्ययुक्तं तावत्। 'मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि

वा' इत्यादेः। अनुष्ठेयार्थप्रकाशनद्वारा मन्त्राणां दृष्टार्थत्वस्य मीमांसकैरप्यङ्गीकृतत्वाच्च। मन्त्रैकदेशोङ्कारादेः शिवादिवाचकत्वमप्रामाणिकम्। 'शिवमद्वैतं' इत्यादिश्रुतिस्तु न स्वार्थपरेत्यन्यत्रोक्तम्। अत एव लक्ष्म्यादिमन्त्राणामत्रोद्धरणं नानुपपन्नम्। लक्ष्म्यादिपूजादेरप्युक्तवचनैस्तदन्तर्हरिस्मरणेन कर्तव्यताङ्गीकारात्। न च लक्ष्मयादिमन्त्रैस्तत्स्मरणोपायाभावः। हरेः सर्वशब्दवाच्यताङ्गीकारात् ॥

अत्र यदुक्तं प्रमाणाभाव इति तत्रानुमानं वक्तुं मूलप्रमाणान्वेषणायासनिरासाय तन्त्रसारोक्तं भगवद्वचनं संगृह्णाति– **अहमेक इति** ॥ यतः प्रणवो मम वाचकस्तस्मात् सर्वाभिधोऽस्म्यहमिति सम्बन्धः। सर्वशब्दवाच्यतां प्रति प्रणववाच्यताया अनैकान्तिकतां निराकर्तु**मखिलगुण** इति प्रणवो विशेष्यते। अखिला गुणाः प्रवृत्तिनिमित्तं यस्य।

ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् ॥ (अनु.१-१-९)

इत्यादेः स प्रणवोऽखिलगुण उच्यते। यद्यपि सर्वशब्दैकदेशघटशब्दवाच्ये सर्वशब्दवाच्यत्वाभावेन एकदेशवाच्यता कृत्स्नवाच्यतां व्यभिचरति। तथाप्यखिलगुणनिमित्तशब्दवाच्यता न व्यभिचरतीति भावः। **अखिलगुण** इति स्वात्मनश्च विशेषणम्। तेन हेतोर्नासिद्धिः। न ह्यखिलगुणे तन्निमित्तशब्दवृत्तिर्दुर्घटेति भावः। ननु शिवादौ प्रणववाच्यता साध्यं व्यभिचरतीत्यत आह— **अहमेकोऽखिलगुणो न द्वितीयः शिवादिरिति** ॥ अखिलगुणनिमित्तोऽयं प्रणव इत्युक्तम्। स चासौ यत्राखिलगुणास्तत्रैव। न मत्तोऽन्यस्मिन् अखिलगुणाः। अतः कथं व्यभिचरतीति भावः।

शङ्कते– **अकारादीति** ॥ यद्यपीत्युपस्कर्तव्यम्। **सोऽयं** हेतुशरीरप्रविष्टः प्रणवः **अष्टाक्षरोऽष्टवर्णो** यतः। ननु अकारोकारमकाराणां समाहारो ह्योङ्कारो वैयाकरणैर्ज्ञायते। वेदान्तिभिश्च 'सोऽयं चतुष्पात्'(माण्डु.उ.१-१) इत्यादिना चतुर्थांशोऽप्यङ्गीकृतः। तत् कथमयमष्टाक्षर इति तत्राऽह– **अकाराद्यतिशान्तान्त इति** ॥ अकार आदिवर्णः। अतिशान्तोऽन्त्यवर्ण इत्यर्थः। नादबिन्दुघोषशान्ता-

तिशान्ताख्याः पञ्चवर्णा अपि ग्राह्या इति भावः । एकपञ्चाशत्त्वं वर्णसङ्ख्यायां यथा न विरुद्ध्यते तथोक्तं कर्मनिर्णयटीकायाम्। नन्विदमपूर्वं प्रमेयं कथमङ्गीकार्यमित्यत उक्तम्– **मत इति** ।। प्रमितेऽर्थे का कथन्तेति भावः । तथाच प्रणवो न समुदायशक्त्या हरिवाचकः । अखिलगुणनिमित्तकत्वाभिलापात् । गुणाश्च अमुकस्याक्षरस्य निमित्तं, न अमुकस्येत्यत्र नियामकाभावः । अकारेणाखिल-गुणस्य हरेरुक्तेरुकारादिर्व्यर्थश्च । न चोकारादिना अखिलगुणव्यक्त्यन्तमुच्यते । 'अहमेक एवाखिलगुणः' इत्युक्तेः । अतः कथं 'वाचकः प्रणवो मम' इत्युक्तमिति शङ्कितुर्हृदयम् ।। ३ ।।

**अ.सं.–** इदानीं चतुर्मुखकृतप्रश्नानां क्रमेणोत्तरं विवक्षुः सकलगुणपरिपूर्णः कः? इति प्रथमप्रश्नोत्तरं तावदाह भगवान्नारायणः– **अहमेक इत्यादिना** ।। **अहमेकः** केवलः अहमेव न त्वन्य इत्यर्थः । सकलगुणपूर्णत्वे किं मानमित्यतः प्रथमतः प्रणवः प्रमाणमित्याह— **वाचक इति** ।। 'ॐ ब्रह्म' इत्यादि श्रुतेः । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' (गी.१७.२३) इत्यादि स्मृतेश्च । मम **वाचकः** प्रतिपादकः । एक इत्येतत्प्रणव इत्यनेनापि संबध्यते । 'ॐकारः प्रणवं ब्रह्म सर्वमन्त्रेषु नायकः' इत्युक्तेः । **एकः** मुख्यः सर्वमन्त्रोत्तमः 'एके मुख्यान्यकेवलाः' इत्यमरः । प्रणवः ममाखिलगुणपूर्णत्वे प्रमाणमिति शेषः । यतः प्रणवस्य 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् ।' (अनुव्याख्याने-१.१.९) 'ओतमस्मिन् जगत्सर्वं'(कर्म.नि.) 'अत्युच्चश्चाखिलैर्गुणैः' 'ओमशेषगुणाधारः' (ऋग्भाष्ये-१.१.२) इत्यादिनाऽखिलगुणपूर्णताप्रतिपादकत्वं प्रथितमिति भावः । प्रणवस्वरूपमाह– **अकारादीति** ।। **सोऽयं** प्रणवः **अष्टाक्षरः** अष्टौ अक्षराणि वर्णाः यस्मिन्स तथोक्तः । अष्टाक्षरत्वविवरणम्— **अकारादीति** ।। अकारोकारमकार-नादबिन्दुघोषशान्तातिशान्ताख्याष्टाक्षरात्मकः **मतः** प्रमित इत्यर्थः । अत्र घोषस्थाने कलेति क्वचित् व्यवहारः । 'नादाद्विनिर्गतो बिन्दुः बिन्दोर्जाता कला ततः' इति वचनात् । अत एव बृहद्भाष्यभावबोधे 'अकाराद्यतिशान्तान्तः प्रणवोऽष्टाक्षरो यतः'(भृ.भा.७-१) इति वाक्यव्याख्यानेऽकारोकारमकारनादबिन्दु-कलाशान्तातिशान्ता इति प्रणवाष्टवर्णाः प्रदर्शिता इति ज्ञेयम् ।

ननु 'सोऽयमष्टाक्षरो मतः' इति प्रणवस्य यदष्टाक्षरत्वमुक्तं तन्न सम्भवति। प्रणवांशानां नादादीनां वर्णधर्मत्वेनावर्णत्वात्। नादादीनामक्षरत्वे पञ्चाशदक्षरापेक्षया अधिकाक्षरत्वापत्त्या 'पञ्चाशद्वर्णवाच्याश्च'(तं.सा.१-५) इत्यादौ वर्णेषु पञ्चाशात्वोक्तिविरोधात्। न च नादादीनामवर्णत्वे 'मद्रूपाणां च वाचकः' (तं.सा.१-४) इत्युक्ततुरीयादिवाचकत्वानुपपत्तिः। वाचकत्वस्य वर्णधर्मत्वादिति वाच्यम्। अवर्णानामप्यक्षरधर्माणामुदात्तादिस्वराणां वाचकत्ववन्नादादीनाम-वर्णत्वेऽपि वाचकत्वोपपत्तेः। उक्तं च स्वराणां वाचकत्वं ऋग्भाष्ये–

दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चतार्थता ।
नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः ।
समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ।। इति ।।(ऋक्.भा.१.१७)

नादादीनामवर्णत्वादेव हि 'आदिवर्णत्र'यमित्यत्र प्रणवमन्त्रस्य वर्णन्यासकथ-नसमये अकारादिवर्णत्रयस्यैव मानत्वात् न्यासोक्तिरपि सम्भवति। अन्यथा नादादीनामपि न्यासोक्तिप्रसङ्गात्। तस्मान्नादादयो न वर्णाः किन्तु वर्णधर्मा एव। 'अष्टाक्षरो मतः' इति नादादिषु वर्णत्वप्रयोगस्तु वाचकत्वसाम्यादौपचारिकः कल्प्यत इति चेन्न।

नादादीनां वर्णत्वस्यैवोपपाद्यमानत्वात्। तथा हि। नादादयः वर्णा एव न वर्णधर्माः। 'सोऽयमष्टाक्षरोऽमतः' 'वर्णास्तारार्णभेदिताः' (१.५) 'तारोऽष्टाक्ष-रभेदवान्' (१.२०) इत्यत्रैव ग्रन्थे बहुवारं नादादिष्वकारादिष्विवाक्षरा-र्णशब्दप्रयोगात्। 'आद्यैस्तारचतुर्वर्णैः'(तं.सा.१-११) 'आदिवर्णत्रयं'(तं.सा.१-३५) इत्यत्राष्टानां मध्ये चतुर्णां त्रयाणाञ्च वर्णानामाद्यादिशब्देन प्रथमवर्णत्वोक्त्या तदन्येषां वर्णत्वस्य ज्ञापितत्वाच्च। अन्यथा प्रथमद्वितीयादिशब्दानां सजातीयेष्वेव प्रयोगस्य अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ सर्वत्र दृष्टत्वेन वर्णावर्णसमुदायमध्ये वर्णेषु प्रथमवर्णत्वोक्त्ययोगात्। वर्णत्रयमित्येवोक्तिप्रसङ्गाच्च। बृहद्भाष्येऽपि—

चतुर्थपादो गायत्र्याः प्रणवः समुदाहृतः ।
अकाराद्यतिशान्तान्तः प्रणवोऽष्टाक्षरो यतः । (भृ.भा.७-१)

इति गायत्र्या अष्टाक्षरोपेतपादचतुष्टयत्वं वक्तुं प्रणवांशानां नादादीनामक्षरत्वमङ्गीकृत्य प्रणवस्याष्टक्षरत्वोक्तेश्च । न च वर्णत्वप्रयोगो वाचकत्वसाम्यादौपचारिक इति वाच्यम् । नादादीनां वर्णत्वे साधकस्योक्तत्वेन बाधकाभावेन च औपचारिकत्वकल्पनायोगात् । न च नादादीनां पञ्चाशदक्षरान्तर्भावासम्भवेन पञ्चाशदक्षरापेक्षया अधिकाक्षरत्वापत्या 'पञ्चाशद्वर्णवाच्याश्च' इत्यादौ वर्णानां पञ्चाशत्सङ्ख्याकत्वोक्त्यनुपपत्तिर्बाधिकेति वाच्यम् । नादादीनां पञ्चशद्वर्णाधिक्येऽपि प्रणवव्यक्तानां वर्णानां पञ्चाशत्वाविवक्षया 'पञ्चाशद्वर्णवाच्याश्च'(तं.सा.१-५) इत्यादौ वर्णानां पञ्चाशत्त्वोक्त्युपपत्तेः । अन्यथा 'एकपञ्चाशद्वर्णानां'(तं.सा.२-७) 'मातृका एकपञ्चाशत्' इत्यादौ क्षकारस्य पञ्चाशदक्षरातिरिक्तस्याक्षरत्वोक्त्यनुपपत्तेः । कर्मनिर्णयटीकायामपि 'गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एवेत्याह'(कर्म.नि.१-५) इति मूलव्याख्यानावसरे 'घोषाणामकारादिपञ्चारादक्षरव्यञ्जकत्वेऽपि तदतिरिक्तः घोषव्यङ्ग्यः नादो नाम वर्णो मन्त्रशास्त्रे प्रसिद्धः' इति नादाख्यवर्णस्य पञ्चाशदक्षरातिरिक्तस्याङ्गीकारविरोधच्च । ननु तर्हि नादादीनां न्यासमनुक्त्वैवाकारादिवर्णत्रयस्यैव न्यासोक्त्यनुपपत्तिर्बाधिका भविष्यतिति चेन्न ।

ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा ।
सतारोऽष्टाक्षरः सौरः क्रमव्युत्क्रमतः पदैः ।
अङ्गानि........................ ।। (४.८९)

इति चतुर्थाध्याये 'ॐ घृणिः सूर्य आदित्यः' इति सूर्याष्टाक्षरमन्त्रे ॐकारस्य न्यासमनुक्त्वा पदत्रयस्यैव क्रमव्युत्क्रमाभ्यां षडङ्गन्यासोक्तिवदत्राप्युपपत्तेः । स्वतन्त्रस्य सर्वज्ञस्य मुनेर्न्यासानुक्त्यभिप्रायस्येदानीन्तनैः पुरूषैर्ज्ञातुमशक्यत्वात् ।

केचित्तु नादादीनां वर्णत्वमङ्गीकृत्य पृथगुच्चारणाविषयत्वान्न्यसो नोक्त इति न्यासानुक्तेरभिप्रायं कल्पयन्ति । तन्न युज्यते । पृथुगुच्चारणविषयस्यापि सूर्यमन्त्रे ॐकारन्यासस्याकथनात् । चतुर्थाध्याये 'पादहृत्केषु'(तं.सा.४-१३३) इत्यत्र

एकाक्षरादिसर्वमन्त्राणां वर्णन्यासकथनावसरे एकाक्षरबीजमन्त्रे व्यञ्जनस्वरबिन्दु-भेदेन व्यञ्जनस्वरयोर्न्यासोक्तिवत् पृथगुच्चारणाविषयस्यापि बिन्दोर्न्यासस्य कथितत्वाच्च । उक्तं च सङ्ग्रहे–

न्यास एकाक्षरे मन्त्रे व्यञ्जनस्वरबिन्दुभिः ।
पादहृत्केषु विलये व्युत्पत्तौ व्युत्क्रमाद्भवेत् ।। इति ।

तस्मादनावश्यकत्वादेवानुक्तिरिति प्रतीयते । अथवा मनुष्याणामधि-काराभावान्नादादिन्यासानुक्तिरिति ज्ञेयम् । तथा हि । प्रणवा हि त्रिमात्रमारभ्य उत्तरोत्तरमेकैकमात्रावृद्ध्या चतुर्मात्रापञ्चमात्रादिप्रकारेणानन्तमात्रावसानका अनन्ताः । यथोक्तमेकादशस्कन्धतात्पर्ये एकविंशेऽध्याये–

त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः ।
प्रणवास्ते विभेदेन ह्यनन्ताः परिकीर्तिताः ।।
एकमात्रोत्तराः सर्वे.................... ।। इति ।(भाग.ता.११-२१-३८)

मध्वविजयेऽपि 'अनन्तमात्रान्तमुदाहरन्ति यं त्रिमात्रपूर्वं प्रणवोच्चयं बुधाः' इति । (मध्वविजये. ४.३२) तिस्रो मात्रा अकारोकारमकाराख्या वर्णाः यस्मिन् प्रणवे स त्रिमात्रः, सः पूर्वो यस्य स तत् त्रिमात्रपूर्वम् । अनन्तमात्रान्तं अनन्ताः मात्राः वर्णा यस्मिन्सः अनन्तमात्रः प्रणवः, स एव अन्तश्चरमः यस्य सः अनन्तमात्रान्तः तं । त्रिमात्राद्यनन्तमात्रावसानकं यं प्रणवोच्चयं प्रणवसमुदायमुदाहरन्ति बुधा इत्यर्थः । मात्राशब्दस्य वर्णार्थकत्वे 'पादा मात्रा अकारोकारमकार' इति माण्डूकोपनिषन्मानम् । एवञ्च त्र्यक्षराद्यनन्ताक्षरान्तप्रणवसमुदाये त्रिमात्रप्रणव-मन्त्रजप एव मनुष्याणामधिकारात् अकारादिवर्णत्रयस्यैव न्यास उक्तः । जप्यमन्त्रवर्णन्यासस्यैव कथनीयत्वात् न्यासस्य जपार्थत्वात् । अन्यप्रणवेषु तु–

सच्चिदानन्दआत्मेति मानुषैस्तु सुरेश्वरैः ।
यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ।। (अणुभाष्ये-४.१०)

इत्यत्रोक्तगुणोपासनवन्मनुष्यातिरिक्तानामुत्तमानां चतुर्मुखान्तानामेवाधिकारात्

न्यासो नोक्तः। यथा षडक्षरसप्ताक्षराष्टक्षरभेदेनानेकविधहंसमंत्रमध्ये सप्ताक्षर-हंसमन्त्रस्य 'तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तत' (४.२३) इति ब्रह्माद्यधि-कारिकत्वमुत्त्वा मनुष्याधिकारिकयोः षडक्षराष्टाक्षरयोरेव न्यास उक्तः। सप्तारक्षस्य तु न्यासो नोक्तः। तद्वदत्रापि न्यासानुक्तिरुपपद्यते । साम्यात् । ननु तर्हि मनुष्याधिकारिकत्रिमात्रप्रणवमात्रमनुक्त्वा प्रणवविशेषस्याष्टाक्षरस्योक्तिः कुत इति चेन्न। मन्त्रोत्पत्तावस्यैवोपयोगात्। अत एवोत्पत्तिप्रकरण एव अष्टाक्षर उक्तः। जपप्रकरणे तु त्रिमात्रस्यैवोपयोग इति ज्ञापयितुमेवादिवर्णत्रयमित्यादिना वर्णत्रयस्यैव न्यास उक्तः। तस्मान्नादादीनां वर्णत्वं सिद्धम्॥ ३ ॥

**गु.दी.–** किमाहेत्यतो वक्ति— **अहमित्यादिना ॥** अहं **एको** मुख्यः सर्वोत्तम इत्यर्थः। अखिलगुणपूर्णत्वे किं मानमित्यतः सदागमः सर्वोऽपीत्याशयेन प्रथमतः प्रणवः प्रमाणमित्याह— **वाचक इति ॥ प्रणवः** ॐकारः उक्तविशेषणयुक्तस्य **मम वाचकः** अभिधायकः गुणपूर्णत्वाभिधायक इति यावत्। तत्प्रकारस्तु– 'ओतत्त्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम्' (अनु.व्या.१-१-९) 'ओमशेषगुणाधारः' (ऋ.भा.अ१-सू१-श्लो२) इत्यादिनाऽवगन्तव्यः। **एकः** सर्वमन्त्रेषु प्रधानः प्रणव इति वा। यथोक्तं— 'स सर्वमन्त्रोपनिषद्वेदबी-जसन्तानम्' इति (भा.१२-६-६) भागवते। प्रणवोऽष्टमूर्तिप्रतिपादकोऽपीति वक्तुं तस्याष्टाक्षरोपेतत्त्वमाह— **अकारादीति ॥ सोऽयं** प्रणवः **अष्टाक्षरः** अष्टौ अक्षराणि यस्मिन्स तथोक्तः। अष्टाक्षरत्वस्य विवरणम्— **अकारादीति ॥** अकार आदौ अतिशान्तः अन्ते यस्य स तथा। अकारोकारमकारनादबिन्दुघोष-शान्तातिशान्तभेदेनाष्टाक्षरो **मतः** संमतः। ते च नादादयो वर्णाः मन्त्रशास्त्रे प्रसिद्धाः ।

ननु प्रणवस्याष्टाक्षरत्वं न सम्भवति। नादादीनामक्षरत्वे पञ्चाशदक्षरापेक्ष-याऽधिकाक्षरापत्तेरिति चेन्न। भूताकाशगुणध्वनिभिरस्मदादिव्यङ्ग्यानां पञ्चा-शत्त्वेऽपि 'अनन्तमात्रान्तमुदाहरन्ति यम्' (म.वि.४-३२) इत्यादिषु अभियुक्तैर्मा-तृकापदव्यवहारात् नादादीनामनन्तानामस्मदादिध्वन्यव्यङ्ग्यानामक्षराणामभ्यु-पगमे बाधकाभावात्। 'वर्णत्रयम्'(तं.सा.१-३५) इत्युत्तरग्रन्थे वर्णत्रयस्यैव

न्यासमभिधाय नादादीनां न्यासाकथनं तु पृथगुच्चारणाविषयत्वादिति सम्प्रदायविदः ।

केचित्तु नादादयो नाक्षरशब्दवाच्यपञ्चाशद्वर्णान्तर्गतास्तथापि नादादिष्व-क्षरधर्मेषु 'अष्टाक्षरो मतः' (तं.सा.१-३) इत्यक्षरशब्दप्रयोग औपचारिकः । न च वाच्यमेवं हि नादादीनां तुर्यादिवाचकत्वानुपपत्तिरिति । अक्षरधर्मस्य स्वरस्य वाचकत्ववदुपपत्तेः । अत एव 'वर्णत्रयम्' इति वर्णत्रयस्यैव न्यासः । अन्यथा नादादीनामपि तत्कथनप्रसङ्गादित्याहुः । 'अशीत्युत्तरसहस्रवर्णानामभावाच्च तत्स्थविष्णुरूपाण्येव तत्सङ्ख्यानि' (ऐ.भा.प्रघट्टक२-अध्याय८-खण्ड२) इत्यैतरेयभाष्ये तृतीयारण्यकाष्टमखण्डव्या-ख्यापरेऽभिहितं च ॥३॥

**मङ्गाली–** एवं प्रामाण्यं प्रसाध्य चतुर्मुखेन सर्वोत्तमः सकलगुणपूर्णः कः ? तत्र किं प्रमाणं? जप्या मन्त्राः के ? तत्प्रतिपाद्यः कः ? कथं तद्ध्यानं कर्तव्यम् ? पूज्यः कः ? पूजा च कथं कार्या ? अज्ञानां साक्षाद्भगवत्पूजायाः कर्तुमशक्यत्वेन प्रतिमायामेव कर्तव्यत्वात्, तदर्थं प्रतिमा निर्मातव्या । तन्निर्माणविधिश्च कः ? तल्लक्षणं च किम् ? 'अप्रतिष्ठितबिम्बस्य पूजनं सिद्धिहानिकृत्' इत्युक्तेरवश्यं प्रतिष्ठा कर्तव्या । सा च कथं कार्या ? इत्यादिना प्रकारेण स्वयं जानताऽपि विशेषार्थज्ञानाय स्थापनाय वा सकलसल्लोकानुग्रहेच्छया पृष्टो नारायणः किमवोचदित्यत आह— **अहमिति** ।। **एकः** मुख्यः, सर्वोत्तम इत्यर्थः । **एकः** केवलः अहमेवाखिलगुणपूर्ण इति वा । 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेः । सकलगुणपूर्णत्वे किं मानमित्यतः सदागमत्वावच्छिन्नः सर्वोऽपीत्याशयेन

प्रणवो मातृकाष्टार्णो व्याहृतिद्वादशाक्षराः ।
गायत्री पौरुषं विष्णुर्महामन्त्राः प्रकीर्तिताः ।।

इति प्रमाणानुसारेण अष्टमहामन्त्रान् क्रमेण वक्तुं प्रथमः प्रणवः प्रमाणमित्याह — **वाचक इति** । आशयश्च 'तस्मात्सर्वाभिधः' इत्यत्र स्पष्टो भविष्यति । एक इत्येतत्प्रणव इत्यनेनापि सम्बध्यते । 'ओंकारः प्रणवं ब्रह्म सर्वमन्त्रेषु नायकः' इत्युक्तेः । **एको** मुख्यः सर्वमन्त्रोत्तमः इत्यर्थः ।

ओतत्त्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोततााम् । (अनु.१-१-९)

'ओतमस्मिन्जगत्सर्वं' 'अत्युच्यश्चाखिलैर्गुणैः' 'ओमशेषगुणाधारः' (ऋ.भा. १-१-२) इत्यादिना प्रणवस्याखिलगुणपूर्णताप्रतिपादकत्वं प्रमितमिति भावः। प्रणवोऽष्टमूर्तिप्रतिपादकोऽपीति वक्तुं तस्याष्टाक्षरोपेतत्वमाह—**अकारादीति । सोऽयं** प्रणवः। **अष्टाक्षरः** अष्टावक्षराणि यस्मिन्स तथोक्तः। अष्टाक्षरत्व-विवरणम**कारादीति ।** अकारः आदौ यस्मिन्सः अकारादिः, अतिशान्त अन्ते यस्मिन्स, अतिशान्तान्तः अकारादिश्चासावतिशान्तान्तश्चेति तथोक्तः। अकारोकारमकारनादबिन्दुघोषशान्तातिशान्ताख्याष्टाक्षरात्मको **मतः** प्रमितः इत्यर्थः। अत्र घोषस्थाने कलेति क्वचिद्व्यवहारः। 'नादाद्विनिर्गतो बिन्दुः बिन्दोर्जाता कला ततः, इति वचनात्। अत एव बृहद्भाष्यभावबोधे 'अकाराद्यतिशान्तान्तः' इति वाक्यव्याख्यानावसरेऽकारोकारमकारनाद-बिन्दुकलाशांतातिशान्ता इति प्रणवाष्टवर्णाः प्रदर्शिता इति ज्ञेयम् ।

अत्र नादादीनामक्षरत्वे पञ्चाशदक्षरापेक्षयाऽऽधिक्यापत्या 'पञ्चाशद्वर्णवाच्याश्च' (तं.सा.१-५) इत्यादौ पञ्चाशत्वोक्तिविरोधेन प्रणवमन्त्रस्य वर्णन्यासकथनसमये आदिवर्णत्रयमित्यकारादिवर्णत्रयादिषु अनक्षरेष्वपि अनुदात्तादिवर्णधर्मवदर्थप्रति-पादकत्वमङ्गीकृत्य 'सोऽयमष्टाक्षरो मतः' इत्यादौ अक्षरत्वादिव्यपदेशं गौणमङ्गीकुर्वन्ति बहवः। नादादयो वर्णा एव न वर्णधर्माः। 'सोऽयमष्टाक्षरो मतः' । 'वर्णस्तारार्णभेदिताः'(१,५) 'तारोऽष्टाक्षरभेदवान्'(१,१०) इत्यत्रैव ग्रन्थे बहुवारं नादादिष्वकारादिष्विवाक्षरार्णशब्दप्रयोगात् । 'आद्यैस्तारचतुर्वर्णैः' (तं.सा.१-११) 'आदिवर्णत्रय' मित्यत्राष्टानां मध्ये चतुर्णां त्रयाणां च वर्णानां आद्यादिशब्दाभ्यां प्रथमवर्णत्वोक्त्या तदन्येषां वर्णत्वस्य ज्ञापितत्वाच्च। अन्यथा प्रथमद्वितीयादिशब्दानां सजातीयेष्वेव प्रयोगस्यास्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ सर्वत्र दृष्टत्वेन वर्णावर्णसमुदायमध्ये वर्णेषु प्रथमवर्णत्वोक्त्ययोगात् । वर्णत्रयमित्येवोक्तिप्रसङ्गाच्च । बृहद्भाष्येऽपि–

चतुर्थपादो गायत्र्याः प्रणवः समुदाहृतः ।
अकाराद्यतिशान्तान्तः प्रणवोऽष्टाक्षरो यतः ।। (भृ.भा.७-१)

इति गायत्र्याः अष्टाक्षरोपेतपादचतुष्टयवत्त्वं वक्तुं प्रणवांशानां नादादीनां अक्षरत्वमङ्गीकृत्य प्रणवस्याष्टाक्षरत्वोक्तेश्च । नादादीनां पञ्चाशदाधिक्येऽपि प्रणवव्यक्तवर्णानां पञ्चाशत्वाविवक्षया 'पञ्चाशद्वर्णवाच्याश्च'(तं.सा.१-५) इत्यादौ पञ्चाशत्वोक्त्युपपत्तेः । अन्यथा 'एकपञ्चाशद्वर्णानाम्'(तं.सा.२-७) इत्यादौ क्षकारस्याधिकाक्षरत्वोक्त्यनुपपत्तेः । 'ॐ घृणिः सूर्य आदित्यः' इति सौरमन्त्रे ॐकारस्य न्यासमनुक्त्वा पदत्रयस्यैव क्रमव्युत्क्रमाभ्यां षडङ्गन्यासोक्तिवत् अत्राप्युपपत्तेः । स्वतन्त्रस्य मुनेर्न्यासानुक्त्यभिप्रायस्येदानींतनैर्ज्ञातुमशक्यत्वेन प्रागुक्तबाधका-भावाच्चेत्यपरे ब्रुवते ।।३।।

प्रणववाच्यमूर्तिकथनम्

**तं. सा. स विश्वतैजसप्राज्ञतुरीयात्मान्तरात्मनाम् ।**
**परमात्मज्ञानात्मयुजां(ज्ञानयुजां) मद्रूपाणां च वाचकः।।४।।**

**त.क.–** समाधत्ते– **स विश्वतैजसेति ।।** यद्यपि प्रणवः अष्टाक्षरः । तथापि विश्वादयो वाच्या अप्यष्टौ सन्ति । तेन गुणपूर्णत्वं प्रत्यक्षरमेव निमित्तम् । वाचकव्यक्तीनां वाच्यव्यक्तीनां च समसङ्ख्यात्वाच्च नानुपपत्तिः । न चैक इत्युक्तिविरोध इत्यत उक्तम्– **मद्रूपाणामिति ।।** ते विश्वादयो मत्स्वरूपमेवेति भावः । वाच्यव्यक्तिभेदाभावात् पुनर्न निवर्तते साऽनुपपत्तिरिति चेन्न । भेदप्रतिनिधिविशेषबलात् व्यक्त्यन्तरादिघटितव्यवहारो युज्यत इत्यन्यत्रोक्तेः । एतेन अक्षरान्तरवैय्यर्थ्यं समाहितम् । तदनेन 'सर्वशब्दवाच्यः प्रणववाच्यत्वात् व्यतिरेकेण जीववत्' इति व्यतिरेकिप्रयोगः समर्थितः ।। ४ ।।

**अ.सं.–** प्रणवावयवाकारादिवर्णप्रतिपाद्यदेवता आह— **स इति ।। सः** अष्टाक्षरात्मकः प्रणवः स्वावयवैः अकारोकारमकारनादबिन्दुघोषशान्ताति-

शान्ताख्यैरेभिर्वर्णैः विश्वतैजसप्राज्ञतुरीयात्मान्तरात्मपरमात्मज्ञानात्मसंज्ञकानामष्टानां मद्रूपाणां च क्रमेण वाचकः। न केवलं ममेति चार्थः।

कृष्णो नृसिंहश्च वराहो विष्णुरेव च।
परं ज्योतिः परं ब्रह्म वासुदेव इति क्रमात्।
अकारादेस्तथा शान्तातिशान्तादेश्च देवताः॥ (य.प्र.क.५)

इति प्रणवकल्पोक्तकृष्णाद्यनुक्तरूपसमुच्चये वा चशब्दः। अनेन समग्रः प्रणवः गुणपूर्णविष्णुवाचकः। स्वांशैरकारादिभिः विश्वादिरूपवाचक इत्युक्तं भवति। 'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यां' इति श्रुतेः 'परमात्मज्ञानात्मयुजां' इत्यत्र न छन्दोभङ्गः शङ्कनीयः। 'ज्ञानयुजां' इति क्वचित्पाठः। तत्र नामैकदेशानुवाद इति ज्ञेयम्॥ ४॥

**गु.दी.–** अथ प्रणवाक्षरैर्वाच्यमूर्तीराह— **स इति॥** **सः** सप्रभेदः प्रणवः अकाराद्यंशैर्विश्वाद्यष्टमूर्तीनां वाचकः। न केवलं ममेति चार्थः। यद्यपि भगवन्मूलरूपप्रतिपादकत्वमात्रेणाष्टमूर्तिप्रतिपादकत्वमपि सेत्स्यति। तद्रूपाणां सर्वथा भेदाभावात्। तथापि भेदप्रतिनिधिविशेषस्य विद्यमानत्वेन विशिष्योक्तिरुपपन्नेति ध्येयम्।

कृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च।
परञ्ज्योतिः परं ब्रह्म वासुदेव इति क्रमात्।
अकारादेस्तथा शान्तातिशान्तस्य देवताः॥ (य.प्र.क-५,६)

इति प्रणवकल्पोक्तपक्षान्तरसमुच्चयार्थो वा चशब्दः। यद्वा चशब्दः अकाराद्यष्टाक्षरवाच्यानुक्तमूर्तिविशेषसमुच्चायकः। तत्प्रकारस्तु—

सृष्टिकर्ता ब्रह्मनामा योऽसृजच्चतुराननम्।
अन्तर्यामी विरिञ्चस्य सोऽकारार्थो जनार्दनः॥

वैकुण्ठलोक आस्ते स द्वितीयवपुषा हरिः।
उकारवाच्य स विभुर्नृसिंहो रुद्रनामकः॥

एतत्त्रियात्मकं विष्णुं प्रणवोऽयं त्रियात्मकः ।
एकं पृथगिवाचष्टे बिन्दुर्वक्त्यनिरुद्धकम् ॥

प्रद्युम्नाद्यान्नादपूर्वाः सर्वान्नारायणात्मकान् ।
पद्मनाभादिका एव मूर्तीर्नारायणोत्तराः ।
प्रणवोऽयं वदत्यष्टौ तस्मान्नान्याभिधायकः ॥(ऐ.भा.प्रघट्टक२-अध्याय२-खण्ड८)

इति ऐतरेयभाष्योक्ततत्त्वसाराख्यप्रमाणादवगन्तव्यः । 'न वा एकेनाक्षरेण' इत्युक्तेर्न परमात्मेत्यत्र छन्दोभङ्गः शङ्कनीयः । 'ज्ञानयुजाम्' इति पाठे नामैकदेशानुवादो भीम इतिवत् ॥४॥

**मङ्गाली**– प्रणवावयवाकारादिवर्णप्रतिपाद्यदेवता आह— **स इति** ॥ **सः** अष्टक्षरात्मकः प्रणवः स्वावयवैरकारादिभिर्वर्णैः विश्वादीनामष्टानां मद्रूपाणां च वाचकः । न केवलं ममेति चार्थः ।

कृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च ।
परञ्ज्योतिः परंब्रह्म वासुदेव इति क्रमात् ।
अकारादेस्तथा शान्तातिशान्तादेश्च देवताः । (य.प्र.क.५,६)

इति प्रणवकल्पोक्तकृष्णाद्यनुक्तरूपसमुच्चये वा चशब्दः । अनेन समग्रः प्रणवः गुणपूर्णविष्णुवाचकः । स्वांशैर्विश्वादिवाचक इत्युक्तं भवति। अत्र पूर्वार्धे द्वन्द्वः । परमात्मज्ञानात्मयुजामित्यत्र द्वन्द्वगर्भः तृतीयातत्पुरुषः । **युजां** युक्तानाम् । रूपरूपिणोरत्यन्ताभेदेन मूलरूपवाचकत्वोक्त्यैवाष्टमूर्तिवाचकत्वसिद्धावपि भेदप्रतिनिधिविशेषबलाद्विशिष्योक्तिरुपपन्नेति ज्ञेयम् । 'न वा एकेनाक्षरेण' इत्याद्युक्तेः परमात्मज्ञानात्मयुजामित्यत्र न छन्दोभङ्गः शङ्कनीयः । 'ज्ञानयुजाम्' इति क्वचित्पाठः । तत्र नामैकदेशानुवाद इति ज्ञेयम् । अनेन विश्वादीनां साक्षात् चतुर्मुखोपदेशकनारायणोद्भूतत्त्वं सूचितम् ॥४॥

प्रणवप्रतिपाद्यमूर्तिभिः पञ्चाशन्मूर्त्यभिव्यक्तिकथनम्

**तं. सा. तद्रूपभेदाः पञ्चाशन्मूर्तयो मम चापराः ।**
**पञ्चाशद्वर्णवाच्यास्ता वर्णास्ताराणर्भेदिताः ॥ ५ ॥**

**त.क.**– अधुना 'पञ्चाशद्वर्णवाच्यत्वात् हरिः सर्वशब्दवाच्यः' इति प्रयोगं समर्थयितुं, अस्तु विश्वादीनां वाच्यानामष्टानां सद्भावादष्टाक्षरप्रणववाच्यत्वम्। पञ्चाशद्वर्णवाच्यत्वं तु कथम्? न च तावद्रूपाणां कल्पनं युक्तम्। गौरवात्। विश्वादीनामकारादिवाच्यानां रूपाणां प्रमितत्ववदिह रूपविशेषाणां वाच्यानां, वाचकानां वर्णानामप्यभावादित्यतः वाच्यवाचकव्यक्तीः सङ्ख्यया निर्दिशति– **तद्रूपभेदा इति ।।** चकारोऽनुमानान्तरसमुच्चायकः। विश्वादयोऽष्टौ मूर्तयो वाच्याः सन्तीति हेतुर्नासिद्धो यथा, तथा तदपराः पञ्चाशन्मूर्तयो मम यतः सन्ति ताश्च यथाक्रमं पञ्चाशद्वर्णवाच्या अङ्गीक्रियन्तेऽतोऽयमपि हेतुर्नासिद्ध इत्यर्थः।

ननु पञ्चाशद्वर्णान्तर्गत एव प्रणवावयवाकारादिः। ततश्च पञ्चाशद्वर्णवाच्यत्वं सर्वशब्दवच्यतायां प्रथमं हेतुः कर्तव्यः। प्रणववाच्यत्वं तु तदनन्तरमेव हेतूकर्तुमुचितम्। एवं मूर्तिष्वपि सः कुतो विनियम आश्रित इत्यतः– **तद्रूपभेदा इति, तारार्णभेदिता इति** चोक्तम्। प्रथममभिव्यक्तिरेव प्राथमिकत्वे निमित्तम्। नोत्पत्त्यादिः। वर्णानां मूर्तीनां च नित्यत्वात्। यद्वक्ष्यति—

वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।
व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ।। इति ।(तं.सा.१-३१)

तथा च—

..................... प्रथमं द्वौ विनिःसृतौ ।
ओंकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् ।। (सू.भा.उ.प्र.१-१-१)

इत्युक्तत्वेन ओंकारस्य प्रथममभिव्यक्तत्वं शब्दजातिषु । तदनन्तरमितरेषाम्। एवं प्रणववाच्येभ्यः विश्वादिभ्यः पञ्चाशद्वर्णवाच्यानां वक्ष्यमाणानामजादीनामभिव्यक्तत्वं चावगम्यत इति युक्त एवानयोर्हेत्वोः पूर्वापरीभाव इति भावः ।। ५ ।।

**अ.सं.**– इदानीं सदागमत्वावच्छिन्नः सर्वशब्दोऽपि साक्षात् परम्परयाऽपि प्रणवव्याख्यानरूपत्वेन गुणपूर्णत्वे प्रमाणमित्याशयेन वर्णानां तावत् प्रणवव्याख्यानरूपताप्रदर्शनाय मातृकाप्रतिपाद्यपञ्चाशन्मूर्तयः प्रणवप्रतिपाद्याष्ट-

मूर्तिभिर्व्यक्ताः। **प्रणवाष्टाक्षरैः** पञ्चाशद्वर्णा अभिव्यक्ता इत्याह— **तद्रूपेति ॥** **तद्रूपभेदाः** तेभ्यः पूर्वोक्तेभ्यः, रूपेभ्यः विश्वादिभ्यः, भेदः उद्भेदः अभिव्यक्तिर्यासां ताः तथोक्ताः। **अपराः** विश्वादिभ्योऽन्याः मम पञ्चाशन्मूर्तयः सन्ति। **ताः** पञ्चाशन्मूर्तयः पञ्चाशद्वर्णवाच्याश्चेत्यर्थः। **वर्णाः** अकारादिपञ्चाशद्वर्णाः। **तारार्णेभ्यः** तारस्य प्रणवस्य अर्णेभ्यः अकाराद्यष्टवर्णेभ्यः भेदिताः व्यक्ताः प्रणवगताकारादिव्याख्या इति सम्प्रदायः। पञ्चाशद्वर्णाः अजादिमूर्तिप्रतिपादकाः सन्त एव प्रणवव्याख्यानरूपत्वेन प्रणवावयवाष्टाक्षरप्रतिपाद्यान् विश्वादीनपि प्रतिपादयन्तः प्रणवप्रतिपाद्यं गुणपूर्णं नारायणं च प्रतिपादयन्तीति भावः। एवमुत्तरमन्त्रेष्वपि द्रष्टव्यम् ॥ ५ ॥

**गु.दी–** मातृकामन्त्रा अपि गुणपूर्णत्वे प्रमाणमित्याशयेन तत्प्रतिपाद्यपञ्चाशन्मूर्तयः प्रणवप्रतिपाद्यमूर्त्यभिव्यक्ता इत्याह— **तद्रूपेति ॥** तद्रूपैर्विश्वादिरूपैः भिद्यन्ते विश्लिष्यन्त इति **तद्रूपभेदाः, ममापराः** चाजाद्याः **पञ्चाशन्मूर्तयः** पञ्चाशद्वर्णैर्वाच्याः। सन्तीति शेषः।

अथ प्रणवाष्टाक्षरेभ्यः पञ्चाशद्वर्णानामभिव्यक्तिमाह– **वर्णा इति ॥** पञ्चाशद्वर्णाः **तारार्णभेदिताः** तारार्णैः प्रणवाक्षरैः भेदिताः सञ्जातभेदास्तेभ्यो व्यक्ता इति यावत्। 'तदस्य सञ्जातं तारकादिभ्य इतज्' इति (पा.सू.५-२-३६) इतच्प्रत्ययः। अन्ये तु– **तारार्णभेदिताः** इति प्रणवाक्षरव्याख्यानत्वेन स्थिता इत्यर्थः। पञ्चाशन्मन्त्राः अजादिमूर्तिप्रतिपादकाः ताराष्टाक्षरव्याख्यानरूपत्वेन तत्प्रतिपाद्यान् विश्वादीनपि प्रतिपादयन्तः प्रणवप्रतिपाद्यं गुणपूर्णं नारायणं प्रतिपादयन्तीति भाव इत्याहुः ॥५॥

**मङ्गाली–** मातृकामन्त्रा अपि प्रणवव्याख्यानरूपत्वेन गुणपूर्णत्वे प्रमाणमित्याशयेन तेषां प्रणवव्याख्यानत्वप्रदर्शनाय तत्प्रतिपाद्यपञ्चाशन्मूर्तयः प्रणवप्रतिपाद्याष्टमूर्तिभ्यो व्यक्ताः प्रणवाष्टाक्षरैः पञ्चाशद्वर्णा अभिव्यक्ता इत्याह— **तद्रूपेति ॥** तैर्विश्वादिरूपैर्भिद्यन्ते विश्लिष्यन्त इति तेभ्यो विश्वादिभ्यः भेद उद्भेद अभिव्यक्तिर्यासामिति वा **तद्रूपभेदाः। अपराः** विश्वादिभ्योऽन्याः मम पञ्चाशन्मूर्तयः सन्तीति शेषः। **ताः** पञ्चाशन्मूर्तयः पञ्चशद्वर्णवाच्याश्चेत्यर्थः।

**वर्णाः** अकारादिपञ्चाशद्वर्णाः । **तारार्णेभ्योऽकाराद्यष्टवर्णेभ्यो भेदिताः** व्यक्ताः प्रणवगताकारादिव्याख्या इति संप्रदायविदः । वक्ष्यति चैतत् । पञ्चाशन्मन्त्रा अजादिमूर्तीः प्रतिपादयन्त एवं ताराष्टाक्षरव्याख्यानत्वेन तत्प्रतिपाद्यान् विश्वादीनपि प्रतिपादयन्तः सन्तः प्रणवप्रतिपाद्यं गुणपूर्णं नारायणं प्रतिपादयन्तीति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ।। ५ ।।

प्रणवगताष्टवर्णैः पञ्चाशतां वर्णानामभिव्यक्तिकथनम् पञ्चाशद्वर्णवाच्यमूर्तिकथनं च

**तं. सा.** **द्विरष्टपञ्चकचतुःपञ्चेत्येवाष्टवर्गगाः ।**
**अज आनन्द इन्द्रेशावुग्र ऊर्ज ऋत(तु)म्भरः ।। ६ ।।**

**ऋघलृशौ लृजि(ज)रेकात्मैर ओजोभृदौरसः ।**
**अन्तोऽर्धगर्भः कपिलः खपतिर्गरुडात्म(स)नः ।। ७ ।।**

**घर्मो ङसारश्चार्वङ्गश्छन्दोगम्यो जनार्दनः ।**
**झाटितारिर्ञमष्टङ्की ठलको(ठकलो) डरको ढरी ।। ८ ।।**

**णात्मा तारस्थभो दण्डी धन्वी नम्यः परः फली ।**
**बली भगो मनुर्यज्ञो रामो लक्ष्मीपतिर्वरः ।। ९ ।।**

**शान्तसंवित् षड्गुणश्च सारात्मा हंसळाळुकौ ।**
**पञ्चाशन्मूर्तयस्त्वेता ममाऽकारादिलक्षकाः ।। १० ।।**

**त.क.**– ननु 'वर्णास्तारार्णभेदिताः' इत्युक्तमयुक्तम् । तारार्णानां उक्तरीत्याऽष्टसङ्ख्यात्वात् तदभिव्यक्तानां वर्णानां पञ्चाशत्त्वेनासमसङ्ख्यत्वात्, अवान्तरविभाजकोपाध्यदर्शनाच्चेत्यतः तेष्वप्यवान्तरविभाजकोपाधिदर्शनेन समसङ्ख्यत्वं सम्पादयति– **द्विरष्टेति** ।। अष्टवर्गगा वर्णस्तारार्णभेदिता इति सम्बन्धः । **द्विरष्टेति** षोडशत्वमेक उपाधिः । अनेन अकारादिः अः इत्यन्तं षोडशवर्णा एको वर्गः प्रणवावयवादकारादभिव्यक्तः । पञ्चकेत्यावर्तते । पञ्चकपञ्चकेत्यनेन पञ्चोपाधय उक्ताः कवर्गत्वादयः । तेन ककारादयो मकारान्ताः स्पर्शा गृह्यन्ते ।

प्रणवावयवादुकारात् कवर्गगाः पञ्चवर्णा ङकारान्ताः, प्रणवावयवात् मकारात् चवर्गगाः चकारादयो मकारान्ताः, प्रणवावयवात् नादात् टवर्गगाः टकारादयो णकारान्ताः पञ्चवर्णाः, प्रणवावयवात् बिन्दोः तकारादयो नकारान्तास्तवर्गगा वर्णाः, प्रणवावयवात् घोषात् पकारादयो मकारान्ताः पवर्गगाः वर्णा अभिव्यक्ताः । एवं चतुर्णां एक उपाधिः । यकारादयो वकारान्ता अन्तस्था वर्णाः प्रणवावयवात् शान्तात्, एवं शकारादयो लकारान्ताः पञ्चोष्मवर्णाः अतिशान्तादभिव्यक्ताः । तथाच अच्त्व-कवर्गत्व-चवर्गत्व-टवर्गत्व-तवर्गत्व-पवर्गत्व-अन्तस्थत्व-उष्मत्वाख्यविभाजकधर्मावच्छिन्नानां समसङ्ख्यत्वात् प्रणवाक्षरैरभिव्यक्तिर्युक्तेति भावः ।

यद्यपि 'एकपञ्चाशद्वर्णानां' इत्यादौ क्षकारेण सह एकपञ्चाशत्वं वर्णानामुक्तम् । तथापि कषयोर्योगे क्ष इति सन्ध्यक्षरत्वेनेह न विवक्ष्यते । अन्यथा जञयोर्योगे ज्ञः तसयोर्योगे त्सः शचयोर्योगे श्च इत्यादिना वर्णान्तराणामपि परिगणनप्रसङ्गः । 'एकपञ्चाशद्वर्णानां' इत्यत्र तु 'शतं कलाः कलशनामकाः' इति शतत्वघटनाय क्षकारदेवता नृसिंहोऽपि परिगणितः ।

पञ्चाशन्मूर्तयः पञ्चाषद्वर्णवाच्या इत्युक्तम् । ताः क्रमेण संगृह्णाति– **अज इत्यादिना ।।** अकारवाच्योऽजः । आकारवाच्य आनन्द इत्यादयो योजना द्रष्टव्याः । मूर्तिशब्दः प्रतिमायामपि प्रसिद्ध इत्यत आह– **पञ्चाशन्मूर्तयस्त्वेता-ममाऽकारादिलक्षका इति ।।** ज्ञानबलैश्वर्यादिराद्यर्थः । **लक्षकं** लक्षणम् । बहुव्रीहिः । न हि द्वात्रिंशल्लक्षणोपेताकृतिज्ञानादिगुणवतां भेदो युक्त इति भावः । अकारादिवर्णो ज्ञापको येषामिति वा । तुशब्द एवार्थे । एता एव पञ्चाशन्मूर्तयः, न त्वन्या इति सम्बध्यते । अनेन

केशवकीर्ती नारायणकान्ती माधवस्तथा तुष्टिः ।
गोविन्दः पुष्टियुतो विष्णुधृती सूदनश्च मध्वाद्यः ।।

शान्तिस्त्रिविक्रमश्च क्रियया युतो वामनो दयायुक्तः ।
श्रीधरयुता च मेधा हृषीकनाथश्च हर्षया युक्तः ।।

अम्बुजनाभश्चद्धे दामोदरसंयुता पुनर्लज्जौ ।
लक्ष्मीः सवासुदेवा सङ्कर्षणकः सरस्वतीयुक्तः ॥

प्राद्यो द्युम्नः प्रीतिसमेतोऽनिरुद्धको रतिरिमाः स्वरोपेताः ।
चक्रिजये गदिदुर्गे शार्ङ्गी प्रभयान्वितस्तथा खङ्गी ।
सत्या शङ्खी चण्डा हरिवाण्यौ ॥

इत्यादिना षोडशानामचां वर्णानां केशवादयोऽनिरुद्धान्ताः कीर्त्यादिषोडश-शक्तिसहिता मूर्तयो वाच्याः, कादीनां क्षान्तानां चक्री गदीत्यादयो नृसिंहान्ता जयादुर्गादिविद्युतान्तशक्तिसहिता हलूवाच्या इति क्रमदीपिकाद्युक्तिर्निरस्ता, मूलप्रमाणाभावादिति ध्येयः। तस्माद् युक्तमुक्तं प्रणववाच्यत्वात् पञ्चाशद्वर्णवाच्यत्वाच्च सर्वशब्दवाच्यो हरिरिति ॥ ६-१० ॥

**अ.सं.–** अष्टभ्यो वर्णेभ्यः कथं पञ्चाशतां वर्णानां विभेद इत्यत आह– **द्विरष्टेति ॥** द्विवारं आवृत्ताः अष्ट द्विरष्ट षोडशेत्यर्थः। पञ्चानां वर्गानां समूहः पञ्चकम्। द्विरष्टकश्च पञ्चकश्च चत्वारश्च पञ्च चेति समासः। **इत्येवं अनेन प्रकारेणैव अष्टवर्गगाः** अष्टवर्गत्वेन स्थिताः । एते पञ्चाशद्वर्णाः प्रणवाष्टाक्षरेभ्योः व्यक्ता इत्यर्थः ।

अत्रायं विवेकः। प्रणवगताकाराद्यष्टवर्णेषु मध्येऽकारेण अकारादिषोडश-स्वराख्यवर्णात्मक एको वर्गो व्यक्तः । उकारेण ककारादिपञ्चवर्णात्मको वर्गः । मकारेण चकरादिपञ्चवर्णवर्गः। नादेन टकारादिपञ्चाक्षरवर्गः। बिन्दुना तकारादिपञ्चवर्णवर्गः। घोषेण पकारादिपञ्चाक्षरवर्गः। शान्तेन यरलवा इति चतुरक्षरवर्गः। अतिशान्तेन श ष स ह ल इति पञ्चवर्णवर्गो व्यक्त इति ॥

अयं भावः। षोडशस्वराः अकारम्, कवर्गः उकारम्, चवर्गो मकारम्, टवर्गो नादम्, तवर्गो बिन्दुम्, पवर्गो घोषम्, यादिवर्गो शांतम्, शादिवर्गोऽतिशान्तम्, इत्येवं क्रमेणाष्टवर्गाः प्रणवाक्षराणि व्याकुर्वन्तीति। एवमेव विश्वमूर्त्या अजाद्याः षोडशमूर्त्तयः अकारादिषोडशवर्णप्रतिपाद्याः व्यक्ताः। तैजसेन कवर्गदेवताः कपिलादयः पञ्च, प्राज्ञेन चवर्गदेवताश्चार्वङ्गादयः पञ्च, तुरीयेण टवर्गमूर्तयः

टङ्कारादयः पञ्च, आत्मना तादिवर्गप्रतिपाद्याः तारादयः पञ्च, अन्तरात्मना पवर्गदेवताः परादयः पञ्च, परमात्मना यादिवर्गमूर्तयः यज्ञादयश्चत्वारः, ज्ञानात्मना शादिपञ्चाक्षरदेवताः, शान्तसंविदादयः पञ्चमूर्त्तयोऽभिव्यस्ताः, इत्येवं क्रमेण प्रणवाष्टाक्षरप्रतिपाद्याभिर्विश्वाद्यष्टमूर्तिभिः पञ्चाशद्वर्णप्रतिपाद्यानामजादिमूर्तीनाम-भिव्यक्तिर्जातेति ज्ञेयम् ।

वर्णाभिव्यक्तिकथनप्रसङ्गे ककारषकारद्वयात्मकस्य क्षकारस्य पृथग् व्यक्त्यभावादनुक्तिरिति ज्ञेयम् । 'इत्येवाष्टवर्गगाः' इत्येवकारेण 'द्विरष्टे'त्यनेन अष्टाष्टवर्णेनैव वर्गद्वयम् । 'पञ्चके'ति वर्गपञ्चकम् । 'चतुःपञ्चे'ति मिलित्वा नवाक्षरात्मको एको वर्ग इत्येवं प्रकारान्तरेणाष्टवर्गगत्वं निरस्तं भवति ।

स्वरैः षोडशभिर्वर्गः प्रथमः परिकीर्तितः ।
पञ्चपञ्चाक्षराश्चान्ये द्वौ वेदशरवर्णकौ ।।

इति तन्त्रान्तरोक्तवचनविरोधात् । वेदवर्णश्चतुर्वर्णः शरवर्णकः पञ्चवर्णात्मक इत्यर्थः । अत्र पञ्चाशद्वर्णानामकारादीनां प्रसिद्धत्वात्कण्ठतोऽनुक्तिरिति द्रष्टव्यम् ।।

कास्ताः पञ्चाशद्वर्णवाच्या देवता इत्यतः पञ्चाशन्मूर्तीराह– **अजेत्यादिना ममाकारादिलक्षका इत्यन्तेन ।। एता** इत्युक्ताः मम पञ्चाशन्मूर्तयस्तु **अकारादिलक्षकाः** अकारादिवर्णा एव लक्षका लक्षणवत्तया प्रतिपादकाः यासां ताः तथोक्ताः । अकारादिवर्णवाच्या इति यावत् ।। ७-१०।।

**गु.दी– अष्टभ्यो वर्णेभ्यः कथं पञ्चाशतां व्यक्तिरित्यत आह— द्विरष्टेति ।। द्विरष्टौ च पञ्चानां वर्गाणां समूहः पञ्चकं च, चत्वारश्च पञ्च चेत्येवं अष्टवर्गगाः अष्टवर्गस्थाः एते प्रणवाष्टाक्षरेभ्यो व्यक्ता इति पूर्वेण सम्बन्धः ।**

अष्टवर्गाश्चैवम् । अकारादिविसर्जनीयान्तैः षोडशस्वराक्षरैरेको वर्गः प्रणवगताकारेण व्यक्तः । 'कादयो मावसानाः स्पर्शाः' इति सञ्ज्ञया पञ्चभिः पञ्चभिः स्पर्शैः कवर्ग-चवर्ग-टवर्ग-तवर्ग-पवर्गेति पञ्चवर्गाः उकार-मकार-नाद-विन्दु-घोषाख्यप्रणवाक्षरेभ्यः क्रमाद्व्यक्ताः । यरलवाख्यैरन्तस्स्थैश्चतुर्भिरपरो वर्गः, स तु शान्ताद्व्यक्तः । ळसहितैः शषसहाख्यपञ्चभिरेको वर्गः, स प्रणवस्याति-

शान्ताख्याक्षराद्व्यक्त इति । एतेन अष्टमूर्तिभिः पञ्चाशतां मूर्तीनां व्यक्तिरप्यनेन क्रमेणेति सूचितं भवति । प्रणवाक्षरादेवैतेषां व्यक्तिरुक्ता भागवते— 'ततोऽभूत् त्रिवृदोङ्कारः' (भा.१२-६-४) इत्युक्त्वा

ततोऽक्षरसमाम्नायमसृजद्भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ।। इति । (भा.१२-६-८)

केचित्तु— द्विरष्टेति वर्गद्वयमुच्यते । एकैकवर्गस्याष्टवर्णात्मकत्वं द्रष्टव्यम् । पञ्चकेति पूर्ववत् । चतुःपञ्चेति नवाष्टाक्षरात्मा एको वर्गः इति वदन्ति । एवेत्यनेन—

रूपशक्तेरभून्नादः सर्वव्यापी ह्यनाहतः ।
नादाद्विनिर्गतो बिन्दुर्बिन्दोर्जाता कला ततः ।।

कलाशक्तेरभूदाद्यः स्वरस्तस्मात्स्वरात्त्रयः ।
तद्विकाराः स्वराः सर्वे जीवरूपाश्च षोडश ।।

शक्तेः पञ्चाङ्गतः पञ्चवर्गाः पञ्चाक्षरात्मकाः ।
कादयस्ते शरीराख्याः सम्भूता जीववर्जिताः ।।

शक्तेश्च सप्तधातुभ्यः सम्भूताः सप्त यादयः ।
शक्तिप्राणाद्धकारश्च क्षकारश्चोभयात्मकः ।।
पञ्चाशदिति विख्याताः....' ।।

इति शारदाग्रन्थोक्तोत्पत्तिर्नेति सूचयामास ।

न च– स्पर्शास्तस्याभवञ्जीवात् स्वरा देहात्प्रजज्ञिरे ।
ऊष्माण इन्द्रियेभ्यश्च अन्तस्स्था बलतो विभोः ।। (भा.ता.३-१३-४६)

इति तृतीयस्कन्धत्रयोदशाध्यायतात्पर्योदाहृतब्राह्मपुराणवाक्येऽन्यथा कथनात् तद्विरोधः स्वयूथ्याच्छङ्क्यः । तस्य चतुर्मुखसकाशादवान्तराभिव्यक्तिमपेक्ष्य प्रवृत्तत्वादत्रोक्तस्य च ब्रह्माण्डाद्बहिरोङ्कारादभिव्यक्तिमपेक्ष्य प्रवृत्तेरिति ।।

पञ्चाशन्मूर्तय इत्युक्तम् । कास्ता पञ्चाशन्मूर्तय इत्यतस्ता आह– **अज इति** ।।

जनिरहितत्वात् **अजः**। आनन्दरूपत्वात् **आनन्दः**। परमैश्वर्यवत्त्वात् **इन्द्रः**। 'इदि परमैश्वर्ये' (धा.पा.६३) इति धातुः। 'ईकारेणोच्यते लक्ष्मीः' इति वचनादीं लक्ष्मीं शास्तीति **ईशः**। उं रुद्रं ग्रसतीति **उग्रः**। दैत्यानां क्रूररूपत्वाद्वा। 'ऊर्ज बलप्राणनयोः' इति (धा.पा.१५५०) धातोः **ऊर्जः** बलचेष्टावान्। ऋतं सत्यं जगद् बिभर्तीति **ऋतम्भरः**। 'ऋतुम्भरः' इति पाठे तल्लक्षितं कालं बिभर्तीत्यर्थः। विभक्त्यलोपादलुक्समासोऽयम्। 'ॠकारो दनुजप्रसूः' इति धनञ्जयात् ॠं दनुं घारयति 'घृ क्षरणदीप्त्योः' इति (धा.पा.१०९६) धातोर्दीपयत्यन्तः क्लेशयति पुत्रहनननेति **ॠघः**। 'ऌकारो देवमाता स्यात्' इति धनञ्जयाल्लृरदितिः तस्याः शं सुखं यस्मात्स **ऌशः**। 'ॡकारः पूर्वदेवानां जननी स्मर्यते बुधैः' इति धनञ्जयात् ॡं दितिं पुत्रहननेन जयतीति **ॡजिः**। 'जेता जश्च समाख्यातः' इत्यभिधानात् ॡज इत्येव स्यात् तथापि 'तृतीयोऽतिशये' इति सूत्रादिकारः। 'ॡजरेकात्मा' इति पाठे तु लाति जयति ऋच्छति च सर्वमित्यर्थो द्रष्टव्यः। **एकात्मा** मुख्यस्वामी। 'ऐकारः स्यान्महेश्वरः' इति धनञ्जयादैकारवाच्यं रुद्रं रमयतीति **ऐरः**। ओजः सामर्थ्यं बिभर्तीति **ओजोभृत्**। औ ब्रह्मा। 'औकार उच्यते ब्रह्म' इति धनञ्जयात्। स रसो वीर्यमपत्यं यस्य स **औरसः**। अन्तयति नाशयतीति **अन्तः**। आसमन्ताद्वृद्धाः ब्रह्मादयो गर्भे यस्येति **अर्धगर्भः**।

सुखरूप इति **कः**। पाल्यते जगदनेनेति पिः। लीयते जगदनेनेति लः। ततः कर्मधारयः। 'सुखादनन्तात् पालनाल्लीयनाच्च तं वै देवं कपिलमुदाहरन्ति' इति श्रुतेः (गीताभाष्ये अ.१० श्लो.२६ उदाहृतबाभ्रव्यशाखावचनम्)। खानामिन्द्रियाणां पतिरिति **खपतिः**। गरुडवाहनत्वाद् **गरुडासनः**। शत्रुसन्तापनाद् **घर्मः**। 'घर्मः स्यादातपे ग्रीष्मे' इति विश्वः। 'ङकारो विषयः स्मृतः' इति धनञ्जयात् ङा विषयास्तेषु सारो वरो **ङसारः**।

चारूणि सुन्दराण्यङ्गानि यस्य स **चार्वङ्गः**। छन्दोभिर्ज्ञायत इति **छन्दोगम्यः**। न जायत इति जनः, नञः परनिपातः, अर्दयति च संसारमिति **जनार्दनः**। 'स नासीत्सोऽर्दयति' (गी.भा.उ.बाभ्रव्यश्रुतिः, १०-८) इति श्रुतेः। झाटिता द्राविता अरयो येन स **झाटितारिः**। 'ञकारो गायके प्रोक्तः' इति धनञ्जयात् ञं वेदादिना

स्वगायकं मानयतीति **ञमः**। ञः गर्गरध्वनिः । तेन मीयत इति **ञमः**। 'अव स्वराति' इति श्रुतेः ।

पाषाणदारणकारणमायुधं **टङ्कः**। तद्वान् **टङ्की**। 'ठो महेशः समाख्यातः । ल इन्द्रे लवणे लः स्यात्' इति धनञ्जयात् ठलयोः रुद्रेन्द्रयोः कं सुखं यस्मात्स **ठलकः**। 'ठकलः' इति पाठे ठकौ रुद्रब्रह्माणौ लातीति व्याख्येयम् । 'कं सुखं परिकीर्तितम्' इति धनञ्जयः । 'बृहद्धनौ च डः प्रोक्तस्तथा चन्द्रस्य मण्डले' 'रश्च रामेऽनले वज्रे' 'कः प्रकाश उदाहृतः' इति धनञ्जयात् डं चन्द्रमण्डलं रोऽग्निस्तयोः कः प्रकाशो यस्मात्स **डरकः**। ढं निर्गुणं मुक्तसमुदायं रमयतीति ढरश्चतुर्मुखः । सोऽस्यास्ति परिचारकतयेति **ढरी**। 'निर्गुणे ढः प्रकीर्तितः' इति धनञ्जयः । **णात्मा** सुखरूपः । 'णश्च निर्वृतिवाचकः' इत्यभिधानात् ।

तारयत्यनिष्टनिचयमिति **तारः**। 'शिलोच्चये थकारः स्यात्' इति धनञ्जयात् थं शिलोत्तमं गोवर्धनं बिभर्तीति **थभः**। दण्डो यष्टिर्गोचारणादिक्रीडायामस्यास्तीति **दण्डी**। धनुष्मत्त्वात् **धन्वी**। सर्ववन्यत्वात् **नम्यः**। पिपर्तीति **परः** पूर्णः । 'पृ पालनपूरणयोः' इतिधातोः (धा.पा.१०८६) पचाद्यच् ।

> 'परः स्वो हरिरुद्दाम इति नामचतुष्टयम् ।
> विष्णोर्गुह्यं तु यो वेद सर्वपापैः प्रमुच्यते ॥

इति वचनात् विष्णुरेव परः ।

फलदातृत्वात् **फली**। बलवत्त्वात् **बली**। समग्रैश्वर्यादिरूपत्वाद् **भगः**। अवबोधरूपत्वात् **मनुः** ।

'मनु अवबोधन' इति धातोः (धा.पा.१४७१) । इज्यते पूज्यते सर्वैरिति **यज्ञः**। 'यज देवपूजे'ति धातोः (धा.पा.१००२) । रमत इति **रः**। न विद्यते मा परिच्छेदो यस्येत्यमः । रश्चासावमश्च **रामः**। रमयतीति वा । 'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद्रमते तेन रामः' (गी.भा.उ.शाण्डिल्यवचनम्, १०-३१) इति श्रुतेः । लक्ष्मीस्वामित्वात् **लक्ष्मीपतिः**। व्रियत इति **वरः** । शान्ता सुखरूपा संवित् यस्यासौ **शान्तसंवित्** । ऐश्वर्यादिषड्गुणयुक्तत्वात् **षड्गुणः**। सार उत्कृष्ट आत्मा

देहो यस्य स **सारात्मा** । 'आत्मा देहे धृतौ' इति वचनात् । हन्ति जानाति च सर्वमिति **हम्** । 'हन हिंसागत्योः' इति धातोः (धा.पा.१०१२) । सारत्वात्सः । 'ळकारश्चामृते स्मृतः' इति धनञ्जयात् ळौ मुक्तौ आळू ब्रह्मेन्द्रौ तयोः कं सुखं यस्मात्स **ळाळुकः** । 'आकारस्तु पितामहे' 'इन्द्रे विरोचने चैव ळुर्ळाह्वाने प्रकीर्तितः' इति च ।

इत्येताः मम **पञ्चाशन्मूर्तयः** अकारादयः प्रणवभेदाः **लक्षकाः** लक्षणवत्तया प्रतिपादकाः, मल्लक्षणप्रतिपादका इति यावत्, यासां तास्तथा अकारादिवाच्या देवता इत्यर्थः । वर्णाभिव्यक्तिकथनप्रकरणे संयुक्ताक्षरस्य पृथगभिव्यक्त्यभावात् क्षकारस्यात्रानुक्तिः । कषवर्णद्वयात्मकस्य क्षस्य पुरुषसिंहाकृतिर्देवतेति ज्ञेयम् । 'नृसिंहः क्षस्य देवता' (तं.सा.२-३) इति वक्ष्यमाणत्वात् ॥

एतेषामेव स्वरोष्मस्पर्शभेदेनाधिपतिदेवताभेदस्तु 'सर्वे स्वरा इन्द्रस्यात्मानः सर्वे ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानः' (छा.२.२.१५) इति छन्दोगश्रुत्या–

ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः स्मृतः ।
ऊष्माधिपस्तु भगवान्विष्णुरेव प्रजापतिः ।
मृत्युनामाऽथ संहाराद्रुद्रः स्पर्शाधिपः स्मृतः ॥ (छ.भा.२-२-१५)

इति तद्भाष्याच्च द्रष्टव्यः ॥६-१०॥

**मञ्जाली–** अष्टभ्यो वर्णेभ्यः कथं पञ्चाशतां विभेद इत्यत आह– **द्विरष्टेति ॥** द्विः द्विवारमावृत्ताः अष्ट द्विरष्ट षोडशेत्यर्थः। पञ्चानां वर्णाणां समूहः पञ्चकम् । द्विरष्टपञ्चकं च चत्वारश्च पञ्च चेति समासः । **इत्येव** अनेन प्रकारेणैवाष्टवर्गगाः अष्टवर्गत्वेन स्थिताः । एते पञ्चाशद्वर्णाः प्रणवाष्टाक्षरेभ्यो व्यक्ता इत्यर्थः ।

अत्रायं विवेकः । प्रणवगताकारेणाकारादिषोडशस्वराख्यवर्णात्मक एको वर्गो व्यक्तः सन् अकारवाच्यविश्वमूर्त्या अभिव्यक्ता अजादि षोडशमूर्तीः प्रतिपादयन् प्रणवगताकारं व्याकुर्वन् तद्वाच्यं विश्वं प्रतिपादयति । उकारेणाभिव्यक्तः कवर्गः तैजसाभिव्यक्तकपिलादि पञ्चमूर्तीः प्रतिपादयन् स्वव्याख्येयोकारं व्याकुर्वन्

तद्वाच्यं तैजसं प्रतिपादयति। चवर्गादयोऽपि क्रमेण मकारादिभिरभिव्यक्ताः स्वप्रतिपाद्यचार्वाङ्गादीन् प्रतिपादयन्तः स्वप्रतिपाद्यचार्वांगाद्यभिव्यञ्जकप्राज्ञादीन् तद्वाचकमकारादीन् व्याकुर्वन्तः सन्तः प्रतिपादयन्तीति ज्ञेयम्। वर्णाभिव्यक्तिकथनप्रसङ्गे कषयोगात्मकक्षस्य पृथग्व्यक्त्यभावादनुक्तिरिति ज्ञेयम्।

'इत्येवाष्टवर्गगाः' इत्यनेन प्रकारान्तरेणाष्टवर्गत्वं निराकरोति। 'स्वरैः षोडशभिर्वर्गः प्रथमः परिकीर्तितः। पञ्चपञ्चाक्षराश्चान्ये द्वौ वेदशरवर्णकौ' इति तन्त्रान्तरोक्तवचनविरोधात्। वेदवर्णश्चतुर्वर्णः शरवर्णकः पञ्चवर्णात्मक इत्यर्थः। अत्र पञ्चाशद्वर्णानां प्रसिद्धत्वात् कण्ठतोऽनुक्तिरिति बोध्यम्। कास्ता पञ्चाशद्वर्णवाच्या देवता इत्यतः पञ्चशन्मूर्तीराह— **अज इत्यादिना लक्षका इत्यन्तेन**॥ **एताः** इत्युक्ताः मम पञ्चाशान्मूर्तयस्तु **अकारादिलक्षकाः** अकारादय एव लक्षलक्षणवत्तया प्रतिपादका यासां तास्तथोक्ताः। अकादिवर्णवाच्या इति यावत्॥ ६-१०॥

प्रणवात् नारायणाष्टाक्षराभिव्यक्तिकथनम् व्याहृत्यभिव्यक्तिकथनं च

**तं. सा. नारायणाष्टाक्षरश्च तारष्टाक्षरभेदवान्।**
**आद्यैस्तारचतुर्वर्णैर्भिन्ना व्याहृतयः क्रमात्॥ ११॥**

**त.क.—** नन्वथाप्ययुक्तमुक्तम्। प्रणववाच्यत्वे हि वर्णाष्टकवाच्यत्वमेव सेत्स्यति। न तु सर्वशब्दवाच्यत्वम्। तत एव न पूर्णगुणत्वमिति। न च पूर्णगुणत्वं प्रवृत्तिनिमित्तं प्रणवस्येत्युक्तमिति वाच्यम्। तत्तच्छब्दवाच्यतायां हि तत्तदसाधारणधर्म एव निमित्तम्। न तु सकलगुणसमाहारो मत्वर्थाल्लक्ष्यः। एवं पञ्चाशद्वर्णवाच्यत्वस्य अप्रयोजकतेत्याशङ्क्याऽद्यस्य हेतोरप्रयोजकतां परिहर्तुमाह— **नारायणाष्टाक्षरश्चेति**॥ न केवलं पञ्चाशद्वर्णास्ताराणर्भेदिताः। नारायणाष्टाक्षरमन्त्रगतोङ्कारादिर्यकारान्तोऽक्षरसमुदायोऽपि ताराक्षरप्रभेदवानित्यर्थः। **भेदः** उत्पत्तिः। तारावयवादकारात् ओंकारः, उकारान्नकार इत्याद्यभिव्यक्तिक्रमो ज्ञातव्यः। यद्वा, भिद्यत इति भेदो भगवान्। स विश्वतैजसप्राज्ञतुरीयात्मान्तरात्मनां परमात्मज्ञानात्मयुजां प्रणववाच्यविश्वा-

दिभ्योऽभिव्यक्तानां वाचकश्चेति यावत्। ततः किमित्यत आह– **आद्यैरिति ।।** अकारोकारमकारनादाख्यैस्तारान्तर्गतचतुर्वर्णैः भूर्भुवस्सुवरित्याख्या व्याहृतयः आद्यादाद्या, द्वितीयाद् द्वितीया इत्यादिक्रमादभिव्यक्तेत्यर्थः। बिन्द्वाद्युत्तर-चतुष्कव्यावृत्त्यर्थं **आद्यै**रिति ।। ११ ।।

**अ.सं.–** इदानीं नारायणाष्टाक्षरमन्त्रस्यापि साक्षात्प्रणवमन्त्रव्याख्यानता-प्रदर्शनाय प्रणवमन्त्रादभिव्यक्तिमाह– **नारायणेति ।।** 'ॐ नमो नारायणायेति विपर्ययमथापि वा' (भा.६.८.६) इति नारायणवर्मणि नारायणाष्टाक्षरमन्त्रस्य प्रसिद्धत्वात् मन्त्रोद्धारो न कृत इति ज्ञेयम्। तथाच **नारायणाष्टाक्षरः** 'ॐ नमो नारायणाय' इति अष्टाक्षरात्मकमन्त्रः। **ताराष्टाक्षरभेदवान्** तारस्य प्रणवमन्त्रस्य अष्टाक्षरेभ्यः अकाराद्यतिशान्तेभ्यः भेदवान् व्यक्तिमान्। नारायणा-ष्टाक्षरमन्त्रगताः ॐकाराद्यष्टवर्णाः प्रणवमन्त्राष्टवर्णान् क्रमेण व्याकुर्वन्तीति भावः। **च**शब्दः न केवलं पञ्चाशद्वर्णाः प्रणववर्णेभ्योऽभिव्यक्ताः। किन्तु नारा-यणाष्टाक्षरमंत्रश्चेति पञ्चाशद्वर्णसमुच्चये। यद्वा न केवलं प्रणवमन्त्रः स्वावयवै-रकाराद्यष्टवर्णैर्विश्वाद्यष्टमूर्तिवाचकः किन्तु नारायणाष्टाक्षरमन्त्रश्च स्वावयवै-र्नकाराद्यष्टवर्णैर्विश्वाद्यष्टमूर्तिवाचक इति विश्वादिवाचकत्वे प्रणवमन्त्रसमुच्चये। प्रणवाष्टवर्णदेवता एव विश्वादयः नारायणाष्टाक्षरगताष्टवर्णप्रतिपाद्या इति भावः। एतेन नारायणाष्टाक्षरदेवतानुक्तिः कुत इति चोद्यं निरस्तं भवति। नारायणाष्टाक्षरश्च मद्रूपाणां वाचक इति योजनायाः चशब्देन सूचितत्वादिति।

साक्षात्प्रणवव्याख्यानताप्रदर्शनाय व्याहृतिमन्त्रस्यापि प्रणवमन्त्रादेवाभि-व्यक्तिमाह– **आद्यैरिति ।। आद्यैः** प्राथमिकैः अकारोकारमकारनादाख्यैः **तारचतुर्वर्णैः** तारस्य प्रणवस्य चतुर्भिर्वर्णैः **व्याहृतयः** भूः भुवः स्वः इति व्यस्तास्तिस्रः भूर्भुवस्वरिति समस्ता एका। एवं चतस्रो व्याहृतयः **क्रमात्** अकारेण भूः, उकारेण भुवः, मकारेण स्वः, नादेन भूर्भुवस्वरिति क्रमेण **भिन्नाः** व्यक्ता इत्यर्थः। व्याहृतीनां प्रसिद्धत्वादनुक्तिः ।। ११ ।।

**गु.दी–** इदानीं प्रणवाष्टाक्षरेभ्यो नारायणाष्टाक्षरस्य व्यक्तिं वक्ति— **नारायणेति ।।** तरत्यनेनानिष्टनिचयमिति **तार** ओङ्कारस्तस्य यानि **अष्टाक्षराणि**

अकाराद्यतिशान्तान्तानि तेभ्यः सञ्जातभेदवानित्यर्थः। मन्त्राक्षराणां न्यूनाधिकसङ्ख्यां वारयत्यष्टाक्षर इत्यनेन। प्रणवाक्षरचतुष्टयाच्चतसृणां व्याहृतीनामभिव्यक्तिमाह— **आद्यैरिति**॥ 'अकः सवर्णे दीर्घः' (पा.सू.६-१-१०२) इति सवर्णदीर्घः। अकार आद्यो येषां ते आद्यास्तैः तारस्य प्रणवस्य चतुर्भिर्वर्णैरकारोकारमकारनादैः समासव्यासयोगतश्चतस्रो व्याहृतयो **भिन्नाः** व्यक्ता इत्यर्थः ॥११॥

**मङ्गाली–** इदानीं नारायणाष्टाक्षरस्यापि साक्षात् प्रणवव्याख्यानता प्रदर्शनाय प्रणवमन्त्रादभिव्यक्तिमाह–**नारायणेति**॥ 'ॐ नमो नारायणायेति विपर्ययमथापि वा'(भाग.६-८-६) इति नारायणवर्मणि अस्य मन्त्रस्य प्रसिद्धत्वादुद्धारो न कृत इति ज्ञेयम्। तथा च **नारायणाष्टाक्षरः** 'ॐ नमो नारायणाय' इति अष्टाक्षरात्मकमन्त्रः **ताराक्षरभेदवान्** तारस्य प्रणवमन्त्रस्याकाराद्यष्टाक्षरेभ्यः भेदवान् व्यक्तिमान् नारायणाष्टाक्षरमन्त्रगताः ॐकाराद्यष्टवर्णाः प्रणवमन्त्राष्टवणान् व्याकुर्वन्तो विश्वादीन् प्रतिपादयन्तीति भावः। चशब्दः न केवलं पञ्चाशद्वर्णाः प्रणववर्णेभ्योऽभिव्यक्ताः किंतु नारायणाष्टाक्षरश्चेति पञ्चाशद्वर्णसमुच्चये। न केवलं प्रणवमन्त्रः स्वांशैर्विश्वाद्यष्टमूर्तिवाचकः किंतु नारायणाष्टाक्षरश्च स्वांशैर्विश्वादिवाचक इति विश्वादिवाचकप्रणवमन्त्रसमुच्चये वा। एतेन नारायणाष्टाक्षरदेवतानुक्तिः कुत इति चोद्यं निरस्तं भवति। साक्षात्प्रणवव्याख्यानताप्रदर्शनाय व्याहृतिमन्त्रस्यापि प्रणवादेवाभिव्यक्तिमाह– **आद्यैरिति**॥ **आद्यैः** प्राथमिकैः अकारादिनादान्तैः **तारचतुर्वर्णैः** तारस्य प्रणवस्य चतुर्भिर्वर्णै**र्व्याहृतयः** भूः भुवः स्वः इति व्यस्ताः। भूर्भुवस्वरिति समस्ता चैका। एवं चतस्रो व्याहृतयः **क्रमात्** अकारेण भूः, उकारेण भुवः, मकारेण स्वः, नादेन समस्तेति क्रमेण **भिन्ना** व्यक्ता इत्यर्थः। व्याहृतीनां प्रसिद्धत्वादनुक्तिः ॥ ११ ॥

व्याहृतिप्रतिपाद्यरूपकथनम् वासुदेवद्वादशाक्षरप्रतिपाद्यरूपकथनं च

**तं. सा. अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण वा।**
**ताश्च तन्मूर्तयस्त्वेव द्वादशार्णपदोदिताः ॥ १२ ॥**

**त. क.–** अष्टाक्षरवर्णवाच्यमूर्तीनां तारवाच्यमूर्तीनां च संज्ञैक्यवत् व्याहृतिवाच्यानामपि किमित्यतो विकल्पेन संज्ञाभेदानाह– **अनिरुद्धादिका इति ।।** अनिरुद्धादिका वासुदेवान्ताः, वासुदेवादिका अनिरुद्धान्ता वा चतस्रो मूर्तयः चतसृणां व्याहृतीनां दिवु क्राडेत्यादिधातुव्याख्यानाद्वाच्या इत्यर्थः । ततोऽपि किमित्यत आह– **ताश्च तन्मूर्तय इति ।।** तुशब्दाः चशब्दार्थाः । पद्यत इति पदमक्षरम् । ता अष्टाक्षरमूर्तयः अष्टौ, व्याहृतिमूर्तयः चतस्रश्चेत्येवं द्वादशमूर्तयो वासुदेवद्वादशाक्षरगतवर्णवाच्याः क्रमेणेत्यर्थः ।।१२।।

**अ.सं–** व्याहृतिचतुष्टयप्रतिपाद्यदेवता आह– **अनिरुद्धादिका इति ।।** अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाख्याः चतस्रो मूर्तयः **तासां** भूरादीनां चतसृणां व्याहृतीनामनिरुद्धादिक्रमेण वा **व्युत्क्रमेण** वा अनिरुद्धादिक्रमापेक्षया विपरीतक्रमेण वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा इति वासुदेवादिक्रमेण वेति यावत् । **देवताः** प्रतिपाद्या इत्यर्थः । 'समासव्यासयोगेन व्याहृतीनां चतुष्टयम् । सत्यं चाङ्गानि' (१.२८) इत्यत्रोक्तप्रकारेण सत्यपदान्तव्याहृतिभिः पञ्चाङ्गन्यासे भूरादीनां अनिरुद्धादिक्रमेण अनिरुद्धादयो देवताः, 'तारेण व्याहृतिभिश्च ज्ञेयान्यङ्गानि पञ्च च' (१.३४) इत्युक्तप्रकारेणोङ्कारपूर्वकव्याहृतिभिः पञ्चाङ्गन्यासे भूरादीनां वासुदेवादिक्रमेण देवताः इति व्यवस्थितो वा विकल्पः । अथवा अनिरुद्धादिक्रमः संन्यासिविषयः, वासुदेवादिक्रमः गृहस्थादिविषय इत्येवं व्यवस्थया विकल्पः । अत्रापि भूरादिचतस्रो व्याहृतयः अनिरुद्धादिचतुर्मूर्तिप्रतिपादकाः सत्यः प्रणवगतादिवर्णचतुष्टयप्रतिपाद्याः विश्वाद्याश्चतस्रो मूर्तीः प्रतिपादयन्तीति व्याख्यानव्याख्येयभावो द्रष्टव्यः । 'प्रणवार्था व्याहृतयः' (तै.भा.१-१४)इत्युक्तेः । उक्तातिदेशसौकर्याय द्वादशाक्षराभिव्यक्तिकथनात् पूर्वमेव वासुदेवद्वादशाक्षरमन्त्रगतपदचतुष्टयप्रतिपाद्यदेवता आह– **ता इति ।।** तुशब्दः व्युत्कमेणेत्यनुकर्षणार्थः । तस्य वासुदेवादिक्रमेणेत्यर्थः । तथाच **ता एव** अनिरुद्धादयश्चतस्रो मूर्तय एव **तु** वासुदेवादिक्रमेणैव पञ्चाङ्गन्यासे **द्वादशार्णपदोदिताः** द्वादशार्णस्य 'ॐ नमो भगवते वासुदेवाय' इति वासुदेवद्वादशाक्षरमन्त्रस्य पदैः ॐकारादिचतुर्भिः पदैः उदिताः प्रतिपादिता

इत्यर्थः । यद्वा अनिरुद्धादयः व्याहृतीनामनिरुद्धादिक्रमेण देवताः । ता एव चतस्रः अनिरुद्धादिमूर्त्तयः **व्युत्क्रमेण** वासुदेवादिक्रमेण द्वादशार्णपदोदिताः । **वा**शब्दः समुच्चये । वासुदेवद्वादशाक्षरमन्त्रपदचतुष्टयस्यापि देवता इति भावः ।। १२ ।।

**गु.दी–** व्याहृतीनां प्रतिपाद्यानाह— **अनिरुद्धेति ।।** अनिरुद्धप्रद्युम्नसङ्कर्षण-वासुदेवाः **तासां** व्याहृतीनां क्रमाद्देवताः । संन्यासिभिर्ध्यानादेर्व्युत्क्रमेणैव कर्तव्यत्वादिनरुद्धादिक्रमो गृहीतः । इतरविवक्षया त्वाह– **व्युत्क्रमेण वेति ।।** उक्तक्रमापेक्षया **व्युत्क्रमेण** विपरीतक्रमेण । वस्तुतः क्रमेण वासुदेवादिक्रमेणेति यावत् । उक्तातिदेशसौकर्याय द्वादशाक्षरप्रतिपाद्यमूर्तीस्तावदाह— **ता इति ।।** अर्णशब्दो वर्णशब्दपर्यायः । **ता एव** चतुर्मूर्तय अनिरुद्धाद्याः **द्वादशार्णमन्त्रस्य** वासुदेवद्वादशाक्षरमन्त्रस्य **पदैरुदिताः** तद्वाच्याः पददेवता इति यावत् ।।१२।।

**मङ्गाली–** व्याहृतिचतुष्टयप्रतिपाद्यदेवता आह— **अनिरुद्धादिका इति ।।** अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवाख्याश्चतस्रो मूर्तयः । **तासां** भूरादीनां चतसृणां व्याहृतीनां ‚अनिरुद्धादिक्रमेण वा **व्युत्क्रमेण** वा अनिरुद्धादिक्रमविपरीतेन वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा इति वासुदेवादिक्रमेणेति यावत् । **देवताः** प्रतिपाद्या इत्यर्थः । 'समासव्यासयोगेन व्याहृतीनां चतुष्टयम् । सत्यं चाङ्गानि'(तं.सा.१-२८) इत्यत्रोक्तसत्यपदान्तव्याहृतिभिः पञ्चाङ्गन्यासे 'तारेण व्याहृतीभिश्च ज्ञेयान्यङ्गानि पञ्च च'(तं.सा.१-३४) इत्युक्तप्रकारेणोङ्कारपूर्वकव्याहृतिभिः पञ्चाङ्गन्यासे भूरादीनां पूर्वोक्तक्रमव्युत्क्रमाभ्यां अनिरुद्धादयो देवता इति व्यवस्थितो वा विकल्पः । अथवा अनिरुद्धादिक्रमः सन्न्यासिविषयः । वासुदेवादिक्रमः गृहस्थादिविषय इत्येवं व्यवस्थया विकल्पः । अत्रापि भूरादिचतुस्रो व्याहृतयः अनिरुद्धादिप्रतिपादिकाः सत्यः प्रणवगतादिवर्णचतुष्टयव्याख्यानीभूय तद्वाच्यान् विश्वादीन् प्रतिपादयन्तीति व्याख्यानव्याख्येयभावो द्रष्टव्यः । 'प्रणवार्था व्याहृतयः'(तै.भा.१-१४) इत्युक्तेः ।।

उक्तातिदेशसौकर्याय द्वादशाक्षराभिव्यक्तिकथनात्पूर्वमेव वासुदेवद्वादशाक्षर-मन्त्रगतपदचतुष्टयप्रतिपाद्यदेवता आह— **ता इति ।।** तुशब्दो व्युत्क्रमेत्यस्या-नुकर्षणार्थः । तस्य वासुदेवादिक्रमेणेत्यर्थः । तथा च ताअनिरुद्धादय एव । तु

वासुदेवादिक्रमेणैव पञ्चाङ्गन्यासे, **द्वादशार्णपदोदिताः** द्वादशवर्णस्य 'ॐ नमो भगवते वासुदेवाय' इति वासुदेवद्वादशाक्षरमन्त्रस्योमादिचतुर्भिः पदैरुदिताः प्रतिपादिता इत्यर्थः । यद्वा अनिरुद्धादयः व्याहृतीनामनिरुद्धादिक्रमेण देवताः । ता एव चतस्रः अनिरुद्धादिमूर्तयः व्युत्क्रमेण वासुदेवादिक्रमेण द्वादशार्णपदोदिताः । वाशब्दः समुच्चये । वासुदेवद्वादशाक्षरमन्त्रपदचतुष्टयस्यापि देवता इति ।। १३ ।।

मन्त्रद्वयात् वासुदेवद्वादशाक्षरोत्पत्तिकथनम्

**तं. सा. नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च ।**
**विभेदो द्वादशार्णाणां केशवाद्याश्च देवताः ।। १३ ।।**

**त.क.–** कुत एतत् ? द्वादशमूर्तीनां प्रकारान्तरेणापि सम्पादनसम्भवात् अत आह– **नारायणाष्टाक्षरादिति ।।** नारायणाष्टाक्षरात् व्याहृतिभ्यश्च वासुदेवद्वादशाक्षरगतानां वर्णानां **विभेदो**ऽभिव्यक्तिर्यतः शास्त्रे प्रसिद्धा अत एवमेवेति योज्यम् । एवेत्यन्यस्मादभिव्यक्तिप्रतिषेधः । चौ परस्परसमुच्चायकौ । पक्षान्तरमाह– **केशवाद्याश्च देवता इति ।।** केशवादिदामोदरान्ता द्वादशमूर्तयो वासुदेवमन्त्रवर्णदेवता इत्यर्थः । यद्वा वासुदेवमन्त्रान्तर्गतपदचतुष्टयदेवता आह– **ताश्च तन्मूर्तय इति ।।** यस्य पददेवता उक्ता स कथमभिव्यज्यत इत्यत आह– **नारायणेति ।।** तद्गतद्वादशाक्षराणां देवता आह– **केशवाद्या इति ।। १३ ।।**

**अ.सं.–** वासुदेवद्वादशाक्षरमन्त्रस्य परम्परया प्रणवव्याख्यानरूपत्वप्रदर्शनाय प्रणवव्याख्यानभूतमन्त्रद्वयादुत्पत्तिमाह–– **नारायणेति ।। नारायणाष्टाक्षरात्** नारायणाष्टाक्षरमन्त्रस्थाष्टाक्षरेभ्यः, **व्याहृतिभ्यश्च** भूरादिचतसृभ्यः व्याहृतिभ्यश्चेत्येव द्वादशेभ्यः द्वादशवार्णानां वासुदेवद्वदशाक्षरमन्त्रस्थानां **विभेदः** व्यक्तिरभूत् । वासुदेवद्वादशाक्षरमन्त्रस्यादिवर्णाष्टकेन नारायणाष्टाक्षरमन्त्रगताष्टवर्णाः व्याख्यायन्ते । उत्तरैश्चतुर्भिर्वर्णैश्चतस्रो व्याहृतयः व्याख्यायन्त इति भावः । द्वादशवर्णानां देवता आह– **केशवाद्या इति ।।** द्वादशार्णानामित्येतन्मध्यमदीपिकान्यायेनोभयत्र सम्बद्ध्यते । केशवाद्या इत्यत्राद्यपदेन दामोदरान्ताः ग्राह्याः।

केशवाद्या द्वादशमूर्त्तयः ॐकारादीनां द्वादशवर्णानां क्रमेण **देवताः** प्रतिपाद्या इत्यर्थः । अत्र वासुदेवद्वादशाक्षरमन्त्रगताः द्वादशवर्णाः केशवादीन् द्वादशदेवान् प्रतिपादयन्तः सन्तः नारायणाष्टाक्षरप्रतिपाद्याः विश्वाद्या अष्टमूर्त्तीः व्याहृतिप्रतिपाद्या अनिरुद्धाद्याश्चतस्रो मूर्तीः इत्येवं द्वादशरूपाणि प्रतिपादयन्तीति वासुदेवद्वादशाक्षरमन्त्रस्य नारायणाष्टाक्षरमन्त्रव्याहृतिमन्त्रद्वयव्याख्यानरूपत्वं द्रष्टव्यम् ।। १३ ।।

**गु.दी–** द्वादशाक्षरमन्त्रस्य मन्त्रद्वयादिभव्यक्तिमाह— **नारायणेति ।।** नारायणमन्त्रस्य यदष्टाक्षरं तस्माद्व्याहृतिभ्यश्च **द्वादशार्णानां** वासुदेवमन्त्रस्य द्वादशार्णानां **तथैव** नारायणाष्टाक्षरादेरिव **विभेदः** अभिव्यक्तिरित्यर्थः । द्वादशवर्णमूर्तीराह— **केशवाद्या इति ।।** दामोदरान्ता आदिशब्दग्राह्याः । तथा च केशवादिदामोदरान्ताः द्वादशवर्णदेवताश्च । न केवलमनिरुद्धाद्याः पददेवता इति चार्थः ।।१३।।

**मङ्गाली–** अस्य मन्त्रस्य परंपरया प्रणवव्याख्यानत्वप्रदर्शनाय प्रणवव्याख्यानभूतमन्त्रद्वयादुत्पत्तिमाह— **नारायणेति** ।। **नारायणाष्टाक्षरात्** एतद्गताष्टाक्षरेभ्यः **व्याहृतिभ्यश्च** भूरादिभ्यश्च एवं द्वादशेभ्यः **द्वादशार्णानां** द्वादशाक्षरमन्त्रस्थानां **विभेदो** व्यक्तिरभूत् । द्वादशवर्णानां देवता आह— **केशवाद्या इति ।।** द्वादशार्णानामित्येतत् मध्यमदीपन्यायेनोभयत्र सम्बध्यते । आद्यपदेन दामोदरान्ता ग्राह्याः । **देवताः** प्रतिपद्या इत्यर्थः । अत्र वासुदेवद्वादशाक्षरमन्त्रगतद्वादशवर्णाः केशवादिद्वादशादेवान् प्रतिपादयन्तः सन्तः नारायणाष्टाक्षरगतवर्णानां चतुसृणां व्याहृतीनां च व्याख्यानीभूय तत्प्रतिपाद्यान् विश्वादीननिरुद्धादींश्चेत्येवं द्वादशरूपाणि प्रतिपादयन्ति इति द्रष्टव्यम् ।। १३ ।।

गायत्रीमन्त्राभिव्यक्तिकथम्

**तं. सा.** **नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः ।**
**वेदमाता तु गायत्री द्विगुणा(त्) द्वादशाक्षरात्** ।। १४ ।।

**त. क.–** तथापि किं सम्पन्नमित्यत आह– **नारायणेति** ।। मन्त्रान्तरोत्पत्तिसमुच्चये चशब्दः । नारायणाष्टाक्षरमन्त्रगताद्वर्णात् वासुदेवात् वासुदेवद्वादशाक्षरात् **द्विगुणा** चतुर्विंशत्यक्षरा वेदमाता गायत्री चाभिव्यक्तेति योज्यम् । चतुर्विंशत्यक्षरात्मिकाया गायत्र्या अष्टाक्षरेभ्योऽभिव्यक्तिर्दुर्घटेत्यतस्तां घटयति– **व्याहृतीति** ।। पुनः पुनः त्रिगुणव्याहृतेः त्रिवारमष्टाक्षरस्योच्चारणादिति यावत् । प्रथममुच्चरितेभ्यः ओंकारादियकारान्तेभ्यः प्रथमपादस्य, पुनरुच्चरितेभ्य एव द्वितीयपादस्य, तृतीयमुच्चरितेभ्य एव तृतीयपादस्येति विवेकः । अनेन विशेषार्थस्तुशब्दो व्याख्यातो भवति ।

यद्वा व्याहृतीनां चतसृणां त्रिवारमुच्चारणात् द्वादशाक्षरत्वं, पुनरित्यनेन वारान्तरम् । तेन चतुर्वारमुच्चारणात् षोडशत्वं सम्पद्येत । तथाच नारयाणाष्टाक्षरगताष्टभ्यो व्याहृतिचतुष्टयात् चतुर्वारमुच्चरितात् षोडशव्याहृतिजाताच्च गायत्र्या उत्पत्तिरिति योज्यम् । 'द्विगुणात्' इति पञ्चम्यन्तपाठो दृश्यते चेत् द्विवारमुच्चरितात् द्वादशाक्षराच्चोत्पत्तिरुच्यत इति ध्येयम् ।। १४ ।।

**अ.सं–** इदानीं गायत्र्याः परम्परया प्रणवव्याख्यानरूपत्वप्रदर्शनाय प्रणवव्याख्यानरूपनारायणाष्टाक्षरव्याहृतिद्वादशाक्षरमन्त्रत्रयादभिव्यक्तिमाह– **नारायणेति।। नारायणाष्टाक्षरात्** नारायणाष्टाक्षरमन्त्रस्थाष्टवर्णेभ्यः । **व्याहृतित्रिगुणाच्च** भावप्रधानो निर्देशः । व्याहृतीनां त्रिगुणत्वात् त्रिवारमुच्चरितव्याहृतिभ्यश्चेति यावत् । **पुनश्च** व्याहृतिभ्य इति शेषः । पुनरपि एकवारमुच्चरितव्याहृतिभ्य इति यावत् । एवं चतसृणां व्याहृतीनां चतुर्वारमुच्चरितत्वेन षोडशभ्यो व्याहृतिभ्यश्चेत्यर्थ इत्युक्तं भवति । एवं मिलित्वा चतुर्विंशतिभ्यः गायत्री च **भेदिता** व्यक्ता । विष्णुगायत्र्यादिव्यावृत्यर्थं **वेदमातेति** । वेदोत्पादकत्वेन वेदाध्येतॄणां ब्राह्मण्यसम्पादनेन वेदपोषकत्वाद्वा गायत्री वेदमातेत्यर्थः । गायत्र्याश्चोंकारयोगेन व्याहृतियोगेन चानेकविधत्वात् काऽसौ गायत्री अत्र ग्राह्येत्यतः गायत्रीवर्णसङ्ख्यमाह– **द्विगुणेति ।। द्वादशाक्षरात्** इति पञ्चमी ल्यब्लोपनिमित्ता । द्वादशवर्णानपेक्ष्य द्विगुणाच्चतुर्विंशतिवर्णेत्यर्थः । साऽष्टमहामन्त्रगणे ग्राह्येति भावः । उक्तं च वाराहे–

महाव्याहृतिहीना या चतुर्विंशतिवर्णका ।

गायत्री सैव गायत्री प्रोच्यते विबुधैरिह ।। इति चातुर्मास्यकर्णे (८.७) इह अष्टमहामन्त्रमध्ये । एवं च नारायणाष्टाक्षरमन्त्रव्याहृतिमन्त्राभ्यां मिलिताभ्यां गायत्र्युत्पत्तिरुक्ता भवति ।

अयं भावः । चतुर्विंशत्यक्षरा गायत्री एकपादस्थैरष्टवर्णैर्नारायणमन्त्राष्टवर्णान् क्रमेण व्याख्याति । अन्याभ्यामष्टवर्णपादाभ्यां चतुश्चतुर्वर्णैश्च चतस्रो भूरादिव्याहृतीश्चतुर्धा व्याख्यातीति । यद्वा **व्याहृतित्रिगुणात्** व्याहृतिः व्याहरणमुच्चारणं तया त्रिगुणात् त्रिवारमुच्चरितात् नारायणाष्टाक्षरात् गायत्री उत्पन्ना । अस्मिन् पक्षे त्रिगुणितान्नारायणाष्टाक्षरात् एकस्मादेवाशेषगायत्र्यभिव्यक्तेति ज्ञेयम् ।

अयं भावः । गायत्री अष्टाक्षरत्रिपदैः नारायणाष्टाक्षरमन्त्रवर्णान् क्रमेण त्रेधा व्याख्यातीति । अथवा व्याहृतित्रिगुणादित्येतत् आवृत्या योज्यम् । एकम् नारायणाष्टाक्षराच्चेत्यस्य विशेषणम् । अन्यत्तु स्वयमेव विशेष्यम् । ततश्च व्याहृतित्रिगुणात् नारायणाष्टाक्षरात् गायत्री व्यक्ता । पुनश्च तथा व्याहृतित्रिगुणात् व्याहृतिचतुष्टयगताष्टाक्षराणामष्टत्वात् तासां व्याहृतीनां त्रिगुणात् त्रिगुणत्वात् त्रिवारमुच्चरितेभ्यः व्याहृतिचतुष्टयगताष्टवर्णेभ्यः गायत्री व्यक्तेति । अस्मिन् पक्षे नारायणाष्टाक्षरात् व्याहृतिमन्त्राच्च पृथक् पृथक् गायत्र्युत्पतिरुक्तेति ज्ञातव्यम् । अयं भावः । गायत्री पूर्ववदेव पादत्रयेण नारायणाष्टाक्षरं त्रेधा व्याख्याति । तथा व्याहृतिचतुष्टयगताष्टवर्णानपि त्रेधा व्याख्यातीति ।

केचित्तु व्याहृतित्रिगुणादित्येतत् द्वादशाक्षरादित्यस्य विशेषणम् । एवं च व्याहृतीनां चतुर्विधत्वात् तदपेक्षया त्रिगुणात् द्वादशाक्षरात् द्विगुणा गायत्रीत्यर्थो ज्ञेयः । एवं योजनायां पूर्वं 'नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च' (१.१२) इत्यत्र नारायणाष्टाक्षरसहितव्याहृतिभिः द्वादशाक्षरोत्पत्तिरुक्ता । इदानीं व्याहृतित्रिगुणात् द्वादशाक्षरादित्युक्त्या केवलं त्रिगुणितव्याहृतिभिरपि द्वादशाक्षरोत्पत्तिरभिहिता भवतीत्याहुः । 'द्विगुणात्' इति पाठे तु द्विगुणात्

द्विवारमुच्चरितात् द्वादशाक्षरादपि गायत्री व्यक्तेत्यर्थः। चतुर्विंशत्यक्षरा गायत्री द्वादशद्वादशवर्णैर्द्वदशाक्षरस्थद्वादशवर्णान् द्वेधा व्याचष्ट इति भावः ।। १४ ।।

**गु.दी.–** गायत्रीव्यक्तिमाह— **नारायणेति ।।** नारायणाष्टाक्षरात् **व्याहृति-त्रिगुणाच्च** त्रिगुणितव्याहृतिभ्य इति यावत्। **पुनश्च** व्याहृतेस्तत्पठितॄणां ब्राह्मण्यसम्पादकत्वेन वेदपोषकत्वाद्वाऽशेषवेदव्याख्येयत्वाद्वा **वेदमाता** गायत्री भेदिता। एतेन समासव्यासयोगेन चतुरात्मव्याहृतेश्चतुर्वारमावृत्तौ षोडशत्वात्तै-र्नारायणमन्त्रगताष्टवर्णैश्चेत्येतैश्चतुर्विंशतिभिः गायत्रीवर्णा भेदिता इत्युक्तं भवति ।

अथवा व्याहृतिर्व्याहरणमुच्चारणमिति यावत्। तेन **त्रिगुणात्** त्रिगुणितात् त्रिवारमुच्चारितात् पुनःपुनर्व्याहरणेन त्रिगुणीकृतादित्यर्थः। नारायणाष्टाक्षरस्य त्रिवारं व्याहरणे चतुर्विंशत्यक्षरत्वं भवति। तस्मान्नारायणाष्टाक्षराद्गायत्री चाभिव्यक्ता । न केवलं वासुदेवद्वादशाक्षरो मन्त्र इति चार्थः।

एवं त्रिगुणान्नारायणाष्टाक्षराद्गायत्री भेदितेत्युक्त्वा व्याहृतिमात्रेणापि तद्व्यक्तिमाह— **पुनरिति ।।** पुनरित्यनन्तरं व्याहृतित्रिगुणादित्यनुवर्तते। अत्र व्याहृतिशब्देन तद्गतवर्णा गृह्यन्ते। तथा च त्रिगुणैः व्याहृतिगताष्टवर्णैर्गायत्री व्यक्तेति भावः। यद्वा त्रिगुणादिति बुद्ध्या विवेकेन सर्वत्र सम्बध्यते। त्रिगुणान्नारायणाष्टाक्षरात् चशब्दात् त्रिगुणात्प्रणवाष्टाक्षरात् त्रिगुणाद्व्याहृत्यक्षराच्च गायत्री जातेत्यर्थः । **द्वादशाक्षरादिति** पञ्चमी ल्यब्लोपनिमित्ता। द्वादशाक्षरमपेक्ष्य द्विगुणा चतुर्विंशत्यक्षरेत्यर्थः। यथोक्तं वाराहे—

महाव्याहृतिहीना या चतुर्विंशतिवर्णका ।
गायत्री सैव गायत्री प्रोच्यते विबुधैरिह ।। इति । (चातुर्मास्यप्रकरणे८-७)

इह अष्टमहामन्त्रप्रयोगे। तेन 'अष्टाविंशत्यक्षरा च गायत्री समुदाहृता' तथा 'तारव्याहृतिसंयुता सहशिरा गायत्र्युपास्या परा' इत्याद्युक्तीनां निरासः। 'तत्सवितुर्वरेण्यम्' (ऋ.सं.३-६१-१०) इत्यत्र त्स इत्यस्य तकारसकारसंश्लेषात्मकत्वेन वर्णद्वयं तत्रेति चतुर्विंशतित्वं मन्तव्यम्। केचित्तु ण्यं इत्यत्र णकारयकारात्मकतया तत्र वर्णद्वयं द्रष्टव्यमित्याहुः । अपरे तु प्रचोदयादित्यत्र

यकारात्परं तकारग्रहणमिति वदन्ति। 'द्विगुणात्' इति पाठे द्विगुणितात् द्विवारमुच्चरितात् द्वादशाक्षरादपि गायत्री व्यक्तेत्यर्थः। वेदमातेति विशेषणमितरगायत्रीव्यावृत्त्यर्थम् ॥१४॥

**मञ्जाली–** इदानीं गायत्र्याः परंपरया प्रणवव्याख्यानत्वप्रदर्शनाय तद्व्याख्यानरूपनारायणाष्टाक्षरव्याहृतिद्वादशाक्षररूपमन्त्रत्रयादभिव्यक्तिमाह– **नारायणेति** ॥ **नारायणाष्टाक्षरात्** नारायणाष्टाक्षरमन्त्रस्थाष्टवर्णेभ्यः **व्याहृतित्रिगुणात्** भावप्रधानो निर्देशः। व्याहृतीनां त्रिगुणत्वात्। त्रिगुणितव्याहृतिभ्यश्चेति यावत्। **पुनश्च** व्याहृतिभ्यश्च इति शेषः। एवं नारायणाष्टाक्षरमन्त्रगताष्टवर्णसहिताभ्यः चतुर्वारमुच्यरितत्वेन शोडशभ्यो व्याहृतिभ्यः मिलित्वा चतुर्विंशतिभ्यः वेदोत्पादकत्वेन वेदाध्येतॄणां ब्राह्मण्यसंपादनेन वेदपोषकत्वात् वेदमाता गायत्री **भेदिता** व्यक्ता। गायत्र्याः ॐकारादियोगेनानेकविधत्वात् काऽसौ गायत्री अत्र ग्राह्येत्यतः गायत्रीवर्णसङ्ख्यामाह— **द्विगुणेति** ॥ **द्वादशाक्षरादिति** पञ्चमी ल्यब्लोपनिमित्ता। द्वादशाक्षरमपेक्ष्य द्विगुणेत्यर्थः। 'द्विगुणात्' इति पाठे तु द्विगुणितात् 'द्वादशाक्षरात् गायत्री व्यक्तेत्यर्थः। वेदमातेति विशेषणमितरगयत्रीव्यावृत्यर्थम्। अथवा व्याहृतिर्व्याहरणम्। तथा च **व्याहृतित्रिगुणात्** व्याहृत्याख्यहरणेन त्रिगुणात् त्रिवारमुच्चरितनारायणाष्टाक्षरात् गायत्री व्यक्तेत्यर्थः। **पुनस्तथा** द्विगुणात् द्वादशाक्षराच्चेति पुनश्चशब्दयोः सम्बन्धः। व्याहृतिमात्रेणापि गायत्री व्यक्तिमाह— **व्याहृतीति** ॥ व्याहृतिशब्देन तद्गता वर्णा लक्षन्ते। तथा च त्रिगुणैर्व्याहृतिगताष्टवर्णैः पुनः गायत्री व्यक्तेत्यर्थः। नारायणाष्टाक्षरव्याहृतिमन्त्राभ्यां गायत्र्युत्पत्तिपक्षे चतुर्विंशत्यक्षरा गायत्री एकपादस्थैरष्टवर्णैः नारायणमन्त्राष्टवर्णान् क्रमेण व्याख्याति। अन्याभ्यां अष्टवर्णपादाभ्यां चतुश्चतुर्वर्णैः चतुस्रो भूरादिव्याहृतीश्चतुर्धा व्याख्याति। केवलनारायणाष्टाक्षरात् अभिव्यक्तिपक्षे नारायणाष्टाक्षरं त्रेधा व्याख्याति। द्वादशाक्षरादभिव्यक्तिपक्षे द्वादशाक्षरमन्त्रगतान् द्वादशवर्णान् द्वेधा व्याख्याति। केवलव्याहृतिभ्योभिव्यक्तिपक्षे व्याहृतिचतुष्टयगताष्टवर्णान् त्रेधा व्याख्यातीति ज्ञेयम् ॥ १४ ॥

गायत्रीवर्णदेवताकथनम् तथा पुरुषसूक्ताभिव्यक्तिकथनम्

**तं. सा. चतुर्विंशतिमूर्तयोऽस्याः कथिता वर्णदेवताः ।**
**तद्भेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः ॥ १९ ॥**

**त.क.**– गायत्री वर्णदेवता आह– **चतुर्विंशतीति ॥** गायत्र्या वर्णदेवता आह– **चतुर्विंशतिमूर्तय इति ॥** केशवाद्याः कृष्णान्ता इत्यर्थः । तच्चोक्तं पञ्चरात्रे-

मूर्तिभ्यश्च चतुर्भ्यश्च चतुर्विंशतिमूर्तयः ।
जायन्ते क्रमशो ब्रह्मन् दीपाद्दीपान्तरं यथा ॥

सर्वेशितुर्भुजाः पद्मशङ्खचक्रगदाधराः ।
वासुदेवादिदेवात्प्रथमः केशवस्तथा ॥

नारायणो माधवश्च जज्ञिरे भूसुरोत्तम ।
सङ्कर्षणश्च गोविन्दो विष्णुश्च मधुसूदनः ॥

त्रयस्ते समजायन्त प्रद्युम्नश्च त्रिविक्रमः ।
वामनः श्रीधरश्चैते जज्ञिरे मुनिसत्तम ॥

अनिरुद्धाद्धृषीकेशः पद्मनाभश्च सुव्रत ।
दामोदरश्च तैरित्थं द्वादशांशाः प्रजज्ञिरे ॥

वासुदेवश्च तन्नामा तथा सङ्कर्षणादपि ।
प्रद्युम्नादपि तन्नामा तन्नामैवानिरुद्धकात् ॥

अभूवन् क्रमशस्तेभ्यश्चतुर्भ्यः पुरुषोत्तमः ।
अधोक्षजो नृसिंहश्च चतुर्थश्चाच्युतो मतः ॥

चत्वार एव तेभ्योऽमी जज्ञिरे च यथाक्रमम् ।
जनार्दनस्तथोपेन्द्रो हरिः कृष्णः समाख्यया ॥ इति ।

इदमेवाह मूर्तिभ्यश्च चतुभ्यश्चेत्यादिना । चतुर्विंशतिमूर्तयः पञ्चरात्रे कथिता इति । अत्र 'व्याहृतित्रिगुणात् पुनः' इत्यनेन वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्येषु

व्याहृतिदेवेषु मध्ये वासुदेवात् केशवनारायणमाधवानां, सङ्कर्षणात् गोविन्द-विष्णुमधुसूदनानां, प्रद्युम्नात् त्रिविक्रमवामनश्रीधराणाम्, अनिरुद्धात् हृषीकेश-पद्मनाभदामोदराणां, वासुदेवात् वासुदेवस्य, सङ्कर्षणात् सङ्कर्षणस्य, प्रद्युम्नात् प्रद्युम्नस्य, अनिरुद्धादनिरुद्धस्य, वासुदेवात् पुरुषोत्तमस्य, सङ्कर्षणादधोक्षजस्य, प्रद्युम्नान्नारसिंहस्य, अनिरुद्धादच्युतस्य, वासुदेवाज्जनार्दनस्य, सङ्कर्षणादुपेन्द्रस्य, प्रद्युम्नाद्धरेः, अनिरुद्धात् कृष्णस्य एवं चतुर्वारमावृत्तेभ्यः केशवाद्याः चतुर्विंशतिमूर्तयो दीपाद्दीपान्तरमिवाभिव्यक्ता इति सूचितम् ।

ततोऽपि किं सम्पादितमित्यत आह– **तद्भेद इति ।।** तस्या गायत्र्याः प्रभेदः पौरुषं सूक्तम् । ततोऽभिव्यक्तम् । एवमपि किं सम्पन्नमित्यत आह– **वेदा इति ।।** ऋगाद्याश्चत्वारो वेदास्तद्गताः सर्वे शब्दाः पुरुषसूक्तेभ्योऽभिव्यक्ता इत्यर्थः । अयं भावः— यो वर्णसमुदायो यस्माद्वर्णसमुदायादभिव्यक्तः स तद्व्याख्यानरूपस्सन् तदर्थपर एवेत्यस्ति तावन्नियमः । अंशत्रयोपेतभावनापद व्याख्यानरूपसमिधादिवाक्ये तत्परत्वदर्शनात् । प्रणवव्याख्यानरूपाश्चोक्तरीत्या सर्वे वैदिकाश्शब्दाः । ततः प्रणवशब्दवाच्यत्वं सर्वशब्दवाच्यतायां कथमप्र-योजकमिति ।। १५ ।।

**अ.सं–** गायत्रीवर्णदेवता आह– **चतुर्विंशदिति ।।** केशवाद्याः चतुर्विंशन्मूर्तयः **अस्याः** गायत्र्याः । वर्णानां तकारादीनां चतुर्विंशतिवर्णानां देवताः क्रमेण कथिताः । नित्यसापेक्षत्वात्समासः । पुरुषसूक्तमन्त्रस्यापि परम्परयैव प्रणवव्याख्यानताप्रदर्शनाय गायत्रीसकाशादभिव्यक्तिमाह— **तद्भेद इति । पौरुषं** पुरुषनामकविष्णुप्रतिपादकं वर्गत्रयात्मकं सूक्तं **तद्भेदः** तस्याः त्रिपादायाः गायत्र्याः भिद्यत इति भेदः । भिन्नमभिव्यक्तं पुरुषसूक्तं वर्गत्रयेण गायत्र्याः त्रीन् पादान् क्रमेण व्याख्यातीति भावः । वेदानामपि परम्परया प्रणवव्याख्यानरूपत्व-मस्तीति भावेन पुरुषसूक्तादभिव्यक्तिमाह–**वेदा इति । पुरुषसूक्तगाः** पुरुषसूक्तात् गाः गताः उद्गताः अभिव्यक्ताः पुरुषसूक्तव्याख्यानरूपा इति भावः ।। १५ ।।

**गु.दी–** गायत्रीवाच्यमूर्तीराह— **चतुर्विंशतिरिति ।। अस्याः** गायत्र्याः केशवाद्याः चतुर्विंशतिमूर्तयः कथिताः । नन्वेकस्याश्चतुर्विंशतीनां देवतात्वं

कथमित्यत उक्तं— **वर्णेति** ।। तथा च वर्णदेवतात्वेनैव तद्देवतात्वमिति भावः । **तद्भेदा इति** ।। **पौरुषं** पुरुषप्रतिपादकं वर्गत्रयात्मकं सूक्तं **तद्भेदः** तस्याः गायत्र्याः सकाशाद्भिद्यतेऽभिव्यज्यत इति तद्भेदः । **वेदाः पुरुषसूक्तगाः** तद्व्याख्यानतया स्थिता इत्यर्थः । यद्वा त्रिवर्गात् पुरुषसूक्तात् गच्छन्ति उद्गच्छन्तीति पुरुषसूक्तगाः त्रयो वेदाः इत्यर्थः ।। १५ ।।

**मङ्गाली—** केशवाद्याश्चतुर्विंशन्मूर्तयः **अस्याः** गायत्र्याः वर्णानां तकारादीनां चतुर्विंशतिवर्णानां देवताः क्रमेण कथिताः । नित्यसापेक्षत्वात्समासः । पुरुषसूक्तमन्त्रस्यापि परम्परयैव प्रणवव्याख्यानताप्रदर्शनाय गायत्र्यऽभिव्यक्तिमाह — **तद्भेद इति** ।। **पौरुषम्** पुरुषनामकविष्णुप्रतिपादकं वर्गत्रयात्मकं सूक्तम् । **तद्भेदः** तस्याः त्रिपादाया गायत्र्याः भिद्यत इति भेदः । भिन्नमभिव्यक्तम् । पुरुषसूक्तं वर्गत्रयेण गायत्र्याः त्रीन् पादान् क्रमेण व्याख्यातीति भावः । वेदानामपि परंपरया प्रणवव्याख्यानत्वमिति भावेन पुरुषसूक्तादभिव्यक्तिमाह— **वेदा इति** ।। **पुरुषसूक्तगाः** पुरुषसूक्तात् गाः गताः उद्गताः अभिव्यक्ताः पुरुषसूक्तव्याख्यानरूपा इति भावः ।। १५ ।।

भगवतः सर्वशब्दवाच्यत्वकथनम्

**त. सा. वैदिकाः सर्वशब्दाश्च तस्मात्सर्वाभिधोऽस्म्यहम् ।**
**पञ्चाशद्वर्णभिन्नाश्च(स्तु) सर्वशब्दा अतोऽपि च ।। १६ ।।**

**त. क.—** पञ्चाशद्वर्णवाच्यत्वरूपद्वितीयहेतोरप्रयोजकतां निराचष्टे— **पञ्चाशद्वर्णेति** ।। तु यस्मादित्यर्थः । यस्माल्लौकिकवैदिकाः सर्वेऽपि शब्दाः पञ्चाशद्वर्णेष्वन्यतरवर्णमिश्रा एव व्यवह्रियन्तेऽतस्तेन सर्वशब्दा अपि तत्परा एवेति युक्तमेवेति योज्यम् । अत एव हेतुद्वयकथनं व्यर्थमिति निरस्तम् । प्रणववाच्यत्वस्य सर्ववैदिकशब्दवच्यत्वसाधकत्वेऽपि लौकिकवैदिकसर्वशब्द-वाच्यत्वसाधकत्वाभावात् । तस्मात् सर्वशब्दवाच्यत्वस्यैवं प्रमितत्वाल्लक्ष्म्यादि-मन्त्रान्तर्गतवर्णवाच्यो भगवानेव । ततस्तैस्तैर्मन्त्रैस्तदन्तर्गतहरिस्मरणसम्भवेन युक्तमेतन्मन्त्रोद्धरणमिति स्थितम् ।

तत्र मननत्राणकर्तृत्वं मन्त्रसामान्यलक्षणं, गोपनीयत्वं वा । तदुक्तम्—

मननं सर्वसत्त्वानां त्राणं संसारसागरात् ।
मननत्राणसंयोगान्मन्त्र इत्युच्यते बुधैः ।
अथवा गोपनीयत्वाद्धेतोर्मन्त्रयतेः परः ।। इत्यादि ।

मन्त्रास्तावद् द्विविधाः । विष्णुमन्त्रा अन्यमन्त्राश्चेति । विष्णुमन्त्रा अपि द्विविधाः । महामन्त्रास्तद्भिन्नाश्चेति । ये तु आनुगुण्यनिमित्तपरीक्षणफल-कामनाद्यनपेक्ष्या यदकरणे प्रत्यवायश्च भवति, ये विजयस्तम्भनादौ प्रायेण न विनियोज्यन्ते ते महामन्त्राः । यथोक्तं पञ्चरात्रे—

चतुर्षु मूलमन्त्रेषु नानुगुण्यं परीक्षयेत् ।
तारमष्टाक्षरञ्चैव द्वादशाक्षरमेव च ।
विष्णुगायत्र्यपि तथा चत्वारः प्रथमे मताः ।। इति ।

उपलक्षणमेतत्—

प्रणवो मातृकाष्टार्णौ व्याहृतिर्द्वादशाक्षरम् ।
गायत्री पौरुषं विष्णुरष्टौ मन्त्राः प्रकीर्तिताः ।। इति वचनात् ।

अनेवंभूता द्वितीयाः । यथा नारसिंहादयः । यद्वक्ष्यति-

विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।
जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।। इत्यादि। (तं.सा.४-१२४) ननु—

सर्वे मन्त्रास्सर्वकला गुरुवक्त्राद्यदि श्रुताः ।
यदृच्छया श्रुतो मन्त्रश्छन्देनाथ च्छलेन वा ।।

पत्रेक्षितो वा व्यर्थः स्यात् प्रत्युतानर्थकः स्मृतः ।
एकः सुसाधितो मन्त्रो जपहोमादितर्पणैः ।।

स साधकस्य सर्वार्थं प्रसूते नात्र संशयः ।
सम्यक् सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन ।
किं पुनर्बहवो यस्य का कथा हरिरेव सः ।।

इत्यादिना सर्वसाधारण्येन सर्वफलोक्तेः कथमिदं द्वैविध्यमिति चेन्न। तत्तद-धिकारिभेदेन व्यवस्थोपपत्तेः। नारसिंहादीनां फलान्तरविधानात्। तारादीना-मन्यत्र विनियोगविधानाभावाच्च।

ये त्वन्तस्थहरिध्यानेनैव क्वचिद्विनियुज्यमानाः सफलाः, नान्यथा ते अन्यमन्त्राः। यथा लक्ष्म्यादीनाम्। ते पुनस्त्रिविधाः— स्त्रीमन्त्राः, पुंमन्याः, नपुंसकमन्त्राश्चेति। ते च यथाक्रमं स्वाहान्ताः, फडाद्यन्ताः, नमोऽन्ताश्चेति ज्ञातव्याः। यथोक्तं—

स्त्रीपुंनपुंसकमिति भजन्ते मन्त्रजातयः।
संस्त्यानमन्त्राः स्वाहान्ता नमोन्तास्तु नपुंसकाः॥

शेषाः पुरुषमन्त्राः स्युरिति त्रिविधमीरितम्।
उच्चाटने च वश्ये च विद्वेषक्षुद्रकर्मसु॥

स्त्रियश्शस्ता न पुल्लिङ्गाः कर्मस्वन्यत्र पूजिताः।
पुल्लिङ्गेषु तु मन्त्रेषु दिङ्मात्रं किञ्चिदुच्यते॥

फडन्ता मरणाद्यर्थे शस्ता भूताद्युपद्रवे।
हुङ्कारान्ताः प्रशस्यन्ते वौषडन्तास्तु ते पुनः॥ इत्यादि॥

तत्र लिङ्गत्रयसाधारण्येन मन्त्रा उद्धरणीयाः। स्वाहाफडादिशब्दसाहित्येन त्रैविध्येऽपि प्रधानमन्त्रे विशेषाभावः। ते च गुरुमुखादेव श्रुताः सफला इति चोक्तम्। अत एव 'श्रुत्वा भागवतं शुद्धमाचार्यशरणं व्रजेत्' (य.प्र.क-२) इति प्रणवकल्पेऽभिहितम्। आचार्यलक्षणं च अग्रे दर्शयिष्यति। ततः आचार्यानुज्ञया जपं समारभेत्।

गुरुं प्रणम्य प्रथमं प्रणवप्रमुखं जपेत्। इत्यादेः।

गुरूंश्च स्वयमेवानुक्त(त्क्र)मिष्यति।

शौचस्नानादिनियमाश्च सदाचारसंग्रहे प्रतिपादिताः।

धृतोर्ध्वपुण्ड्ररचनो नान्यवाचमुदीरयेत् ।
जपकालेऽथवा चक्रं शङ्खाकृति यथा तथा ॥

शार्ङ्गखड्गगदाकारं लाञ्छनं लाञ्छयेत्सुधीः ।
शरीरावयवे बाह्वोर्वक्षोभुवि चतुर्मुख ॥

चक्रादिपञ्चाभिज्ञानलक्षिताङ्गपरिष्कृतम् ।
पुरुषं दूरतो दृष्ट्वा भूताद्या भयविह्वलाः ॥
विद्रुवन्ति तथा घोरा पापा वीक्षणमात्रतः ॥

इत्यादेश्चोर्ध्वपुण्ड्रादिधारणं कार्यम् ।

देवतायतने नद्यां शैले सागररोधसि ।
वने वा तीर्थदेशे वा न्यग्रोधाश्वत्थयोरधः ।
अन्यत्रापि शुचौ देशे कुटीं कृत्वाऽरभेत सः ॥

इत्यादिनोक्तदेशविशेषोऽपेक्षणीयः ।

कुशेषु कृष्णत्वचि वा बृश्यामेकान्तभूमिषु ।
उपविष्टो जपेन्मन्त्रं सपवित्रकरश्शुचिः ॥

इति स्वस्तिकाद्यासननियमं च स्वयमेव वक्ष्यति ।

बुधैस्तैस्समनुज्ञातः करन्यासं समारभेत् ।
बाह्वोरन्तर्बहिः पार्श्वकनिष्ठाद्यङ्गुलीषु च ।
न्यसेत्ताराग्निबीजेन करन्यासोऽयमीरितः ॥

इत्यादिवचनात् करन्यासोऽपि कर्तव्यः । तथा—

आकुञ्चितशिराः किञ्चिन्निबध्नन् योगमायया ।
हस्तौ यथोक्तविधिना प्राणायामं समाचरेत् ॥

रेचनं पूरणं वायो रोधनं रेचनं तथा ।
पातनं सेचनं वायोः प्राणायाम उदीरितः ॥

हस्तेन दक्षिणेनैव पीडयन्नासिकापुटम् ।
शनैश्शनैरथ बहिः क्षिपेत्पिङ्गलयाऽनिलम् ।।

द्वात्रिंशन्मात्रया कुक्षौ पूरयेदिडयाऽनिलम् ।
भूयः षोडशमात्राभिश्चतुःषष्ठ्या तु मात्रया ।।

सम्पूर्य कुम्भवद्देहं कुम्भयेन्मातरिश्वना ।
एवं कृते सति ब्रह्मन् चरन्ति दश वायवः ।
हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् ।। इत्यादि ।

वक्ष्यति च स्वयमेवाचार्यः-

रेचयित्वा दक्षिणतः पूरयित्वा च वामतः । इत्यादिना । (तं.सा.४-१४९)

तथाऽन्यत्र 'तत्त्वाद्यङ्गादिकं न्यसेत् इति, तथा— 'सताराश्च लिपीर्न्यसेत्' अपि च— 'परितो मुखम्' इत्यादिवचनबलेन तत्त्वन्यासादिकं च कार्यम् ।

एवमाद्यङ्गजातं शिष्य एव वक्ष्यमाणरीत्या ग्रन्थान्तरर्यालोचनेन चादौ कर्तव्यतया ज्ञास्यतीति मन्वानः—

ऐहिकामुष्मिकं सर्वं प्रणवाल्लभ्यते फलम् ।
प्रणवान्न परो मन्त्रः कश्चिदस्ति चतुर्मुख ।।

शान्तिपुष्ट्यभिचारेषु किमन्यैः सिद्धवर्णनैः ।
यावत्प्राणविनिर्मोकमभ्यसेत् प्रणवाक्षरम् ।
सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ।।

इत्यादिना प्रणवस्य सर्वोत्कर्षोक्तेः बीजं वदन् प्रणवमन्त्राभिव्यक्तिं भगवद्वचनोद्वारेणाऽह– **अहमेकोऽखिलगुण इति ।।** प्रणवस्याभिव्यञ्जक इति शेषः । 'सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिःसृतौ'(सू.भा.१-१-१) इत्यादेः । अतः प्रणवमन्त्रस्य प्रथममभिव्यक्तत्वात् सर्वातिशयित्वं युक्तमिति भावः ।

अत्र प्रणवमन्त्रोद्धारप्रकारः पञ्चरात्रे उक्तः—

अप्रमेयादिमुदयमध्यमन्दरपश्चिमम् ।
समाहृत्यावयवं त्रिवर्णान् वाचकान् हरेः ।।

प्लुतोदात्तं परं ब्रह्म चक्रमध्ये प्रतिष्ठितम् ।
उद्धरेद्बीजमस्याऽद्यं प्रतीकं दण्डशेखरम् ।।

श्रीधरं दण्डयेदेषा शक्तिः सर्वत्र कीर्तिता ।
बीजशक्त्यङ्गहीना ये मन्त्राः स्युस्ते निरर्थकाः ।
तस्मात्साङ्गं शक्तियुक्तं बीजयुक्तं फलप्रदम् ।। इति ।

अस्यार्थः— अप्रमेयशब्देनाकार उच्यते। 'अकारो विष्णुरुच्यते। ओङ्कारादिश्चाप्रमेयः' इति तन्नामसु पाठात्। अप्रमेयः आदौ निवेश्यो यस्य सोऽप्रमेयादिः। उदयशब्देन उकार उच्यते। 'उकारो भुवनोत्थानः श्रीधरश्चोदयस्तथा' इति तन्नामसु पाठात्। उदयो मध्ये निवेश्यौ यस्य स उदयमध्यः। मन्दरशब्देन मकार उच्यते। 'मकारो मन्दरो दक्षो माधवी पाटलप्रियः' इति तन्नामसु पाठात्। मन्दरः पश्चिमेऽन्ते निवेश्यो यस्य स मन्दरपश्चिमः। अकारमादौ निवेश्य तत उकारं ततो मकारश्चोद्धरेत्। ततो गुणे 'ॐ' इति प्रणव उद्धृतो भवति। ततश्च प्लुतस्वरेणोदात्तं परब्रह्मवाचकं वर्णचक्रमध्ये प्रतिष्ठितम्। तत्रस्थमक्षरत्रयमुद्धरेत्। अस्य प्रणवस्य बीजमुच्यते। आद्यं प्रतीकमाद्यक्षरं दण्डशेखरम् । 'अनुस्वारो ध्रुवो बिन्दुर्यष्टिश्चन्द्रार्ध उच्यते' इत्यनुस्वरनामसु यष्टिशब्दस्य पाठात् । तत्पर्यायो दण्डशब्दोऽनुस्वारपरः। स एव शेखरः उपरि स्थापनीयो यस्याकारस्य तं बीजं कुर्यात्। अमित्येतत् बीजाक्षरम्। तस्य शक्तिरुच्यते। श्रीधरशब्देनोकार उच्यते। 'उकारो भुवनाह्वानः श्रीधरश्चोदयः स्मृतः' इति तन्नामसु पाठात् । तमुकारं दण्डयेत्। अनुस्वारेण संयुज्यात्। उमिति शक्तिरित्युक्तं भवति।

अतिशये द्वारान्तरमाऽह— **वाचक इति** ।। साक्षान्मम वाचक इति योज्यम्। तत्सम्भावनायऽखिलगुण इति पदमनुवर्तनीयम्। व्याख्यानं तु पूर्ववत्। प्रणवः प्रथममभिव्यक्तः साक्षात् भगवद्वाचकश्चेति युक्तं सर्वमन्त्रेषु तस्य श्रैष्ठ्यमिति

'यावत्प्राणविनिर्मोकमभ्यसेत् प्रणवाक्षरम्' इति युक्तमुक्तमिति शेषः । ऋषिदेवतादिकन्त्वष्टानां महामन्त्राणां युगपदेवोच्यत इति भावः ।

भवतु प्रणव आदौ जपनीयः । तदनन्तरं किमवश्यं जप्यमिति विचिकित्सायां तदनन्तरमभिव्यक्तत्वात् तद्वर्णैरेवाभिव्यक्तत्वाच्च मातृका एवेत्याशयवान् तदभिव्यक्तिप्रकारं दर्शयति— **तद्रूपभेदा** इत्यादिना **ममाऽकारादिलक्षका** इत्यन्तेन । निगदव्याख्यातमेतत् ।

तदनन्तरं किं जप्यमिति शङ्कायाम्—

बहवोऽपि महात्मानो मुनयस्सनकादयः ।
अष्टाक्षरं समाश्रित्य निर्जग्मुर्वैष्णवं पदम् ॥

एकोऽष्टाक्षर एवायमलमात्मविशुद्धये ।
अष्टाक्षरजपादन्यत् केवलं कालयापनम् ॥

भूतवेतालरक्षांसि तथा वेतालमृत्यवः ।
अष्टाक्षरस्य संस्मृत्या प्रद्रवन्ति दिशो दश ॥

देवदानवगन्धर्वसिद्धविद्याधरादयः ।
प्रणमन्ति महात्मानमष्टाक्षरविदं नरम् ॥

गुरु वाऽप्यल्पकं पापं जन्मान्तरमथापि वा ।
अष्टाक्षरजपेनैव क्षीयते नात्र संशयः ॥

व्यक्तं हि भगवानेव साक्षान्नारायणः स्वयम् ।
अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते ॥

यथा सर्वेषु देवेषु नास्ति नारायणात्परम् ।
तथा सर्वेषु मन्त्रेषु नास्ति चाष्टाक्षरात्परम् ॥ इति ॥ तथा—

अष्टाक्षरस्य मन्त्रस्य फलानि हि शक्यते ।
वक्तुं वर्षशतेनापि तेषां दिङ्मात्रमुच्यते ॥

धर्मार्थकाममोक्षाणामेकान्तफलदं शुभम् ।
सिद्धयो बहुधा जप्तुर्मन्त्रं चोदितसंख्यया ।
अचिन्तनीयो महिमा देवस्यैव मधुद्विषः ।।

इत्यादिनारदीयकल्पपञ्चरात्रादिभिः श्रैष्ठ्यावगमादष्टाक्षरमन्त्र एवेति भावेन तदभिव्यक्तिप्रकारमाह– **नारायणेति** ।। व्याख्यातमेतत् ।

नारायणाष्टाक्षरमन्त्राकारस्तु–

उद्गीथमादौ विघ्नेशः प्रयोज्यस्तदनन्तरम् ।
ब्रह्मसाधनसंयुक्तो मन्दरस्तदनन्तरम् ।।

आदिदेवावृतो भद्रबाहुः पश्चादुदीरितः ।
वह्निर्गोपनसंवीतश्वसनो विष्णुशीर्षकः ।।

वनमाली ततो योज्यो मधुसूदनसंयुतः ।
प्रणवादिशिरा वायुरिति वर्णक्रमो मतः ।
बीजं विष्णुरनुस्वारः सामर्थ्यं कथितं पुनः ।।

इति पञ्चरात्रेऽभिहितः । तस्यायमर्थः— उद्गीथमादौ संयुज्यादिति शेषः । उद्गीथशब्दश्चोङ्कारवाचकः ।

उद्गीथश्छन्दसामादिः प्रणवस्तारकस्तथा ।
ब्रह्म च ब्रह्मकोशश्च व्यापी चोङ्कार इत्यपि ।
नामानि प्रथितान्यष्टौ..................।।

इति तन्नामसु पाठात् । विघ्नेश इति नकार उच्यते। 'नकारो भद्रपाणिः स्याद्विघ्नेशो मानुषेश्वरः' इति तन्नामसु पाठात् । ब्रह्मसाधनशब्देन ओङ्कार उच्यते ।

'स्यादोंकारश्चतुर्मुख ।
अन्तदेहो वासुदेवो ब्रह्मसाधन इत्यपि ।।'

इति तन्नामसु पाठात् । मन्दरशब्देन मकार उच्यते । 'मकारो मन्दरो दक्षो माधवी पाटलप्रियः' इति तन्नामसु पाठात् । ओकारान्तो मकारस्तृतीयो वर्णः ।

'यावत्प्राणविनिर्मोकमभ्यसेत् प्रणवाक्षरम्' इति युक्तमुक्तमिति शेषः। ऋषिदेवतादिकन्त्वष्टानां महामन्त्राणां युगपदेवोच्यत इति भावः।

भवतु प्रणव आदौ जपनीयः। तदनन्तरं किमवश्यं जप्यमिति विचिकित्सायां तदनन्तरमभिव्यक्तत्वात् तद्वर्णैरेवाभिव्यक्तत्वाच्च मातृका एवेत्याशयवान् तदभिव्यक्तिप्रकारं दर्शयति— **तद्रूपभेदा** इत्यादिना **ममाऽकारादिलक्षका** इत्यन्तेन। निगदव्याख्यातमेतत्।

तदनन्तरं किं जप्यमिति शङ्कायाम्—

बहवोऽपि महात्मानो मुनयस्सनकादयः।
अष्टाक्षरं समाश्रित्य निर्जग्मुर्वैष्णवं पदम्॥

एकोऽष्टाक्षर एवायमलमात्मविशुद्धये।
अष्टाक्षरजपादन्यत् केवलं कालयापनम्॥

भूतवेतालरक्षांसि तथा वेतालमृत्यवः।
अष्टाक्षरस्य संस्मृत्या प्रद्रवन्ति दिशो दश॥

देवदानवगन्धर्वसिद्धविद्याधरादयः।
प्रणमन्ति महात्मानमष्टाक्षरविदं नरम्॥

गुरु वाऽप्यल्पकं पापं जन्मान्तरमथापि वा।
अष्टाक्षरजपेनैव क्षीयते नात्र संशयः॥

व्यक्तं हि भगवानेव साक्षान्नारायणः स्वयम्।
अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते॥

यथा सर्वेषु देवेषु नास्ति नारायणात्परम्।
तथा सर्वेषु मन्त्रेषु नास्ति चाष्टाक्षरात्परम्॥ इति॥ तथा—

अष्टाक्षरस्य मन्त्रस्य फलानि हि शक्यते।
वक्तुं वर्षशतेनापि तेषां दिङ्मात्रमुच्यते॥

धर्मार्थकाममोक्षाणामेकान्तफलदं शुभम् ।
सिद्धयो बहुधा जप्तुर्मन्त्रं चोदितसंख्यया ।
अचिन्तनीयो महिमा देवस्यैव मधुद्विषः ।।

इत्यादिनारदीयकल्पपञ्चरात्रादिभिः श्रैष्ठ्यावगमादष्टाक्षरमन्त्र एवेति भावेन तदभिव्यक्तिप्रकारमाह– **नारायणेति** ।। व्याख्यातमेतत् ।

नारायणाष्टाक्षरमन्त्राकारस्तु–

उद्गीथमादौ विघ्नेशः प्रयोज्यस्तदनन्तरम् ।
ब्रह्मसाधनसंयुक्तो मन्दरस्तदनन्तरम् ।।

आदिदेवावृतो भद्रबाहुः पश्चादुदीरितः ।
वह्निर्गोपनसंवीतश्वसनो विष्णुशीर्षकः ।।

वनमाली ततो योज्यो मधुसूदनसंयुतः ।
प्रणवादिशिरा वायुरिति वर्णक्रमो मतः ।
बीजं विष्णुरनुस्वारः सामर्थ्यं कथितं पुनः ।।

इति पञ्चरात्रेऽभिहितः । तस्यायमर्थः— उद्गीथमादौ संयुज्यादिति शेषः । उद्गीथशब्दश्चोङ्कारवाचकः ।

उद्गीथश्छन्दसामादिः प्रणवस्तारकस्तथा ।
ब्रह्म च ब्रह्मकोशश्च व्यापी चोङ्कार इत्यपि ।
नामानि प्रथितान्यष्टौ..................।।

इति तन्नामसु पाठात् । विघ्नेश इति नकार उच्यते। 'नकारो भद्रपाणिः स्याद्विघ्नेशो मानुषेश्वरः' इति तन्नामसु पाठात् । ब्रह्मसाधनशब्देन ओङ्कार उच्यते ।

'स्यादोंकारश्चतुर्मुख ।
अन्तदेहो वासुदेवो ब्रह्मसाधन इत्यपि ।।'

इति तन्नामसु पाठात् । मन्दरशब्देन मकार उच्यते । 'मकारो मन्दरो दक्षो माधवी पाटलप्रियः' इति तन्नामसु पाठात् । ओकारान्तो मकारस्तृतीयो वर्णः ।

भद्रबाहुशब्देन नकार उच्यते । 'नकारो भद्रपाणिः स्यात्' इति तन्नामसु पाठात् । आदिदेवशब्देनाकार उच्यते । 'आकारो मधुसूदनः आदिदेवो गोपनश्च' इति तन्नामसु पाठात् । आकारयुक्तो नकारस्तदनन्तरो वर्णः । वह्निशब्देन रेफ उच्यते । 'रेफोऽनलो महाज्वालो विश्वात्मा सर्वदाहकः' इति तन्नामसु पाठात् । गोपनशब्देन आकार उच्यते । 'आदिदेवो गोपनश्च' इत्युक्तत्वात् । गोपनसंयुक्तो वह्निराकारयुक्तो रेफस्तदनन्तरवर्णः । श्वसनशब्देन यकार उच्यते । 'यकारः पुरुषात्मा स्याद्वायुश्शङ्खश्चतुर्गतिः' इति तन्नामसु पाठात् । विष्णुशब्देनाकार उच्यते । 'अकारो विष्णुरुच्यते । ओंकारादिश्चाप्रमेयः' इति तन्नामसु पाठात् । विस्तु शीर्षकः अकार एवोपरि प्रयुज्यमानः श्वसनो यकारः । तदनन्तरवर्णो वनमालिशब्देनोच्यते । 'णकारो वनमाली स्यात् प्रचण्डः सुमुखः स्मृतः' इत्युक्तत्वात् । मधुसूदनशब्देनाऽकारः । 'आकारो मधुसूदनः' इत्यादेः । आकारशीर्षको णकारस्तदनन्तरवर्णः । वायुरिति यकारः । 'वायुश्शङ्खश्चतुर्गतिः' इत्यादेः । प्रणवादिरित्यकार उच्यते । प्रणवादिशिरा वायुरकारशीर्षको यकारस्तदनन्तरवर्णः । 'अ' इति बीजम् । 'अम्' इत्येव शक्तिः । ततश्चोङ्कारः प्रथमो वर्णः । अकारशीर्षको नकारो द्वितीयः । ओकारशीर्षको मकारस्तृतीयः । अकारशीर्षको नकारश्चतुर्थः । आकारशीर्षको रेफः पञ्चमः । अकारशीर्षको यकारः षष्ठः । आकारशीर्षको णकारः सप्तमः । अकारशीर्षको यकारोऽष्टमः । एवं क्रमेण वर्णानां लेखने 'ॐ नमो नारायणाय' इति मन्त्रः सम्पद्यते ।

ननु मातृका अपि 'वर्णास्तारार्णभेदिताः' इति प्रणवाभिव्यक्ता इत्युक्तम् । अष्टाक्षरोऽपि तथेत्यविशेषात् कुतो मातृकाणां प्रथममभिव्यक्तत्वोक्तिः । न च मातृकाव्यतिरेकेण कस्यचित् वर्णसन्दर्भस्यायोगेन मातृकाणां प्राधान्यमिति वाच्यम् । प्रणवापेक्षया प्रथममुक्तिप्रसङ्गात् । अकारोकारमकारसन्दर्भात्मकस्यापि तस्य मातृकाव्यतिरेकेणानुपपत्तेरिति चेन्न । प्रणवस्य तद्ब्रह्मणः प्रथम मभिव्यक्तत्वेन तत्कृतप्राबल्यस्याधिक्यात् । प्रणवस्य प्रथमानिरूपणेऽपि सर्वत्रानुस्यूतिलक्षणप्राबल्योत्सृष्टस्य प्राथम्यहेतोस्त्यागायोगात् ।

तदनन्तरं जप्यानां व्याहृतीनामुत्पत्तिमाह– **आद्यैरिति** ।। ननु प्रणवादी-

नामुत्तमत्वं युक्तम्। तद्गताक्षराणां भगवन्मूर्तिविशेषवाचकत्वात्। व्याहृतीनां तु कथमित्यतस्तद्गताक्षराणामपि भगवन्मूर्तिविशेषवाचकत्वं तु मतभेदेनाऽह– **अनिरुद्धेति ॥** तेन 'ऋषिश्च देवतैकोऽहं तारादीनां विशेषतः' (तं.सा.१-१७) इत्यनेन न पुनरुक्तिः।

ततः किं जप्यमिति जिज्ञासायां, (तथाहि—)

द्वादशाक्षरवाच्यो यो तस्य माहात्म्यमाश्रितः।
ब्रह्मभूयं गतोऽब्रह्मा देवभूयन्त्वदेवताः ॥

ऋषयश्च मरीच्याद्या मुनयस्सनकादयः।
मन्त्रमाहात्म्यमाश्रित्य जग्मुः पदमनुत्तमम् ॥

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यग्रहादयः।
न कदापि निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥

किं तस्य यज्ञैः किं तीर्थैः किं विश्राणनकर्मभिः।
किं व्रतैर्यस्य मन्त्रोऽसौ द्वादशाक्षरलक्षणः ॥

सर्वयत्नेन पुरुषस्तन्मन्त्रनिरतो भवेत्।
संसारभयभीरूणां मोक्षैकफलकामिनाम् ॥

मुक्तये परमोपायो मन्त्रोऽयं द्वादशाक्षरः।
देवदानवगन्धर्वयक्षविद्याधरादयः ॥

प्रणमन्ति महात्मानं द्वादशाक्षरचिन्तकम्।
यस्य राष्ट्रे महीपस्य मन्त्री वसति निर्भयः ॥

तद्राष्ट्रे धनधान्यादिसमृद्धं वर्धतेऽधिकम्।
भूतानि च पलायन्ते ग्रहाश्चैव भयङ्कराः ॥

राष्ट्राद्राजपुराद्राज्ञः सकाशाच्च निपीडिताः।
न फलं शक्यते वक्तुं कार्त्स्न्येन कमलासन।
चतुर्मुखमुखैस्सर्वैर्दिव्यैर्वर्षशतैरपि ॥

इत्यादिनाऽवगतमाहात्म्यो द्वादशाक्षरमन्त्र एवेति वक्तुमाह–

**ताश्चतुर्मूर्तयस्त्वेव द्वादशार्णपदोदिता इति ॥**

मन्त्रोद्धारप्रकारस्तु-

मातृकाचक्रमभ्यर्च्य द्वादशार्णं समुद्धरेत् ।
प्रणवं परमात्मानं भद्रपाणिमनन्तरम् ॥

विष्णुदक्षं चोतदेहं सुभद्रं गदिनं सुधाम् ।
विष्णुशीर्षत्रयं पश्चाद्विजयं सम्प्रसारणम् ॥

वरुणं चादिदेवान्तं शुक्लं भुवनशीर्षकम् ।
अत्रिमाधवनामानं पीयूषं मधुसूदनम् ॥

वायुं तथाऽप्रमेयान्तमेवमुद्धरणे विधिः ।
वीजमस्य द्वादशात्मा दण्डशीर्ष उदाहृतः ॥ इति पञ्चरात्रे निरूपितम् ।

तद्व्याख्यायते— प्रणवपरमात्मपदाभ्यां ओंकार उच्यते। भद्रपाणिः नकारः। 'नकारो भद्रपाणिः स्यात्' इत्युक्तेः। विष्णुरकारः। 'अकारो विष्णुरुच्यते' इत्युक्तेः। दक्षो मकारः। 'मकारो मन्दरो दक्षः' इत्युक्तेः। ओतदेह ओकारः। 'ओतदेहो वासुदेवो ब्रह्मसाधन इत्यपि' इत्युक्तेः। सुभद्रो भकारः। 'भल्लायुधो भकारश्च सुभद्रः सूक्ष्मलोचनः' इति तन्नामसु पाठात्। गदी गकारः। 'गकारश्च गदी पञ्चान्तकः स्मृतः प्रज्ञपाणिः' इति तन्नामसु पाठात्। सुधा वकारः। 'वकारो वरुणः कुम्भपीयूषात्मा सुधारसः' इति तन्नामसु पाठात्। भकारगकारवकाराख्यं वर्णत्रयं विष्णुशीर्षमकारशिरस्कं समुद्धरेत्। विजयस्तकारः। 'तकारः स्याद्वैराजो विजयः स्मृतः' इति तन्नामसु पाठात्। सम्प्रसारणमेकारः। 'सम्प्रसारणनामा स्यादेकारो माधवाह्वयः। देवदत्तो मृगेशस्स्यात्' इति तन्नामसु पाठात्। वरुणो वकारः। 'वकारो वरुणः कुम्भः' इत्यादेः। आदिदेव आकारः। 'आकारो गोपनश्च' इति वचनात्। स एवान्ते निवेश्यौ यस्य स आदिदेवान्तः। शुक्लं सकारः। 'पूर्णचन्द्रः कलात्मा स्यात्सकारः शुक्लसंज्ञितः' इति तन्नामसु पाठात्। भुवनमुकारः। 'उकारो भुवनाह्वानः' इत्युक्तेः। तदेवोपरि वक्तव्यो यस्य

तद्भुवनशीर्षकं शुक्लमुद्धरेदिति सम्बन्धः। अत्रिर्दकारः। 'दकारो वै धरो दृष्टिरत्रिः सर्वपुरान्तकः' इति तन्नामसु पाठात्। माधव एकारः। 'एकारो माधवः स्यात्' इत्युक्तेः। पीयूषं वकारः। 'पीयूषात्मा सुधारसः' इत्युक्तेः। मधुसूदन आकारः। वायुर्यकारः। 'वायुश्शङ्खश्चतुर्गतिः' इत्युक्तेः। अप्रमेयः अकारः। 'ओंकारादिश्चाप्रमेयः' इत्युक्तेः। प्रथमो वर्ण ओंकारः। अकारशीर्षो नकारो द्वितीयः। ओकारशीर्षो मकारस्तृतीयः। अकारशीर्षो भकारश्चतुर्थः। अकारशीर्षो गकारः पञ्चमः। अकारशीर्षो वकारः षष्ठः। एकारशीर्षस्तकारः सप्तमः। अकारशीर्षो वकारोऽष्टमः। उकारशीर्षस्सकारो नवमः। एकारशीर्षो दकारो दशमः। आकारशीर्षो वकार एकादशः। अकारशीर्षो यकारो द्वादशः। इत्येवं क्रमेण लेखने 'ॐ नमो भगवते वासुदेवाय' इति द्वादशाक्षरमन्त्रः सम्पद्यते। अस्य वीजमुच्यते। 'द्वादशात्मा हकारः स्याद्दीप्तिमान् भास्करः स्मृतः' इति तन्नामसु पाठात्। दण्ड अनुस्वारः। 'अनुस्वारो ध्रुवो बिन्दुः यष्टिश्चन्द्रार्ध उच्यते' इति वचनात्। 'हं' इत्येतदस्य बीजमिति।

व्याहृत्यन्तर्गतानां चतुर्णां पदानामनिरुद्धादिमूर्तिचतुष्टयवाचकत्वप्रसङ्गाद् द्वादशाक्षरपदचतुष्टयस्याप्यनिरुद्धादिवाचकत्वमतिदिशति– **ताश्चतुर्मूर्तय इति ॥** **एव** एवम्। एवं द्वादशार्णपदोदिताः। एवाहीत्यादिवत् द्वादशाक्षरगतपदचतुष्टयप्रतिपाद्या न क्लेशेन गवेषणीयाः। यतोऽव्यवधानेन उक्ता व्याहृतिपदवाच्याश्चतुर्मूर्तय एव सन्तीति वा। तर्हि नारायणाष्टाक्षरगतानां यावतां वर्णानां भगवद्वाचित्वस्येव द्वादशाक्षरगतानां वर्णानां तदभावस्य प्राप्त्याऽनादरणीयत्वम्? नेत्याह– **द्वादशार्णानां केशवाद्याश्च देवता इति ॥** यथा अष्टाक्षरगतानामष्टानामपि वर्णानां विश्वाद्या ज्ञानात्मान्ता अष्टौ मूर्तयो वाच्यास्सन्त्येवं द्वादशाक्षरगतानां द्वादशानामपि वर्णानां वाच्याः केशवाद्या द्वादशमूर्तयस्सन्ति। द्वादशाक्षरात्मकमन्त्रस्य पदचतुष्टयात्मकत्वादनिरुद्धादयश्चतुस्रो मूर्तयः पदवाच्या एव। तेन न विरोधः।

नन्वेवं नारायणाष्टाक्षरमन्त्रस्य पदत्रयात्मकत्वेऽपि तत्प्रतिपाद्यमूर्तित्रयाभावान्न्यूनत्वम्। तथा व्याहृत्यन्तर्गतयावद्वर्णानां वाच्यभगवन्मूर्तित्रयाभावा-

न्यूनत्वम् । वासुदेवद्वादशाक्षरवत् यावत्पदैर्यावद्वर्णैश्च भगवद्वाचित्वाभावादिति चेत् । कथमष्टाक्षरव्याहृत्योस्तदभावस्त्वयाऽवबुद्धः । अनुक्तत्वादिति चेत् । न हि वक्तव्यं सर्वमत्रैवोच्यते । 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते'(तं.सा.३-१६१) इत्यादिनाऽस्य ग्रन्थस्य संक्षिप्तत्वस्य स्वयमेव वर्णनात् । 'अस्य संक्षेपशास्त्रत्वान्न विस्तरविरोधिता'(तं.सा.३-४७)इति वक्ष्यति च । तर्हि त्वयाऽपि कथमवबुद्धं पदवाच्यं मूर्त्यन्तरमस्तीति चेत् । 'एते तु सर्वमन्त्राणां मूलमन्त्राविशेषतः' (तं.सा.१-४७) इत्यादिना स्वयमेव न्यूनाधिकभावस्य निराकरणादिति ब्रूमः । ननु तर्हि—

....................वर्णास्तारार्णभेदिताः ।
नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च ।
विभेदो द्वादशार्णानाम् .................. ।।

इत्यादिना पूर्वपूर्वमन्त्राणामुत्तरोत्तरमन्त्रोत्पादकत्वेनातिशयः कथं प्रतिपादित इति चेत् । वक्ष्यति स्वयमेवाचार्योऽस्य समाधानं 'व्यक्तिक्रमं ब्रह्मबुद्धौ' (तं.सा.१-३१) इति । अत्र नारायणाष्टाक्षरगतेभ्योऽष्टभ्यो वर्णेभ्यः द्वादशाक्षरगता वाकारान्ता वर्णा उत्पन्नाः । भूरिति प्रथमव्याहृतेः सुकारः । भुव इति द्वितीयव्याहृतेर्देकारः । सुव इति तृतीयव्याहृतेर्वाकारः । भूर्भुवस्सुव इति चतुर्थव्याहृतेर्यकार इति विवेक्तव्यम् । ब्रह्मगायत्र्युत्पत्तिमाह— **नारायणाष्टाक्षराच्च** इत्यादिना **कथिता वर्णदेवताः** इत्यन्तेन । पुरुषसूक्तोत्पत्तिमाह— **तद्वेद इति ।।** 'सूक्तं दीर्घतमोदृष्टं विष्णोर्नुकमिति प्रभोः' (तं.सा.४-५९) इत्यादिना सूक्तानामुद्धरणात् । ऋगादिवेदोत्पत्तिमाह— **वेदा इति ।।** अनेन मन्त्रोत्पत्तिक्रमकथनेन प्रमेयान्तरं सिद्धमाह— **तस्मादिति ।।**

ननु विष्णुषडक्षरमन्त्रः अष्टमहामन्त्रान्तर्गतत्वात् कुतो नात्र निरूपित इति चेन्न । 'वैदिकास्सर्वशब्दाश्च' इत्यनेनैव विष्णुषडक्षरस्याप्युत्पत्तिसूचनात् । साक्षादनुक्तिस्तु पञ्चाङ्गन्यासषडङ्गन्यासभेदेन मन्त्रेष्वप्यवान्तरभेदोऽस्तीति ज्ञापनार्थम् । न तु महामन्त्राः सप्तैवेति व्याख्यातव्यम् । उक्तवचनविरोधात् ।

'वर्णा एव षडङ्गानि षणयोर्भेदयोगतः' (तं.सा.१-४६) इति वक्ष्यमाणत्वात् पुरुषसूक्तान्तानां मन्त्राणां सप्तानामपि पञ्चाङ्गन्यासः, विष्णुषडक्षरस्य तु षडङ्गन्यास इति हि स्पष्टो भेदः। मन्त्राणामुद्धारप्रकारानुक्तिस्तु ग्रन्थान्तरे स्पष्टत्वात्। 'अष्टमस्तु युतोऽन्तेन' (तं.सा.४-२) इत्यादिना चतुर्थे वक्ष्यमाणेन मन्त्रोद्धारेण इहाप्युद्धारप्रकारसम् भवात्। एषां चातिप्रसिद्ध्या मन्त्राकारे विवादाभावाच्चेति सर्वमनवद्यम् ।। १६ ।।

**अ.सं–** पुराणादीनां सर्वपौरुषेयशब्दानां वेदेभ्योऽभिव्यक्तिमाह— **सर्वशब्दा इति ।।** सर्वे शब्दाः पुराणेतिहासादिरूपाः विष्णुषडक्षरादिमन्त्ररूपाश्च संस्कृतशब्दाश्च **वैदिकाः** वेदेभ्योऽभिव्यक्ताः वेदव्याख्यानरूपा इत्यर्थः। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' (गी.भा.१-१) इत्युक्तेः। फलितमाह— **तस्मादिति।** यस्मद्गुणपरिपूर्णत्वप्रदिपादकः प्रणवः मम वाचकः। तस्य च सदगमत्वावच्छिन्नः नारायणाष्टाक्षरादिसर्वशब्दः साक्षात्परम्परया च व्याख्यान-रूपः। 'ॐकारेण सर्वावाक् संतृण्णा'(छा.उ.२-३२-२) त्यादि छन्दोगश्रुतेः। तस्माइहं **सर्वाभिधः** सर्वशब्दजातम् अभिधा नामधेयं यस्य स तथोक्तः अस्मि। व्याख्यानव्याख्येययोरेकार्थत्वस्य प्रसिद्धत्वादिति भावः। अनेन विष्णुः सदागमत्वावच्छिन्नसर्वशब्दवाच्यः तद्व्याख्येयोङ्कारार्थत्वात्। यो यद्व्याख्येयार्थः स तद्व्याख्यानप्रतिपाद्यः यथा सम्मत इति वा, सर्वे शब्दाः विष्णुपराः विष्णुपरोङ्कारव्याख्यानत्वात्। यो यत्परशब्दव्याख्यानं स तत्परो यथा संमत इति वाऽनुमानं सूचितं भवतीति ज्ञेयम्। सर्वशब्दाभिधेयत्वे निमित्तान्तरमाह– **पञ्चाशदिति ।** चो यस्मादित्यार्थे। यस्मात् **सर्वशब्दाः** वैदिकाः लौकिकाः सर्वेऽपि शब्दाः मद्वाचकप्रणवव्याख्या-नभूतपञ्चाशद्वर्णेभ्यो **भिन्ना** व्यक्ताः। **अतश्च** अतोऽपि सर्वाभिधोऽस्म्यहमित्य-न्वयः। न केवलं वैदिकाः प्राकृताश्च सर्वे शब्दाः भगवद्वाचकाः। अपि तु ध्वन्यात्मकशब्दा अपि नादाख्यवर्णव्यञ्जकत्वेन भगवद्वाचका इति सूचनार्थं च शब्दः। तदुक्तमैतरेयभाष्ये—

सर्वैश्च वैदिकपदैरपि लोकशब्दैः मेघाग्नीवारिधितलादिरवैश्च सर्वैः ।
एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं नारायणो मम सदैव सुतुष्टिमेतु ।। इति ।

तत्र घोषाणां भगवद्वाचकत्वप्रकारः कर्मनिर्णये प्रदर्शितः-

नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः ।
नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च ।। इति ।। १६ ।।

**गु.दी.– वैदिका इति ।।** न केवलं वेदाः, किन्तु **वैदिकाः** वेदसम्बन्धिनः संस्कृता इति यावत् । सर्वे शब्दा वेदेभ्योऽभिव्यक्ता इत्यर्थः । यद्वा न केवलं वेदाः किन्तु वैदिकाः सर्वशब्दाश्च पुरुषसूक्तगा इति पूर्वेणान्वयः । मन्त्रप्रकरणत्वेऽप्यस्य 'तेन पृष्टः' (तं.सा.१-२) इत्यत्र भगवद्वाचकप्रमाणमात्रप्रश्नस्याभिप्रेतत्वात् तदनुरोधेनात्र वेदाद्युत्पत्त्युक्तिरिति ध्येयम् । तदनुसारेणैव फलमाह— **तस्मादिति ।।** मद्वाचकप्रणवव्याख्यानरूपाष्टाक्षरव्याहृत्यादेः परम्परया सर्वशब्दानामपि व्याख्यानरूपत्वादिति भावः । निमित्तान्तरमाह—**पञ्चाशदिति ।।** अपिरभिव्याप्तौ । सर्वपदप्राप्तासङ्कोचव्यञ्जनमपेरर्थः । एवं च **सर्वशब्दा अपि** पञ्चाशद्वर्णभिन्ना वर्णाश्च भगवदभिधायकास्ततश्च सर्वाभिध इत्यन्वयः । न केवलं सर्वे वैदिकाः शब्दाः भगवद्वाचकाः किन्तु दधिमथनगजबृंहितादिघोषाः स्वरा अपि नादादिरूपत्वेन भगवद्वाचका इति सूचनार्थं चशब्दः । 'सर्वा वाचश्च घोषाश्च विष्णोर्नामेति कीर्तिताः' इति बृहद्भाष्योक्तेः (बृ.भा.अ१-सप्तान्नब्राह्मणम्) । तेषां भगवदभिधायकताप्रकारस्तु कर्मनिर्णये दर्शितः ।

दध्नो मथनशब्दश्चाप्यन्तर्नादस्वरूपतः ।
भीषकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे ।।

गजबृंहितमप्येवं धिक्कारसहितं वदेत् ।
स्वरितेन समायोगात् धिक्कृतौ स्वरितो यतः।। (क.नि.-१६३)इत्यादिना ।

'गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एवेत्याह ।' 'गर्गर इति पादभूषणमहामत्रकदधिपात्रहस्तिहस्तानां नाम' (क.नि.-१६३) इति च कर्मनिर्णये । तत्रैव व्याख्यातं चैतट्टीकाकारैः— 'ननु वर्णा एव वाचकाः न घोषास्ते तु वर्णानां व्यञ्जका एव । तत्कथमुच्यते घोषा वाचका इति । न च वाच्यं वाचकवर्णव्यञ्जकत्वेनोपचारादियमुक्तिरिति, गर्गरादिघोषाणामकारादिव्यञ्जकत्वस्याप्यभावादित्यत उक्तं– नादेति ।। नादो नाम वर्णो मन्त्रशास्त्रे प्रसिद्धः ।

अकाराद्यव्यञ्जकत्वेऽपीति मात्रशब्दार्थः' इति ।' यद्यपि स्वराणां पदवाक्यावयववर्णधर्मत्वमेव न पृथक् प्रयोगस्तथापि पृथगर्थाभिधायकत्वाद्वाचकत्वम् । यथोक्तमृग्भाष्ये—

दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चता तथा ।
नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितः ।।
समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ।। इति । (ऋ.भा.श्लो.९८)

तत्प्रकारस्तु स्वरार्थानां पदवाच्यार्थवाक्यवाच्यार्थविशेषणत्वान्वयं कृत्वा बोद्धव्यः । तथा हि– 'अग्निमीळे' (ऋ.सं.१-१-१) इत्यत्र ईळे इत्यस्य पदकाले उभयोर्वर्णयोरप्यनुदात्तत्वादतिदृढं स्तौमीति । संहिताकाले तु प्रथमवर्णस्य स्वरितस्वरत्वात् तस्य च नीचार्थत्वात् प्रचयस्य यथास्थितार्थकत्वात् यथास्थितं नीचोऽहं स्तौमीति । ननु ऋग्वेदब्राह्मणादौ उदात्ताद्यनुच्चारणात्तेषामपशब्दत्वाद्ब्राह्मणादिपारायणे पुण्यं न स्यात् । प्रत्यवायश्च स्यात्, पदावयववर्णादित्यागे प्रत्यवायवत्, 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह'(सुधा.१-१-६) इत्यादिवचनादिति चेत् न । अत्रेत्थं सम्प्रदायविद उपदिशन्ति– मूलवेदेऽनादितः केषाञ्चिद्ब्राह्मणादीनां यथास्थितोदात्तादिमत्त्वेन पाठाभावादादिसृष्टौ भगवता तथैव ब्रह्मादीन् प्रत्युपदेशेन तादृशब्राह्मणादिपारायणस्य पुण्यजनकत्वाभ्यनुज्ञानात् पुण्यजनकत्वम् । 'मन्त्रो हीनः' इति वचनं तु मन्त्रे पठ्यमानस्वरवर्णत्यागे प्रत्यवायपरम् । ब्राह्मणस्य तु मन्त्रपदवाच्यसंहिताया अन्यत्वात् । इदं सर्वं काण्वादीनां ब्राह्मणादिषु उदात्तादिस्वरपाठाज्ज्ञायत इति ।।

वर्णविशेषयुक्तवेदवाक्येषु मूर्तिविशेषाणां प्रतिपाद्यत्वं चानुसन्धेयम् । तथा चोक्तं छान्दोग्यभाष्ये द्वितीयाध्याये

हुङ्कारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः ।
आकारयुक्ते वाराहः वासुदेवः प्रसंयुते ।।
नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः ।
उपयुक्ते नृसिंहश्च नीतिसङ्कर्षणस्तथा ।।

अभावे यावदेते स्युस्तावत् तद्दैवतं स्मृतम् ।
एवं सप्तविधं विष्णुं य उपास्ते सदा विभुम् ।
वाङ्नामा भगवांस्तस्य भवेत्सर्वार्थदोहकृत् ।। इति ।। १६ ।।

**मङ्गाली–** पुराणादीनां सर्वपौरुषेयशब्दानां वेदेभ्योऽभिव्यक्तिमाह— **वैदिका इति ।।** सर्वे शब्दाः पुराणेतिहासादिरूपाः विष्णुषडक्षरादिमन्त्ररूपाश्च संस्कृतशब्दाश्च **वैदिकाः** वेदेभ्यो व्यक्ताः वेदव्याख्यानरूपा इत्यर्थः । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'(गी.भा.१-१) इत्युक्तेः । फलितमाह– **तस्मादिति ।।** यस्मात् गुणपरिपूर्णत्वप्रतिपादकः प्रणवो मम वाचकः तस्य च सदागमत्वावच्छिन्ननारायणाष्टाक्षरादिसर्वशब्दः साक्षात्परंपरया च व्याख्यानरूपः। 'ॐकारेण सर्वा वाक् संतृण्णा'(छा.उ.२-२३-२) इति छन्दोगश्रुतेः । तस्मादहं **सर्वाभिधः** सर्वशब्दजातं अभिधा नामधेयं यस्य स तथोक्तः । अस्मिन्व्याख्यानव्याख्ये-ययोरेकार्थत्वस्य प्रसिद्धत्वादिति भावः । अनेन विष्णुः सदागमत्वावच्छि-न्नसर्वशब्दवाच्यः तद्व्याख्येयोङ्कारार्थत्वात् । यो यद्व्याख्येयार्थः स तद्व्याख्यानप्रतिपाद्यश्च यथा संमत इति वा । सर्वे शब्दाः विष्णुपराः तत्परोङ्कार-व्याख्यानत्वात् । यो यत्परशब्दव्याख्यानं स तत्पर इति वाऽनुमानं सूचितं भवतीति ज्ञेयम् । सर्वशब्दाभिधेयत्वे निमित्तान्तरमाह— **पञ्चाशदिति ।।** चो यस्मादित्यर्थे । तस्मात्**सर्वशब्दाः** वैदिकाः लौकिकाः सर्वेऽपि शब्दाः मद्वाचकप्रणवव्याख्यानभूतपञ्चाशद्वर्णेभ्यो **भिन्नाः** व्यक्ताः **अतश्च** अतोऽपि सर्वाभिधोस्म्यहमिति अन्वयः । न केवलं वैदिकाः प्राकृताश्च सर्वशब्दाः भगवद्वाचकाः अपि तु ध्वन्यात्मकशब्दा अपि नादाख्यवर्णव्यञ्जकत्वेन मद्वाचका इति सूचनार्थं चशब्दः । तदुक्तमैतरेयभाष्ये-

'सर्वैश्च वैदिकपदैरेपि लोकशब्दैर्मेघाग्निवारिधितलादिरवैश्च सर्वैः ।
मुख्याभिधेयपरिपूर्णगुणः प्रियोऽलं नारायणो मम सदैव सुतुष्टिमेतु ।। इति ।।

तत्र घोषाणां भगवद्वाचकत्वप्रकारः कर्मनिर्णये प्रदर्शितः ।

नदीसमुद्रघोषाश्चनादत्वात् श्रैष्टवाचकाः ।
नादो हि श्रैष्ठ्यवाची स्यात् एवं घोषाः परेऽपि च ।। इति ।। १६ ।।

**तं. सा. ऋषिश्च देवतैकोऽहं तारादीनां विशेषतः ।**
**छन्दो मदीया गायत्री ताराष्टाक्षरयोर्मता ॥ १७ ॥**

**त. क.–**

आदौ स्मृत्वा ऋषिच्छन्दोदेवता वीजशक्तिषु ।
कृत्वा न्यासं सदिग्बन्धं जपं कुर्याद्वरैस्सह ॥

इति वचनादुक्तानां वक्ष्यमाणानां मन्त्राणाम् ऋषिदेवताज्ञानपूर्वकं जपविधानात् ऋषिदेवतादिप्रतिपादनायोत्तरो ग्रन्थसन्दर्भः। तत्र ऋषिर्नाम प्रथमद्रष्टा, प्रथमप्रतिपत्तेति यावत्। यद्वा मन्त्रफलस्य प्रथमद्रष्टा। 'दर्शनादृषिरुच्यते। दर्शनं च फलस्याहुर्न पुनर्मन्त्रदर्शनात्' इति वचनात्। देवतात्वं तु मन्त्रफलदातृत्वे सति तत्प्रतिपाद्यत्वम्। तदुक्तम्—

देवता मन्त्रफलदा मन्त्रेण प्रतिपादिता । इति ।

तत्र उक्तवक्ष्यमाणानां सर्वेषामपि मन्त्राणां प्रत्यायनायेह ऋषिदेवते आह– **ऋषिश्चेति ॥** ऋषिर्देवता च तारादीनां सर्वेषां मन्त्राणामहमिति सम्बन्धः। मन्त्रस्वरूपकालादिद्रष्टृत्वस्य तत्प्रतिपाद्यत्वतत्फलदातृत्वादेश्च मय्येव पुष्कलत्वादिति भावः। ननु 'वैष्णवानां मुनिर्ब्रह्मा' इत्यादिवचनात् कथमेतदित्यत आह– **एको मुख्य इति ॥** ब्रह्मा च तदधीनोऽत्र देवतेति भावः। तर्हीहोद्धृतानां सप्तानां मन्त्राणां ब्रह्मादिर्विशेषतो मन्त्रान्तराणामिव विशेषतो ऋष्यादित्वेन प्रतिपत्तव्यः किम् ? नेत्याह– **विशेषत इति ॥** विशेषतोऽपि तारादीनां सप्तानाम् अहमेक एव ऋष्यादि । न तु मन्त्रान्तराणामिव सामान्यतः। छन्दश्च 'छन्दो मन्त्राक्षरायत्तः' इति वचनात् मन्त्राक्षरसङ्ख्यैव। तत्तु सर्वमन्त्रसाधारण्येन वक्तुमशक्यमिति ताराष्टाक्षरयोः समसङ्ख्यत्वात् तयोश्छन्दो दर्शयति– **छन्द इति ॥ मदीया** लक्ष्म्या अभिमन्यमाना गायत्री च्छन्द इत्यनेन गायत्रीछन्दोबद्धत्वमप्यनयोरतिशयनिमित्तमिति सूचितम् ॥ १७ ॥

**अ.सं–** एवं स्वस्य सकलगुणपूर्णत्वे प्रणवादिसर्वशब्दाः प्रमाणमित्यभिप्रायेण

प्रणवो मातृकाष्टार्णौ व्याहृतिर्द्वादशाक्षरः ।
गायत्री पौरुषं विष्णुः महा (अष्ट)मन्त्राः प्रकीर्तिताः ।

इति प्रमाणोक्तक्रमेण प्रणवात् मातृकादीनां सर्वशब्दानामभिव्यक्तिमभिधाय स्वस्य सर्वशब्दवाच्यत्वोक्त्या सर्वशब्दानां गुणपूर्णत्वे प्रामाण्यमुपपादितम् । इदानीं के मन्त्राः जप्याः इति पश्नस्य एते प्रणवादय एव मन्त्राः जप्याः इत्युत्तरं मनसि निधाय 'यो हवाऽविदितार्षच्छन्दोदैवतब्राह्मणेन' इत्यादि श्रुत्या तथा–

देवर्षिच्छन्दांसि सम्यगेव विचारयेत् ।
मृत्युः स्याद्देवताऽज्ञाने छन्दोऽज्ञाने तु निष्फलम् ।।

इत्यादिस्मृत्या च मन्त्राणाम् ऋष्याद्यज्ञानेन जपाद्यनुष्ठानेऽनर्थोक्तेः सर्वमन्त्राणां ऋष्याद्याह— **ऋषिश्चेत्यादिना ।** प्रणवादीनामुक्तानां चतुर्थाध्याये वक्ष्यमाणानां वराहादीनां चागमान्तरोक्तानां च सर्वमन्त्राणामहमेकः केवलः अहमेवेत्यर्थः **विशेषतः** मुख्यतः **ऋषिः** द्रष्टा । अहमेव मुख्यतो **देवता** प्रतिपाद्यश्चेत्यर्थः । यत्र मन्त्रेऽन्यो रमाब्रह्मादिः ऋष्यादित्वेनोक्तः तत्र मन्त्रे स अमुख्यो ऋष्यादिर्ज्ञेयः । स्वस्तुतेः स्वेनैव करणवत् परमात्मना स्वेनैव स्वप्रतिपादनस्य क्रियमाणत्वात् एकस्यैव भगवतः ऋषित्वं देवतात्वं च युज्यत इति ज्ञेयम् । इदानीं प्रतिमन्त्रं छन्दसां विलक्षणत्वेनैकप्रकारत्वाभावात् ऋषिदेवतावत् युगपद्वक्तुमशक्यत्वात् आदौ तावत् प्रणवाष्टाक्षरयोः छन्द आह– **छन्द इति ।।** गायत्र्याख्यच्छन्दसः लक्ष्मीसरस्वत्यौ मुख्यामुख्यभेदेनाभिमानिन्यौ। तदुक्तम् बृहद्भाष्ये 'अभिमानिनी तु गायत्र्याः मुख्या श्रीः परिकार्तिता । ब्रह्माण्यमुख्यतो ज्ञेया' (भृ.भा.७-१)इति । तत्र **मदीया** मदाश्रितलक्ष्म्यभिमन्यमाना **गायत्री** दैवी गायत्रीति यावत् । ताराष्टाक्षरयोः छन्द इति **मता** सम्मतेत्यर्थः । दैवी गायत्री छन्द इति गायत्र्याः दैवीगायत्रीत्वमुक्तं क्वचिदागमे । तत्र दैवीशब्दार्थं वक्तुं मदीयेत्युक्तम् । **मदीया** मम सम्बन्धिनीति ब्रह्माणं प्रति नारायणवाक्यम् । तेन देवस्य क्रीडादिगुणविशिष्टस्य हरेः सम्बन्धिनी लक्ष्मीः लक्ष्म्यभिमन्यमाना

दैवीति दैवीशब्दार्थ उक्तो भवति। लक्ष्म्यभिमन्यमानगायत्र्यदौ वा गायत्रीत्वमुक्तं विष्णुतीर्थीये—'गायत्री नाम ब्रह्माणी दैवी लक्ष्मीः प्रकीर्तिता' इति। ब्रह्माणी सरस्वती निरुपपदगायत्री शब्दवाच्या। लक्ष्मीस्तु दैवीगायत्रीति प्रकीर्तितेति प्रमाणार्थः। 'गायत्री यत्र दैवी स्यात्तत्र श्रीः परिकीर्तिता' इति च। ततश्च प्रणवाष्टक्षरयोः अन्तर्यामी ऋषिः श्रीनारायणो देवता। दैवीगायत्री छन्द इत्युक्तं भवति ॥ १७ ॥

**गु.दी–** 'यो ह वा अविदितार्षच्छन्दोदैवतेन' (छा.ब्रा.) इत्यादिश्रुत्या

ततो देवर्षिछन्दांसि सम्यगेव विचारयेत्।
मृत्युः स्याद्देवताऽज्ञाने छन्दोहीने तु निष्फलम् ॥

इत्यादिस्मृत्या च ऋष्याद्यज्ञानेऽनर्थोक्तेर्व्याहृतिगायत्रीव्यतिरिक्तानामुक्तप्रणवादिसर्वमन्त्राणां मुख्यऋषिदेवते आह— **ऋषिरित्यादिना ॥** यद्यपि वक्ष्यमाणसर्वमन्त्राणामपि ऋषिर्देवता च हरिरेव। तथापि तेषामन्येऽप्यमुख्यऋषयो वर्तन्ते नैतेषाम्। अतो **विशेषत** इत्युक्तम्। **तारादीनां** महामन्त्राणां **अहं** अन्तर्यामी ऋषिर्देवता च **एको** मुख्योऽहमेवेत्यर्थः। यद्वा एकस्य ऋषिदेवतात्वे कथमित्यत उक्तं— **विशेषत इति ॥** भेदप्रतिनिधिविशेषत इत्यर्थः। इदानीं प्रणवाष्टाक्षरयोश्छन्द आह— **छन्द इति ॥** गायत्र्याश्छन्दसो लक्ष्मीसरस्वत्यौ देवते। तत्र ताराक्षरयोः **मदीया गायत्री** लक्ष्म्यभिमन्यमाना गायत्री छन्दः। तत एव दैवी गायत्री छन्द इति प्राञ्चः। तदाह विष्णुतीर्थस्मृतौ–

गायत्री यत्र दैवी स्यात् तत्र श्रीः परिकीर्तिता इति।
गायत्री नाम ब्रह्माणी दैवी लक्ष्मीः प्रकीर्तिता।
इन्द्राणी त्रिष्टुभा चैव जगती सर्वदेवता ॥ इति च ॥१७॥

**मङ्गाली–** के मन्त्रा जप्या इति प्रश्नस्य पूर्वोक्ताः प्रणवादय एव जप्या इत्युत्तरं मनसि निधाय 'यो ह वा अविदितार्षन्दोदैवते'त्यादि श्रुत्या,

तथा देवर्षिछन्दांसि सम्यगेव विचारयेत्।
मृत्युः स्याद्देवताऽज्ञाने छन्दोऽज्ञाने तु निष्फलम् ॥

इत्यादिस्मृत्या च मन्त्राणां ऋष्याद्यज्ञानेन न जपाद्यनुष्ठानेऽनर्थोक्तेः सर्वमन्त्राणां ऋष्याद्याह– **ऋषिश्चेत्यादिना ।।** **तारादीनां** प्रणवादीनामुक्तानां चतुर्थाध्याये वक्ष्यमाणानां वाराहादीनां चागमान्तरोक्तानां च सर्वमन्त्राणाम् **अहमेकः** केवलः अहमेवेत्यर्थः । **विशेषतो** मुख्यतः **ऋषिर्द्रष्टा देवता** प्रतिपाद्यश्चेत्यर्थः । यत्र मन्त्रेऽन्यो रमाब्रह्मादिः ऋष्यादित्वेनोक्तः तत्र सः अमुख्यो ऋष्यादिर्ज्ञेयः । एकस्यैव ऋषित्वं देवतात्वं च कथमित्यतो वाऽऽह– **विशेषत इति ।।** भेदप्रतिनिधिविशेष इत्यर्थः । इदानीं प्रतिमन्त्रं छन्दसां विलक्षणत्वेन युगपद्वक्तुमशक्यत्वादादौ तावत् प्रणवाक्षरयोः छन्द आह– **छन्द इति ।।** ताराष्टाक्षरयोः **मदीया** मदाश्रितलक्ष्म्याभिमन्यमाना गायत्री दैवीगायत्रीति यावत् । छन्द इति **मता** संमता । लक्ष्म्याः गायत्र्यभिमानित्वम्

अभिमानिनी तु गायत्र्याः मुख्या श्रीपरिकीर्तिता ।
ब्रह्माण्यमुख्यतो ज्ञेया........................।। (भृ.भा.७-१)

इति बृहद्भाष्येऽभिहितम् । यत्र गायत्री छन्द इत्येवोच्यते तत्र सरस्वती अभिमानित्वेन ज्ञेया । तदुक्तं विष्णुतीर्थीये-

गायत्री नाम ब्रह्माणी दैवी लक्ष्मीः प्रकीर्तिता ।। इति ।
गायत्री यत्र दैवी स्यात् तत्र श्रीःपरिकीर्तिता इति च ।

ततश्च प्रणवाष्टाक्षरयो; अन्तर्यामी ऋषिः । श्रीनारायणो देवता । दैवी गायत्री छन्द इत्युक्तं भवति ।। १७ ।।

उक्तमन्त्राणां ध्येयदेवतास्वरूपविचारः

**तं. सा.– उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।**
**चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ।। १८ ।।**

**लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ।। १९ ।।**
**ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।**
**सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ।। २० ।।**

**मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ।**
**युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ॥ २१ ॥**

**तः. क.–**

मनःप्रहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥

'यो ह वा अविदितार्षच्छन्दोदैवतब्राह्मणेन मन्त्रेण' इत्यादौ ब्राह्मणशब्दोक्तार्थज्ञानस्याप्यावश्यकत्वात्तत्सिद्ध्यर्थमष्टानामपि मन्त्राणां ध्यानप्रकारमाह– **उद्यदित्यादिना ॥** अत्र विश्वतैजसादिस्वमूर्तिगणमध्यग इत्यनेन देहे नाडीनामवस्थानप्रकारः, हृत्कमलम्, तद्दलेषु भगवन्मूर्तयः, कमलमध्ये कर्णिका, तत्र सूर्यचन्द्रवह्नीनां मण्डलानि, तत्र मध्ये पुरुषरूपी भगवान्, तत्परितो विश्वादयः, कृष्णरामनृसिंहवराहविष्णुपरंज्योतिःपरब्रह्मवासुदेवान्ताश्च, एतत्सर्वम्—

अष्टपत्रे तु हृत्पद्मे मध्ये सूर्येन्दुवह्निनाम् ।
पीठं तन्मध्यपद्मस्थं नारायणमनामयम् ॥ (य.प्र.क.७)

इत्यादिना प्रणवकल्पोक्तप्रकारेण ध्यातव्यमिति सूचयति ।

मूलाधारं समारभ्य त्वामूर्धानमृजु स्थिता । (तं.सा.४-१६२)

इत्यादिनाऽत्रैव च स्वयमेव चतुर्थे वक्ष्यति । तत्तत्प्रकारविशेषास्तु स्वस्वस्थाने वक्ष्यन्ते ।

यद्यपि गुरुनमस्कारः, पापपुरुषदहनशोषणादिः, रेचकादिप्राणायामश्च अत्रैव वक्तव्यः । तथापि सङ्गतिविशेषलाभात् तत्रैवाभिहितः । यद्वक्ष्यति द्वितीये—

आदावेव जपे कुर्यात् शोषणं दहनं प्लुतिम् । इति । (तं.सा.२-६)

यथा चैतत् तथोपपादयिष्यति ।

अत्र भगवद्रूपाणामविशेषेऽपि अकाराद्यष्टाक्षरसमुदायात्मकोंकारवाच्यप्रधानो हरिः । अकारादिप्रातिस्विकवर्णवाच्यविश्वादयोऽष्टावप्रधाना इति द्वैविध्यमाश्रित्य प्रधानध्यानमाह– **उद्यदिति** सार्धश्लोकद्वयेन ॥ उद्यंश्चासौ भास्वांश्च, तद्वदाभासत

इत्याभासः प्रकाशो यस्य। उद्यद्भास्वानिव आभासः प्रकाशो यस्येति वा। सूर्यादुत्तमेष्विदमतिव्याप्तमित्यतः— **समित्याह**। तेन प्रकाशस्य निरतिशयत्वं सिद्ध्यति।

यद्वा, उद्यद्भास्वत्समाभासः आभासयति इत्याभासो बिम्बो यस्य स तथोक्तः। तेन सूर्यं प्रति बिम्बभूतस्य स्वहृदयस्थेनैक्यं चिन्तनीयमिति सिद्ध्यति।

**चिदानन्देति**॥ गुणसर्वस्वोपलक्षणम्। चिदानन्दयोर्वृत्तिगुणेषु प्रधानत्वात्साक्षाद्ग्रहणम्। इतरव्यावृत्तिसिद्ध्यर्थम्— **एकेति**। संसारदशायां प्राकृतदेहस्यापि सद्भावेन केवलचिदानन्दात्मकदेहाभावात् भवतीतरेषां व्यावृत्तिः। चिदानन्ददेहत्वं घनत्वादिकमिव नोपास्यताप्रयोजकमिति मतुपः प्रयोगः। तत्साधुत्वं च विशेषबलादेव। अनेन दुःखित्वादिप्राप्त्या भगवतो देहाभावेन सौन्दर्याद्यभावादुपासनानुपपत्तिरिति चोद्यं निरसनीयम्।

यथाक्रमं दक्षोच्चकरमारभ्य दक्षाधकरपर्यन्तं चक्राद्यायुधचतुष्टयधर इत्यनेन स्वभक्तसन्तापदुरिष्टहन्तृत्वं भक्तिप्रयोजकमुपकर्तृत्वमुक्तम्। अहमिति चतुर्मुखं प्रति भगवतो वचनम्। न त्वहंशब्दाभिधेयोपासकजीवाभिन्नः। तेन न भृत्यवत् त्वामुपासिष्ये, किन्तु प्रेमास्पदस्वरूपत्वादिति व्याख्यानं न युक्तम्। निरसिष्यमाणत्वात्। 'लक्ष्मीधराभ्यामाश्लिष्टः' इत्यनेन रमासमेतत्वेनैवोपासनं विशिष्टफलमिति सूचयति।

विश्वाद्यात्मक एव किमेवं ध्येयः ? नेत्याह– **स्वमूर्तीति**॥ तर्हि स्वमूर्तिभिरेव सेव्यो, नान्योऽस्य सेवकोऽस्तीत्यत उक्तम्– **ब्रह्मेति**॥ इदं च प्राप्तसमस्तैश्वर्यैरेवंविधैरपि भक्त्योपास्यो भगवान् कथं मद्विधैरनुपास्य इति सूचयितुं, जीवब्रह्मभेद एव मन्त्राणां सर्वेषामर्थः, न कस्यापि तदभेद इति दर्शयितुं च। तत्प्रकारश्च वक्ष्यते। नन्वेवं प्रधानस्य ध्यातव्यत्वेऽपि विश्वादीनामष्टानां तदभावादकारादिवर्णवाच्यतोक्तिर्व्यर्थेत्यतो 'मूर्तयोऽष्टावपि ध्येयाः' इति समग्रेण श्लोकेनातिदिशति। यथाऽऽह प्रणवकल्पेऽपि 'विश्वादींश्चैव कृष्णादीन्' इत्यादि।

नन्वयमतिदेशो व्यर्थः। वर्णदेवतात्वोक्त्यैव ध्यातव्यत्वसिद्धेरत आह– **चक्रशङ्खवराभयैः युक्ताः प्रदीपवर्णाश्चेति** ।। तेनाऽनतिदेशे गदापद्मयोः सूर्यवर्णस्य च प्राप्तेरत्र वराभययोर्दीपवर्णस्य चोपसङ्ग्रहार्थं न व्यर्थ इति सूचयति। चशब्दोऽनपोदितानां चिदानन्दैकदेहत्वादीनामविरुद्धानां विशेषणानां समुच्चायकः। 'सर्वाभरणभूषिताः' इति विशेषणं प्रदीपवर्णेत्यादिवन्नापवादकं, प्रधानगणमूर्तीनां प्रापकमेव। पूर्वत्राभरणविशेषस्यानुक्त्याऽपवादकत्वायोगात् ।। १८, १९, २०, २१ ।।

**अ.सं–** अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीने हरेदायुः ध्यानहीने तु निष्फलम् ।।

इति वाक्यात् ध्यानाद्यभावेऽनर्थावगमात् ध्यानार्थं प्रणवाष्टाक्षरयोर्ध्येयदेवतालक्षणं तावदाह— **उद्यदित्यादिना**। उद्यदादित्यवर्णः चिदानन्दात्मकदेहः दक्षिणोर्ध्वादिचतुर्भुजेषु क्रमेण चक्रशङ्खगदापद्मयुतः । वामदक्षिणपार्श्वयोः श्रीभूभ्याम् आलिङ्गितः ।

चक्रशङ्खगदापद्मैर्दक्षोर्ध्वादिकरैर्युतः ।
वामदक्षविभागस्थश्रीधराभ्यां समाश्रितः ।। इत्युक्तेरुक्त एवार्थः ।

**स्वमूर्तिगणमध्यगः**— वर्णदेवताभूतविश्वाद्यष्टमूर्तिगणमध्ये विद्यमान इत्यर्थः। अथवा लक्ष्मीधराभ्यामित्यनेन प्रथमावरणमुक्तम्। द्वितीयतृतीयचतुर्थपञ्चमत्वेनावरणभूतानां क्रुद्धोल्कादीनां वासुदेवादीनां केशवादीनां च मत्स्यादीनां च स्वमूर्तीनां समूहमध्यगः ब्रह्मवायुशिवशेषगरुडैः षष्ठावरणैः शक्रादिकैः इन्द्रादिभिः दशभिः लोकपालैः सप्तमावरणभूतैः देवैः भक्त्याऽधिकं यथा स्यात्तथा । सर्वोत्तमत्वेनेति यावत्। सेव्यमानः **नित्यशक्तिः** अशेषविषयकशक्तिमान् एवंलक्षणः 'अहं ध्येयः' इत्यन्वयः। अहं ध्येय इत्येतत् ब्रह्माणं प्रति नारायणवाक्यम्। ध्यानं च ऋष्यादिन्यासं कृत्वा कार्यम्। तदुक्तम् 'आदौ ऋष्यादि विन्यासं कृत्वा ध्यानं समाचरेत्' इति। ऋष्यादिन्यासस्य स्थानानि चोक्तानि-

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा मनुदेवतायाः । इति

प्रणवमन्त्रस्यान्तर्यामी ऋषिः शिरसि । दैवीगायत्री छन्दः वदने । श्रीनारायणो देवता हृदये इति ऋष्यादिन्यासप्रकारो ज्ञेयः । एवं सर्वमन्त्रेष्वपि । प्रणवाष्टाक्षरमन्त्रयोर्वर्णानां ध्येयदेवतास्वरूपमाह— **मूर्त्तय ।** इति विश्वादय इत्यर्थः ।। १८-२१ ।।

**गु.दी–** अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीनं(ने) हरेदायुर्ध्यानहीनं तु निष्फलम् ।।

इति स्मृतौ ध्यानाद्यभावेऽनर्थावगमाद्ध्यानं तावत्क्रमेणाह– **उद्यदित्यादिना ।।** विधिं प्रति भगवद्वाक्यरूपत्वादहमित्युक्तिः । उद्यदादित्यसदृशप्रकाशः । **चित्** ज्ञानम् **आनन्दः** सुखं तावेव **एकः** केवलोऽभिन्नश्चिदानन्दैकः । स चासौ देहश्चेति कर्मधारयान्मतुप् । चक्रशङ्खगदापद्मानि करैर्धत्त इति चक्रादिधरः । वामदक्षभागस्थश्रीधराभ्यामाद्यावरणभूताभ्यां समालिङ्गितः । **स्वमूर्तीनां** कृद्धोल्कादीनामष्टानां वासुदेवादीनां चतुर्णां केशवादीनां द्वादशानां मत्स्यादीनामपि तावतां द्वितीयाद्यावरणभूतानां **गणस्य** सङ्घस्य मध्ये स्थितः । ब्रह्मवायुशिवशेषगरुडैः षष्ठावरणभूतैः । स्वस्वदिक्स्थैः लोकपालैः शक्रादिभिः सप्तमावरणभूतैः अधिकं यथा तथा भक्त्या सेव्यमानो नित्याशेषविषयशक्तिमानहं ध्येय इत्यर्थः । तथा चानेन वक्ष्यमाण सकलावरणदेवतोपेतत्वमुक्तं भवति । ताराष्टाक्षरयोरित्युपक्रमात् तयोरेवेदं ध्यानम् ।।

तच्च ध्यानमृष्यादिन्यासपूर्वकं कार्यम् । तदाहोत्तरतन्त्रे—
'आदावृष्यादिविन्यासं कृत्वा ध्यानं समाचरेत्' इति ।

तत्स्थानानि मन्त्रदेवप्रकाशिकायाम्—

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा मनुदेवतायाः ।। इति ।

नारायणमन्त्रस्याष्टवर्णदेवतामूर्तीनां विश्वादीनां ध्यानमाह— **मूर्तय इति** ।। **अष्टौ** अष्टावपि **मूर्तयः** विश्वाद्याः प्रदीपवद्वर्णो यासां ताः प्रदीपवर्णाः ।।१८-२१।।

**मञ्जाली–** अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीने हरेदायुः ध्यानहीने तु निष्फलम् ।।

इति वाक्यात् ध्यानाद्यभावेऽनर्थावगमात्। ध्यानार्थं प्रणवाष्टाक्षरयोः ध्येयदेवता लक्षणं तावदाह— **उद्यदित्यादिना** ।। उद्यदादित्यवर्णः चिदानन्दात्मकदेहः । दक्षिणोर्ध्वादिचतुर्भुजेषु क्रमेण चक्रशङ्खगदापद्मयुतः । वामदक्षिणपार्श्वयोः श्रीभूम्यामालिङ्गितः । चक्रशङ्खगदापद्मैः दक्षोर्ध्वादिकरैर्युतः । वामदक्षविभागस्थ-श्रीधराभ्यां समाश्रित इत्युक्तेरुक्त एवार्थः । **स्वमूर्तिगणमध्यगः** वर्णदेवताभूतविश्वाद्यष्टमूर्तिगणमध्ये विद्यमान इत्यर्थः । अथवा लक्ष्मीधराभ्या-मित्यनेन लक्ष्मीधराभ्यां इति वक्ष्यमाणं प्रथमावरणमुक्तम् । स्वमूर्तिगणमध्यग इत्यनेन हृदयादीनित्यादिना वक्ष्यमाणं द्वितीयावरणभूतानां कृद्धोल्कादीनाम् वासुदेवादीनाम् केशवादीनां मत्स्यादीनां च स्वमूर्तिनां मध्यगत्वं उक्तम् । ब्रह्मवायुशिवशेषगरुडैः षष्ठावरणैः शक्रादिकैरिन्द्रादिभिर्दशभिर्लोकपालैः सप्तमावरणभूतैः देवैः भक्त्याऽधिकं यथा स्यात् तथा सर्वोत्तमत्वेनेति यावत् । सेव्यमानः नित्यनिःशेषशक्तिमान् एवं लक्षणः अहं ध्येय इत्यन्वयः । एतच्चावरणद्वयं 'अनन्तब्रह्मवाय्वीशान्' इत्यादिना वक्ष्यमाणं ज्ञेयम् । ब्रह्माणं प्रति नारायणवाक्यत्वात् 'मदीया' 'अहं' इत्यादि युज्यते । ध्यानं च ऋष्यादिन्यासं कृत्वा कार्यम् । तदुक्तम्-

आदावृष्यादिविन्यासं कृत्वा ध्यानं समाचरेत् इति ।।

ऋष्यादिन्यासस्य स्थानानि चोक्तानि ।

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा मनुदेवतायाः ।। इति ।

प्रणवमन्त्रस्यान्तर्यामी ऋषिः शिरसि । दैवी गायत्री छन्दः मुखे । नारायणो देवता हृदये । एवं सर्वमन्त्रेष्वपि ऋष्यादिन्यासप्रकारो ज्ञेयः । प्रणवाष्टाक्षर-

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा मनुदेवतायाः । इति

प्रणवमन्त्रस्यान्तर्यामी ऋषिः शिरसि । दैवीगायत्री छन्दः वदने । श्रीनारायणो देवता हृदये इति ऋष्यादिन्यासप्रकारो ज्ञेयः । एवं सर्वमन्त्रेष्वपि । प्रणवाष्टाक्षरमन्त्रयोर्वर्णानां ध्येयदेवतास्वरूपमाह— **मूर्त्तय ।** इति विश्वादय इत्यर्थः ।। १८-२१ ।।

**गु.दी–** अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीनं(ने) हरेदायुर्ध्यानहीनं तु निष्फलम् ।।

इति स्मृतौ ध्यानाद्यभावेऽनर्थावगमाद्ध्यानं तावत्क्रमेणाह– **उद्यदित्यादिना ।।** विधिं प्रति भगवद्वाक्यरूपत्वादहमित्युक्तिः । उद्यदादित्यसदृशप्रकाशः । **चित्** ज्ञानम् **आनन्दः** सुखं तावेव **एकः** केवलोऽभिन्नश्चिदानन्दैकः । स चासौ देहश्चेति कर्मधारयान्मतुप् । चक्रशङ्खगदापद्मानि करैर्धत्त इति चक्रादिधरः । वामदक्ष-भागस्थश्रीधराभ्यामाद्यावरणभूताभ्यां समालिङ्गितः । **स्वमूर्तीनां** कृद्धोल्कादी-नामष्टानां वासुदेवादीनां चतुर्णां केशवादीनां द्वादशानां मत्स्यादीनामपि तावतां द्वितीयाद्यावरणभूतानां **गणस्य** सङ्घस्य मध्ये स्थितः । ब्रह्मवायुशिवशेषगरुडैः षष्ठावरणभूतैः । स्वस्वदिक्स्थैः लोकपालैः शक्रादिभिः सप्तमावरणभूतैः अधिकं यथा तथा भक्त्या सेव्यमानो नित्याशेषविषयशक्तिमानहं ध्येय इत्यर्थः । तथा चानेन वक्ष्यमाण सकलावरणदेवतोपेतत्वमुक्तं भवति । ताराष्टाक्षरयोरित्युपक्रमात् तयोरेवेदं ध्यानम् ।।

तच्च ध्यानमृष्यादिन्यासपूर्वकं कार्यम् । तदाहोत्तरतन्त्रे—
'आदावृष्यादिविन्यासं कृत्वा ध्यानं समाचरेत्' इति ।

तत्स्थानानि मन्त्रदेवप्रकाशिकायाम्—

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा मनुदेवतायाः ।। इति ।

नारायणमन्त्रस्याष्टवर्णदेवतामूर्तीनां विश्वादीनां ध्यानमाह— **मूर्तय इति** ।। **अष्टौ** अष्टावपि **मूर्तयः** विश्वाद्याः प्रदीपवद्वर्णो यासां ताः प्रदीपवर्णाः ।।१८-२१।।

**मङ्गाली–** अङ्गन्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीने हरेदायुः ध्यानहीने तु निष्फलम् ।।

इति वाक्यात् ध्यानाद्यभावेऽनर्थावगमात्। ध्यानार्थं प्रणवाष्टाक्षरयोः ध्येयदेवता लक्षणं तावदाह— **उद्यदित्यादिना ।।** उद्यदादित्यवर्णः चिदानन्दात्मकदेहः । दक्षिणोर्ध्वादिचतुर्भुजेषु क्रमेण चक्रशङ्खगदापद्मयुतः । वामदक्षिणपार्श्वयोः श्रीभूम्यामालिङ्गितः । चक्रशङ्खगदापद्मैः दक्षोर्ध्वादिकरैर्युतः । वामदक्षविभागस्थ-श्रीधराभ्यां समाश्रित इत्युक्तेरुक्त एवार्थः । **स्वमूर्तिगणमध्यगः** वर्णदेवताभूतविज्ञाद्यष्टमूर्तिगणमध्ये विद्यमान इत्यर्थः । अथवा लक्ष्मीधराभ्या-मित्यनेन लक्ष्मीधराभ्यां इति वक्ष्यमाणं प्रथमावरणमुक्तम् । स्वमूर्तिगणमध्यग इत्यनेन हृदयादीनित्यादिना वक्ष्यमाणं द्वितीयावरणभूतानां कृद्धोल्कादीनाम् वासुदेवादीनाम् केशवादीनां मत्स्यादीनां च स्वमूर्तिनां मध्यगत्वं उक्तम् । ब्रह्मवायुशिवशेषगरुडैः षष्ठावरणैः शक्रादिकैरिन्द्रादिभिर्दशभिर्लोकपालैः सप्तमावरर्णभूतैः देवैः भक्त्याऽधिकं यथा स्यात् तथा सर्वोत्तमत्वेनेति यावत् । सेव्यमानः नित्यनिःशेषशक्तिमान् एवं लक्षणः अहं ध्येय इत्यन्वयः । एतच्चावरणद्वयं 'अनन्तब्रह्मवाय्वीशान्' इत्यादिना वक्ष्यमाणं ज्ञेयम् । ब्रह्माणं प्रति नारायणवाक्यत्वात् 'मदीया' 'अहं' इत्यादि युज्यते । ध्यानं च ऋष्यादिन्यासं कृत्वा कार्यम् । तदुक्तम्-

आदावृष्यादिविन्यासं कृत्वा ध्यानं समाचरेत् इति ।।

ऋष्यादिन्यासस्य स्थानानि चोक्तानि ।

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा मनुदेवतायाः ।। इति ।

प्रणवमन्त्रस्यान्तर्यामी ऋषिः शिरसि । दैवी गायत्री छन्दः मुखे । नारायणो देवता हृदये । एवं सर्वमन्त्रेष्वपि ऋष्यादिन्यासप्रकारो ज्ञेयः । प्रणवाष्टाक्षर-

मन्त्रयोर्वर्णानां ध्येयदेवता स्वरूपमाह— **मूर्तय इति** ।। विश्वादय इत्यर्थः ।। १८-२१ ।।

अजदिरूपाणां लक्षणम्

**तं. सा. तादृग्रूपाश्च पश्चाशज्ज्ञानमुद्राऽभयोद्यताः ।**
**टङ्की दण्डी च धन्वी च तत्तद्युक्तास्तु वामतः ।। २२ ।।**

**त. क.–** यद्यपि ताराष्टाक्षरयोरङ्गन्यासादिकमत्र वक्तव्यमस्ति । तथापि ध्यानकथनप्रसङ्गाविच्छेदाय तदनन्तरोद्धृतमातृकाध्यानप्रकारं सामान्यतः सप्तमन्त्रसाधारण्येनोक्तमप्यावापोद्वापाभ्यां दर्शयति– **तादृग्रूपाश्चेति** ।। चशब्दः 'ब्रह्मवायुशिवाहीश'इत्युक्तस्य, (तं.सा.१-२०) तथा 'निःशेषशक्तिमान्'(तं.सा.१-२०) इत्युक्तस्य, तथा 'सर्वाभरणभूषिताः' (तं.सा.१-२१) इत्युक्तस्य समुच्चायकः । **तादृग्रूपाः** मूलवर्णसवर्णाः, प्रदीपवर्णा इति वा । पश्चाशन्मूर्तयोऽपि तादृग्रूपा इत्यर्थो वा चशब्दः । 'चक्रशङ्खगदापद्मधरः' (तं.सा.१-१८) इत्यनेन प्राप्तचतुर्भुजत्वमपवदति– **ज्ञानमुद्राऽभयोद्यता इति** ।। ज्ञानमुद्रा अभयमुद्रा चेति पश्चाशन्मूर्तीनां मुद्राद्वयोक्त्या द्विभुजत्वमित्यवगमात् । टकार-दकार-धकारवाच्यानां मूर्तीनां विषये उक्तस्यापवादमाह– **टङ्कीति** ।। यद्यपि पश्चाशन्मूर्तयो ज्ञानमुद्रया अभयमुद्रया च युक्ता इति सामान्यत उक्तम् । तथापि टकारादिवाच्यानां तिसृणां मूर्तीनां यथाक्रमं वामहस्ते टङ्कदण्डधनूंषि, दक्षहस्ते तु अभयमुद्रैवेति ज्ञानमुद्राया उद्वापष्टङ्कादीनामावापश्चेति ज्ञातव्यम् । वामहस्ते अभयमुद्रेति पक्षे तस्या उद्वाप इति ध्येयम् । पश्चाशन्मूर्तयोऽपि चतुर्भुजा एव । चक्रशङ्खयोरुद्वापेन ज्ञानाभययोरावापेन च विशेषो ज्ञातव्यः । तत्रापि टङ्क्यादिमूर्तित्रये ज्ञानमुद्राया उद्वापष्टङ्कादीनामावा-पश्चेति केचित् । तथा च सामान्यापवादशास्त्राभ्यां, पश्चाशन्मूर्तीनामुद्यदादि-त्यवर्णत्वं, चिदानन्दैकदेहत्वं, ब्रह्मादिसेव्यत्वं, नित्यनिश्शेषशक्तिमत्त्वं, सर्वाभरणभूषितत्वं, ज्ञानाभयमुद्रायुतदोर्द्वयत्वं, टङ्कादियुतवामहस्तत्वं च ध्येयमिति सिद्ध्यति ।। २२ ।।

**अ.सं.–** लघूक्त्या परामर्शसौकर्यात् प्रणवाष्टाक्षरमन्त्रदेवताध्यानोक्त्यनन्तरं

पञ्चाशद्वर्णानां ध्येयाजादिदेवतालक्षणमाह– **ताद्दग्रूपाश्चेति ।।** **ताद्दग्रूपा** इत्यत्र तच्छब्देन मूलरूपपरामर्शः । ततश्च मूलरूपसदृशाः उद्यदादित्यवर्णा इत्यर्थः । तच्छब्देनाऽव्यवहितवर्णदेवतारूपं परामृश्य प्रदीपवर्णा इत्यर्थ इत्यप्याहुः । ज्ञानमुद्राभयमुद्राभ्यां युतहस्ता इत्यर्थः । तेन द्विभुजत्वं सूचितम् । पञ्चाशन्मूर्तिमध्ये टङ्की दण्डी धन्वी चेति तिस्रो मूर्तयस्तु वामहस्तेऽभयमुद्रास्थाने **तत्तद्युक्ताः** क्रमेण टङ्केन दण्डेन धनुषा च युक्ता इत्यर्थः । 'टङ्कः पाषाणदारणं' इत्यभिधानम् । केचित्तु **ताद्दग्रूपाः** तादृग्विधाः चतुर्भुजादिविशिष्टा इत्यर्थ इत्याहुः ।। २२ ।।

**गु.दी.–** अजादिमूर्तिध्यानमाह— **तादृग्रूपा इति ।।** पञ्चाशदजाद्याः **तादृग्रूपाः** मूलमूर्तिसदृशाः । तेन लक्ष्मीधराभ्यामाश्लिष्टाश्चतुर्भुजाश्च उद्यद्भास्वत्समानवर्णा इत्यर्थः । प्रदीपवर्णाः सर्वाभरणभूषिताश्चेत्यर्थ इत्येके । 'तादृग्रूपाः' इत्यनेन मूलरूपवद्गदापद्मप्रसक्तौ तत्प्रतिनिधित्वेन ज्ञानाभयमुद्रायुतत्वं द्रष्टव्यमित्याह— **ज्ञानेति ।।** ऊर्ध्वबाहुद्वये चक्रशङ्खौ । अधोबाहुद्वये गदापद्मस्थाने ज्ञानाभयमुद्रे ज्ञेये । केचित्तु 'ज्ञानमुद्राभयोद्यताः' इत्यनेन पञ्चाशन्मूर्तीनां द्विभुजत्वं ज्ञायत इत्याहुः । इदानीं पञ्चाशत् ज्ञानमुद्राभयोद्यता इत्युक्तस्यापवादमाह— **टङ्कीति ।।** पञ्चाशन्मूर्तीनां मध्ये **टङ्की दण्डी धन्वी** चेति त्रयो रूपविशेषाः **वामतः** वामहस्ते **तत्तद्युक्ताः** टङ्कदण्डधनुराख्यायुधयुक्ताः । दक्षिणकरे ज्ञानमुद्रैवेति द्रष्टव्यम् । तथा च पञ्चाशन्मूर्तीनां चतुर्भुजत्वमेव । चक्रशङ्खज्ञानमुद्राऽभयमुद्रेत्यायुधचतुष्टयं सप्तचत्वारिंशन्मूर्तीनाम् । टङ्क्यादिमूर्तित्रये त्वयं विशेषः । भुजद्वये चक्रशङ्खौ, वामकरे टङ्कादि, दिक्षणकरे ज्ञानमुद्रैवेति निष्कर्षः । **अपरे** तु दिक्षणकरे ज्ञानमुद्राऽभयमुद्रा वेति विकल्पमाहुः ।।२२।।

**मङ्गाली–** लघूक्त्या परामर्शसौकर्यात्प्रणवाष्टाक्षरमन्त्रदेवताध्यानोक्त्यनन्तरं पञ्चाशद्वर्णानां ध्येयाजादिदेवतालक्षणमाह– **ताद्दग्रूपाश्चेति ।।** अत्र तच्छब्देन मूलरूपपरामर्शः । ततश्च मूलरूपसदृशाः उद्यदादित्यवर्णा इत्यर्थः । तच्छब्देनाव्यवहितवर्णदेवतारूपं परामृश्य प्रदीपवर्णा इत्यर्थ इत्यप्याहुः । ज्ञानमुद्राभयमुद्राभ्यां युतहस्ता इत्यर्थः । तेन द्विभुजत्वं सूचितम् । पञ्चाशन्मूर्तिमध्ये टङ्की दण्डी धन्वी चेति तिस्रो मूर्तयस्तु वामहस्ते

**अभयमुद्रास्थाने तत्तद्युक्ताः** क्रमेण टङ्केन दण्डेन धनुषा च युक्ता इत्यर्थः । 'टङ्कः पाषाणदारणं' इत्यभिधानं । केचित्तु **तादृग्रूपाः** तादृग्विधाः चतुर्भुजादिविशिष्टाः इत्यर्थमङ्गीकृत्य चतूशङ्खयोर्यथास्थानयोरतिदेशेन प्राप्तत्वात् इतरयोर्भुजयोस्तच्छब्देन मूलरूपपरामर्शे गदापद्मयोर्वर्णदेवतापरामर्शे वराभयोः प्रसक्तौ तत्प्रतिनिधित्वेन ज्ञानाभयमुद्रायुतत्वं ज्ञानमुद्राभयोद्यता इत्यनेनोच्यते इत्याहुः ।। २२ ।।

वासुदेवादिचतूरूपाणां शुक्लादिरूपकथनम् बाहुषु आयुधाभिधानं च

**तं.सा.– वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।**
**चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ।। २३ ।।**

**सशङ्खचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् ।**
**सचक्रशङ्खस्तुर्यस्तु चक्रशङ्खासिचर्मवान् ।। २४ ।।**

**त.क.–** अष्टाक्षरमन्त्रस्य ध्यानप्रकारेऽपवदनीयप्रमेयाभावान्निरपवादं सामान्यशास्त्रेणैव तारवत् ध्येयनिष्कर्षे सिद्धे व्याहृतिमन्त्रे प्रवृत्तस्य सामान्यशास्त्रस्यापि मूलमूर्तावपवादाभावं सिद्धवत्कृत्याङ्गमूर्तिष्वपवदनीयमंशमाह— **वासुदेवादिका इति ।।** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्या भगवद्रूपविशेषाश्चत्वारः शुक्लरक्तपीतकृष्णवर्णोपेता ध्येया' इति शेषः। तेन 'प्रदीपवर्णाश्च'(तं.सा.१-२१) इत्युक्तस्यापवादः कृतो वेदितव्यः। चतुर्ष्वपि चक्रशङ्खवराभयैरित्यस्यापवादं वक्तुमाद्ये वासुदेवे तावदपवादमाह– **शङ्खचक्रगदाब्जेतः प्रथम इति ।।** तेन वराभययोरुद्वापो गदापद्मयोरावापश्च कर्तव्यः। द्वितीये सङ्कर्षणेऽपवादमाह— **मुसली हली सशङ्खचक्रस्त्वपर इति ।।** तेन दक्षवामोच्चकरयोश्चक्रशङ्खोद्वापेन यथाक्रमं मुसलहलयोरावापः। दक्षवामाधःकरयोर्वराभययोरुद्वापेन यथाक्रमं शङ्खचक्रयोरावापः। तृतीयस्य प्रद्युम्नस्याप्याह— **तृतीयः शार्ङ्गबाणवान् सचक्रशङ्ख इति ।।** तेन दक्षवामोच्चकरयोश्चक्रशङ्खोद्वापेन यथाक्रमं शार्ङ्गबाणयोरावापः। दक्षवामाधःकरयोर्वराभययोरुद्वापेन यथाक्रमं चक्रशङ्खयोरावापः।

अनिरुद्धे चतुर्थे त्वाह— **तुर्यस्तु चक्रशङ्खासिचर्मवानिति ।।** तेन वामदक्षोच्चकरयोश्चक्रशङ्खयोर्व्युत्क्रमः । दक्षवामाधःकरयोस्तु वराभययोरुद्धापेन यथाक्रममसिचर्मणोरावापः । तथा च व्यस्तव्याहृतिप्रतिपाद्या गणमूर्तयो वासुदेवाद्या यथाक्रमं शुक्लरक्तपीतकृष्णवर्णा न पुनः प्रदीपवर्णाः । चतुर्भुजा अप्युक्तविधया अनेकविधायुधधारिणः सर्वाभरणभूषिताश्चेत्यादि सर्वं समानम् । व्याहृतिचतुष्टयसमुदायात्मिकायां वर्णमालायां प्रतिपाद्यः प्रधानस्तूद्य-द्भास्वदित्यादि नित्यनिःशेषशक्तिमानित्यन्तोक्तगुणैः समान एवेति निष्कृष्टोऽर्थः । 'अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण वा' (तं.सा.१-१२) इत्युक्तपक्षयोर्नोत्त-माधमभावोऽस्ति । किन्तु पक्षद्वयमपि सङ्ग्राह्यमेवेति सूचनाय, अप्रमेयभेदा-भावप्रतिपादनाय वा अन्त्यपदस्येदं विवरणमकरोदाचार्यः ।। २३, २४ ।।

**अ.सं.–** व्याहृतिदेवताः ध्येयलक्षणविशिष्टत्वेनाह– **वसुदेवादिका इति ।।** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः क्रमेण शुक्लरक्तपीतनीलकान्तिभि**रुज्वलाः** भासमाना इत्यर्थः । वासुदेवः शुक्लः, सङ्कर्षणो रक्तः, प्रद्युम्नः पीतः, अनिरुद्धो नील इति विवेकः । एवं वासुदेवादीनां वर्णमुक्त्वा आयुधान्याह– **चक्रेति ।। प्रथमः** वासुदेवः चक्रशङ्खगदापद्मैः **इतः** युक्तः, **अपरः** सङ्कर्षणः सचक्रशङ्खः **हली** हलवान् **मुसली** मुसलवांश्च । **तृतीयः** प्रद्युम्नः सशङ्खचक्रः **शार्ङ्गबाणवान्** धनुर्बाणवांश्च ।। **तुर्यः** चतुर्थः अनिरुद्धस्तु **चक्रशङ्खासिचर्मवान्** असिः खड्गः । वासुदेवा-दयश्चत्वारः चतुर्भुजाः इति ज्ञेयम् ।। २३ ।।

**गु.दी.–** व्याहृतिचतुष्टयद्वादशाक्षरपदप्रतिपाद्यवासुदेवादिरूपचतुष्टयस्य ध्यान-प्रकारमाह– **वासुदेवादिका इति ।।** वासुदेवः शुक्लः, सङ्कर्षणो रक्तः, प्रद्युम्नः पीतः, अनिरुद्धो नील इति क्रमाच्छुक्लादिवर्णै**रुज्ज्वला भासमाना** इत्यर्थः । उक्तं चैतन्माधवस्तवराजे—

षट्कोणचक्रगं नीलं भगवन्तमनुस्मरेत् ।
त्रिकोणचक्रगं रक्तं भगवन्तमनुस्मरेत् ।। (मा.स्त.३१)

पश्चान्मूर्ध्नि करं न्यस्य स्थितं वरुणमण्डले ।
चतुर्दले स्फाटिकाभं स्मृत्वा चामृतवृष्टिभिः ।। इत्यादि । (मा.स्त.३४)

न चात्र

ऋक्प्रोक्तो लोहिताकारो वासुदेवः परः पुमान् ।
स एव सूर्यलौहित्ये प्राच्यरश्मिषु संस्थितः ॥

सङ्कर्षणः शुक्लवर्णो यजुर्वेदोदितः प्रभुः ।
शुक्लवर्णे च सूर्यस्य दक्षरश्मिषु च स्थितः ॥

प्रद्युम्नः श्यामवर्णस्तु सामवेदोदितः प्रभुः ।
प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेषु च स्थितः ॥

अनिरुद्धस्तु नीलश्च इतिहासपुराणयोः ।
अथर्ववेदे चोक्तः सन्नुदग्रश्मिषु संस्थितः ॥

सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः ।
ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसप्रभः ॥ (छा.भा.३-१-४)

इति तृतीयाध्यायछान्दोग्यभाष्येण,

शुक्लं तु वासुदेवाख्यमनिरुद्धं सुनीलकम् ।
साङ्कर्षणं पिङ्गलं स्यात् प्राद्युम्नं हरितं तथा ॥ (भृ.भा.६-६-४)

इति बृहद्भाष्येण च नानावर्णोक्तेर्विरोधः शङ्क्यः। व्यूहान्तरविवक्षयोपपत्तेरिति सम्प्रदायात् ।

तथा च तत्र **प्रथमो** वासुदेवश्चक्रादियुक्तचतुर्बाहुः। **अपरः** सङ्कर्षणः, सचक्रशङ्ख इत्युक्तेर्मुसलहलयोः सकाशाच्चक्रशङ्खयोः प्रथमत्वम्, वामदक्षिणाधोभुजाभ्यां मुसलहले बिभ्रदित्यर्थः। **तृतीयः** प्रद्युम्नः शार्ङ्गबाणवान् अधस्तनकरद्वये, ऊर्ध्वभुजद्वये सशङ्खचक्रः। **तुरीयः** चतुर्थोऽनिरुद्धः। 'चतुरछयतावाद्यक्षरलोपश्च' (वार्तिकम्. ५-२-५१) इति वचनात् चतुरशब्दात् छप्रत्यये तस्य इयादेशे च लोपे तुरीय इति रूपम् ॥२३,२४॥

**मङ्घाली–** व्याहृतिद्वादशाक्षरमन्त्रपददेवताः ध्येयलक्षणविशिष्टत्वेनाह– **वासुदेवादिका इति ॥** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः क्रमेण शुक्लरक्तपीतनील-

कान्तिभिरुज्वलाः भसमाना इत्यर्थः । वासुदेवाद्दीनामेवायुधान्याह— **चक्रेति** ।। **प्रथमो** वासुदेवः । चक्रशङ्खगदापद्मैरितोयुक्तः । **अपरः** सङ्कर्षणः, सचक्रशङ्खः। **हली** हलवान् **मुसली** मुसलवांश्च । 'सचक्रशङ्खः' इत्युक्तेर्मुसलादेः सकाशात् चक्रशङ्खयोः प्रथमत्वं ज्ञायते । **तृतीयः** प्रद्युम्नः । सचक्रशङ्खः शार्ङ्बाणवान्, शार्ङ धनुः । **तुर्यश्च**तुर्थ अनिरुद्धस्तु चक्रशङ्खासिचर्मवान्, **असिः** खड्गं ।। २३,२४ ।।

केशवादिचतुर्विंशन्मूर्तिलक्षणकथनम्, वर्णदेवतादेरभिव्यक्तेः
तात्पर्यकथनम् प्रणवमन्त्रस्य अङ्गन्यासकथनम् च

**तं. सा.** **केशवो मधुसूदनः सङ्कर्षणदामोदरौ ।**
**स वासुदेवः प्रद्युम्नो दक्षोच्चकरशङ्खिनः ।। २५ ।।**

**विष्णुमाधवानिरुद्धपुरुषोत्तमाधोक्षजाः ।**
**जनार्दनश्च वामोच्चकरस्थितदरा मताः ।। २६ ।।**

**गोविन्दश्च त्रिविक्रमः सश्रीधरहृषीकपः ।**
**नृसिंहश्चाच्युतश्चैव वामाधःकरशङ्खिनः ।। २७ ।।**

**वामनः सनारायणः पद्मनाभ उपेन्द्रकः ।**
**हरिः कृष्णश्च दक्षाधःकरशङ्खधरा मताः ।। २८ ।।**

**शङ्खचक्रगदापद्मधराश्चैते हि सर्वशः ।**
**क्रमव्युत्क्रमपद्मादिगदादिव्युत्क्रमस्तथा ।। २९ ।।**

**अर्धक्रमः सान्तरश्च षट्सु षट्स्वरिपूर्विणाम् ।**
**वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।। ३० ।।**

**व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ।**
**समासव्यासयोगेन व्याहृतीनां चतुष्टयम् ।। ३१ ।।**

**सत्यं चाङ्गानि तारस्य प्रोच्यन्ते......... ।**

**त.क.–** वासुदेवद्वादशाक्षरब्रह्मगायत्रीमन्त्रयोर्ध्येयस्वरूपं सामान्यशास्त्रापवादपुरस्सरमाह— **केशव इत्यादिना ।।** गायत्र्याश्चतुर्विंशत्यक्षरात्मकत्वात्तद्वाच्या मूर्तयोऽपि तावत्य एव। 'चतुर्विंशन्मूर्तयोऽस्याः कथिता वर्णदेवताः' (तं.सा.१-१५) इत्युक्तत्वात्। अत्र—

चतुर्विंशतिमूर्तीनां लक्षणं कथ्यतेऽधुना ।
केशवस्याम्बुजं चक्रं शङ्खो दण्डस्तथाऽयुधम् ।।

प्रादक्षिण्येन बाहूनामन्येषामुच्यते क्रमात् ।
नारायणश्शङ्खपद्मगदाचक्रधरः स्मृतः ।।

माधवो गदया सार्धं चक्रशङ्खाम्बुजायुधः ।
गोविन्दश्चक्रदण्डाब्जशङ्खायुधधरो भवेत् ।।

विष्णुर्गदाब्जशङ्खारिधरः स्यान्मधुसूदनः ।
चक्रशङ्खाब्जदण्डास्त्रधरः कार्यस्त्रिविक्रमः ।।

पद्मदण्डारिशङ्खास्त्रो वामनः शङ्खचक्रधृत् ।
गदाब्जपाणिश्च तथा श्रीधरो धृतवारिजः ।।

सार्धं चक्रगदाशङ्खैर्हृषीकेषमतः शृणु ।
गदाचक्राब्जशङ्खास्त्रधरः पङ्कजनाभिकः ।।

शङ्खचक्राब्जदण्डास्त्रधरो दामोदरः स्मृतः ।
अब्जशङ्खगदाचक्रधरो द्वादशमूर्तयः ।।

एताः कौमोदकीशङ्खगदाचक्रधराः स्मृताः ।
वासुदेवो जगद्योनिः संकर्षणमतः शृणु ।।

गदाशङ्खाब्जचक्राणि धारयन्तं चतुर्भुजम् ।
प्रद्युम्नश्चक्रशङ्खाभ्यां सह दण्डसरोजवान् ।।

अनिरुद्धोऽरिदण्डाब्जशङ्खपाणिश्चतुर्भुजः ।
चक्रपद्मधरः शङ्खगदावान् पुरुषोत्तमः ।।

अधोक्षजः पद्मदण्डचक्रशङ्खधरः स्मृतः ।
नृसिंहश्चारिजलजगदाशङ्खधरः स्मृतः ।।

अच्युतः पद्मदण्डारिशङ्खहस्तश्चतुर्भुजः ।
जनार्दनः पद्मचक्रशङ्खदण्डश्चतुर्भुजः ।।

उपेन्द्रः शङ्खदण्डारिपद्मायुधविभूषितः ।
शङ्खचक्राब्जदण्डाऽस्त्रो हरिः स्यात्कमलासनः ।।

कृष्णः शङ्खगदापद्मचक्रपाणिश्चतुर्भुजः ।
दक्षिणं हस्तमारभ्य प्रादक्षिण्येन कारयेत् ।
मूर्तिचिह्नानि शङ्खादीन्यायुधानि विचक्षण ।।

इति पञ्चरात्रे क्रमेण लक्षणान्यभिहितानि ।

तत्र संक्षेपसिद्धये युक्तिसौकर्याय च मूर्तिषट्कमेकं समुदायं विधायैवं षट्कचतुष्टयं सम्पाद्याद्यषट्कस्य लक्षणं सङ्गृह्णाति– **दक्षोच्चकरशङ्खिनः** इत्यन्तेन । द्वितीयषट्कस्य लक्षणं सङ्गृह्णाति– **वामोच्चकरस्थितदरा मताः** इत्यन्तेन । तृतीयषट्कस्य लक्षणं सङ्गृह्णाति– **वामाधःकरशङ्खिनः** इत्यन्तेन । चतुर्थषट्कस्य लक्षणं सङ्गृह्णाति– **दक्षाधःकरशङ्खधरा मताः** इत्यन्तेन । न केवलं शङ्खधरा एव । किन्तु शङ्खचक्रगदापद्मधराश्चेत्यर्थः । प्रातिस्विकमायुधचतुष्टयमपि सर्वास्वपि प्रतिपत्तव्यमित्याह– **सर्वश इति** ।। हिशब्देनोक्तवचनप्रसिद्धिं सूचयति । यद्यप्यासां मूर्तीनां शङ्खघटितलक्षणोक्त्या शङ्खस्य सिद्धत्वाच्चक्रगदापद्मधरा इत्येव वक्तव्यम् । 'अरिपूर्विणां' इति च सुगमं भविष्यति । तथापि 'अर्धक्रमः सान्तरश्च' इति वक्ष्यमाणार्धक्रमादेस्त्रिष्वसम्भवाद्वक्ष्यमाणक्रमव्युत्क्रमादावपि यथोपदिष्टस्थान एव केशवादीनां शङ्खो ध्यातव्यः । न कदाचिदपि दक्षोच्चकरचक्रित्वादिकमिति ज्ञापनाय वा तथोक्तम् ।।

नन्वनतिव्याप्तान्येव लक्षणानि । तत्कथं दक्षोच्चकरशङ्खित्वादीनि केशवादीनां लक्षणानि स्युः । मधुसूदनादावतिव्याप्तेरित्यत आह– **क्रमेति** ।। निर्दिष्टानामानुपूर्वीविशेषः **क्रमः** । तद्विपर्ययो **व्युत्क्रमः** । स एव पद्मादिश्चेत् **पद्मादिव्युत्क्रमः** ।

स एव गदादिश्चेत् **गदादिव्युत्क्रमः**। अर्धं क्रमेण अर्धं व्युत्क्रमेण योज्यते चेत् **अर्धक्रमः**। आद्यन्तयोर्वैपरीत्यं मध्ये क्रमश्चेत् **सोऽन्तरक्रमः**। शङ्खचक्रगदापद्मेति **क्रमः**। शङ्खपद्मगदाचक्रेति **व्युत्क्रमः**। शङ्खपद्मचक्रगदेति वा शङ्खपद्मगदाचक्रेति वा **पद्मादिव्युत्क्रमः**। शङ्खगादाचक्रपद्मेति वा शङ्खगदापद्मचक्रेति वा **गदाव्युत्क्रमः**। अयं च पक्षभेदे मूर्तिविशेषेषूक्तवचनानुसारेण योज्यः। शङ्खचक्रपद्मगदेत्यर्धक्रमः। शङ्खगदापद्मचक्रेति सान्तरक्रम इति निष्कर्षः। तथा च षण्णामेवं व्यावर्तकधर्माणामाश्रयणान्नातिव्याप्तिः।

तथा हि– केशवस्य दक्षोच्चकरे शङ्खं, वामोच्चकरे चक्रम्। वामाधःकरे गदा, दक्षाधःकरे पद्मम्। 'केशवस्याम्बुजं शङ्खं चक्रं दण्डस्तथाऽयुधम्' इत्युक्तेः। दण्डो गदा, दक्षाधःकरमारभ्य वामाधःकरपर्यन्तमम्बुजादिदण्डान्तानामायुधानां क्रमेण योजनयैकवाक्यता सम्पाद्यते। एवमग्रेऽपि।

मधुसूदनस्य दक्षोच्चकरे शङ्खम्। वामोच्चकरे पद्मम्। वामाधःकरे गदा। दक्षाधःकरे चक्रम्। 'मधुसूदनः। चक्रशङ्खाब्जदण्डास्त्रधरः कार्यः' इत्युक्तेः। अस्त्रमायुधम्।

सङ्कर्षणस्य दक्षोच्चकरे शङ्खम्। वामोच्चकरे पद्मम्। वामाधःकरे चक्रम्। दक्षाधःकरे गदा। 'सङ्कर्षणमतः शृणु। गदाशङ्खाब्जचक्राणि धारयन्तं चतुर्भुजम्' इत्युक्तेः।

दामोदरस्य दक्षोच्चकरे शङ्खम्। वामोच्चकरे गदा। वामाधःकरे चक्रम्। दक्षाधःकरे पद्मम्। 'दामोदरः स्मृतः। अब्जशङ्खगदाचक्रधरः' इत्युक्तेः।

वासुदेवस्य दक्षोच्चकरे शङ्खम्। वामोच्चकरे चक्रम्। वामाधःकरे पद्मम्। दक्षाधःकरे गदा। 'कौमोदकीशङ्खचक्राम्भोजधरः स्मृतः। वासुदेवो जगद्योनिः' इत्युक्तेः॥

प्रद्युम्नस्य दक्षोच्चकरे शङ्खम्। वामोच्चकरे गदा। वामाधःकरे पद्मम्। दक्षाधःकरे चक्रम्। 'प्रद्युम्नश्चक्रशङ्खाभ्यां सह दण्डसरोजवान्' इत्युक्तेः। एतेषु षट्सु दक्षोच्चकरशङ्खित्वमनुगतं वेदितव्यम्।

विष्णोर्वामोच्चकरे शङ्खः । वामाधःकरे चक्रम् । दक्षाधःकरे गदा । दक्षोच्चकरे पद्मम् । 'विष्णुर्गदाब्जशङ्खारिधरः स्यात्' इत्युक्तेः । अत्रापि दक्षाधःकरमारभ्य वामाधःकरपर्यन्तं गदापद्मशङ्खचक्राणां यथाक्रमं योजने एकार्थता सम्पद्यते । वामोच्चकरमारभ्य दक्षोच्चकरपर्यन्तं शङ्खचक्रगदापद्मानां क्रमेण योजने च तत्रैव पर्यवसानसम्भवात् ।।

माधवस्य वामोच्चकरे शङ्खः । वामाधःकरे पद्मम् । दक्षाधःकरे गदा । दक्षोच्चकरे चक्रम् । 'माधवो गदया सार्धं चक्रशङ्खाम्बुजायुधः' इत्युक्तेः ।

अनिरुद्धस्य वामोच्चकरे शङ्खः । वामाधःकरे पद्मम् । दक्षाधःकरे चक्रम् । दक्षोच्चकरे गदा । 'अनिरुद्धोऽरिदण्डाब्जपद्मपाणिश्चतुर्मुखः' इत्युक्तेः । अब्जं शङ्खः ।।

पुरुषोत्तमस्य वामोच्चकरे शङ्खः । वामाधःकरे गदा । दक्षाधःकरे चक्रम् । दक्षोच्चकरे पद्मम् । 'चक्रपद्मधरः शङ्खगदावान् पुरुषोत्तमः' इत्युक्तेः ।।

अधोक्षजस्य वामोच्चकरे शङ्खः । वामाधःकरे चक्रम् । दक्षाधःकरे पद्मम् । दक्षोच्चकरे गदा । 'अधोक्षजः पद्मदण्डशङ्खचक्रधरः स्मृतः' इत्युक्तेः ।।

जनार्दनस्य वामोच्चकरे शङ्खः । वामाधःकरे गदा । दक्षाधःकरे पद्मम् । दक्षोच्चकरे चक्रम् । 'जनार्दनः पद्मचक्रशङ्खदण्डश्चतुर्भुजः' इत्युक्तेः ।।

गोविन्दस्य वामाधःकरे शङ्खः । दक्षाधःकरे चक्रम् । दक्षोच्चकरे गदा । वामोच्चकरे पद्मम् । 'गोविन्दश्चक्रदण्डाब्जशङ्खायुधधरो भवेत्' इत्युक्तेः । अनेन दक्षाधःकरमारभ्य वामाधःकरपर्यन्तं चक्रगदापद्मशङ्खानामन्वये एकार्थता सम्पन्नेति क्रम उपपादितो भवति ।।

त्रिविक्रमस्य वामाधःकरे शङ्खः । दक्षाधःकरे पद्मम् । दक्षोच्चकरे गदा । वामोच्चकरे चक्रम् । 'त्रिविक्रमः पद्मदण्डारिशङ्खास्त्रयुक्' इत्युक्तेः । अनेन शङ्खपद्मगदाचक्रेति व्युत्क्रमः प्रतिपत्तव्यः ।।

श्रीधरस्य वामाधःकरे शङ्खः । दक्षाधःकरे पद्मम् । दक्षोच्चकरे चक्रम् । वामोच्चकरे गदा । 'श्रीधरो धृतवारिजः । सार्धं चक्रगदाशङ्खैः' इत्युक्तेः । शङ्खपद्मचक्रगदेति पद्मादिव्युत्क्रम उक्तो भवति ।।

हृषीकेशस्य वामाधःकरे शङ्खः। दक्षाधःकरे गदा। दक्षोच्चकरे चक्रम्। वामोच्चकरे पद्मम्। 'हृषीकेशमतः शृणु। गदाचक्राब्जशङ्खास्त्रधरः' इत्युक्तेः। अनेन शङ्खगदाचक्रपद्मेति गदादिव्युत्क्रमः सूचितः ॥

नृसिंहस्य वामाधःकरे शङ्खः। दक्षाधःकरे चक्रम्। दक्षोच्चकरे पद्मम्। वामोच्चकरे गदा। 'नृसिंहश्चारिजलजगदाशङ्खधरः स्मृतः' इत्युक्तेः। अनेन शङ्खचक्रपद्मग-देत्यर्धक्रमः ॥

अच्युतस्य वामाधःकरे शङ्खः। दक्षाधःकरे गदा। दक्षोच्चकरे पद्मम्। वामोच्चकरे चक्रम्। 'अच्युतो दण्डपद्मारिशङ्खहस्तश्चतुर्भुजः' इत्युक्तेः। अनेन शङ्खगदापद्मचक्रेति सान्तरक्रमः ॥

वामनस्य दक्षाधःकरे शङ्खः। दक्षोच्चकरे चक्रम्। वामोच्चकरे गदा। वामाधःकरे पद्मम्। 'वामनः शङ्खचक्रधृत्। गदाब्जपाणिश्च तथा' इत्युक्तेः। अत्र ग्रन्थद्वयेऽपि दक्षाधःकरमारभ्य वामाधःकरपर्यन्तं योजनादेकवाक्यता स्फुटैव। अनेन क्रमः ॥

नारायणस्य दक्षाधःकरे शङ्खः। दक्षोच्चकरे पद्मम्। वामोच्चकरे गदा। वामाधःकरे चक्रम्। 'नारायणः शङ्खपद्मगदाचक्रधरः स्मृतः' इत्युक्तेः। अनेन व्युत्क्रमः ॥

पद्मनाभस्य दक्षाधःकरे शङ्खः। दक्षोच्चकरे पद्मम्। वामोच्चकरे चक्रम्। वामाधःकरे गदा। 'पङ्कजनाभिकः। शङ्खचक्राब्जदण्डास्त्रधरः' इत्युक्तेः। अत्र चक्रशब्दः पद्मपरः। अब्जशब्दः चक्रपरः। तेन शङ्खपद्मचक्रगदेति पद्मादिव्युत्क्रम उक्तो वेदितव्यः। 'शङ्खपद्मारिदण्डास्त्रधरः' इति पाठः साधुः ॥

उपेन्द्रस्य दक्षाधःकरे शङ्खः। दक्षोच्चकरे गदा। वामोच्चकरे चक्रम्। वामाधःकरे पद्मम्। 'उपेन्द्रः शङ्खदण्डारिपद्मायुधविभूषितः' इत्युक्तेः। अनेन गदादिव्युत्क्रमः ॥

हरेः दक्षाधःकरे शङ्खः दक्षोच्चकरे चक्रम्। वामोच्चकरे पद्मम्। वामाधःकरे गदा। 'शङ्खचक्राब्जदण्डास्त्रो हरिः स्यात्कमलासनः' इत्युक्तेः। अनेनार्धक्रम उक्तः ॥

कृष्णस्य दक्षाधःकरे शङ्खः दक्षोच्चकरे गदा। वामोच्चकरे पद्मम्। वामाधःकरे चक्रम्। 'कृष्णः शङ्खगदापद्मचक्रपाणिश्चतुर्भुजः' इत्युक्तेः। अनेन सान्तरक्रम उक्तो वेदितिव्यः। चतुर्विंशतिमूर्तिगणप्रविष्टानां मूर्तीनामेवेदं लक्षणम्। तेन 'चक्रशङ्खगदाब्जेतः प्रथमो मुसली'(तं.सा.१-२३) इत्यादिना वासुदेवादिमूर्तीनामन्यथा लक्षणकथनं न विरुद्ध्यते॥

तदेवं द्वादशाक्षरगायत्र्योरक्षरदेवतानां ध्यानं 'मूर्तयोऽष्टावपि ध्येयाः' इति समग्रश्लोकोक्तानामष्टत्ववराभयानामपवादेन चतुर्विंशतिसङ्ख्याप्रदीपवर्णगदापद्मानां स्वीकारेण कर्तव्यम्। प्रधानमूर्तीनां तु 'उद्यद्भास्वत्' इत्यादिसार्धश्लोकोक्तगुणैः सर्वाभरणैश्च ध्यानं कर्तव्यमिति सिद्धम्। साक्षादनुक्तिस्तूत्सार्गापवादन्यायो लोकप्रसिद्ध इत्येव। अत एव 'शरमयं बर्हिर्भवति', 'आलवालप्रस्तर ऐक्षवीविधृती' इत्याद्यागमा वैशेषिकाङ्गोपदर्शनमात्रेण कृतार्थाः। क्वचित् समानमित्यनेनेत्याद्यतिदेशोक्तिस्तु प्रकृत्यन्तरसम्भावनायामेव। न चात्र प्रकृत्यन्तरसम्भावनाऽस्ति। सर्वेषां मन्त्राणां तारमूलकत्वाभिधानेन मन्त्राणां तत्प्रकृतिकत्वनिश्चयेन प्रकृत्यन्तरसम्भावनायोगात्। वक्ष्यति च— 'अन्यत्तारवत्स्मृतम्'(तं.सा.१-३९) 'तारवन्निखिलं स्मृतम्' इति च।

स्यादेतत्। मन्त्रो नाम वर्णसमुदाय एव। वर्णास्तु नित्या व्याप्ताश्च। तत्कथमितरमन्त्रस्य तारविकृतित्वम्। तारस्य वा प्रकृतित्वम्। यद्यपि मन्त्राणां तारमूलत्वमभिहितम्। तथापि तद्दुर्घटमेव। स्यादपीदं तार्किकादिमते सुघटम्। मूलमूलिभावनियामकस्य जन्यजनकभावस्याङ्गीकारात्। अत एव च 'वर्णास्तारार्णभेदिताः'(तं.सा.१-५) इति चायुक्तम्। यच्चोक्तं हृदयकर्णिकागतं रूपं प्रधानं, विश्वादिरूपं त्वप्रधानम्। तारमन्त्रे प्रधान उक्ता गुणाः मन्त्रान्तरप्रधानरूपे, ताराप्रधानरूपेषूक्ता गुणा मन्त्रान्तराप्रधानरूपेषु ध्यातव्या इति तदपि न युज्यते। भगवन्मूर्तीनां स्वतो नित्यत्वाज्जन्यजनकभावादिगर्भस्य गुणप्रधानभावस्यायोगात्।

किञ्च 'सर्वे सर्वगुणैः पूर्णाः'(भाग.ता.१-३-१) इत्यादिना नानारूपाणां नानाऽयुधानां च अङ्गीकृतत्वान्मूलरूप्युद्यदादित्यवर्णः, गुणास्तु केचित्

प्रदीपवर्णाः, केचित् शुक्लरक्तनीलपीतादिवर्णाः । एवं मूलरूपी चक्रशङ्खगदापद्मधर एव । गुणास्तु केचित् मुसलहलशार्ङ्गबाणासिचर्मधराः । केचित् क्रमेण शङ्खचक्रगदापद्मधराः । केचित् व्युत्क्रमेण । केचित् अर्धक्रमेण, केचित् सान्तरक्रमेण, इत्यादिविशेषः कथं युज्यते? परस्परं भेदापत्तिश्च दोषः । न ह्येवं वहुवैलक्षण्येऽपि भेदो न प्राप्नोति । तर्हि जीवब्रह्मणोरपि स न स्यादित्यत आह— **वर्णानां देवतानां चेति ॥**

यद्यपि वर्णानां देवतानां च नित्यत्वाज्जन्यजनकभावनिबन्धनः क्रमः पूर्वापरभावो नास्ति । येन वर्णानां देवतानां च प्रकृतिविकृतिभावकल्पनं स्यात् । तथापि परमेश्वरबुद्धौ व्यक्तिक्रममपेक्ष्य वर्णानां क्रम उच्यते । परमेश्वरो यं वर्णं प्रथमं प्रतीतवान् स आदिम इत्यादिपौर्वापरभाव उच्यते । ननु परमेश्वरप्रतीतेरपि नित्यत्वाद् यं वर्णं प्रथमं प्रतीतवानित्येवायुक्तमिति चेन्न । मतेः शक्त्यात्मना नित्यत्वेऽपि व्यक्तिविवक्षयैवमुक्त्युपपत्तेः । न च व्यक्तेरपि मत्यात्मकत्व-तदतिरिक्तत्वादिविकल्पनेन कण्ठकोलाहलः कर्तव्यः । व्यक्तेरवस्थाविशेषत्वाङ्गीकारात् । विस्तरस्तु सुधायां द्रष्टव्यः ।

किञ्च चतुर्मुखब्रह्मबुद्धौ भगवदुच्चारणाद् यः प्रथममारूढः स आदिमो वर्णः । एतेन तारादिप्रतिपाद्यरूपस्य वर्णादिविशेषनैयत्याभावेऽपि यद्रूपवत्तया यद्वर्णवत्तया यद्व्यूहगततया यावन्मन्त्रवाच्यतया यत्क्रमविशिष्टतया च चतुर्मुखबुद्धावभिव्यज्यते तद्रूपादिमत्तया प्रतिपत्तव्यमित्यङ्गीकारेण प्रमाणविरोधोऽपि निरस्तः । विशेषमग्रे निरसिष्यति ।

नन्वष्टानां महामन्त्रत्वमुपेत्य तत्तदभिव्यक्तिक्रमेण पुरुषसूक्तान्तान् सप्तमन्त्रानुद्धृत्य मन्त्रदेवताध्यानप्रकारं प्रक्रम्य गायत्र्यन्तानां षण्णामेव मन्त्राणां क्रमेण सामान्यापवादाभ्यां प्रधानदेवताध्यानमक्षरदेवताध्यानं चोक्त्वा पुरुष-सूक्तस्य तदुभयध्यानप्रकारः कुतो नाभिहितः । न च पुरुषसूक्ते तदुभय-ध्यानमनावश्यकमिति वाच्यम् ।

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥

इति सामान्यवचनविरोधादिति चेत्। तत्र प्रधानध्यानं तावत् सार्धश्लोकद्वये-नोक्तमेव। तस्य सामान्यशास्त्रत्वात्। अक्षरदेवताध्यानं त्वस्य संक्षेपशास्त्रत्वेन तस्य बहुत्वाच्च नोक्तम्। यद्वक्ष्यत्याचार्यः—

रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।
विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ।। इति । (तं.सा.४-१६९)

अथ निरूपितेषु सप्तसु मन्त्रेषु ताराष्टाक्षरयोः ऋषिदेवते ध्यानं चोक्तम्। अवशिष्टानां ध्यानमात्रमुक्तम्। ऋषिदेवते वक्तव्ये। न्यासश्च सर्वेषां मन्त्राणां वक्तव्यः। स चायं न्यासो बहुविधः। करन्यासो देहन्यासोऽङ्गन्यासोऽक्षरन्यास इत्यादिभेदात्। स सर्वोऽप्यावश्यक एव।

करन्यासं पुरा कृत्वा देहन्यासमतः परम् ।
अङ्गन्यासं ततः पश्चादेवं साधारणो विधिः ।। इत्युक्तेः।

स चायं सर्वोऽपि न्यासः सृष्टिस्थितिसंहारभेदेन त्रिविधः—

शिरःप्रभृतिपादान्तो न्यास उत्पत्तिरुच्यते ।
अथ चेद्विपरीतं स्यात्सोऽपि संहरणो भवेत् ।
उदरोपक्रमन्यासो हृदयान्तः स्थितिर्भवेत् ।। इति तल्लक्षणं द्रष्टव्यम् ।

सोऽप्यधिकारिभेदेनादरणीयः । यथोक्तम्–

न्यासस्तु स्थितिसंज्ञो वा इहामुत्रफलप्रदः ।
सृष्टिस्त्वैहिकभूयिष्ठा संहारो मोक्षसाधकः ।।

स्थितिन्यासो गृहस्थानां उद्दिष्टस्सर्वसिद्धिदः ।
प्रथमाश्रमिणां न्यास उत्पत्तिस्समुदाहृतः ।।

यतीनां च वनस्थानां संहारस्समुदाहृतः ।
विरक्तस्य गृहस्थस्य संहारोऽपि विधीयते ।
सपत्नीकवनस्थानां स्थितिन्यासो विधीयते ।। इति ।

एवं बीजं शक्तिश्चावश्यं वक्तव्ये-

बीजशक्त्यङ्गहीना ये मन्त्रास्स्युस्ते निरर्थकाः ।
तस्मात्साङ्गं शक्तियुक्तं बीजयुक्तं फलप्रदम् ।। इत्युक्तेः ।

तदेतन्मन्त्रोपयुक्ताङ्गन्यासादिप्रपञ्चनाय 'विष्णुशब्दश्चतुर्थ्यन्तः' इत्यतः प्राक्तनो ग्रन्थः। तत्रादौ तारस्य प्राधान्यात् तदङ्गन्यासे मन्त्रानाह– **समासेति ।।**

हृदादीनीति वक्ष्यमाणमन्त्रा अपि सम्बद्ध्यन्ते । व्याहृतीनां चतुष्टयं सत्यं चेति मन्त्राः । हृदयशिरश्शिखाकवचास्त्रेति पञ्चपदानि हृदयाद्यङ्गवाचकानि । तारस्याङ्गन्यासे मन्त्राः प्रोच्यन्ते । शास्त्रेष्विति सम्बन्धः ।

ननु 'भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः' इत्यादेस्तिस्र एव व्याहृतयः । तत्कथं 'व्याहृतीनां चतुष्टयम्' इत्युक्तमित्यत उपपाययिति– **समास इति ।।** संक्षेपविस्तरावेव चतुष्टयत्वघटनायां योग उपायः । तेन व्याहृतीनां चतुष्टयत्वं घटनीयमिति भावः । अत्र चतुर्थ्यन्ता इत्येतल्लिङ्गव्यत्ययेन वक्ष्यमाणमाकर्षणीयम् ।

एतेन– ननु न्यासस्थानान्यङ्गानि पञ्चैव । मन्त्रास्तु भूरादयः सत्यान्ताः पञ्च । हृदयादयोऽस्त्रान्ताः पञ्च । आहत्य दशमन्त्राः सम्पद्यन्ते । तत्कथं घटनीयम् । कथं च मन्त्राकारः । काश्च तत्प्रतिपाद्यमूर्तयः । व्याहृतिवाच्यानां मूर्तिपरिवारत्वेन ध्येयतोक्तेरिति चोद्यं निरस्तम् । भूरादयः पञ्चमन्त्राः प्राक् प्रयोक्तव्याः । हृदयादयस्तु पञ्च मन्त्रा यथाक्रममनन्तरं प्राक् प्रयोक्तव्याः । ते च चतुर्थ्यन्ताः, नमःस्वाहावषट्हुंफडन्ताश्च कर्तव्याः । तेन 'भूः हृदयाय नमः' इत्येको मन्त्रः । 'भुवः शिरसे स्वाहा' इत्यपरः । 'सुवः शिखायै वषट्' इत्यन्यः । 'भूर्भुवःस्वः कवचाय हुम्' इत्यपरः । 'सत्यम् अस्त्राय फट्' इत्यन्य इत्येवं पञ्चमन्त्राः सम्पद्यन्त इति सूचनात् । यथोक्तम्—

अङ्गन्यासोऽङ्गमन्त्रेभ्यः परमङ्गानि निर्दिशेत् ।
हृदयं शिरोऽपि तु शिखाकवचास्त्राणि तानि च ।
सोद्देशानि नमःस्वाहावषट्हुंफट्पराणि च ।।

इति योगदीपिकायाम् । अस्यायमर्थः—हृदयाद्यङ्गेषु पञ्चसु न्यासे कर्तव्ये

भूरादिभ्यः पञ्चभ्यः अङ्गमन्त्रेभ्योऽनन्तरं चतुर्थ्यन्तानि, नमआदिपञ्चपराणि च हृदयादिवाचकपदानि । हृदयादीन्यङ्गान्याह– **हृदयं शिरोऽपीति ॥**

नारदीयेऽप्यङ्गन्यासस्थानानि तत्तदङ्गस्पर्शे हस्तादिनियमश्चोक्तः—

हृदि मूर्ध्नि शिखास्थाने शरीरे हस्तपार्श्वयोः ।
पञ्चानामङ्गमन्त्राणां न्यासं पञ्चसु कल्पयेत् ॥

त्रयाणां हृदयादीनां न्यासो दक्षिणपाणिना ।
द्वयोरुत्तरयोर्द्वाभ्यां हस्तक्लृप्तिरिहोच्यते ॥ इति ।

**अ.सं.–** 'चतुर्विंशन्मूर्त्तयोऽस्याः कथिता वर्णदेवताः'(तं.सा.१-१५) इत्यनेन गायत्र्याः चतुर्विंशन्मूर्त्तयः वर्णदेवता इत्युक्तम् । कास्ताश्चतुर्विंशन्मूर्त्तयः ? किं च तासां लक्षणम् ? इत्यतः गायत्रीवर्णदेवताः तल्लक्षणं चाह– **केशव इत्यादिना ॥** एतेन केशवादिचतुर्विंशन्मूर्त्तयो मूलोक्तप्रकारेण षट् षट् सङ्ख्याकत्वेन चतुर्विधाः । तत्र केशवादिषण्णां दक्षोच्चकरे शङ्खवत्त्वम् । विष्ण्वादिषण्णां वामोच्चकरे शङ्खवत्त्वम् । गोविन्दादिषण्णां वामाधःकरे शङ्खवत्त्वम् । वामनादिषण्णां दक्षाधःकरे शङ्खवत्त्वं लक्षणमुक्तं भवति । अनेन शङ्खमात्रधारिणः एकभुजा इति वा, चतुर्भुजत्वेऽपि शङ्खयुतहस्तातिरिक्तेषु त्रिषु करेषु निरायुधा इति वा प्रतीयते । अत आह— **शङ्खेति । सर्वशः** समस्ताः चतुर्विंशन्मूर्त्तयः शङ्खचक्रगदापद्मयुतचतुर्भुजाश्चेत्यर्थः । 'शङ्खचक्रगदापद्मे'त्येवं प्रकारेण निर्देशस्तु आयुधानां क्रमाज्ञाने वक्ष्यमाणव्युत्क्रमादेर्ज्ञातुमशक्यत्वात् क्रमप्रदर्शनार्थम् ॥

नन्वेवं षट्कचतुष्टयस्य परस्परं वैलक्षण्येऽपि एकैकषट्के कथं वैलक्षण्यं ज्ञातव्यमित्यत आह– **क्रमेति ॥** क्रमश्च व्युत्क्रमश्च पद्मादिश्च पद्ममादितः कृत्वा क्रमश्च क्रमव्युत्क्रमपद्मादयः । **गदादिव्युत्क्रमः** गदामरभ्य व्युत्क्रमः । क्रमव्युत्क्रमपद्मादिभिः सहितश्चासौ गदादिव्युत्क्रमश्चेति मध्यमपदलोपीसमासः । यद्वा **पद्मादिगदादिव्युत्क्रमः** इत्यस्य पद्मादिव्युत्क्रमः गदादिव्युत्क्रम इत्यर्थः । **अर्धक्रमः** पूर्वद्वयस्य क्रमः परिशेषादुत्तरद्वयस्य व्युत्क्रम इत्यर्थः । चक्रादित्रिषु अर्ध इत्यस्यासम्भवात् । शङ्खसहितानां चक्रगादापद्मानां चतुर्णां मध्ये इति ज्ञेयम् ।

तत्रापि शङ्खस्य नियतत्वेन पूर्वद्वयस्य व्युत्क्रमायोगात् क्रम एवेति ज्ञेयम् । सान्तरः अन्तरत्वेन मध्यत्वेन सहितः क्रमः **सान्तरक्रमः** मध्यमक्रम इत्यर्थः । त्रिषु मध्यक्रम इत्यस्याप्यसम्भवात् । चतुर्णां मध्य इत्यङ्गीकर्तव्यम् । एते षट्प्रकाराः **षट्सु षट्सु** केशवादिषट्कचतुष्टये **अरिपूर्विणां** अरिः चक्रं पूर्वो येषां चक्रगदापद्मानां ते अरिपूर्विणः तद्गुणसंविज्ञानो बहुव्रीहिः । तेषामायुधानां ज्ञेया इत्यर्थः । शङ्खस्य नियतस्थानत्वेन व्यत्यासाभावात् **अरिपूर्विणा**मित्युक्तम् । तथाच चक्रगदापद्मानीति क्रमः । पद्मगदाचक्राणीति व्युत्क्रमः । पद्मचक्रगदा इति पद्मादिक्रमः । पद्मस्यादित्वे सति चक्रगदयोः क्रमस्यैव स्थितत्वत् । अयमेव पद्मादिव्युत्क्रमश्च चक्रगदानन्तरभाविनः पद्मस्य तत आदित्वेन स्थितत्वात् । गदाचक्रपद्मानीति गदादित्युत्कमः । चक्रगदयोः व्युत्क्रमेण स्थितत्वात् । चक्रपद्मगदा इत्यर्धक्रमः । शङ्खेन सह चक्रस्यार्धक्रमः । परिशेषात् गदापद्मयोः व्युत्क्रम इत्युक्तं भवति । गदापद्मचक्राणीति सान्तरक्रमः । अयमपि शङ्खसाहित्येनैव ज्ञेयः । चक्रस्यान्तत्वे शङ्खचक्रमध्यस्थयोर्गदापद्मयोः क्रमेणैव स्थितत्वात् । इत्येवं चक्राद्यायुधानां क्रमादिषट्प्रकारैः प्रतिषट्कं षण्णां मूर्तीनां वैलक्षण्यं ज्ञेयम् ।

अत्रायं विवेकप्रकारः । केशवस्य दक्षिणोर्ध्वकरे शङ्खः । वामोच्चकरे चक्रम् । वामाधःकरे गदा । दक्षाधःकरे पद्ममिति क्रमः ॥१॥ मधुसूदनस्य दक्षोर्ध्वकरे शङ्खः । वामोच्चकरे पद्मम् । वामाधःकरे गदा । दक्षाधःकरे चक्रमिति व्युत्क्रमः ॥२॥ संकर्षणस्य दक्षोर्ध्वकरे शङ्खः । वामोच्चकरे पद्मम् । वामाधःकरे चक्रम् । दक्षाधःकरे गदेति पद्मादिक्रमः ॥३॥ दामोदरस्य दक्षोर्ध्वकरे शङ्खः । वामोर्ध्वकरे गदा । वामाधःकरे चक्रम् । दक्षाधःकरे पद्ममिति गदादिव्युत्क्रमः ॥४॥ वासुदेवस्य दक्षोर्ध्वकरे शङ्खः । वामोर्ध्वकरे चक्रम् । वामाधःकरे पद्मम् । दक्षाधःकरे गदेत्यर्धक्रमः ॥५॥ प्रद्युम्नस्य दक्षोर्ध्वकरे शङ्खः । वामोर्ध्वकरे गदा । वामाधःकरे पद्मम् । दक्षाधःकरे चक्रमिति सान्तरक्रमः इति दक्षोर्ध्वकरशङ्खिनां केशवादीनां षण्णां मूर्तीनां परस्परं वैलक्षण्यं ज्ञेयम् । एवमेवोत्तरत्र प्रतिषट्कं क्रमादयो ज्ञेयाः ॥६॥

विष्णोर्वामोर्ध्वकरे शङ्खः । वामाधःकरे चक्रम् । दक्षाधःकरे गदा । दक्षोर्ध्वकरे पद्मम् ।।१।। माधवस्य वामोर्ध्वकरे शङ्खः । वामाधःकरे पद्मम् । दक्षाधःकरे गदा । दक्षोर्ध्वकरे चक्रम् ।।२।। अनिरुद्धस्य वामोर्ध्वकरे शङ्खः । वामाधःकरे पद्मम् । दक्षाधःकरे चक्रम् । दक्षोर्ध्वकरे गदा ।।३।। परुषोत्तमस्य वामोर्ध्वकरे शङ्खः । वामाधःकरे गदा दक्षाधःकरे चक्रम् । दक्षोर्ध्वकरे पद्मम् ।।४।। अधोक्षजस्य वामोर्ध्वकरे शङ्खः । वामाधःकरे चक्रम् । दक्षाधःकरे पद्मम् । दक्षोर्ध्वकरे गदा ।।५।। जनार्दनस्य वामोर्ध्वकरे शङ्खः । वामाधकरे गदा । दक्षाधःकरे पद्मम् । दक्षोर्ध्वकरे चक्रम् इति वामोर्ध्वकरशङ्खिनां विष्ण्वादीनां षण्णां मूर्तीनां परस्परं वैलक्षण्यं ज्ञेयम् ।।६।।

गोविन्दस्य वामाधःकरे शङ्खः । दक्षाधःकरे चक्रम् । दक्षोच्चकरे गदा । वामोच्चकरे पद्मम् ।।१।। त्रिविक्रमस्य वामाधःकरे शङ्खः । दक्षाधःकरे पद्मम् । दक्षोच्चकरे गदा । वामोच्चकरे चक्रम् ।।२।। श्रीधरस्य वामाधःकरे शङ्खः । दक्षाधःकरे पद्मम् । दक्षोर्ध्वकरे चक्रम् । वामाधःकरे गदा ।।३।। हृषीकेशस्य वामाधःकरे शङ्खः । दक्षाधःकरे गदा । दक्षोर्ध्वकरे चक्रम् । वामोच्चकरे पद्मम् ।।४।। नृसिंहस्य वामाधःकरे शङ्खः । दक्षाधःकरे चक्रम् । दक्षोर्ध्वकरे पद्मम् । वामोर्ध्वकरे गदा ।।५।। अच्युतस्य वामाधःकरे शङ्खः । दक्षाधःकरे गदा । दक्षोर्ध्वकरे पद्मम् । वामोच्चकरे चक्रम् इति वामाधः करशङ्खिनां गोविन्दादीनां षण्णां मूर्तीनां परस्परं वैलक्षण्यं ज्ञेयम् ।।६।।

वामनस्य दक्षाधःकरे शङ्खः । दक्षोच्चकरे चक्रम् । वामोच्चकरे गदा । वामाधःकरे पद्मम् ।।१।। नारायणस्य दक्षाधःकरे शङ्खः । दक्षोच्चकरे पद्मम् । वामोच्चकरे गदा । वामाधःकरे चक्रम् ।।२।। पद्मनाभस्य दक्षाधःकरे शङ्खः । दक्षोर्ध्वकरे पद्मम् । वामोच्चकरे चक्रम् । वामाधःकरे गदा ।।३।। उपेन्द्रस्य दक्षाधःकरे शङ्खः । दक्षोर्ध्वकरे गदा । वामोच्चकरे चक्रम् । वामाधःकरे पद्मम् ।।४।। हरेर्दक्षाधःकरे शङ्खः । दक्षोर्ध्वकरे चक्रम् । वामोच्चकरे पद्मम् । वामाधःकरे गदा ।।५।। कृष्णस्य दक्षाधःकरे शङ्खः । दक्षोर्ध्वकरे गदा । वामोच्चकरे पद्मम् । वामाधःकरे चक्रम् इति

क्षिाधःकरशङ्खिनां वामनादीनां षण्णां मूर्तीनां परस्परं वैलक्षण्यं द्रष्टव्यमिति ।।२८।।

ननु 'वर्णास्तारार्णभेदिताः (१.५) । 'तद्रूपभेदाः पञ्चाशन्मूर्तयो मम चापराः' (१.५) इत्यत्र वर्णैः पञ्चशद्वर्णानां तत्प्रतिपाद्यदेवताभिः वर्णदेवतानां क्रमेण व्यक्तिरित्युक्तम् । तन्न सम्भवति । व्याप्तत्वाद्देशिकक्रमायोगात् । नित्यत्वाच्च कालिकक्रमायोगात् । क्रमान्तरस्याप्रामाणिकत्वादित्याशङ्कां सिंहावलोकन-न्यायेन परिहरति– **वर्णानामिति ।।** यद्यपि वर्णानां देवतानां च नित्यत्वात् व्याप्तत्वाच्च **स्वतः** स्वाभाविकः दैशिकः कालिको वा क्रमो नास्ति । तथाऽपि ब्रह्मबुद्धौ वर्णानां देवतानां च **व्यक्तिक्रमं** विषयीकरणक्रममपेक्ष्य क्रम उच्यते । ब्रह्मबुद्ध्या यद्वर्णादिकं प्रथमतो विषयीकृतं तत्प्रथमं यत्तदनन्तरमुपलब्धं तद्द्वितीयमित्येवं व्यक्तिक्रमापेक्षया वर्णानां देवतानां च क्रम इत्यर्थः ।।२९।।

एवं सर्वमन्त्राणां ऋषिदेवते उक्त्वा ततः प्रणवाष्टाक्षरयोः च्छन्दोदेवताध्यानम् । ततः पञ्चाशद्वर्णदेवताध्यानं ततो व्याहृतिचतुष्टयदेवताध्यानं ततो गायत्रीवर्णदेवतालक्षणं चेत्यादिसर्वक्रमविवक्षां विहाय स्वेच्छयैवाभिधायेदानीं जप्यानां प्रणवाद्यष्टमन्त्राणां येन क्रमेणाङ्गन्यास उच्यते स एव क्रमो जपानुष्ठाने ज्ञेय इति ज्ञापयितुमेवोत्पत्तिक्रमं विहाय

प्रणवोऽष्टौ व्याहृतयो द्विषट् सावित्रमातृकाः ।
पौरुषं वैष्णवं चेति जपे क्रम उदाहृतः ।।

इति सङ्ग्रहवचनोक्तक्रमेण 'न्यासहीने हरेदायुः' इत्युक्तेर्न्यासस्य जपार्थत्वात् प्रणवादीनां मन्त्राणां न्यासं वक्तुं प्रणवमन्त्रस्य तावत् पञ्चाङ्गन्यासमाह– **समासेति । समासः** सामस्त्यं **व्यासः** विभागः पार्थक्यमिति यावत् तल्लक्षणोपायेनेत्यर्थः । तथा च 'भूर्भुवःस्वः' इति व्याहृतित्रयं मिलित्वा एका व्याहृतिः । 'भूः, भुवः, स्वः,' इति पृथक् पृथक् तिस्रो व्याहृतय एवं व्याहृतीनां चतुष्टयम् । **सत्यश्च** सत्यमित्येतत्पदं चेत्येतानि पञ्चपदानि **तारस्य** प्रणवस्य **अङ्गानि** हृदयादिपञ्चाङ्गेषु न्यासमन्त्रा इति प्रोच्यन्ते इत्यर्थः । अङ्गान्युक्तानि योगादीपिकायाम्–

अङ्गन्यासेऽङ्गमन्त्रेभ्यः परमाङ्गानि निर्दिशेत् ।
हृदयं शिरोऽपि तु शिखा कवचास्त्राणि तानि च ।।
सोद्देशानि नमः स्वाहा वौषट् हुं फट् पराणि च ।
षडङ्गानि तु नेत्राभ्यां वषडित्यस्त्रतः पुरा ।
न्यासस्थानानि विज्ञेयान्यङ्गानि हृदयादितः ।। इति । (६६-६८)

ॐभूः अनिरुद्धाय हृदयाय नमः । ॐ भुवः प्रद्युम्नाय शिरसे स्वाहा । ॐ स्वः सङ्कर्षणाय शिखायै वौषट् । ॐ भूर्भुवः स्वः वासुदेवाय कवचाय हुम् । ॐ सत्यं नारायणायास्त्राय फट् इत्येवंप्रकारेण पञ्चाङ्गन्यासो ज्ञेयः । भूः हृदयाय नमः इत्याद्येव मून्त्रः । अन्यत्तु देवताध्यानार्थमिति ज्ञेयमित्याहुः ।

**गु.दी.**– इदानीं गायत्र्यक्षरमूर्तीनां केशवादीनां चक्रादिभिरायुधचतुष्टयैरेव विशेषलक्षणानि निरूपयति— **केशव इत्यादिना ।।** केशवाद्याः षट् दक्षोच्चकरे शङ्खयुक्ताः । विष्ण्वाद्याः षट् वामोच्चकरशङ्खिनः । गोविन्दाद्याः वामाधःकरशङ्खिनः । वामनाद्याः दक्षाधःकरशङ्खिनः । नन्वेतेन शङ्खमात्रधारिणः एकभुजाश्चतुर्भुजत्वेऽप्यन्येषु निरायुधा इति प्रतीयते । तथा षण्णां षण्णां परस्परं भेदेऽपि तेषु तेष्वपि कथमवान्तरभेद इति न प्रतीयते । अत आह– **शङ्खेति ।।** एते केशवादयः **सर्वशः** सर्वेऽपि शङ्खचक्रगदापद्मधराः । **क्रमेति ।।** एतेषु केशवादिषु षट्सु षट्सु **अरिपूर्विणां** चक्रगदापद्मानां क्रमः व्युत्क्रमः । **पद्मादिक्रमः** पद्ममारभ्य क्रमः । एतैः सहितः **गदादिव्युत्क्रमः** गदामारभ्य व्युत्क्रमः । गदाया आदित्वेन व्युत्क्रम इति यावत् । अर्धक्रमः सान्तरः चशब्दात् क्रम इति बुद्ध्या विवेकेनानुवर्तते । तस्य विशेषणमेतत् । अन्तरेण व्यवधानेन सहितः क्रमः । शङ्खश्चक्रमिति क्रमो गदापद्माभ्यां व्यवहित इत्यर्थः । शङ्खस्योक्तस्थानेष्वेव नियतत्वारिपूर्विणामित्युक्तम् । एते षट् प्रकाराः क्रमात् ज्ञातव्याः । चक्रगदापद्मानीति क्रमः । पद्मगदाचक्राणीति व्युत्क्रमः । पद्मं चक्रं गदेति पद्मादिक्रमः । पद्मगदाचक्राणीति करणे व्युत्क्रमत्वमेव स्यात् । न तु सान्तरत्वम् । तथा च सङ्गृह्याहुः—

शाचगोपी शपोगीच शपश्चाङ्गं शगश्चपम् ।
शचपङ्गं शगम्यश्च दक्षिणोर्ध्वकरक्रमात् ।।

केमसंदावसुवासुप्रद्युविमानीपुर्वधोजनाः ।
गोत्रिश्रीहृनृसिंहाच्युवानापोपेहकृक्रमात् ।। इति ।

केशवादि चतुर्विंशतिमूर्तिध्यानं वादिराजयतिकृते चतुर्विंशतिमूर्तिस्तोत्रे चानेनैव प्रकारेणोक्तम्—

अधरं दक्षिणं हस्तमारभ्यैव प्रदिक्षणम् ।
मूर्तिभेदान् हरेर्वक्ष्ये भवबन्धविमुक्तये ।।

श्रीमत्पङ्कजशङ्खचक्रगदया सम्भूषिते केशवे
शङ्खाम्भोजगदासुदर्शनधरे नारायणे सर्वदा ।
भक्तिर्मेऽस्तु गदारिशङ्खजलजैर्युक्ते दृढा माधवे
गोविन्दे वरचक्रधारिणि गदाफुल्लाब्जशङ्खान्विते ।। १ ।।

कौमोदक्यरविन्दशङ्खविदधचक्रं च विष्णुर्मुदा
चक्राङ्को मधुसूदनो दधदसौ शङ्खाब्जकौमोदकीः ।
नित्यं पद्मगदारिशङ्खसहितश्चित्ते मम त्रिक्रमो
युक्तस्तिष्ठतु शङ्खचक्रगदया पद्मी सदा वामनः ।। २ ।।

वन्दे श्रीधरमब्जचक्रगदया शङ्खेन चालङ्कृतं
नित्यं पाहि गदारिपङ्कजदरान् बिभ्रद्धृषीकेश माम् ।
शङ्खाब्जारिगदाधराद्य कुरु मे श्रीपद्मनाभाभयं
श्रीदामोदरमब्जशङ्खगदिनं सारिं प्रपन्नोऽस्म्यहम् ।। ३ ।।

कौमोदक्युरुशङ्खपद्मसदरिः सङ्कर्षणः शर्मदो
भूयात्सोऽप्ययगदादरारिकमली श्रीवासुदेवोऽस्तु मे ।
प्रद्युम्नश्च रथाङ्गकम्बुगदया युक्तोऽब्जपाणिर्मुदे
चक्री चारुगदी सशङ्खकमलो देवोऽनिरुद्धोऽस्तु मे ।। ४ ।।

देवेशः पुरुषोत्तमोऽरिकमलः शङ्खी गदी चिद्वपु-
र्बिभ्रत्पद्मगदोरुशङ्खमरिणा साकं सदाऽधोक्षजः ।
चक्राम्भोजगदादराङ्कितचतुर्बाहुर्नृसिंहः सुखम्
दद्यादद्य ममाच्युतः पृथुगदापद्मारिशङ्खी परः ।। ५ ।।

साब्जारिः स जनार्दनोऽस्तु सदयः शङ्खी गदी मे सदा
मूर्ध्नोपेन्द्रमहं नतोऽस्मि सदरं युक्तं गदार्यम्बुजैः ।
वन्दे शङ्खसुदर्शनाम्बुजगदापाणिं हरिं मुक्तये
कृष्णं शङ्खगदाब्जचक्रिणमलं भक्त्या समभ्यर्चये ।। ६ ।। इति।।२५-२९।।

ननु प्रणवाद्या मन्त्राः क्रमेणोक्ताः, अग्रे च क्रमेण वक्ष्यन्ते। वर्णसमुदायात्मका हि मन्त्राः । तेषु च कालिको आनन्तर्यरूपो दैशिकश्च क्रमो न युक्तः नित्यत्वात् व्याप्तत्वाच्च । एवं तद्वाच्यभगवन्मूर्तीनामपि । तथा च 'वर्णास्तारार्णभेदिताः' (तं.सा.१-५) 'नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान्' (तं.सा.१-११) 'तद्रूपभेदाः पञ्चाशन्मूर्तयः' (तं.सा.१-५) इत्यादिना क्रमोक्तिरयुक्तेत्याशङ्क्य समाधत्ते— **वर्णानामिति ।।** यद्यपि तथापीत्यध्याहार्यम् । नित्यत्वादित्युपलक्षणम् । व्याप्तत्वाच्चेत्यपि द्रष्टव्यम् । अन्यथा दैशिकक्रमाशङ्का स्यात् । यथोक्तं तत्त्वनिर्णयटीकायां– 'वर्णास्तावन्नित्यत्वात्सर्वगतत्त्वाच्च स्वतः क्रमशून्याः' इति । 'ब्रह्मबुद्धौ' इत्यधिकरणसप्तमीबलात् स्थितमिति लभ्यते । क्रमपदस्य बुद्ध्या विविक्तस्य तेन सम्वन्धः । **नित्यत्वात्** अनादिनित्यत्वादित्यर्थः । अन्यथोत्पत्तौ क्रमशङ्का स्यात् । तथा च यद्यपि वर्णानां नित्यत्वाद्व्याप्तत्वाच्च **स्वतः** स्वभावतः **क्रमः** कालिको दैशिको वा नास्ति । तथापि सर्वमन्त्राणां ब्रह्मा ऋषिरतः स एव द्रष्टा । स चैकानन्तरमपरं मन्त्रं दृष्टवान् । अतो मन्त्राणां ब्रह्मबुद्धौ यत्प्रथममभिव्यक्तं तदेव प्रथमं, यत् तदनु तद्द्वितीयमिति बुद्धिक्रमजन्यो मन्त्रवर्णेषु परापरब्रह्मबुद्धौ व्यक्तीभावक्रममपेक्ष्यैव मन्त्रेष्वपि क्रम उच्यते, विष्णूदिते तन्त्रसारेऽपि कथ्यत इत्यस्माभिरपि तथैव क्रमो मन्त्रेषूच्यत इत्यर्थः । तथा च ब्रह्मबुद्धौ कश्चन क्रमस्तद्धर्मभूतोऽस्तीत्याशयः । तथा च मन्त्रेष्विव

शाचगोपी शपोगीच शपश्चाङ्गं शगश्चपम् ।
शचपङ्गं शगम्यश्च दक्षिणोर्ध्वकरक्रमात् ।।

केमसंदावसुवासुप्रद्युविमानीपुर्वधोजनाः ।
गोत्रिश्रीहृनृसिंहाच्युवानापोपेहकृक्रमात् ।। इति ।

केशवादि चतुर्विंशतिमूर्तिध्यानं वादिराजयतिकृते चतुर्विंशतिमूर्तिस्तोत्रे चानेनैव प्रकारेणोक्तम्—

अधरं दक्षिणं हस्तमारभ्यैव प्रदिक्षणम् ।
मूर्तिभेदान् हरेर्वक्ष्ये भवबन्धविमुक्तये ।।

श्रीमत्पङ्कजशङ्खचक्रगदया सम्भूषिते केशवे
शङ्खाम्भोजगदासुदर्शनधरे नारायणे सर्वदा ।
भक्तिर्मेऽस्तु गदारिशङ्खजलजैर्युक्ते दृढा माधवे
गोविन्दे वरचक्रधारिणि गदाफुल्लाब्जशङ्खान्विते ।। १ ।।

कौमोदक्यरविन्दशङ्खविदधचक्रं च विष्णुर्मुदा
चक्राङ्को मधुसूदनो दधदसौ शङ्खाब्जकौमोदकीः ।
नित्यं पद्मगदारिशङ्खसहितश्चित्ते मम त्रिक्रमो
युक्तस्तिष्ठतु शङ्खचक्रगदया पद्मी सदा वामनः ।। २ ।।

वन्दे श्रीधरमब्जचक्रगदया शङ्खेन चालङ्कृतं
नित्यं पाहि गदारिपङ्कजदरान् बिभ्रद्धृषीकेश माम् ।
शङ्खाब्जारिगदाधराद्य कुरु मे श्रीपद्मनाभाभयं
श्रीदामोदरमब्जशङ्खगदिनं सारिं प्रपन्नोऽस्म्यहम् ।। ३ ।।

कौमोदक्युरुशङ्खपद्मसदरिः सङ्कर्षणः शर्मदो
भूयात्सोऽप्ययगदादरारिकमली श्रीवासुदेवोऽस्तु मे ।
प्रद्युम्नश्च रथाङ्गकम्बुगदया युक्तोऽब्जपाणिर्मुदे
चक्री चारुगदी सशङ्खकमलो देवोऽनिरुद्धोऽस्तु मे ।। ४ ।।

देवेशः पुरुषोत्तमोऽरिकमलः शङ्खी गदी चिद्वपु-
र्बिभ्रत्पद्मगदोरुशङ्खमरिणा साकं सदाऽधोक्षजः ।
चक्राम्भोजगदादराङ्कितचतुर्बाहुर्नृसिंहः सुखम्
दद्यादद्य ममाच्युतः पृथुगदापद्मारिशङ्खी परः ।। ५ ।।

साब्जारिः स जनार्दनोऽस्तु सदयः शङ्खी गदी मे सदा
मूर्ध्नोपेन्द्रमहं नतोऽस्मि सदरं युक्तं गदार्यम्बुजैः ।
वन्दे शङ्खसुदर्शनाम्बुजगदापाणिं हरिं मुक्तये
कृष्णं शङ्खगदाब्जचक्रिणमलं भक्त्या समभ्यर्चये ।। ६ ।। इति।।२५-२९।।

ननु प्रणवाद्या मन्त्राः क्रमेणोक्ताः, अग्रे च क्रमेण वक्ष्यन्ते। वर्णसमुदायात्मका हि मन्त्राः । तेषु च कालिको आनन्तर्यरूपो दैशिकश्च क्रमो न युक्तः नित्यत्वात् व्याप्तत्वाच्च । एवं तद्वाच्यभगवन्मूर्तीनामपि । तथा च 'वर्णास्तारार्णभेदिताः' (तं.सा.१-५) 'नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान्' (तं.सा.१-११) 'तद्रूपभेदाः पञ्चाशन्मूर्तयः' (तं.सा.१-५) इत्यादिना क्रमोक्तिरयुक्तेत्याशङ्क्य समाधत्ते— **वर्णानामिति ।।** यद्यपि तथापीत्यध्याहार्यम् । नित्यत्वादित्युपलक्षणम् । व्याप्तत्वाच्चेत्यपि द्रष्टव्यम् । अन्यथा दैशिकक्रमाशङ्का स्यात् । यथोक्तं तत्त्वनिर्णयटीकायां– 'वर्णास्तावन्नित्यत्वात्सर्वगतत्त्वाच्च स्वतः क्रमशून्याः' इति । 'ब्रह्मबुद्धौ' इत्यधिकरणसप्तमीबलात् स्थितमिति लभ्यते। क्रमपदस्य बुद्ध्या विविक्तस्य तेन सम्बन्धः । **नित्यत्वात्** अनादिनित्यत्वादित्यर्थः । अन्यथोत्पत्तौ क्रमशङ्का स्यात् । तथा च यद्यपि वर्णानां नित्यत्वाद्व्याप्तत्वाच्च **स्वतः** स्वभावतः **क्रमः** कालिको दैशिको वा नास्ति । तथापि सर्वमन्त्राणां ब्रह्मा ऋषिरतः स एव द्रष्टा । स चैकानन्तरमपरं मन्त्रं दृष्टवान् । अतो मन्त्राणां ब्रह्मबुद्धौ यत्प्रथममभिव्यक्तं तदेव प्रथमं, यत् तदनु तद्द्वितीयमिति बुद्धिक्रमजन्यो मन्त्रवर्णेषु परापरब्रह्मबुद्धौ व्यक्तीभावक्रममपेक्ष्यैव मन्त्रेष्वपि क्रम उच्यते, विष्णूदिते तन्त्रसारेऽपि कथ्यत इत्यस्माभिरपि तथैव क्रमो मन्त्रेषूच्यत इत्यर्थः । तथा च ब्रह्मबुद्धौ कश्चन क्रमस्तद्धर्मभूतोऽस्तीत्याशयः । तथा च मन्त्रेष्विव

वेदेष्वपि पूर्वं विद्यमानमेव जीवानां योग्यतातारतम्यक्रमवद्देशकालाद्युपाधिरहितं स्वाभाविकं क्रमं ब्रह्मबुद्धिर्विषयीकरोतीति वा वियत्पादीयसुधानुसारेणानियतविशिष्टानुपूर्वीकाणामपि वैदिकवर्णानामर्थावबोधनशक्त्याविर्भावो वा व्यक्तिरिति नित्यक्रमवत्पदसन्दर्भात्मकत्वमेव वाच्यमिति प्रतिभाति। तथा **देवतानां** शक्तिरूपतया स्थितानां भगवद्रूपाणामैश्वर्यकृतं **व्यक्तिक्रमं** लोकव्यक्तिक्रममपेक्ष्य क्रम उच्यत इत्यर्थः ।

ननु 'तद्रूपभेदाः' (तं.सा.१-५) इति वाक्यानन्तरं 'वर्णास्तारार्णभेदिताः' (तं.सा.१-५) इति वाक्यम् । अतस्तदनुसारेण प्रधानत्वाच्च 'देवतानां वर्णानाम्' इति वक्तव्ये 'वर्णानां देवतानाम्' इति कथमुक्तमिति चेत्सत्यं, वर्णानां क्रम उक्तरीत्या ब्रह्मबुद्धौ व्यक्तिक्रममपेक्ष्य घटते । देवतानां न तद्वत्क्रमो घटते, तस्य भेदव्याप्तत्वात्। भेदस्य चेश्वररूपेष्वसम्भवात्। अतोऽचिन्त्यैश्वर्यघटितविशेषकृत एव क्रमो न वर्णक्रमवदिति ज्ञापनाय प्रथमं वक्तव्यमपि देवतानामित्येतत्पश्चादुक्तम्। केचित्तु व्यक्तिक्रममित्यस्येत्थमाशयं वर्णयन्ति ।

तत्तद्वर्णादिविषयकबुद्धिक्रम एव वर्णपदादिक्रमः। नातिरिक्तोऽस्ति। न च वर्णक्रमस्य श्रावणतयाऽनुभूयमानत्वाद्बुद्धिगतक्रमस्य श्रावणत्वासम्भवः। बुद्धेः साक्षिवेद्यत्वेन साक्ष्युपनीतस्यैव तस्य वर्णेषु श्रोत्रेण भानाङ्गीकारादित्याशयेनाह— **व्यक्तिक्रममिति** ।। ब्रह्मबुद्धौ व्यक्तिक्रममपेक्ष्य वर्णसमुदायात्मके मन्त्रे क्रम उच्यत इति। तेषां 'क्रमस्तु वर्णधर्मः' इति सुधाविरोधः स्पष्टः ।।

एतेषां मन्त्राणामाद्यस्य प्रणवमन्त्रस्याङ्गन्यासमाह— **समासेति** ।। 'भूर्भुवःसुवः' इति प्रत्येकमुच्चारणं, **समासः** सङ्कोचः मिलितास्तिस्रो **व्यासः** विस्तारस्तेषां **योगः** सम्बन्धस्तेनाङ्गचतुष्टयं सत्यमित्येकमिति प्रणवस्य पञ्चाङ्गानि **प्रोच्यन्ते** अङ्गन्यासमन्त्रा इति प्रोच्यन्ते इति यावत्। चशब्दादेतैरेवाङ्गुलिन्यासोऽपि कार्य इति समुच्चिनोति। तदुक्तं 'अङ्गुलीषु च विन्यस्येदङ्गमन्त्रेण वै क्रमात्' इति। अत्र 'ॐ ॐ ॐ' इत्याद्यन्तोङ्कारसाहित्येन प्रणवजपः कार्य इति सम्प्रदायविदः। मन्त्रार्थस्तु देशतः कालतः गुणतः ओतत्वादोम् । सर्वस्वामित्वेन

सर्वत्र प्रविष्टत्वादोम् । सर्वभिन्नत्वान्निर्दोषत्वादः । सर्वोत्कृष्टत्वादुः । सर्ववेदादिमेयत्वात् ज्ञानरूपत्वाद्वा म इति वर्णत्रयात्मकोङ्कारार्थो ज्ञेयः ।।

अस्मिन्प्रणवमन्त्रे यतीनामेवाधिकारो नेतरेषाम् । 'प्रणवो यतिनामेव गृहिभिर्ज्ञायते न सः' इति वाराहवचनात् । 'जपाधिकारी यतिरस्य सूचितः' (म.वि.४-३२) इति नारायणपण्डिताचार्यवचनाच्च ।

अत्र केचित् । गृहस्थस्य प्रणवनिषेधः पुनश्चरणे द्वादशसहस्राधिकजपे च । न पुनर्मन्त्रमात्रे ।

गृहस्थाद्यास्तथा शुद्धाः पौनश्चरणिकं विना ।
नित्यमेव जपं कुर्युः प्रणवस्य विधिं शृणु ।।

इति शौनकवचनादिति । अत एव मध्वविजयवाक्यस्य सुष्ठु उचितः पुनश्चरणे द्वादशाधिकजपे चोचित इत्यर्थः ।

अपरे तु मन्यन्ते। प्रणवस्य स्वरूपेण साम्येऽपि ध्येयदेवताभेदेन भिन्नत्वम् । यथा रामषडक्षरस्य रामयोर्ध्यानभेदेन भिन्नत्वम् । यथा वा ऋषिभेदेन गायत्र्याः । तथा चैकादशतात्पर्ये प्रणवमाहात्म्येऽनेकत्वं प्रणवमन्त्रस्योक्तम्–

त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः ।
प्रणवास्ते विभेदेन ह्यनन्ताः परिकीर्तिताः ।। इति । (भा.ता.११-२१-४१)

तस्मात् तन्त्रसारोक्ते सर्वस्याप्यधिकारः । प्रणवकल्पोक्ते यतेरेवाधिकारः । तत एवानन्तमात्रान्तमित्यत्र पण्डिताचार्यैः प्रणवोच्चयमिति विशेषितः प्रणवः । अत एव वराहवचने प्रणवः प्रणवविशेष इत्यर्थ इति ।।२५-३१।।

**मङ्गाली–** गायत्र्याः 'चतुर्विंशन्मूर्तयोऽस्याः कथिताः वर्णदेवताः'(तं.सा.१-५) इति चतुर्विंशतिवर्णदेवता उक्ताः । कास्ताः किं च तासां लक्षणमित्यत आह— **केशव इत्यादिना** । दरः शङ्खः । केशवाद्याः षट् दक्षोच्चकरेषु शङ्खयुताः । विष्ण्वाद्याः षट् वामोच्चकरशङ्खिनः । गोविन्दाद्याः षट् वामाधःकरशङ्खिनः । वामनाद्याः षट् दक्षाधःकरशङ्खिनः । अनेन शङ्खमात्रधारिणः एकभुजाः चतुर्भुजत्वेऽपि अन्यकरेषु निरायुधा इति भाति । अत आह– **शङ्खेति** ।। **सर्वशः**

समस्ता चतुर्विंशन्मूर्तयः शङ्खचक्रगदापद्मयुताः चतुर्भुजाश्चेत्यर्थः । शङ्खमात्रश्चादौ पृथङ्निर्देशः । पूर्वोक्तिः हस्तेष्वेव शङ्खनियमार्थः । शङ्खचक्रगदापद्मेत्येवं प्रकारेण निर्देशस्तु आयुधानां क्रमाज्ञाने वक्ष्यमाणव्युक्रमादेर्ज्ञातुमशक्यत्वात् क्रमप्रदर्शनार्थः ॥

नन्वेवं षट्कचतुष्टयस्य परस्परं वैलक्ष्यण्येऽपि एकैकषट्के कथं वैलक्षण्यं ज्ञातव्यमित्यत आह— **क्रमेति** ॥ क्रमश्च व्युत्क्रमश्च पद्मादिश्च पद्ममादितः कृत्वा क्रमश्च । क्रमव्युत्क्रमपद्मादयः । गदादिव्युक्रमः । गदामारभ्य व्युत्क्रमः । क्रमव्युत्क्रमपद्मादिभिः सहितश्चासौ गदादिव्युत्क्रमश्चेति मध्यमपदलोपी समासः । यद्वा पद्मादिगदादिव्युत्क्रम इत्यस्य पद्मादिव्युत्क्रमः गदादिव्युत्क्रम इत्यर्थः । पद्मादिश्चासौ गदादिश्चासौ व्युत्क्रमः पद्मादिगदादिव्युत्क्रमः । क्रमश्च व्युत्क्रमश्च क्रमव्युत्क्रमो ताभ्यां सहितश्चासौ पद्मादिगदादिव्युत्क्रमश्चेत्यत्र समासः । **अर्धक्रमः** पूर्वद्वयस्य क्रमः । परिशेषादुत्तरद्वयस्य व्युत्क्रम इत्यर्थः । चक्रादिषु अर्ध इत्यस्यासम्भवात् । शङ्खसहितानां चक्रगदापद्मानां चतुर्णां मध्य इति ज्ञेयम् । तत्रापि शङ्खस्य नियतस्थानत्वेन पूर्वद्वयस्य व्युत्क्रमायोगात् क्रम एवेति ज्ञेयं । **सान्तर** इत्यत्रान्तरशब्दो भावप्रधानः । अन्तरत्वेन मध्यत्वेन सहितः सान्तरः । बुद्ध्या विवेकेनानुवर्तिस्य क्रमपदस्य विशेषणमेतत् । मध्यक्रम इत्यर्थः । त्रिषु मध्य इत्यस्याप्यसम्भवात् । चतुर्णां मध्य इत्यङ्गीकर्तव्यम् । एते षट् प्रकाराः । **षट्सु षट्सु** केशवादिषट्कचतुष्टये । **अरिपूर्विणाम्** अरिचक्रम् पूर्वो यो चक्रगदापद्मानां तान्यरिपूर्वीणि । तद्गुणसंविज्ञानो बहुव्रीहिः । तेषामायुधानामित्यर्थः । अत एव महाभाष्ये 'अवयवेन विग्रहः समुदायः समासार्थः' इति अभिहितम् । अत एव निर्णयगताष्टाविंशेऽध्याये-

तदा जलात्समुन्मुज्य त्रिभिर्द्रौणिपुरस्सरैः ।
मन्त्रयंतस्मद्ददृशुः ॥(म.भा.ता.नि.३०-४६)

इत्यत्र द्रौणिः पुरस्सरो येषां इति तद्गुणसंविज्ञानो बहुव्रीहिः । 'अवयवेन विग्रहः समुदायः समासार्थः' इति महाभाष्योक्तेरिति प्रतिपादिनं जनार्दनभट्टैः । शङ्खस्य

नियतस्थानत्वेन व्यत्यासाभावात् **अरिपूर्विणामि**त्युक्तम् । न चात्र निर्व्यर्थ इति वाच्यम् । अत्र बहुव्रीहौ तस्य वैय्यर्थ्येऽपि नियतस्थानस्थि- तशङ्खाख्यः पूर्वो अस्यास्तीति पूर्वी । पूर्वी चासावरिश्चेति कर्मधारयस्याप्यत्रावृत्याऽभिप्रेतत्वेन तत्प्रयोगात् । न चात्र कर्मधारयविवक्षा नास्तीति वाच्यम्। त्रिषु अर्धक्रमादेरसम्भवेन शङ्खसाहित्येन सार्धक्रमादिरुपपद्यत इत्यर्थज्ञापनाय कर्मधारय विवक्षाया अवश्यकत्वात् । अन्यथा शङ्खसाहित्येनेत्यस्याशाब्दत्वापत्तेः। न च कर्मधारये पूर्वीत्यस्य पूर्वनिपातः स्यादिति वाच्यम् । कडारादित्वेन परनिपातोपपत्तेः । वहुव्रीहिविवक्षया परतः प्रयोगाच्च । 'उपलक्षणत्वं शव्दानामानन्दमयपूर्विणाम्' (अनु.१-१-१६०) इत्यनुव्याख्यानव्याख्यावसरे आनन्दमयः पूर्वि येषां ते आनन्दमयपूर्विण इति बहुव्रीहिकरणे इनेर्वैय्यर्थ्यभिया आनन्दमयश्चासौ पूर्वश्च आनन्दमयपूर्वः स एषामस्तीति कर्मधारयं विधायेनेः सार्थक्यं सुधायामभिहितम्। इनेर्वैय्यर्थ्यस्य सोढव्यत्वे बहुव्रीहिरेव कर्तुं शक्यत्वेन कर्मधारयप्रदर्शनपूर्वकं इ(न)त्यर्थकथनप्रयासासामञ्जस्यप्रसङ्गात् । न चात्रापि तथैव कुतो न व्याख्यायत इति वाच्यम् । अरिमतोर्गदापद्मयोर्द्वित्वेन बहुवचनायोगात् ।

यद्वा पूर्विशब्दान्तर्गतं पूर्वपदमात्रावर्त्तनीयम् । ततश्चारिपूर्विपूर्वाणामिति भवति । पूर्वि नियतस्थानस्थितशङ्खाख्यपूर्ववांश्चासावरिश्चेत्यरिपूर्वी, अरिपूर्वी शङ्खाख्यपूर्ववानरिः पूर्वो येषां तान्यरिपूर्वपूर्वाणि तेषां चक्रगदापद्मा-ख्यायुधानामिति तद्गुणसंविज्ञानो बहुव्रीहिः । अथवा अरिः पूर्वी पूर्वत्ववान् पूर्वो येषामिति वहुव्रीहिः ।

तथा च चक्रगदापद्मानीति क्रमः । पद्मगदाचक्राणीति व्युत्क्रमः । पद्मचक्रगदा इति पद्मादिक्रमः । पद्मस्य आदित्वे सति चक्रगदयोः क्रमस्यैव स्थितत्वात् । अयमेव पद्मादिव्युत्क्रमश्च । चक्रदानन्तरभाविनः पद्मस्य तत आदित्वेन स्थितत्वात् । शङ्खपद्मगदाचक्राणि इति करणेप्युक्रमत्वमेव स्यात् । गदाचक्रपद्मानीति गदादिव्युत्क्रमः । चक्रगदयोः व्युत्क्रमेण स्थितत्वात् । शङ्गगदापद्मचक्राणीति करणे सान्तरक्रमाभेदोपत्तेः । चक्रपद्मगदा इति अर्धक्रमः । शङ्खेन सह चक्रस्यार्धक्रमः परिशेषात् । गदापद्मयोः व्युत्क्रमः इत्युक्तं भवति ।

गदापद्मचक्राणीति सान्तरक्रमः। अयमपि शङ्खसाहित्येन ज्ञेयः। चक्रस्यान्तत्वे शङ्खचक्रमध्यस्थयोर्गदापद्मयोः क्रमेणैव स्थितत्वादित्येवं चक्राद्यायुधानां क्रमादि षट्प्रकारैः प्रतिषट्कं षण्णां मूर्तीनां वैलक्षण्यं ज्ञेयम्।

अयं भावः। तत्तच्छट्के नियतस्थानस्थितशङ्खमादितः कृत्वा अत्रोक्तक्रमादि-विवक्षापन्नान्यायुधानि तत्तन्मूर्तिषु क्रमेण प्रादक्षिण्येन योजनीयानि। तथा च केशवस्य दक्षोच्चकरे शङ्खः। वामाच्चकरे चक्रम्। वामाधःकरे गदा। दक्षाधःकरे पद्मम्।

मधुसूदनादेः सर्वस्यादिषट्के स्थिरस्य दक्षोच्चकरे शङ्खो ज्ञेयः। मधुसूदनस्य वामोच्चकरे पद्मम्। वामाधःकरे गदा। दक्षाधःकरे चक्रम्। सङ्कर्षणादवपि पद्मादिक्रमादिक्रमेण आयुधानि द्रष्टव्यानि।

द्वितीयषट्के विष्णोः वामोच्चकरे शङ्खः। वामाधःकरे चक्रम्। दक्षाधःकरे गदा। दक्षोच्चकरे पद्मम्।

माधवादिपञ्चसु व्युत्क्रमादिपञ्चकेनायुधक्रमो ज्ञेयः। तृतीयषट्के गोविन्दस्य वामाधःकरे शङ्खः। दक्षाधःकरे चक्रम्। दक्षोच्चकरे गदा। वामोच्चकरे पद्मम्।

त्रिविक्रमादिपञ्चसु व्युत्क्रमादिक्रमेणायुधक्रमो ज्ञेयः। चतुर्थषट्के वामनस्य दक्षाधःकरे शङ्खः। दक्षोच्चकरे चक्रम्। वामोच्चकरे गदा। वामाधःकरे पद्मम्। नारायणादिपञ्चकस्य व्युत्क्रमादिक्रमेणायुधक्रमो ज्ञेयः। **अत्र ग्रन्थःपात ॥**

'नानावर्णास्तारार्णभेदिताः' 'तद्रूपभेदाः पञ्चाशन्मूर्तयो मम चापराः' इति अत्र प्रणवाष्टवर्णैः पञ्चाशद्वर्णानां तत्प्रतिपाद्यदेवताभिर्वर्णदेवतानां क्रमेण व्यक्तिरित्युक्तम्। तन्न सम्भवति। व्याप्तत्वाद्देशिकस्थानादि नित्यत्वात्कालिकस्य च क्रमस्यायोगात्। क्रमान्तरस्य चाप्रामाणिकत्वादित्याशङ्क्य सिंहावलोकितन्यायेन परिहरति— **वर्णानामिति ॥** यद्यपि वर्णानां देवतानां च अनादिनित्यत्वा-द्व्याप्तत्वाच्च स्वतः स्वाभाविकः दैशिकः कालिको वा क्रमो नास्ति। तथापि **ब्रह्मबुद्धौ** परापरब्रह्मबुद्धौ वर्णानां देवतानां च **व्यक्तिक्रमं** विषयकरण क्रममपेक्ष्य क्रम उच्यते। ब्रह्मबुद्ध्या यद्वर्णादिकं प्रथमतो विषयीकृतं तत्प्रथमम्।

यत्तदनन्तरमुपलब्धं तत् द्वितीयमित्येवं व्यक्तिक्रमापेक्षया वर्णानां देवतानां च क्रम इत्यर्थः। केचित्तु 'तद्रूपभेदाः' इति वाक्यानन्तरं 'वर्णास्तारार्णभेदिताः' इति वाक्यमतस्तदनुसारेण प्रधानत्वाच्च देवतानां वर्णानामिति वक्तव्यमित्याशङ्क्य वर्णानां देवतानां च नैकरूपः क्रम इति ज्ञापनाय प्रथमतो वक्तव्यमपि देवतानामिति पश्चादुक्तम्। अत एव शङ्काक्रममपहाय पूर्वक्रमं प्राधान्यं चानुसृत्यैव प्रथमं देवताविषये समाधानं क्रियते। व्यक्तिक्रममपेक्ष्येति शक्तिरूपतया स्थितानां भगवद्रूपाणां अचिन्त्यैश्वर्यघटितविशेषकृतं व्यक्तिक्रममपेक्ष्य क्रम उच्यते। वर्णानां तु ब्रह्मबुद्धौ स्थितं क्रममपेक्ष्य क्रम उच्यत इति व्याचक्षते ॥

एवं सर्वमन्त्राणां ऋष्यादिकमभिधाय इदानीं जप्यानां प्रणवाद्यष्टमन्त्राणां येन क्रमेणाङ्गन्यास उच्यते स एव जपानुष्ठाने क्रम इति ज्ञापयितुमेवोत्पत्तिक्रमं विहाय

प्रणवोऽष्टौ व्याहृतयो द्विषट् सावित्रमातृकाः ।
पौरुषं वैष्णवं चेति जपे क्रम उदाहृतः ॥

इति वचनोक्तक्रमेण, 'न्यासहीने हरेदायुः'इत्युक्तेः न्यासस्य जपार्थत्वात् प्रणवमन्त्रस्य पञ्चाङ्गन्यासमाह— **समासेति ॥ समासः** स्मामास्त्यम्। **व्यासो** विस्तारः विभागः पार्थक्यमिति यावत् । तल्लणोपायेनेत्यर्थः । तथा च 'भूर्भुवस्स्वः' इति व्याहृतित्रयं मिलित्वैका व्याहृतिः, 'भूर्भुवः स्वः' इति पृथक् पृथक् तिस्रो व्याहृतयः। एवं व्याहृतीनां चतुष्टयम्। **सत्यं च** सत्यमित्येतत्पदं चेतानि पञ्चपदानि। **तारस्य** प्रणवस्याङ्गानि। हृदयादिपञ्चाङ्गेषु न्यासमन्त्रा इत्यर्थः। अङ्गान्युक्तानि योगदीपिकायाम्-

अङ्गन्यासेऽङ्गमन्त्रेभ्यः परमङ्गानि निर्दिशेत् ।
हृदयं शिरोऽपि तु शिखा कवचास्त्राणि तानि च ।

सोद्देशानि नमस्वाहा वौषट् हुंफट् पराणि च ।
षडङ्गानि तु नेत्राभ्यां वषडित्यस्त्रतः पुरा ।
न्यासस्थानानि विज्ञेयान्यङ्गानि हृदयादितः ॥ इति । (योग.दी.६६-६८)

ॐ भूः अनिरुद्धाय हृदयाय नमः । ॐ भुवः प्रद्युम्नाय शिरसे स्वाहा । ॐ स्वः सङ्कर्षणाय शिखायै वौषट् । ॐ भूर्भुवस्स्वः वासुदेवाय कवचायहुम् । ॐ सत्यं नारायणाय अस्त्राय फट् । इत्येवं प्रकारेण पञ्चाङ्गन्यासो ज्ञेयः । अत्र भूरित्याद्येव मन्त्रः । अन्यत्तु देवताध्यानार्थमिति ज्ञेयमित्याहुः ॥२५-३१॥

**तं. सा.** **..................अष्टाक्षरस्य च ।**

**कृद्धमहावीरद्युसहस्रसहितोल्ककाः ॥ ३२ ॥**

**चतुर्थ्यन्ता हृदादीनि पृथग्रूपाणि तानि च ।**

**विष्णोरेवात्यभेदेऽपि तदैश्वर्यात्तदन्यवत् ॥ ३३ ॥**

**त.क.–** अष्टाक्षरस्याङ्गन्यासमन्त्रानाह– **अष्टाक्षरस्य चेति ॥** चशब्दः 'प्रोच्यन्ते- ऽङ्गानि' इत्यस्यानुकर्षणार्थः । अत्र कृद्धादिशब्दाः शब्दपराः । 'चतुर्थ्यन्ताः' इति विशेषणात् । कृद्धश्च महांश्च वीरश्च द्युश्च सहस्रश्च कृद्धमहावीरद्युसहस्राः । तत्सहिता उल्का इति समासः । अत्र द्यूल्केति वक्तव्येऽपि द्युल्केत्युकारलोपेन वचनं मंत्राणां छून्दस्तुल्यत्वज्ञापनाय । सहस्रशब्दसहित- श्चासावुल्कशब्दश्च सहस्रसहितोल्कः । कृद्धमहावीरद्युसहस्रशब्दिताश्च ते उल्काश्चेति विग्रहः । ततः स्वार्थे कप्रत्ययः । 'विष्णोरेवात्यभेदेऽपि' (तं.सा.१-३३) इति वक्ष्यमाणत्वात् कृद्धोल्कादिशब्दवाच्यानां भगवद्रूपाणां भेदनिन्दने वा । तथा च चतुर्थ्यन्ताः कृद्धोल्कमहोल्कवीरोल्कद्युल्कसहस्रोल्कशब्दाः अष्टाक्षरमन्त्रस्याङ्गानि । अङ्गन्यासमन्त्राः प्रोच्यन्त इति सम्बन्धः । उक्तं चान्यत्र—

शब्दैः कृद्धमहावीरद्युसहस्रेति पञ्चभिः ।
प्रत्येकमेभिर्न्यस्तव्यमुल्कमित्युत्तरं पदम् ॥

एषां विभक्तियुक्तानां स्वाहाशब्दोऽन्ततो भवेत् ।
मन्त्राः पञ्चैवमस्योक्ता हृदयाद्यङ्गमूर्तयः ॥

इत्यङ्गमन्त्रैः पञ्चैतैर्भवन्ति हृदयं शिरः ।
शिखाकवचमस्त्रं च पञ्चाङ्गानि यथाक्रमम् ॥ इत्यादि ।

ननु तारस्याष्टाक्षरस्य चाङ्गन्यासमन्त्रे प्रविष्टानां व्याहृतीनां हृदयशिर-शिखाकवचास्त्रशब्दानां कृद्धोल्कादिशब्दानां च वाच्यमूर्तिविशेषाः सन्ति ? न वा ? नेति पक्षे 'मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनं' इत्युक्तजपसम्पत्ति-लोपप्रसङ्गः। न ह्येषां शब्दानां वाच्यमूर्तिविशेषाभावे तदर्थचिन्तनं सम्भवति। अद्येऽपि पूर्वोक्तप्रधानगणमूर्तिभ्यो भिन्ना न वा। नेति पक्षे प्रधानमन्त्रार्थतया चिन्तनीयत्वेनाङ्गमन्त्रार्थतया चिन्तनानुपपत्तिः। आद्ये तु 'एकमेव' इत्यादि-श्रुतिविरोध इत्यत आह– **हृदादीनीति** ।। तारमन्त्राङ्गहृदयादिशब्दवाच्यानि विष्णो रूपाणि प्रधानमन्त्रवाच्येभ्यो रूपेभ्यः पृथगेव। तानि अष्टाक्षराङ्गमन्त्रवाच्यानि कृद्धोल्कादिरूपाणि च प्रधानमन्त्रवाच्येभ्यो रूपेभ्यः पृथगेवेति सम्बन्धः। तेनान्यत्र विनियुक्तानामन्यत्र विनियोगो नोपपन्न इति निरस्तम्।

नन्वथापि 'एकमेव' इत्यादिश्रुतिविरोधो दूषणमस्तीति चेन्न। अत्यन्ताभेदाङ्गीकारात्। कथं तर्हि पृथग्रूपाणीत्युक्तिर्न व्याहतेत्यत आह– **अत्यभेदेऽपीति** ।। अत्यभेदे विद्यमानेऽपि पृथग्रूपाणीप्युक्तिरपि युज्यत एव। यतः तदन्यवद्रूपाणि व्यवह्रियन्ते। तर्हि व्यवहारो भ्रममूलः स्यादिति चेत् राहोः शिर इत्यादिव्यवहारवदुपपत्तेः। तत्र भेदप्रतिनिधिना तदुपपत्तिरिति चेदिहापि तत एव किं न स्यात्। विशेषो हि सामर्थ्यपर्यायः। सामर्थ्यं चैश्वर्यमेव। तच्च पुष्कलमेव भगवति प्रमितम्। न च मूलरूपैश्वर्यप्रमितावपि तद्रूपाणां कथं भेदव्यवहार इति वाच्यम्। अचिन्त्याद्भुतैश्वर्यादेवोपपत्तेः। तदिदमाह— **तदैश्वर्यादिति** ।। ३३ ।।

**अ.सं.–** अष्टाक्षरमन्त्रस्य पञ्चाङ्गन्यासमाह– **अष्टाक्षरस्येति** ।। चशब्दः अङ्गानि प्रोच्यन्त इत्यस्यानुकर्षणार्थः ।। क्रुद्धमहावीरद्युसहस्राख्यशब्दैः सहिताश्च उल्काः उल्कशब्दाश्चेति तथोक्ताः। **चतुर्थ्यन्ताः** चतुर्थीविभक्त्यन्ताः। 'कृद्धोल्कादीनि रूपाणि विष्णोः पञ्चाङ्गदेवताः' इत्युक्तेः कृद्धोल्कादिनामकविष्णुरूपप्रतिपादकाः। एते कृद्धोल्कादयः शब्दाः **हृदयादीनि** हृदयशिरःशिखाकवचास्त्राख्यानि पञ्चाङ्गानि अष्टाक्षरस्य प्रोच्यन्त इत्यर्थः। कृद्धोल्कादयः पञ्चशब्दाः हृदयादिपञ्चाङ्गेषु

न्यासमन्त्रा इति भावः । कृद्धोल्कादीनां चतुर्थ्यन्तता हृदयाद्यङ्गक्लृप्तिश्चोक्ता तिलके–

कृद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।
वीरोल्काय शिखा प्रोक्ता द्युल्काय कवचं स्मृतम् ।
सहस्रोल्कायास्त्रमुक्तमङ्गक्लृप्तिरियं मता ।। इति । (१९.४, ५)

'कृद्धोल्काय हृदयाय नमः । महोल्काय शिरसे स्वाहा' इत्याद्याकारेण न्यासः । अत्र वासुदेवादिमन्त्रे मन्त्रपदेन पञ्चाङ्गन्यासवत् अत्र सम्बुध्यन्तकृद्धोल्कादिपदैः पञ्चाङ्गन्यासप्राप्तौ सत्यां देवतावाचकपदानां पञ्चाङ्गन्यासे चतुर्थ्यन्तत्वनियमनार्थं **चतुर्थ्यन्ता** इत्युक्तम् । चतुर्थ्यन्ता एव न तु संबुध्यन्ता इत्यर्थः । न च देवतावाचकपदानां नमःस्वाहाशब्दादियोगात् चतुर्थ्यन्तत्वसिद्धिरिति वाच्यम् । नमःस्वाहादिशब्दयोगस्य हृदयशिरआदिशब्दनिष्ठचतुर्थ्यैवान्यथासिद्धेः । तेन चतुर्थाध्याये 'प्रणवेन स्वनाम्ना च भूधरेण परात्मना' (४.७) इत्यादौ 'ज्ञानैश्वर्यप्रभानन्द...' (४.८) इत्यादौ च सर्वेषां मन्त्राणामङ्गन्यासमन्त्रे सर्वत्र चतुर्थ्यन्तत्वमभिप्रेतमिति ध्येयम् ।

**तानि** कृद्धोल्कादीनि विष्णोः **पृथक्** पूर्वोक्तेभ्यः अन्यानि रूपाणि **हृदादीनि** हृदाद्यङ्गेषु स्थितत्वात् हृदयादिनामकानि च । हृदयादिनामकरणं तन्नाम्ना व्यवहारार्थम् । अत एवावरणपूजायां 'हृदयादींस्तथेन्द्रादीन्'(१.६१) इत्यादौ हृदयादिशब्देन तथा 'कृष्णवर्णा शिखोच्यते'(१.३४) इत्यत्र वीरोल्कस्य शिखाशब्देन व्यवहारः ।

ननु भगवद्रूपेषु सर्वथा भेदाभावात् कथं पृथक् रूपाणीत्युक्तमित्यत आह– **विष्णोरेवेति ।।** अत्यन्ताभेदेऽपि विष्णोः सकाशादत्यन्ताभेदेऽपि तद्रूपम् **ऐश्वर्यात्** अचिन्त्यशक्त्या **तदन्यवत्** तस्माद्विष्णोः अन्यवत् भिन्नमित्येवोच्यत इत्यर्थः । 'अष्टाक्षरस्य च' इति चकारस्यानुक्तसमुच्चायकत्वं चाङ्गीकृत्य कृद्धोल्कादिमन्त्रै-रङ्गुलिन्यासश्च ग्राह्यः । तदुक्तं–

कृद्धोल्कश्च महोल्कश्च वीरोल्को द्युल्कसंज्ञकः ।
सहस्रोल्कश्चतुर्थ्यन्तैरेभिरङ्गुलिषु न्यसेत् ।। इति ।।३२, ३३।।

**गु.दी.–** इदानीमष्टाक्षरस्य पञ्चाङ्गन्यासाङ्गुलिन्यासावाह— **अष्टाक्षरस्येति ।। अष्टाक्षरस्य** कृद्धमहावीरद्युसहस्रैः सहिताश्च ते उल्काश्चतुर्थ्यन्ताः शब्दाः **हृदादीनि** हृदादिशब्दवाच्यभगवद्रूपपञ्चकप्रतिपादका इति यावत्। प्रतिपाद्यप्रतिपादकयोरैक्योक्तिस्तु 'अहं यं वै लोकः प्रथमा महानाम्नी' इत्यादाविव ज्ञेया। चशब्दादङ्गानि प्रोच्यन्त इत्यस्यानुकर्षः। अङ्गुलिन्यासा वा सूचिताः। यथोक्तं नारायणीये—

कृद्धोल्कश्च महोल्कश्च वीरोल्को द्युल्क एव च ।
सहस्रोल्कश्चतुर्थ्यन्तैरेभिरङ्गुलिषु न्यसेत् ।
पूर्वमङ्गुष्ठपूर्वासु पञ्चाङ्गानि ततो न्यसेत् ।। इति ।

चतुर्थ्यन्ता इत्युपलक्षणम्। स्वाहान्ताश्चेत्यपि ग्राह्यम्। कृद्धोल्कादिशब्दव्युत्पन्नार्थस्तु, कृत् क्रोधः तं हन्ति प्रापयतीति क्रोधाभिमानी दुर्योधनस्तद्विषये उल्क इवाचरतीति कृद्धोल्कः कृष्णः। महतोरुलयो रुद्रेन्द्रयोः कं यस्मादसौ महोल्कः। 'ल इन्द्रे लवणे लः' इति धनञ्जयः। वीराणामृजूनामुत्कृष्टं लममृतं कामयति ददामीति प्रतिजानीत इति वीरोल्कः। 'लकारश्चामृते स्मृतः' इति धनञ्जयः। 'कै गै रै शब्दे' इति धातुः। द्युलोकोपलक्षितसर्वलोकानामुल्केव प्रकाशकः। अत्र दीर्घाभावश्छान्दसः। अन्यथा 'अकः सवर्णे दीर्घः' (पा.सू.६-१-१०१) इति दीर्घे द्यूल्क इति भवेत्। सहस्रसङ्ख्याकाः उल्कोपमाः कान्तिविशेषाः यस्येति सहस्रोल्क इति बोध्यः।

।। **तानीति ।। तानि** कृद्धोल्कादीनि विष्णोः **पृथक्** पूर्वोक्ताजादिभ्यो भिन्नानि रूपाणि। नन्ववताराणामभेदात्कथं पृथगित्युक्तिरित्यत आह– **अत्यभेदेऽपीति ।।** अत्यन्ताभेदेऽपि तदन्यवत्प्रतिभासन्ते। तत्र हेतुः– **तदैश्वर्यादिति ।।** तस्य विष्णोः **ऐश्वर्याद**चिन्त्यशक्तेरित्यर्थः ।। ३२-३३ ।।

**मञ्जाली–** अष्टाक्षरमन्त्रस्य पञ्चाङ्गन्यासमाह— **अष्टाक्षरस्य चेति ।।** चशब्दः अङ्गानि प्रोच्यन्त इत्यनुकर्षणार्थः । क्रुद्धमहावीरद्युसहस्राख्यशब्दः सहिताश्च ते उल्ककाः उल्कशब्दाश्चेति तथोक्ताः । **चतुर्थ्यन्ताः** चतुर्थीविभक्त्यन्ताः । 'कृद्धोल्कादीनि रूपाणि विष्णोः पञ्चाङ्गदेवताः' इत्युक्तेः कृद्धोल्कादिनामकविष्णु-रूपप्रतिपादकाः । एते कृद्धोल्कादयः **हृदादीनि** हृदयशिरःशिखाकवचास्त्राख्यानि पञ्चाङ्गानि अष्टाक्षरस्य प्रोच्यन्त इत्यर्थः । कृद्धोल्कादयः पञ्चशब्दाः हृदयादिपञ्चाङ्गेषु न्यासमन्त्रा इति भावः । कृद्धोल्कादीनां चतुर्थ्यन्तता हृदयाद्यङ्गक्लृप्तिश्चोक्ता तिलके-

> कृद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।
> वीरोल्काय शिखा प्रोक्ता द्युल्काय कवचं स्मृतम् ।
> सहस्रोल्कायास्त्रमुक्तमङ्गक्लृप्तिरियं मता ।। इति ।

'कृद्धोल्काय हृदयाय नमः । महोल्काय शिरसे स्वाहा'इत्यादिप्रकारेण न्यासः । अत्र वासुदेवादिमन्त्रे मन्त्रपदेन पञ्चाङ्गन्यासवत् सम्बुध्याद्यन्तकृद्धोल्कादिशब्दैः पञ्चाङ्गन्यासप्राप्तौ सत्यां देवतावाचकपदानां पञ्चाङ्गन्यासे चतुर्थ्यंतत्वनियमार्थं **चतुर्थ्यन्ता** इत्युक्तम् । चतुर्थ्यन्ता एव न तु सम्बुध्याद्यन्ता इत्यर्थः । तेन चतुर्थाध्याये 'प्रणवेन स्वनाम्ना च भूधरेण परमात्मना'(तं.सा.४-७) इत्यादौ ज्ञानैश्वर्य-प्रभानन्देत्यादौ च सर्वेषां मन्त्राणामङ्गन्यासमन्त्रे सर्वत्र चतुर्थ्यन्तत्वमभिप्रेतमिति ज्ञेयम् । तानि कृद्धोल्कादीनि विष्णोः **पृथक्** पूर्वोक्तेभ्योऽन्यानि रूपाणि । **हृदादीनि** हृदयाद्यङ्गेषु स्थितत्वात् हृदयादिनामकानि च । हृदयादिनामकरणं तन्नाम्ना व्यवहारार्थम् । अत एवावरणपूजायां 'हृदयादींस्तथेन्द्रादीन्' (तं.सा.१-६१) इत्यादौ हृदयादिशब्देन तथा 'कृष्णवर्णा शिखोच्यते'(तं.सा.१-३४) इत्यत्र वीरोल्कस्य शिखाशब्देन व्यवहारः ।।

ननु भगवद्रूपेषु सर्वथाऽभेदात् कथं पृथग्रूपाणीत्युक्तमित्यत आह— **अत्यभेदेऽपीति ।।** विष्णोः सकाशात् **अत्यभेदेऽपि** अत्यन्ताभेदेपि तद्रूप**मैश्वर्यात्** अचिन्त्यशक्त्या **तदन्यवत्** तस्माद्विष्णोः अन्यवत् भिन्नमिवोच्यत

इत्यर्थः । अष्टाक्षरस्य चेति चकारस्यानुक्तसमुच्चायकत्वं चाङ्गीकृत्य कृद्धोल्कादिमन्त्रैरङ्गुलिन्यासश्च ग्राह्यः । तदुक्तं-

कृद्धोल्कश्च महोल्कश्च वीरोल्को द्युल्कसंज्ञकः ।
सहस्रोल्कश्च चतुर्थ्यन्तैरेभिरङ्गुलिषु न्यसेत् ।। इति ।। ३२,३३ ।।

कृद्धोल्कादीनां ध्यानकथनम्

**तं. सा. चक्रशङ्खवराभीतिहस्तान्येतानि सर्वशः ।**
**मूलरूपसवर्णानि कृष्णवर्णा शिखोच्यते ।। ३४ ।।**

**त.क.–** ननु हृदयाद्यात्मकानां कृद्धोल्कादीनां रूपाणां कान्यायुधानीति जिज्ञासायां ताराष्टाक्षरयोः प्रधानरूपस्य आयुधादीन्येव मन्त्रान्तरप्रधानस्यापि, गणमूर्त्यायुधादीन्येव मन्त्रान्तरगणरूपस्यापीत्युक्तन्यायं स्मरति(स्मरयति)– **चक्रशङ्खेति ।। एतानि** रूपाणि यतोऽङ्गमन्त्रप्रतिपाद्यान्यतः सर्वशोऽपि रूपाणि चक्रशङ्खवराभयहस्तानीति सिद्धमेवेति सम्बन्धः । तर्ह्येषामुक्तन्यायेन प्रदीपवर्णत्वं प्राप्तमतस्तदंशमपवदति– **मूलरूपेति ।।** एषामङ्गरूपत्वेऽप्युद्यदादित्यवर्णत्वमेव न तु प्रदीपवर्णत्वम् । तत्राप्यपवादमाह– **कृष्णवर्णेति ।।** शिखायां न्यसनीया वीरोल्कमूर्तिः कृष्णवर्णेत्यर्थः । ननु न्यायप्राप्तं कथं त्यक्तुं शक्यमिति चेन्न । दत्तोत्तरत्वात् । न हि वचनस्यातिभारोऽस्तीति । तदिदमुक्तम्– **उच्यत इति ।।**

इदमत्राकूतम्—व्याहृतिप्रतिपाद्यानि वासुदेवाद्यनिरुद्धान्तानि रूपाणि व्याहृतिवाच्यरूपविशेषव्यूहे प्रविष्टानि शुक्लरक्तपीतकृष्णवर्णान्येव । पञ्चाङ्गन्यासमन्त्रवाच्यं रूपं व्यूहान्तरम् । तत्र प्रविष्टान्यनिरुद्धादिनारायणान्तानि उद्यदादित्यवर्णानि। तत्रानिरुद्धाख्यं रूपं भूरिति प्रथमव्याहृतिप्रतिपाद्यं हृद्ययनाद्धृदयशब्दवाच्यम् । नम्यत्वान्नमश्शब्दवाच्यं च । प्रद्युम्नाख्यं द्वितीयं रूपं भुव इति व्याहृतिप्रतिपाद्यम् । सुखादिरूपत्वात् शिरश्शब्दवाच्यम् । त्यक्तदोषगन्धत्वात् स्वाहाशब्दवाच्यं च । सङ्कर्षणाख्यं रूपं सुवरिति व्याहृतिप्रतिपाद्यम् । सुखात्मकज्ञानरूपत्वात् शिखाशब्दवाच्यम् । बलादिषड्गुणपूर्णत्वाद्वषट्शब्द-

वाच्यम् । कृष्णवर्णं च । भूर्भुवःसुवरिति समस्तव्याहृतिप्रतिपाद्यं वासुदेवाख्यं रूपम् रक्षकत्वात् कवचशब्दवाच्यम् । शत्रून् हुंकरोतीति हुंशब्दवाच्यं च । सत्यशब्दवाच्यं नारायणाख्यं रूपम् आस्तरणरहितत्वात् अस्त्रशब्दवाच्यम् । शत्रून् फट्करोति तिरस्करोतीति फट्शब्दवाच्यं च । उद्यदादित्यवर्णमिति समम् ।

एवं क्रुद्धानां तामसानामुल्कवत्तिष्ठतीति कृद्धोल्कशब्दवाच्यं हृदयनमश्शब्दाभ्यां वाच्यं चोद्यदादित्यवर्णं रूपान्तरम् । एवं महात्मनां सात्त्विकाना-मुरुसुखप्रदातृत्वान्महोल्कशब्दवाच्यं शिरःस्वाहाशब्दाभ्यां वाच्यमुद्यदादित्यवर्णं रूपान्तरम् । एवं वीरान् नित्यसंसारिणः उल्कवदावर्तयतीति वीरोल्कशब्दवाच्यं शिखावषट्शब्दाभ्यां च वाच्यं कृष्णवर्णं रूपान्तरम् । एवं प्रकाशरूपत्वाद् द्युशब्दोक्तं, मुक्तानां कुत्सितप्राकृतशरीरादुद्गमत्वात् द्युल्कशब्दवाच्यं, कवचहुं-शब्दाभ्यां च वाच्यमुद्यदादित्यवर्णं रूपान्तरम् । एवं सहस्रशब्दोप-लक्षितमुक्तामुक्तप्रपञ्चस्योत्कृष्टकर्तृत्वात् सहस्रोल्कशब्दवाच्यमस्त्रफट्शब्दाभ्यां च वाच्यमुद्यदादित्यवर्णं रूपान्तरमस्ति । तानि च यथाक्रमं हृदयाद्यङ्गेषु सन्निहितानि सन्त्वित्यभिसन्धिनाऽङ्गुलिविशेषेण तत्तन्मन्त्रेण तत्तदङ्गानि स्पृशेत् । अंगन्यासाङ्गुलिन्यासस्तु ग्रन्थान्तरादवगन्तव्यः । 'चक्रशङ्खवराभीतिहस्तान्येतानि सर्वशः' इत्यादि कृद्धोल्कादिरूपमात्रविषयमित्यप्याहुः ।। ३४ ।।

**अ.सं–** कृद्धोल्कादेर्ध्यानमाह— **चक्रेति** ।। **सर्वशः** समस्तानि **एतानि** कृद्धोल्कादीनि पञ्चरूपाणि चक्रशङ्खवरमुद्रायुक्तहस्तोपेतानि मूलरूपसवर्णानि उद्यदादित्यवर्णानि । एतेषां पञ्चानां शिखा तु कृष्णवर्णा । यद्वा मूलरूपसवर्णानि कृद्धोल्कादीनि चत्वारि रूपाणि **शिखा तु** शिखायां स्थितत्वात् शिखाशब्दवाच्या वीरोल्काख्या मूर्तिः नीलवर्णेति ।। ३१,३२ ।।

पञ्चाङ्गन्यासे करनियम उक्तः शौनकेन–

हृदयञ्च शिरश्चैव सिखाकवचमस्त्रकम् ।
त्रयाणां हृदयादीनां न्यासो दक्षिणपाणिना ।
द्वयोरुत्तरयोर्द्वाभ्यां करक्लृप्तिरिहोच्यते ।। इति ।।

अङ्गुलीनियमश्चोक्तस्तत्रैव–

अङ्गुष्ठवर्जमङ्गुल्यश्चतस्रो हृदि मूर्ध्नि च ।
शिखायां मुष्टिरेव स्यादङ्गुष्ठकृतनाडिका ।।

सर्वाङ्गुलय आनाभेः पाण्योः कवचबन्धने ।
अङ्गुष्ठतर्जन्यग्राभ्यां हस्तयोरपि शब्दयेत् ।। इति ।।३३।।

**गु.दी.–** कृद्धोल्कादीनां ध्यानमाह— **चक्र इति ।।** एतानि कृद्धोल्कादीनि **सर्वशः** सर्वाणि चक्रादिहस्तानि **मूलरूपसवर्णानि** उद्यद्भास्वत्समाभासानि । तस्यापवादमाह— **कृष्णवर्णेति ।। शिखा** शिखायां स्थितत्वात् शिखाशब्दवाच्या वीरोल्काख्या मूर्तिः कृष्णवर्णोच्यते । यद्वा सर्वेषां कृद्धोल्कादीनाम् उद्यद्भास्वद्वर्णत्वे समेऽपि **शिखा** केशपाशः कृष्ण एवेत्यर्थः ।।

**मङ्गली–** कृद्धोल्कादेर्ध्यानमाह— **चक्रेति ।। सर्वशः** समस्तान्येतानि-कृद्धोल्कादि पञ्चरूपाणि चक्रशङ्खवराभयमुद्रायुतहस्तोपेतानि । मूलरूपसवर्णानि उद्यदादित्यवर्णानि । एतेषां पञ्चानां शिखा तु कृष्णवर्णा । यद्वा कृद्धोल्कादिचत्वारि रूपाणि मूलरूपसवर्णानि । **शिखा तु** शिखायां स्थितत्वाच्छिखाशब्दवाच्या वीरोल्काख्यमूर्तिः नीलवर्णेति । पञ्चाङ्गन्यासे करनियम उक्तः शौनकेन-

हृदयं च शिरश्चैव शिखा कवचमस्त्रकम् ।
त्रयाणां हृदयादीनां न्यासो दक्षिणपाणिना ।
द्वयोरुत्तरयोर्द्वाभ्यां करक्लृप्तिरिहोच्यते ।। इति ।

अङ्गलीनियमश्चोक्तस्तवैव ।

अङ्गुष्ठवर्जिताङ्गुल्यश्चतस्रो हृदि मर्ध्नि च ।
शिखायां मुष्टिरेवस्यादङ्गुष्ठकृतनाडिका ।।

सर्वाङ्गुलय आनाभेः पाण्योः कवचबन्धने ।
अङ्गुष्टतर्जन्यग्राभ्यां हस्तयोरपि शब्दयेः ।। इति ।। ३४ ।।

तं. सा. **चतुर्विंशन्मूर्तयश्च मूलरूपसवर्णकाः ।**
**आदिवर्णत्रयं नाभिहृच्छिरस्सु यथाक्रमम्** ॥ ३५ ॥
**न्यसनीयं च तद्वर्णदेवताध्यानपूर्वकम् ॥**
**पज्जानुनाभिहृदयवाङ्नासानेत्रकेषु च** ॥ ३६ ॥
**अष्टाक्षराणां न्यासः स्याद्व्याहृतीनां प्रजापतिः ।**
**मुनिश्छन्दस्तु गायत्री देवता भगवान् हरिः** ॥ ३७ ॥

**त. क.–** वासुदेवद्वादशाक्षररूपाणां गायत्र्यक्षररूपाणां च केशवादीनां तर्हि न्यायप्राप्तमेव प्रदीपवर्णत्वं मन्तव्यं किमित्यतोऽपवादप्रसङ्गात्तत्राप्यपवादमाह– **चतुर्विंशन्मूर्तयश्चेति** ॥ न केवलमेतान्येव । व्यूहान्तरप्रविष्टचतुर्विंशन्मूर्तयश्च मूलरूपसवर्णका इत्यर्थः ।

एवं ताराष्टाक्षरयोरङ्गन्यासमभिधायाक्षरन्यासं मुमुक्षूणां संन्यासिनां चाधिकारिषु प्राधान्याद्विवक्षया संहारक्रमेण तारस्य तावदाह— **आदिवर्णत्रयमिति** ॥ चशब्दोऽङ्गान्यासेन समुच्चयार्थः । अकारः आदिः यस्येति विग्रहः । अकारोकारमकारान् नाभौ हृदि शिरसि यथाक्रमं न्यसेदित्यर्थः । 'मूर्तयोऽष्टावपि ध्येयाः' इत्यादिना अकारवाच्यविश्वादीनां जपकाले ध्यानस्योक्तत्वादक्षरन्यासकालेऽपि तदावश्यकमिति **तद्वर्णदेवताध्यानपूर्वकम्** इति पुनर्वचनेनाचष्टे । जप एव प्रधानमिति न भ्रमितव्यम् । किन्तु तद्वाच्यदेवताध्यानमेव । तत्प्रसादेनैव फलोपलम्भादिति दर्शयितुं वा पुनर्वचनम् । तच्छब्दः प्रकृताकारादिमकारान्तस्य परामर्शकः । तथाच अकारोकारमकार-वाच्यानां विश्वतैजसप्राज्ञानां ध्यानं कर्तव्यमित्यर्थः । तथा च—

न्यासे नमोऽन्तः स्वाहान्तो जपपूजाहुतिष्वपि ।
वश्ये चाकर्षणविधौ उच्चाटे हुङ्कृतिर्भवेत् ॥
मरणे फट्कृतिर्ज्ञेया स्तम्बविद्वेषमोहने ।
नतिं विनाऽङ्गमन्यत्स्यात् धर्मादौ नतिरेव सा ॥

इत्यादिना न्यासे नमोऽन्तमन्त्रस्य प्रयोक्तव्यतयोक्तेरकारादिवर्णानां न्यासे

बिन्द्वन्ततत्वोक्तेः 'अं नमः, उं नमः, मं नमः' इति मन्त्राकारो द्रष्टव्यः। विश्वाय नमः, तैजसाय नमः, प्राज्ञाय नमः इति मन्त्रत्रयस्यापि क्रमेणार्थो बोद्धव्यः।

नन्वत्र प्रणवकल्पे—

विश्वश्च तैजसः प्राज्ञस्तुर्यश्चाक्षरदेवताः ।
कृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च ।।

परंज्योतिः परंब्रह्म वासुदेव इति क्रमात् ।
अकारादेस्तथा शान्तातिशान्तस्य देवताः ।। (य.प्र.क.४-५)

इत्यत्र चशब्देन आत्मादिमूर्तिचतुष्टयस्यापि सङ्ग्रहेण विश्वाद्यष्टकं कृष्णाद्यष्टकं वा अक्षरदेवतोच्यते। अक्षरदेवतानुसारेण मन्त्रान्तरेष्विव स्थानाष्टकमेव वक्तव्यम्। तत्कथं नाभ्यादिस्थानमेवोच्यते। न च गृहस्थानामकारादिवर्णत्रयवाच्यमूर्तित्रयं नाभ्यादिष्वेव स्थानेषु न्यसनीयम्। संन्यासिनां त्वष्टसु स्थानेषु वर्णाष्टकवाच्यरूपाष्टकं न्यसनीयमिति व्यवस्था भविष्यतीति वाच्यम्। प्रणवकल्पे न्याससामान्यस्यैवानुक्तेः। इहापि 'अकाराद्यतिशान्तान्तः' (तं.सा.१-३) इत्यादिनाऽष्टानामक्षराणां तद्वाच्यरूपाणां च प्रतीतेश्च। संहारक्रमेणैवेहाक्षरन्यासस्याऽरब्धत्वाच्च। न हि गृहस्थानां संहारक्रमेणाक्षरन्यासः। प्रागुक्तवचनविरोधात्। 'पज्ञानुनाभिहृदिये'त्यादिनाऽष्टाक्षरन्यासस्य संन्यासिविवक्षयैव वक्ष्यमाणत्वा-चेति।

तत्रोच्यते। यद्यपि वर्णास्तद्देवताश्च तारेऽप्यष्टौ सन्तीति, 'विमतं ताराक्षरन्यासस्थानम् अष्टत्वसंख्योपेतं, तत्समसंख्याक्षरन्यासस्थानत्वात्, अष्टाक्षरमन्त्राक्षरन्यासस्थानवत्' इत्यनुमानं प्रयोक्तुं शक्यम्। तथापि वचनान्न्यासस्थानस्य त्रित्वोपपत्तेः। न च वचनैकशरणानामस्माकमनुमाने गौरवमस्ति। न च प्रणवकल्पे न्यासस्थानसंख्याऽन्यथोच्यते। येन दोषो दुष्परिहारः स्यात्। तर्हि तत्रात्र च वर्णनां देवतानां चाष्टत्वसंख्योक्तिर्व्यर्थेति चेन्न। तथा ध्यानस्याऽवश्यकत्वे वैयर्थ्याभावात्। अत एव 'मूर्तयोऽष्टावपि ध्येयाः' (तं.सा.१-२१) इत्येवोक्तम्। न तु न्यसनीया इत्यवधेयम्।

मातृकामन्त्राणां प्रत्येकमेकैकाक्षरत्वादक्षरन्यासो नास्तीत्यभिप्रेत्याष्टाक्षरस्य तमाह— **पज्जानुनाभीति** ।। तद्वर्णदेवताध्यानपूर्वकमिति वर्तते । विश्वादि-ज्ञानात्मान्तध्यानपूर्वकमोङ्कारदीन्यक्षरणि पादजानुनाभिहृदयमुखनासिकानेत्रशिरस्सु यथाक्रमं विन्दुशिरस्कानि नमोन्तानि च न्यसनीयानीत्यर्थः । एवं ताराष्टाक्षरयो-रङ्गन्यासवर्णन्यासावभिधाय मातृकाणां ऋषिच्छन्दोऽङ्गन्यासान् वक्ष्याम इति भावेन व्याहृतीनां वर्णदेवतोक्तावपि प्रधानदेवताऽनुक्तेः ऋषिच्छन्दोदेवता अङ्गन्यासं च दर्शयति— **व्याहृतीनामिति** ।। चतुर्मुख ऋषिः, भगवान् हरिर्व्याहृतीनां देवतेति सम्बन्धः । न च 'ऋषिश्च देवतैकोऽहम्' (तं.सा.१-१७) इत्युक्तिविरोधः 'तारादीनां विशेषतः' इत्युक्तेः । व्याहृत्यादीनां तदनुक्तेश्च । न चाऽदिपदेन तद्ग्रहणं शङ्कनीयम् । वक्ष्यमाणद्वादशाक्षरादीनामेव ग्रहणोपपत्तेः । अवान्तरऋषित्वोपपत्तेः ।।३५-३७ ।।

**अ.सं.–** इदानीं गायत्र्यक्षरदेवतानां केशवादीनां वर्णस्यानुक्तत्वा-त्प्रसङ्गात्तमहा— **चतुर्विंशदिति** ।। चतुर्विंशन्मूर्तयः गायत्रीमन्त्राक्षराणां चतुर्विंशतिमूर्तयः मूलरूपसवर्णकाः उद्यददित्यवर्णा इत्यर्थः ।। प्रणवमन्त्रस्याक्षर-न्यासस्थानमाह– **आदीति** ।। अकाराद्यतिशान्तान्तेष्वष्टसु अक्षरेषु मध्ये **आदिवर्णत्रयम्** अकारोकारमकारानित्यर्थः । नाभिहृच्छिरस्सुन्यसेत् । तदेतिकर्त्तव्यतामाह– **तद्वर्णेति** ।। तद्वर्णानां तेषां वर्णानामकारोकारमकाराणां देवतानां प्रतिपाद्यानां विश्वतैजसप्राज्ञरूपाणां ध्यानपूर्वकं यथा भवति तथेत्यर्थः । **यथाक्रमं** विश्वादिदेवानां नाभ्यादिवर्णस्थानानां च क्रममनुसृत्य । 'अं विश्वाय नमः नाभौ । उं तैजसाय नमः हृदये । मं प्राज्ञाय नमः शिरसि' इत्येवं क्रमेणेति भावः। नादादीनां न्यासानुक्तौ समाधानमुक्तं पूर्वमेव । **तद्वर्णदेवताध्यानपूर्वक-**मिति वदता वर्णन्यासे पञ्चाङ्गन्यासषडङ्गन्यासेऽपि देवताध्यानमात्रमपेक्षितं न ऋष्यादिज्ञानं तन्न्यासश्चेति ज्ञापितम् । अत एव 'मूर्तयोऽष्टावपि ध्येयाः' (१.२१) इत्यनेन विश्वादिवर्णदेवताध्यानमात्रमुक्तम् । तथा 'चक्रशङ्खवराभीति...' (तं.सा.१-३४) इत्यनेनापि कृद्धोल्काद्यङ्गदेवताध्यानमात्रमुक्तम् । तत्त्वन्यासस्य मातृकान्यासस्य च मन्त्रन्यासत्वात् ऋष्यादिज्ञानं तन्न्यासश्चापेक्षितः ।।

नारायणाष्टाक्षरमन्त्रस्य वर्णन्यासस्थानमाह– **पञ्चान्विति** ।। अष्टानामक्षराणां ॐ नमो नारायणायेति मन्त्रगतानां ॐकारादीनां पादजानुनाभिहृदय-वाक्नासिकानेत्रशिरस्सु न्यासः स्यात् । वर्णन्यासे वर्णोच्चारणप्रकारस्तूक्तः मन्त्रतन्त्रप्रकाशे– 'विन्यसेद्वर्णमेकैकं बिद्वन्तं ध्रुववेष्टितम्' इति । बिन्दुरनुस्वारः । अन्ते शिरसि यस्य स तथोक्तः । तं ध्रुवेण प्रणवेन वेष्टितं युतम् । ततश्च ॐ ॐ विश्वाय नमः पादयोः । ॐ नं तैजसाय नमः जान्वोः । ॐ मों प्राज्ञाय नमः नाभौ । ॐ नां तुर्याय नमः हृदये । ॐ रां आत्मने नमः वाचि । ॐ यं अन्तरात्मने नमः नासयोः । ॐ णां परमात्मने नमः नेत्रयोः । ॐ यं ज्ञानात्मने नमः शिरसि' इत्येवंप्रकारेण न्यासो ज्ञेयः । अत्र 'ॐ ॐ' इत्याद्येव मन्त्रः 'विन्यसेद्वर्णमेकैकं बिद्वन्तं ध्रुववेष्टितं' इत्यत्र ॐकारानुस्वारसहितानामेव वर्णानां न्यसनीयत्वोक्तेः । विश्वायेत्यादि तु देवतानुसन्धानार्थमिति ज्ञातव्यम् । एवं सर्वमन्त्रेषु वर्णन्यासे ज्ञेयमित्यहुः ।

वर्णन्यासास्त्रिवधाः । सृष्टिस्थितिलयभेदात् । तत्र शिरआदि पादान्तं क्रमेण वर्णन्यासः सृष्टिः । पादादिशिरोन्तं व्युत्क्रमेण संहारः । अर्धं शिर आदिक्रमेण अर्धं पादादिव्युत्क्रमेण स्थितिः । तदुक्तं हयशीर्षे–

मूर्धाक्षिनासामुखहृन्नाभिजानुपदेषु च ।
सृष्टिन्यासोऽयमुद्दिष्टः संहारश्चरणादिकः ।
मुर्धान्तस्थितिरप्युक्ता शिरआदिहृदन्तका ।। इति ।

तत्रास्मिन् ग्रन्थे मन्त्रेषु वर्णन्यासस्य संहारक्रमेणैवोच्यमानत्वात् **पञ्चान्वित्यादिनोक्तक्रमः** संहारन्यास एवेति ज्ञेयम् । सृष्टिन्यासे तु

शिरोक्षिनासावाक्हृत्सु नाभिजानुपदेषु च ।
अष्टाक्षरस्य वर्णानां न्यासोऽनुक्रम ईरितः । इति ।

स्थितिन्यासे तु– शिरोऽक्षिनासावाक्पादजानुनाभिमनस्सु चेति सङ्ग्रहः । न्यासे त्रैविध्यं तल्लक्षणम् तदधिकारिणश्चेत्यादिविशेषं 'सृष्टिस्थितिलयन्यासाः' (तं.सा.४-१२२) इत्यादिना चतुर्थाध्याये वक्ष्यत्याचार्यः । ततश्च तत्तदधिकारिभिः तत्तन्यासः कार्य इत्यवधेयम् । वर्णन्यासेऽङ्गुलिनियमश्च तन्त्रप्रकाश एवोक्तः–

तत्राङ्गुलीभिर्न्यासः स्यात् शिरस्येकैव मध्यमा ।
तर्जनीमध्यमाभ्यां तु चक्षुषोर्न्यास इष्यते ॥
अङ्गुष्ठानामिकाभ्यां तु नासयोर्न्यास ईरितः ।
वदने ज्ञानमुद्रा स्यादङ्गुष्ठश्च कनिष्ठिका ॥
हृदि प्रकीर्तिता नाभावङ्गुष्ठाः प्रकीर्तिताः ।
सर्वा जानौ च पादे च पश्चापि परिकीर्तिताः ॥ इति ।

ज्ञानमुद्रा अङ्गुष्ठतर्जनीयोग इत्यर्थः । चशब्दात् कराङ्गुलीषु चाष्टाक्षराणां न्यासो ज्ञेयः । तदुक्तम्

दक्षादिवामतर्जन्यन्ताङ्गुलीनां त्रिपर्वसु ।
ज्येष्ठाग्रेण क्रमात्तारुरुद्धानष्टाक्षरान्न्यसेत् ॥ इति ।

ज्येष्ठाग्रेण अङ्गुष्ठाग्रेणेत्यर्थः । अत्रापि सृष्ट्यादिन्यासो ज्ञेयः । तदुक्तम् कपिञ्जलसंहितायाम्–

पाणिन्यासमथो वक्ष्ये तर्जन्यादि यथाक्रमम् ।
वामान्तं सृष्टिसंज्ञा तु संहृतिर्विपरीतकम् ।
तर्जन्यादिकनिष्ठान्तं स्थितिमेव प्रचक्षते ॥ इति ।

कृद्धोल्कादिभिः पश्चाङ्गुलिन्यासे सृष्ट्यादयो ज्ञेयाः । उक्तं च गौतमीतन्त्रे–

दक्षाङ्गुष्ठादिवामान्तो न्यासः स्यात्सृष्टिरीरिता ।
वामाङ्गुष्ठादिदक्षान्ता संहृतिः परिकीर्तिता ।
उभयोः करयोर्ज्येष्ठापूर्विका स्थितिरिष्यते ॥ इति ।

प्रणवाष्टाक्षरयोः ऋषिच्छन्दोदेवताध्यानानामुक्तत्वादिदानीं व्याहृत्यादीनां क्रमेण ऋष्यादिकं वदन्नादौ व्याहृतिमन्त्रस्य ऋष्यादीनाह– **व्याहृतीनामिति** ॥ **प्रजापतिर्ब्रह्मा मुनिः** ऋषिः । व्याहृतीनां विशिष्टमन्त्रस्य हरिर्देवता । भूरादीनां प्रत्येकमनिरुद्धादिदेवताकत्वोक्तेरिति ध्येयम् ॥ ३५-३७ ॥

**गु.दी.**– प्रसङ्गात्केशवादीनां वर्णमाह— **चतुर्विंशदिति** ॥ प्रणवमन्त्रस्य

वर्णन्यासस्थानमाह– **आदीति** ।। अकारोकारमकाराणीति वर्णत्रयं नाभिहृच्छिरस्सु अवर्णदेवता विश्वः, उवर्णदैवतं तैजसः, मकारस्य प्राज्ञ इति, विश्वादिवर्णदेवताध्यानपूर्वकं देवताक्षरस्थानानां क्रममनतिक्रम्य न्यसनीयम् । नादादीनां पृथगुच्चारणाविषयत्वादवर्णत्वाद्वा तन्न्यासानुक्तिरिति ज्ञेयम् ।।

मूलमन्त्रस्याक्षरन्यासस्थानान्याह— **पदिति** ।। 'केषु च' इति चशब्दादङ्गुलीषु च न्यासः स्यात् । तदुक्तं नारायणीये—

दक्षादिवामतर्जन्यन्ताङ्गुलीनां त्रिपर्वसु ।
ज्येष्ठाग्रेण क्रमात्तारुद्धानष्टाक्षरान्न्यसेत् ।। इति ।

अयं च पादादिसंहृतिक्रमो यत्यपेक्षयैव । गृहिभिस्तु शिरआदिन्यास एवानुष्ठेय इति सम्प्रदायः। तथा च ॐ नमो नारायणायेति मन्त्रप्रयोगः। अत्र उक्तवक्ष्यमाणसर्वमन्त्रेष्वङ्गन्यासादिप्रकारो **गुरुचरणरचितमन्त्रोद्धारे** द्रष्टव्यः। विस्तरभिया नेहोच्यते । मन्त्रार्थस्तु सत् चित् आनन्द आत्मेति गुणचतुष्टयमपि नारायणशब्दार्थः। तथा हि– अदोषाश्रयत्वान्नारायणः। सर्वचेतनापेक्षितज्ञाना-नन्दाश्रयत्वांत्, सर्वचेतनसङ्घस्य स्वामित्वेनाश्रयत्वाच्च नारायणः। तस्मै तत्प्रीत्यर्थं तदुद्देशेनेति यावत्, नमः तनुमनःप्रभृतीनां भगवत्प्रवणत्वमस्त्विति ।।

व्याहृतिमन्त्रस्य ऋष्यादीनाह— **व्याहृतीनामिति** ।। हरिर्देवता। नन्वनिरुद्धादीनां देवतानां पूर्वमुक्तत्वात् हरेस्तद्देवतात्वं कथमिति चेत् सत्यम्। अनिरुद्धादिचतूरूपी हरिरित्यस्यार्थस्य विवक्षितत्वात् ।। ३५-३७ ।।

**मङ्गाली– चतुर्विंशन्मूर्तयः** गायत्रीमन्त्राक्षराणां चतुर्विंशतिमूर्तयः। मूलरूपसवर्णकाः उद्यदादित्यवर्णा इत्यर्थः। प्रणवमन्त्रस्याक्षरन्यासस्थानमाह— **आदीति** ।। अकाराद्यतिशान्तान्तेष्वष्टस्वक्षरेषु मध्ये **आदिवर्णत्रयम्** अकारोकारमकारानित्यर्थः। नाभिहृच्छिरस्सु न्यसेत्। तदितिकर्तव्यतामाह— **तद्वर्णेति** ।। तद्वर्णानां तेषां वर्णानाम् अकारोकारमकाराणां देवतानां प्रतिपाद्यानां विश्वतैजसप्राज्ञानां ध्यानपूर्वकं यथा भवति तथेत्यर्थः। **यथाक्रमम्** विश्वादिदेवानां नाभ्यादिवर्णस्थानानां च क्रमनुसृत्य। 'अं विश्वाय नमः नाभौ ।

उं तैजसाय नमः हृदये । मं प्राज्ञाय नमः शिरसि' इत्येवं क्रमेणेति भावः । **तद्वर्णदेवताध्यानपूर्व**कमिति वदता वर्णन्यासे पञ्चाङ्गन्यासे षडङ्गन्यासे च देवताध्यानमात्रमपेक्षितम् । न ऋष्यादिज्ञानं तन्न्यासश्चेति ज्ञापितम् । अत एव पूर्वं 'मूर्तयोष्टावपि ध्येयाः' (तं.सा.१-२१)इत्यनेन विश्वादिवर्णदेवताध्यान-मात्रमुक्तम् । तथा चक्रशङ्खवराभीतीत्यनेनापि कृद्धोल्काद्यङ्गदेवताध्यानमात्र-मुक्तम् । तत्वन्यासस्य मातृकान्यासस्य च मन्त्रन्यासत्वात् ऋष्यादिज्ञानं तन्न्यासश्चापेक्षितः ।

नारायणाष्टाक्षरमन्त्रस्य वर्णन्यासस्थानमाह— **पज्जान्विति ।।** अष्टा-नामक्षराणां ॐ नमो नारायणायेति मन्त्रगतानां ॐकारादीनां पादजानुनाभिहृदय-वाङ्नासिकानेत्रशिरस्सु न्यासः स्यात् । वर्णन्यासे वर्णोच्चारणप्रकारस्तूक्तो मन्त्रतन्त्रप्रकाशे—

**विन्यसेद्वर्णमेकैकं बिद्वन्तं ध्रुववेष्टितमिति ।**

बिन्दुरनुस्वारः । अन्ते शिरसि यस्य स तथोक्तः । तं ध्रुवेण प्रणवेन वेष्टितम् युतम् । ततश्च 'ॐ ॐ विश्वाय नमः पादयोः । ॐ नं तैजसाय नमः जान्वोः । ॐ मों प्राज्ञाय नमः नाभौ । ॐ नां तुर्याय नमः हृदये । ॐ रां आत्मने नमः वाचि । ॐ यं अन्तरात्मने नमः नासयोः । ॐ णां परमात्मने नमः नेत्रयोः । ॐ यं ज्ञानात्मने नमः शिरसि' इत्येवं प्रकारेण न्यासो ज्ञेयः । अत्र 'ॐ ॐ ॐ नं' इत्याद्येव मन्त्रः । 'विन्यसेद्वर्णमेकैकं बिंद्वन्तं ध्रुववेष्टितं' इत्यत्रोङ्कारानुस्वार-सहितानामेव वर्णानां न्यासनीयत्वोक्तेः। विश्वायेत्यादि तु देवतानुसन्धानार्थमिति ज्ञातव्यम् । एवं सर्वमन्त्रेषु वर्णन्यासे ज्ञेयम् ।

वर्णन्यासास्त्रिविधाः । सृष्टिस्थितिलयभेदात् । तत्र शिरआदिपादान्तं क्रमेण वर्णन्यासः सृष्टिः । पादादिशिरान्त व्युत्क्रमेण संहारः । अर्धं शिरआदिक्रमेण अर्धं पादादिव्युत्क्रमेण स्थितिः । तदुक्तम् हयशीर्षे-

मूर्धाक्षिनासामुखहृन्नाभिजानुपदेषु च ।
सृष्टिन्यासोऽयमुद्दिष्टः संहारश्चरणादिकः ।
मूर्धान्तः स्थितिरप्युक्ता शिर आदिहृदन्तका ।। इति ।

तत्रास्मिन्ग्रन्थे मन्त्रेषु वर्णन्यासस्य संहारक्रमेणैवोच्यमानत्वात् पञ्चान्वित्यादिनोक्तक्रमः संहार एवेति ज्ञेयम् । सृष्टिन्यासे तु-

शिरोक्षिनासावाक्हृत्सु नाभिजानुपदेषु च ।
अष्टाक्षरस्य वर्णानां न्यासोऽनुक्रम ईरितः ।। इति ।

स्थिति न्यासे तु- शिरोक्षिनासावाक्पादजानुनाभिमनस्सु च इति संग्रहः । न्यासत्रैविध्यं तल्लक्षणं तदधिकारिणश्चेत्यादिविशेषं 'सृष्टिस्थितिलयान्यासाः' (तं.सा.४-१२२) इत्यादिना चतुर्थाध्याये वक्ष्यत्याचार्यः । ततश्च तत्तधिकारिभिस्तत्तन्यासः कार्य इति ज्ञेयम् । वर्णन्यासे अङ्गुलिनियमश्च मन्त्रतन्त्रप्रकाश एवोक्तः ।

तत्राङ्गुलीभिर्न्यासस्स्यात् शिरस्येकैव मध्यमा ।
तर्जनीमध्यमाभ्यां तु चक्षुषोर्न्यास इष्यते ।

अङ्गुष्ठानामिकाभ्यां तु नासयोर्न्यास ईरितः ।
वदने ज्ञानमुद्रा स्यात् अङ्गुष्ठश्चकनिष्ठिका ।।

हृदि प्रकीर्तिता नाभावनङ्गुष्ठाः प्रकीर्तिताः ।
सर्वजानौ च पादे च पश्चापि परिकीर्तिताः ।। इति ।

ज्ञानमुद्रा अङ्गुष्ठतर्जनीयोग इत्यर्थः । 'केषु च' इति च शब्दात् कराङ्गुलिषु च अष्टाक्षराणां न्यासो ज्ञेयः । तदुक्तम्-

दक्षादिवामतर्जन्यंताङ्गुलीनां त्रिपर्वसु ।
ज्येष्ठाग्रेण क्रमात्ताररुद्धानष्टाक्षरान्न्यसेत् ।। इति ।

ज्येष्ठाग्रेण अङ्गुष्ठाग्रेणेत्यर्थः । अत्रापि सृष्ट्यादिन्यासो ज्ञेयः । तदुक्तम् कपिञ्जलसहितायाम्-

पाणिन्यासमथो वक्ष्ये तर्जन्यादि यथाक्रमम् ।
वामान्तं सृष्टिसंज्ञं तु संहृतिर्विपरीतकम् ।
तर्जन्यादिकनिष्ठान्तं स्थितमेवं प्रचक्षते ।। इति ।

कृद्धोल्कादिभिः पञ्चाङ्गुलिन्यासे सृष्ट्यादयो ज्ञेयाः । उक्तं च गौतमीतन्त्रे-

दक्षाङ्गुष्ठादिवामान्तो न्यासस्स्यात्सृष्टिरीरिता ।
वामाङ्गुष्ठादिदक्षान्ता संहृतिः परिकीर्तिता ।
उभयोः करयोर्ज्येष्ठपूर्वीका स्थितिरिष्यत ।। इति ।

प्रणवाष्टाक्षरयोः ऋषिछन्दोदेवताध्यानानामुक्तत्वादिदानीं व्याहृत्यादीनां क्रमेण ऋष्यादिकं वदन्नादौ व्याहृतिमन्त्रस्य ऋष्यादीनाह— **व्याहृतीनामिति ।। प्रजापतिः** ब्रह्मा । **मुनिः** ऋषिः । व्याहृतीनां विशिष्टमन्त्रस्य हरिर्देवता । भूरादीनां प्रत्येकमनिरुद्धादिदेवताकत्वोक्तेरिति ध्येयम् ।। ३५-३७।।

व्याहृतिप्रतिपाद्यमूर्तिध्याननिरूपणम् व्याहृतिमन्त्रस्य पञ्चाङ्गन्यासनिरूपणं च

**तं.सा. उद्यदादित्यवर्णश्च ज्ञानमुद्राभयोद्यतः ।**
**तारेण व्याहृतीभिश्च ज्ञेयान्यङ्गानि पञ्च च ।। ३८ ।।**

**त. क.–** अत्र प्रधानदेवतायां हरावुत्सर्गशास्त्रत्वादुद्यदादित्यवर्णप्राप्तौ च चक्रशङ्खगदापद्मानामपि प्रप्तिः स्यादित्यत आह— **उद्यदादित्येति ।।** चोऽप्यर्थः। उत्सर्गशास्त्रादुद्यदादित्यवर्णो, न चक्रशङ्खगदापद्मधरो ध्येयः। किन्तु गदापद्मयोः स्थाने ज्ञानमुद्राऽभये ध्यातव्य्। वचनादेव क्वचिदुत्सर्गशास्त्रानुसरणं क्वचिन्नेत्युपपत्तेरिति भावः। व्याहृतीनामङ्गन्यासे मन्त्रानाह– **तारेणेति ।।** व्याहृतीनामित्यनुवर्तते। चशब्दस्तत्सूचनार्थो द्वितीयव्याहृतीनां पञ्चमानी हृदयाद्यस्त्रान्तान्योङ्कारेण समासव्यासयोगेन तिसृभिः व्याहृतिभिश्च न्यसनीयानीति सम्बध्यते। प्रयोगस्तु प्राग्वत् ।। ३८ ।।

**अ.सं–** ध्येयदेवतालक्षणमाह– **उद्यदिति ।।** ज्ञानमुद्राभयोद्यता इत्युक्त्या द्विभुजत्वं ज्ञायते। व्याहृतिमन्त्रस्य पञ्चाङ्गन्यासमाह– **तारेणेति ।। तारेण** ॐकारेण **व्याहृतिभिश्च** पृथग्भूताभिस्तिसृभिर्मिलितया चैकया व्याहृत्या। एवं पञ्चभिः पदैः पञ्चाङ्गानि हृदयादीनि न्यासस्थानानि ज्ञेयानि। 'ॐ नारायणाय हृदयाय नमः। भूः वासुदेवाय शिरसे स्वाहा। भुवः संकर्षणाय शिखायै वौषट्।

स्वः प्रद्युम्नाय कवचाय हुम्। भूर्भुवः स्वः अनिरुद्धायास्त्राय फट्' इति पञ्चाङ्गन्यासप्रकारः ।। ३८ ।।

**गु.दी.–** व्याहृतिप्रतिपाद्यमूर्तिध्यानमाह— **उद्यदिति ।।** अधोभुजयोः ज्ञानमुद्राभयमुद्रे। ऊर्ध्वभुजद्वये तु चक्रशङ्खाविति चतुर्भुजत्वं ज्ञेयम्। कश्चित्त्वत्र मुद्राद्वयस्यैवोक्तत्वाद्द्विभुजत्वमेवेत्याह। ननु–

वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः ।
चक्रशङ्खगदाब्जेतः प्रथमो मुसली हली ।। (तं.सा.१-२३)

इत्यादिना वासुदेवादिचतुर्णां अन्यथा ध्यानस्योक्तत्वात् तद्विरोध इति चेत् न। तत्र चतुर्णां पृथक् ध्यानोक्तावप्यत्र चतूरूपविशिष्टस्य हरेर्ध्यानाभिधानात्। अत एव तत्र 'वासुदेवादिकाः' इति बहुवचनम्। अत्र तु 'देवता भगवान् हरिः' इत्येकवचनम्। पञ्चाङ्गन्यासमाह— **तारेणेति ।। व्याहृतीभिः** व्यस्त-समस्ताभिश्चतसृभिः ।। ३८ ।।

**मङ्गाली–** ध्येयदेवतालक्षणमाह- **उद्यदिति ।।** ज्ञानमुद्राभयोद्यत इत्युक्त्या द्विभुजत्वं ज्ञायते । गदापद्मस्थाने ज्ञानाभययुतत्वमिति चतुर्भुजत्वमपि ज्ञेयमिति केचित् ।।

व्याहृतिमन्त्रस्य पञ्चाङ्गन्यासमाह— **तारेणेति ।। तारेण** ओङ्कारेण **व्याहृतिभिश्च** पृथग्भूताभिस्तिसृभिर्मिलितया चैकया व्याहृत्या एवं पञ्चभिः पदैः पञ्चाङ्गानि हृदयादीनि न्यासस्थानानि ज्ञेयानि। 'ॐ ॐ नारायणाय हृदयाय नमः। ॐ भूः वासुदेवाय शिरसे स्वाहा। ॐ भुवः सङ्कर्षणाय शिखायै वौषट्। ॐ स्वः प्रद्युम्नाय कवचाय हुं। ॐ भूर्भुवस्स्वः अनिरुद्धाय अस्त्राय फट्' इति पञ्चाङ्गन्यासप्रकार उक्तः ।। ३८ ।।

व्याहृतिमन्त्रस्य अक्षरन्यासनिरूपणम् द्वादशाक्षरमन्त्रस्य च्छन्दआदिनिरूपणं च

**तं.सा.** **नाभिहृत्केषु सर्वेषु चतस्रो व्याहृतीर्न्यसेत् ।**
**द्वादशार्णस्य जगतीच्छन्दोऽन्यत्तारवत्स्मृतम् ।। ३९ ।।**

**त. क.–** व्याहृतीनामक्षरन्यासमाह– **नाभीति** ।। तद्वर्णदेवताध्यानपूर्वकमित्यनुवर्तते । तथा च 'भूः अनिरूद्धाय नमः । भुवः प्रद्युम्नाय नमः । सुवः सङ्कर्षणाय नमः । भूर्भुवस्सुवः वासुदेवाय नमः' इति चतुर्भिर्मन्त्रैर्नाभिहृदयशिरः-सर्वङ्गाख्यचतुर्षु स्थानेष्वङ्गुलीभिः स्पृशेदित्यर्थः । यद्यप्यक्षरणि बहूनि सन्ति । तथापि क्षकारादिष्वैक्यविवक्षया न दोषः । इदानीं क्रमप्राप्तस्य द्वादशाक्षरस्य च्छन्द आह— **द्वादशार्णास्येति** ।। 'द्वादशाक्षरा जगती' इत्युक्तेरिति भावः । ऋषिदेवते कुतो नोक्ते इत्यतो न्यायं स्मारयति— **अन्यत्तारवत्स्मृतमिति** ।। तारो हि सर्वमन्त्राणां प्रकृतिः । तस्य बह्वङ्गाम्नानात् । प्रथमोत्पन्नत्वाच्च । 'प्रकृतिवद्विकृतिः कर्तव्या' इति न्यायश्च प्रसिद्धः । यत्र वैशेषिकाङ्गमुच्यते तत्र तन्मात्रस्यैव बाध इति पूर्वोक्तं न विस्मर्तव्यमिति भावः ।। ३९ ।।

**अ.सं–** व्याहृतिभिरेव न्यासान्तरमाह– **नाभीति** ।। प्रत्येकं नाभिहृदयशिरस्सु **सर्वेषु** मिलितेषु नाभ्यादिषु चतस्रो व्याहृतीः व्यस्ताः समस्ताः न्यसेदित्यर्थः । 'भूः अनिरुद्धाय नमः नाभौ । भुवः प्रद्युम्नाय नमः हृदेय । स्वः संकर्षणाय नमः शिरसि । भूर्भुवःस्वः वासुदेवाय नमः नाभ्यादिसर्वाङ्गेषु' इति न्यासान्तप्रकारः । अयं संहारक्रमः ।

सृष्टौ शिरसि हृन्नाभ्योः सर्वाङ्गेषु यथाक्रमम् ।
वासुदेवादिसहिताः भूरादिव्याहृतीर्न्यसेत् ।। इति ।

स्थितौ शिरोनाभिचित्तसर्वाङ्गेषु क्रमाद्भवेत् इति सङ्ग्रहः।

'वासुदेवादिकाः शुक्ल' (१.२३) इत्याद्युक्तप्रकारेण वासुदेवादीनां भूरादिदेवतानां ध्यानं ज्ञेयम् ।

द्वादशाक्षरस्य छन्दादिकमाह– **द्वादशार्णस्येति** ।। **अन्यत्** ऋष्यादिदेवतादिकं चेत्यर्थः । **तारवत्** प्रणवमन्त्रवत् । **स्मृतं** सिद्धम् । अन्तर्यामी ऋषिः वासुदेवो देवतेति भावः ।। ३९ ।।

**गु.दी–** व्याहृतिभिर्न्यासान्तरं वक्ति— **नाभीति** ।। नाभिहृदयशिरस्सु सर्वाङ्गेषु च चतस्रो व्याहृतीर्न्यसेत् । पूर्णत्वाद्भूः । 'भू बहौ' इति (धा.पा.१८४५)

धातोः। बहुः पूर्णतायाम्। भूत्या वरत्वाद् भुवः। अनन्तसुखत्वात्स्व इति मन्त्रार्थः ॥

अत्र 'भूरिति ऋग्भ्यः भुवरिति यजुर्भ्यः स्वरिति सामभ्यः' (छा.उ.४-१७-३) इति छान्दोग्यचतुर्थाध्यायान्तिमखण्डोक्तरीत्या ऋगादिवेदाभिमानिचतुर्मुख- हरवायुभ्यो वराणां वराहनृसिंहकपिलानां च क्रमाद्व्याहृतित्रयवाच्यत्व-मनुसन्धेयम्। उक्तं च तद्भाष्ये—

अग्निर्नासिक्यवायुश्च सूर्यो लोकरसास्त्रयः।
अग्ने रसस्तु ऋग्वेदमानी ब्रह्मा प्रकीर्तितः॥

नासिक्यवायोस्तु रसो यजुर्वेदात्मको हरः।
सामवेदाभिमानी तु वायुः सूर्यरसः स्मृतः॥
वराहसिंहकपिलास्तेषां भूरादिनामकाः॥ इति ॥ (छा.भा.४-१७-३)

अथ वासुदेवद्वादशाक्षरमन्त्रस्य ऋष्यादीनाह— **द्वादशार्णस्येति ॥ अन्यत्** ऋषिमात्रं **तारवत्** प्रणवमन्त्रवत् ॥ ३९ ॥

**मङ्काली**— व्याहृतिभिरेव न्यासान्तरमाह— **नाभीति**। प्रत्येकं नाभिहृदय-शिरस्सु सर्वेषु मिलितेषु नाभ्यादिषु चतस्रो व्याहृतीः व्यस्ताः समस्ताः न्यासेदित्यर्थः। 'ॐ भूः अनिरुद्धाय नमः नाभौ। ॐ भुवः प्रद्युम्नाय नमः हृदये। ॐ स्वः सङ्कर्षणाय नमः शिरसि। ॐ भूर्भुवस्स्वः वासुदेवाय नमः नाभ्यादिसर्वाङ्गेषु' इति न्यासान्तरम्। अयं संहारक्रमः।

सृष्टौ सिरसि हृन्नाभ्योः सर्वाङ्गेषु यथाक्रमम्।
वासुदेवादिसहिता भूरादिव्याहृतीर्न्यसेत्॥ इति।

स्थितौ शिरोनाभिचित्तसर्वाङ्गेषु क्रमाद्भवेत्। इति सङ्ग्रहः।

'वासुदेवादिकाः शुक्ल'(तं.सा.१-२३) इत्याद्युक्तप्रकारेण वासुदेवादीनां भूरादिदेवतानां ध्यानं ज्ञेयम्।

द्वादशाक्षरस्य छन्दआदिकमाह— **द्वादशार्णस्येति ॥ अन्यत्** ऋषिर्देवतादिकं

चेत्यर्थः । **तारवत्** प्रणवमन्त्रवत् **स्मृतं** सिद्धम् । अन्तर्यामी ऋषिः वासुदेवो देवतेति भावः ।। ३९ ।।

द्वादशाक्षरमन्त्रस्य ध्यानन्यासादि निरूपणम्
गायत्र्याः मुनिदेवतानिरूपणं च

**तं.सा.** **अच्छवर्णोऽभवरकरो ध्येयोऽमितद्युतिः ।**
**पदैर्व्यस्तैः समस्तैश्च ज्ञेयान्यङ्गानि पञ्च च** ।। ४० ।।

**अष्टाक्षराणां स्थानेषु बाह्वोरूर्वोश्च विन्यसेत् ।**
**विश्वामित्रस्तु सन्ध्यार्थे तदन्यत्र प्रजापतिः ।**
**मुनिर्देवस्तु सवितृनामा स्रष्टृत्वतो हरिः** ।। ४१ ।।

**त. क.–** ध्यानमाह— **अच्छवर्णेति ।।** उद्यद्भास्वत्समाभास इत्यस्य अपवादोऽ**च्छवर्ण इति ।।** गदापद्मयोरपवादोऽ**भयवरकर इति ।। अमितद्युतिरिति** स्वरूपकथनम् । अच्छवर्ण इत्यस्य विवरणं वा । अङ्गन्यासमाह— **पदैरिति ।।** वासुदेवमन्त्रान्तर्गतैर्व्यस्तैश्चतुर्भिः पदैः समस्तैर्मिलितैश्च पदैः पञ्चाङ्गानि न्यसेत् । अयमर्थः— 'ॐ' इति प्रथमो मन्त्रः । 'नमः' इति द्वितीयमन्त्रः । 'भगवते' इति तृतीयः । 'वासुदेवाय' इति चतुर्थः । समस्तोऽपि मन्त्रः पञ्चमः । एवमेते पञ्चापि मन्त्राश्चतुर्थ्यन्तहृदयादिशब्दोत्तरा नामआदिशब्दान्ता हृदयादिषु पञ्चसु स्थानेषु न्यसनिया इति । अक्षरन्यासमाह— **अष्टाक्षराणामिति ।।** पज्जानुनाभिहृदय-वाङ्नासानेत्राणि ओंकारदिवाकारन्तानां न्यासस्थाननि । सुकारदिमकारान्तानां चतुर्णां वर्णानां वाहुद्वयं ऊरुद्वयं चेति चत्वारि न्यासस्थानानीत्यर्थः ।

गायत्रीमन्त्रो द्विविधः । विश्वामित्रगायत्री, ब्रह्मगायत्री चेति । व्याहृतित्रयोपक्रमा आद्या । तद्रहिता तु द्वितीया । तत्राऽद्या सन्ध्यार्थे विनियुक्तेति सर्वसाधारणी । अतस्तस्यास्तावदादौ ऋषिमाह— **विश्वामित्र इति ।।** सन्ध्यार्थे विनियुक्ताया गायत्र्या विश्वामित्रो मुनिरिति सम्बन्धः । द्वितीयाया ऋषिमाह— **तदन्यत्रेति ।।** सन्ध्याकार्यादन्यत्र विनियुक्ताया ब्रह्मगायत्रयाः **प्रजापतिश्चतुर्मुखो**

मुनिरित्यर्थः । अक्षरदेवताश्चतुर्विंशतिमूर्तयः प्रागुक्ताः । प्रधानदेवतां गायत्रीद्वयस्यापि युगपदाह— **देवस्त्विति** ।। षूङ् प्राणिप्रसव इत्यस्मात् स्रष्टृत्वरूपसवितृपदप्रवृत्तिनिमित्तात् सवितृनामा हरिरेव देवः । न तु सूर्य इति तुशब्दार्थः । अज्ञरूढेर्निरवकाशयोगस्य प्रबलत्वादिति भावः ।। ४०, ४१ ।।

**अ.सं–** ध्याने वर्णादिविषयेऽपवादमाह– **अच्छेति** ।। धवलवर्ण इत्यर्थः । **अभयवरकरः** अभयमुद्रावरमुद्राभ्यां युतहस्तवानित्यर्थः। अनेन द्विभुजत्वं ज्ञायते। ततश्चतुर्भुजव्यतिरेकेण सर्वस्य 'नित्यनिःशेषशक्तिमान्'इत्यन्तस्य प्रणवमन्त्रध्यानस्यास्मिन् मन्त्रेऽन्यदित्यनेन सङ्ग्रह इत्युक्तं भवति ।। ३८ ।।

द्वादशार्णस्य पञ्चाङ्गन्यासमाह– **पदैरिति** ।। **व्यस्तैर्विभक्तैः** एकैकेनेत्यर्थः । **समस्तैर्मिलितैः** सर्वै पदैः मन्त्रपदैः पञ्चाङ्गानि हृदयादीनि न्यसनीयानि ज्ञेयानि । अत्र व्यस्तेषु वासुदेवाद्याश्चत्वारो देवताः समस्तेषु नारायणो ज्ञेयः । 'ॐ वासुदेवाय हृदयाय नमः । नमः सङ्कर्षणाय शिरसे स्वाहा । भगवते प्रद्युम्नाय शिखायै वौषट्। वासुदेवायानिरुद्धाय कवचाय हुम् । ॐ नमो भगवते वासुदेवाय नारायणायास्त्राय फट्' इति न्यासप्रकारः । द्वादशाक्षरस्य वर्णन्यासस्थानमाह– **अष्टेति** ।। **अष्टाक्षराणां** मूलमन्त्रस्याष्टवर्णानामुक्तेषु **स्थानेषु** पादजानुनाभिहृदयवाक्नासानेत्रशिरस्सु ऊर्वोर्बाह्वोश्चेति द्वादशस्थानेषु द्वादशाक्षरस्य द्वादशार्णान् न्यसेदित्यर्थः । यद्वा बाह्वोरूर्वेश्चेति यथाक्रममेवान्वयः । तेनास्मिन् मन्त्रे संहारन्यासेऽयं न्यासविशेष इति ज्ञेयम् । एतन्मन्त्रवर्णदेवताश्च द्वादशार्णानां केशवाद्याश्च देवता इत्यत्रोक्ताः ज्ञेयाः । 'ॐ ॐ केशवाय नमः पादयोः । ॐ नं नारायणाय नमः जानौ । ॐ मों माधवाय नमः नाभौ । ॐ भं गोविन्दाय नमः हृदये । ॐ गं विष्णवे नमः वाचि । ॐ वां मधुसूदनाय नमः नासायाम् । ॐ तें त्रिविक्रमाय नमः नेत्रयोः । ॐ वां वामनाय नमः शिरसि । ॐ सुं श्रीधराय नमः दक्षिणबाहौ । ॐ दें हृषीकेशाय नमः वामबाहौ । ॐ वां पद्मनाभाय नमः दक्षिणोरौ । ॐ यं दामोदराय नमः वामोरौ' इत्यादिप्रकारेण वर्णन्यासो ज्ञेयः । अयं तु संहारक्रमः ।

सृष्टौ शिरोक्षिनासास्ये हृन्नाभ्योर्जानुपादयोः ।
दक्षेतरभुजोर्वोश्च द्वादशार्णान् क्रमात् न्यसेत् ।। इति । स्थितौ-
शिरोऽक्षिनासास्ये पज्जान्वोर्नाभितो हृदि ।
दक्षेतरभुजोर्वोश्च द्वादशार्णान् क्रमात् न्यसेत् ।। इति ज्ञेयम् ।

अत्रापि 'वासुदेवादिकाः शुक्ले'त्यादिप्रकारेणाङ्गदेवतानां वासुदेवादीनां ध्यानं ज्ञेयम् । अक्षरदेवताध्यानं तु–

शङ्खचक्रगदाब्जेतः केशवः सूर्यसन्निभः ।
नारायणः साब्जगदाचक्रशङ्खो रविप्रभः ।।

माधवश्चक्रशङ्खाब्जगदेतो रविसप्रभः ।
गदाब्जशंखचक्रेतो गोविन्दो भास्करद्युतिः ।।

कञ्जकम्बुचक्रगदायुतो विष्णू रविप्रभः ।
सशङ्खचक्रगदाचक्रः सूर्याभो मधुसूदनः ।।

त्रिविक्रमो गदाचक्रशङ्खपद्मो रविप्रभः ।
वामनोऽरिगदापद्मशङ्ख उद्यद्रविप्रभः ।।

श्रीधरोऽरिगदाकम्बुपद्म उद्यद्रविप्रभः ।
सारिपद्मशङ्खगद्दो हृषीकेशोऽर्कसन्निभः ।।

पद्मनाभः साब्जचक्रगदाशङ्खो रविद्युतिः ।
दामोदरः शङ्खगदाचक्रपद्मो रविप्रभः ।। इत्युक्तप्रकारेण ज्ञेयम् ।।

गायत्रीमन्त्रस्य ऋष्याद्याह– **विश्वामित्र इति ।। सन्ध्यार्थे** व्याहृतिगायत्र्यां विश्वामित्र ऋषिः । **तदन्यत्र** अष्टमहामन्त्रमध्यप्रविष्टायां व्याहृतिरहितायां गायत्र्यां **प्रजापतिर्ब्रह्मा मुनिः** ऋषिः । **सष्टृत्वतः** जगत्सष्टिकर्तृत्वान्निमित्तात् सवितृनामा हरिः **देवता** प्रतिपाद्यः । 'सविता देवताऽग्निर्मुखं' इत्याद्युपनिषदुक्तप्रसिद्धसूर्य-देवताकत्वभ्रान्तिं परिहर्त्तुं **सष्टृत्वत** इति सवितृशब्दो हरौ निरुक्तः । अत्र यद्यपि गायत्र्याः प्रजापतिः मुनिरित्याद्येव वक्तव्यम् । न तु विश्वामित्र इत्यादि ।

अप्रकृतत्वात्। तथापि तावत्येवोक्ते गायत्र्याः 'गायत्री च्छन्दो विश्वामित्र ऋषिरित्यादि वाक्यविरोधः' इत्याशङ्का स्यात्। तत्परिहाराय तस्य गतिं वक्तुं **विश्वामित्रस्तु संध्यार्थे** इत्युक्तम्। न तु प्रकृतत्वाभिप्रायेणेति ज्ञेयम्। अष्टमहामन्त्रगतायाः गायत्र्याः व्याहृतिराहित्यन्तु गायत्र्युत्पत्तिप्रकरणे प्रमाणमुक्तं ज्ञेयम्। विश्वामित्रगायत्र्यास्तु सव्याहृतित्वं वराहपुराणचातुर्मास्यकल्प्ये स्पष्टम् ।। ४०,४१ ।।

**गु.दी.–** ध्यानमाह— **अच्छेति ।।** धवलवर्णः। **अमितद्युतिः** अपरिच्छिन्न-कान्तिः। पञ्चाङ्गान्याह— **पदैरिति ।।** मन्त्रस्योङ्कारादिभिश्चतुर्भिः पदैः समस्तेन पञ्चाङ्गानि। अयं वक्ष्यमाणः सर्वोऽपि न्यासः तत्तद्वर्णदेवताध्यानसाहित्येनैवेति, 'न्यसनीयं च तद्वर्णदेवताध्यानपूर्वकम्' इति (तं.सा.१-३६) पूर्वोदाहृतस्मृत्या ज्ञेयम्।

वर्णन्यासमाह— **अष्टाक्षराणामिति ।।** स्थानेषु पादमारभ्य कान्तेषु। अवशिष्टचतुर्वर्णानां न्यासस्थानमाह–**बाह्वोरिति ।।** विन्यसेत् द्वादशाक्षरवर्णानिति शेषः। तथा च 'ॐ नमो भगवते वासुदेवाय' इति मन्त्रप्रयोगः। मन्त्रार्थस्तु-समग्रैश्वर्यादिगुणवत्त्वाद्भगवान्। तस्मै वासुदेवाय। आच्छादयति सर्वमिति वासुः। 'वस आच्छादने' (धा.पा.१०२३) इत्यत उण्। वसति सर्वत्र इति वा। वस निवास इत्यत उण्। क्रीडादिगुणवत्त्वाद्देवः। तस्मै नम इति।

छादयामि जगद्विश्वं भूत्वा सूर्य इवाम्बुभिः।
सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम् ।। (गी.भा.उ.मो.ध.१०-३८)

इति गीताभाष्योदाहृतमोक्षधर्मवचनात् विश्वं समस्तं भूत्वा प्राप्येति तदर्थः ।।

गायत्र्या ऋष्यादीनाह— **विश्वामित्रस्त्विति ।। सन्ध्यार्थे** सन्ध्योपासनाङ्गगा-यत्र्याः विश्वामित्र ऋषिः। **तदन्यत्र तु** अष्टमहामन्त्रप्रविष्टगायत्रीजपे तु **प्रजापतिः** ब्रह्मा। हरिः **देवः** देवता। 'सविता देवता। अग्निर्मुखम्' इत्याद्युपनिष-द्विरोधशान्त्यै सवितृशब्दं हरौ निर्वक्ति— **स्रष्टृत्वत इति ।।** अत्र गायत्र्याः प्रजापतिर्मुनिरिति वक्तव्यम्। सत्यम् तावत्येवोक्ते 'विश्वामित्र ऋषिः'

इत्यादिवाक्यविरोध इति शङ्का स्यात्। तद्विरोधपरिहाराय वाक्यगतिं वक्तुं 'विश्वामित्रस्तु सन्ध्यार्थे'(तं.सा.१-४१) इत्युक्तम्, न तु प्रकृताभिप्रायेणेति द्रष्टव्यम् ।। ४०, ४१ ।।

**मङ्काली–** ध्याने वर्णादिविषयेऽपवादमाह— **अच्छेति ।।** धवलवर्ण इत्यर्थः । **अभयवरकरः** अभयमुद्रावरमुद्राभ्यां युतहस्तवानित्यर्थः । अनेन द्विभुजत्वं ज्ञायते । ततश्चतुर्भुजव्यतिरेकेण सर्वस्य 'नित्यनिश्शेषक्तिमान्' (तं.सा.१-२०) इत्यन्तस्य प्रणवमन्त्रध्यानस्यास्मिन् मन्त्रे अन्यत्तारवदित्यनेन सङ्ग्रह इत्युक्तं भवति ।।

द्वादशार्णस्य पञ्चाङ्गन्यासमाह— **पदैरिति ।। व्यस्तैर्विभक्तैः** एकैकेनेत्यर्थः। **समस्तैर्मिलितैः** सर्वैः पदैर्मन्त्रपदैः पञ्चांगानि हृदयादीनि न्यसनीयानि ज्ञेयानि । अत्र व्यस्तेषु वासुदेवाद्याश्चत्वारो देवताः । समस्तेषु नारायणो ज्ञेयः । 'ॐ ॐ वासुदेवाय हृदयाय नमः । ॐ नमः सङ्कर्षणाय शिरसे स्वाहा । ॐ भगवते प्रद्युम्नाय शिखायै वौषट् । ॐ वासुदेवाय अनिरुद्धाय कवचाय हुम् । ॐ ॐ नमो भगवते वासुदेवाय नारायणायास्त्राय फट्', इति न्यासप्रकारः । द्वादशाक्षरस्य वर्णन्यासस्थानमाह— **अष्टेति ।। अष्टाक्षराणां** मूलमन्त्रस्याष्टवर्णानामुक्तेषु स्थानेषु पादजानुनाभिहृदयवाङ्नासानेत्रशिरस्सु ऊर्वोर्बाह्वोश्चेति द्वादशस्थानेषु द्वादशाक्षरस्य द्वादशान्न्यासेदित्यर्थः । यद्वा बाह्वोरुर्वोश्चेति यथाक्रममेवान्वयः । तेनास्मिन्मन्त्रे संहारन्यासेऽयं न्यासविशेष इति ज्ञेयम् । एतन्मन्त्रवर्णदेवतास्तु द्वादशार्णानां 'केशवाद्याश्च देवताः' इत्यत्रोक्ताः ज्ञेयाः । 'ॐ ॐ केशवाय नमः पादयोः । ॐ नं नारायणाय नमः जानौ । ॐ मों माधवाय नमः नाभौ । ॐ भं गोविन्दाय नमः हृदये' इत्यादि वर्णन्यासो ज्ञेयः । अयं तु संहारक्रमः ।

सृष्टौ शिरोक्षिनासास्ये हृन्नाभ्योर्जानुपदयोः ।
दक्षेतरभुजोर्वोश्च द्वादशार्णान्क्रमान्न्यसेत् । इति ।

स्थितौ शिरोक्षिनासास्ये पज्जन्वोर्नाभितो हृदि ।
दक्षेतरभुजोर्वोश्च द्वादशार्णान्क्रमान्न्यसेत् । इति ज्ञेयम् ।

अत्रापि 'वासुदेवादिकाः शुक्ले'त्यादि प्रकारेणाङ्गदेवतानां वासुदेवादीनां ध्यानं ज्ञेयम्। अक्षरदेवताध्यानं तु-

शङ्खचक्रगदाब्जेतः केशवः सूर्यसन्निभः ।
नारायणस्साब्जगदाचक्रशङ्खो रविप्रभः ।। १ ।।

माधवश्चक्रशङ्खाब्जगदेतो रविसप्रभः ।
गदाब्जशङ्खचक्रेतो गोविन्दो भास्करद्युतिः ।। २ ।।

कञ्जकम्बुचक्रगदायुतो विष्णू रविप्रभः ।
शङ्खपद्मगदाचक्रः सूर्याभो मधुसूदनः ।। ३ ।।

गदारिशङ्खपद्मस्त्रिविक्रमः सूर्यसन्निभः ।
वामनोऽरिगदापद्मशङ्खोद्यद्रविप्रभः ।। ४ ।।

श्रीधरोऽरिगदाकम्बुपद्म उद्यद्रविप्रभः ।
सारिपद्मशङ्खगदो हृषीकेशोऽर्कसन्निभः ।। ५ ।।

पद्मनाभः साब्जचक्रगदाशङ्खो रविद्युतिः ।
दामोदरः शङ्खगदाचक्रपद्मो रविप्रभः ।। ६ ।।

एते श्लोका दक्षोच्चकरामारभ्य गणनाभिप्रायेण प्रवृत्ताः इत्युक्तप्रकारेण ज्ञेयम् ।।

गायत्रीमन्त्रस्य ऋष्याद्याह— **विश्वामित्र इति ।। सन्ध्यार्थे** सव्याहृति-गायत्रीमन्त्रे विश्वामित्र ऋषिः । **तदन्यत्र** अष्टमहामन्त्रप्रविष्टायां व्याहृतिरहितायां गायत्र्यां **प्रजापतिर्ब्रह्मा मुनिः** ऋषिः, **स्रष्टृत्वतो** जगत्सृष्टिकर्तृत्वान्निमित्तात् सविता नामा हरिः **देवो** देवता प्रतिपाद्यः । 'सविता देवता अग्निर्मुखं' इत्याद्युपनिषदुक्तप्रसिद्धसूर्यदेवताकत्वभ्रान्तिं परिहर्तुं **स्रष्टृत्वत** इति सवितृशब्दो हरौ निरुक्तः । अत्र यद्यपि गायत्र्याः प्रजापतिर्मुनिरित्याद्येव वक्तव्यम् । न तु विश्वामित्र इत्यादि । अप्रकृतत्वात् । तथापि तावत्येवोक्ते गायत्र्याः 'गायत्री छन्दो विश्वामित्रः ऋषिः' इत्यादिवाक्यविरोधः स्यात् । तत्परिहाराय **विश्वामित्र** इत्युक्तम् । न तु प्रकृतत्वाभिप्रायेणेति ज्ञेयम् ।

महाव्याहृतिहीना या चतुर्विंशतिवर्णका ।
गायत्री सैव गायत्री प्रोच्यते विबुधैरिह ।।

इति वाराहे अष्टमहामन्त्रान्तर्गतगायत्र्या व्याहृतिराहित्यमुक्तम् । इह अष्टमहामन्त्रमध्य इत्यर्थः ।। ४०,४१ ।।

गायत्रीमन्त्रध्येयरूपकथनम्

**तं.सा. प्रोद्यदादित्यवर्णश्च सूर्यमण्डलमध्यगः ।**
**चक्रशङ्खधरोऽङ्कस्थदोर्द्वयो ध्येय एव च ।। ४२ ।।**

**त. क.–** युगपदेव ध्यानमाह– **प्रोद्यदादित्य इति** ।। यद्यप्युद्यद्भास्वत्समाभास इत्येव सिद्धम् । तथापि तदंशमनूद्य सूर्यमण्डलेत्यादि विधानाददोषः । चोऽप्यर्थः । पूर्ववत् प्रोद्यदादित्यवर्णोऽपि सूर्यमण्डलमध्यग एव। न तु तारादिध्येयवत् 'अष्टपत्रे तु हृत्पद्मे' इत्यादिनोक्तहृदयमण्डलमध्यगः । तथा पूर्ववच्चक्रशङ्खगदापद्मधरः । किन्तु चक्रशङ्खधरोऽपि स्वाङ्कस्थदोर्द्वययुक्त एव ध्येय इत्यर्थः ।। ४२ ।।

**अ.सं.–** ध्येयदेवतालक्षणमाह– **प्रोद्यदिति** ।। **अङ्कस्थदोर्द्वयः** अङ्कस्थितोत्तानपाणिद्वयः ।। ४२ ।।

**गु.दी.–** ध्येयदेवतालक्षणमाह– **प्रोद्यदिति** ।। सूर्यमण्डलमध्यग इत्येव सम्बन्धः । उपरितनभुजाभ्यां शङ्खचक्रधरः । अङ्कस्थितोत्तानपाणिद्वयः ।। ४२ ।।

गायत्र्याः पञ्चाङ्गन्यासाक्षरन्यासयोः निरूपणम्
मातृकामन्त्रणां च च्छन्द आदिनिरूपणं विष्णुमन्त्रोद्धारश्च

**तं.सा. सताराश्च व्याहृतयो गायत्र्यङ्गानि पञ्च च ।**
**दोःपत्सन्धिषु साग्रेषु नाभिहृन्मुखकेषु च ।। ४३ ।।**

**वर्णन्यासश्च कर्तव्यस्तारवन्निखिलं स्मृतम् ।**
**पञ्चाशदक्षराणां च पुंसूक्तस्यापि सर्वशः ।। ४४ ।।**

**अनुष्टुभश्च त्रिष्टुप् च च्छन्दोऽस्य त्रिष्टुभोऽपि वा ।**
**विष्णुशब्दश्चतुर्थ्यन्तो हृदयेतः षडक्षरः ।। ४५ ।।**

**तारवत्सर्वमस्यापि श्यामो ध्येयो हरिः स्वयम् ।**
**वर्णा एव षडङ्गानि षण्योर्भेदयोगतः(भेदता मता) ।। ४६ ।।**

**पञ्चानुनाभिहृन्नासाकेषु न्यासश्च वर्णशः ।**
**एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः ।। ४७ ।।**

**त. क.**— युगपदङ्गन्यासमाह— **सताराश्चेति** ।। समासव्यासयोगेन व्याहृतयश्च-तस्रः, प्रणवश्चैकः । सतारा व्याहृतयः पञ्चमन्त्राः हृदयादिपञ्चसु न्यसनीया इत्यर्थः । चतुर्विंशत्यक्षरणां न्यासस्थानान्याह— **दोःपत्सन्धीति** ।। दोषौ च पादौ च तेषां सन्धयः साग्राः । दक्षभुजसन्धयश्चत्वारः । तदग्रं सर्वाङ्गुलिसमुदाय एकं स्थानम् । तथा च दक्षभुजसम्बन्धिस्थानानि पञ्च । एवं वामभुजसम्बन्धिन्यपि पञ्च । आहत्य विंशतिस्थानानि सम्पन्नाति । नाभिहृदयमुखशिरांसि चत्वारि गायत्र्या अक्षरन्यासस्थानानीत्यर्थः । छन्दोविचिकित्सायामाह— **तारवन्निखिलं स्मृतमिति** ।। च्छन्द इत्यर्थः । यद्यपि विशेषानुक्तौ सामान्यशास्त्रं प्रवर्तत इति सिद्धमेवेति पुनर्न वक्तव्यमेतत् । तथापि तस्यैव स्मरणं विस्मरणशीलं प्रति क्रियत इत्यदोषः । तदिदमुक्तम्— **स्मृतमिति** ।। अन्यथा ज्ञेयमित्यवक्ष्यत् ।

तारादिगायत्र्यन्तानां द्वादशाक्षरवर्जं गायत्रीच्छन्द उक्तम् । तन्मध्य-निविष्टमातृकामन्त्राणामुक्तिसौकर्याय ध्यानमात्रमुक्तम् । अङ्गन्यासोऽक्षरन्यासश्च द्वितीयादौ वक्ष्यते । अथ ऋषिच्छन्दसी वक्तव्ये इत्यत आह— **पञ्चाशदक्षराणां चेति** ।। तारवन्निखिलं स्मृतमित्यस्यानुकर्षणार्थश्चशब्दः । न केवलं छन्दो गायत्र्या एव तारवत्, किन्तु पञ्चाशदक्षराणां च निखिलमृषिच्छन्दश्चेति वा । अथ क्रमप्राप्तस्य पुरुषसूक्तस्य कानि ऋष्यादीनीत्यत उक्तन्यायं स्मारयति— **पुंसूक्तस्यापीति** ।। अत्रापि निखिलं स्मृतमित्यनुवर्तते । छन्दस्यपवादमाह— **सर्वश इति** ।। **सर्वशः** पुरुषसूक्तस्य समग्रस्यापि अनुष्टुभादिछन्दः ज्ञातव्यमित्यर्थः । अनुष्टुभशब्दः अकारान्तोऽस्तीति ज्ञायते ।

एवं पञ्चाङ्गन्यासवतां मन्त्राणामुत्पत्तिक्रममभिधाय षडङ्गमन्त्रेषु विष्णुमन्त्रस्य

प्राधान्यात् महामन्त्रप्रविष्टत्वाच्च तदुद्धारम् ऋष्यादिकं चाऽऽह– **विष्णुशब्द इति ।।** हृदयशब्दो नमःशब्दपरः । तथा च विष्णुशब्दोत्तरं चतुर्थी, तदुत्तरं च नमःशब्दः प्रयुक्तश्चेत् षडक्षरो विष्णुमन्त्रो निष्पन्न इत्यर्थः । अस्यापि मन्त्रस्य ऋष्यादिकं तारवदेव द्रष्टव्यम् । न तद्गवेषणे प्रयासः कर्तव्यः । तर्हि प्रधाने उद्यदादित्यवर्णो ध्येयः किमित्यतस्तदंशोऽपवादमाह— **श्याम इति ।।** प्रधाने नोद्यदादित्यवर्णः । किन्तु श्यामवर्णः । वर्णदेवतास्तु प्रदीपावर्ण एवेति सिद्ध्यति । विष्णुमन्त्रान्तर्गत-वर्णदेवतास्तु ग्रन्थान्तरादवगन्तव्याः । साक्षादनुक्तेस्तु प्रयोजनं वक्ष्यति । ननु श्यामो ध्येयो हरिरित्ययुक्तम्। हरिमन्त्रे तदनुपपत्तेरित्यत आह— **स्वयमिति ।।** विष्णुरेवेत्यर्थः । हरिशब्दस्तु विष्णुशब्दस्यानेकार्थत्वात्सन्देहनिरासायेति बोध्यम्।

अङ्गन्यासमन्त्रानाह— **वर्णा एवेति ।।** षडङ्गन्याससाधनानानि मन्त्रवर्णा एव । के ते वर्णा इत्यतः स्वयमित्यत्रापि सम्बन्धनीयम् । एतन्मन्त्रगता वर्णा इत्यर्थः । एवशब्देन मन्त्रान्तरेष्विवाङ्गन्यासे मन्त्रान्तरं न गवेषणीयमिति सूचयति । ननु 'विष्णुशब्दश्चतुर्थ्यन्तः' इत्यादिमन्त्रोद्धारशास्त्रपर्यालोचनया पञ्चैव वर्णाः सम्पद्यन्ते । न्यसनीयानि स्थानानि षट् । अतः कथमित्यत आह— **षणयोर्भेदयोगत इति ।।** षकारणकारयोः विश्लिष्टोच्चारणलक्षणभेद एव वर्णानां षट्त्वघटनायामुपायः । तस्मादित्यर्थः । यद्यपि श्लिष्टानां क्षकारदीनामेकत्वेन परिगणनमस्ति । तथापि गायत्रीप्रविष्टवर्णस्य विश्लेषमङ्गीकृत्य यथा चतुर्विंशत्यक्षरत्वमिहापीति भावः । अक्षरन्यासमाह— **पदिति ।।** पादजानुनाभि-हृदयनासिकाशिरस्सु यथाक्रमं विकारादिमकारान्तान् न्यसेदित्यर्थः । अत्र सर्वत्र अक्षरन्यासे गृहस्थादीनां व्युत्क्रमो ज्ञातव्यः । वचनं पूर्वमुदाहृतम् । नन्वस्तु तारदीनां विष्णुमन्त्रान्तानामुत्पत्तिक्रमः, अङ्गन्यासवर्णन्यासादिक्रमः, ऋषिदेवताच्छन्दश्च । ततः किं विधेयमित्यतो सत्रिसत्रन्यायेनाऽर्थवादिको जपविधिरून्नेय इत्यभिप्रायेण मन्त्रान् स्तौति— **एते त्विति ।।** तुशब्दश्चतुर्थे वक्ष्यमाणमन्त्रगणाद्वैशिष्ट्यमाह । तत्र हेतुः सूच्यते— **मूलमन्त्रा इति ।।** एते पूर्वेक्ता मन्त्रा वक्ष्यमाणसर्वमन्त्राणां विशिष्टाः, मूलमन्त्रत्वादिति प्रयोगोऽत्राभि-प्रेतः ।

ननु मूलमन्त्रत्वं हरिनारायणाष्टक्षरे प्रसिद्धम्। साक्षान्मूलरूपविशेषत्वात्। तत्कथं सर्वेषां मूलमन्त्रत्वमिति चेन्न। भूम्यादौ कालविशेषे देवक्यादि-मानुषदेहादिकं निमित्तीकृत्याभिव्यक्तानि महाप्रलयादर्वागेव तिरोहितानि यानि रूपाणि तान्यवताररूपाणि। यान्यादिसृष्टिमारभ्य महाप्रलयपर्यन्तमतिरोहितान्येव तानि मूलरूपाणीति व्यवस्थामाश्रित्याजादिमूर्तीनां मूलमूर्तित्वाङ्गीकरे बाधका-भावात्। यद्वा, नारायणाष्टाक्षरस्य साक्षान्मूलमूर्तिविषयत्वं तावत् सिद्धम्। 'आह देवो रमोत्सङ्गविलसत्पादपल्लवः' (तं.सा.१-२) इति प्रकृतस्य साक्षान्नारायणस्यैव 'ध्येयोऽहमीश्वरः' (तं.सा.१-१८) इत्यादिना ध्येयत्वेक्तेः। तथा चैवं ध्यानस्यैव विष्णुमन्त्रेष्वतिदिश्यमानत्वात् तेषामपि मूलमन्त्रत्वमर्थात्सिद्धम्। न च अजादिमूलमूर्तीनां तत्तन्मन्त्रेषु ध्येयत्वमस्ति। अन्यथा तल्लक्षणाद्युक्तिरसङ्गता स्यात्। तत्कथं नारायणमूर्तिध्यानमेवातिदिश्यत इति वाच्यम्। तेषामक्षरदेवतात्वेन ध्येयत्वेऽपि प्रधानमूर्तित्वेन तदभावात्। अष्टाक्षरस्यैव मूलमन्त्रत्वेन प्रसिद्धिस्तु आपाततोऽपि वक्ष्यमाणमन्त्राणामपि मूलमन्त्रत्वं स्यात्। न् हि मूलरूपान्नारायणाद्भिन्नो वराहादिमन्त्रे ध्येय इति। तत्राऽह— **विशेषत इति ॥** विशेषबलात् व्यवस्था पूर्वोक्तेति भावः ॥ ४३-४७ ॥

**अ.सं.–** गायत्र्याः पञ्चाङ्गन्यासमाह– **सतारा इति ॥ सताराः** सोंकारव्याहृतयः व्यस्तसमस्ताः इति। पञ्चपदानि **अङ्गानि** हृदयाद्यङ्गन्यासमन्त्रा इत्यर्थः। न्यासप्रकारस्तु व्याहृतिमन्त्रवत् ज्ञेयः। गायत्र्याः वर्णन्यासमाह– **दोःपत्सन्धिष्विति ॥** अत्रापि 'दोःपत्सन्धिषु' इत्यत्र पद्दोःसन्धिष्विति व्यत्यासः कार्यः। तथात्वे संहारन्यासो भविष्यति। यद्वा यथास्थित एवान्वयः। तेनास्मिन् मन्त्रेऽपि अयं न्यासविशेषो ज्ञेयः। एवं च **साग्रेषु** अङ्गुल्यग्रसहितेषु दोःसन्धिषु हस्तद्वयसन्धिषु। तथा साग्रेषु पत्सन्धिषु पादद्वयसन्धिषु चेत्येवं विंशत्सु नाभिहृदयमुखशिरस्सु चतुर्षु इति चतुर्विंशतिसङ्ख्याकेषु स्थानेषु तकारादिवर्णानां न्यासः कर्तव्य इत्यर्थः। सर्वमन्त्रेष्वपि अक्षरन्यासे ॐकारानुस्वारसहितानेव वर्णान् न्यसेत्— 'विन्यसेद्वर्णमेकैकं बिंद्वन्तं ध्रुववेष्टितम्' इत्युक्तेः। गायत्रीवर्णदेवताः 'चतुर्विंशतयोऽस्याः कथिता वर्णदेवताः' (१.१९) इत्यत्र उक्ताः

केशवाद्याः ज्ञेयाः । ततश्च वामपादाग्रमारभ्य शिरःपर्यन्तं 'ॐ तं केशवाय नमः, ॐत्सं नारायणाय नमः' इत्यादिप्रकारेण वर्णन्यासो ज्ञेयः । सृष्टौ तु–

दोःपत्सन्धिषु साग्रेषु कास्यहृन्नाभिषु क्रमात् ।
केशवादींस्तादिवर्णान् गायत्रादि न्यसेत्क्रमात् ।। इति ।

स्थितौ तु– 'दोःपत्सन्धिषु साग्रेषु शिरःके नाभिहृत्सु च' इति सङ्ग्रहः । तकारादिद्वादशवर्णदेवतानां केशवादीनां ध्यानं वासुदेवमन्त्रार्णदेवताध्यान-प्रकरणोक्तप्रकारेण ज्ञेयम् । स्यकारादिद्वादशवर्णदेवतानां सङ्कर्षणादीनां ध्यानं तु–

शङ्खाब्जारिगदासूर्यप्रभः सङ्कर्षणो विभुः ।
शङ्खचक्रकञ्जगदी वासुदेवो रविप्रभः ।।

प्रद्युम्नो रविभाः शङ्खदाब्जारिधरो हरिः ।
अनिरुद्धो गदाशङ्खपद्मचक्री रविप्रभः ।।

पद्मशङ्खगदाचक्री सूर्याभः पुरुषोत्तमः ।
रविप्रभो गदाशङ्खचक्राब्जातस्त्वधोक्षजः ।।

नृहरिः सूर्यभाः पद्मगदाशङ्खारिसंयुतः ।
सूर्याभोऽच्युतनामाब्जचक्रशङ्खगदायुतः ।।

जनार्दनश्चक्रशङ्खगदाब्जेतो रविप्रभः ।
उद्यदर्कनिभोपेन्द्रो गदाचक्राब्जशङ्खयुक् ।।

सारिपद्मगदाशङ्खो हरिः प्रोद्यद्रविप्रभः ।
उद्यदर्कनिभः कृष्णो गदापद्मारिशङ्खभृत् ।। इत्युक्तप्रकारेण ज्ञेयम् ।

मातृकामन्त्रस्य ऋष्यादीनाह– **तारवदिति** ।। पञ्चाशदक्षराणां मातृकामन्त्राणां **तारवत्** प्रणवमन्त्रवत् **निखिलम्** अन्तर्यामी ऋषिः दैवी गायत्रीच्छन्दः परमात्मादेवता व्याहृतीनां चतुष्टयं सत्यं चाङ्गानीति उद्यद्भास्वदित्यारभ्य नित्यनिःशेषशक्तिमानित्यन्तं ध्यानं चेत्यवं ऋष्याद्यखिलं स्मृतमित्यर्थः । उक्तं च योगदीपिकायाम्–

पञ्चव्याहृतिसत्यानि लिप्यङ्गान्यृषिपूर्वकम् ।

अन्तर्यामी च गायत्री परमात्मेति च न्यसेत् ।। इति । (७-७०, ७१)

अकारादिपञ्चाशद्वर्णानामजाद्याः पृथक् पृथक् देवताः वर्णसमुदायस्य तु परमात्मा देवतेति ज्ञापनाय **परमात्मा देवता** इत्युक्तमिति ज्ञेयम् । केचित्तु ध्यानस्य प्रागुक्तत्वात् निखिलशब्दस्य सङ्कोचः कार्य इत्याहुः । पुंसूक्तस्य ऋष्यादिकमाह– **पुंसूक्तस्यापीति** ।। पुंसूक्तस्यापि **सर्वशः** सर्वं ऋष्यादिकं तारवत्स्मृतमित्यन्वयः। अन्तर्यामी ऋषिः पुरुषनामकनारायणो देवता उद्यद्भास्वदिति ध्यानम् सत्यपदान्तव्याहृतिचतुष्टयं पञ्चाङ्गानीति भावः ।।

पुरुषसूक्तस्य छन्दोविषयेऽपवादमाह– **अनुष्टुभ इति** ।। **अस्य** पुरुषसूक्तस्यानुष्टुभः च्छन्दांसीति शेषः । त्रिष्टुप् इति च च्छन्दः । षोडशर्चस्य पुरुषसूक्तस्याद्याः पञ्चदशऋचः अनुष्टुप्च्छन्दोबद्धाः । षोडशी ऋक् त्रिष्टुप्छन्दोबद्धेति भावः । अत एव **अनुष्टुभ** इति बहुवचनं **त्रिष्टुप्** इति एकवचनम् । तथा आद्यानामेवानुष्टुप्त्वम् । अन्त्यायास्त्रिष्टुत्वमिति ज्ञापनाय **अनुष्टुभश्च त्रिष्टुप् च** इति निर्दिष्टवान् । इदन्तु त्रिष्टुभ एकत्वं ऋक्शाखागतपुरुषसूक्तस्यैवेति ज्ञातव्यम् । यजुःशाखागतपुरुषसूक्तस्य तु पञ्चदशर्चानन्तरं त्रिष्टुभां बहुत्वमित्याह– **त्रिष्टभोऽपि चेति** । आद्याः पञ्चदशानुष्टुभः अन्त्यास्तिस्रः त्रिष्टुभ इत्यर्थः । तेनाष्टादशर्चं पुरुषसूक्तमित्युक्तं भवति । केचित्तु द्वाविंशर्चं पुरुषसूक्तमित्याहुः । **वा**शब्दो व्यवस्थितविकल्पे । ऋक्शाखास्थपुरुषसूक्तस्य पञ्चदशर्चानन्तरमेकैवान्त्या त्रिष्टुप्छन्दः । यजुःशाखास्थस्य तु पञ्चदशर्चानन्तरं बह्व्यस्त्रिष्टुभ इति । अनेन शाखाद्वयगतपुरुषसूक्तच्छन्दःकथनेन तत्तच्छाखिभिः तत्तच्छाखास्थमेव पुरुषसूक्तं जप्तव्यमिति प्रतीयते ।

इदानीं षष्ठस्कन्धे नारायणवर्मणि 'ॐ नमो नारायणय' इति नारायणमन्त्रे ॐकारस्यावयवत्वोक्तिवत् 'ॐ विष्णवे नमः' इति विष्णुमन्त्रेऽपि ॐकारस्य अवयवत्वोक्तेरत्रापि ॐकारस्य विष्णुमन्त्रावयवत्वप्रतीतिं वारयितुं मन्त्राणामतिगोप्यत्वात्सङ्केतेन विष्णुमन्त्रस्वरूपमाह–**विष्णुशब्द इति** ।। **हृदयेतः**

इत्यत्र मनोवाचकहृदयशब्देन तद्विकारप्रह्वीभावो लक्ष्यते। तेन प्रह्वीभाववाचको नमःशब्दो लक्ष्यते। एवं लक्षितलक्षणया हृदयशब्दो नमःशब्दपरः। हृदयशब्दस्य नमःशब्दार्थकत्वमुक्तम् चतुर्थस्कन्धतात्पर्येऽपि (४.८.६१)– मन्त्रहृदयेन मन्त्रेण नमःशब्देन चेति मन्त्रहृदयेनेति भागवतपदमनूद्य 'मन्त्रेणेति हृदयेनेत्यस्य नमः शब्देन च' इति व्याख्यातम्। तथाच **चतुर्थ्यन्तः** चतुर्थीविभक्त्यन्तविष्णुशब्दः विष्णवे इति शब्द इति यावत्। **हृदयेतः** हृदयेन नमःशब्देन इतः युक्तः षडक्षरः विष्णुमन्त्र इत्यर्थः। तथाचैवं मन्त्रनिष्पत्तिः **'विष्णवे नमः'** इति। षडक्षर इत्युक्त्या भागवते उक्तो विष्णुमन्त्रः ॐकारसाहित्येन सप्ताक्षरः। 'न्यसेद्धृदय ॐकारम्' इत्यादिनां ॐकारादिसप्तवर्णनां न्यासोक्तेः। अष्टमहामन्त्रगणे पीठितोऽयं विष्णुमन्त्रस्तु ॐकाररहितस्तद्भिन्नः षडक्षर इत्युक्तं भवति। यथा विश्वामित्रगायत्रीब्रह्मगायत्रीमन्त्रयोर्व्याहृतिसाहित्यासाहित्याभ्यां भिन्नयोर्मध्येऽष्ट-महामन्त्रगणे व्याहृतिरहितस्यैव ग्रहणम्। तथोङ्कारसाहित्यासाहित्याभ्यां भिन्नयोर्विष्णुमन्त्रयोर्मध्येऽष्टमहामन्त्रगणे ॐकाररहितस्यैव ग्रहणमिति भावः ॥

अस्य मन्त्रस्य ऋष्यादिकमाह– **तारवदिति ॥ अस्यापि सर्वं** ऋषिः च्छन्दोदेवताध्यानं चेत्येतत्सर्वं **तारवत्** प्रणववज्ज्ञेयम्। न केवलं मातृकादेरित्यपिशब्दार्थः। अन्तर्यामी ऋषिः दैवीगायत्री च्छन्दः विष्णुर्देवता उद्यद्भास्वदिति ध्यानमिति भावः। ध्याने वर्ण एव विशेषः। अन्यत्तारवत्सर्वमित्यभिप्रायेणाह– **श्याम इति ॥ श्यामः** इन्द्रनीलसमकान्तिः। मन्त्रस्य अङ्गन्यासमन्त्रानाह– **वर्णा एवेति ॥ षडङ्गानि** हृदयादिषडङ्गन्यासमन्त्रा इत्यर्थः। मन्त्रगतवर्णानां पञ्चत्वात्कथं षडङ्गानीत्युक्तमित्यत आह– **षणयोरिति ॥** इत्यत्र **षणयोः** षकारणकारयोः **भेदयोगतः** भेदः पृथक्करणं तल्लक्षणोपायेनेत्यर्थः। 'भेदिता मता' इति पाठे तु भिद्यते विश्लिष्यत इति भेदः कर्तरि पचाद्यच् तस्य भावः भेदता विश्लेषः। विभाग इति यावत्। **मता** संमतेत्यर्थः। अत्र 'तारवत्सर्वम्' इत्युक्तेर्विश्वादय एव विष्णुषडक्षरमन्त्र-वर्णदेवता ज्ञेयाः। ततश्च 'ॐ विं विश्वाय हृदयाय नमः। ॐ षं तैजसाय शिरसे स्वाहा। ॐ णं प्राज्ञाय शिखायै वौषट्। ॐ वें तुर्याय कवचाय हुम्। ॐ नं

आत्मने नेत्राभ्यां वषट्। ओं मं अन्तरात्मने अस्त्राय फट्' इति षडङ्गन्यासप्रकारः ।।

वर्णन्यासस्थानमाह– **पञ्चान्विति ।।** पादजानुनाभिहृदयनासिकाशिरस्सु षट्सु स्थानेषु **वर्णशः** मन्त्रगतैः षड्भिर्वर्णैर्न्यासश्च कार्यः । 'ॐ विं विश्वाय नम इति पादयोः । ॐ षं तैजसाय नमः जान्वोः । ॐ णं प्राज्ञाय नमः नाभौ' इत्यादिप्रकारेण वर्णन्यासः । अयं संहारक्रमः । सृष्टौ तु–

के नसौ हृदि नाभौ च जानुनोः पादयोः क्रमात् ।
षडक्षरस्य वर्णान् षट् न्यसेत् षणविभागतः । स्थितौ तु ।
शिरोनासाहृत्पदेषु जानुनाभ्योर्न्यसेत्क्रमात् ।। इति ।

एवं प्रणवादीनां जपानुष्ठानेऽङ्गकलाप उक्तः । इदानीमेते मन्त्राः जप्या इत्याह– **एते त्विति ।।** तुशब्दोऽवधारणे । 'एतज्जापात्समस्तानां' (तं.सा.१-४८) इत्युत्तरत्रानुवादात्। अत्र जप्या इति ग्राह्यम्। ततश्च **एते तु** एते प्रणवादयोऽष्टमहामन्त्रा एव **विशेषतः** अन्यमन्त्रापेक्षया अतिशयेन अत्यावश्यकत्वेनेति यावत्। 'जप्याः' इत्युक्त्या संध्यात्रयेऽपि अष्टमहामन्त्राणां जपो नियमेनानुष्ठेय इति सूचितं भवति । तदुक्तं माधवतीर्थस्मृतौ–

सन्ध्यासु मन्त्रा इम एव जप्यास्तारो यतीनां प्रथमो हि मन्त्रः ।
सावित्र उक्तश्च तथा परेषां द्विजन्मनां शश्वदनिन्दितानाम् ।। इति ।

स्मृतौ 'इम एव' इत्येवकारेण एतेषां नियतमन्त्रत्वमुच्यते। न त्वन्यमन्त्राणामजप्यत्वमिति ज्ञेयम्। नन्वन्येषामपि मन्त्राणां सत्वादेत एव नियमेन त्रिसंध्यासु जप्या इत्येत्कुत इत्यत आह– **सर्वमन्त्राणामिति ।।** एते त्विति पदद्वयमावर्त्तनीयम्। अत्र तुशब्दो हेत्वर्थे। **तु** यस्मात् **एते** प्रणवादयः अष्टमहामन्त्राः **सर्वमन्त्राणां** चतुर्थाध्याये वक्ष्यमाणानां वराहादिमन्त्राणां **मूलमन्त्राः** मूलभूतमन्त्राः सर्वे मन्त्राः अष्टमहामन्त्रव्याख्यानरूपा इति भावः । तस्मादेत एव नियमेन जप्या इति ज्ञेयम्। उक्तं च वासुदेवस्मृतौ–

तारोऽष्टवर्णो द्विषडक्षरोऽन्यः षडक्षरो व्याहृतयः क्रमेण ।
पञ्चाशदर्णाः सवितुश्च पत्नी पुंसूक्तमष्टाविति मूलमन्त्राः ।।
इति ।। ४३-४७ ।।

**गु.दी.–** ओङ्कारसहितव्याहृतिचतुष्टयैः पञ्चाङ्गान्याह— **सतारश्चेति ।।** अक्षरन्यासमाह– **दोःपदिति ।।** अग्रसहितेषु दक्षिणवामभुजपादसन्धिषु नाभौ हृदि मुखे के च **वर्णन्यासः** गायत्रीवर्णन्यासः कार्यः। प्राणायामप्रकारस्तु 'गायत्र्या दशतारकैः' (तं.सा.२-५) इति द्वितीयाध्याये वक्ष्यते। मन्त्रप्रयोगस्तदर्थश्च प्रसिद्धः ।।

प्रणवमन्त्रे प्रोक्तानृष्यादीन् मातृकामन्त्रस्य पुरुषसूक्तस्य चातिदिशति— **तारवदिति ।। पञ्चाशदक्षराणां** मातृकामन्त्राणां **निखिलम्** ऋषिर्देवता छन्दोऽङ्गन्यासश्चेति सर्वं **तारवत्** प्रणवमन्त्रस्येव स्मृतम्। अन्तर्यामी ऋषिर्नारायणो देवता दैवी गायत्री छन्दः सत्यान्तान्यङ्गानि 'तादृग्रूपाः' (तं.सा.१-२२) इति ध्यानम्। तारवदित्येतत्पुंसूक्तस्यापीत्यत्रापि सम्बध्यते। **सर्वशः** सर्वस्य पुंसूक्तस्य **निखिलं** छन्दोव्यतिरिक्तमृष्यादिकं तारवत् स्मृतमित्यर्थः। पुरुषसूक्तस्य छन्द आह— **अनुष्टुभ इति ।।**

षोडशसङ्ख्याकऋगात्मकस्यास्य पुरुषसूक्तस्य मध्ये पञ्चदशर्चामनुष्टुभश्छन्दांसि। 'यज्ञेन यज्ञं' इत्यन्त्यायाः त्रिष्टुप्छन्दः। अत एव 'अनुष्टुभः' इति बहुवचनं 'त्रिष्टुप्'इत्येकवचनम्। अत एवानुक्रमणिकायां 'नारायण ऋषिः पुरुषो देवताऽनुष्टुप्छन्दः अन्त्या त्रिष्टुप्छन्दः' इत्युक्तम्। पुंसूक्तस्य षोडशऋगात्मकत्वनियमस्तु ऋक्शाखिनामेव। याजुषाणां त्वष्टादशसङ्ख्याकऋगात्मकत्वम्। तेषां पक्षेऽप्याद्यपञ्चदशसङ्ख्याकानामनुष्टुभ इति पूर्ववदेव। इतरासां त्रिष्टुभः छन्दांसीत्याह— **छन्दांसि त्रिष्टुभोऽपि वेति ।।** वाशब्दो व्यवस्थितविकल्पे। ऋक्शाखिनां पक्षे त्रिष्टुप् छन्दः। याजुषाणां पक्षे त्रिष्टुभ इति ।।

**अयमत्र पुरुषसूक्तार्थः ।** षोडशर्चमिदं सूक्तं वर्गत्रयात्मकम्। तत्र

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ।। (भा.१-३-१)

त्युक्तदिशा पुरुषरूपाद्ब्रह्माण्डादिसृष्टिं 'तस्माद्विराडजायत'(पु.सू.५) त्यादिना वक्तुं 'न च कर्तुः करणम्' इति (ब्र.सू.२-२-४३) सूत्रोक्तरीत्या हस्तपादादिमच्छरी-

रहीनस्य स्रष्टृत्वायोगात् तदुपयोगितया दिव्यविग्रहवत्त्वादिमहिमानमादावाह— **सहस्रशीर्षेति** प्रथममन्त्रेण । पुरुषशब्दो हि 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनासंवृतम्' (बृ.उ.२.५.१८) इति श्रुतौ पूर्षु देहेषु पुरि हृदये शयो वर्तमान इति । 'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः' (भा.२-४-२३) इति द्वितीये एकादशस्कन्धे च सर्वान्तर्यामितया पुरुषपदवाच्यत्वोक्तेः । 'पुरुषविधमपि चैनमधीयते' (ब्र.सू.१.२.२६) इति सूत्रकृता पुरुषसूक्तसमाख्यया वैश्वानरविद्यायाः वैष्णवत्वोक्तेश्च विष्णौ मुख्यः ।

सहस्रशब्दोऽत्रानन्तवाची । 'परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणः' (ब्र.सू.भा. १.२.२६) इति श्रुतेः । तथा चानन्तानि शीर्षाणि अनन्तान्यक्षीणि अनन्ताः पादा यस्य सः, तथा । अनन्तशीर्षादिरित्यर्थः । पादशब्दस्य 'सङ्ख्यासुपूर्वस्य' (पा.सू.५-४-१४०) इत्यन्तलोपः । नन्वेवम् 'अशरीरः प्रज्ञात्मा' (ऐ.उ.२.२.४) इत्यादिश्रुत्या 'अरूपवदेव हि तत्प्रधानत्वात्' इति (ब्र.सू.३-२-१४) सूत्रेण च विरोध इति चेत्, न । श्रुत्यादेः प्राकृतशरीराभावपरत्वात् । 'विकरणत्वान्नेति चेत्तदुक्तम्' (ब्र.सू.२-१-३२) इति सूत्रेणापि पाणिपादादिकरणाभावेन स्रष्टृत्वानुपपत्तिमाशङ्क्याप्राकृतकरणानामुक्तेश्च । अतोऽस्य पुरुषस्य प्रकृत्यतीतत्त्वादप्राकृतविग्रहोऽयं पुरुष इति भावेन तस्य प्रकृत्यतीतत्वमाह— **स भूमिमिति** ।। 'यत्किञ्च जगत्यां जगत्' इति (ईश.उ.१) ईशावास्ये जगतीशब्दस्येवात्र भूमिश्ब्दः सर्वाधारत्वसाम्येन वा, भवत्यत्र जगदिति भवतेरौणादिक मिकन्प्रत्ययान्ततया योगेन वा प्रकृतिपरः । प्रकृतिमिति वाच्ये भूमिमित्युक्तिर्भूम्युपलक्षितपञ्चभूतात्मकोऽपि विग्रहो लौकिकानामिव नेति वक्तुम् । भूतातीतत्वस्यापि प्रदर्शनाय । **सः** पुरुषः **भूमिं** प्रकृतिं पञ्चभूतानि वा **अत्यतिष्ठत्** अतिक्रम्यावर्तत । सर्वदा तदतिक्रान्तस्तदस्पृष्ट एव वर्तत इत्यर्थः । 'आदित्यवर्णं तमसः परस्तात्' (श्वेत.उ ३.८) इति श्रुतेः । अतीत्यातिष्ठदित्यत्र कियद्दूरमित्याकाङ्क्षायामुक्तं **दशाङ्गुलमिति** । दशाङ्गुल्यः परिमाणमस्येति दशाङ्गुलम् । 'दशेति वै सर्वम्' (ऐ.उ. २.२.४) इत्यैतरेयश्रुतौ सर्वसङ्ख्यानां दशसङ्ख्यान्तर्भावस्योक्तेरपरिमितदेशकालव्यवधानेनात्यतिष्ठदित्यर्थः । कस्मिन्नपि देशे काले च प्रकृत्यनतिक्रमो नेति भावः । तत्र हेतुः– **विश्वतो वृत्त्वेति** ।

भूमिमित्यन्वेति । प्रकृतिं **विश्वतः** सर्वत्र बहिरन्तः **वृत्वा** आवृत्य । प्रकृतेः सत्तापरिमाणादिप्रदत्वहेतुना प्रकृतिं व्याप्येत्यर्थः। तां वशीकृत्येति यावत् । अतोऽत्यतिष्ठदिति । तथा च भाष्यं 'प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वादरूपवदेव'(ब्र.सू.भा.३-२-१) इति । एतेन प्राक्पुरुषपदेन सर्वप्राणिहृदयगुहास्थत्वेनान्तर्यामितया पुरुषत्वोक्त्या प्राप्ताऽव्याप्तत्वशङ्काऽप्यपास्ता ।।

यद्वा 'तेनेदमावृतं विश्वं वितस्तिमधितिष्ठता' (भा.२-६-१५) इति द्वितीय-स्कन्धे षष्ठाध्याये, 'वितस्तिमात्रं हृदयमास्थाय व्याप्नुते जगत्' (भा.ता.२-६-१५) इति तत्तात्पर्योक्तगारुडस्मृत्या चोक्तरीत्या दशाङ्गुलं दशाङ्गुलपरिमाणं वितस्तिमात्रपरिमितं प्राणिनां हृदयं स पुरुषः **अध्य(त्य)तिष्ठत्** अधिष्ठितवान् । कथम्? **भूमिं** प्रकृत्यादिजगत् **विश्वतः** सर्वत्र **वृत्वा** आवृत्य व्याप्येति यावत् । व्याप्तिमविहायैव हृदयदेशमाश्रितवानित्यर्थः । 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या' (छा.उ.३-२-९) इति श्रुतेरिति ।।

एवं पूर्वमन्त्रे सर्वकारणप्रकृतिनियन्तृत्वादिमहिमोक्तः । द्वितीयमन्त्रे प्राकृतसर्वनियन्तृत्वादिमाहात्म्यमाह– **पुरुष एवेदं सर्वमिति ।।** इदं प्रमाणप्रमितं **भूतम्** अतीतं यत् **यच्च भव्यं** आगामि । यच्च भवदित्युपलक्ष्यम् । वर्तमानमित्यर्थः । यदित्युक्तेस्तदिति लभ्यते । तत् सर्वं **पुरुष एव** राजा राष्ट्रमितिवत् पुरुषाधीनमेव । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' (प्र.सं.१-१५-२५) इति स्मृतेः,

पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् ।
इत्युच्यते तदीयत्वान्न तु सर्वस्वरूपतः ।। (भृ.भा.३-४)

इति प्रथमे बृहद्भाष्योक्तभारतवचनाच्च ।

ननु कथमस्य सूक्तस्य विष्णुप्रतिपादकता 'यत्पुरुषेण हविषा' (पु.सू.६) इति 'अबध्नन् पुरुषं पशुम्' (पु.सू.१५) इत्यादिना पशुपुरुषस्यैवात्र प्रतिपाद्यत्वप्रतीतेः । 'पुरुष एवेदं सर्वम्' (पु.सू.२) इत्युक्तसर्वात्मकत्वस्य देहयोगवशाद्भूतभव्यत्वादेश्च पशाविव विष्णावयोगाच्च । न च तत्प्रतिपादनं

व्यर्थम्। तस्य पशुपतेर्महादेवस्य प्रीतिहेतुत्वादिति चेत् न। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' (पु.सू.१) इति 'एष ह्येवाचिन्त्यः परः परमो हरिः' (ब्र.सू.भा.१-२-२६) इत्येतत्सूक्तप्रतीकपूर्वं तस्य वैष्णवत्वोक्तिपरश्रुतिविरोधात्। 'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' (ब्र.सू.भा.१-२-२६) इति स्कान्दस्मृत्या च विरोधात्।

यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम्।
न तथा सर्ववेदाश्च वेदाङ्गानि च नारद ॥ (ब्र.सू.भा.१-२-२६)

इति स्मृतावितरव्यवच्छेदपूर्वकं वेदादिभ्योऽतिशयेन विष्णोरेव पुरुषसूक्तप्रतिपाद्यत्वोक्त्या तन्मध्यगतस्य 'यत्पुरुषेण हविषा' (पु.सू.६) इत्यादेरन्यथाव्याख्येयत्वाच्च। तथा च व्याख्यास्यामः। 'पुरुष एवेदं सर्वम्' इत्यत्र (पु.सू.२) विष्ण्वसाधारणलिङ्गश्रवणाच्च। तथा हि– सुधोक्तरीत्या 'पत्यादिशब्देभ्यः' (ब्र.सू.१-३-४३) इत्यत्र टीकोक्तरीत्या च भूतभव्यादिकं संसारिप्राणिजातम्, तेषां देहद्वारा भूतजातत्वाद्युपपत्तेः, **पुरुष एव** पुरुषाधीनमेव। **यत्** यस्मात्। **अन्नेन** द्वितीयार्थे तृतीया। अन्नमदनीयं मरणशीलं संसारिजीवजातं **अतिरोहति** अतिक्रामति। अमुक्ताधिपतिरिति यावत्। तस्मात् **अमृतत्वस्य** भावभवित्रोरभेदात् मुक्तवर्गस्यापीशानः। **उत**शब्दोऽप्यर्थः। संसारे स्वाधीनं जगद्यदि मुक्तौ स्वाधीनतां जह्यात् तदा प्रेक्षावांस्तान्न मोचयेत्। अतो मुक्तावपि तदधीनमेवेति पुरुष एवेदमिति पूर्वार्धोक्तममुक्तेशत्वं यदन्नेनेत्यन्नहेतुतयाऽनूद्य उतेति वाक्ये मुक्तवर्गेशानत्वं विधीयत इत्येवार्थो न सर्वात्मकत्वं येन पशुपुरुषोऽत्रोच्यत इति। मुक्तामुक्तस्वामित्वस्य 'मुक्तानां परमा गतिः' (वि.स.ना.श्लो.२) 'अमृतस्यैष सेतुः' (आ.उ.२-६) 'मुक्तोपसृप्यव्यपदेशात्' इति (ब्र.सू.१-३-२) श्रुतिसूत्रादिभिर्विष्ण्वेकनिष्ठत्वेन तल्लिङ्गत्वात्। 'सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्' इति (भा.२-६-१७) द्वितीयस्कन्धेऽन्नेनेत्येतदन्नमिति हेतुतयाऽनूद्य सोऽमृतस्येशान इति मुक्तेशत्वोक्तेश्च ॥

**एतावानस्य महिमेति** तृतीया। अस्यामृचि प्रागुक्तं मुक्तवर्गेशानत्वं

कथमित्यतो मुक्तप्राप्यलोकेशत्वमहिमोच्यते। **अस्य** पुरुषस्य सहस्रशीर्षत्व-विश्वव्यापित्वमुक्तामुक्तसर्वनियन्तृत्वादिरूपप्रागुक्तो **महिमा एतावान्** इति काकुः स्वरः, एतावानेव नेत्यर्थः। किन्त्वित्यत आह– **अतो ज्यायानिति ॥ अतः** प्रागुक्तमहिम्नोऽपि **ज्यायान्** ज्ञानानन्दबलैश्वर्याप्राकृतलोकेशत्वादिभिर्ज्यायान् श्रेष्ठः। कथमित्यतो व्यनक्ति– **पाद इति ॥ अस्य** प्रकृतस्य पुरुषनाम्नो हरेः **विश्वा** विश्वानि। 'सुपां सुलुक्...' (पा.सू.७-१-३९) इत्यादिसूत्रेण प्रथमाविभक्ते-राकारादेशः। **भूतानि** चेतनाचेतनवस्तूनि जीवराशिरेव वा एकः **पादः** एकोंऽशः। तदीयज्ञानानन्दबलैश्वर्यादिमाहात्म्यस्य चतुर्धा विभक्तस्य चतुर्थो भागो यावान् तावदानन्दबलाद्युपेतानि सर्वभूतानीत्यर्थः। एतच्चतुर्गुणपरिमितज्ञानानन्दादिमान् हरिरिति यावत्। भिन्नमेव विश्वं तत्पादपरिमितसामर्थ्यं पादतयोच्यते। 'पाद इत्येकदेशपरिमितं चतुर्भागबलवद्भिन्नं च' (ब्र.सू.भा.१-१-२६) इति भाष्यात्। एतच्च 'बुध्यर्थः पादवत्' (ब्र.सू.३-२-३४) इति सूत्रोक्तदिशा अपरिमितज्ञाना-नन्दादिमतो हरेर्महिम्नो बुध्यारोहार्थमेवोक्तं ध्येयम्। 'ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्' इति स्मृतेः। तर्हि विश्वचतुष्टयसमो हरिरित्यागतमिति न वाच्यं, यतोऽत्र पादशब्देन विश्वं विष्णुसामर्थ्यैकदेशपरिमितमित्युच्यते। न चतुर्थांशपरिमितम्। कुत एतत्? 'सुवर्णं कोशम्' (ब्र.सू.भा.उ.श्रुतिः १.१.२६) इति श्रुतौ अमृतस्य मुक्तैः पूर्णां तां विष्णोः कलामेकदेशपरिमितामाचक्षते। पादपदेन पुरुषसूक्ताद्यागमाः। 'यतः सा पदं चतुर्भागसाम्यं न लेभे किल' (ब्र.सू.भा.टी.१-१-२७) इति स्फुटमभिधानात्। **अस्य** पुरुषस्य**अमृतं** देहतोऽपि नाशरहितं **त्रिपात्** पादत्रयं नारायणो वासुदेवो वैकुण्ठ इति रूपत्रयम्। **दिवि** चित्प्रकृत्यात्मकत्वेन द्योत्यमाने, एकवचनं बहुवचनार्थे। लोकत्रयविवक्षायां लक्षयोजनोच्छ्रितान्त-रिक्षादुपरितनलोकानां द्युशब्दार्थत्वेनान्तरिक्षादुपरितनत्वेन वा द्युशब्दवाच्येषु क्रमाच्छ्वेतद्वीपानन्तासनवैकुण्ठाख्यलोकेषु तिष्ठतीत्यर्थः।

भिन्नपादाः सर्वजीवास्तस्य सादृश्यमात्रतः।
स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ॥
नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ॥ (छा.भा.३-१२-१)

इति छान्दोग्यभाष्योक्तेः। 'सुदर्शनास्त्रं भगवान् प्रायुङ्क्त दयितं त्रिपात्' इति (भा.३-२०-२२) तृतीयस्कन्धोक्तरीत्या त्रिपाच्छब्दस्य विष्णवैकनिष्ठत्वान्नान्यस्यात्र प्रतिपाद्यतेति ज्ञेयम् ॥

**त्रिपादूर्ध्व उदैत्पुरुष** इति चतुर्थी। पूर्वं विश्वा भूतानीति भिन्नजीवराशेरौपचारिकपादत्वमुक्तम्। अत्र पुनर्मुख्यमेव चतुर्थपादं तस्य प्रागनुक्तचतुर्थपादस्थितत्वादिमहिमान्तरं चोच्यते। त्रयः पादा अस्येति **त्रिपात्** प्रागुक्तरूपत्रयवान् पुरुषः। **दिवी**ति पदं पञ्चम्यन्तत्वेन विपरिणम्यानुवर्तते। पृथिव्यन्तरिक्षरूपलोकद्वयोपलक्षणमेतत्। **दिवः** द्युलोकोपलक्षितलोकत्रयात् **ऊर्ध्वो** बहिः बहिष्ठश्वेतद्वीपादिलोकत्रये **उदैत्** नित्योदितो वर्तत इत्यर्थः। सार्वकालिकोऽयं लङ्। **अस्य** पुरुषस्य **पादः** स्वरूपभूतं **पुनरपरं** रूपम् **इह** प्रागुक्तभिन्नपादेषु रूपेषु भूतेषु तन्नियामकत्वेन **अभवत्** वर्तत इत्यर्थः। तदुक्तं द्वितीयस्कन्धतात्पर्ये—

अनन्तासनवैकुण्ठनारायणपुराणि तु।
त्रीणि धामानि विष्णोस्तु त्रिलोकाद्बहिरेव तु ॥(भा.ता.२-६-१९) इति।

यद्वा दिवि इत्यनुवृत्तस्य द्युभ्य इत्यर्थः। ऊर्ध्व इत्यस्योन्नत इत्यर्थः।

पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम्।
दिवीन्द्रसदनं चैव तत्परे तु दिवः परः ॥ (छा.उ.भा.३.२.४)

इति छान्दोग्यभाष्योक्तस्मृत्या द्युशब्दवाच्येभ्यः मेरुसूर्यमण्डलेन्द्रसदनेभ्यः क्रमात् श्वेतद्वीपानन्तासनवैकुण्ठानामुन्नतत्वेन तत्स्थ(तत्रस्थ)नारायणवासुदेववैकुण्ठाख्यत्रयात्मकतया त्रिपात्पुरुषः **ऊर्ध्वः** द्युभ्यः उन्नतः **उदैत्** सदा उदितोऽभिव्यक्तो वर्तत इत्यर्थः। एवं च लोकत्रयविवक्षयाऽन्तरिक्षादुपरितनेषु लोकेषु श्वेतद्वीपादिषु स्थितत्वेन पूर्वं द्युस्थत्वोक्तावपि इह स्मृत्युक्तद्युशब्दार्थेभ्यः ऊर्ध्वत्वोक्तिरविरुद्धा। तदाह सूत्रकारः 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' (ब्र.सू.१-१-२७) इति। श्वेतद्वीपादौ नित्याभिव्यक्ततयाऽवस्थानं देवादीनां सेवाद्यर्थं तत्प्राप्तय इति ज्ञेयम्। 'नारायणपरा देवा एवं तान्प्राप्नुवन्ति च' इति (भा.ता. २-६-१९) तात्पर्योक्तेः। पादोऽस्येत्यस्य तु

स एवान्यस्वरूपेण शक्रलोकसमीपगः ।
इज्यो यज्ञपुमान्नामा ज्ञानिनां गृहिणां पदम् ।।

यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यगः ।
आदित्यमण्डलस्थस्तु ज्ञानिनां ब्रह्मचारिणाम् ।। (भा.ता. २.६.१९)

इति ब्रह्माण्डस्मृत्युक्तरीत्या **अस्य** त्रिपात्पुरुषस्य **पुनः पादः** अन्यद्रूपम् **इह** दिवि त्रिलोक्यन्तः मेरुसूर्यमण्डलेन्द्रलोकसमीपस्थवैश्वानरलोकध्रुवलोकेषु चतुर्षु क्रमाद्वानप्रस्थब्रह्मचारिगृहस्थयतिभिर्ज्ञानिभूतैः पूज्यः सन् तेषामाश्रयतया **अभवत्** अवर्तत सदा वर्तत इत्यर्थः। महिमान्तरमाह— **तत इति ।।** तत इत्यनन्तरं ज्यायानित्यनुकर्षो वा, पादोऽस्येत्यादिनोक्तहेतुतया तत इत्यनुवादो वा, पूर्वोक्तमाहात्म्यादपि ज्यायान् त्रिपात्पुरुष इति वा, ततो हेतोरिति प्रागुक्तोपसंहारो वा । **विष्वगिति ।।** विविधं स्रष्टुमञ्चतीति वा, विविधस्थानेषु श्वेतद्वीपादिषु सुष्ठु अञ्चति व्यक्ततया तिष्ठतीति वा, सूर्यमण्डलादिविविधस्थानेषु ज्ञानिवानप्रस्थप्रभृतिभिः सुस्तुततया रूपान्तरेणावस्थिततया वा विष्वक्शब्दितः त्रिपात्पुरुषः विविधप्रजासु सुरनरतिर्यगादिसर्वप्राणिषु **अक्रामत्** आक्रान्तवान्। तत्र सर्वत्र व्याप्तो वर्तत इत्यर्थः। किञ्च **साशनानशने अभि** साशनं चानशनं च साशनानशने। अनशना देवाः। साशनास्तदितरविद्वज्जना ऋष्यादयः। एकवचनं समुदायाभिप्रायम्। , तदुभयसमुदायम् **अभि** प्रति अभिव्याप्येति यावत् । **व्यक्रामत्** विशेषेणाऽक्रम्य स्थितवानिति । तदुक्तं द्वितीयस्कन्धतात्पर्ये—

त्रिपात्स एव भगवान् सर्वप्राणिषु संस्थितः ।
निरन्नेषु च विद्वत्सु त्रिदशेष्वितरेषु च ।। इति । (भा.ता.२.६.२०)

यद्वा विष्वक् त्रिपात् पुरुषः **साशनानशने** चेतनाचेतनेऽभिव्याप्य तन्नियन्तृतयेति यावत्, व्यक्रामदित्येकान्वयतया योज्यम् ।।४।।

**तस्माद्विराळजायतेति** पञ्चमी। महिमान्तरमुच्यते। **तस्मात्** प्रागुक्त-महिमावतः पुरुषात्, स्वर्णमयतया विशेषेण राजत इति विराट्शब्दितं ब्रह्माण्डं **अजायत** आरभ्यत। ततो **विराजः** अण्डाद् **अधि** अण्डमभिव्याप्य विराण्णामा

**पुरुषः** चतुर्मुखोऽजायत। तथा विराण्णामा ब्रह्मा **तस्मात्** पुरुषाद्धरेः नाभिपद्माद्रूपान्तरेणाजायत भौतिकदेहेन्द्रियादियुक्तः सन्नुदभूदित्यर्थः। **तस्मात्** कारणाद् **विराजः** चतुर्मुखात् **पुरुषः** पूर्वप्रकृतपुरुषशब्दमुख्यार्थो हरिरत्यधिक इत्यावृत्य योज्यम्। **स जातः** चतुर्मुखः पश्चाज्जात इति योज्यम्। **भूमिं** भूम्युपलक्षितसर्वलोकस्थशङ्करपूर्वकाशेषजीवजातम् **अथो पुरः** पूर्वं जातं ब्रह्माण्डं तदभिमानिनश्च **अत्यरिच्यत** अतिरिच्यावर्तत, तेषामधिपतिरभूदित्यर्थः। तदुक्तं तात्पर्ये—

तस्माद्धरेरण्डमभूदण्डादपि चतुर्मुखः ।
स विराण्णामकस्तस्मादधिको हरिरेव तु ॥

अण्डाज्जातस्य तस्यान्यद्रूपं पश्चादभूद्धरेः ।
तदोभयात्मको जज्ञे ब्रह्मा लोकपितामहः ॥
तदैव सोऽतिरिक्तोऽभूत् शर्वपूर्वावरान् जनान् ॥ (भा.ता. २-६-१९) ।

इति पौरुषे सूक्ते प्रथमो वर्गः ॥

द्वितीयवर्गे आद्या ऋक् **यत्पुरुषेण हविषेति** (पु.सू.६)। तदा बाह्ययज्ञसाधनानामभावात् तत्सिध्यर्थं मानसयज्ञेन भगवन्तमाराधितवन्तो देवा इत्युच्यते। **यत्** यदा। येन पुरुषेणेति वा। तथात्वे तमित्यग्रेतनतच्छब्देनान्वयः। **पुरुषेण हविषा** मनसा सङ्कल्पितेन चतुर्मुखाख्येन **पशुरूपेण हविषा** यज्ञं विष्णुमुद्दिश्य 'यज्ञो विष्णुर्देवता' (ब्र.सू.भा.उ.श्रुतिः १.१.२६) इति श्रुतेः। **यज्ञं** यागकर्मेत्यप्यर्थः। देवा **अतन्वत** अकुर्वत। तदा **अस्य** यज्ञकर्मणो **वसन्तो** वसन्तर्तुः **आज्यमासीत्** आज्यत्वेन सङ्कल्पितवन्तः। एवमग्रेऽपि। ग्रीष्मर्तुरिध्म आसीत्। शरदृतुः पुरोडाशरूप हविरासीदित्यर्थः।

अथ द्वितीया- **सप्तास्यासन्निति। अस्य** मानसयज्ञस्य गायत्र्यादिसप्तच्छन्दांसि परिधय **आसन्** अभवन्। आहवनीयाग्नेस्त्रयः परिधयः इतरवेदिगतास्त्रयः आदित्यश्च सप्तमः परिधिः परिधिप्रतिनिधिरूपः। 'यः पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्ति' इति श्रुतेः। एते आदित्यसहिताः सप्त परिधयः

सप्तच्छन्दोरूपाः । तथा समिधः **त्रिःसप्त** त्रिगुणितसप्तसङ्ख्याकाः एकविंशतिः कृताः । 'द्वादशमासाः पञ्चर्तवो त्रयः इमे लोकाः असावादित्य एकविंशः' इति श्रुतेः एकविंशतिपदार्थाः त्रिःसप्त समिधः इध्मत्वेन कृताः । **यत्** यदा देवा **यज्ञं** विष्णुं प्रति तमुद्दिश्य मनसा यज्ञं **तन्वानाः** कुर्वाणाः **पशुं** पशुत्वेन भावितं पुरुषं चतुर्मुखम् **अबध्नन्** यूपे नियोजितवन्तः । तदा सप्तास्यासन्निति योजना । अस्य मन्त्रस्य एतत्सूक्तोपान्त्यत्वेन बह्वृचां पाठेऽपि पाठक्रमादर्थक्रमस्य बलवत्त्वेन तदर्थस्यात्र सङ्गतत्वाद्याजुषाणामत्रैव पाठाच्चायं मन्त्रोऽत्र व्याख्यातः ।

बह्वृचां पाठक्रमे तु **तं यज्ञमिति** ऋक् द्वितीया । **तं यज्ञं बर्हिषि प्रौक्षन्निति । यज्ञं** यज्ञसाधनभूतम् । यूपे मनसा बन्धनात्पशुत्वेन कल्पितं वा, 'स जातः' (पु.सू.५) इत्यादिना प्रसक्तं वा पुरुषम् । मनसा **बर्हिषि** दर्भसंस्तरे । यद्वा बर्हिरिति यज्ञनाम । यज्ञे **प्रौक्षन्** अद्भिः सेचितवन्तः । 'उक्ष सेचने' (धा.पा.६५७) । सेचनपर्यग्निकरणादिसंस्कारं कृतवन्तः । परमपुरुषव्यावृत्त्यर्थ-मुक्तम् **अग्रतो जातं पुरुषमिति** । हरेः प्रथमतो जातमित्यर्थः । **तेन** पुरुषरूपेण पशुना । **ये देवाः साध्या ऋषयश्च** ते सर्वे । यज्ञमित्यनुषङ्गः । **यज्ञम्** इज्यत्वेन हेतुना यज्ञनामकं प्राक् पुरुषपदेन प्रकृतं विष्णुं **अयजन्त** आराधितवन्तः । यद्वा

> विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना ।
> **अयजन्मानसे यज्ञे पितरं प्रपितामहः** ।। (गी.भा. ४.२५)

इति चतुर्थगीताभाष्योक्त्याऽत्र **मन्त्रेषु** पशुपुरुषो रुद्रो ध्येयः । ब्रह्मा यजमानः देवा ऋत्विजः ।

ततश्चायमर्थः । 'विराजोऽधि पुरुषः' इत्यस्य **विराजः** चतुर्मुखात् **अधि** 'रुद्रं समाश्रिता देवाः' (म.भा.ता.नि.२-१६६) इत्युक्तेर्देवादिभ्योऽधिकः सन् **पुरुषो** रुद्रोऽजायतेत्यप्यर्थो ध्येयः । अधीत्युक्तिः ज्येष्ठसूनुत्वसूचनाय । स जात इत्यादेर्यथासम्भवं पूर्ववदर्थः। **यत्पुरुषेण** रुद्ररूपेण हविषा देवा ब्रह्मादय इति वा । ब्रह्मेत्युपलक्ष्य ब्रह्मा देवाश्चेति वा । पुरुषं जातमग्रत इत्यस्य अग्रतो जातं पुरुषं रुद्रं चतुर्मुखाद्देवेभ्यः प्रथमतो जातं ज्येष्ठपुत्रमित्यर्थः । शिष्टं प्राग्वत् ।।

तृतीया **तस्माद्यज्ञात्सर्वहुत** इति । मानसयज्ञेनाराधिताद्यज्ञनामकात्पुरुषाद्बाह्य-यज्ञसाधनादिपदार्था जाता इत्युच्यते । सर्वैर्हूयते हविरादिदानेनाराध्यते सर्वैरुपजीव्यत इति वा **सर्वहुत्** । 'हु दानादनयोः' (धा.पा.१०८३) इत्यतः क्विप् । 'ह्रस्वस्य पिति कृति तुक्' इति (पा.सू.६-१-७१) तुक् । **तस्मात्सर्वहुतः यज्ञात्** यज्ञनामकाद्धरेः सकाशात् । तथा सर्वैः हूयते आहूयते भगवान् अस्मिन् यज्ञे स यज्ञः **सर्वहुत्** तादृशात्, **तस्मात्** प्राक्प्रकृतान्मानसयज्ञान्निमित्तात् **पृषदाज्यं** दधिमिश्रितं यज्ञसाधनमाज्यं द्रव्यं **सम्भृतं** सम्पादितमुत्पन्नमित्यर्थः । तथा **वायव्यान्** वायुदेवताकाञ्छ्वेतपश्वादीन् अन्तरिक्षाद्वायुना पतितान्कूर्मादीन्वा । **आरण्यान्** अरण्ये भवान् हरिणप्रभृतीन् । ये च **ग्राम्याः** ग्रामे भवाः गवाश्वादयस्तांश्च पशून् **चक्रे** कृतवान् । स यज्ञनामा सर्वहुत्पुरुष इति विपरिणामेनान्वयः ॥

**तस्माद्यज्ञात्सर्वहुत** इति चतुर्थऋक् । यज्ञसाधानद्रव्योत्पत्तिमुक्त्वा मन्त्रोत्पत्तिरथोच्यते । सर्वहुतः यज्ञादिति प्राग्वत् । **ऋचो जज्ञिरे** । 'जनी प्रादुर्भावे' (धा.पा.११४९) । तद्बुद्धिस्थाः सृष्टिकाले ब्रह्मादीन् प्रत्युच्चारिता इत्यर्थः । **सामानि जज्ञिरे, छन्दांसि** गायत्र्यादीनि **जज्ञिरे** भगदुच्चारणेन व्यक्तिमगमन्नित्यर्थः । यजुरजायतेत्यप्येवं ध्येयम् । 'तदुत्पत्तिवचश्चैव भवेद्व्यक्तिमपेक्ष्य तु । 'अवान्तराभिमानानां देवानां वा व्यपेक्षया' (वि.त.नि.उ.ब्रह्माण्डवचनम्) इत्युक्तदिशा अवान्तरऋगाद्यभिमानिदेवानां जन्मापेक्षया वा जज्ञिर इत्याद्युक्तिरिति ध्येयम् ।

'सर्ववेदाभिमानित्वात् श्रीर्ब्रह्माणी च भारती' (ऋ.भा.श्लो.३८) इत्युक्तश्रीदेव्याः नित्यत्वादवान्तरेत्युक्तम् । छन्दोभिमानिन्यस्तु

गायत्री बृहती चैव ताः सर्वा गरुडस्तथा ।
ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप्स्वाहेति चोच्यते । (ऋ.भा.श्लो.४१)

इत्यादिना ऋग्भाष्योक्तदिशा ध्येयाः ॥

पञ्चमी **तस्मादश्वा अजायन्तेति** । पुनरत्र बाह्याश्वमेधादियागसाधनानि

द्रव्याणि प्राक् सामान्यत उक्तान्यप्यत्र विशिष्योच्यन्ते। **तस्मात्** प्रागुक्तात् यज्ञनामकात्पुरुषात् **अश्वा** अजायन्त। **ये के चोभयादतः** ऊर्ध्वाधोभागयोरुभयत्र दन्तवन्तोऽश्वतरीगर्दभप्रभृतयस्ते व्यजायन्त। गावोऽपि तस्माज्जज्ञिरे। अजा अवयश्च तस्माज्जाताः। 'तस्मात्' इत्यनेकवारोक्तिरन्यस्य स्वातन्त्र्येण हेतुत्वनिरासाय तात्पर्यद्योतनार्था। हेत्याश्चर्ये प्रसिद्धौ वा ॥ इति द्वितीयो वर्गः ॥

तृतीयवर्गे आद्या **यत्पुरुषं व्यदधुरिति** ॥ पूर्वं सामान्यतो मानसयज्ञाराधितात्पुरुषाद्बाह्ययज्ञसाधनादिपदार्थजनिमुक्त्वा अङ्गेभ्यः सृष्टान् प्रश्नपूर्वकमाह — **यदित्यादिना ॥ यत्** यं यदिति वा। **पुरुषं व्यदधुः** 'देवा यज्ञमतन्वत' इति प्रागुक्तमानसयज्ञे विशेषेणोद्देश्यतया **अदधुर्धृ**तवन्तः मनसा ध्यातवन्तः। तदा **कतिधा** केन प्रकारेण **व्यकल्पयन्** विकल्पितवन्तः मनसा विविधतया कल्पितवन्तः। **किं** किञ्जनकाङ्गत्वेन ध्यातवन्तः? इत्यर्थः। तदेव किञ्चिद्व्यनक्ति— **मुखमिति ॥ अस्य** पुरुषस्य मुखं **किमासीत्**? किञ्जनकमुच्यते? **बाहू च कौ**? किञ्जनकावुच्येते? ऊरू च कौ? किञ्जनकावुक्तौ? **पादाविति।** कावित्यनुषज्यते। किञ्जनकावुच्येते इत्यर्थः ॥

द्वितीया **ब्राह्मणोऽस्य मुखमासीदिति** ॥ पृष्टस्योत्तरमत्रोच्यते। **अस्य** पुरुषस्य **मुखं ब्राह्मण आसीत्** मुखाद्ब्राह्मणजात्याक्रान्त **आसीदु**दपद्यतेत्यर्थः। 'स ब्राह्मण्याभिमानवान् ब्रह्म' (बृ.भा.अ१-अव्याकृतब्राह्मणम्) इति। 'क्षत्रजात्यभिमानी तु पवनः' (बृ.भा.अ१-अव्याकृतब्राह्मणम्) इति। 'वैश्यजात्यभिमानी च नासिक्यो वायुरूर्जितः। शूद्राभिमानी च निर्ऋतिः' (बृ.भा.अ१-अव्याकृतब्राह्मणम्) इति प्रथमेऽव्याकृतब्राह्मणे बृहद्भाष्योक्तदिशा तत्तज्जात्यभि-मानी वाऽत्र ब्राह्मणादिशब्देन ग्राह्यः। **बाहू** बाहुभ्यां **राजन्यः** क्षत्रियः **कृतः** उत्पन्नः। वैश्य इति यत् तत् **ऊरू** ऊरुभ्यां जातम्। **यद्वैश्यः** यो वैश्यः **तत्** सः ऊरुभ्यां जात इति वा। **पद्भ्यां** पादाभ्यां **शूद्रः** अजायतेत्यर्थः। पद्भ्यामित्याद्युक्तिबलात् सर्वत्रोक्तदिशा पञ्चमी ध्येया।

यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।

तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ।। (ब्र.सू.भा.१-२-२६)

इति नारदीयवचनोक्तरीत्याऽभेदोक्तिसमाधिर्ध्येयः ।।

तृतीया **चन्द्रमा मनसो जात इति** ।। अत्र तु देवसृष्टिरुच्यते । **मनस** इति पञ्चमी । **अस्येति** पुरुषवाचिपदमाकृष्यते । ततश्चास्य मनसोऽस्य **चक्षोः** चक्षुषोऽस्य मुखाद् इत्यादिरूपेणान्वेति । प्राग्ब्राह्मणो मुखादित्युक्तम् । नैतावदेव किन्तु इन्द्रश्चाग्निश्चाजायतेति प्रत्येकमन्वयः । **प्राणात्** श्वासात् वायुरजायत । 'श्वासैजदळकव्रातः' (भाग.१२-८-२३) इति भागवते भगवतः श्वासोक्तेः । **वायुः** मुख्यवायुः प्रवहो वा ।।

चतुर्थी **नाभ्या आसीदिति** ।। देवसृष्टिरुक्ता पूर्वत्रात्र तु लोकसृष्टिरुच्यते । **नाभ्या** इत्यपि पञ्चमी । अत्रान्तरिक्षादिपदैः साभिमानिलोकग्रहः । **समवर्तत** अजायतेत्यर्थः । पद्भ्यां भूमिः समवर्तत । श्रोत्राद्दिशः समवर्तन्तेत्यर्थः । तथा पद्भ्यां भूमिरित्यादिवत् । **लोकान्** भूम्यन्तरिक्षद्युलोकेभ्योऽन्यान् पातालादीनेकादश लोकान् पादतलाद्यङ्गजातत्वेन अकल्पयन् देवाद्याः 'पातालमेतस्य हि पादमूलम्' (भा.२-१-२६) इति भागवतोक्तेः ।

**सप्तास्यासन्निति** पञ्चमी ऋक् 'ग्रीष्म इध्मः शरद्धविः' (पु.सू.६) इत्यनन्तरमेव सङ्गतत्वात् तत्रैव व्याख्याता । अत्रैव व्याख्येयत्वपक्षे तु, प्रागुक्तयज्ञसाधनावशिष्टसाधनान्याहेति गमनिका ज्ञेया ।।

षष्ठी **यज्ञेन यज्ञमयजन्तेति** (पु.सू.१६) ।। यज्ञकरणेन देवाः पुरुषार्थभाजो जाता इत्युच्यते । देवत्वयोग्याः मनुष्याः ज्ञानकर्मात्मकेन **यज्ञेन यज्ञं** भगवन्तं पुरुषमयजन्त । **ततः** तेन ज्ञानपूर्वककर्मणा **तानि** दैवतानि स्वस्वपदेषु **प्रथमानि** मुख्यानि **धर्माणि** धारकाणि । 'धृञ् धारणे' (धा.पा.९००) इति धातुः । **ते** देवत्वयोग्या मनुष्याः ज्ञानपूर्वकभगवदाराधनरूपयज्ञेन देवत्वं प्राप्य स्वस्वपदस्थाः सन्तः तपनवर्षणादिना मुख्यतो लोकनियामका आसन्नित्यर्थः । **ते** पुनः **महिमानो** महात्मानो देवाः स्वस्वपदाधिकारावसाने **नाकम्** अकं सुखविरोधि

दुःखं तन्नेति नाकं, नञो लोपाभावः, नसमासो वा, पूर्णसुखात्मकं मोक्षं **सचन्ते**, 'षच समवाये' (धा.पा.९९७), प्राप्नुवन् । **ह** इति प्रसिद्धौ । **यत्र** मोक्षे **पूर्वे** पूर्वस्मिन् कल्पे । यद्वा पूर्व इति प्रथमा । पूर्वतनाः पूर्वकल्पे मुक्ता इति यावत् । **साध्याः** साध्यादिदेवाः **सन्ति**, तन्नामकमिति पूर्वेणान्वयः । पौरुषे सूक्ते तृतीयो वर्गः ।।

अत्र सूक्ते यजुःशाखायां 'तथा लोका अकल्पयन्' इति (पु.सू.१४) मन्त्रानन्तरं मन्त्रद्वयं पठ्यते ।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते ।।

धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ।। इति ।

यः **धीरः** धीमान्, बुद्धिमानिति यावत् । **सर्वाणि रूपाणि** वाच्यार्थभूतवस्तूनि **विचिन्त्य** निर्माय **नामान्यपि कृत्वाभिवदन्** तैर्नामभिर्व्यवहरन् **आस्ते** नामरूपात्मकं प्रपञ्चं कृत्वा य आस्ते **एतं महान्तं** देशकालगुणापरिच्छिन्नम् । **तमसः** प्रकृतेः **पारे** दूरे **स्थितं** प्रकृतिबन्धहीनम् । **आदित्यवर्णं** प्रकाशमानं पुरुषमहं जानामीति मन्त्रद्रष्टृवचनम् ।

**धाता** चतुर्मुखः, **पुरस्तात्** पूर्वं **यं** पुरुषं प्रागुक्तमहिमवन्तं **उदाजहार** उदाहृतवान् इन्द्रादिदेवान्प्रत्युपदिदेश । **शक्रः** इन्द्रः **प्रविद्वान्** प्रकर्षेण जानन् **चतस्रः प्रदिशः** तत्रत्यजनान् प्रति **उदाजहार** सर्वदिक्षु प्रख्यापितवान् । **तं** पुरुषम् **एवं** सहस्रशीर्षत्वादिमहिमवत्त्वप्रकारेण **इह** लोके **विद्वान्** जानन् **अमृतो** मुक्तो भवति । **अन्यः पन्थाः** ज्ञानादन्यो मार्गः उपायो **अयनाय** मोक्षाय **न विद्यते** नास्ति । तदाह सूत्रकारः 'विद्यैव तु निर्धारणात्' (ब्र.सू.३-३-४८) इति । इति तन्त्रसारटीकायां पुरुषसूक्तार्थः समाप्तः ।।

मन्त्राणामतिरहस्यत्वाद्विष्णुमन्त्रं सङ्केतेनोद्धरति– **विष्णुशब्द इति ।।** मन्त्रशास्त्रे हृदयशब्दस्य नमःशब्दे रूढिः । हृदयेतः नमःशब्दयुक्तः । तथा च

**'विष्णवे नमः'** इति मन्त्रनिष्पत्तिः। **अस्य** विष्णुमन्त्रस्यापि **सर्वम्** ऋष्यादिकं तारवत्। **श्यामः** इन्द्रनीलसमाभासो मेघश्यामो वा। विष्णुमन्त्रस्य षडङ्गन्यासमाह— **पदिति** ॥ ननु वर्णपञ्चकस्य षडङ्गन्यासः कथमित्यत आह— **षणयोरिति** ॥ भेदो विश्लेषस्तदाख्योपायतः। **वर्णशः** षड्भिर्वर्णैः पादादिषु न्यास इत्यर्थः। सर्वव्यापित्वाद्विष्णुः। 'विषॢ व्याप्तौ' (धा.पा.१०९५) इत्यतः क्नुः। विष् अस्मात् क्नुप्रत्यये 'लशक्वतद्धिते' (पा.सू.१-३-८) इति ककारलोपे 'रषाभ्यां नो णः समानपदे' (पा.सू.८-४-१) इति नस्य णत्वे कित्त्वाद्गुणाभावे च विष्णुरिति रूपम्। सर्वहृदयेऽन्तर्नियामकत्वेन प्रविष्टत्वाद्वा विष्णुः। 'विश प्रवेशने' (धा.पा.१४२५) इत्यतः क्नुः षत्वं च। 'व्याप्तौ मे रोदसी पार्थ'(गी.भा.१०-२१) इत्यादि मोक्षधर्मवचनात्। तस्मै तदुद्देशेनेति यावत्। नमः मनआदेः प्रावण्यमस्त्विति मन्त्रार्थः।

एवमष्टमहामन्त्रानुक्त्वा तत्रादरजननाय तन्माहात्म्यकथनपूर्वकमुपसंहरति— **एते त्वित्यादिना** ॥ एते प्रणवाद्याः अष्टमन्त्राः **सर्वमन्त्राणां** पीठावरणदेवता-मन्त्राणां तथा वराहादिमन्त्राणां **मूलमन्त्राः** व्याख्येयमन्त्रा इत्यर्थः। सर्वे मन्त्रा अष्टमहामन्त्रव्याख्यानरूपा इति भावः। यद्वा **मूलमन्त्राः** कारणमन्त्राः। अष्टमन्त्रजपादेव सकलमन्त्रजापको भवतीत्यर्थः। **विशेषतः** मुख्यतः ॥ ४३-४७॥

**मङ्कली–** गायत्र्याः पञ्चाङ्गन्यासमाह— **सतारा इति** ॥ **सताराः** सोङ्कारा व्याहृतयः व्यस्तसमस्ता इति पञ्चपदानि अङ्गानि हृदयाद्यङ्गन्यासमन्त्रा इत्यर्थः। न्यासप्रकारस्तु व्याहृतिमन्त्रवद्धेयः। गायत्र्या वर्णन्यासमाह— **दोःपदिति** ॥ अत्रापि दोःपत्सन्धिष्वित्यत्र पदोः सन्धिष्विति व्यत्यासः कार्यः। तथात्वे संहारन्यासो भविष्यति। यद्वा यथास्थित एवान्वयः। तेनास्मिन्मन्त्रेऽप्ययं न्यासविशेषो ज्ञेयः। एवं च **साग्रेषु** अङ्गुष्ठाग्रसहितेषु **दोःपत्सन्धिषु** पादद्वयहस्तद्वयसन्धिषु इत्येवं विंशत्सु नाभिहृदयमुखशिरस्सु चतुर्ष्विति चतुर्विंशतिसङ्ख्याकेषु स्थानेषु तकारादीनां वर्णानां न्यासः कर्तव्य इत्यर्थः। 'विन्यसेद्वर्णमेकैकं बिन्द्वतं ध्रुववेष्टितं' इत्युक्तेः सर्वमन्त्रेष्वपि अक्षरन्यासे

ॐकारानुस्वारसहितानेव वर्णान् न्यसेत्। गायत्रीवर्णदेवताश्चतुर्विंशन्मूर्तयोऽस्या इति प्रागेवोक्ताः केशवाद्याः ज्ञेयाः। ततश्च वामपादाग्रमारभ्य शिरःपर्यन्तं 'ॐ तं केशवाय नमः ॐ त्सं नारायणायनमः' इत्यादि प्रकारेण वर्णन्यासो ज्ञेयः। सृष्टौ तु-

दोःपत्सन्धिषु साग्रेषु कास्य हृन्नाभिषु क्रमात्।
केशवादींस्तादिवर्णान्गायत्र्या हि न्यसेत् क्रमादिति।

स्थितौ तु-

दोःपत्सन्धिषु साग्रेषु शिरः के नाभिहृत्सु च। इति सङ्ग्रहः।

तकारादिद्वादशवर्णदेवतानां केशवादीनां ध्यानं वासुदेवमन्त्रार्णदेवता-ध्यानप्रकारेण ज्ञेयम्। स्यकारादिद्वादशवर्णदेवतानां संकर्षणादीनां ध्यानं तु

शङ्खाब्जारिगदी सूर्यप्रभः सङ्कर्षणो विभुः।
शङ्खचक्रकंजगदी वासुदेवो रविप्रभः ॥ १ ॥

प्रद्युम्नो रविभाः शङ्खगदाब्जारिधरो हरिः।
अनिरुद्धो गदाशङ्खपद्मचक्री रविप्रभः ॥ २ ॥

पद्मशङ्खगदाचक्री सूर्याभः पुरुषोत्तमः।
रविप्रभो गदाशङ्खचक्राब्जेतो ह्यधोक्षजः ॥ ३ ॥

नृहरिः सूर्यभाः पद्मगदाशङ्खारिसंयुतः।
सूर्यभोऽच्युतनामाब्जचक्रशङ्खगदायुतः ॥ ४ ॥

जनार्दनश्चक्रशङ्खगदाब्जेतो रविप्रभः।
उद्यदर्कनिभोपेन्द्रो गदाचक्राब्जशङ्खयुक् ॥ ५ ॥

सारिपद्मगदाशङ्खो हरिः प्रोद्यद्रविप्रभः।
उद्यदर्कनिभः कृष्णो गदापद्मारिशङ्खभृत् ॥ ६ ॥ इति ज्ञेयम्।

मातृकामन्त्रस्य ऋष्यादीनाह— **तारवदिति ॥** पञ्चाशदक्षराणां मातृका-मन्त्राणां **तारवत्** प्रणवमन्त्रवत् **निखिलं** अन्तर्यामि ऋषिः। दैवीगायत्री छन्दः।

परमात्मा देवता। व्याहृतीनां चतुष्टयं सैत्यं चाङ्गानि उद्यद्भास्वदित्यारभ्य नित्यनिश्शेषशक्तिमानित्यंतं ध्यानं चेत्येवं ऋष्याद्यखिलं स्मृतमित्यर्थः। अकारादिपञ्चाशद्वर्णानां अजाद्याः पृथक् पृथक् देवताः वर्णसमुदायस्य तु परमात्मा देवतेति ज्ञातव्यम्। पुरुषसूक्तस्य ऋष्यादिकमाह– **पुंसूक्तस्यापीति ॥** पुरुषसूक्तस्यापि **सर्वशः** सर्वं ऋष्यादिकं तारवत्स्मृतमित्यर्थः। अन्तर्यामी ऋषिः पुरुषनामा नारायणो देवता उद्यद्भास्वदिति ध्यानम्। सत्यपदान्तव्याहृतिचतुष्टयं पञ्चाङ्गानीति भावः ॥

पुरुषसूक्तस्य छन्दो विषयेऽपवादमाह— **अनुष्टुभ इति ॥** अस्य पुरुषसूक्तस्यानुष्टुभः छन्दंसीति शेषः। त्रिष्टुप् इति छन्दः षोडशार्चस्य पुरुषसूक्तस्याद्याः पञ्चदश ऋचः अनुष्टुप्छन्दोबद्धाः। षोडशी ऋक् त्रिष्टुप् छन्दोबद्धेति भावः। अत एवानुष्टुभ इति बहुवचनम्। त्रिष्टुबित्येकवचनम्। तथा आद्यानामेवानुष्टुप्त्वं अन्त्याया त्रिष्टुप्त्वमिति ज्ञापनाय 'अनुष्टुभः त्रिष्टप् च'इति निर्दिष्टवान्। इदं चत्रिष्टुभ एकत्वं ऋक्शाखागतपुरुषसूक्तस्यैवेति ज्ञेयम्। यजुश्शाखागतपुरुषसूक्तस्य तु पञ्चदशार्चानन्तरं त्रिष्टभां बहुत्वमित्याह— **त्रिष्टुभोऽपि वेति ॥** आद्याः पञ्चदशानुष्टुभः अन्त्याः त्रिष्टुभ इत्यर्थः। अनेनाष्टादशर्चं पुरुषसूक्तमित्युक्तं भवति। केचित् द्वाविंशतिसङ्ख्याकऋगात्मकं याजुषाणां पुरुषसूक्तं तेषां पक्षे आद्य पञ्चदशर्चा अनुष्टुभः यज्ञेनेत्यादीनां त्रिष्टुभः। वाशब्दो व्यवस्थितविकल्पे इत्याहुः। शाखाद्वयगतपुरुषसूक्तछन्दकथनेन तत्र शाखाभिः तत्तच्छाखास्थमेव पुरुषसूक्तं जपितव्यमिति प्रतीयते।

इदानीं षष्ठस्कन्धे नारायणवर्मणि 'ॐ नमो नारायणाये'ति नारायणमन्त्रे ॐकारस्यावयवत्वोक्तिवत् 'ॐ विष्णवे नमः' इति विष्णुमन्त्रेऽपि ओङ्कारस्यावयवत्वोक्तेरत्राप्योङ्कारस्य विष्णुमन्त्रावयवत्वप्रतीतिं वारयितुं मन्त्राणामतिगोप्यत्वात्सङ्केतेन विष्णुमन्त्रस्य रूपमाह— **विष्णुशब्द इति ॥** हृदय इत्यत्र मनोवाचकहृदयशब्देन तद्विकारप्रह्वीभावो लक्ष्यते। तेन प्रह्वीभाववाचको नमश्शब्दो लक्ष्यते। एवं च लक्षितलक्षणया हृदयशब्दो नमःशब्दपरः। तथा च **तुर्य्यन्तः** चतुर्थीविभक्त्यन्तः विष्णुशब्दः विष्णवे इति

शब्द इति यावत् । **हृदयेत:** हृदयेन नमः शब्देन इतो युक्तः षडक्षरः विष्णुमन्त्र इत्यर्थः । तथा चैवं मन्त्रनिष्पत्तिः **'विष्णवे नमः'** इति । 'षडक्षरः' इत्युक्त्या भागवते उक्तो विष्णुमन्त्र ॐकारसाहित्येन सप्ताक्षरः 'न्यसेद्धृदय ओङ्कार'मित्यादिना ओङ्कारादिसप्तवर्णानां न्यासोक्तेः । अष्टमहामन्त्रगणे पठितोऽयं विष्णुमन्त्रस्तु ॐकाररहितस्तद्भिन्नः षडक्षर इत्युक्तं भवति । यथा विश्वामित्रगायत्री ब्रह्मगायत्रीर्मन्त्रयोः व्याहृतिसाहित्यासाहित्याभ्यां भिन्नयोर्मध्येऽष्टमहामन्त्रगणे व्याहृतिरहितस्यैव ग्रहणं तथोङ्कारसाहित्यासाहित्याभ्यां भिन्नयोर्विष्णुमन्त्रयोः मध्येऽष्टमहामन्त्रगणे ओङ्काररहितस्यैव ग्रहणमिति भावः ।।

अस्य मन्त्रस्य ऋष्यादिकमाह- **तरवदिति ।।** अस्यापि **सर्वं** ऋष्यादिकं **तारवत्** प्रणववत् ज्ञेयम् । न केवलं मातृकादेरित्यपि शब्दार्थः । अन्तर्यामी ऋषिः दैवी गायत्रीछन्दः विष्णुर्देवता उद्यद्भास्वदिति ध्यानमिति भावः । ध्याने वर्ण एव विशेषः । अन्यत्तारवत्सर्वमित्यभिप्रायेणाह— **श्याम इति ।। श्यामः** इन्द्रनील-समकान्तिः । मन्त्रस्याङ्गन्यासमन्त्रानाह— **वर्णा एवेति ।। षडङ्गानि** हृदयादि षडङ्गन्यासमन्त्रा इत्यर्थः । मन्त्रगतवर्णानां पञ्चत्वात्कथं षडङ्गानीत्यत आह— **षणयोरिति ।।** ष्ण इत्यत्र **षणयोः** षकारणकारयोः **भेदयोगतः** भेदः पृथक्करणं तल्लक्षणोपायेनेत्यर्थः । 'भेदता मता' इति पाठे तु भिद्यन्ते विश्लिष्यत इति भेदः कर्तरि पचाद्यच् । तस्य भावो भेदता विश्लेषः विभाग इति यावत् । **मता** सम्मतेत्यर्थः । अत्र तारवत्सर्वमित्युक्तेः विश्वादय एव विष्णुषडक्षरमन्त्रवर्णदेवता ज्ञातव्याः । ततश्च 'ॐ विं विश्वाय हृदयाय नमः । ॐ षं तैजसाय शिरसे स्वाहा । ॐ णं प्राज्ञाय शिखायै वौषट् । ॐ वें तुर्याय कवचनाय हुम् । ॐ नं आत्मने नेत्राभ्यां वषट् । ॐ मं अन्तरात्मने अस्त्राय फट्' इति षडङ्गन्यास प्रकारः ।।

वर्णन्यासस्थानमाह– **पज्जान्विति ।।** पादजानुनाभिहृदयनासिकाशिरस्सु षदसु स्थानेषु **वर्णशः** मन्त्रगतैः षड्भिर्वर्णैः न्यासश्च कार्यः । 'ॐ विं विश्वाय नमः इति पादयोः । ॐ षं तैजसाय नमः इति जान्वोः । ॐ णं प्राज्ञाय नमः इति नाभौ' इत्यादि प्रकारेण वर्णन्यासः । अयं संहारक्रमः । सृष्टौ तु-

के नसोर्हृदि नाभौ च जानुनोः पादयोः क्रमात् ।
षडक्षरस्य वर्णान् षट् न्यसेत् षणविभागतः ।। स्थितौ तु-
शिरोनासाहृत्पदेषु जानुनाभ्योर्न्यसेत् क्रमात् । इति ।

एवं प्रणवादीनां जपानुष्ठानेऽङ्गकलाप उक्तः । इदानीमेते मन्त्रा जप्या इत्याह- **एतेत्विति ।।** यद्वा एवमष्टमहामन्त्रानुक्त्वा श्रोतुस्तत्रादरातिशयजननाय तन्माहात्म्यमाह– **एते त्विति ।।** तु शब्दोऽवधारणे । एतज्जपात्समस्तानामित्यु-त्तरत्रानुवादात् अत्र जप्या इति ग्राह्यम् । ततश्च **एते तु** प्रणवादयोऽष्टमहामन्त्रा एव **विशेषतः** अन्यमन्त्रापेक्षयाऽतिशयेनात्यवश्यकत्वेनेति यावत् । जप्या इत्युक्त्या सन्ध्यात्रयेऽपि अष्टमहामन्त्राणां जपो नियमेनानुष्ठेय इति सूचितं भवति । उक्तं माधवतीर्थस्मृतौ-

सन्ध्यासु मन्त्रा इम एव जप्यास्तारो यतीनां प्रथमो हि मन्त्रः ।
सावित्र उक्तश्च तथा परेषां द्विजन्मनां शश्वदनिन्दितानाम् ।। इति ।

स्मृतौ इम एवेत्येवकारणैषां नियतत्वमात्रमुच्यते न त्वन्यमन्त्राणामजप्यत्व-मिति ज्ञेयम् । नन्वन्यमन्त्राणामपि सत्वात् एत एव नियमेन त्रिसन्ध्यासु जप्या इति कुत इत्यत आह– **सर्वमन्त्राणामिति ।।** एतेत्विति पदद्वयमावर्तनीयम् । अत्र तुशब्दो हेत्वर्थे । **तु** यस्मात् **एते** प्रणवादयोमन्त्राः **सर्वमन्त्राणां** चतुर्थाध्याये वक्ष्यमाणानां **मूलमन्त्राः** मूलभूतमन्त्राः। सर्वे मन्त्राः अष्टमहामन्त्रव्याख्यानरूपा इति भावः । तस्मादेत एव नियमेन जप्या इति ज्ञेयम् । उक्तं च वासुदेवस्मृतौ-

तारोऽष्टवर्णो द्विषडक्षरोऽन्यः षडक्षरो व्याहृतयः क्रमेण ।
पञ्चाशद्वर्णाः सवितुश्च पत्नी पुंसक्तमष्टाविति मूलमन्त्राः ।। इति ।।
४३-४७ ।।

अष्टमहामन्त्रणां सामर्थ्यकथनम्

**तं.सा.** **एतज्ज्ञानात्समस्तं च ज्ञातं स्याच्छब्दगोचरम् ।**
**एतज्जपात्समस्तानां मन्त्राणां जापको भवेत्** ।। ४८ ।।

शब्द इति यावत् । **हृदयेत:** हृदयेन नमः शब्देन इतो युक्तः षडक्षरः विष्णुमन्त्र इत्यर्थः । तथा चैवं मन्त्रनिष्पत्तिः **'विष्णवे नमः'** इति । 'षडक्षरः' इत्युक्त्या भागवते उक्तो विष्णुमन्त्र ॐकारसाहित्येन सप्ताक्षरः 'न्यसेद्धृदय ओङ्कार'मित्यादिना ओङ्कारादिसप्तवर्णानां न्यासोक्तेः । अष्टमहामन्त्रगणे पठितोऽयं विष्णुमन्त्रस्तु ॐकाररहितस्तद्भिन्नः षडक्षर इत्युक्तं भवति । यथा विश्वामित्रगायत्री ब्रह्मगायत्रीर्मन्त्रयोः व्याहृतिसाहित्यासाहित्याभ्यां भिन्नयोर्मध्येऽष्टमहामन्त्रगणे व्याहृतिरहितस्यैव ग्रहणं तथोङ्कारसाहित्यासाहित्याभ्यां भिन्नयोर्विष्णुमन्त्रयोः मध्येऽष्टमहामन्त्रगणे ओङ्काररहितस्यैव ग्रहणमिति भावः ॥

अस्य मन्त्रस्य ऋष्यादिकमाह- **तरवदिति ॥** अस्यापि **सर्वं** ऋष्यादिकं **तारवत्** प्रणववत् ज्ञेयम् । न केवलं मातृकादेरित्यपि शब्दार्थः । अन्तर्यामी ऋषिः दैवी गायत्रीछन्दः विष्णुर्देवता उद्यद्भास्वदिति ध्यानमिति भावः । ध्याने वर्ण एव विशेषः । अन्यत्तारवत्सर्वमित्यभिप्रायेणाह— **श्याम इति ॥ श्यामः** इन्द्रनील-समकान्तिः । मन्त्रस्याङ्गन्यासमन्त्रानाह— **वर्णा एवेति ॥ षडङ्गानि** हृदयादि षडङ्गन्यासमन्त्रा इत्यर्थः । मन्त्रगतवर्णानां पञ्चत्वात्कथं षडङ्गानीत्यत आह— **षणयोरिति ॥** ष्ण इत्यत्र **षणयोः** षकारणकारयोः **भेदयोगतः** भेदः पृथक्करणं तल्लक्षणोपायेनेत्यर्थः । 'भेदता मता' इति पाठे तु भिद्यन्ते विश्लिष्यत इति भेदः कर्तरि पचाद्यच् । तस्य भावो भेदता विश्लेषः विभाग इति यावत् । **मता** सम्मतेत्यर्थः । अत्र तारवत्सर्वमित्युक्तेः विश्वादय एव विष्णुषडक्षरमन्त्रवर्णदेवता ज्ञातव्याः । ततश्च 'ॐ विं विश्वाय हृदयाय नमः । ॐ षं तैजसाय शिरसे स्वाहा । ॐ णं प्राज्ञाय शिखायै वौषट् । ॐ वें तुर्याय कवचनाय हुम् । ॐ नं आत्मने नेत्राभ्यां वषट् । ॐ मं अन्तरात्मने अस्त्राय फट्' इति षडङ्गन्यास प्रकारः ॥

वर्णन्यासस्थानमाह- **पज्जान्विति ॥** पादजानुनाभिहृदयनासिकाशिरस्सु षदसु स्थानेषु **वर्णशः** मन्त्रगतैः षड्भिर्वर्णैः न्यासश्च कार्यः । 'ॐ विं विश्वाय नमः इति पादयोः । ॐ षं तैजसाय नमः इति जान्वोः । ॐ णं प्राज्ञाय नमः इति नाभौ' इत्यादि प्रकारेण वर्णन्यासः । अयं संहारक्रमः । सृष्टौ तु-

के नसोर्हृदि नाभौ च जानुनोः पादयोः क्रमात् ।
षडक्षरस्य वर्णान् षट् न्यसेत् षणद्विभागतः ।। स्थितौ तु-
शिरोनासाहृत्पदेषु जानुनाभ्योर्न्यसेत् क्रमात् । इति ।

एवं प्रणवादीनां जपानुष्ठानेऽङ्गकलाप उक्तः । इदानीमेते मन्त्रा जप्या इत्याह- **एतेत्विति ।।** यद्वा एवमष्टमहामन्त्रानुक्त्वा श्रोतुस्तत्रादरातिशयजननाय तन्माहात्म्यमाह– **एते त्विति ।।** तु शब्दोऽवधारणे । एतज्जपात्समस्तानामित्यु-त्तरत्रानुवादात् अत्र जप्या इति ग्राह्यम् । ततश्च **एते तु** प्रणवादयोऽष्टमहामन्त्रा एव **विशेषतः** अन्यमन्त्रापेक्षयाऽतिशयेनात्यवश्यकत्वेनेति यावत् । जप्या इत्युक्त्या सन्ध्यात्रयेऽपि अष्टमहामन्त्राणां जपो नियमेनानुष्ठेय इति सूचितं भवति । उक्तं माधवतीर्थस्मृतौ-

सन्ध्यासु मन्त्रा इम एव जप्यास्तारो यतीनां प्रथमो हि मन्त्रः ।
सावित्र उक्तश्च तथा परेषां द्विजन्मनां शश्वदनिन्दितानाम् ।। इति ।

स्मृतौ इम एवेत्येवकारणैषां नियतत्वमात्रमुच्यते न त्वन्यमन्त्राणामजप्यत्व-मिति ज्ञेयम् । नन्वन्यमन्त्राणामपि सत्वात् एत एव नियमेन त्रिसन्ध्यासु जप्या इति कुत इत्यत आह–' **सर्वमन्त्राणामिति ।।** एतेत्विति पदद्वयमावर्तनीयम् । अत्र तुशब्दो हेत्वर्थे । **तु** यस्मात् **एते** प्रणवादयोमन्त्राः **सर्वमन्त्राणां** चतुर्थाध्याये वक्ष्यमाणानां **मूलमन्त्राः** मूलभूतमन्त्राः। सर्वे मन्त्राः अष्टमहामन्त्रव्याख्यानरूपा इति भावः । तस्मादेत एव नियमेन जप्या इति ज्ञेयम् । उक्तं च वासुदेवस्मृतौ-

तारोऽष्टवर्णो द्विषडक्षरोऽन्यः षडक्षरो व्याहृतयः क्रमेण ।
पञ्चाशद्वर्णाः सवितुश्च पत्नी पुंसक्तमष्टाविति मूलमन्त्राः ।। इति ।।
४३-४७ ।।

अष्टमहामन्त्रणां सामर्थ्यकथनम्

**तं.सा.** **एतज्ज्ञानात्समस्तं च ज्ञातं स्याच्छब्दगोचरम् ।**
**एतज्जपात्समस्तानां मन्त्राणां जापको भवेत्** **।। ४८ ।।**

**त. क.**– तुशब्दसूचितवैशिष्ट्यमेव हेत्वन्तरेण साधयति— **एतज्ज्ञानादिति** ।। शब्दैकसमधिगम्यं प्रमेयं समस्तमपि एतज्ज्ञानात् ज्ञातफलं स्यात् । यत इति शेषः । तत्रैव हेत्वन्तरमाह—**एतदिति** ।। जपात् एतन्मन्त्राणामावर्तनात् सर्वफलनि प्राप्नोतीत्यर्थः । तथाच एतन्मन्त्रार्थान् जानीयादेतान् मन्त्रान् जपेदिति च विध्यध्याहारेण सर्वं सङ्गमयितव्यम् ।

अत्र जपे इतिकर्तव्यताविशेषस्तु–

पद्माक्षमालं ग्रीवायां लम्बयेत्साधकः शुचिः ।
धारयेद्धैमयं चक्रं सर्वविघ्नोपशान्तये ।।

जपकालेऽथवा चक्रशङ्खाकृति यथा तथा ।
शार्ङ्गखड्गं गदाकारं लाञ्छनं लाञ्छयेत्सुधीः ।।

शरीरावयवे बाह्वोर्वक्षोभुवि चतुर्मुख ।
चक्रारिपञ्चाभिज्ञानलक्षिताङ्गपररिकृतम् ।।

पुरुषं दूरतो दृष्ट्वा भूताद्या भयविह्वलाः ।
विद्रवन्ति तथा घोराः पापा वीक्षणमात्रतः ।।

विनश्यन्ति तथा पुण्यपुञ्जानि प्रवीशन्ति च ।
प्रणमन्ति तथा देवाः देवर्षिप्रवरास्तथा ।।

अकृत्यमपि कुर्वाणो भूञ्जनो वा यतस्ततः ।
पापैर्न लिप्यते देही चक्राद्यायुलाञ्छितः ।।

इत्यादिना पञ्चरात्रोदौ प्रपञ्चितोऽनुसन्धेयः । तथाऽन्यत्रापि—

जपस्तु सर्वकर्मेभ्यः परमो धर्म इष्यते ।
अहिंसया च भूतानां जपयज्ञः प्रवर्तते ।।

जपः स्यादक्षरावृत्तः स उच्चोपांशुमानसः ।
उच्चादुपांशुरुत्कृष्ट उपांशोरपि मानसः ।।

सर्वैः स प्रणवो जप्यो जपादप्रणावादपि ।
सहस्र इति विज्ञेयः प्रणवो ह्यक्षरं परम् ।।

असंख्याताच्च संख्यातः सहस्रगुण उच्यते ।
संख्यातादपि साहस्रमूर्ध्वपुण्ड्रधरो जपेत् ।।

सूर्यस्य प्रतिमायां वा जातवेदस एव वा ।
जपकर्मणि चैतेषामभिमुख्यं प्रशस्यते ।।

पञ्चविंशतिकृत्वोऽतः प्राणायामोऽयमुच्यते ।
अजस्वाऽष्टाक्षरं मन्त्रं नाहमश्नामि किञ्चन ।
इत्येवमभिसन्धाय पश्चादहरहर्जपेत् ।। इत्यादि ।

जपगणने मालाविशेष उक्तो नारदीये वर्णभेदेन—

कृशस्तम्बैर्जपेद्विप्रः सुवर्णमणिभिर्नृपः ।
पत्रदीपफलैर्वैश्यः पद्माक्षैस्सर्व एव वा ।।

जपस्य गणनं प्राहुः पद्माक्षैर्भक्तिवर्धनम् ।
अथाङ्गुलिभिरेवापि जपमन्वहमाचरेत् ।।

तीर्थमन्त्रोपसंवेशः श्रद्धा च जपकर्मणि ।
फलतीति च विश्वासः त्रीणि सिद्धेस्तु कारणम् ।।

श्रेयसामीक्षमाणानां सन्निधौ सत्यनुज्ञया ।
आरभेत जपं विद्वानन्यत्र प्रतिकूलतः ।।

स्वोत्तमानां प्रतिकूल्यं विनेत्यर्थः ।

अष्टाक्षरजपं कुर्वन्नशुचिं यदि पश्यति ।
प्राणायामं सकृत्कृत्वा जपशेषं समाचरेत् ।।

अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।
प्रलपन् वा जपेद्यावत् तावन्निष्फलमुच्यते ।।

आदावष्टाक्षरस्य स्यात्प्रणवः सर्वकामिकः ।
आद्यन्तयोस्तु यद्येषो भवति ज्ञानवृद्धये ।।

उदात्तस्वर ओंकार उभयत्रापि सर्वशः ।
आदितस्संहितां कुर्यादन्ततस्तु न संहिताम् ।। इत्यादि ।।

जपसंख्या च प्रणावक्ल्पे—

................ जपश्च त्रिसहस्रकः ।
मध्यमः प्रणवस्योक्तो योऽवरस्स सहस्रकः ।
त्रिसहस्रात्परो यस्तु स उत्तमजपः स्मृतः ।। इति ।।(य.प्र.क.२४) नन्वत्र,

ध्यानं वक्ष्यमि सर्वाघनाशानं कमलासन ।
चतुर्भुजमुदाराङ्गं सर्वलक्षणलक्षितम् ।।

शुद्धस्फटिकसङ्काशमयुतेन्दुसमप्रभम् ।
चारूहासं सुताम्रोष्ठं कर्णान्तायतलोचनम् ।।

निर्धूतपद्मरागाभं दन्तच्छविसुशोभितम् ।
महोरस्कं महाबाहुं प्रसन्नेन्दुनिभाननम् ।।

सूभ्रूललाटं सुभुजं धनकुञ्चितमूर्धजम् ।
तटिच्छतसहस्राभं पीतनिर्मलवाससम् ।।

पाणिपादतलाम्भोजं पुण्डरीकायतेक्षणम् ।
श्रीवत्साङ्कं किरीटादिसर्वाभरणभूषितम् ।।

पद्मचक्रगदाशङ्खधारिणं कौस्तुभोरसम् ।
दिव्यगन्धविलिप्ताङ्गं दिव्यमालाविभूषितम् ।।

शेषाहिभोगे विपुले सुखासीनं चतुर्मुख ।
श्रीभूमिसहितं देवं ललाटे श्वेतमृत्स्नया ।।

कृतोर्ध्वपुण्ड्रतिलकमण्डनं चण्डभानुभिः ।
नियुतैरयुतैश्चन्दैः विद्युत्कालाग्निकोटिभिः ।
समवेतमिवैकत्र तेजःपुञ्जैर्विसर्पिभिः ।।

इत्यादि पञ्चरात्रे अन्यथाध्यानमुक्तम्। शुद्धस्फटिकसङ्काशमिति उद्यदादित्यवर्णान्यवर्णोक्तेः। 'पद्मचक्रगदाशङ्खधारीणं' इति चक्रशङ्खगदापद्मेत्यस्य वैपरीत्योक्तेः। श्रीभूमिसहितमिति लक्ष्मीधराभ्यामित्यस्य वैपरीत्योक्तेश्च।

प्रत्यक्षरमृषिच्छन्दोदैवतं प्रवदाम्यहम् ।
तथा क्षेत्राणि तत्त्वानि वर्णानपि विशेषतः ।।

गौतमोऽथ भरद्वाजो विश्वामित्र ऋषिस्तथा ।
जमदग्निर्वसिष्ठश्च कश्यपश्चात्रिरेव च ।
अगस्त्य इति निर्दिष्टाः ऋषयोऽष्टौ यथाक्रमम् ।।

इति नारदीयाष्टाक्षरकल्पे ओंकारादियकारान्तमष्टानामक्षराणां प्रत्यक्षरं यथाक्रमं गौतमाद्यगस्त्यान्ता अष्टौ ऋषय उच्यन्ते। तथा छन्दांसि गायत्र्यादीनि सप्त तानि, अष्टमो विराट् इत्योङ्कारस्य गायत्री च्छन्दः, नकारस्यानुष्टुप् च्छन्दः, यकारस्य विराट् च्छन्द इति प्रत्यक्षरमष्टछन्दांस्युच्यन्ते । तथा—

यमो ध्रुवस्तथा सोम आपोऽग्निर्वायुरेव च
प्रत्यूषश्च प्रभासश्च विज्ञेया देवता इमाः ।

इति यमादयोऽष्टौ प्रत्यक्षरं देवता उच्यन्ते । तथा—

क्षेत्राणि प्रवदाम्येषां भूर्भुवःस्वर्महर्जनः ।
तपस्सत्यमितीमानि परं धामाष्टमं मतम् ।।

इति प्रत्यक्षरं भूरादिक्षेत्रमुच्यते। एवं—

अग्निर्भूर्वायुराकाशः सूर्यो द्यौश्चन्द्रमास्तथा ।
नक्षत्राणीति तत्त्वानि देवता इति केचन ।।

इत्योङ्कारादीनां यथाक्रममग्न्याद्यष्टतत्त्वान्युच्यन्ते। तथा—

शुक्लं हिरण्मयं कृष्णं रक्तं कुंकुमसन्निभम् ।
पद्मकिञ्जल्कनीलं च सर्ववर्णकमष्टकम् ।।

इति प्रत्यक्षरं वर्णभेद उच्यते । तथा प्रणवस्यापि,

बीजशक्त्यङ्गहीना ये मन्दाः स्युस्ते निरर्थकाः ।
तस्मात् साङ्गं बीजयुक्तं शक्तियुक्तं फलप्रदम् ।।

इति बीजशाक्त्यादीनामावश्यकत्वमुक्त्वा अनुस्वारशीर्ष अकारो बीजम् । अनुस्वारशीर्षक उकारः शक्तिरिति,

उद्धरेद्बीजमस्याद्यं प्रतीकं दण्डशेखरम् ।
श्रीधरं दण्डयेदेषा शक्तिः सर्वत्र कीर्तिता ।। इत्युक्तम् ।

तथा— 'बीजं शक्तिश्च कथिता श्रूयतामङ्गजातयः ।' इत्यङ्गमात्रानुपक्रम्य—

ज्ञानं बलं तथा वीर्यमैश्वर्यं तेजसा सह ।
शक्तिरेते चतुर्थ्यन्ता नमः स्वाहा वषट् तथा ।।

हुंफट्वौषट् क्रमादेतदवसानाः शुभावहाः ।
अङ्गनि हृदयाद्येषु षट्सु स्थानेषु मन्त्रिणा ।
प्रयोज्यानि प्रयुक्तेषु मन्त्रः साङ्गः कृतो भवेत् ।।

इत्यादिना ज्ञानाय हृदयाय नमः, बलाय शिरसे स्वाहा, वीर्याय शिखायै वौषट्, एश्वर्याय कवचाय हुम्, तेजसे नेत्राभ्यां वषट्, शक्तये अस्त्राय फट् इत्येवं प्रकारेण प्रणवस्य षडङ्गान्यास उक्तः । 'बुद्धिस्तत्त्वं परं व्योम क्षेत्रं वर्णस्सितच्छविः' इति तत्र क्षेत्रवर्णाश्च निरूपिताः । तथा—

शाकपावकभैक्षाशी जपेल्लक्षत्रयं शुचिः ।
तदर्धं तर्पणे सङ्ख्या तदर्धं होमकर्मणि ।।

इति प्रणवजपे लक्षत्रयसङ्ख्या पञ्चाशत्सहस्रतर्पणं पञ्चविंशतिसहस्रहोमश्चोच्यते । एवं द्वादसाक्षरमन्त्रस्यापि 'बीजमस्य द्वादशात्मा दण्डशीर्ष उदाहृतः' इति हुमिति बीजाक्षरमुक्तम् । 'दीप्तिमानुर्ध्वलोकान्तो बीजदण्डशिरः स्मृतम्' इति विवरिष्यमाणत्वात् । तथा—

क्रुद्धो महांश्च वीरश्च द्युसहस्रश्च तेजसा ।
उल्कान्ता षडिमे शब्दाश्चतुर्थ्यन्ता ठठान्तकाः ।।

स्वाहाकारो हुतान्तश्च ठठेति परिकीर्तितः ।
अङ्गानि हृदयादौ स्युः स्थाने......।।

इत्यनेन क्रुद्धोल्काय स्वाहा हृदयाय नमः, महोल्काय स्वाहा शिरसे स्वाहा, वीरोल्काय स्वाहा शिखायै वौषट्, द्युल्काय स्वाहा कवचाय हुम्, तेजसे स्वाहा नेत्राभ्यां वषट्, सहस्रोल्काय स्वाहा अस्त्राय फट्, इत्येवं प्रकारेण षडङ्गन्यास उक्तः। बीजाक्षरणि वा—

परस्य वासुदेवस्य बीजाङ्गं समुदाहृतम् ।
दीप्तिमानुर्ध्वलोकान्तो बीजं दण्डशिरः समृतम् ।।

दीप्तिमान् कुम्भसंयोगो मधुसूदनमस्तकः ।
स एव वामनशिराः हृषीकेशशिरस्तथा ।।

वीरसेनशिरश्चापि कार्यं तोयमन्तरम् ।
षष्ठमौर्वशिरः प्रोक्तमङ्गानि क्रमशः पुनः ।।

नत्यन्तं दण्डशिरसः सर्वे विभवपूर्वकाः ।
वासुदेवः प्रयोक्तव्यः हृदयादिषु षट्स्वपि ।।

इत्यनेन ह्वां नमः हृदयाय नमः। ह्वीं नमः शिरसे स्वाहा। ह्वं नमः शिखायै वौषट्। ह्वें नमः कवचाय हुम्। ह्वैं नमः नेत्राभ्यां वषट्। ह्वः नमः अस्त्राय फट् इति वासुदेवमन्त्रस्य वैकल्पिकोऽङ्गन्यास उक्तः। दीप्तिमान् हकारः। कुम्भो वकारः। ताभ्यां संयोगो यस्य स तथा। मधुसूदन आकारः। स एव मस्तके अन्त्ये उच्चार्यो यस्य स तथा। वामन ईकारः। विग्रहः पूर्ववत्। स एव हकार एवेति सम्बन्धः। हृषीकेश ऊकारः। वीरसेन एकारः। तोयमैकारः। और्वो विसर्गः। नतिर्नमःशब्दः। दण्डोऽनुस्वारः। एतदन्ताः शब्दाः षट्सु स्थानेषु वासुदेवमन्त्रस्य प्रयोक्तव्या इति व्याख्यानात्। तथा—

यद्वा द्वादशवर्णाद्याः पूर्वेषां हृदयादयः ।
षण्णामर्णास्त उपरि तुन्दगुह्यभुजोरवः ।
जङ्घा पादमिति स्थानेष्वेते योज्याः क्रमाद्धहु ।।

इत्यनेन ॐ हृदयाय नमः । नं शिरसे स्वाहा । मों शिखायै वषट् । भं कवचाय हुम् । गं नेत्राभ्यां वौषट् । वं अस्त्राय फट् । तें तुन्दाय नमः । वां गुह्याय स्वाहा । सुं भुजाभ्यां वषट् । दें ऊरूभ्यां हुम् । वां जङ्घायै वौषट् । यं पादाभ्यां फडित्येवं क्रमेण द्वादशाङ्गन्यासो द्वादशवर्णैः कर्तव्य इति पक्षान्तरमुक्तम् । पूर्वेषां वर्णानां ओंकारादिवकारान्तानामङ्गानि अङ्गमात्राणीनि सम्बन्धः । तेषां षण्णामर्णानां हृदयादयः षट् स्थानानीति सम्बद्ध्यते । अपरे षड्वर्णास्ते-कारदियकारान्तास्तुन्दादिषट्सु स्थानेषु प्रयोक्तव्या इति व्याख्यानात् । तथा—

ऋषिश्च देवता चोमे वासुदेवः स्मृतस्त्रिषु ।
छन्दश्च दैवी गायत्री वर्णः श्वेतश्चतुर्मुख ।
तत्त्वं बुद्धिः परं व्योम क्षेत्रं मन्त्रस्य शब्दितम् ।

इति द्वादशवर्णसमुदायात्मकमन्त्रस्य ऋषिदेवताछन्दांस्युक्त्वा, बुद्धिरस्य तत्त्वं परं व्योम वैकण्ठः अस्य मन्त्रस्य क्षेत्रमिति समुदायस्य तत्त्वं क्षेत्रं च निर्दिश्य,

प्रत्यक्षरमृषिच्छन्दो देवता वर्णविस्तरः ।
तत्त्वं क्षेत्रं क्रमात्सर्वमुच्यते द्वादशस्वपि ।

इति प्रतिज्ञाय, ओंकारस्य परमेष्ठी ऋषिः । नकारस्य सनन्दः । मोकारस्य सनक इत्यादिक्रमेण,

परमेष्ठी सनन्दश्च सनकश्च प्रजापतिः ।
भृगुः सनत्कुमारश्च पुलस्त्यः पुलहः क्रतुः ।।

मरीचिरत्र्यङ्गिरसः कथिता ऋषयः क्रमात् ।
छंदांसि दैवी गायत्रं बस्तः क्षेत्रं प्रजापतिः ।।

त्रिष्टुप्पङ्क्तिश्च बृहती विरड्वष्टस्त्रिवत्सकः ।
उष्णिक् च श्रीरिति ब्रह्मान् वर्णेषु द्वादशस्वपि ।।

जीवप्रकृतिबुद्धिश्च मनःसत्त्वादयो गुणाः ।
व्योमाग्निर्मरुतश्चापो वर्णानां तत्त्वमीरितम् ।।

क्षेत्राणि परमं व्योम वायुरग्निर्जलं तथा ।
सत्यं तपो जनश्चैव महः स्वर्गो भुवस्तथा ।
भूमिः पातालमेतानि क्रमेण कथितानि ते ॥

इत्यनेन प्रत्यक्षरं ऋषिच्छन्दोदेवतातत्त्वक्षेत्राण्युच्यन्ते । तथाऽष्टाक्षरस्यापि—

बीजं विष्णुरनुस्वारः सामर्थ्यं कथितं पुनः ।
अङ्गानि षट् द्विषट्कस्य मन्त्रस्येव विदुर्बुधाः ।
छन्दश्च दैवी गायत्रमन्तर्यामी मुनिः स्मृतः ॥

देवो नारायणः साक्षाद्दैवतं समुदीरितम् ।
परमं व्योम बुद्धिः स्यात्तत्त्वं वर्णः सितस्तथा ॥

प्रत्यक्षरमृषिर्ब्रह्मन् गौतमः प्रथमः स्मृतः ।
भरद्वाजो विश्वामित्रो जमदग्निरनन्तरम् ॥

वसिष्ठः कश्यपः पश्चादत्रिः कुम्भसमुद्भवः ।
छन्दांसि गायत्र्यादीनि विराडवसितानि च ॥

यमो ध्रुवश्च सोमश्चापश्चाग्निर्जलाधिपः ।
प्रत्यूषश्च प्रभासश्च देवाः प्रत्यक्षरं तथा ॥

आकाशं परमक्षेत्रमक्षरस्यावसानतः ।
सत्यादिलोकाः सप्त स्युः प्रातिलोम्येन भूमयः ॥

इत्यादिना ऋषिदेवताच्छन्दःक्षेत्रतत्त्ववर्णाः प्रत्यक्षरं चोक्ताः । तथा—

'इशनीयानि मेध्यानि वक्ष्यामि शृणु तान्यपि' इत्युपक्रम्य—

पयो यावकशाकाम्बुफलमूलानि सक्तवः ।
आद्यं कुशोदकं मेध्यं दधिमिश्रान्नमेव च ॥ इत्यादिनाऽऽहारनियमः,

'साधने मन्त्रजापस्य रूपं(शृणु) कालं यथोदितम्' इत्युपक्रम्य—
मार्गशीर्षे शुभे मासि द्वादश्यां चन्द्रवर्धने ।
आराध्य परया भक्त्या नारायणमनन्यधीः ॥ इत्यादिना कालविशेषः,

चक्राब्जमण्डले देवं ध्यायेद्देवं समाहितः ।
चतुर्भुजमुदाराङ्गं चक्राद्यायुधसेवितम् ।।

कालमेघप्रतीकाशं पद्मपत्रायतेक्षणम् ।
पीताम्बरधरं सौम्यं प्रसन्नेन्दुनिभाननम् ।।

चारुहासं सुताम्रोष्ठं रत्नोज्वलितकुण्डलम् ।
द्विव्यचन्दनलिप्ताङ्गं द्विव्यमालाविभूषितम् ।।

श्रीभूमिभ्यां सुखासीनं स्वर्णसिंहासने शुभे ।
ध्यात्वैवं देवदेवेशं मन्त्रजापपरो भव ।।

इत्यादिना ध्यानविशेषश्चोच्यते। न च पञ्चरात्रादिकमप्रमाणमेवेत्युपेक्षितमिति युक्तम्।

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
सर्वेष्वेतेषु राजेन्द्र ज्ञानेष्वेतद्विशिष्यते ।। (अनु.२-२-३०१)

इति सर्वातिशयितप्रामाण्योक्तेश्च। 'वेदपञ्चरात्रयोरैक्याभिप्रायेणेतरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि'(सू.भा.१-१-३) इत्यादिना भाष्ये स्पष्टमेव प्रामाण्यसाधनाच्च तथापि तदुक्तप्रकारेण मन्त्रजपाङ्गजपानुक्तौ पञ्चरात्रादावनुक्तिप्रसङ्गात्। न च प्रमाणमनुपयुक्तं ब्रूते।

अत्रोच्यते। मन्त्रो हि द्विविधः। काम्यो नित्यश्चेति। काम्यप्रयोगे विशेषाङ्गकलापेन नित्यस्य पञ्चदशस्य सप्तदश्येनेव बाध उपपन्नः। न च तावताऽन्यतराप्रमाण्यम्। प्रयोगभेदेनोभयोपपत्तेः। तेन कृद्धोल्कादिमन्त्राणां न्यासस्थानानां च षट्त्वमाश्रित्य काम्यप्रयोगोऽभिहितस्तत्र। इह तु नित्यप्रयोगोऽभिधीयत इति कथमनयोर्विरोधः? एवं द्वादशार्णस्य नित्यप्रयोगे जगतीच्छन्दः। काम्यप्रयोगे तु गायत्रीच्छन्द इत्यादिप्रकारेणान्यत्रापि विरेधपरिहार ऊह्यः। अत एव—

अष्टाक्षरस्य वक्ष्यामि विनियोगमतः परम् ।
यं विद्वांस्त्रिषु लोकेषु चरत्यमरवत्सुखम् ।। इत्युपक्रम्य,

आयुष्कामो द्विलक्षं तु जप्त्वा दूर्वाङ्कुराणि च ।
हुत्वा दशसहस्राणि दीर्घमायुश्च गच्छति ।।

तिलानां दशसाहस्रं होममायुर्विवर्धनम् ।
प्रतीकारश्च सर्वेषां वृजिनव्यादिरक्षसाम् ।।

दधिमध्वाज्यसंयुक्ताश्चतुरङ्गुलसंमिताः ।
गुलूजीरयुतं हुत्वा मृत्युमेवातिवर्तते ।।

शनैश्चरदिनेऽश्वत्थं जपेदालभ्य पाणिना ।
अष्टोत्तरशतं शुद्धो म्रियते नाऽपमृत्युभिः ।।

जपेत् द्विलक्षं रोगार्तो नित्यमष्टशतेन च ।
उपतिष्ठेत पूर्वाह्णे भानुमन्तं कृताञ्जलिः ।।

पञ्चविंशतिकृत्वश्च जपशुद्धाः पिबेदपः ।
पुष्पाणि समिधश्चापि जुहुयादगदो भवेत् ।।

उदकुम्भं नवं पूर्णमुपस्पृश्यायुतं जपेत् ।
तेनाभिषिक्तस्तोयेन व्याधिभिः परिमुच्यते ।।

चरुलाजादिभिर्होमं तिलसिक्तैः पुनर्नवैः ।
कृत्वा व्याधिविनिर्मुक्तो धृढीभवति वै पुनः ।।

अश्नीयादन्वहं विद्वानान्नं सप्ताभिमन्त्रितम् ।
आरोग्यं महदाप्नोति बलं तेजश्च विन्दति ।।

भक्षयेत्सर्वभक्ष्यांश्च कृत्वैवमभिमन्त्रणम् ।
तत्सर्वं जीर्यते सम्यगपि हालाहलं विषम् ।।

त्रिरात्रोपोषितः पूर्वं चन्द्रमस्युपरंजिते ।
शुभैर्गन्धादिभिर्भक्त्या पूजितः स हरेः पुरः ।।

प्रक्षिप्योदुम्बरे पात्रे कपिलाज्यं चतुष्पलम् ।
फलं श्वेतवजाचूर्णं जपेदालभ्य पाणिना ।।

ततस्तन्मन्त्रसम्पूतं पीत्वा चूर्णयुतं घृतम् ।
स सर्वसुभगोऽरोगस्तेजस्वी च भविष्यति ।।

चन्द्रसूर्योपरागेषु विषुवेष्वयनेषु वा ।
त्रिरात्रमेकरात्रं वा समुपोष्य यथाविधि ।।

स्पृशन्नष्टसहस्रं तु जप्त्वा ब्राह्मीघृतं शुचिः ।
त्रिः पिबेल्लभते मेधां श्रुतवांश्चोपजायते ।।

शतमष्टोत्तरं जप्त्वा मन्त्रपूतं जलं पिबेत् ।
अहन्यहनि षण्मासात्ततो मेधा विवर्धते ।।

पौर्णमासी मघायुक्ता माघी सन्धीयुता च सा ।
सरस्वतीति तां प्राहुर्बुधाः परमपावनीम् ।।

पौर्णमास्यां सरस्वत्यामुपरागोऽथवा पुनः ।
केवलोऽम्भस्यग्घो(भस्मनिर्धग्घो) वा निराहारस्सदा जपेत् ।।

प्रभातेषु सहस्रेण भस्माज्यमभिमन्त्रितम् ।
पञ्चगव्यानि वा पीत्वा सम्यक् श्रुतधरो भवेत् ।।

य उत्थाय जपेद्ब्राह्मे मुहूर्ते लक्षयोर्द्वयम् ।
तस्य संस्कारकल्याणी जायते वाक् सरस्वती ।।

उपस्पृश्याष्टसाहस्रमुदकुम्भचतुष्टयम् ।
ततोऽभिषेकमात्मानमलक्ष्मीस्तेन नश्यति ।।

श्वेतपद्मायुतैर्होमं श्वेतस्रक्चन्दनाम्बरः ।
गव्यक्षीराशनः कृत्वा महतीं श्रियमश्नुते ।।

अष्टकृत्वोऽष्टकृत्वस्तु जप्त्वाऽञ्जलिभिरष्टभिः ।
स्नात्वा सूर्योदये सिञ्चेन्मूर्धनि श्रियमश्नुते ।।

अन्नमष्टशतं नित्यमन्नकामस्य जुह्वतः ।
भूमौ भूयिष्ठमेवान्नमन्वयेऽपि महीपते ।।

स गवादिषु यामिच्छेत्क्षीरं शकृदथापि वा ।
तदीयमेव हुत्वाऽग्नौ पशून् विन्देत् पयांस्विनः ।।

दधिमध्वाज्यसंयुक्तैरलक्ष्मीनाशनैः फलैः ।
बिल्वैरयुतहोमेन महाधनपतिर्भवेत् ।।

द्वादश्यां शुक्लपक्षे तु तिस्रो रात्रीरूपोषितः ।
भगवन्तं प्रतिष्ठाप्य पूजयित्वा तदन्तिके ।।

दध्याद्यंचितपद्मानि जुहुयाल्लक्षसंख्यया ।
ततो महानिधिं दिव्यमकस्मादेव पश्यति ।।

बाहुद्वयं समुद्धृत्य लक्षमेकमिमं जपेत् ।
सोऽचिरेणैव कालेन धनवान् स्यात्कुबेरवत् ।।

नित्यं बिल्वफलान्नाशी बिल्वच्छायामुपेत्य च ।
फलान्यष्टशतं हुत्वा लभतेऽद्धा नृपश्रियः ।।

हुत्वाऽयुतमपामार्गान् संसिक्तान्मधुरैस्त्रिभिः ।
अश्वत्थकाष्ठैर्दीप्ताग्नौ राजानमनुरञ्जयेत् ।।

किमत्र बहुनोक्तेन मूलमन्त्रस्तु होमतः ।
अष्टाक्षरजपं कुर्वन् निष्कामोऽप्यन्वहं शुचिः ।।

साक्षाद्देव इव ह्येष जनैस्सर्वैरुपास्यते ।
विद्वेषणं संहननं स्तम्भनं परिमोहनम् ।।

उच्चाटनं च शत्रूणां ततोत्सादनमारणे ।
एवमादीनि सिद्ध्यन्ति सप्तभिः सप्तभिर्दिनैः ।।

इत्यादिना नारदीयाष्टाक्षरकल्पादौ काम्यप्रयोगोऽप्याभिहितः। अत एव च यावकाद्याहारनियमनिःशेषानुक्तिर्युक्तैव । नित्यप्रयोगे तेषामनपेक्षितत्वात् ।

तदुक्तम्—

नास्ति नक्षत्रसम्बन्धो न निमित्तपरीक्षणम् ।

श्रद्धैव कारणं नृणामष्टाक्षरपरिग्रहे ।। इत्यादि ।

यद्यपि च प्रत्यक्षरम् ऋषिदेवताच्छन्दःक्षेत्रतत्त्वानि मन्त्रशास्त्रे प्रतिपादितानि । तथापि काम्यप्रयोगापेक्षया तदुक्तिर्न नित्यप्रयोगापेक्षयेति वा, तथात्वेऽपि अत्यावश्यकत्वाभावापेक्षया वा न तान्याचार्यः सञ्जग्राह । यद्वक्ष्यति—

यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ।

तावत्समस्तं कथितं............ ।। इत्यादि । (तं.सा.३-६०)

तस्मात् केषाञ्चिदङ्गानां काम्यप्रयोगनिष्ठत्वात्, केषाञ्चिदनावश्यकत्वात्, केषञ्चिदावश्यकत्वेऽपि मुमुक्षून् प्रत्यावश्यकत्वाभावान्न तेषामत्र सङ्ग्रहणमिति मुमुक्षुणेह सङ्गृहीताङ्गकलापेन ग्रन्थान्तरोक्ताविरुद्धाङ्गकलापेन च प्रणवादिमन्त्रा जप्या इति सिद्धम् । तच्चोत्तरत्र वक्ष्यति— 'अस्य संक्षेपशास्त्रत्वान्न विस्तरविरोधिता' (तं.सा.३-४७) इति ।।

अथ यदुक्तमष्टौ मन्त्रा यस्मात्प्रशस्तास्ततस्तान् भजेदिति तत्र विधान-सामार्थ्यादेव तत्प्राप्तिरर्थात् सिद्धा । अप्राप्तानां मन्त्राणां जपानुष्ठानानुपत्तेः । तत्प्राप्तिश्च गुरुमुखादेव ।

सर्वे मन्त्राः सर्वफला गुरुवक्त्राद्यदि श्रुताः ।

यदृच्छया श्रुतो मन्त्रः च्छन्देनाथ च्छलेन वा ।।

पत्रेक्षितो वा व्यर्थः स्यात्प्रत्युतानर्थकः स्मृतः ।

आचार्यादनभिप्राप्तः प्राप्तश्चादत्तदक्षिणः ।

अभ्यस्तोऽपि सादा मन्त्रः श्रेयसे नावकल्पते ।। इत्यादेः ।

अत एव चाचार्यान्मन्त्रप्राप्त्यनुसारेण फलतारतम्यम् आचार्यप्रभेदकथनपूर्वकं

प्रतिमालक्षणैर्यावद्युक्त आचार्य उत्तमः ।

सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ।।

यावद्भक्तो यथालब्धैर्गुणैर्युक्तोऽथ वैष्णवः ।
गुरूः सत्सम्प्रदायज्ञः तारतम्येन सिद्धिदः ।
उत्तमादुत्तमा सिद्धिः धर्ममोक्षादिषु स्फुटा ।। (तं.सा.४-१४०-१४२)

इत्यादिना चतुर्थे वक्ष्यति । तथा च यस्माद्गुरूपदेश एवावश्यकस्ततस्तत्सिद्ध्यर्थं 'श्रुत्वा भागवतं शुद्धमाचार्यम् अधीहि भगवो ब्रह्मेति शरणं व्रजेत्' इति वाक्यशेषोऽत्र ग्राह्यः । 'तं भागवतमाचार्यं प्रथमं वरयेत् सुधीः' इति वचनात् । 'अस्मै ब्रूयाद्गुरूः परम्' इति च ।। ४८ ।।

**अ.सं.–** हेत्वन्तरमाह– **एतज्ज्ञानादिति ।।** चो हेतौ । यस्मादेतेषामष्टमहामन्त्रार्थानां ज्ञानात्**समस्तं शब्दगोचरं** समस्तमन्त्रप्रतिपाद्यं **ज्ञातं** ज्ञातप्रायं स्यादित्यर्थः । समस्तमन्त्रार्थज्ञानफलमष्टमहामन्त्रार्थज्ञानेऽन्तर्भवतीति भावः । तस्मात्प्रधानत्वादेत एव जप्या इत्यर्थः । निमित्तान्तरमाह– **एतज्जपादिति ।।** एतेषामष्टमहामन्त्राणां जपात् **समस्तानां** एतदतिरिक्तानां मन्त्राणां **जापकः** जपकर्ता भवेत् । एतज्जपफलेऽन्यसमस्तमन्त्रजपफलमन्तर्भवतीति भावः । अतोऽपि त्रिसंध्यासु इम एव नियमेन जप्या इति भावः ।

यद्वा नन्वन्येषामपि मन्त्राणां सत्वात्कथमष्टानामेव मन्त्राणामादौ कथनमित्यत आह– **एत इति ।।** पूर्ववदेव व्याख्येयम् । अत्राष्टमहामन्त्रेषु प्रणवे यतीनामेवाधिकारः— 'प्रणवो यतीनामेव गहिभिर्ज्ञायते न सः' इति वाराहवचनादित्याहुः । अन्ये तु गृहस्थादीनामप्यधिकारोऽस्ति । आचार्यैरेव तृतीयाध्याये प्रतिमाप्रतिष्ठायां होमादिकर्तुरेव 'प्रणवं च जपेद्विष्णुं' इति (३.११८) गृहस्थस्यापि प्रणवजपोक्तेः । विष्णुतीर्थैरपि–

......नारायणाष्टाक्षरं च वैष्णवं च षडक्षरम्
द्वादशार्णो व्याहृतयः (तिश्र) षडेते मनवोऽखिलैः ।
मुमुक्षुभिः सदा जप्या यतिभिस्तत एव हि ।। (२.१२०)

इति यतेरुपदेशप्रकरणे तत एव गृहस्थादिभिः प्रणवाद्यष्टमहामन्त्राणां जप्यत्वादेव यतिभिरेते जप्या इति गृहस्थादिजप्यत्वे हेतुरुक्तः । अत एव माधवस्मृतौ–

सन्ध्यासु मन्त्रा इम एव जप्यास्तारो यतीनां प्रथमो हि मन्त्रः ।
सावित्र उक्तश्च तथा परेषां द्विजन्मनां शश्वदनिन्दितानाम् ।।

इत्यत्र यतीनां प्रणवः प्रथमं जप्यः । गृहस्थादीनां विश्वामित्रगायत्रीमन्त्रः प्रथमं जप्य इति प्रथमजप्यत्व एव विशेष उक्तः । न च वराहवचनविरोधः । पुनश्चरणे वहुजपकरणे च गृहस्थस्य नाधिकारः । न तु मन्त्रमात्र इत्येवं सावकाशत्वात् । उक्तं च शौनकेन–

गहस्थाद्यास्तथा शुद्धाः पौनश्चरणकं विना ।
नित्यमेव जपं कुर्युस्तेषां मन्त्रविधिं शृणु ।। इति ।।

शुद्धाः सदाचारिणः भार्यान्तरसम्बन्धरहिता ब्रह्मचर्येण जप्या इत्यप्याहुः । तस्माद्विशिष्टानां गृहस्थादीनां प्रणवेऽधिकारोऽस्त्वेवेत्याहुः । 'तारो यतीनां प्रथमो हि मन्त्रः सावित्र उक्तश्च तथा परेषां' इत्यत्र प्रथमजप्यत्व एव विशेषोक्त्या अनिन्दितानां शुद्धानामपरेषां गृहस्थादीनां सावित्रः विश्वामित्रगायत्रीमन्त्रः प्रथमं जप्यः, अनन्तरं प्रणवाद्यष्टमहामन्त्राः जप्याः । यतीनां तु तारः प्रणवः प्रथमं जप्यः । पश्चाद्विश्वामित्रगायत्री अष्टाक्षरादिमन्त्राश्च जप्या इत्यर्थप्रतीतेः यतीनामपि विश्वामित्रगायत्रीजपेऽधिकारोऽस्तीति ज्ञायते । उक्तं चाग्नेये–

एकोङ्कारा सम्पुटा च षडोङ्कारेति सा त्रिधा ।
आदावोंकारसंयुक्ता गायत्र्येका उदाहृता ।।

आद्यन्तोङ्कारसंयुक्ता गायत्री सम्पुटा स्मृता ।
आद्योङ्कारा गृहस्थस्य वर्णिनश्च न चेतरे ।
वानप्रस्थयतीनां तु षडोङ्कारा प्रशस्यते ।।

एकप्रणवगायत्रीलक्षणमाह व्यासः–

पूर्वोङ्कारा व्याहृतियुगन्ते चाप्रणवा हि या ।
सैकप्रणवगायत्री कीर्तिता तु मनीषिभिः ।।

सम्पुटोङ्कारगायत्रीमाह योगयाज्ञ्यवल्क्यः–

ॐकारं पूर्वमुचार्य भूर्भुवःस्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते गायत्री सम्पुटा स्मृता ।। (४.२६)

षडोङ्कारगायत्रीस्वरूपमाह मनुः–

तिस्रो व्याहृतयः पूर्वं पृथगोङ्कारसंयुताः ।
पूर्वं पुनर्व्याहृतीनां मन्त्रस्याद्यन्तयोस्तथा ।।
एतया जप्तया नित्यं वाङ्मयं जपितं भवेत् । इति ।

'ॐ ॐ भूः ॐ भुवः ॐ स्वः ॐ तत्सवितुवरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॐ' इति षडोङ्कारेत्यर्थः । यतीनां गायत्रीपरित्यागे प्रत्यवायमाह मनुः–

सर्वं च सन्यसेद्विद्वान् वेदमेकं न सन्त्यजेत् ।
वेदसन्यसनाच्छूद्रस्तस्माद्वेदं न संत्यजेत् ।। उशनाः ।

कुटीचको बहूदश्च हंसः परमहंसकः ।
वेदमात्रपीरत्यागी चण्डालादधमाधमः ।।

ब्राह्मण्यं च कुतस्तेषां गायत्रीरहितात्मनाम् ।
गायत्रीरहिताः सर्वे चण्डालादधमाधमाः ।। इति वसिष्ठ इत्यादि ।

न चेमानि ब्रह्मगायत्रीपराणि । कल्पकाभावात् । विश्वामित्रगायत्रीनिषेधकाभावात् सव्याहृतिगायत्र्याः विश्वामित्रगायत्रीत्वेन यतेस्तत्सद्भावे प्रमाणस्योक्तत्वात् । ब्रह्मगायत्र्यास्तु व्याहृतिरहितत्वात् । गायत्रीद्वैविध्ये प्रमाणस्योक्तत्वादिति ।। ४८ ।।

**गु.दी.–** एतेषामष्टमहामन्त्राणां **ज्ञानाद्** अर्थज्ञानात् **शब्दगोचरं** सकलशब्दविषयः **समस्तं** अनन्तगुणपूर्णं ब्रह्म ज्ञातं स्यादित्यर्थः । शब्दगोचरमिति नपुंसकतोपपत्तिः 'न तच्छब्दगोचरम्' (ब्र.सू.भा.१.१.५) इति भाष्यटीकायां व्युत्पादिताऽनुसन्धेया । अथवा समस्तं ज्ञातप्रायमित्यर्थः । समस्तमन्त्रार्थज्ञानफलमष्टमहामन्त्रार्थज्ञानफलेऽन्तर्भवतीति भावः । अत्र येन क्रमेण

प्रणवादीनामङ्गान्यभिहितानि स एव क्रमो जपे ज्ञेयः । तथा च सङ्ग्रहः—

प्रणवोऽष्टौ व्याहृतयो द्विषट्सावित्रमातृकाः ।
पौरुषं वैष्णवं चेति जपे क्रम उदाहृतः ।। इति ।

अथ जपकाले सुदर्शनमुद्रया प्राकारतया स्थितवह्निध्यानपूर्वकं दिग्बन्धनं कृत्वा गुरूणां नतिं कुर्यात् । नतिर्वक्ष्यते चतुर्थाध्याये 'स्मृत्वा गुरुम्' (तं.सा.४-११७) इत्यादिना । मूलगुरवः पञ्चरात्रे योगदीपिकायां च—

व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ।
ततो नारायणं मूलगुरूनाहुर्विपश्चितः ।। इति ।

गुरुनमस्कारक्रमस्त्वस्मदाचार्यकृते मन्त्रोद्धारे ज्ञेयः । नमनात्पूर्वं करशुद्धिरुक्ता—

मणिबन्धे प्रकोष्ठे च कूर्परे हस्तसन्धिषु ।
तत्पृष्ठपार्श्वयोश्चैव करशुद्धिरुदाहृता ।। इति ।

**प्रकोष्ठे** विस्तृतकरेऽन्तर्भागे । 'प्रकोष्ठो विस्तृतः करः' इति विश्वः ।

'कूर्परो जानुनि प्रोक्तः कफोणावपि कूर्परे' इति च ।।

तत्त्वन्यासमातृकान्यासयोः क्रमस्तु वैष्णवमन्त्रजपे प्रथमं तत्त्वन्यासस्तदनन्तरं मातृकान्यासः, वक्ष्यमाणवचनेभ्यः । तथा हि गौतमीये—

प्रथमं वैष्णवे मन्त्रे तत्त्वानां न्यसनं स्मृतम् ।
एकपञ्चाशद्वर्णानां न्यसनं च ततः परम् ।। इति ।

पाद्मसंहितायां च—

आदावष्टाक्षरे मन्त्रे तत्त्वन्यासं समाचरेत् ।
पश्चादजादिमन्त्राणां न्यसनं परिकीर्तितम् ।। इति ।

क्षीरनिधिनिबन्धे पञ्चरात्रे—

तत्त्वन्यासं पुरा कुर्यात् सर्वसिद्धिमभीप्सुकः ।
मातृकान्यासमपरं तथोक्तविधिनाऽऽचरेत् ।। इति ।

यत्तु योगदीपिकायां—

सताराश्च लिपीर्न्यस्येदलीके परितो मुखम् ।। (यो.दी.२-७१)

इति समग्रं मातृकान्यासमुक्त्वा तत्त्वन्यासस्य पाश्चात्यं, यश्च पाञ्चरात्रे

कृत्वा तु मातृकान्यासं तत्त्वन्यासं ततः परम् ।। इति,

तद्गुरुसम्प्रदायाल्लक्ष्म्याद्यन्यमन्त्रजपे पूर्वं मातृकान्यासः पश्चात् तत्त्वन्यास इति व्यवस्थया वा ज्ञेयम् । न्यासप्रशंसा कुलार्णवे—

यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये ।
दृष्ट्वा विघ्नाः पलायन्ति सिंहं दृष्ट्वा यथा गजाः ।। इत्यादि ।। ४८ ।।

**मङ्गाली–** हेत्वन्तरमाह— **एतज्ज्ञानादिति ।।** चो हेतौ । यस्मादेतेषां अष्टमहामन्त्रार्थानां **ज्ञानात्समस्तं शब्दगोचरं** समस्तमन्त्रप्रतिपाद्यं **ज्ञातं** ज्ञातप्रायं स्यादित्यर्थः । समस्तमन्त्रार्थज्ञानफलमष्टमहामन्त्रार्थज्ञानफलेऽन्तर्भवतीति भावः । तस्मात् प्रधानत्वादेत एव जप्या इति भावः । निमित्तान्तरमाह- **एतज्जपादिति ।।** एतेषामष्टमहामन्त्राणां जपात्**समस्तानामे**तदितिरिक्तानां **मन्त्राणां जापकः** जपकर्ता भवेत् । एतज्जपफलेऽन्यसमस्तमन्त्रजपफलमन्तर्भवतीति भावः। प्रणवे यतीनामेवाधिकारः । 'प्रणवो यतीनामेव गृहिभिर्ज्ञायते न सः' इति वराहपुराणवचनादित्याहुः । अन्ये तु गृहस्थादीनामप्यधिकारः आचार्यैरेव तृतीयाध्याये प्रतिमाप्रतिष्ठायां होमादिकर्तुरेव प्रणवं च जपेदिति गृहस्थस्यापि प्रणवजपोक्तेः । अत एव तारो यतीनामिति माधवस्मृतौ यतीनां प्रणवः प्रथमं जप्यः गृहस्थादीनां सवित्रः विश्वामित्रगायत्रीमन्त्रः प्रथमं जप्य इति प्रथमजप्यत्व एव विशेष उक्तः । न च वाराहवचनविरोधः । 'गृहस्थाद्याः तथा शुद्धाः पौनश्चरणकं विना । नित्यमेव जपं कुर्युः' इति शौनकवचनानुसारेण पुनश्चरणे बहुजपकरणे च गृहस्थस्याधिकारनिषेधपरत्वात् । यतीनामपि विश्वामित्रगायत्री जपः कार्य एव ।

एकोंकारा संपुटा च षडोङ्कारेति सा त्रिधा ।
आदावोङ्कारसंयुक्ता गायत्र्येका उदाहृता ।।

आद्यन्तोङ्कारसंयुक्ता गायत्री संपुटा स्मृता ।
आद्योङ्कारा गृहस्थस्य वर्णिनश्च न चेतरे ।
वानप्रस्थयतीनां तु षडोङ्कारा प्रशस्यते ।।

इति आग्नेयवचनात् । 'पूर्वोङ्कारा व्याहृतियुगंते चाप्रणवा हि या । सैक प्रणवगायत्री कीर्तिता तु मनीषिभिः' इति व्यासः ।

ॐकारपूर्वमुच्चार्य भूर्भुवस्स्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते गायत्री संपुटा मता ।। इति याज्ञवल्क्यः ।

तिस्रो व्याहृतयः पूर्वं पृथगोङ्कारसंयुताः ।
पूर्वं पुनर्व्याहृतीनां मन्त्रस्याद्यन्तयोस्तथा ।
एतया जप्तया नित्यं वाङ्मयं जपितं भवेत् ।। इति मनुः ।।

सर्वं च सन्यसेद्विद्वान्वेदमेकं न संत्यजेत् ।
वेदसन्यसनाच्छूद्रः तस्माद्वेदं न संत्यजेत् ।। इति मनुः ।

कुटीचको बहूदश्च हंसपरहंसकः ।
वेदमातृपरित्यागी चण्डालादधमाधमः ।। इत्युशनाः ।

ब्राह्मण्यं च कुतस्तेषां गायत्री रहितात्मनाम् ।
गायत्री रहितास्सर्वे चण्डालादधमाधमाः ।। इति वशिष्ठः ।

न चेमानि ब्रह्मगायत्रीपराणि । कल्पकाभावात् । विश्वामित्रगायत्री निषेधकाभावाच्च । सव्याहृतिगायत्र्याः विश्वामित्रगायत्रीत्वेन यतेस्तद्भावे प्रमाणस्योक्तत्वात् । ब्रह्मगायत्र्यास्तु व्याहृतिरहितत्वादिति ।। ४८ ।।

पूजाप्रकारनिरूपणम्

**तं.सं. पूज्यश्च भगवान्नित्यं चक्राब्जादिकमण्डले ।**
**हृदये वाऽचले वाऽपि जले वा केवल(ले)स्थले ।। ४९ ।।**

**त. क.–** नन्वयमुपदेशविधिरितिकर्तव्यतासहित एव । विधेरंशत्रयवत्त्वनैयत्यात् । यद्यपि ग्रन्थान्तरे—

नास्तिकान् भिन्नमर्यादान् कृतघ्नान् वेदनिन्दकान् ।
अष्टाक्षरोपदेशेषु दूरतः परिवर्जयेत् ।।

यस्य देवे च मन्त्रे च गुरौ च त्रिषु निश्चला ।
न व्यवीच्छिद्यते भक्तिस्तस्य सिद्धिर्न दूरतः ।।

इत्यादिनिन्दास्तुत्यर्थवादाभ्यां शिष्यपरीक्षणमेकमङ्गमवगतम् । तथापि न तावता पूर्यते । याजनादिसाधारण्यप्राप्तेरित्यतः 'ततोऽनन्तगुणा हरेः पूजा' (तं.सा.४-१५८) इति वक्ष्यमाणरीत्या हरिपूजनं सर्वातिशयितमवगतम् । किञ्च—

ह्रस्वदीर्घविभागेन भिन्नाः पद्मज मन्मुखात् ।
अकाराद्याः स्वरा जाताः क्रमादन्येऽर्धमात्रकाः ।।

ककाराद्याश्च चक्रे ते न्यस्य पूज्याः परिष्कृते ।
प्रशस्ते निर्जने गुप्ते भूभागे शोभने समे ।।

हस्तद्वयेन विस्तीर्णं स्थण्डिलं चतुरस्रकम् ।
दर्पणोदारसङ्काशमुन्नतं चतुरङ्गुलैः ।।

मृद्भिर्विधाय सुषिरं गोमयेनोपलिप्य च ।
प्रोक्ष्य चक्रं विधातव्यं षोडशारपरिष्कृतम् ।।

तन्मध्ये छन्दसामादिररभूषु स्वरास्तथा ।
स्पर्शाक्षरं नाभिमध्ये नेमिमध्ये च यादवः ।।

एवं न्यस्तेषु वर्णेषु द्वादशाक्षरविद्यया ।
अर्घाद्यैः सकलैर्भोगैर्वर्णात्मानं समर्चयेत् । इति । तथा—

मातृकाचक्रमभ्यर्च्य द्वादशार्णे समुद्धरेत् ।। इति । तथा—

शुचौ विविक्ते विजने सर्वदोषविवर्जिते ।
वर्णक्रमं समालिख्य भूमावर्घ्यादिसाधनैः ।
अभ्यर्च्य च तथान्यायं ततो वर्णान् समुद्धरेत् ।

इति चक्रादिस्थभगवत्पूजाया मन्त्रोद्धारदिद्वारोपदेशविध्यङ्गत्वं प्रसिद्धम् । अतस्तदेवादौ दर्शयितुं **'पूज्यश्च भगवान्नित्यम्'** इत्यादिरध्यायान्तरुत्तरोत्तरो ग्रन्थसन्दर्भः । यद्वा—

निरन्तरजपस्यापि विनियोगमजानतः ।

मन्त्रः प्रच्यवते वीर्यात् तस्मात्तमवधारयेत् ।

इत्यादिना विनियोगस्यपि अवश्यवक्तव्यतया उद्धृतानां प्रणवादीनां मन्त्रणां 'एतज्जपात् समस्तानां मन्त्रणां जापको भवेत्' (तं.सा.१-४८) इत्यार्थवादिकविध्युन्नयनेन जपे विनियोग उक्तः । अधुनोक्तरीत्या पूजाया अतिशयितत्वात् विनियोगकथनप्रसङ्गाविच्छेदायैषां मन्त्राणां पूजायां विनियोगं दर्शयितुमुत्तरो ग्रन्थः । तत्र पीठपूजावरणपूजादिक्रमेण पूजाविधाने वक्तव्यं तावद्विलम्बमसहमानं प्रधानपूजाशुश्रूषोज्जृम्भितमानसं शिष्यमनुजिघृक्षुर्वैकल्पिकाधिष्ठानपूर्वकं प्रधानपूजामेवादावाह— **पूज्यश्च भगवानिति ।।**

न केवलं गुरूणा शिष्यपरीक्षैव कर्तव्या, किन्तु मन्त्रोद्धाराद्यङ्गतया वर्णचक्रस्थभगवत्पूजापि कर्तव्येति चार्थः । यद्वा, न केवलं गुरूणा मन्त्रोपदेशसमये मन्त्रोद्धारार्थे वर्णचक्रस्थभगवान् पूज्यः । किन्तु नित्यं च पूज्य इति चशब्दसम्बन्धः । 'अन्वर्च्य सर्वपापकृत्' इत्युक्तेः । तेन नित्यनैमित्तिकप्रयोगसाधारण्येनायं पूजाविधिरूच्यत इति सूच्यते । ननु नित्यं च पूज्य इत्यनुपपन्नम् । वर्णचक्रस्य मन्त्रोद्धारसमय एव लेखनीयतयाऽनित्यवर्णचक्रसम्बन्धात् पूजा कथं नित्या स्यादित्यतो वैकल्पिकाधिष्ठानानि बहून्याह— **चक्राब्जादिकमण्डल इति ।। आदिशब्देन** भद्रकं गृह्यते । चक्राब्जमण्डले वा भद्रकमण्डले वा पूज्य इति सम्बन्धः । तेषां लक्षणानि पञ्चरात्रे स्पष्टानि । ननूक्तमण्डललेखने सामर्थ्यविधुरस्य कथं पूजा नित्या स्यादित्यतः सर्वसाधारण्येन अधिष्ठानविकल्पमाह— **हृदये वेति ।। अचलं** वृक्षादि 'केवलस्थले' इत्यनेन लेखनासमर्थस्याप्यधिकारं सूचयति । तदर्थमेव केवलपदं बुद्ध्या विवेकेन त्रिष्वपि सम्बन्धनीयम् । न हि हृदयाद्यधिष्ठानचतुष्टयं

कृतिसाध्यम्। येन तदनिष्पत्तिसमये पूजा विच्छिद्येतेति भावः। अचलपदं स्वयंव्यक्तप्रतिमादिपरं वा व्याख्येयम्। न तु नवीनप्रतिमापरम्। येन तन्निर्माणविलम्बात् पूजाविलम्बः शंक्येत । तमिमं विशेषं दर्शयितुमेव हृदयादीनां स्वशब्देन ग्रहणम् । एतेन वर्णचक्रे उपदेशसमये गुरूणां पूजा युक्ता। न तु स्वहृदयादौ। उपयोगादर्शनादिति निरस्तम्। नित्यनैमित्तिकयोः पूजयोरूपक्रान्तत्वात्। ततो मन्त्रानुद्धृत्य प्रपन्नाय अस्मै शिष्याय ब्रूयात् इति वाक्यशेषः ।।४९।।

**अ.सं.–** इदानीं कः पूज्यः? कथं च तत्पूजा कार्या? इति पश्नद्वयं प्रतिवक्ति– **पूज्य इत्यादिना ।।** भगवान्नारायण एव पूज्यः। पूजास्थानान्याह– **चक्राब्जादिकेति ।। आदिपदेन** भद्रकं तत्तद्देवतायन्त्रं च ग्राह्यम् । तेषां लक्षणं तु स्वयमेव (४.१४३) वक्ष्यति। **अपिपदादग्निसूर्यादौ** च। **अचले** सालग्रामाद्यचलप्रतिमायाम्। वापदाद्देवालयादिस्थितस्थिरप्रतिमायां च। यद्वा **चले** सन्यासिगुर्वादिचलप्रतिमायाम्। वापदादचलप्रतिमादिकं ग्राह्यम् 'चलं संन्यासिनां रूपमचलं' इत्युक्तेः।

निवर्तितात्मनियमो देवमर्चेत्समाहितः ।
अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ।। (८.१६.२८)

इति भागवतोक्तेश्च । **केवले स्थले** भूमौ कृतमण्डले वा स्थण्डिल एव वा। न तु तदुपर्यन्यस्मिन्नधिष्ठान इत्यर्थः । उक्तं च तन्त्रे–

सालिग्रामे मणौ यन्त्रे स्थण्डिले प्रतिमासु च ।
हरेः पूजा तु कर्त्तव्या अप्स्वग्नौ हृदये रवौ ।।

इति क्वचिदागमे पीठे चक्रादिकमण्डलं तत्तद्देवतायन्त्रं चालिख्य तत्र चलप्रतिमां निधाय पूजयेदित्युक्तम् । सिद्धान्ततन्त्रे च–

स्वर्णादिरचिते पीठे पूजाचक्रं समुद्धरेत् ।
तस्मिन् संस्थाप्य देवं च पुष्पाद्यैरपि पूजयेत् ।। इति ।

गौतमीतन्त्रे च–

कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात् ।
यन्त्रमित्यहुरेतस्मिन् देवः प्रीणाति पूजितः ।। इति ।

आदौ मानसपूजां कृत्वा ततः पीठपूजां कृत्वा तत्र प्रतिमायां बिम्बमूर्तिमावाह्य पूजयेदित्युक्तं योगदीपिकायाम्–

अथ चान्तः पुरो विष्णोरुपविष्टस्तु मान्त्रिकः ।
अब्गन्धकुसुमैरन्यैः कुर्यादात्मार्चनं हृदि ।। (३.१)

बहिरश्चेत्ततो विष्णुं पुरस्तात्पीठदेवताः ।। (३.९) इति

पीठदेवता इत्यनन्तरं समर्च्यति शेषः ।। ४९ ।।

**गु.दी.–** पूजाया जपपूर्वकत्वाज्जपानन्तरं पूजाप्रकारं निरूपयति–– **पूज्यश्चेति ।।** चक्राब्जमादिर्यस्य तच्च तन्मण्डलं च तस्मिन् **चक्राब्जादिकमण्डले** । एकवचनं जात्यपेक्षया । **आदि**पदेन भद्रकादीनि मण्डलानि ग्राह्याणि । न केवलं ध्येय इति चार्थः । चशब्दात्प्रतिमादिष्विति वा । मण्डलोपरि प्रतिमां संस्थाप्य तत्रत्यं हरिं पूजयेत् । प्रतिमाभावसमये केवलमण्डले हरिमावाह्य पूजयेत् । जलादिप्रायपाठात् हृदये मानसोपचारैः । जले अर्घ्यादिभिर्गन्धपुष्पादिभिश्च । **आदि**पदादग्नौ । **चले** प्रवासोपयुक्तचलप्रतिमायाम्। शालग्रामादौ वा । वाशब्दाद् **अचले** स्थिर इत्यपि योज्यम् । 'चलाचलेति द्विविधा' इत्येकादशवचनात् (भा.११-२७-१३) । **केवलस्थले** शुद्धस्थले । अथवा **केवलस्थले** उच्छिन्नस्वयंव्यक्तप्रतिमास्थले । 'कलौ स्थानानि पूज्यानि' इत्युक्तत्वात् । अत्रादौ रहसि मानससर्वपूजां कृत्वा पीठदेवताः सम्पूज्य प्रतिमायां बिम्बमूर्तिमावाह्य पूजयेदित्यार्याः । तथा हि योगदीपिकायाम्–

अथाचान्तः पुरो विष्णोरुपविष्टः स मान्त्रिकः ।
अप्गन्धकुसुमैरन्यैः' इत्यारभ्य (यो.दी.३-१)

'पुष्पाञ्जलिं त्रिशः कृत्वा मनसाऽनुप्रसादयेत्' इति (यो.दी.३-९) मानसपूजोत्तरं

'बहिरर्चेत्ततो विष्णुं पुरस्तात्पीठदेवताः' (यो.दी.३-९) इति प्रतिमापूजोक्ता ।।४९।।

**मङ्गाली–** इदानीं कः पूज्यः? कथं च तत्पूजा कर्तव्या? इति प्रश्नद्वयं प्रतिवक्ति— **पूज्य इत्यादिना ।।** भगवान्नारायण एव पूज्यः। पूजास्थानान्याह— **चक्राब्जादिकेति ।। आदिपदेन** भद्रकं तत्तदेवतायन्त्रं च ग्राह्यम्। तेषां लक्षणं तु स्वयमेव वक्ष्यति। **अपिपदादग्निसूर्यादौ** च। **चले** सालग्रामादिचरप्रतिमायां। वापदात् देवालयादिस्थितस्थिरप्रतिमायां च। यद्वा **चले** सन्यासिगुर्वादिचलप्रतिमायां। वापदादचलप्रतिमादिकं ग्राह्यम्। 'चलं सन्यासिनां रूपमचलं प्रतिमादिकम्' इत्युक्तेः। **केवलस्थले** स्थण्डिले भूमौ कृतमण्डल एव वा। न तु तदुपर्यन्यस्मिन्नधिष्ठान इत्यर्थः। उक्तं च तन्त्रसारे—

सालग्रामे मणौ यन्त्रे स्थण्डिले प्रतिमासु च ।
हरेः पूजा तु कर्त्तव्या आप्स्वग्नौ हृदये रवौ ।। इति ।

आदौ मानसपूजां विधाय ततः पीठं पूजां कृत्वा तत्र प्रतिमायां बिम्बमावाहयेदित्युक्तं योगदीपिकायां-

अथ चान्तःपुरो विष्णोरुपविष्टस्तु मान्त्रिकः ।
अब्गान्धगुसुमैरन्यैः कुर्यादात्मार्चनं हृदि ।
बहिरर्चेत्ततो विष्णुं पुरस्तात्पीठदेवताः ।। इति ।

अत्र पीठदेवता इत्यनन्तरं समर्च्येति शेषः ।। ४९ ।।

गुरुपूजाकथनपूर्वं पीठपूजानिरूपणम्

**तं.सां. अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम् ।**
**मध्ये सव्ये गुरूंश्चैव दक्षिणे सर्वदेवताः ।। ५० ।।**

**पूनः सव्ये सर्वगुरूनाग्नेयादिषु च क्रमात् ।**
**गुरूडं व्यासदेवं च दुर्गां चैव सरस्वतीम् ।। ५१ ।।**

**धर्मं ज्ञानं च वैराग्यमैश्वर्यं चैव कोणगान् ।**
**तदन्तः पूर्वदिक्पूर्वमधर्मादींश्च पूजयेत्** ॥ ५२ ॥

**त.क.–** का भगवत्पूजाया इतिकर्तव्यतेति शङ्कायां पीठपूजां तावदाह— **अष्टाक्षरेणेत्यादिना** ॥ यद्यपि कलशपूजादिकं ततः पूर्वाङ्गजातमस्ति। तथाऽप्यवरोहणक्रमेण पीठस्य पूजैवादावुच्यते। ननु तर्ह्यावरणपूजैव वक्तव्या। सत्यम्। साक्षाद्भगवदावाहनस्थानत्वेन अभ्यर्हितत्वादस्यैव प्राथम्यम्। केवलहृदयादौ भगवतः पूज्यस्यावाहनं नोचितमिति शङ्कानिराकारणाय तत्तद्देवता-पूजापूर्वकं प्रार्थनया तत्तद्देवतासन्निधानादिना मांसाद्यात्मकस्य हृदयादेः पूतत्वादिसम्भवात् तत्रावह्य पूजा कर्तुमुचितैवेति भावेन पीठपूजायाः प्रथममुक्तिः। तेन शक्त्यादिकमारभ्य मण्टपपर्यन्तं भगवतः पीठत्वात्तदारभ्यैव पूजायां वक्तव्यायां गरूडादिमण्टपपाददेवतापूजावचनमयुक्तमिति चोद्यं निरस्तम्। उक्तशङ्कनिवारणय व्यत्यययोपपत्तेः। वस्तुतस्तु इहोच्यमानप्रमेयानाम-तिरहस्यत्वसिद्ध्यर्थं ? दुर्विज्ञेयत्वसिद्धये व्यत्यासोक्तिरित्यवधेयम्। एवमन्यत्रापि। तत्रापि प्रधानपददेवतापूजायां न प्रमदितव्यमिति भवेन सामान्यतस्तत्पूजामादावाह– **अष्टाक्षरेणेति** ॥ कप्रत्ययान्तस्य अधर्मादींश्च पूजयेदित्यनेन सम्बन्धः।

पीठमध्ये अष्टाक्षरेण मन्त्रेण परां देवतां प्रथमं, तत्सव्यभागे गुरून्, दक्षिणभागे सर्वदेवताश्च, पुनः सव्ये सर्वगुरूंश्च सम्पूज्य, आग्नेयादिषु कोणेष्वाग्नेयकोणे गरूडं, नैर्ऋत्यकोणे वासुदेवं, वायव्यकोणे दुर्गाम्, ईशान्यकोणे सरस्वतीं चेति क्रमात् सम्पूज्य तदन्तविद्यमानफलके पूर्वादिदिक्ष्वधर्मादीन् पूजयेदित्यर्थः। अत्र सप्तस्वपि स्थानेषु चशब्दः परस्य पूजासमुचयार्थः। 'परदेवतां प्रथमं सम्पूज्यैव' इत्याद्यस्यैवकारस्य सम्बन्धः। गरूडादीन् आग्नेयादिष्वेव पूजयेत्। ग्रन्थान्तररीत्या प्रधानदिक्ष्वेवेति वा, आग्नेयादिषु क्रमादेव पूजयेन्न त्वन्यथेति वा द्वितीयस्य सम्बन्धः। कोणगानेव न त्वधर्मादीनिव दिग्गतानिति तृतीयस्य संवन्धः ॥
॥ ५०-५३॥

**अ.सं.–** इदानीम्–

आत्मनश्च गुरुं पूज्य पीठपूजनमारभेत् ।
गुरूनभ्यर्चयेत्पूर्वं पश्चात्पीठं समर्चयेत् ।।

इत्यादि वचनात् पीठपूजां वक्तुं पूर्वं परदेवतापूजार्वकं गुर्वादिपूजामाह– **अष्टाक्षरेणेति ।। मध्ये** पीठस्थापनदेशमध्ये प्रथमं **परं देवतां** श्रीनारणं **अष्टाक्षरेण** मूलमन्त्रेण **सम्पूज्य** आवाह्य तस्य सव्ये पार्श्वे पीठस्थापनदेशाद्बहिः **गुरून्** अद्यगुरुं मुख्यवायुम् । बहुवचनं तु सर्वगुरुत्वादेव । **दक्षिणे** देवस्य दक्षिणपार्श्वे पीठस्थापनप्रदेशात् बहिरेव **सर्वदेवताः** विष्णुब्रह्मरुद्रान् ।।

पुनः सव्ये **सर्वगुरून्** सनत्कुमारसनकसनन्दनसनातनाख्यान् । अत्रोक्तद्वितियान्तपदानां पूजयेदिति वक्ष्यमाणेन सम्बन्धः । तदुक्तम्-

अर्चयेद्गन्धपुष्पाद्यैः पीठपार्श्वे तु सव्यके ।
वायुमाद्यगुरुं लोके पीठपार्श्वे तु दक्षिणे ।।

ब्रह्माणं विष्णुमीशं च समाराध्य तथोत्तरे ।
सनत्कुमारं सनकं सनन्दनसनातनौ ।। इति पाद्मतन्त्रे ।

गुरुपूजनं नाम तद्ध्यानमेव । ध्येयगुणा उक्ताः आगमे-

श्वेताम्बरधरा गौरा गुरवः पुस्तकान्विताः ।
व्याख्यानमुद्रया युक्ताः ध्यायन्तो वै निजं हरिम् ।
ध्यातव्या पूजनादौ च तद्ध्यानाज्ज्ञानवान् भवेत् ।। इति ।

अन्ये त्वेवं मन्यन्ते । **मध्ये** वक्ष्यमाणपीठदेवानां मध्ये, स्वपूज्यप्रतिमामध्ये वा, **गुरून्** साक्षात् ज्ञानोपदेष्टॄन् सव्यभागे, साक्षाज्ज्ञानोपदेष्टृगुरुपूजनं नाम गुर्वन्तर्गतो भगनानत्रास्तीति ध्यानम् । इदं मनुष्याणामर्चकत्वे । देवानामर्चकत्वे तु तेषां साक्षद्गुरूणां वाय्वादीनां देवतात्वेन तेषामत्रागमनसम्भवेन नानुपपत्तिः । **सर्वदेवताः** नवकोटिसंख्याकाः देवताः । सर्वगुरून् अन्येऽपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः'' (म.भा.ता.नि. १.१२४) इत्यत्रोक्तान् । रमाब्रह्मादीनां पूर्वं

देवतात्वेन प्राप्तावपि इदानीं गुरुत्वोपाधिना प्राप्तिरिति ध्येयम्। 'मूलगुरून् सर्वगुरूननुज्ञाभक्तिपूर्वकम्। आदायैभ्य' इत्युक्तेः। गुर्वाज्ञास्वीकारार्थं गुरुपूजा-मुक्त्वा इदानीं पीठपूजामाह— **आग्नेयादिष्वित्यादिना** ।

देवसाधकयोरन्तः पूर्वा सा दिगिहोच्यते । तथा—
देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् ।।
तदादिपरिवाराणामङ्गाद्यावरणास्थितिः ।।

इति नृजिंहराणवचनात्। देवस्य पूजकस्य च मध्यभागं प्राचीत्वेन ध्यात्वा तदारभ्य आग्नेयादिदिक्कल्पनां कृत्वा तत्र देवान् पूजयेत्। आग्नेयादिषु आदिपदेन नैर्ऋतवायव्येशानेष्विति ग्राह्यम्। एवं चतुष्कोणेषु गरुडादीन् चतुःसङ्ख्याकान् देवान् **क्रमदुक्त**क्रमेणैकैकस्मिन् कोणे एकैकं देवं पीठपादाधः स्थलेषु पूजयेत्।

पीठपादोर्ध्वदेवता आह– **धर्ममिति ।। धर्मं** धर्माभिमानिनमित्यादिज्ञेयम्। एतांश्चतुरो देवान् **कोणगान्** कणेस्थितानाग्रेयदिक्रमेणेति शेषः। पूजयेत्। पीठफलकदेवता आह– **तदन्तरिति ।।** तस्त्वस्तेषां कोणानां **अन्तर्मध्ये** प्रधानदिक्ष्विति यावत्। पूर्वादिक् प्राचीदिक् पूर्वा आद्या यथा स्यात्तथा। पूर्वादिक्रमेणेति यावत्। **अधर्मादीन्** अधर्माज्ञानावैराग्यानैश्वर्याभिमानिदेवान् पीठफलकेषु पूजयेत् । उक्तं चैतत्सर्वं योगदीपिकायाम्–

अग्न्यादीकोणगानश्चेत् पीठपादतलस्थितान् ।
विपश्चिद्गरुडं व्यासं दुर्गां चैव सरस्वतीम् ।।

धर्मं ज्ञानं च वैरग्यमैश्वर्यं च ततः परम् ।
तन्मूलगानधर्मादीन् पूर्वादौ फलकाश्रयान् ।। इति (३.११,१२)

।। ५०-५२ ।।

**गु.दी.–** पीठपूजायां गुर्वादितेवतापूजाप्रकारं वदन् सव्यत्वादेर्मध्यसापेक्षत्वात् तदाह— **अष्टाक्षरेणेति ।। प्रथमं परां देवतां** परात्मानम् **अष्टाक्षरेण** अष्टाक्षरोच्चारणपूर्वकं 'परदेवतायै नमः' इत्येवंरूपेणेति यावत्। **मध्ये** यत्र पीठं कल्प्यं तत्स्थानमध्ये सम्पूज्य पीठमध्ये नारायणं पूजयेत्।

'परदेवतयाऽत्राऽगत्योपवेष्टव्यमस्ति तदर्थं पीठं रचयामि' इत्यनुसन्धानं कुर्यादिति यावत् । वक्ष्यमाणपीठदेवतामध्ये वा । प्रतिमामध्य इति वा । पूर्वं स्वहृदयमध्य इति वा । देवस्य सव्ये पीठाद्बहिर्गुरून् वायुं पूजयेदिति वक्ष्यमाणमत्रानुकृष्यते । दक्षिणे **सर्वदेवताः** विष्णुब्रह्मरुद्रान् । **पुनः सव्ये सर्वगुरून्** सनत्कुमारादीन् सम्पूजयेत् । तदुक्तं पाद्मतन्त्रे—

अर्चयेद्गन्धपुष्पाद्यैः पीठपार्श्वे तु सव्यके ।
वायुमाद्यगुरुं लोके पीठपार्श्वे तु दक्षिणे ।।
ब्रह्माणं विष्णुमीशं च समाराध्य तथोत्तरे ।
सनत्कुमारं सनकं सनन्दनसनातनौ ।। इति ।

**केचित्तु, गुरून्** वाय्वादिस्वगुरून् देवतापूजार्थंताननुज्ञाप्येत्यर्थः । अत्र देवतानामर्चकत्वे वाय्वादेः साक्षाद्गुरुत्वं मनुष्याणामर्चकत्वे गुर्वन्तर्यामित्वेन गुरुत्वमिति ज्ञेयम् । **सर्वदेवताः** नवकोटिदेवताः । ब्रह्मवाय्वोर्निमित्तद्वय-सद्भावादुभयत्रोक्तिर्न विरुद्धा । **सर्वगुरून्** सनकादीन् । **अन्ये** स्वगुरून् साक्षात्स्वगुरुमारभ्य सर्वगुरूनिति वर्णयन्ति ।।

योगपीठस्य पादाधोदेवता आह— **गरुडमिति ।।** आग्नेयादिकोणेषु क्रमेण गरुडादयः पीठपादाधोदेवताः पूज्याः । तदुक्तमन्यत्र–

अव्यक्तं नियतिं चैव कालदं विष्णुमेव च ।
आग्नेयादिचतुर्दिक्षु स्वभावेषु समर्चयेत् ।।
एतानप्यङ्घ्रिरूपांश्च पीठाधःस्थांश्च संस्मरेत् ।। इति ।

अस्यार्थः अव्यक्तिर्दुर्गा । नियतिः सरस्वती । कालदो गरुडः । विष्णुर्व्यासः । स्वभावेषु स्वेषां स्थानेषु आग्नेयादिषु अङ्घ्रिरूपान् पीठाधस्तादङ्घ्रिरूपान् पीठाधोभागरूपान् तद्गतान् स्मरेदिति ।।

पीठपादोर्ध्वदेवताः फलकदेवताश्चाह— **धर्ममिति ।।** यथोक्तम् पाद्मे—

धर्मादयः पादरूपाः पीठस्य फलकाः परे ।। इति ।

**परे** अधर्मादय इत्यर्थः। **धर्मं** धर्माभिमानिनं तत्प्रभृतीन् **कोणगान्** आग्नेयादिकोणगान् पूजयेत्। **तदन्तः** कोणयोरन्तर्मध्ये। पूर्वदिक् पूर्वं यथा स्यात् तथा। पूर्वादिदिक्षु देवस्यैव पूर्वादिदिक्ष्विति सम्प्रदायः। मनुष्यप्राच्यादीति अपरे। **अधर्मादीन्** अधर्माज्ञानावैराग्यानैश्वर्याभिमानिदेवान्। धर्मादीनां रूपविशेषमाह सारसङ्ग्रहे—

धर्मं वृषतनुं रक्तवर्णमादौ प्रपूजयेत् ।
सिंहाकारं ततो ज्ञानं श्यामवर्णं समाहितः ।।

भूताकारं च वैराग्यं पीतवर्णं यजेत्ततः ।
कृष्णवर्णं गजाकारमैश्वर्यं साधु पूजयेत् ।।
अधर्मादींश्च पीठस्य चित्रगात्राधिपांस्ततः ।। इति ।।५०-५२।।

**मङ्गाली**—आत्मनश्च गुरुं पूज्य पीठपूजनमाचरेत् ।
गुरूनभ्यर्चयेत्पूर्वं पश्चात्पीठं समर्चयेत् ।।

इति वचनात्पीठपूजां वक्तुं पूर्वं परदेवतापूजापूर्वकं गुर्वादिपूजामाह- **अष्टाक्षरेणेति ।। मध्ये** पीठस्थापनदेशमध्ये प्रथमं **परां देवतां** श्रीनारायणम**ष्टाक्षरेण** मूलमन्त्रेण संपूज्य बाह्यान्तस्य सव्ये पार्श्वे पीठस्थापनप्रदेशाद्बहिः **गुरून्** आद्यगुरुं मुख्यवायुं, बहुवचनं तु सर्वगुरुत्वादेव। **दक्षिणे** दक्षिणपार्श्वे पीठस्थापनप्रदेशाद्बहिरेव **सर्वदेवताः** विष्णुब्रह्मरुद्रान्, पुनः सव्ये **सर्वगुरून्** सनत्कुमारादीन्। अत्रोक्तद्वितीयान्तस्य पूजयेदिति वक्ष्यमाणेन सम्बन्धः। तदुक्तम्-

अर्चयेद्गन्धपुष्पाद्यैः पीठपार्श्वे तु सव्यके ।
वायुमाद्यगुरुं लोके पीठपार्श्वे तु दक्षिणे ।

ब्रह्माणं विष्णुमीशं च समाराध्य तथोत्तरे ।
सनत्कुमारं सनकं सनन्दनसनातनौ ।। इति ।

श्वेताम्बरधरा गौराः गुरवः पुस्तकान्विताः ।
व्याख्यानमुद्रया युक्ताः ध्यायन्तो वै निजं हरिम् ।
ध्यातव्याः पूजनादौ च................॥

इति पाद्मतन्त्रोक्तं गुरुध्यानमेव गुरुपूजनम्। अन्येत्वेवं मन्यन्ते। **मध्ये** वक्ष्यमाणपीठदेवतानां मध्ये। स्वपूज्यप्रतिमामध्ये वा, **गुरून्** साक्षात् ज्ञानोपदेष्टॄन्। सव्यभागे ज्ञानोपदेष्टृपूजनं नाम गुर्वन्तर्गतो भगवानत्रास्तीति ध्यानम्। इदं मनुष्याणामर्चकत्वे देवनामर्चकत्वे तु तेषां साक्षाद्गुरूणां वाय्वादीनां देवतात्वेनात्रागमनसम्भवेन नानुपत्तिः। **सर्वदेवताः** नवकोटि-सङ्ख्याका देवताः ॥

**सर्वगुरून्** 'अन्येऽपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः' इत्यत्रोक्तान्। रमाब्रह्मादीनां पूर्वं देवतात्वेन प्राप्तावपि इदानीं गुरुत्वोपाधिना प्राप्तिरिति ज्ञेयमिति। 'मूलगुरुं सर्वगुरुमनुज्ञां भक्तिपूर्वकम्। आदायैभ्यः' इत्युक्तेः गुर्वाज्ञास्वीकारार्थं गुरुपूजामुक्त्वा इदानीं पीठपूजामाह— **आग्नेयादि-ष्वित्यादिना ॥**

देवसाधकयोरन्तः पूर्वा सा दिगिहोच्यते ।
तथा देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् ॥

इति नृसिंहपुराणवचनात् देवपूजकयोर्मध्यभागं प्राचीत्वेन ध्यात्वा तदारभ्याऽग्नेयादिदिक्कल्पनां कृत्वा तत्र देवान् पूजयेत्। आदिपदेन नैऋतवायवीयैशानेषु इति ग्राह्यम् । एवं चतुष्कोणेषु गरुडादीन् चतुस्सङ्ख्याकान् **क्रमादुक्तक्रमेणै**कैकस्मिन् कोणे एकैकदेवं पीठपादाधस्थलेषु पूजयेत् ॥

पीठपादोर्ध्वदेवता आह— **धर्ममिति ॥ धर्मं** धर्माभिमानिनमित्यादि ज्ञेयम्। एतान् चतुरो देवान् **कोणगान्** कोणस्थितान् । आग्नेयादिक्रमेणेति शेषः। पूजयेत्। पीठफलकदेवता आह। **तदन्तरिति ॥** तदन्तः तेषां कोणानामन्तः मध्ये प्रधानदिक्ष्विति यावत्। पूर्वदिक् पूर्वं पूर्वदिक् प्राचीदिक् पूर्वा आद्या यथा स्यात्तथा। पूर्वादिक्रमेणेति यावत्। **अधर्मादीन्** अधर्माज्ञानावैराग्यानैश्वर्या-भिमानिदेवान् पीठफलकेषु पूजयेत्। उक्तं चैतत्सर्वं योगदीपिकायाम्—

अग्न्यादिकोणगानर्चेत्पीठपादतले स्थितान् ।
विपश्चित् गरुडं व्यासं दुर्गां चैव सरस्वतीम् ।।

धर्मंज्ञानं च वैराग्यं ऐश्वर्यं च ततः परम् ।
तन्मूर्धगानधर्मादीन् पूर्वादौ फलकाश्रयान् ।। इति ।। ५०-५२ ।।

अधर्मादिदेवतापूजाया आवश्यकत्वसमर्थनम्

**तं.सं. अपूजिता अधर्मादिदातारस्ते तथाऽभिधाः ।**
**निर्ऋतिश्चैव दुर्गा च कामो रूद्रश्च देवताः ।। ५३ ।।**

**त.कं.—** ननु धर्मज्ञानादीनाभिमानिनो देवाः। ततस्तदनुग्रहसम्पादनाय तत्पूजनं युक्तम्। अधार्माद्यभिमानिनस्त्वसुरा एव। ततस्तत्पूजनं कथं विधीयत इति चेन्न। अधार्मादिशब्दैर्देवानामेव वाच्यत्वेन तत्पूजविधानोपपत्तेः। न चाधर्मादिशब्दानामधर्माद्यभिमान्यसुरेष्वभिमन्यमानशब्दानामभिमानिषु बहुल-प्रयोगदर्शनोपपत्तावपि तदभिमानशून्येषु देवेषु कथं वृत्तिरिति वाच्यम्। 'नादैवं किञ्चिदिष्यते' इति वचनेन देवेष्वपि अधर्माद्यभिमानसम्भवात्। न चैवमप्यनिर्णय एवेति वाच्यम्। 'तदधीनत्वादर्थवत्' (ब्र.सू.१-४-३) इति न्यायेन पदप्रवृत्ति-निमित्तस्वामित्वस्य मुख्यवाच्यतानिमित्तत्वेन निर्णयोपपत्तेरित्याह— **अपूजिता इति ।।** एवेत्यनुवर्तते। त एव अधर्माद्यभिधावंतः, न त्वसुराः। यतस्त एवाधर्मादिदातारः। असुरास्तु निषिद्धाचरणे प्रेरयन्तो न तत्कृतफलादाने समर्थाः। अतस्तेषामधर्मादिस्वामित्वाभावान्न ते मुख्यवाच्या इत्यर्थः। ननु देवा अधर्मादिदातारश्चेत् धर्मादिनामवान्तरकर्तृसापेक्षत्वादसुरा एव तथेति प्राप्तम्। अत आह— **अपूजिता इति ।।** देवानामेव दशाविशेषादुभयदातृत्वोपपत्तेर्नासुराणां तद्दातृत्वं कल्प्यमिति भावः । ननु धर्मादयोऽपि देवा अधर्मादयोऽपि देवाश्चेत्तर्हि त एवैते उत ततोऽन्ये केचनेति विचिकित्सायामाह— **निर्ऋतिश्चैवेति ।।** अधर्मादीनामिति शेषः। अत्र चाः परस्परसमुच्चये। एवकारोऽसुरयावृत्त्यर्थः ।। ५३ ।।

**अ.सं.**– ननु धर्माद्यभिमानिनां पूजनं युक्तम् । धर्मादिप्राप्त्यर्थकत्वात् । न त्वधर्मादीनाम् । तत्प्राप्तेरनपेक्षितत्वादित्यत आह– **अपूजिता इति ।। तथाऽभिधाः** अधर्मादिनामानः । अधर्मादयः क इत्यत आह– **निर्ऋतिरिति ।। देवताः** अधर्मादीनामभिमानिनः ।।५२।।

**गु.दी.** ननु धर्मादिप्राप्त्यर्थत्वेन तत्पूजनस्यावश्यकत्वेऽपि नाधर्मादिपूजनस्यावश्यकतेत्यत आह— **अपूजिता इति ।। तथाभिधाः** अधर्माद्यभिधावन्तस्तेऽपूजिताश्चेदधर्मादिदातारः स्युरतस्तेऽपि अवश्यं पूज्या इत्यर्थः । अधर्मादेर्देवता आह— **निर्ऋतिरिति** ।। ५३ ।।

**मङ्गाली**– ननु धर्माद्यभिमानिनां पूजनं युक्तम् । धर्माधिप्राप्त्यर्थत्वात् । न त्वधर्मादीनाम् । तत्प्राप्तेरनपेक्षितत्वादित्यत आह— **अपूजिता इति ।। तथाभिधाः** अधर्मादिनामानः । ते क इत्यत आह— **निर्ऋतिरिति । देवताः** अधर्मादीनामभिमानिनः ।।५३।।

धर्माभिमानिदेवतानिरूपणम्, पीठदेवतानिरूपणं च

**तं.सा.** **यमवायुशिवेन्द्राश्च ज्ञेया धर्मादिदेवताः**
**परमः पुरुषो मध्ये शक्तिराधाररूपिणी** ।। ५४ ।।

**कूर्मोऽनन्तश्च पृथिवी क्षीरसागर एव च**
**श्वेतद्वीपो मण्टपश्च दिव्यरत्नमयो महान्** ।। ५५ ।।

**पद्ममेतत्त्रयं देवी रमैव बहुरूपिणी ।**
**सूर्यसोमहुताशाश्च पद्मे श्रीस्त्रिगुणात्मिका** ।। ५६ ।।

**त.क.**– देवताकथनप्रसङ्गाद्धर्मादीनामप्येत एव देवताश्चेत्पुनरुक्तदोषानतिवृत्तिरित्यतो धर्मादीनां देवता आह— **यमेति** ।। एवं मण्टपस्य पीठदेवता उक्त्वा मध्यफलकदेवतामाह— **परम इति** ।। मध्यफलके परमः पुरुषो ज्ञेय इत्यर्थः । नन्वयं मण्डपः कुत्रत्यः ? यत्पादपीठदेवतायामाद्या निर्ऋत्याद्याश्च पूज्या इत्यतो ब्रह्मण्डस्याधःप्रदेशमारभ्य श्वेतद्वीपपर्यन्तमाधारभूतान् दर्शयति—

**शक्तीति ।।** प्रह्माण्डाद् बहिस्था आधाररूपिणी शक्तिः । तदधः पूज्येति शेषः । शक्तिरित्यनेन शक्तिराधारशक्तिश्च, चिच्छक्तिश्चेत्युक्तशक्तित्रयं ग्राह्यम् । कूर्मशब्देन—

बिभर्त्यण्डं हरिः कूर्मः अण्डे चाप्युदकं महत् ।
उदके कूर्मरूपस्थो वायुः पुच्छं समाश्रितः ।। (भृ.भा.१-३)

इत्यस्य कूर्मरूपस्य ग्रहणम् । अनन्तशब्देन—

वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम् ।
बिभर्ति.................................. ।। (बृ.भा.१-२)

इत्युक्तशेषो गृह्यते । पृथिवीशब्देन पातालमारभ्य सप्तलोका गृह्यन्ते । क्षीरसागरशब्देन षष्ठः समुद्र उच्यते । सर्वत्र 'पूज्यः' इति पदाध्याहारसूचको द्वितीयश्चशब्दः । किं शक्त्यादयः समदेशस्थाः पूज्या इत्यतो नेत्याचष्टे **एवशब्देन** । उपर्युपरि स्थिता एवेत्यर्थः । श्वेतद्वीपेत्यनेन क्षीरसागरमारभ्य स्वर्गलोक-पर्यन्तमुन्मुत्तककुसुमवद्विस्तीर्णोपरिप्रदेशयुक्तदेशविशेष उच्यते । ततो 'गरुडं व्यासदेवं च' इत्युक्तदिशा मण्टपोऽपि पूज्यः । 'दिव्यरत्नमयो महान्' इति मण्टपविशेषणद्वयेन तत्प्रकारकध्यानं मण्टपपूजायामितिकर्तव्यतेति सूचयति । ततोऽष्टदलात्मकं पद्मं च पूज्यमिति सम्बन्धः । श्वेतद्वीपमण्टपपद्मानां पूजने इतिकर्तव्यतां सूचयन् तत्त्रयं विशिनष्टि— **एतत्त्रयं देवी रमैवेति ।।** एतत्त्रयाभिमानिनीत्यर्थः । कथमेकस्या युगपत् त्रयाभिमानित्वमित्य-तस्तद्घटयति— **बहुरूपिणीति ।।** बहुरूपप्रसङ्गाद्रमायाः पूज्यं रूपत्रयमाह— **श्रीस्त्रिगुणात्मिकेति ।।** सत्वरजस्तमोगुणनियामिकेत्यर्थः । श्रीभूदुर्गेति रूपत्रयं श्वेतद्वीपे पूज्यमिति योज्यम् । अनेन श्वेतद्वीपस्य भूभागः पुरस्तात्, दुर्गाभागः परस्तात्, मध्ये श्रीभागः सर्वोन्नतोऽस्तीत्यादि ग्रन्थान्तरोक्तप्रमेयं सूचितम् । यद्यपीदं श्वेतद्वीपोक्त्यनन्तरमेव वक्तव्यम् । तथापि बहुरूपकथनप्रसङ्गा-दिहोक्तमिति ज्ञातव्यम् । अत्र पद्मस्य मध्ये कर्णिकाऽपि पूज्या । तत्र मण्डलत्रयं च पूज्यमित्यध्याहरणीयम् । तत्र कानि मण्डलानीत्यतस्तत्तद्देवतोक्तिपूर्वमाह—

**सूर्येति ।।** पद्मस्थकर्णिकायां सूर्यचन्द्रवह्नयश्च पूज्या इति सम्बन्धः। तेन सूर्यमण्डलमाद्यं, चन्द्रमण्डलं द्वितीयं, वह्निमण्डलं तृतीयम्। अष्टपत्रे हृत्पद्मे मध्ये सूर्येन्दुवह्नीनां पीठमित्युक्तदिशा पूज्यमिति सूचयति ।।५४-५६।।

**अ.सं.–** धर्माद्यभिमानिन आह– **यमेत्यादिना ।।** अत्र पीठाधोभागे चिन्तनीयपरमपुरुषादिकमनुक्त्वा प्राक् पीठपूजाप्रकारकथनं तु प्रथमतः पीठं ध्यात्वैव ततः परमपुरुषादिकं ध्यायेदिति ज्ञापनार्थम्। तदुक्तं पञ्चरात्रे–

आदौ सिंहासनं ध्यात्वा पूज्यः परमपूरुषः ।
आधारशक्तिः प्रकृतिः कूर्मोऽनन्तो वराहकः ।।

पृथ्वी क्षीरार्णवः श्वेतद्वीपश्चेति तथैव च ।
सुवर्णमण्टपश्चैव हेमप्राकार इष्यते ।
सुवर्णवेदिकामध्ये मन्त्रैः सिंहासनं यजेत् ।। इति ।।

पुरुषं शक्तिकूर्मौ च शेषं पृथ्वीं च सागरम् ।
श्वेतद्वीपं मण्टपं च दिव्यरत्नमयं शुभम् ।
रत्नसिंहासनं तत्र पूजयेन्मण्डलान्वितम् ।।

सूर्यसोमाग्निमण्डलैरन्वितमित्यर्थः। 'तत्पादेषु यजेत्सम्यगाग्नेयादिशिवान्तकं' इत्यागमान्तरे। यत्पुरुषादिपूर्वककथनं तदपि पक्षान्तरमिति ज्ञेयम्। इदानीं भूमेरधःस्थितब्रह्माण्डखर्परादधःस्थलमारभ्य पीठस्थापनदेशपर्यन्तं परमपुरुषमारभ्य मण्टपान्तं पूजयेदित्यहुः– **परमपुरुष इत्यादिना ।।** ब्रह्माण्डादधः **परमपुरुषो** नारायणः। अबग्नीरनभोऽहङ्कन्महतत्त्वतमोरजःसत्वगुणाख्यनवावरणसहितं ब्रह्माण्डं शिरसि धृत्वा पद्मासनः प्राङ्मुखो वर्तते। सः **मध्ये** पीठस्थापनदेशमध्यापेक्षया समानसूत्रे ब्रह्माण्डादधोदेशे पूज्यः। तदुपरिभागे **आधाररूपिणी** साक्षादावरणाधाररूपिणी **शक्तिस्**तन्नामिका लक्ष्मीः पूज्या ।।

तदुपरि **कूर्मः** ब्रह्माण्डाधारधूतः विष्णुकूर्मः, अण्डान्तश्च कूर्मः अगाधजलाधारभूतः अपरः विष्णुकूर्मः, तदुपरि कूर्मः वायुकूर्मश्चेति कूर्मशव्देनात्र कूर्मत्रयं ग्राह्यम्। तदुपरि **अनन्तः** शेषः कूर्मरूपवायुपुच्छं समाश्रितः—

बिभर्त्यण्डं हरिः कूर्म अण्डे चाप्युदकं महत् ।
उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः ।। (भृ.भा.१-३)

य एव कूर्मरूपेण वायुरण्डोदके स्थितः ।
विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः ।। (बृ.भा.१-२)

इति बृहद्भाष्योक्तेः । शेषोपरि पृथिवी पञ्चभूतावरा तदभिमानिनी भूश्च । 'वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम् । बिभर्ति' इति तत्रैवोक्तेः । तदुपरि **क्षीरसागरः** वरुणः । तदुपरि श्वेतद्वीपः । तदुपरि दिव्यनानाविधरत्नखचित-सुवर्णमण्टपः । एतन्मण्टपान्तः स्थितपीठोपरि पद्मं ज्ञेयम् । एते परमपुरुषादयः श्वेतद्वीपान्ताः पीठादधः उपर्युपरि पूज्याः । उक्तं च विष्णुतीर्थीये- 'परं ब्रह्मैव मध्ये च क्रमादुत्तरमुत्तरम्' इति (३.९५) ।

वासिष्ठेऽपि–

पुरुषाद्यास्तु पीठाधः पूज्या द्वीपावसानकाः ।
धर्मादीनर्चयेत्पीठपादगांस्तत्र चाञ्जसा ।। इति ।।

एवं परमपुरुषमारभ्य मण्टपान्तं ध्यात्वा तत्रत्यचतुष्कोणपीठे षट्कोणं पद्मं तस्य मध्येऽष्टपत्रपद्मं ध्यात्वा तत्र लक्ष्मीपतिं पूजयेत् । तदुक्तं तन्त्रतिलके–

चतुष्कोणं तु पीठं स्यात्षट्कोणं तस्य मध्यतः ।
तन्मध्येऽष्टदलं पद्मं तत्र पद्मेशमर्चयेत् ।। इति ।

श्वेतद्वीपादीनां त्रयाणां देवतामाह– **एतत्त्रयमिति ।।** श्वेतद्वीपः मण्टपः पद्ममित्येतत्त्रयं बहुरूपिणी **रमैव** लक्ष्मीदेवताकमेव । विकाराभावकथनार्थं देवी क्रीडादिगुणयुक्तेत्युक्तम् । षट्कोणपद्मस्य षट्कोणेषु पूज्यदेवता आह– **सूर्येति ।। पद्मे** पद्मषट्कोणेषु मध्ये पुरोभागस्थेषु त्रिष्वस्रेषु प्रादक्षिण्येन **सूर्यसोमहुताशाः** सूर्यसोमाग्निमण्डलानि दीपरूपाणि पूज्यानि । पृष्ठभागस्थेषु त्रिष्वस्रेषु **त्रिगुणात्मिका** सत्वरजस्तमोभिमानिनी लक्ष्मीः पूज्या । तत्र सत्वाभिमानिनी श्रीः । रजोभिमानिनी भूः । तमोभिमानिनी दुर्गेति विवेकः । उक्तं च सङ्ग्रहे-

पृष्ठकोणेषु पद्मस्य सत्त्वादीन् क्रमतो यजेत् ।
गुणान्यजेत्ततः पूर्वं सूर्यसोमाग्निमण्डलान् ।। इति ।

यत्तु विष्णुतन्त्रे–

मध्ये कन्दं मूलनालं पद्मपत्रं सकेसरम् ।
कर्णिकामध्यदेशे तु सूर्यसोमाग्निमण्डलान् ।
एतान्वै मण्डलाधीशानुपर्युपरि पूजयेत् ।।

इति मण्डलानामेकैकोपरितनत्वप्रतिपादकं वचनं तत्-

हृत्पुण्डरीकमन्तःस्थमूर्ध्वनालमधोमुखम् ।
ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ।
कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ।
वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमङ्गलम् ।। (भा.११.१४.३६, ३७)

एकादशस्कन्धे ध्यानप्रकणे उक्तध्यानविषयं ज्ञेयम् । प्रतिमापूजायां तु अत्रोक्त-प्रकार एव । 'पृष्ठकोणेषु पद्मस्य' इति सङ्ग्रहवचनादिति ज्ञेयम् ।। ५४-५६ ।।

**गु.दी–** धर्मादिदेवता आह— **यमेति ।।** पादफलकयुतं ध्यातं पीठं पृथङ्निधाय परमपुरुषादीन् पूजयेदित्याह— **परम इति ।।** परमात्मा **मध्ये** गर्भोदकमध्ये । सनवावरणब्रह्माण्डमध्य इति वा । अन्ये तु पीठमध्य इति वर्णयन्ति । **आधाररूपिणी शक्तिः** तन्नाम्नी रमा पीठस्याधोभागे पूज्येति शेषः । **शक्तिः** चिच्छक्तिश्चेत्यपि द्रष्टव्यम् ।

शक्तिराधारशक्तिश्च चिच्छक्तिश्चेति शक्तयः ।
कूर्मादयश्च पीठाधः पूजनीया यथाक्रमम् ।।

इत्यादिवसिष्ठवचनात्पञ्चसंस्कारे ।

**कूर्मो** विष्णुकूर्मो वायुकूर्मश्च । **अनन्तः** शेषः । यथोक्तं बृहद्भाष्ये प्रभञ्जने—

स एष कूर्मरूपेण वायुरण्डोदके स्थितः ।
विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः ।। इति । (बृ.भा.१.२)

कूर्मरूपेण विष्णुना धारित इत्यनुवादबलाद्विष्णुरपि कूर्मरूपी वर्तत इति विधिर्लभ्यते। न च 'बृहदण्डवोढा' इति भगवत्पादवचने कूर्मरूपिणो विष्णोर्ब्रह्माण्डाधारत्वकथनेन बहिष्ठत्वलाभाद्गर्भोदकस्थत्वं कथमिति वाच्यम्। भगवतः कूर्मरूपद्वयाङ्गीकारात्। न च कल्पकाभावः।

बिभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महत्।
उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः ।। (बृ.भा.१.२)

इति द्वितीयब्राह्मणबृहदारण्यकोपनिषद्भाष्यवचनात्। **पृथिवी** पञ्चभूतावरा तदिभमानिनी भूः।

वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम्।
बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम् ।।(बृ.भा.१.२)

इति वैभववचनात्।

**क्षीरसागरो** वरुणः दिव्यरत्नमयो महान् मण्टपश्च पूज्यः। तस्मिन्मण्टपे पूर्वपूजितं पीठं निधाय तत्र षट्कोणमष्टदलं पद्मं पूजयेत्। तथा हि तन्त्रतिलके--

चतुःकोणं तु पीठं स्यात् षट्कोणं तस्य मध्यतः।
तन्मध्येऽष्टदलं पद्मं तत्र पद्मेशमर्चयेत् ।। इति ।।

पद्ममित्यनन्तरमितिशब्दोऽध्याहार्यः। **इत्येतत्त्रयं** श्वेतद्वीपो मण्टपः पद्ममिति त्रयं, **बहुरूपिणी** विविधस्वरूपिणी। विकाराभावकथनाय **देवीति**। क्रीडादिगुणसम्पन्ना **रमैव** रमात्मकमेव। कन्दं नालं पद्ममिति त्रयमिति बौद्धपरामर्शो वा।

परब्रह्मैव मध्ये वै क्रमादुत्तरमुत्तमम्।
आधारशक्तिं कूर्मं चाप्यनन्तं पृथिवीं तथा।
कन्दं नालं तथा पद्मं क्षीरसागरमेव च ।। (वि.ती.३-९६)

इति विष्णुतीर्थीयवचनात् ।।

लक्ष्म्यात्मकपद्मस्यारेषु पूज्यानाह— **सूर्येति ।। पद्मे** तस्य षडरेष्वित्यर्थः। सूर्यसोमहुताशाः **त्रिगुणात्मिका** श्रीभूदुर्गात्मिका रमा चेत्येते पूज्या इत्यर्थः।

तत्र श्रीभूमी पार्श्वयोर्दुर्गा तु पृष्ठभागे इति केचित्। अत्रैकमेव षडरं पद्मं तत्कर्णिकायां सूर्यादिमण्डलानि उत्तरोत्तरं पूज्यानीति सम्प्रदायविदः। यथाह विष्णुतन्त्रे—

कर्णिकामध्यदेशे तु सूर्यसोमाग्निमण्डलम् ।
सशक्ति मण्डलं च........... इति ।

एतान्वै मण्डलाधीशानुपर्युपरि पूजयेत् ।। इति च ।।५४-५६।।

**मङ्गाली–** धर्माद्यभिमानिन आह- **यमेत्यादिना** ।। पीठाधःपूज्यानाह– **परमः पुरुष इत्यादिना** ।। ब्रह्माण्डादधः परमपुरुषो नारायणः। अबादिनवावरणसहितं ब्रह्माण्डं शिरसि धृत्वा पद्मासनः प्राङ्मुखो वर्तते। सः **मध्ये** पीठस्थापनमध्यदेशापेक्षया समानसूत्रे ब्रह्माण्डादधोदेशे पूज्यः। तदुपरिभागे **आधाररूपिणी** साक्षादावरणाधाररूपिणी। **शक्तिस्तन्नामिका** लक्ष्मीः पूज्या तदुपरि कूर्मः, तदुपरि कूर्मः, वायुकूर्मश्चेति कूर्मशब्देनात्र कूर्मत्रयं ग्राह्यम्। तदुपर्य**नन्तः** शेषः।

...........कूर्मरूपं वायुःपुछं समाश्रितः ।
य एव कूर्मरूपेण वायुरण्डोदके स्थितः ।
विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः ।। (बृ.भा.१-२)

इति बृहद्भाष्योक्तेः। शेषोपरि **पृथिवी** पञ्चभूतावरा तदभिमानिनी भूश्च । 'वायोः पुछं समाश्रित्य शेषस्तु पृथिवीमिमाम् । बिभर्ति' (बृ.भा.१-२) इति तत्रैवोक्तेः । तदुपरि क्षीरसागरे वरुणः तदुपरिश्वेतद्वीपः। तदुपरि नानाविधरत्नखचितः सुवर्णमण्डपः एते परमपुरुषादयः। पीठादधः उपर्युपरि पूज्याः। उक्तं च विष्णुतीर्थीये 'परं ब्रह्मैव मध्ये चक्रमुत्तरमुत्तरम्' इति ।।

एवं परमपुरुषमारभ्य मण्टपन्तं ध्यात्वा तत्रत्यचतुष्कोणपीठे षट्कोणं पद्मं तन्मध्येऽष्टदलं पद्मं ध्यात्वा तत्र हरिं पूजयेत्। तदुक्तं तन्त्रतिलके-

चतुष्कोणं तु पीठं स्यात् षट्कोणं तस्य मध्यतः ।
तन्मध्येऽष्टदलं पद्मं तत्र पद्मेशमर्चयेत् ।। इति ।।

कूर्मरूपेण विष्णुना धारित इत्यनुवादबलाद्विष्णुरपि कूर्मरूपी वर्तत इति विधिर्लभ्यते । न च 'बृहदण्डवोढा' इति भगवत्पादवचने कूर्मरूपिणो विष्णोर्ब्रह्माण्डाधारत्वकथनेन बहिष्ठत्वलाभाद्गर्भोदकस्थत्वं कथमिति वाच्यम् । भगवतः कूर्मरूपद्वयाङ्गीकारात् । न च कल्पकाभावः ।

बिभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महत् ।
उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः ।। (बृ.भा.१.२)

इति द्वितीयब्राह्मणबृहदारण्यकोपनिषद्भाष्यवचनात् । **पृथिवी** पञ्चभूतावरा तदिभमानिनी भूः ।

वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम् ।
बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम् ।।(बृ.भा.१.२)

इति वैभववचनात् ।

**क्षीरसागरो** वरुणः दिव्यरत्नमयो महान् मण्टपश्च पूज्यः । तस्मिन्मण्टपे पूर्वपूजितं पीठं निधाय तत्र षट्कोणमष्टदलं पद्मं पूजयेत् । तथा हि तन्त्रतिलके--

चतुःकोणं तु पीठं स्यात् षट्कोणं तस्य मध्यतः ।
तन्मध्येऽष्टदलं पद्मं तत्र पद्मेशमर्चयेत् ।। इति ।।

पद्ममित्यनन्तरमितिशब्दोऽध्याहार्यः । **इत्येतत्त्रयं** श्वेतद्वीपो मण्टपः पद्ममिति त्रयं, **बहुरूपिणी** विविधस्वरूपिणी । विकाराभावकथनाय **देवीति** । क्रीडादिगुणसम्पन्ना **रमैव** रमात्मकमेव । कन्दं नालं पद्ममिति त्रयमिति बौद्धपरामर्शो वा ।

परब्रह्मैव मध्ये वै क्रमादुत्तरमुत्तमम् ।
आधारशक्तिं कूर्मं चाप्यनन्तं पृथिवीं तथा ।
कन्दं नालं तथा पद्मं क्षीरसागरमेव च ।। (वि.ती.३-९६)

इति विष्णुतीर्थीयवचनात् ।।

लक्ष्म्यात्मकपद्मस्यारेषु पूज्यानाह— **सूर्येति** ।। **पद्मे** तस्य षडरेष्वित्यर्थः । सूर्यसोमहुताशाः **त्रिगुणात्मिका** श्रीभूदुर्गात्मिका रमा चेत्येते पूज्या इत्यर्थः ।

तत्र श्रीभूमी पार्श्वयोर्दुर्गा तु पृष्ठभागे इति केचित्। अत्रैकमेव षडरं पद्मं तत्कर्णिकायां सूर्यादिमण्डलानि उत्तरोत्तरं पूज्यानीति सम्प्रदायविदः। यथाह विष्णुतन्त्रे—

कर्णिकामध्यदेशे तु सूर्यसोमाग्निमण्डलम् ।
सशक्ति मण्डलं च............ इति ।

एतान्वै मण्डलाधीशानुपर्युपरि पूजयेत् ।। इति च ।।५४-५६।।

**मङ्गाली—** धर्माद्यभिमानिन आह- **यमेत्यादिना ।।** पीठाधःपूज्यानाह– **परमः पुरुष इत्यादिना ।।** ब्रह्माण्डादधः परमपुरुषो नारायणः। अबादिनवावरणसहितं ब्रह्माण्डं शिरसि धृत्वा पद्मासनः प्राङ्मुखो वर्तते। सः **मध्ये** पीठस्थापनमध्यदेशापेक्षया समानसूत्रे ब्रह्माण्डादधोदेशे पूज्यः। तदुपरिभागे **आधाररूपिणी** साक्षादावरणाधाररूपिणी। **शक्तिस्तन्नामिका** लक्ष्मीः पूज्या तदुपरि कूर्मः, तदुपरि कूर्मः, वायुकूर्मश्चेति कूर्मशब्देनात्र कूर्मत्रयं ग्राह्यम्। तदुपर्य**नन्तः** शेषः।

...........कूर्मरूपं वायुःपुछं समाश्रितः ।
य एव कूर्मरूपेण वायुरण्डोदके स्थितः ।
विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः ।। (बृ.भा.१-२)

इति बृहद्भाष्योक्तेः। शेषोपरि **पृथिवी** पञ्चभूतावरा तदभिमानिनी भूश्च । 'वायोः पुछं समाश्रित्य शेषस्तु पृथिवीमिमाम् । बिभर्ति' (बृ.भा.१-२) इति तत्रैवोक्तेः । तदुपरि क्षीरसागरे वरुणः तदुपरिश्वेतद्वीपः। तदुपरि नानाविधरत्नखचितः सुवर्णमण्डपः एते परमपुरुषादयः। पीठादधः उपर्युपरि पूज्याः। उक्तं च विष्णुतीर्थीये 'परं ब्रह्मैव मध्ये चक्रमुत्तरमुत्तरम्' इति ।।

एवं परमपुरुषमारभ्य मण्टपन्तं ध्यात्वा तत्रत्यचतुष्कोणपीठे षट्कोणं पद्मं तन्मध्येऽष्टदलं पद्मं ध्यात्वा तत्र हरिं पूजयेत् । तदुक्तं तन्त्रतिलके-

चतुष्कोणं तु पीठं स्यात् षट्कोणं तस्य मध्यतः ।
तन्मध्येऽष्टदलं पद्मं तत्र पद्मेशमर्चयेत् ।। इति ।।

श्वेतद्वीपादीनां त्रयाणां देवतामाह— **एतत्रयमिति** ।। श्वेतद्वीपो मण्डपः पद्ममित्येतत्रयं **बहुरूपिणी** रमैव लक्ष्मीदेवताकमेव । विकाराभावज्ञापनार्थं **देवी** क्रीडादिगुण इत्युक्तेत्युक्तम् । षट्कोणपद्मस्य षट्कोणेषु पूज्यदेवता आह- **सूर्येति । पद्मे** पद्मषट्कोणेषु मध्ये। पुरोभागस्थेषु त्रिष्वस्रेषु प्रादक्षिण्येन **सूर्यसोमहुताशाः** सूर्यसोमाग्निमण्डलानि दीपरूपाणि पूज्यानि। पृष्टभागस्थेषु त्रिष्वस्रेषु **त्रिगुणात्मिका** सत्वरजस्तमोभिमानिनी लक्ष्मीः पूज्या। श्रीभूदुर्गाः क्रमेण सत्वाद्यभिमानिन्यः । उक्तं च सङ्ग्रहे—

पृष्टकोणेषु पद्मस्य सत्वादीन् क्रमतो यजेत् ।
गुणान्यजेत्ततः पूर्वं सोमसूर्याग्निमण्डलान् ।। इति ।

यत्तु विष्णुतन्त्रे-

मध्ये कन्दं मूलनालं पद्मपत्रं सकेसरम् ।
कर्णिकामध्यदेशे तु सूर्यसोमाग्निमण्डलात् ।
एतान्वै मण्डलाधीशानुपर्युपरि पूजयेत् ।। इति वचनम् तत्

हृत्पुण्डरीकमन्तस्थं ऊर्ध्वनालमधोमुखम् ।
ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं स कर्णिकं ।
कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ।
वह्निमध्ये स्मरेद्रूपं ममैतध्यानमङ्गलम् ।। (भाग.११-१४-३६,३७)

इत्येकादशस्कन्धे ध्यानप्रकरणे उक्तध्यानविषयं ज्ञेयं। प्रतिमापूजायां तु अत्रोक्तप्रकार एव । 'पृष्टकोणेषु पद्मस्ये'ति सङ्ग्रहवचनादिति ज्ञेयम् ।।५४-५६।।

पद्मसोपानदेवतानिरूपणां, पद्मपत्रेषु पूज्यनवशक्तिनिरूपणं च

**तं. सा.** **आत्मान्तरात्मपरमज्ञानात्मानश्च मूर्तयः ।**
**विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च ।। ५७ ।।**

**प्रह्वी सत्या तथेशानाऽनुग्रहा चेति शक्तयः ।**
**अष्टदिक्षु च मध्ये च स्वरूपाण्येव ता हरेः ।। ५८ ।।**

**त.क.–** पद्मे मण्डलत्रयं च पूज्यमित्युक्तम्। तत्र किं लक्ष्मीसूर्यादय एव पूज्या इत्यतः पद्मादिचतुर्षु पूज्यं भगवतो मूर्तिचतुष्टयमाह– **आत्मेति ।।** अनो बहुव्रीहो ङीन्निषेधः। न केवलं लक्ष्म्यादय एव, आत्मान्तरात्मादयश्चतुर्मूर्तयश्च पूज्या इति चशब्दसम्बन्धः। पीठे भगवन्मूर्तिपूजाप्रसङ्गादष्टदलात्मके पद्मे भगवन्मूर्तीर्दर्शयति— **विमलेति ।।** ज्ञानयोगसत्यशब्दानां नियतलिङ्गत्वं न विवक्षितम्। **अनुग्रहा चेति ।।** भगवन्मूर्तयो नवापि पूज्या इति सम्बन्धः। ननु ग्रन्थान्तरे पद्मदलेषु शक्तिपूजोच्यते तत् कथमित्यत उक्तम्— **उक्तय इति ।।** एता मूर्तयः शक्तयश्चेति सम्बन्धः। शक्ॢ शक्ताविति धातोः क्तिन्प्रत्ययान्तस्य शक्तिशब्दस्य तत्रैव मुख्यत्वादिति भावः। ननु विमलादयः शक्तयो नव। पद्मदलानि चाष्टौ। तत्कथमित्यतो घटयति— **अष्टेति ।।** ईशानान्ता अष्टदिग्गतदलेषु पूज्याः। अनुग्रहा तु मध्ये कर्णिकायां पूज्येत्यर्थः । अत्र कोणेष्वपि दिक्शब्दो योगवृत्त्या ग्रह्यः। ननु विमलादयो नवापि भगवत्सेवकजीवविशेषा इत्यन्यत्रोक्तम्। तत्कथमात्मदिभगवत्पूजाप्रसङ्गे तासां वचनमियत आह— **स्वरूपाणीति ।।** यद्यपि विमलादोयो जीवविशेषाः सन्ति। तथापीह विमलाद्या याः पूज्यत्वेन विवक्षितास्ता हरेः स्वरूपाण्येव। अतो न प्रसङ्गवैगुण्यमिति भावः ।।५७, ५८।।

**अ.सं.–** ततः पद्मस्य सोपानदेवताः पूज्या इत्याह– **आत्मेति ।।** आत्माद्याश्चतस्रो भगवन्मूर्त्तयः पूर्वादिचतुर्दिक्षु पूज्याः । तदुक्तम्– 'सोपानदेवताः पूज्याः आत्माद्या दिक् चतुष्टये' इति । पञ्चरात्रे च–

आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं तथा पूज्यपद्मे पूर्वादिषु क्रमात् ।। इति ।

अथ पद्मस्याष्टपत्रेषु मध्ये च पूज्या देवता आह– **विमलेति ।। शक्तयः** शक्तिशब्दवाच्याः विमलाद्याः पूर्वाद्यष्टपत्रेषु मध्ये च पूज्याः ।

पूर्वपत्रं समारभ्य तद्दलेषु यथाक्रमम् ।
विमलाद्यास्तु पूज्याः स्युः..........।। इत्युक्तेः ।

विमलाद्याः का इत्यत आह– **स्वरूपाणीति** । **ताः** स्त्रीरूपाः विमलाद्या नवशक्तयः हरेः स्वरूपाण्येव । पीठपूजायां श्रियः ब्रह्मणो वायोः शेषस्य गरुडस्य च विमलादिनामकानि नव रूपाणि च पूजयेत् । तदुक्तम् षष्ठस्कन्धतात्पर्ये–

इच्छादित्वेन त्रिविधा विमलाद्यास्तु शक्तयः ।
विष्णोः स्वरूपभूताश्च ताभ्यस्तन्नामिकाः पराः ।।

जायन्ते तत्प्रसादेन ताश्च पीठे प्रपूजयेत् ।
तद्भिन्नजीवास्तस्यैव प्रसादात्तत्समीपगाः ।। (भाग.ता.६.४.२७)

विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च ।
गरुडस्य च सम्प्रोक्ताः प्रत्येकं नव मूर्तयः ।।

पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्त्तयो हरेः ।
प्रधानास्ता हि सर्वासां मूर्तीनां हरिमूर्तयः ।। इति । (भाग.ता.११.६.३२)

इच्छादित्वेन इच्छक्रियाज्ञानत्वेन पराः विष्णोः स्वरूपशक्तिभ्यां भिन्नाः रमाशक्तयः तद्भिन्नजीवाः रमाभिन्नाः जीवाः ब्रह्मवायुशेषगरुडाः । सात्वततन्त्रेषु पाञ्चरात्रिकपूजासु इति प्रमाणपदार्थः । ततस्तत्र पीठगतपद्ममध्यस्थायामासनरूपायामनुग्रहाख्यशक्तौ हरेर्योगपीठस्वरूपं योगासनरूपं तल्पाकारमनन्तं शेषं पूजयेत् । तदुक्तं सारसङ्ग्रहे– 'तल्पाकारं ततोऽनन्तं पीठमध्ये समर्चयेत्' । एषां पूर्वोक्तानां देवानामावाहने– ॐ पूर्वं नमोन्तश्चतुर्थ्यन्तः तत्तद्देवताशब्दमन्त्रः सर्वत्र ज्ञेयः । 'ॐ परदेवतायै नमः' इत्यादि । सूर्यादिमण्डलत्रये तु ॐकारानन्तरं 'ॐ अम् उम् मम्' इति विशेषो ज्ञेयः । 'ॐ अं सूर्यमण्डलाय नमः' इत्यादि । तदुक्तं योगदीपिकायाम्–

ताराद्या इम उद्देश्या नत्यन्ता मनवः स्वयम् ।
सताराशं चार्कसोमवह्निमण्डलमेव च ।। इति । (३.१७)

**ताराद्या** ॐकारपूर्वा **उद्देश्याः** चतुर्थ्यन्ताः **नत्यन्ताः** नमःशब्दान्ताः **इमे** परदेवतादिशब्दाः **मनवः** मन्त्राः आवाहने पीठपूजायामिति शेषः ।

**अर्कसोमवह्निमण्डलं** अर्कसोमाग्निमण्डलानि **सतारांशं** सतारांशानि क्रमेण ॐकारावयवभूताकारोकारमकारसहितानीति प्रमाणार्थः ।। ५७,५८ ।।

**गु.दी.–** पीठसोपानरूपं चतुर्दिक्षु पूज्यं रूपचतुष्टयमाह— **आत्मेति ।।** आत्माद्या मूर्तयः स्वरूपभूताः पीठसोपानरूपाश्चतुर्दिक्षु चत्वारः पूज्याः । 'सोपानदेवताः पूज्या आत्माद्या दिक्चतुष्टये' इति वचनात् । केचित्तु आत्मादयः पद्मोपरि चतुर्दिक्ष्ववस्थिताः ज्ञातव्याः । तदुक्तं पञ्चरात्रे—

आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं तथा पूज्यपद्मे पूर्वादिदिक्क्रमात् ।। इत्याहुः ।

अथ पद्मपत्रेषु पूज्यदेवता आह—**विमलेति ।।** विमलाद्यनुग्रहान्ता नव शङ्कुयोऽष्टदिक्षु मध्ये चेति स्थाननवकेषु पूज्या इत्यर्थः । एताश्चामरहस्ता इति विशेषोऽवगन्तव्यः । तथा च वासिष्ठे—

गृहीतचामरा दिव्या विमलाद्याश्च शक्तयः । इति ।

ताः किं भिन्ना नेत्याह— **स्वरूपाण्येवेति ।। ताः** विमलाद्याः शक्तयो हरेः स्वरूपाण्येव । 'ताः' इति वदता स्त्रीरूपा इत्युक्तं भवति । 'स्त्रियः सतीः' (ऋक्.सं.१.१६४.१६) इति मन्त्रात् । एवकारोऽयोगव्यावृत्त्यर्थः । तेन भिन्ना अपि तन्नामका उत्तमजीवाः पीठे पूज्याः सन्ति । तत्रायं विवेकः– विमलादिशब्दवाच्यं भगवन्तं तत्समीपे तन्नामिकां रमां तन्नामकजीवांश्च पूजयेदिति । अत एव मूले 'स्वरूपाण्येव' इत्युक्तम् । न तु हरेरेव स्वरूपाणीति । तथा च एवकारः प्रसिद्ध्यर्थकः यथोक्तं षष्ठस्कन्धतात्पर्ये–

....................विमलाद्यास्तु शक्तयः ।
विष्णोः स्वरूपभूता यास्ताभ्यस्तन्नामिकाः पराः ।।

जायन्ते तत्प्रसादेन ताश्च पीठे प्रपूजयेत् ।
तद्भिन्नजीवास्तस्यैव प्रसादात् तत्समीपगाः ।। (भा.ता.६-४-२७) इति ।

ताश्चेति समुच्चयेन स्वरूपाणामपि पीठे पूज्यताभिधानात् ।। ५७,५८ ।।

**मङ्कालौ–** ततः पद्मस्य सोपानदेवताः पूज्या आत्माद्या दिक् च आह— **आत्मेति ।।** पञ्चरात्रे च-

आत्मानमन्तरात्मानं परमात्मानं एव च ।
ज्ञानात्मानं तथा पूज्यपद्मे पूर्वादिषु क्रमात् ।। इति ।

अथ पद्मस्याष्टपत्रेषु मध्ये च पूज्यदेवता आह– **विमलेति । शक्तयः** शक्तिशब्दवाच्याः विमलाद्याः पूर्वाद्यष्टपत्रेषु मध्ये च पूज्याः ।

पूर्वपत्रं समारभ्य तद्दलेषु यथाक्रमम् ।
विमलाद्यास्तु पूज्या स्युः।। इत्युक्तेः ।।

विमलाद्याः का इत्यत आह— **स्वरूपाणीति । ताः** स्त्रीरूपा विमलाद्या नव शक्तयः हरेः स्वरूपाण्येव। पीठपूजायां श्रीब्रह्मवायुशेषगरुडानामपि विमलादिनामकानि नव रूपाणि पूजयेत् । तदुक्तं षष्ठैकादशस्कन्धतात्पर्ययोः-

इच्छादित्वेन त्रिविधाः विमलाद्यास्तु शक्तयः ।
विष्णोः स्वरूपभूताश्च ताभ्यस्तन्नामिकाः पराः ।।

जायन्ते तत्प्रसादेन ताश्च पीठे प्रपूजयेत् ।
तद्भिन्नजीवास्तस्यैव प्रसादात्तत्समीपगाः ।। (भाग.६.४.२७)

विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च ।
गरुडस्य च संप्रोक्ताः प्रत्येकं नव मूर्तयः ।।

पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्तयो हरेः ।
प्रधानास्ता हि सर्वासां मूर्त्तीनां हरिमूर्तयः ।। इति । (भाग.ता.११.६.३२)

अत एव स्वरूपाण्येवेत्युक्तिः । न तु हरेरेव स्वरूपाणीति । ततः तत्र पीठगतपद्ममध्यस्थायामसनरूपायामनुग्रहाख्यशक्तौ हरेः योगपीठस्वरूपं योगासनरूपं तल्पाकारम् **अनन्तं** शेषं प्रपूजयेत् । एषां पूर्वोक्तानां देवानाम् आवाहने 'ॐ परदेवतायै नमः' इत्यादिमन्त्राः । सूर्यादिमण्डलत्रये तु 'अं उं मं' इति विशेषो ज्ञेयः । तदुक्तं योगदीपिकायाम्-

तारा‌द्या इम उद्देश्याः नत्यन्ता मनवःस्वयम् ।
सतारांशचार्कसोमवह्निमण्डलमेव च । इति ।

**तारा‌द्याः** ॐकारपूर्वाः **उद्देश्याः** चतुर्थ्यन्ताः । **नत्यन्ताः** नमःशब्दान्ताः । **मनवो** मन्त्राः । आवाहने पीठपूजायामिति शेषः । अर्कसोमवह्निमण्डलं सतारांशं क्रमेणोङ्कारावयवभूताकारोङ्कारमसहितमिति प्रमाणार्थः ।। ५७,५८ ।।

पीठपूजानन्तकृत्यनिरूपणम् हरेः अर्घ्यपा‌द्यादिसमर्पणकथनम्

**तं. सा. ततोऽनन्तं योगपीठस्वरूपं पूजयेद्धरेः ।**
**तत्रावाह्य हरिं चार्घ्यं पा‌द्यमाचमनीयकम् ।। ५९ ।।**

**मधुपर्कं पुनश्चाचां स्नानं वासो विभूषणम् ।**
**उपवीतासने दत्त्वा गन्धपुष्पे तथैव च ।। ६० ।।**

**त.क.**– वह्निमण्डलादुपरि पूज्यं पीठमाह— **तत इति** ।। योगपीठरूपेण स्थितं पूजयेदित्यर्थः । तदन्तर्वायुं तदन्तर्लक्ष्मीं च पूजयेदित्यध्याहार्यम् । यदर्थे पीठपूजाप्रकार उक्तस्तदेव भगवत्पूजनमुद्दिशति— **तत्रेति** ।। पूर्वके पीठे सूर्यमण्डलस्थितं स्वहृदयस्थितं वा हरीं दीपाद्दीपान्तरन्यायेन उद्धृत्य आवाहनमुद्रयाऽवाह्यार्घ्यं पा‌द्यं चेत्यादि पुष्पान्तं दत्त्वा तत्र लक्ष्मीधरे यजेदिति वक्ष्यमाणेन सम्बन्धः । तदुक्तम्—

आत्मार्थे हृद्गतं विष्णुं परार्थे सूर्यगं हरिम् ।
तथा देवालये सूर्यमण्डलान्तर्गतं हरिम् ।।

सालग्रामे विशेषोऽस्ति स्वयं व्यक्ते तथैव च ।
बिम्बमूर्त्या सहैक्येन तत्रस्थं भावयेद्धरिम् ।। इति । अत्र—

आवाहनादिषण्मुद्रा दर्शयन् वै हरेर्हृदि ।
हस्तं निक्षिप्य सञ्जप्य तत्तन्मन्त्रं ततः परम् ।। इति । तथा—

आवाहनं स्थापनं च सान्निध्यं सन्निरोधनम् ।
सम्मुखीकरणं चैवावकुण्ठनमेव च ।।

**मङ्गाली–** ततः पद्मस्य सोपानदेवताः पूज्या आत्माद्या दिक् च आह— **आत्मेति** ।। पञ्चरात्रे च-

आत्मानमन्तरात्मानं परमात्मानं एव च ।
ज्ञानात्मानं तथा पूज्यपद्मे पूर्वादिषु क्रमात् ।। इति ।

अथ पद्मस्याष्टपत्रेषु मध्ये च पूज्यदेवता आह– **विमलेति । शक्तयः** शक्तिशब्दवाच्याः विमलाद्याः पूर्वाद्यष्टपत्रेषु मध्ये च पूज्याः ।

पूर्वपत्रं समारभ्य तद्दलेषु यथाक्रमम् ।
विमलाद्यास्तु पूज्या स्युः।। इत्युक्तेः ।।

विमलाद्याः का इत्यत आह— **स्वरूपाणीति । ताः** स्त्रीरूपा विमलाद्या नव शक्तयः हरेः स्वरूपाण्येव। पीठपूजायां श्रीब्रह्मवायुशेषगरुडानामपि विमलादिनामकानि नव रूपाणि पूजयेत्। तदुक्तं षष्ठैकादशस्कन्धतात्पर्ययोः-

इच्छादित्वेन त्रिविधाः विमलाद्यास्तु शक्तयः ।
विष्णोः स्वरूपभूताश्च ताभ्यस्तन्नामिकाः पराः ।।

जायन्ते तत्प्रसादेन ताश्च पीठे प्रपूजयेत् ।
तद्भिन्नजीवास्तस्यैव प्रसादात्तत्समीपगाः ।। (भाग.६.४.२७)

विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च ।
गरुडस्य च संप्रोक्ताः प्रत्येकं नव मूर्तयः ।।

पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्तयो हरेः ।
प्रधानास्ता हि सर्वासां मूर्त्तीनां हरिमूर्तयः ।। इति । (भाग.ता.११.६.३२)

अत एव स्वरूपाण्येवेत्युक्तिः। न तु हरेरेव स्वरूपाणीति। ततः तत्र पीठगतपद्ममध्यस्थायामसनरूपायामनुग्रहाख्यशक्तौ हरेः योगपीठस्वरूपं योगासनरूपं तल्पाकारम् **अनन्तं** शेषं प्रपूजयेत्। एषां पूर्वोक्तानां देवानाम् आवाहने 'ॐ परदेवतायै नमः' इत्यादिमन्त्राः। सूर्यादिमण्डलत्रये तु 'अं उं मं' इति विशेषो ज्ञेयः। तदुक्तं योगदीपिकायाम्-

ताराद्या इम उद्देश्याः नत्यन्ता मनवःस्वयम् ।
सतारांशचार्कसोमवह्निमण्डलमेव च । इति ।

**ताराद्याः** ॐकारपूर्वाः **उद्देश्याः** चतुर्थ्यन्ताः । **नत्यन्ताः** नमःशब्दान्ताः । **मनवो** मन्त्राः । आवाहने पीठपूजायामिति शेषः । अर्कसोमवह्निमण्डलं सतारांशं क्रमेणोङ्कारावयवभूताकारोङ्कारमसहितमिति प्रमाणार्थः ।। ५७,५८ ।।

पीठपूजानन्तकृत्यनिरूपणम् हरेः अर्घ्यपाद्यादिसमर्पणकथनम्

**तं. सा.** **ततोऽनन्तं योगपीठस्वरूपं पूजयेद्धरेः ।**
**तत्रावाह्य हरिं चार्घ्यं पाद्यमाचमनीयकम्** **।। ५९ ।।**

**मधुपर्कं पुनश्चाचां स्नानं वासो विभूषणम् ।**
**उपवीतासने दत्त्वा गन्धपुष्पे तथैव च** **।। ६० ।।**

**त.क.–** वह्निमण्डलादुपरि पूज्यं पीठमाह— **तत इति** ।। योगपीठरूपेण स्थितं पूजयेदित्यर्थः । तदन्तर्वायुं तदन्तर्लक्ष्मीं च पूजयेदित्यध्याहार्यम् । यदर्थे पीठपूजाप्रकार उक्तस्तदेव भगवत्पूजनमुद्दिशति— **तत्रेति** ।। पूर्वके पीठे सूर्यमण्डलस्थितं स्वहृदयस्थितं वा हरीं दीपाद्दीपान्तरन्यायेन उद्वृह्य आवाहनमुद्रयाऽवाह्यार्घ्यं पाद्यं चेत्यादि पुष्पान्तं दत्त्वा तत्र लक्ष्मीधरे यजेदिति वक्ष्यमाणेन सम्बन्धः । तदुक्तम्—

आत्मार्थे हृद्गतं विष्णुं परार्थे सूर्यगं हरिम् ।
तथा देवालये सूर्यमण्डलान्तर्गतं हरिम् ।।

सालग्रामे विशेषोऽस्ति स्वयं व्यक्ते तथैव च ।
बिम्बमूर्त्या सहैक्येन तत्रस्थं भावयेद्धरिम् ।। इति । अत्र—

आवाहनादिषण्मुद्रा दर्शयन् वै हरेर्हृदि ।
हस्तं निक्षिप्य सञ्जप्य तत्तन्मन्त्रं ततः परम् ।। इति । तथा—

आवाहनं स्थापनं च सान्निध्यं सन्निरोधनम् ।
सम्मुखीकरणं चैवावकुण्ठनमेव च ।।

उत्तानौ तु करौ कृत्वा किञ्चित्सङ्कुचिताङ्गुलिः ।
आवाहनी समुद्दिष्टा काश्यप द्विजसत्तम ।।

अधोमुखीकृता सैव प्रोक्ता स्थापनकर्मणि ।
अश्लिष्टमुष्टियुगलं प्रोन्नताङ्गुष्ठयुग्मिका ।।

सन्निधाने समुद्दिष्टा मुद्रेयं तत्त्ववेदिभिः ।
अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ।।

सम्मुखी सुमुखा विष्णोः स्पृष्टया च परस्परम् ।
अञ्जली नाम सम्प्रोक्ता सम्मुखीकरणं स्मृतम् ।।

सव्यहस्तकृता मुष्टिदीर्घोऽधोमुखतर्जनी ।
अवकुण्ठनमुद्रेयमभितो भ्रामिता मता ।।

यथाऽऽत्मनि तथा देवे तत्र न्यासं समाचरेत् ।
कृत्वा तु मातृकान्यासं दद्यादर्घ्यादिकानपि ।।

वायव्यमर्घ्यपात्रं स्यात्पाद्यं निर्ऋतिकोणके ।
आचापात्रं रुद्रकोणे आग्नेय्यां स्नानपात्रकम् ।।

मधुपर्कं तथा मध्ये पात्राण्येतानि पञ्च च ।
अर्घ्ये तु दानमुद्रां च पाद्ये चाञ्जलिमुद्रिकाम् ।।

गोकर्णमुद्रां चाचामे मधुपर्के तु सौकरीम् ।
हंसमुद्रां तथा स्नाने लक्षणन्तु निशामय ।।

निक्षिप्य करदलेऽङ्गुष्ठं किञ्चिदाकुञ्चिताङ्गुलिः ।
दानमुद्रा बुधैः प्रोक्ता कनिष्ठाङ्गुलयोस्तथा ।।

मूलेऽङ्गुष्ठे तु निक्षिप्य सम्बद्ध्याच्छिद्रमङ्गुलीः ।
आकुञ्च्य सम्पुटाकारं मण्डलीमुद्रिकाऽह्वयम् ।। इत्यादि । तथा—

एलालवङ्गतक्कोलं कोष्ठं जाजिफलं तथा ।
उशीरं तुळसीपत्रं कौशेयं चन्दनं तथा ।।

पुष्पाणि च सुगन्धीनि निक्षिपेत् कलशोदके ।
मन्त्रेणैवाभिमन्त्र्याथ निक्षिपेत् कलशोदकम् ।।

पाद्यार्घ्याचमनस्नानपात्रेषु च तथैव तु ।
द्रव्याणि विन्यसेत्तेषु यथोक्तानि क्रमाद् बुधः ।।

पद्मकं चन्दनं कोष्ठं पाद्यपात्रे विनिक्षिपेत् ।
कुशं दूर्वाङ्कुरं पुष्पं कुङ्कुमं तिलसर्षपम् ।।

तुलसीमञ्जरीश्चैव न्यसेदर्घ्यजले शुभे ।
तथैवाचमने दद्यात् कर्पूरागरुचन्दनम् ।।

धात्रीं च तुलसीश्चैव सुपुष्पं सुफलं तथा ।
एलालवङ्गकस्तूरीन् पाद्यपात्रे विनिक्षिपेत् ।।

शर्करादधिमध्वाज्यं मधुपर्के समर्पयेत् ।
ततः सर्वणि पात्राणि मन्त्रेणैवाभिमन्त्रयेत् ।।

द्रव्याणामप्यभावे तु विन्यसेत्तुलसीदलम् ।
मन्त्ररत्नेन वै दद्यात् पाद्यार्घ्याचमनीयकम् ।
अभिषेकं ततः कुर्यात् सूक्तैर्विष्णुप्रकाशकैः ।।

इत्यादिनोक्तेतिकर्तव्यताविशेषं चशब्देन सूचयति ।

ननूक्तं पीठं क्षीरसागरोपरि श्वेतद्वीपस्थमण्टपे स्वर्गसमानोच्छ्रये वर्तते। पूजकश्च देशिको भूम्यादिस्थितः। तत्र कथं हरिमावाहयेत् ? किञ्च चक्राब्जादिकमण्डले हृदयादौ भगवत्पूजोपक्रान्ता। तेन तत्रावाहनस्य युक्तत्वेऽपि कथमुक्तपीठेऽऽवाहनमुच्यते ? सत्यम्। यत्र चक्राब्जादिकण्डलं लिख्यते, स्वतःसिद्धं हृदयादिकं वा पूजाधिष्ठानमङ्गीकरोति तदधस्तात् पृथिवीपर्यन्तं देवताः सन्निहिताः सन्तीत्यत्र न विवादः। क्षीरसागरादिशेषान्ता अपि देवताः पद्माद्याकारेण लिखितमण्डलविशेषे हृदयादौ सन्निहिताः सन्तीत्यङ्गीकारे न किञ्चिद्बाधकम्। अत एव 'दृश्यते च तासां महत्सामर्थ्यम्' इत्युक्तमभिमान्यधिकरणे ।

गन्धपुष्पान्तं दत्त्वा पूजयेदिति सम्बन्धः। तत्रेत्यतः परं 'मूलमन्त्रतः' इति वक्ष्यमाणमत्राप्यनुकर्षणीयम् । तेनोद्धृतानां मन्त्राणां भगवत्पूजायां च विनियोगो दर्शितः। यथोक्तम्—

एवमष्टाक्षरेणैव सर्वत्रार्चनकर्मणि ।
उपचारान् क्रमात् कुर्याद्भक्तिपूतेन चेतसा ।। इति ।

यद्वा, चशब्दो यजेदिति वक्ष्यमाणानुकर्षणार्थः। तेन भगवत्पूजाख्ये यागे इन्द्रियभिमानिनो देवा ऋत्विजः। मनुष्यो जीवो यजमानः। श्रद्धा पत्नी। इत्यादिकमूह्यम् । तेन, देवपूजायां न मानुषस्याल्पज्ञस्य सामर्थ्यमस्ति। तत्र तत्र स्थितभागवन्मूर्तिविशेषतदर्चाप्रकारादेरल्पैर्ज्ञातुमशक्यत्वात्। किन्तु देवानामेव। तथा च देवा इन्द्रियादिषु स्थित्वा पूजयन्तीत्यवश्यं वक्तव्यम्। 'स्वामीह फलमश्नुते' इति न्यायात्तेषामेव फलं न मानुषस्येति शङ्का निरस्ता। यागे साक्षादाहुतिप्रदानादौ यजमानेन वृता अध्वर्यादयो ऋत्विज एव यद्यपि यागं निर्वर्तयन्ति । यजमानस्तु साक्षादाहुतिप्रदानादावुदास्ते । तथापि यजमानस्तत्फलं प्राप्नोति। दक्षिणादानादिना ऋत्विजां तदानतत्वात्। दक्षिणाद्यानतपाचकसम्पादितौदनादेः प्रयोजकपुरुषनिष्ठत्वदर्शनात्। तथेहाप्याराधनप्रसन्ना भक्तानुग्रहकातराः पूजायामाराधकेन वृता इति मानुषस्तत्फलं प्राप्नोतीति युक्तिसूचनाय पूजयेदिति प्रसिद्धत्यागेन **यजेत्** इत्युक्तमिति ध्येयम् ।।५९, ६०।।

**अ.सं.**– पीठपूजानन्तरं कृत्यमाह– **तत इति** ।। तत्र योगपीठस्वरूपे अनन्तासने स्थितायां प्रतिमायां **हरिं** स्वबिम्बमावाह्याघ्यादि पुष्पान्तं दद्यात् । आवाहनप्रकारस्तु पुरुषसंहितायाम्–

अष्टैश्वर्यसमायुक्तं श्वेतमत्यन्तनिर्मलम् ।
श्वेताब्जस्थं पद्मकरं गदिनं शङ्खचक्रिणम् ।।

शुद्धस्फटिकसङ्काशं सर्वाभरणभूषितम् ।
वनमालाधरं देवं ध्यायेन्नारायणं परम् ।।

मानसैरूपचारैश्च पूजां सम्यक् समाचरेत् ।
बहिर्यागप्रसिद्ध्यर्थमुच्चरन् प्रणवं तथा ।।

देवं सुषुम्नामार्गेण आनीय ब्रह्मरन्ध्रकम् ।
वामनासापुटे ध्यात्वा निर्गतं स्वाञ्जलिस्थितम् ।।

सम्पूज्य प्रतिमादौ तु पुष्पमारोप्य मन्त्रतः ।
सहस्रशीर्षा मन्त्रेण कुर्यादावाहनं विभोः ।।
हृत्स्थं देवं समावाह्य बहिर्बिम्बे नियोजयेत् ।। इति ।

अधोमुखं हृत्कमलं वायुबीजेन संमुखम् ।
प्रणवेनोन्मुखीकृत्य ज्ञानार्केण विकासयेत् ।।

**अधोमुखम्** अन्तःकिञ्चित्कुलितपत्राग्रमित्याहुः । **वायुबीजेन** यमिति-बीजाक्षरेण । **संमुखं** अभिमुखमुन्मुखीकृत्य तत्पत्राण्यूर्ध्वमुखाग्राणि कृत्वेति यावत् । **ज्ञानार्केण** ज्ञानसूर्येण विकासितं भावयेत् । इत्युक्तप्रकारेण विकासितहृत्पद्मस्थं देवम् 'उद्यद्भास्वत्' इति ध्यात्वा सुषुम्नानाडीमार्गेण ब्रह्मरन्ध्रमानीय वामनासापुटाद्बहिर्निर्गतं स्वाञ्जलिस्थितं भावयित्वा सहस्रशीर्षेति मन्त्रेण मूलमन्त्रेण च प्रतिमादावावाहयेदिति प्रमाणाभिप्रायः ।

भोः स्वामिन् जगतां नाथ यावत्पूजावसानकम् ।
तावत्सम्प्रीतिभावेन बिम्बेऽस्मिन् सन्निधो भव ।।

इति मन्त्रेण सम्प्रार्थ्य प्रतिमापादयोः पुष्पाञ्जलिं क्षिपेत् । ततः अर्घ्यादिकं शङ्खेन मूलेन दद्यात् । 'पुष्पेणाराध्य मूलेन दत्वाऽर्घ्यं शङ्खवारिणा' इति योगदीपिकोक्तेः । इदं पात्राणामभाव एव । 'पात्राणामप्यभावे तु शङ्ख एव विशिष्यते' इत्युक्तेः । अर्घ्यपात्रादि कृताकृतमिति ज्ञापनाय मूले तदनुक्त्वा अर्घ्यादि सामान्येनोक्तम् । **आचाम्** आचमनीयम् । **वासो** वस्त्रम् । **उपवीतासने** यज्ञोपवीतासने । गन्धपुष्पे च समर्प्य आवरणपूजं कुर्यादिति शेषः ।। ५९,६० ।।

**गु.दी–** पीठपूजानन्तरं कर्तव्यमाह— **ततोऽनन्तमिति ।।** हरेः योगपीठस्वरूपं तल्पाकारमनन्तं पूजयेदित्यन्वयः । तदुक्तं सारसङ्ग्रहे—

तल्पाकारं ततोऽनन्तं पीठमध्ये समर्चयेत् ।। इति ।।

पीठरचनाप्रकारस्तु ब्रह्माण्डे—

सपादं चतुरस्रं च पीठं तन्मध्य एव च ।
षट्कोणं तस्य मध्ये च चतुरस्रं तथैव च ।।
तन्मध्येऽष्टदलं पद्मं तन्मध्येऽनन्तमण्डलम् ।
एतादृशं हरेः पीठं ध्यात्वा तत्रत्यदेवताः ।।
आवाहनादिभिश्चैव पूजनीया नृभिः सदा ।। इति ।।

अनन्तपूजानन्तरं कार्यमाह— **तत्रेति ।। तत्र** अनन्तयोगपीठे । स्थापितप्रतिमायां वा हरिमावाह्यार्घ्यादिकं दत्वा पूजयेदिति सम्बन्धः । आवाहनप्रकारस्तु विष्णुतीर्थीये—

आवाहयेद्धरिं तस्मिन्नादित्यादात्मनोऽथवा ।
आदित्यः स्यात्परार्थे तु स्वयमर्थं तथाऽऽत्मनः ।।
स्वागतं परया भक्त्या..........।। इति । (वि.ती.३.९९)

आवाहनं स्थापनं च सान्निध्यं सन्निरोधनम् ।
संमुखीकरणं चैव ह्यवकुण्ठनमेव च ।। इति । (प.मा.६६)

स्मृत्युक्ता आवाहनादिषण्मुद्राः प्रदर्शयेत् । तासां नाम लक्षणं च कपिञ्जलसंहितायाम्–

उत्तानौ तु करौ कृत्वा किञ्चित्सङ्कुचिताङ्गुली ।
आवाहनी समाख्याता काश्यप द्विजसत्तम ।।
अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि ।
आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ।।
सन्निधाने समुद्दिष्टा मुद्रेयं तत्त्ववेदिभिः ।
अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ।।

संमुखो सुमुखाविष्टः स्पृष्टा या च परस्परम् ।
अञ्जली नाम सा प्रोक्ता, सुमुखीकरणं स्मृतम् ।।

सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।
अवकुण्ठनमुद्रेयमभितो भ्रामिता मता ।। इति ।

स्वयंव्यक्तादिस्थिरप्रतिमाविषये आवाहनविधिस्तत्रैव–

पात्रमेकं जलैः पूर्णं गन्धपुष्पादि सेचयेत् ।
आवाहयेत्ततो देवं जितन्तेनेति मन्त्रतः ।।

मूलविम्बा द्विजश्रेष्ठाः पात्रमध्ये समाह्वयेत् ।
सेचयेत् प्रतिमामूर्ध्नि तेन मन्त्रेण देशिकः ।।

नावाहयेदेकबिम्बे सुरसिद्धैश्च कारिते ।
ऋषिभिर्मनुजैश्चापि स्थापिते निश्चले हरौ ।।
उक्तं तत्प्रोक्षणं यत्तु तदेवावाहनं हरेः ।। इति ।

अथ देवस्याङ्गे अङ्गुलिन्यासं विना तत्त्वन्यासादि कुर्यात्। यथोक्तं परमपुरुषसंहितायां—

हस्तन्यासादृते देवे मन्त्रन्यासं समाचरेत् । इति ।

ततोऽर्घ्याद्युपचारक्रममाह– **अर्घ्यं पाद्यमित्यादिना ।।** चतथाशब्दौ अन्योन्यसमुच्चये। अर्घ्यं पाद्यमाचमनं मधुपर्कं पुनराचमनं दत्वेत्यनुवाद-बलात्तानि पात्राणि तत्तद्द्रव्यैर्जलेनाभिपूर्य मन्त्रेणाभिमन्त्र्य तत्तत्पात्रस्थं जलमुद्धरन् तत्तन्मन्त्रेणार्घ्यादीनि मध्ये मध्ये आचमनं च दद्यादिति विधिर्लभ्यते। 'स्रवत्यनोङ्कृतं ब्रह्म' इत्यर्थवादबलात् विधिर्लभ्यते इत्युक्तं सुधायाम्। तदाह वसिष्ठसंहितायां—

सौवर्णानि च पात्राणि रौप्याण्यत्र प्रयोजयेत् ।
पात्राणामप्यभावे तु शङ्ख एव विशिष्यते ।। इति ।

स्नानं पञ्चामृतस्नानं शुद्धोदस्नानमेव च ।
स्वस्य घर्मानुवाकेन...........।

इत्येकादशस्कन्धोक्तैः पञ्चसूक्तैर्दत्वा पूर्णकुम्भेन मूलमन्त्रेण तद्विहिताजादिमन्त्रैर्वा अभिषेकः कार्य इति शेषः ।

'विशेषमन्त्रानादेशे मूलमन्त्रः प्रशस्यते' (यो.दी.२-८१) इति योगदीपिकावचनाद्विशेषमन्त्रानुक्तिस्थले मूलमन्त्रो ज्ञायते। सम्प्रदायबलादजादिमन्त्रैरिति च। अत्र मध्ये कलशार्चनमप्यनुसन्धेयम्। 'महानद्यां महातीर्थे न त्यजेत्कलशार्चनम्' इति पञ्चरात्रे आवश्यकत्वोक्तेः। कलशार्चनप्रकारस्तु द्वितीयेऽध्याये वक्ष्यते।

**वासो** वस्त्रं विभूषणमुपवीतमासनं गन्धं पुष्पं च **दत्वा** समर्प्येत्यर्थः। पञ्चामृतस्नानफलं पाद्मे—

कपिलाक्षीरमादाय शङ्खे कृत्वा जनार्दनम् ।
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत्फलम् ।।

अन्यस्याः सम्भवं क्षीरं शङ्खे कृत्वा जनार्दनम् ।
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत्फलम् ।।

क्षीराद्दशगुणाद्दध्नो घृतं चैव दशोत्तरम् ।
घृताद्दशगुणं क्षौद्रं स्वादूनि च तथोत्तरम् ।।

पुष्पोदकं च रत्नोदं वर्तते च दशोत्तरम् ।
मन्त्रोदकं च गन्धोदं तथैव ऋषिसत्तम ।।

इक्षूरसं चूतरसं दशवाजिमखैः समम् ।
तथैव तीर्थनीरं तु फलं यच्छति भूमिप ।। इति ।

अथ नित्यं शुद्धोदकस्नानकाले स्नानादिमुद्रां प्रदर्शयेत्। यथोक्तं कपिञ्जलसंहितायाम्—

पूर्ववन्मुष्टिमुद्रा तु अङ्गुष्ठेन तु वेष्टिता ।
स्नानमुद्रेति विज्ञेया सैव मुक्तकनिष्ठिका ।।

गन्धमुद्रेति विज्ञेया विमुक्तानामिका च सा ।
वस्त्रमुद्रेति विज्ञेया..............।। इति ।

देवस्य स्नानकाले शङ्खादिवाद्यं यः कुरुते तस्य पुण्यफलं पाद्मे–

स्नानकाले तु कृष्णस्य शङ्खादीनां च वादनम् ।
कुरुते ब्रह्मलोके तु वसते ब्रह्मवासरम् ।।

वादित्राणामलाभे तु घण्टानादं करोति यः ।
तस्य विष्णुः प्रसन्नः स्यात् सर्ववाद्यमयो यतः ।।

स्नानार्चनक्रियाकाले घण्टानादं करोति यः ।
पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु ।। इत्यादि

स्नानोत्तरं वस्त्रं विष्णुगायत्र्या दद्यादिति पाद्मसंहितायाम्—

दद्याद्वै विष्णुगायत्र्या वस्त्रे द्वे धौतनिर्मले । इति ।

विभूषणयज्ञोपवीतयोस्तन्मुद्रां प्रदर्शयेत् । तल्लक्षणं कपिञ्जलसंहितायाम्–

मध्यमाङ्गुष्ठशिरसोः संहतिर्योगपर्वणि ।
यज्ञोपवीतमुद्रा सा इति सर्वत्र पूजिता ।।
तथाऽङ्गुष्ठकनिष्ठाभ्यां ज्ञेयाऽलङ्कारमुद्रिका । इति ।

तत आसने उपविष्टाय गन्धपुष्पे दद्यात् ।

श्रीखण्डं कुङ्कुमं वापि तुलसीकाष्ठचन्दनम् ।
कर्पूरागरुसंमिश्रं दत्वा माधवलोकभाक् ।। इति पाद्मे गन्धप्रशंसा ।

पुष्पप्रशंसा च तत्रैव–

जात्यादीनि सुपुष्पाणि तुलसीमिश्रितानि च ।
दत्वा पुण्यमवाप्नोति महच्च हरितुष्टिदम् ।। इति ।।

अत्र मूलानुक्तायुधपूजा च भागवतादिग्रन्थान्तरानुसारेण ग्राह्या । तथा हि भागवते—

सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ।। इति(भा.११-२७-२६) ।

इत्येकादशस्कन्धोक्तैः पञ्चसूक्तैर्दत्वा पूर्णकुम्भेन मूलमन्त्रेण तद्विहिताजादिमन्त्रैर्वा अभिषेकः कार्य इति शेषः ।

'विशेषमन्त्रानादेशे मूलमन्त्रः प्रशस्यते' (यो.दी.२-८१) इति योगदीपिकावचनाद्विशेषमन्त्रानुक्तिस्थले मूलमन्त्रो ज्ञायते। सम्प्रदायबलादजादिमन्त्रैरिति च। अत्र मध्ये कलशार्चनमप्यनुसन्धेयम्। 'महानद्यां महातीर्थे न त्यजेत्कलशार्चनम्' इति पञ्चरात्रे आवश्यकत्वोक्तेः। कलशार्चनप्रकारस्तु द्वितीयेऽध्याये वक्ष्यते।

**वासो** वस्त्रं विभूषणमुपवीतमासनं गन्धं पुष्पं च **दत्वा** समर्प्येत्यर्थः। पञ्चामृतस्नानफलं पाद्मे—

कपिलाक्षीरमादाय शङ्खे कृत्वा जनार्दनम् ।
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत्फलम् ।।

अन्यस्याः सम्भवं क्षीरं शङ्खे कृत्वा जनार्दनम् ।
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत्फलम् ।।

क्षीराद्दशगुणाद्दध्नो घृतं चैव दशोत्तरम् ।
घृताद्दशगुणं क्षौद्रं स्वादूनि च तथोत्तरम् ।।

पुष्पोदकं च रत्नोदं वर्तते च दशोत्तरम् ।
मन्त्रोदकं च गन्धोदं तथैव ऋषिसत्तम ।।

इक्षूरसं चूतरसं दशवाजिमखैः समम् ।
तथैव तीर्थनीरं तु फलं यच्छति भूमिप ।। इति ।

अथ नित्यं शुद्धोदकस्नानकाले स्नानादिमुद्रां प्रदर्शयेत्। यथोक्तं कपिञ्जलसंहितायाम्—

पूर्ववन्मुष्टिमुद्रा तु अङ्गुष्ठेन तु वेष्टिता ।
स्नानमुद्रेति विज्ञेया सैव मुक्तकनिष्ठिका ।।

गन्धमुद्रेति विज्ञेया विमुक्तानामिका च सा ।
वस्त्रमुद्रेति विज्ञेया...............।। इति ।

देवस्य स्नानकाले शङ्खादिवाद्यं यः कुरुते तस्य पुण्यफलं पाद्मे–

स्नानकाले तु कृष्णस्य शङ्खादीनां च वादनम् ।
कुरुते ब्रह्मलोके तु वसते ब्रह्मवासरम् ।।

वादित्राणामलाभे तु घण्टानादं करोति यः ।
तस्य विष्णुः प्रसन्नः स्यात् सर्ववाद्यमयो यतः ।।

स्नानार्चनक्रियाकाले घण्टानादं करोति यः ।
पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु ।। इत्यादि

स्नानोत्तरं वस्त्रं विष्णुगायत्र्या दद्यादिति पाद्मसंहितायाम्—

दद्याद्वै विष्णुगायत्र्या वस्त्रे द्वे धौतनिर्मले । इति ।

विभूषणयज्ञोपवीतयोस्तन्मुद्रां प्रदर्शयेत् । तल्लक्षणं कपिञ्जलसंहितायाम्–

मध्यमाङ्गुष्ठशिरसोः संहतिर्योगपर्वणि ।
यज्ञोपवीतमुद्रा सा इति सर्वत्र पूजिता ।।
तथाऽङ्गुष्ठकनिष्ठाभ्यां ज्ञेयाऽलङ्कारमुद्रिका । इति ।

तत आसने उपविष्टाय गन्धपुष्पे दद्यात् ।

श्रीखण्डं कुङ्कुमं वापि तुलसीकाष्ठचन्दनम् ।
कर्पूरागरुसंमिश्रं दत्वा माधवलोकभाक् ।। इति पाद्मे गन्धप्रशंसा ।

पुष्पप्रशंसा च तत्रैव–

जात्यादीनि सुपुष्पाणि तुलसीमिश्रितानि च ।
दत्वा पुण्यमवाप्नोति महच्च हरितुष्टिदम् ।। इति ।।

अत्र मूलानुक्तायुधपूजा च भागवतादिग्रन्थान्तरानुसारेण ग्राह्या । तथा हि भागवते—

सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ।। इति(भा.११-२७-२६) ।

तत्तद्देवतास्वरूपमभिमानिनश्च श्रीमद्भारततात्पर्यनिर्णये—

पूर्वं हरेश्चक्रमभूद्धि दुर्गा तमःस्थिता श्रीरिति यां वदन्ति ।
सत्वात्मिका शङ्खमथो रजःस्था भूर्नामिका पद्ममभूद्धरेर्हि ।।

गदा तु वायुर्बलसंविदात्मा शार्ङ्गं च विद्येति रमैव खड्गः ।
दुर्गात्मिका सैव च चर्मनाम्नी पञ्चात्मको मारुत एव बाणः ।।
एवं स्थितेष्वेव पुरातनेषु वराद्रथाङ्गत्वमवाप कामः ।। इति ।

(म.भा.ता.नि.३-७३,७४,७५) ।

त्वत्कण्ठगं कौस्तुभमास धाता । इति च (म.भा.ता.नि.१०-३३) ।

हलाद्यभिमानिनो ग्रन्थान्तरे द्रष्टव्याः । एतानि देवस्य दिक्षणोर्ध्वबाहुमारभ्य प्रादिक्षण्येन पूजयेत् । तस्यायं क्रमः– ॐ दुं दुर्गात्मकचक्राय नमः । ॐ श्रीं श्र्यात्मकशङ्खाय नमः । ॐ वाय्वभिमानिन्यै गदायै नमः । ॐ भूम्यात्मकपद्माय नमः । ॐ विद्यात्मकशार्ङ्गाय नमः । ॐ पञ्चात्मकवाय्वभिमन्यमानबाणेभ्यो नमः । हलाय नमः । मुसलाय नमः । विरिञ्चाभिमन्यमानकौस्तुभाय नमः । मालात्मिकायै श्रियै नमः । श्रीवत्सरूपश्रीलक्ष्म्यै नम इति ।।५९,६०।।

**मङ्गाली–** पीठपूजानन्तरकृत्यमाह- **तत्रेति** ।। **तत्र** योगपीठस्वरूपे स्थितायां प्रतिमायां **हरिं** स्वबिम्बमावाह्याघ्याद्यादिपुष्पांतं दद्यात् । आवाहनप्रकारस्तु पुरुषसंहितायामुक्तः-

अष्टैश्वर्यसमायुक्तं श्वेतमत्यन्तनिर्मलम् ।
श्वेताब्जस्थं पद्मकरं गदिनं शङ्खचक्रिणम् ।

शुद्धस्फटिकसंकाशं सर्वाभरणभूषितम् ।
वनमालाधरं देवं ध्यायेन्नारायणं परम् ।

मानसै रूपचारैश्च पूजां सम्यक् समाचरेत् ।
वहिर्योगप्रसिध्यर्थं उच्चरन् प्रणवं तथा ।

देवं सुषुम्नामार्गेणानीय ब्रह्मरंध्रकम् ।
वामनासापुटे ध्यात्वा निर्गतं स्वाञ्जलिस्थितम् ।

संपूज्य प्रतिमादौ तु पुष्पमारोप्य मन्त्रतः ।
सहस्रशीर्षामन्त्रेण कुर्यादावाहनं विभोः ।

हृस्थं देवं समावाह्य बहिर्बिम्बैर्नियोजयेत् ।
अधोमुखं हृत्कमलं वायुबीजेन चोन्मुखम् ।
प्रणवेनोन्मुखीकृत्य ज्ञानार्केण विकासयेत् । इति ।

**अधोमुखं** अन्तःकिञ्चित् कुंचितपत्राग्रमित्याहुः। **वायुबीजेन** यमिति बीजाक्षरेण **उन्मुखं** ऊर्ध्वमुखपत्राग्रं उन्मुखीकृत्य अभिमुखीत्य **ज्ञानार्केण** ज्ञान-सूर्येण विकासितं भावयेदित्यर्थः। विकासितपद्मस्थितदेवं उद्यद्भास्वदित्यादि-प्रकारेण ध्यात्वा सुषुम्नामार्गेण ब्रह्मरन्ध्रमानीय वामनासापुटात् बहिर्निर्गतं स्वांजलिस्थं भावयित्वा सहस्रशीर्षेति मन्त्रेण मूलमन्त्रेण च प्रतिमादावावाहयेदिति प्रमाणाभिप्रायः।

'तावत्संप्रीतीतिभावेन बिम्बेऽस्मिन् सन्निधो भव' इति मन्त्रेण प्रार्थ्य प्रतिमापादयोः पुष्पाञ्जलिं क्षिपेत्। ततः अर्घ्यादि शङ्खेन मूलमन्त्रेण दद्यात्। 'पुष्पेणाराध्य मूलेन दत्वाऽर्घ्यं शङ्खवारिणा' इति योगदीपिकोक्तेः। इदं पात्राणामभाव एव। 'पात्राणामप्यभावे तु शङ्ख एव विशिष्यते' इत्युक्तेः। अर्घ्यपात्रादि कृताकृतमिति ज्ञापनाय मूले तदनुक्त्वाऽर्घ्यादि सामान्योनोक्तम्। **आचामाचमनीयम् वासो** वस्त्रम्। **उपवीतासने** यज्ञोपवीतासने। गन्धपुष्पे च समर्प्य वरुणपूजां कुर्यादिति शेषः ।। ५९-६० ।।

सप्तावरणपूजभिधानम्

**तं.सा. लक्ष्मीधरे यजेत्तत्र पार्श्वयोरुभयोर्हरिः ।**
**हृदयादींस्तथेन्द्रादि दिक्ष्वस्त्रं कोणकेषु च ।। ६१ ।।**

**वासुदेवादिकान् दिक्षु केशवादींस्ततः परम् ।**
**मत्स्यकूर्मवराहांश्च नारसिंहं च वामनम् ।। ६२ ।।**

**भार्गवं राघवं कृष्णं बुद्धं कल्किनमेव च ।**
**अनन्तं विश्वरूपं च तद्बहिः पूजयेत् क्रमात् ॥ ६३ ॥**

**अनन्तब्रह्मवाय्वीशान् वीशं चाग्रे प्रपूजयेत् ।**
**वारुणीं चैव गायत्रीं भारतीं गिरिजामपि ॥ ६४ ॥**

**कोणेषु वीन्द्रवामे च सौपर्णीं पूजयेदपि ।**
**इन्द्रदीन् शेषविघ्नन्तान् सभार्यान् सपरिग्रहान् ॥ ६५ ॥**

**त.क.–** ननु– अर्चयेत् सपरिवारं नारायणमनामय् ।
भक्त्या षोडशभिः सम्यगुपचारैर्यथोदितम् ॥ इति, अन्यत्र
अपूजिता अर्घ्यमादिदातारस्ते तथाविधाः ॥ इति ।(तं.सा.१-५३)

इह च देवतान्तरपूजाऽप्यावश्यकीति विज्ञायते । तत्र यदा या देवता पूज्यते ब्रह्मा विष्णुः शिव इन्द्रादिर्वा तदा सैव प्रधानमितरा त्वप्रधानम् । न हि प्राधान्यं क्वचिन्नियतमस्ति । चैतन्यैक्याङ्गीकारात् । तथा वासुदेवादीनां चैतन्यैक्येऽप्यङ्ग-प्रधानभावेन क्रीडामात्रं तथैव देवतान्तरेष्वपीत्युपपत्तरिति परेषां पन्थाः । तत्र किं तत्त्वमिति जिज्ञासायामन्यदेवतापूजायामितिकर्तव्यतां प्रदर्श्य, तत्तत्स्थानप्रकारं परापरतत्त्वसाधारण्येन यथाशास्त्रमावरणदेवतापूजां विधत्ते— **लक्ष्मीति ॥**

यत्राधिष्ठाने भगवदावाहनादिपुष्पान्तत्रयोदशोपचाराः कर्तव्या इत्युक्तं तत्रैवाधिष्ठाने स्थितस्य भगवतो दक्षिणोत्तरपार्श्वयोरुभयोर्लक्ष्मीशब्दितश्रीरूपं धराशब्दितभूरूपं च पूजयेदिति सम्बन्धः । 'ततः परम्' इति वक्ष्यमाण-मनुकर्षणीयम् । श्रीभूमिपूजानन्तरं ऐन्द्रयाम्यवारुणसौम्याख्यासु चतसृषु दिक्षु हृदयशिरश्शिखाकवचदेवान् कृद्धोल्कमहोल्कवीरोल्कद्युल्कान् भगवद्रूपविशेषान् पूजयेदिति सर्वत्र सम्बध्यते । ततः परम् आग्नेयनैर्ऋतवायव्येशानेषु कोणेषु अस्त्रदेवं सहस्रोल्कमेकमेव पूजयेत् । 'न्यासे नमोऽन्तस्तु स्वाहान्तो होमकर्मणि' इत्युक्तेः 'कृद्धोल्काय नमः' इत्यादिमन्त्राकारोच्चारणपुरस्सरं पञ्चमन्त्राणां, कोणैः सह अष्टादिक्षु, पञ्चममन्त्रस्य चतुर्वारमुच्चारणेनाष्टमन्त्रत्वं सम्पाद्य पूजयेदिति तात्पर्यम् । ततः परमावरणान्तरे प्राच्यादिचतुर्दिक्षु वासुदेवाद्यनिरुद्धान्तान्

'वासुदेवाय नमः' इत्यादिमन्त्रानुच्चार्य पूजयेत्। ततस्तत्कोणेषु मायाजयाकृतिशान्त्याख्यान् लक्ष्मीमूर्तिविशेषान् पूजयेदिति च ग्रह्याम्। ततः परमैन्द्रादिचतुर्दिक्षु केशवादिवामनान्तान् मूर्तिविशेषानष्टावेकैकस्यां दिशि मूर्तिद्वयमित्येवं प्रकारेण पूजयेत्। ततः परं तद्बहिश्चतुर्थावरणे मत्स्यादि-कृष्णान्तानष्टावैन्द्रादिचतुर्दिक्षु पूर्ववदेकैकस्यां द्वन्द्वं पूजयेत्। ततस्तत्कोणे-ष्वाग्नेयादिषु बुद्धादिविश्वरूपान्तान् पूजयेत्। क्रमादित्यनेन मत्स्यकूर्मवराहां-श्चेत्यादिनिर्देशक्रमेणैव पूजनम्। न त्वस्य कल्पस्य वाराहत्वाद्वराहस्य प्रथमं पूजनं कर्तव्यमिति सूचयति। पञ्चमावरणपूजाप्रकारमाह— **अनन्तेति** ।। 'तद्बहिः पूजयेत् क्रमात्' इति वर्तते। पञ्चमावरणे ऐन्द्रादिचतुर्दिक्षु शेषादीशान्तांश्चतुरो निर्देशक्रमेण पूजयेत् । ततो देवस्याभितः **वीशं** पक्षिश्रेष्ठं गरुडं पूजयेत्। केणेषु पूज्यानाह— **वारुणीति** ।। पञ्चमावरणान्तर्गताग्नेयादिकोणेषु वारुणीसरस्वतीभारतीपार्वत्याख्यानुक्तनिर्देशक्रमेणैव पूजयेत्। एवेत्यनेन प्राधान्येन पूजनं निवर्तयति । पार्वतीसमायाः सौपर्ण्याः पूजा कुत्र विधातव्येत्यत आह— **वीन्द्रेति** ।। गरुडस्य वामभागे सौपर्णी पूजयेदित्यर्थः । चशब्द एवार्थे । तथापीति ग्राह्यम् । यद्यपि वारुण्यादयः शेषदीनां दक्षिणभागे पूजनीयाः । तथापीह वचनबलाद्गरुडस्य वामभागे। षष्ठावरणपूजामाह— **इन्द्रदीनिति** ।। इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानशेषचतुर्मुखान्तान् दश देवान् ऐन्द्रादिचतुर्दिक्षु आग्नेयादिचतुर्षु कोणेषु च क्रमात् पूजयेत्। यद्यप्यत्र शेषविध्योः पूजाप्रदेशो नोक्तः। तथापीशानकोणे शेषं निर्ऋते च विधिं पूजयेदिति साम्प्रदायिक-ग्रन्थान्तरादवगन्तव्यम्। अत्र श्रीभूम्योः प्रथमावरणत्वमेवोपेत्य इन्द्रादीनां सप्तमावरणत्वमुपयन्ति केचित्।

ननु— ब्रह्मान्ता गुरवश्चैव सम्प्रदायप्रवर्तकाः ।
तत्तद्गुणानुसारेण पूज्या मान्याश्च सर्वशः ।। (तं.सा.४-११२)

इति सर्वदेवानां पूजा विधास्यते। अत एव चतुर्थे गणपत्यादिमन्त्रा उद्धरिष्यन्ते। तथा च ते सर्वेऽपि पूज्याः । एवं सत्यपि लक्ष्म्यादिनिर्ऋत्यन्तदेवतापूजैवोक्ता ।

न तु **गणपत्यादिपूजा**। न च सा न कर्तव्यैव। उक्तवचनविरोधात्। अन्यथा 'पूज्येन्नान्यदेवताः' इति विशेषवचनात् लक्ष्म्यादीनामपि पूजा न कार्या स्यात्। न च **गणपत्यादयः** प्राधान्येन पूज्याः। 'अपि हेयाः प्रधानतः'(अनु.१-१-१३६) इति वचनविरोधात्। तथा च आवरणत्वेनैवेषां पूजा विधातव्या। आवरणानि च पञ्चषाणि। तत्रोक्ताश्च कतिपया एव देवाः पूज्याः। तत्कथं न विरोध इत्यत आह— **सभार्यन् सपरिग्रहानिति**॥ यद्यपि सर्वा अपि देवताः पूज्याः। नापि प्राधान्येन। आवरणानि च परिमितानि। तत्रोक्ता देवाश्च परिमिताः। तथाप्युक्तदेवतानां पूजा न तन्मात्रस्य। किन्तु भार्यापरिवारसमेतस्यैव। तथाच शचीस्वाहादीनां केषाञ्चिद्भार्यात्वेन। गणपत्यादीनां केषञ्चित् पुत्रत्वेन। केषाञ्चिद्गन्धर्वादीनां भृत्यादित्वेन। एवं च सर्वदेवतानां पूजनं प्राप्तमेवेति भावः ॥६१-६५॥

**अ.सं.**– अथावरणपूजाप्रकारमाह– **लक्ष्मीत्यादिना**॥ **तत्र** योगपीठोपरि। एतेन एतयोरेव पीठे पूजा अन्येषां तु बहिरिति सूचितं भवति। हरेः **उभयोः पार्श्वयोः** वामदक्षिणपार्श्वयोः लक्ष्मीधरे यजेत्। तदुक्तम् जयतीर्थीये–

अथावरणपूजायां लक्ष्मीं वामे हरेर्यजेत्।
धरां च दक्षिणे पार्श्वे................. ॥ इति। (प.मा.८४)

इदं **प्रथमावरणम्**। द्वितीयावरणमाह– **हृदयादीनिति**॥ **आदिपदेन** शिरःशिखाकवचानां ग्रहणम्। ततश्च पीठाद्बहिरिन्द्रादिदिक्षु पूर्वादिचतुर्दिक्षु **हृदयादीन्** हृदयादिनामकान् कृद्धोल्कमहोल्कवीरोल्कद्युल्काख्यान्। **अस्त्रं** अस्त्रनामकं सहस्रोल्काख्यम्। एवमेव **कोणेषु** आग्नेयादिचतुरस्रेषु **यजेत्** पूजयेदिति योजनोक्ता भवति ॥

तृतीयावरणमाह– **वासुदेवादिकानिति**॥ द्वितीयावरणाद्बहिः पूर्वादिदिक्षु **वासुदेवादिकान्** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धकान् यजेत्। उपलक्षणमेतत्। आग्नेयादिकोणेषु मायां जयां कृतिं शान्तिं चेति रमारूपचतुष्टयं यजेदिति सम्प्रदायः। चतुर्थावरणमाह– **केशवादीनिति**॥ नारायणादिदामोदरान्ता एकादश

आदिपदेन सङ्ग्राह्याः । 'केशवादींस्ततो मूर्त्तीर्द्वादश क्रमतो यजेत्' इति जयतीर्थीयोक्तेः । तथा च **ततः** वासुदेवादिभ्यः **परं** बहिर्दिक्षु विदिक्षु च केशवाद्याः दामोदरान्ताः द्वादशैव मूर्त्तीर्यजेत् । तत्र दिक्षु मूर्तिद्वयं कोणेष्वकैकमिति विवेकः । 'द्वन्द्वशो दिक्षु सम्पूज्य एकैकं कोणकेषु च' (पञ्चरात्रवचनम् ।) इत्युक्तेः ।

केचित्तु 'अङ्गैराद्यावृतिं कुर्यान्मूर्तिभिस्तदनन्तरं' इति । अङ्गैः कृद्धोल्कादिभिराद्यावृर्ति आद्यावरणं तदनन्तरं वासुदेवादिमूर्त्तिभिरावरणं कुर्यादित्यर्थः । तथा 'अङ्गादिलोकपालान्तं यजेदावरणान्यपि' इति वचनवलाच्च लक्ष्मीधरयोरनावरणत्वमङ्गीकृत्य केशवाद्यावरणाद्बहिः संकर्षणादिकृष्णान्ताः द्वादशमूर्त्तीः पूर्वोक्तप्रकारेण यजेत् । केशवादीनिति सामान्यतः आदिशब्द-प्रयोगात् । ततश्च कृद्धोल्काद्यावरणमारभ्य लोकपालान्तमावरणसप्तकं भवतीत्याहुः ।

पञ्चमावरणमाह– **मत्स्यमिति ।।** **तद्बहिः** केशवादिभ्यो बहिः पूर्वादिदिक्षु मत्स्यादिविश्वरूपान्तानि द्वादशरूपाणि **क्रमात्** दिशि रूपद्वयं कोणे एकैकमिति पूर्वोक्तप्रकारेण यजेत् ।।

षष्ठावरणमाह– **अनन्तेति ।।** मत्स्यादिभ्यो बहिः पूर्वादिदिक्षु अनन्तब्रह्मवाय्वीशान् शेषविरिञ्चिवायुरुद्रान् क्रमेण पूजयेत् ।।

**वीशं** गरुडं च **अग्रे** देवपुरतः **कोणेषु** आग्नेयादिषु वारुण्याद्याश्चतस्रः शेषादींस्तत्पत्नीस्तद्वामे यजेत् ।। गरुडवामभागे गरुडपत्नीमपि सौपर्णीमपि पूजयेत् ।

सप्तमावरणमाह– **इन्द्रादीनिति ।।** षष्ठावरणाद्बहिः **इन्द्रादिशेषविध्यन्तान्** इन्द्रमारभ्य चतुर्मुखान्तान् दशलोकपालान् पूर्वादिदिक्षु । इन्द्रदिशि इन्द्रम् अग्निदिशि अग्निं इत्येवं क्रमेण तस्यां तस्यां दिशि तं तं यजेदित्यर्थः । ऊर्ध्वदिशि चतुर्मुखमधोदिशि शेषम् । उक्तं च योगदीपिकायाम्– 'अध ऊर्ध्वमहिर्विधिः' इति (३.३४) । यद्वा इन्द्रेशानयोर्मध्ये चतुर्मुखं वरुणनिर्ऋत्योर्मध्ये शेषम् । उक्तं च

विष्णुतीर्थीये–

अनन्तं वरुणस्यापि निर्ऋतेर्मध्यतो यजेत् ।
देवेन्द्रेशानयोर्मध्ये ब्रह्माणं च प्रपूजयेत् ।।
सर्वानभिमुखान्विष्णोः कृताञ्जलिपुटान्यजेत् ।। इति । (३.१०५-१०६)

तत्तल्लोकपालमन्त्रैरिन्द्रादीन्यजेदिति बोध्यम् । अत्र लोकपालमन्त्रोद्धारप्रकार उक्तो योगदीपिकायाम्–

तद्बहिर्दशदिक्ष्वर्च्याः इन्द्राग्नी यमनिर्ऋती ।
वरुणो वायुसोमेशा अनन्तब्रह्मनामकाः ।।

ताराद्याः स्वयमुद्देश्याः मन्त्रांस्तांस्तानुदीरयेत् ।
सुरतेजःप्रेतरक्षोजलप्राणपदानि तु ।।

नक्षत्रविद्या नागारव्या लोकेत्येकैकमेव तु ।
उक्त्वाऽधिपतिमुद्दिश्य तथोक्त्वा विष्णुपार्षदम् ।। (३.३१-३४)

नमोन्ता इति तन्मन्त्रा इति । **ताराद्याः** ॐकारपूर्वकाः **स्वयं** इन्द्रादिशब्दाः **उद्देश्याः** चतुर्थ्यन्ताः सुरादिशब्दानन्तरमुद्देश्यम् । चतुर्थ्यन्तम् अधिपतिपदमुक्त्वा विष्णुपार्षदपदं च चतुर्थ्यन्तमुक्त्वा तन्मन्त्रानुदीरयेत् । **तन्मन्त्राः** लोकपालमन्त्राः । **नमोऽन्ताः** नमःशब्दान्ता इति प्रमाणार्थः । शारदीतिलके च–

अन्ते यजेल्लोकपालान् मूलपारिषदान्वितान् । (४.११३)
इन्द्रं सुराधिपं पीतं वज्रहस्तं सुवाहनम् ।।

अग्निं तेजोधिपं रक्तं शक्तिहस्तं सुभूषणम् ।
यमं प्रेताधिपं कृष्णं दण्डहस्तं समर्चयेत् ।।

रक्षोधिपं च नैर्ऋतिं खड्गहस्तं सुधूम्रकम् ।
पाशहस्तं सुशुभ्राङ्गं वरुणं चाम्भसां पतिम् ।।

वायुं प्राणाधिपं धूम्रमङ्कुशाढ्यकरं यजेत् ।
नक्षत्राणां पतिं सोमं शुक्लवर्णं गदाधरम् ।।

विद्याधिपं तथेशानं स्वच्छं शूलकरं यजेत् ।
नागाधिपं तथाऽनन्तं गौरं चक्रकरं यजेत् ।
लोकाधिपं विधातारं रक्तं पद्मकरं यजेत् ।।

मूलपार्षदानित्यत्र मूलशब्देन बीजाक्षराण्युच्यन्ते । तानि तु–

पृथ्व्यग्निपवनाद्यान्त्यरुणानिलसेश्वरैः ।
अनन्तबिन्दुसंयुक्तैरर्च्याः पाशेन मायया ।। इति ।

पृथ्वी ई कारः । अग्नी रेफः । पवनाद्यः यकारः, अन्त्यः क्षकारः, वरुणः वकारः, अनिलः यकारः, सः सकारः, ईश्वरोकारः, पाशः अकारः, माया ह्रीः एते दीर्घबिन्दुयुक्ताः वीजाक्षराणि भवन्ति । तथा–

ऐरावतस्तथा मेषो महिषः प्रेतसंज्ञिकः ।
मकरोऽथ मृगः पश्चात्तुरगो वृषभस्तथा ।।
कूर्मो हंसः क्रमादेषां वाहनानि विदुर्बुधाः ।। इति ।

लोकपालमन्त्रोद्धारस्तु । 'ॐ लं ॐ इन्द्राय सुराधिपतये पीतवर्णाय वज्रहस्ताय सवाहनाय सभार्याय श्रीविष्णुपार्षदाय नमः । ॐ रं ॐ अग्नये तेजोधिपतये रक्तवर्णाय शक्तिहस्ताय सवाहनाय सभार्याय विष्णुपार्षदाय नमः' इत्यादिरूपो ज्ञेयः । अनेन **सपरिग्रहान्** इत्यत्र सपरिग्रहपदार्थ उक्तो भवति । एवमावरणदेवान् आवाह्य विष्णोरभिमुखतः स्थितानेतानर्घ्यादिभिः पूजयेत् । तदुक्तम्–

अर्घ्यं पाद्यं त्वाचमनं साचामं मधुपर्ककम् ।
स्नपनं वसनं चैव गन्धपुष्पं च भूषणम् ।।

दशैतानुपचारांस्तु सर्वेभ्यश्च पृथग्वदेत् ।
लक्ष्म्याद्यावरणस्थेभ्यः नमोऽन्तैः स्वस्वनामकैः ।।

आसनादि तु पीठस्य देवानां विष्णुना सह ।
धूपदीपादिकं सर्वं सर्वेभ्यो विष्णुना सह ।। इति ।। ६१-६५ ।।

**गु.दी.–** अथावरणपूजां कुर्यादित्याह— **लक्ष्मीधरे इत्यादिना**

**सपरिग्रहानित्यन्तेन ॥** प्रथमावरणमाह— **लक्ष्मीधरे यजेदिति ॥** अत्र धराशब्देन रमारूपं पृथिवीरूपं च ग्राह्यम्। **तत्र** योगपीठोपरि। तत्र विवेकमाह— **पार्श्वयोरिति ॥** हरेः **उभयोः** वामदक्षिणयोः पार्श्वयोर्लक्ष्मीधरे **यजेत्** पूजयेत्। तत्रायं विवेकः। लक्ष्मीं भगवतो वामपार्श्वे धरां दक्षिणपार्श्वे यजेदिति। **पार्श्वयोरि**ति द्विवचनेनोभयोर्लाभेऽपि विजातीयपार्श्वद्वयलाभाय **उभयो**रित्युक्तम्। 'मर्त्यानामहनी उभे' (भा.३-१२-१०) इतिवत्। तथा च तृतीयतात्पर्ये—

यत्रोभयोः सशब्दः स्यात् तत्र द्विवचनेऽप्युभे ।(भा.ता.३-१२-१०)इति ।

यत्र वाक्ययोरुभयोर्विजातीययोरिति शेषः। **सशब्दः** एक एव शब्दः प्रयुक्तः स्यात् तत्र द्विवचने प्रयुक्तेऽपि विजातीयग्रहणाय उभे इति पुनः प्रयोक्तव्यमेव। अन्यथा सजातीयद्वयग्रहणमात्रेण द्विवचनपर्यवसानेऽपेक्षितस्य विजातीयद्वयस्य बोधो न स्यादिति भाव इति तदर्थः।

तयो रूपविशेषो हारीते—

चिन्तयेद्दक्षिणे पार्श्वे लक्ष्मीं काञ्चनसन्निभाम् ।
पद्महस्तां विशालाक्षीं दुकूलवसनां शुभाम् ॥

वामे दूर्वादलश्यामां चित्राभरणभूषिताम् ।
चिन्तयेद्धरिणीं देवीं नीलोत्पलधरां शुभाम् ॥ इति ।

इदानीं द्वितीयावरणमाह— **हृदयादीनिति ॥ इन्द्रादिदिक्षु** पूर्वपश्चिमदक्षिणोत्तरासु। 'प्राच्याः प्राणास्तथेन्द्राद्याः' (षट्.भा.१-४) इति षट्प्रश्नभाष्यवचनात्, **हृदयादीन्** हृद्ययनादित्यादिव्युत्पत्त्या हृदयादिषु न्यस्यमानमन्त्रप्रतिपाद्यत्वाद्वा **हृदयादीन्** क्रुद्धोल्कादीन् क्रुद्धोल्कमहोल्कवीरोल्कद्युल्केति चतुरः यजेत्। **कोणकेषु** आग्नेयादिषु **अस्त्रं** सहस्रोल्कनामकभगवद्रूपमेव यजेत्। तत्क्रमस्तु पीठाद्बहिः पूर्वादिदिक्षु 'उद्यदादित्यवर्णाय शङ्खचक्रवराभयहस्ताय सश्रीकाय क्रुद्धोल्काय नमः' इत्यादि। अस्मिन्नावरण एवाऽग्नेयादिकोणेषु 'कृष्णवर्णाय चक्रशङ्खवराभयहस्ताय सश्रीकाय सहस्रोल्काय नमः' इति द्रष्टव्यः।

तृतीयावरणमाह— **वासुदेवादिकानिति ।। दिक्षु** पूर्वादिदिक्षु । वासुदेव-प्रद्युम्नसङ्कर्षणानिरुद्धान् यजेत् । क्रुद्धोल्कादिभ्यो वहिरिति शेषः । वासुदेवादीनां मायाजयाकृतिशान्तिनाम्न्यः क्रमाच्छक्तयः आग्नेयादिविदिक्षु पूज्या इत्यपि द्रष्टव्यम् । यथोक्तं हारीते—

वासुदेवश्चक्रपाणिः प्रद्युम्नाद्यास्त्रयस्तथा ।
दिक्षु सम्पूजनीयाश्च शक्तिस्तेषां विदिक्षु च ।। इति ।

अथ चतुर्थावरणमाह— **केशवादीनिति ।। ततः परं** वासुदेवादिभ्यो बहिर्मेषादिराशिषु केशवादीन् द्वादश यजेत् ।

वासुदेवादिकान् दिक्षु केशवादींश्च राशिषु ।
मेषादिष्वथ मत्स्यादीन् बहिरावरणं ततः ।। (यो.दी.३-२८)

इति योगदीपिकावचनात् । केशवादिद्वादशमूर्तयः शक्तियुताः पूज्या इति हारीते–

श्रीर्लक्ष्मीः कमला पद्मा पद्मिनी कमलालया ।
रमा वृषाकपी धन्या वृद्धिर्यज्ञाऽप्यथेन्दिरा ।। इत्याद्युक्त्वा
एवं सशक्तयः पूज्याः केशवाद्याः सुरेश्वराः ।। इति ।

तत्रायं प्रयोगप्रकारः—

'शङ्खचक्रगदापद्मधरायोद्यदादित्यवर्णाय वामभागस्थितश्रीदेवीसहिताय केशवाय नमः' इत्यादिप्रकारेण पूर्वाद्येकैकस्यां दिशि द्वे द्वे मूर्ती कोणेष्वेकैका मूर्तिरिति द्वादशमूर्तीनां विभागो द्रष्टव्यः । तदुक्तम्—

द्वन्द्वशो दिक्षु सम्पूज्य कोणेष्वेकैकमेव च । इति पञ्चरात्रे ।

केचित्तु केशवादीनित्यत्र चतुर्विंशतिमूर्तीरपि गृहीत्वा दिक्षु कोणेषु च तिस्रस्तिस्र इति वदन्ति । अत्र मूलं मृग्यम् ।

अथ पञ्चमावरणमाह— **मत्स्येति ।। तद्बहिः** केशवादिभ्यो वहिः केशवादी-नामावरणतयेति यावत् । मत्स्यादीन् विश्वरूपान्तान् द्वादश क्रमात् पूजयेत् । अत्रापि दिशि द्वे द्वे कोणेष्वेकैकेति विवेको द्रष्टव्यः । मत्स्यादिलक्षणं

पाद्मसंहितायां भगवानुवाच 'मत्स्यादिदशमूर्तीनां लक्षणं कथ्यतेऽधुना' इत्यादिना । तदत्र विस्तरभिया न कथ्यते ।

अथ षष्ठावरणमाह— **अनन्तमिति ।। अनन्तः** शेषः **ब्रह्मा** चतुर्मुखः **वायुः** मरुत् **ईशो** रुद्रः तान्, **वीशं** गरुडं **चाग्रे** हरेरग्रे प्रपूजयेत् । **वारुणीं** शेषभार्याम् । **गायत्रीं** ब्रह्मभार्याम् । **भारतीं** वायुभार्याम् । **गिरिजां** रुद्रभार्याम् । **कोणेषु** आग्नेयादिषु क्रमात्पूजयेत् । गरुडपत्न्याः पूजास्थानमाह— **वीन्द्रवामे चेति ।।**

अथ सप्तमावरणमाह— **इन्द्रादीनिति ।। सपरिग्रहान्** सायुधान् । सवाहनानित्यपि द्रष्टव्यम् । **इन्द्रादीन्** इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानान् शेषविध्यन्तानपि पूजयेदिति सम्बन्धः । अत्र वायुः प्रधानवायोः सूनुरिति सम्प्रदायविदः । यथाऽह तात्पर्यनिर्णये—

प्रधानवायोस्तनयं तु वायुं कोणाधिपं तु । इति ।। (म.भा.ता.नि.२०-१२७)

अधोभागे शेषः, ऊर्ध्वं चतुर्मुखस्तथा योगदीपिकोक्तेरिति साम्प्रदायिकाः शेषविध्योः पूजास्थलमाहुः । वस्तुतस्तु शेषविध्योः पूजास्थलं नारदोक्ताष्टाक्षरदीपिकायाम्—

अनन्तं वरुणस्यापि निर्ऋतेर्मध्यतो यजेत् ।
इन्द्रेशानयोर्मध्ये ब्रह्माणं वै प्रपूजयेत् ।।
सर्वानभिमुखान् विष्णोः कृताञ्जलिपुटानपि ।। इति ।

इन्द्रादीनामायुधादिविशिष्टानां चिन्तना तत्रैव–

पीतः सहस्रनयनो मत्तैरावतवाहनः ।
चित्रालङ्कारमालाढ्यो वज्री ध्येयः सुरेश्वरः ।। १ ।।

प्रोत्तप्तकनकप्रख्यो मेषपृष्ठं समाश्रितः ।
त्रिनेत्रः शक्तिभृद्वह्निः स्मर्तव्यो ज्वलदाननः ।। २ ।।

तीक्ष्णशृङ्गमहिषोत्तमास्थितः कालमेघचयकालविग्रहः ।
दण्डपाणिरपि भूषणोज्ज्वलश्चिन्त्यतां पितृपतिस्त्रिलोचनः ।। ३ ।।

धूम्रमूर्तिरतिभीषणाकृतिर्हस्तसंस्थितमहासिशोभितः ।
त्र्यक्षणो ज्वलदमेचकाम्बरः स्मर्यतां नरगतो निशाचरः ।। ४ ।।

इन्दुकुन्दधवलो महामणिप्रोज्ज्वलाभरणमालमण्डितः ।
पाशशोभितकरो जलेश्वरः श्लक्ष्णो मकरवाहनो मतः ।। ५ ।।

धूमधूम्रवपुषं त्रिलोचनं पाणिपल्लवगदाङ्कुशाङ्कितम् ।
वायुमायुरधिपं शरीरिणामम्बरीषहरिणा स्थितं स्मरेत् ।। ६ ।।

चिन्तयामलविलोचनद्वयं राजताद्रिरुचिरं निशाकरम् ।
तुङ्गवल्गिततुरङ्गमास्थितं सर्वतारकपतिं नभःस्थितम् ।। ७ ।।

शान्तशूलविलसत्कराम्बुजं शङ्करं शशभृता विभूषितम् ।
राजताद्रिनिभमङ्कसंस्थया कान्तया सहितमीश्वरं स्मरेत् ।। ८ ।।

क्षीरसागरनिभं फणामणिज्योतिराततवियद्वितानकम् ।
नागवाहनमशेषवन्दितं शेषमुद्यतरथाङ्गमर्चयेत् ।। ९ ।।

हंसवाहमरविन्दधारिणं हेमवर्णमजमादिपूरुषम् ।
चिन्तयेदपि सरोजसम्भवं सृष्टिहेतुममलद्युतिमीड्यम् ।।१०।। इति ।

तथा च 'किरीटादिभूषिताय पीतवर्णाय सुराधिपतये शचीसहिताय वज्राभयहस्ताय ऐरावतवाहनाय सपरिवाराय श्रीविष्णुपार्षदाय नमः' इत्यादिप्रयोगो द्रष्टव्यः। एवं लक्ष्मीधरे प्रथमावरणत्वेनाङ्गीकृत्य सप्तावरणानि गुरुचरणसम्प्रदायपरम्पराप्राप्तानि ।।

अत्र केचिदाहुः। 'लक्ष्मीधरे यजेत् तत्र' (तं.सा.१-६१) इति मूले लक्ष्मीधरयोः पीठे हरेः पार्श्वे पूज्यत्वकथनेन लक्ष्मीधरयोः पीठ एव पूजा न त्वारणत्वेन। अन्येषां कृद्धोल्कादीनां बहिरावरणत्वेनेति ज्ञापितम्। तथा च क्रुद्धोल्कादि प्रथमावरणम्। वासुदेवादि द्वितीयम्। केशवादिदामोदरान्तद्वादश तृतीयावरणम्। सङ्कर्षणादि चतुर्थमावरणम् ।

श्रीर्लक्ष्मीः कमला पद्मा पद्मिनी कमलालया ।
रमा वृषाकपी धन्या वृद्धिर्यज्ञाऽप्यथेन्दिरा ।।

पाद्मसंहितायां भगवानुवाच 'मत्स्यादिदशमूर्तीनां लक्षणं कथ्यतेऽधुना' इत्यादिना । तदत्र विस्तरभिया न कथ्यते ।

अथ षष्ठावरणमाह— **अनन्तमिति ।।** **अनन्तः** शेषः **ब्रह्मा** चतुर्मुखः **वायुः** मरुत् **ईशो** रुद्रः तान्, **वीशं गरुडं चाग्रे** हरेरग्रे प्रपूजयेत् । **वारुणीं** शेषभार्याम् । **गायत्रीं** ब्रह्मभार्याम् । **भारतीं** वायुभार्याम् । **गिरिजां** रुद्रभार्याम् । **कोणेषु** आग्नेयादिषु क्रमात्पूजयेत् । गरुडपत्न्याः पूजास्थानमाह— **वीन्द्रवामे चेति ।।**

अथ सप्तमावरणमाह— **इन्द्रादीनिति ।।** **सपरिग्रहान्** सायुधान् । सवाहनानित्यपि द्रष्टव्यम् । **इन्द्रादीन्** इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानान् शेषविध्यन्तानपि पूजयेदिति सम्बन्धः । अत्र वायुः प्रधानवायोः सूनुरिति सम्प्रदायविदः । यथाऽह तात्पर्यनिर्णये—

**प्रधानवायोस्तनयं तु वायुं कोणाधिपं तु । इति ।।** (म.भा.ता.नि.२०-१२७)

अधोभागे शेषः, ऊर्ध्वं चतुर्मुखस्तथा योगदीपिकोक्तेरिति साम्प्रदायिकाः शेषविध्योः पूजास्थलमाहुः । वस्तुतस्तु शेषविध्योः पूजास्थलं नारदोक्ताष्टाक्षरदीपिकायाम्—

अनन्तं वरुणस्यापि निर्ऋतेर्मध्यतो यजेत् ।
इन्द्रेशानयोर्मध्ये ब्रह्माणं वै प्रपूजयेत् ।।
सर्वानभिमुखान् विष्णोः कृताञ्जलिपुटानपि ।। इति ।

इन्द्रादीनामायुधादिविशिष्टानां चिन्तना तत्रैव–

पीतः सहस्रनयनो मत्तैरावतवाहनः ।
चित्रालङ्कारमालाढ्यो वज्री ध्येयः सुरेश्वरः ।। १ ।।

प्रोत्तप्तकनकप्रख्यो मेषपृष्ठं समाश्रितः ।
त्रिनेत्रः शक्तिभृद्वह्निः स्मर्तव्यो ज्वलदाननः ।। २ ।।

तीक्ष्णशृङ्गमहिषोत्तमास्थितः कालमेघचयकालविग्रहः ।
दण्डपाणिरपि भूषणोज्वलश्चिन्त्यतां पितृपतिस्त्रिलोचनः ।। ३ ।।

धूम्रमूर्तिरतिभीषणाकृतिर्हस्तसंस्थितमहासिशोभितः ।
त्र्यक्षणो ज्वलदमेचकाम्बरः स्मर्यतां नरगतो निशाचरः ।। ४ ।।

इन्दुकुन्दधवलो महामणिप्रोज्वलाभरणमालमण्डितः ।
पाशशोभितकरो जलेश्वरः श्लक्षणो मकरवाहनो मतः ।। ५ ।।

धूमधूम्रवपुषं त्रिलोचनं पाणिपल्लवगदाङ्कुशाङ्कितम् ।
वायुमायुरधिपं शरीरिणामम्बरीषहरिणा स्थितं स्मरेत् ।। ६ ।।

चिन्तयामलविलोचनद्वयं राजताद्रिरुचिरं निशाकरम् ।
तुङ्गवल्गिततुरङ्गमास्थितं सर्वतारकपतिं नभःस्थितम् ।। ७ ।।

शान्तशूलविलसत्कराम्बुजं शङ्करं शशभृता विभूषितम् ।
राजताद्रिनिभमङ्कसंस्थया कान्तया सहितमीश्वरं स्मरेत् ।। ८ ।।

क्षीरसागरनिभं फणामणिज्योतिराततवियद्वितानकम् ।
नागवाहनमशेषवन्दितं शेषमुद्यतरथाङ्गमर्चयेत् ।। ९ ।।

हंसवाहमरविन्दधारिणं हेमवर्णमजमादिपूरुषम् ।
चिन्तयेदपि सरोजसम्भवं सृष्टिहेतुममलद्युतिमीड्यम् ।।१०।। इति ।

तथा च 'किरीटादिभूषिताय पीतवर्णाय सुराधिपतये शचीसहिताय वज्राभयहस्ताय ऐरावतवाहनाय सपरिवाराय श्रीविष्णुपार्षदाय नमः' इत्यादिप्रयोगो द्रष्टव्यः। एवं लक्ष्मीधरे प्रथमावरणत्वेनाङ्गीकृत्य सप्तावरणानि गुरुचरणसम्प्रदायपरम्पराप्राप्तानि ।।

अत्र केचिदाहुः। 'लक्ष्मीधरे यजेत् तत्र' (तं.सा.१-६१) इति मूले लक्ष्मीधरयोः पीठे हरेः पार्श्वे पूज्यत्वकथनेन लक्ष्मीधरयोः पीठ एव पूजा न त्वारणत्वेन। अन्येषां कृद्धोल्कादीनां बहिरावरणत्वेनेति ज्ञापितम्। तथा च क्रुद्धोल्कादि प्रथमावरणम्। वासुदेवादि द्वितीयम्। केशवादिदामोदरान्तद्वादश तृतीयावरणम्। सङ्कर्षणादि चतुर्थमावरणम् ।

श्रीर्लक्ष्मीः कमला पद्मा पद्मिनी कमलालया ।
रमा वृषाकपी धन्या वृद्धिर्यज्ञाऽप्यथेन्दिरा ।।

शक्तयः केशवादीनां सम्प्रोक्ताः परमे पदे ।
हिरण्या हरिणी सत्या नित्यानन्दा त्रयी सुखा ।।

सुगन्धा सुन्दरी विद्या सुशीला च सुलक्षणा ।
सङ्कर्षणादिमूर्तीनां शक्तयः समुदाहृताः ।
एवं सशक्तयः पूज्याः केशवाद्याः सुरेश्वराः ।।

इति हारीतोक्तेः । मूले केशवादीनित्यत्र चतुर्विंशतिमूर्तीनामपि सुग्रहत्वात् ।

मत्स्यादि पञ्चमावरणम् । अनन्तादि षष्ठमावरणम् । इन्द्रादि सप्तममिति ।।
अपरे तु– सङ्कर्षणाद्यावरणमकृतं चेत् पक्षे विष्णुतीर्थीयोक्तावरणं कुर्यात् । तदुक्तं तत्रैव—

अनन्तं विश्वरूपं स्याच्छङ्खपद्मनिधी यजेत् ।
दक्षे वामे ध्वजं पृष्ठे गरुडं पुरतो हरेः ।
शङ्खचक्रगदाब्जानि यजेद्दिक्ष्वायुधानि च ।। इति । (वि.ती.३-१०१,१०२)

इदं मत्स्याद्यावरणानन्तरं यजेत् । अयं तत्क्रमः । देवस्य दिक्षणे पद्मनिधये नमः । सव्ये शङ्खनिधये नमः । पृष्ठे ॐ ध्वजाय नमः । पुरतो गरुडाय नमः । इन्द्रादिदिक्षु ॐ शङ्खाय नमः । ॐ चक्राय नमः । गदायै नमः । पद्माय नम इति तत्तन्मन्त्रेण यजेत् । तथा च मूलोक्तं मत्स्यादि चतुर्थमावरणं मूलानुक्तं विष्णुतीर्थीयोक्तं पञ्चममन्यत्तु सप्तममिति वर्णयन्ति ।।६१-६५।।

**मञ्जाली–** आवरणपूजाप्रकारमाह— **लक्ष्मीत्यादिना ।। तत्र** योगपीठोपरि । एतेन एतयोरेव पीठे पूजा अन्येषां तु बहिरिति सूचितं भवति । **हरेरुभयोः पर्श्वयोः** वामदक्षिणपार्श्वयोः लक्ष्मीधरे यजेत् । तदुक्तं जयतीर्थीये-

अथावरणपूजायां लक्ष्मीं वामे हरेर्यजेत् ।
धरां च दक्षिण पार्श्वे........... ।। इति ।(पा.मा.८४) इदं **प्रथमावरणम्** ।

द्वितीयावरणमाह- **हृदयादीनिति** ।। आदिपदेन शिरःशिखाकवचग्रहणम् । ततश्च पीठाद्बहिरिन्द्रादि दिक्षु पूर्वादिचतुर्दिक्षु **हृदयादीन्** हृदयादिनामकान्

कृद्धोल्कमहोल्कवीरोल्कद्युक्लाख्यान्। **अस्त्रं** अस्त्रनामकं सहस्रोल्काख्यं एकमेव आग्नेयादिचतुःकोणेषु यजेत् पूजयेत् ।।

तृतीयावरणमाह- **वासुदेवादिकानिति ।।** द्वितीयावरणाद्बहिः पूर्वादिदिक्षु **वासुदेवादिकान्** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धकान्यजेत्। ग्रन्थान्तरोक्तानुसारेण वासुदेवादिकानित्येतदुपलक्षणमङ्गीकृत्य कोणेषु मायादिकान् यजेदिति आहुः केचित्। चतुर्थावरणमाह— **केशवादीनिति ।।** नारायणादिदामोदरान्ताः एकादश आदिपदग्राह्याः 'केशवादींस्ततो मूर्तीर्द्वादश क्रमतो यजेत्' इति टीकाकारोक्तेः। तथा च **ततः** वासुदेवादिभ्यः **परं** बहिः दिक्षु विदिक्षु च केशवाद्या दामोदरान्ताः द्वादशैव मूर्तीर्यजेत्। तत्र दिक्षु मूर्तिद्वयं कोणेष्वैकैकमिति विवेकः। 'द्वन्द्वशो दिक्षु संपूज्य एकैकं कोणकेषु च' इत्युक्तेः। केचित्तु 'अङ्गैराद्यावृत्तिं कुर्यात् मूर्तिभिस्तदनन्तरम्'। अङ्गैःकृद्धोल्कादिभिः मूर्तिभिः वासुदेवादिभिः। तथा 'अङ्गादिलोकपालान्तं यजेदावरणान्यपि' इति वचनबलाच्च लक्ष्मीधरयोरनावरणत्वमङ्गीकृत्य केशवाद्यावरणाद्बहिः सङ्कर्षणादिकृष्णान्ताः द्वादशमूर्तीः पूर्वोक्तप्रकारेण यजेत्। केशवादीनिति सामान्यत आदिपदप्रयोगात्। ततश्च कृद्धोल्काद्यावरणमारभ्य लोकपालान्तमावरणसप्तकं भवतीत्याहुः। पञ्चमावरणमाह— **मत्स्यमिति ।। तद्बहिः** केशवादिभ्यो बहिः पूर्वादिदिक्षु मत्स्यादिविश्वरूपान्तानि द्वादशरूपाणि क्रमात् दिशि रूपद्वयं कोणे एकैकमिति पूर्वोक्तप्रकारेण यजेत् ।।

षष्ठावरणमाह— **अनन्तेति ।।** मत्स्यादिभ्यो बहिः पूर्वादिदिक्षु **अनन्तब्रह्मवाय्वीशान्** शेषविरिञ्चवायुरुद्रान् पूर्वादिक्रमेण पूजयेत्। कोणेष्वाग्नेयादिषु वारुण्याद्याश्चतस्रः शेषादिपत्नीः तद्वामे यजेत्। **वीशं** गरुडं च **अग्रे** देवस्य पुरतः, वीन्द्रवामे गरुडवामभागे **सौपर्णीमपि** गरुडपत्नीमपि पूजयेत्। सप्तमावरणमाह— **इन्द्रादीनीति ।।**

> कोणेषु वीन्द्रवामे च सौपर्णी पूजयेदपि ।
> इन्द्रादीन् शेषविध्यन्तान्तान् सभार्यान् सपरिग्रहान् ।।

षष्ठावरणाद्बहिः इन्द्रादिशेषविध्यन्तान् इन्द्रमारभ्य चतुर्मुखान्तान् दश लोकपालान् पूर्वादिदिक्षु इन्द्रमिन्द्रदिशि अग्निदिश्यग्निमित्येवं प्रकारेण तस्यां तस्यां दिशि तं तं यजेदित्यर्थः। ऊर्ध्वदिशि चतुर्मुखं अधोदिशि शेषं। उक्तं च योगदीपिकायाम्— 'अध ऊर्ध्वमहिर्विधिः' इति। यद्वेन्द्रेशानयोर्मध्ये चतुर्मुखं वरुणनिऋत्योर्मध्ये शेषं। उक्तं च विष्णुरीर्थीये-

अनन्तं वरुणस्यापि निऋतेर्मध्यतो यजेत्।
देवेन्द्रेशानयोर्मध्ये ब्रह्माणं च प्रपूजयेत्।
सर्वानभिमुखान् विष्णोः कृताञ्जलिपुटान्यजेत्॥ इति।

तद्बहिर्दशदिक्ष्वर्च्याः 'इन्द्राग्नीयमनैऋतीवरुणावायुसोमेशाः।
अनन्तब्रह्मनामकाः ताराद्याः स्वयमुद्देश्या मन्त्रास्तांस्तानुदीरयेत्।
सुरतेजः प्रेतरजोजलप्राणपदानि च॥

नक्षत्रविद्यानागाख्यालोकेत्येकैकमेव तु।
उक्त्वाऽधिपतिमुद्देश्यं तथोक्त्वा विष्णुपार्षदम्।
नमोन्ता इति तन्मन्त्राः ताराद्याः ॐकारपूर्वकाः।

स्वयमिन्द्रादिशब्दाः उद्देश्याः चतुर्थ्यन्ता सुरादिशब्दानन्तरम् उद्देश्यं चतुर्थ्यन्तम् अधिपतिपदमुक्त्वा तान्मन्त्रानुदीरयेत्। तन्मन्त्राः लोकपालमन्त्राः नमोन्ताः नमश्शब्दान्ता इति योगदीपिकाद्युक्तप्रकारेण तत्तन्मन्त्रैः 'ॐ इन्द्राय सुराधिपतये विष्णुपार्षदाय सभार्याय पीतवर्णाय वज्रहस्ताय सवाहनाय नमः' 'ॐ अग्नेये तेजोधिपतये विष्णुपार्षदाय सभार्याय रक्तवर्णाय शक्तिहस्ताय सवाहनाय नमः' इत्यादिभिर्लोकपालान्यजेदिति ज्ञेयम्। यमः कृष्णो दण्डहस्तः, निरऋतिः धूम्रवर्णः खडगहस्तः, वरुणः शुभ्रः पाशहस्तः, वायुः धूम्रः अङ्कुशहस्तः, सोमः शुक्लवर्णो गदाधरः, ईशानः स्वच्छः शूलकरः, अनन्तो गौरः चक्रकरः, विधाता रक्तः पद्मकर इति ज्ञेयं।

ऐरावतस्तथा मेषो महिषः प्रेतसंज्ञकः।
मकरोऽथ मृगः पश्चात् तुरगो वृषभस्तथा।

कूर्मो हंसः क्रमादेषां वाहनानि विदुर्बुधाः ।। इति ।

एवमावरणदेवानावाह्य विष्णोरभिमुखतस्थितानेतान् अर्घ्यादिभिः पूजयेत् । तदुक्तम्-

अर्घ्यं पाद्यं त्वाचमनं साचामं मधुपर्ककम् ।
स्नपनं वसनं चैव गन्धपुष्पं विभूषणम् ।।

दशैतानुपचारांस्तु सर्वेभ्यश्च पथग्वदेत् ।
लक्ष्म्याद्यावरणस्तेभ्यः नमोन्तैः स्वस्वनामकैः ।।

आसनादि तु पीठस्य देवानां विष्णुना सह ।
धूपदीपादिकं सर्वं सर्वेभ्यो विष्णुना सह ।। इति ।। ६५ ।।

धूपदीपनैवेद्यसमर्पणं, अनुयागप्रकारकथनम्

**तं.सा. धूपदीपौ ततो दत्त्वा नैवेद्यं मूलमन्त्रतः ।**
**अनेन क्रमयोगेन जुहुयात् संस्कृतेऽनले ।। ६६ ।।**

**त.क.–** आवरणदेवतापूजां सङ्क्षेपेनोक्त्वा प्रस्तुतभगवत्पूजायामवशिष्टमुपचारत्रयमाह– **धूपदीपाविति ।। ततः** आवरणपूजान्तरं धूपदीपौ दत्त्वा नैवेद्यं दद्यादिति शेषः। नैवेद्यमानं तत्र नियमविशेषाश्च गृहदेवालयपूजाभेदमश्रित्याग्रे स्पष्टयिष्यन्ते ।

नैवेद्यसमकाले त्वनुयागो विधीयते ।

इत्यनुयागस्याऽवश्यकतोक्तेस्तत्प्रकारं सङ्गृह्णाति— **अनेनेति ।।** तस्यायमर्थः – प्रमाणान्तरप्रमितोऽत्रैवोक्तो वक्ष्यमाणश्च प्रक्रियाविशेषः इदंशब्देन परामृश्यते । तथा च द्वितीये वक्ष्यति– 'कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम्' (तं.सा.२-१५) इत्यादि।

तथा पञ्चरात्रेऽप्यायतनपरिमाणाद्युक्तम्—

तन्मध्ये कल्पयेत् कुण्डमाहुत्यनुगुणं शुभम् ।
वृत्तं वा चतुरस्रं वा मेखलात्रयसंयुतम् ।।

योनिं सन्मृत्स्नया ब्रह्मन् मानं कुण्डस्य कथ्यते ।
अयुताहुतिपर्यन्ते होमे हस्तप्रमाणकम् ।।

द्विहस्तं नियुते कुण्डं त्रिहस्तं प्रयुते तथा ।
शङ्कुहोमे चतुर्हस्तं महाशङ्कौ चतुष्करम् ।।

वृन्दाहुतौ सप्तहस्तं महावृन्देऽष्टहस्तकम् ।
अर्बुदे नवहस्तं स्यान्न्यर्बुदे दशहस्तकम् ।।

एकादशकरं खर्वे परार्धे द्वादशायुतम् ।
त्रयोदशकारं मध्ये अन्तके तु चतुर्दश ।।

पद्मे कराः पञ्चदश महापद्मे तु षोडश ।
समुद्रे विंशतिकरमोघे द्वाविंशतिः स्मृतम् ।।

इतोऽधिकाहुतिविधौ चतुर्विंशतिहस्तकम् ।
लक्षस्य नियुतं संज्ञा कोटिः प्रयुतमुच्यते ।।

समिद्भिर्याज्ञिकैर्बीजैर्घृतैर्दिव्यैस्तथा दलैः ।
सुमनोभिः समिद्धेऽग्नौ जुहुयादग्निमारभेत् ।।

आरणं, मणिजं लोहं कुण्डमध्ये परिष्कृते ।
योगासनं चाग्निमध्ये कल्पयित्वा हरिं पुनः ।।

आवाहयेत्तत्र देवं होमान्तं तस्य सन्निधिम् ।
प्रार्थयीत समाराध्य होमं कुर्याद्दिने दिने ।। इत्यादि ।

तथा चायुतहोमपर्यन्तं एकहस्तमात्रपरिमाणम् । ततो नियुतहोमपर्यन्तं द्विहस्तादिचतुर्विंशतिहस्तप्रमाणं कुण्डमानमित्युक्तेरिहाष्टोत्तरशतसङ्ख्याहोमस्य वक्ष्यमाणत्वात् अयुताहुतेरधस्तात् हस्तमात्रपरिमाणत्वोक्तेरिहापि हस्तमात्रं कुण्डं कृत्वा तत्र वक्ष्यमाणन्यायेन कुण्डे श्रियं ध्यात्वा विष्णुवीर्यजातमरण्याद्युद्भवं वह्निं प्रणावमन्त्रेण निक्षिप्य जातकर्मादिषोडशक्रियाश्च कृत्वा व्याहृतिभिर्हुत्वा ततो

गरुडादियोगपीठान्तपीठदेवतास्तत्तन्मन्त्रैर्हुत्वा लक्ष्मीधरादिशेषविध्यन्तान् अवरदेवांश्च तत्तन्मन्त्रैर्जुहुयात् । ततोऽनेन क्रमयोगेन जातकर्मादिसंस्कारविशेष-विशिष्टेऽनले मूलमन्त्रेणाष्टोत्तरशतं जुहुयादिति ।। ६६ ।।

**अ.सं.–** आवरणपूजानन्तरकृत्यमाह– **धूपेति ।। ततः** आवरणदेवतापूजानन्तरं धूपदीपौ दत्वा **मूलमन्त्रेण** नारायणाष्टाक्षरमन्त्रेण नैवेद्यं प्रोक्ष्य तत्स्पृष्ट्वा मूलमन्त्रं जप्त्वा मूलेन सकृत्पुष्पेणाराध्य नैवेद्यं समर्पयेदित्यर्थः । तदुक्तम्–

'प्रोक्ष्य तीर्थेन मूलतः......' ।

मूलमन्त्रं हविःस्पृष्ट्वा जपेदष्टाक्षरम्...।

(योगदीपिका ३.३९) मित्यादिना ।

अत्र **'मूलमन्त्रतः'** इति मन्त्रकथनमनुक्तमन्त्रे मूलमन्त्रो ज्ञेय इति ज्ञापनार्थम् । तदुक्तम् योगदीपिकायाम्–

विशेषमन्त्रानादेशे मूलमन्त्रः प्रशस्यते । (२.८१)

ॐ नमोनारायणायेति मूलमन्त्र उदाहृतः ।। इति ।।

सानुयागा तद्रहिता द्विविधाऽर्चा प्रकार्तिता ।

तत्राद्याऽत्यन्तफलदा द्वितीया सफला मता ।।

इति नारदीये सानुयागपूजायाः महाफलहेतुत्वोक्तेः । पूजाङ्गमनुयागहोममाह– **अनेनेति ।। अनेन क्रमयोगेन** पूर्वोक्तपीठपूजादिक्रमलक्षणोपायेन संस्कृतेऽग्नौ जुहुयादित्यर्थः ।

अयं भावः । देवस्य आग्नेयकोणे कुण्डे वा स्थण्डिले वा अग्निं प्रतिष्ठाप्य व्याहृतिभिरग्नेर्गर्भाधानादिषोडशसंस्कारान् कृत्वा अग्नौ पीठपूजां विधाय परशुराममावाह्य अर्घ्यादिपुष्पान्तैरुपचारैः पूजयित्वा आवरणपूजां च कृत्वा देवेन सह धूपदीपौ दत्वा नैवेद्यं समर्प्य 'यथाशक्तिजपं कृत्वा नित्यहोमं समाचरेत्' इत्युक्तेः यथाशक्तिमूलमन्त्रं जपित्वा नैवेद्युसमर्पणात्पूर्वं होमार्थं पृथक् कृत्वा नैवेद्येन सह स्थापितेन आज्यादिना हविषा जुहुयादिति । तच्चोक्तं विष्णुतीर्थीये–

अथाग्नौ जुहुयाद्विद्वान् वायव्येनाग्निकोणके ।
उपलिप्य शुचौ देशे कुण्डे वा स्थण्डिलेऽपि वा ।।

संस्कृत्य विधिवद्भूमौ समादध्याद्धुताशनम् । (३.१११)
गर्भाधानादि संस्कारानग्नेः कुर्यात्पृथक् पृथक् ।।
व्याहृतीभिस्तथाज्येन कुर्यात्पूर्णाहुतीः सुधीः (३.११३)।। इति।।६६ ।।

**गु.दी–** आवरणपूजानन्तरं कृत्यमाह— **धूपेति ।। ततः** आवरणदेवतानां पुष्पान्तपूजानन्तरं 'नैवेद्यं मूलमन्त्रतः' (तं.सा.१-६६) इति वचनमनुक्तमन्त्रे मूलमन्त्रो ज्ञेय इत्येतदर्थम्। नारायणाष्टाक्षस्य मूलमन्त्र इति सञ्ज्ञा। **नैवेद्यं मूलमन्त्रतः** मूलमन्त्रेण नैवेद्यं प्रोक्ष्य तत् स्पृष्ट्वा मूलं जप्त्वा नैवेद्यं समर्पयेत्। तदुक्तं विष्णुतीर्थीये—

.................प्रोक्ष्य तीर्थेन मूलतः ।
मूलमन्त्राद्धविः स्पृष्ट्वा जपेदष्टोत्तरं शतम् ।। इति (यो.दी. ३-३९)।

अथ नैवेद्यनिवेदनसमये होमार्थमभिलषितमन्नमाज्यं वा पृथक्कृत्य नैवेद्येन सह स्थापयेदिति द्रष्टव्यम् । तदुक्तं योगदीपिकायाम्—

विभजेत् संस्कृते पात्रे होमार्थं सविभागतः । (यो.दी.३-३७) इति ।

अथ पूजाङ्गमनुयागमाह— **अनेनेति ।। अनेन क्रमयोगेन** पीठपूजादिक्रम-लक्षणोपायेन **संस्कृतेऽनले** अग्नौ जुहुयात्। पीठदेवानामावरणदेवानां चात्र जुहुयादित्युक्त्वा होमे सङ्ख्यानुक्तेरेकैकस्य देवस्यैकैका आहुतिरित्येकसङ्ख्या ग्राह्या। तदुक्तं सारसङ्ग्रहे—

पीठावरणदेवानामेकैकामाहुतिं यजेत् । इति ।

यथा सिद्धस्य हविषोऽग्नये स्वाहेत्यत्रैकैवाहुतिस्तथेहापि ।

अयं भावः। अग्निं प्रतिष्ठाप्य, षोडशक्रियाः कृत्वा, पीठपूजां कृत्वा, तत्र परशुराममावाह्य, पाद्यादिकं दत्वा, स्नापयित्वा, वाससी दत्वा, गन्धपुष्पादिभिः पूजयित्वा, आवरणपूजां कृत्वा, धूपदीपौ दत्वा, आज्येन द्रव्येण जुहुयादिति ।।६६।।

**मङ्गाली–** आवरणपूजानन्तरकृत्यमाह- **धूपेति** ।। ततः आवरणपूजानन्तरं धूपदीपौ दत्वा **मूलमन्त्रतः** नारायणाष्टाक्षरमन्त्रेण नैवेद्यं प्रोक्ष्य तत्स्पृष्ट्वा मूलमन्त्रं जप्त्वा मूलेन सकृत् पुष्पेणाराध्य नैवेद्यं समर्पयेदित्यर्थः । तदुक्तं विष्णुतीर्थीये—

प्रोक्ष्य तीर्थेन मूलतः मूलमन्त्रं हविः स्पृष्ट्वा जपेदष्टाक्षरं' इत्यादिना ।

सानुयागा तद्रहिता द्विविधाऽर्चा प्रकीर्तिता ।
तत्राद्याऽत्यन्तफलदा द्वितीया सफला मता ।।

इति नारदीये सानुयागपूजायाः माहाफलहेतुत्वोक्तेः पूजाङ्गमनुयागहोममाह- **अनेनेति ।। अनेन क्रमयोगेन** पूर्वोक्तपीठपूजादिक्रमलक्षणेनोपायेन संस्कृतेग्नौ जुहुयादित्यर्थः ।

अयं भावः । देवस्याग्नेयकोणे कुण्डे वा स्थण्डिले वाऽग्निं प्रतिष्ठाप्य व्याहृतिभिरग्नेर्गर्भाधानादि षोडशसंस्कारान् कृत्वा अग्नौ पीठपूजां विधाय परशुराममावाह्याघ्र्यादिपुष्पान्तैरुपचारैः पूजयित्वा आवरणपूजां च कृत्वा देवेन सह धूपदीपौ दत्वा नैवेद्यं समर्प्य यथाशक्ति मूलमन्त्रजपं कृत्वा नैवेद्यसमर्पणात्पूर्वं होमार्थं पृथक्कृत्य नैवेद्येन सह स्थापितेनाज्यादिना हविषा जुहुयादिति । तदुक्तं विष्णुतीर्थीये—

अथाग्नौ जुहुयाद्विद्वान्वायव्येऽग्निकोणके ।
उपलिप्तशुचौ देशे कुण्डे वा स्थंडिलेऽपि वा ।।

संस्कृत्य विधिवद्भूमौ समादध्याद्धुताशनम् । (यो.दी.३-१११)
गर्भादानादि संस्कारान् कुर्यादग्नेः पृथक् पृथक् ।
व्याहृतीभिस्तथाऽज्येन कुर्यात्पूर्णाहुतिं सुधीः ।। इति । (यो.दी.३-१११)

तथा पूजयित्वा हरिं वह्नौ इध्माधानाज्यभागकान् हुत्वा प्रधानहवने चरुर्लोकाग्निनाकृतः । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेदिति ।। ६६ ।।

अङ्गकलापसहितहोमसंख्यानिरूपणम् अनुयागप्रकारनिरूपणं च

**तं.सा.** **पुष्पाञ्जलिश्च होमश्च मूलेनाष्टोत्तरं शतम् ।**
**सकृत्सकृत्पुष्पमन्यैर्होमस्तस्य चतुर्गुणः ।। ६७ ।।**

**त.क.–** कार्यान्तरमाह– **पुष्पाञ्जलिश्चेति ।।** न केवलमुक्तरीत्या होम एव कर्तव्यः, किन्तु पुष्पाञ्जलिश्च होमश्च कर्तव्य इत्यर्थः। यदुक्तं पूर्वं पीठावरणदेवताहोमः कर्तव्य इति तत्राहुतिसङ्ख्याविचिकित्सायामाह— **सकृदिति ।।** द्विर्वचनं वीप्सार्थे। **सकृत्** सकृदेव तत्तद्देवताभ्योऽन्यैर्मन्त्रैः पुष्पं दद्यात् । होमस्तु तस्य चतुर्गुणः कर्तव्यः। एकैकदेवतायै चतुर्वारं होम इत्यर्थः। ननु मूलमन्त्रेणाष्टोत्तरशतं होम इत्युक्तम्। मूलमन्त्रव्यतिरिक्तप्रणवादिभिर्होमे का आहुतिसङ्ख्येति विचिकित्सायां चोच्यते— **अन्यैरिति ।।** मूलमन्त्रव्यतिरिक्तैः प्रणवादिभिरित्यर्थः। अनेन, उद्धृतानामष्टमहामन्त्राणामुद्धरिष्यमाणानां वराहादि-विष्णुमन्त्राणां लक्ष्म्याद्यन्यमन्त्राणां च न केवले जपे, विष्णुपूजायामावरणपूजायां च विनियोगः किन्तु होमेऽपि विनियोग इति सूचितम्। तेन 'विनियोगं च दिग्बन्धं' इत्यादिवचनादावश्यवक्तव्यविनियोगानुक्तिरिति निरस्तम् । अत्र—

उपविश्याऽत्मनः पार्श्वे दक्षिणे पुष्पभाजनम् ।
अन्यानि होमद्रव्याणि वामपार्श्वे तु निक्षिपेत् ।।

आज्यपात्रचरुस्थाली प्रोक्षणी समिधः कुशान् ।
प्रणीतांस्तण्डुलांस्तोयं परिधीं स्रुक्स्रुवं तथा ।।

दर्वीमग्नेर्वितरणं व्यजनानि च मेक्षणम् ।
शुष्कं च काष्ठं घण्टां च गन्धद्रव्यं च साक्षतम् ।।

द्वन्द्वानि च प्रयोज्यानि क्वचित् सव्येन सम्भवे ।
कुण्डमध्ये ततस्तिस्रो रेखाः प्रागायताः पृथक् ।।

तथोदगायतास्तिस्रो लिखित्वा मूलविद्यया ।
दर्भस्तम्भद्वयेनाद्भिरभ्युक्ष्यादाय पावकम् ।।

मथितं लौकिकं यद्वा निधाय च विहृत्य च ।
अद्भिः परिसमूह्याग्निं परिस्तीर्य त्रिभिस्त्रिभिः ।।

प्रागग्रैरुदगग्रैर्वा दर्भैः पञ्चभिरेव वा ।
तत्रापि मध्येऽपां पूर्णां प्रणीतामक्षतार्चिताम् ।।

निधाय दर्भयुग्मेन कूर्चं प्रादेशसम्मितम् ।
निर्मायाच्छादनं तस्य त्रिभिर्दर्भैः पवित्रितैः ।।

कूर्चेन तेन प्रोक्षण्यां प्रणीताजलमावपेत् ।
प्रोक्षणीमात्मनश्चाग्रे सकूर्चां न्यस्य मन्त्रवित् ।।

अङ्गुष्ठानामिकाभ्यां तु कूर्चे तत्करयोर्द्वयोः ।
पुनराघारमुत्पूर्य प्रोक्षयेत्तेन वारिणा ।।

स्पृशेच्च तानि द्रव्याणि नानादेशं यथायथम् ।
चरुं चाज्येन संसिच्य पार्श्वे तमन्वरोपयेत् ।।

केवलान्नं तथा मौद्गं पायसान्नं गुडोदनम् ।
चतुर्विधश्चरुर्ज्ञेयः पाकश्चुल्यामपीष्यते ।।

यादृङ् निवेद्यते बिम्बे होतव्यश्चापि तादृशः ।
एकतोऽग्रान् समित्पञ्चदश तान् मुष्टिमुद्रया ।।

आदद्यादाज्यपात्रं च कुशकूर्चेन वेष्टितम् ।
वामे करे निधायार्धं आधाराहुतिमाचरेत् ।।

प्राजापत्यं तथा चैन्द्रीमाज्यभागं तथा चरेत् ।
आग्नेयं दक्षिणे भागे सौम्यं भागं तथोत्तरे ।।

मध्ये व्याहृतिभिर्हुत्वा स्मरेदग्निमनन्तरम् ।
द्विशीर्षकं सप्तहस्तं त्रिपादं सप्तजिह्वकम् ।।

वरदं शक्तिपाणिं च बिभ्राणां सुक्स्रुवं तथा ।
अभीतिदं चर्मधरं वामे चान्यधरं करे ।।

परिषिञ्चेज्जलेनाग्निं तन्मध्ये योगपीठिकाम् ।
कल्पयित्वा च तन्मन्त्रैर्जुहुयात् सर्पिषा सकृत् ।।

अत्रावतार्य हृदयाच्चिद्रूपं परमेश्वरम् ।
संकलीकृत्य मन्त्रस्य न्यासं कुर्याद्यथाविधि ।।

अर्घ्यं पूर्वं निवेद्यान्तं सर्पिषा जुहुयात्सकृत् ।
जपार्थं च सकृन्मन्त्रैर्जुहुयात्सर्पिषा ततः ।।

समिद्भिर्वा दलैः पुष्पैर्बीजैर्वाऽप्यथवा फलैः ।
परिवारार्थमप्येवं सर्पिषा जुहुयात्सकृत् ।।

आराधनं हरेरेतत् सप्तर्चिषि चतुर्मुख ।
आज्यावसिक्तं च चरूं प्रचरे क्रोडमुद्रया ।।

नृसूक्तेन च होतव्यं मूलमन्त्रेण सर्पिषा ।
स्रुवेन जुहुयादाज्यं हस्तेन समिधः पुनः ।।

चरूं पलाशपत्रेण यद्वा हस्तादिना भवेत् ।
पूर्णाहुत्यवसानेषु ध्यात्वा ज्वलनमर्चयेत् ।।

इत्यादिना अनुयागप्रकारः पञ्चरात्रे प्रपञ्चितो वेदितव्यः ।। ६७ ।।

**अ.सं.–** होमः कति ? संख्याकः मन्त्रश्च कः ? किमङ्गं तस्येत्यत आह– **पुष्पाञ्जलिश्चेति** ।। मूलमन्त्रेण अष्टोत्तरशतं पुष्पाञ्जलिश्च होमश्च कार्यः। **अन्यैः** पीठदेवतामन्त्रैरावरणदेवतामन्त्रैश्च **सकृत्सकृत्** एकैकवारं पुष्पाञ्जलिः। **तस्य** पुष्पाञ्जलेः सकाशात् चतुर्गुणहोम इत्यर्थः। सङ्ग्रहे पक्षान्तरमुक्तम्। 'पीठावरणदेवानामेकैकामहतिं यजेत्' इति। इदं त्ववश्यं कार्यमित्येतदभिप्रायकम्। अत्र पूर्वं पीठदेवतामन्त्रैरनन्तरं मूलमन्त्रेण पश्चादावरणदेवतामन्त्रैर्होमादिः कार्य इति क्रमः। उक्तं च योगदीपिकायाम्–

हुत्वा व्याहृतिभिः पीठदेवेभ्योऽप्यथ मूलतः ।
उक्तावरणदेवेभ्योऽप्यथ सम्यक् स्मरन् हरिम् । इति ।। (३.४८)

व्याहृतिभिर्गर्भाधानादिषोडशसंस्कारानुद्दिश्य हुत्वेत्यर्थः। गर्भाधानादिषोडश-संस्कारांश्च 'कुर्यात् क्रियाः षोडश च'(तं.सा.८-२०) इत्यत्र वक्ष्यामः। अथवाऽन्यैः प्रणवादिमहामन्त्रैर्वाराहादिमन्त्रैश्च। अथवाऽन्यैरित्यस्य अस्य गोरन्योऽन्वेष्टव्य इतिवत् मूलमन्त्रसदृशैः प्रणवादिसप्तमन्त्रैरेवेत्यर्थः ॥ ६७ ॥

**गु.दी.–** होमः कतिसङ्ख्याकः? मन्त्रश्च कः? किमङ्गं तस्येत्यत आह– **पुष्पाञ्जलिश्चेति ॥** चावन्योन्यसमुच्चये। अष्टोत्तरशतं पुष्पाञ्जलिः होमश्च कार्य इति शेषः। अनेन पुरतः पुष्पाञ्जलिरनन्तरं होम इति सूचयति। **अन्यैः** नारायणाष्टाक्षरमन्त्रादन्यैः प्रणवादिसप्तमन्त्रैर्वाराहादिभिश्चेत्यर्थः। सकृत्पुष्पं चतुर्वारं होमः। 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः' इतिवत् मूलमन्त्रसदृशानामेवान्य-पदेनोपस्थितिः ॥

ततश्चायमनुयागविधिः। विधिना विहिते आग्नेयादिदिक्स्थे कुण्डे गोमयाद्यैरलङ्कृते स्थण्डिले वा 'चतुष्कपर्दा युवतिः' इत्यैतरेयभाष्ये भाषितलक्ष्मीमन्त्रेण श्रियमावाह्य ज्वलितमग्निं प्रणवेन प्रतिष्ठाप्य—

'एह्यग्न इह होता निषीदादब्ध सुपुर एता भवा नः।
अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ॥
(ऋ.सं.१.७६.२)

इति 'चत्वारि शृङ्गा' इति (ऋ.सं.४-५८-३) च ऋचाऽग्निमावाह्य स्वशाखोक्त-विधिनाऽग्निं संस्कृत्यान्वाधानं कृत्वा विष्णोरुत्पन्नस्य विष्णुवीर्यात्मकस्य नारायणादिसमस्तदेवानां हविःप्रापणसमर्थस्य यज्ञपुरुषस्य वैष्णवत्वसिद्ध्यर्थं

गर्भाधानं पुंसवनं सीमन्तो वैष्णवो बलिः।
जातकं नाम निष्क्रान्तिरन्नप्राशनचौलकम् ॥

उपनीतिर्महानाम्नी महाव्रतमतः परम्।
उपनिषच्च गोदानं समावर्तविवाहकम् ॥

इति प्रमाणोक्तान् गर्भाधानादिषोडशसंस्कारान् पृथग्व्याहृतिभिः करिष्ये। अग्निं

परिषिश्चेज्जलेनाग्निं तन्मध्ये योगपीठिकाम् ।
कल्पयित्वा च तन्मन्त्रैर्जुहुयात् सर्पिषा सकृत् ।।

अत्रावतार्य हृदयाच्चिद्रूपं परमेश्वरम् ।
संकलीकृत्य मन्त्रस्य न्यासं कुर्याद्यथाविधि ।।

अर्घ्यं पूर्वं निवेद्यान्तं सर्पिषा जुहुयात्सकृत् ।
जपार्थं च सकृन्मन्त्रैर्जुहुयात्सर्पिषा ततः ।।

समिद्भिर्वा दलैः पुष्पैर्बीजैर्वाऽप्यथवा फलैः ।
परिवारार्थमप्येवं सर्पिषा जुहुयात्सकृत् ।।

आराधनं हरेरेतत् सप्तर्चिषि चतुर्मुख ।
आज्यावसिक्तं च चरूं प्रचरे क्रोडमुद्रया ।।

नृसूक्तेन च होतव्यं मूलमन्त्रेण सर्पिषा ।
स्रुवेन जुहुयादाज्यं हस्तेन समिधः पुनः ।।

चरूं पलाशपत्रेण यद्वा हस्तादिना भवेत् ।
पूर्णाहुत्यवसानेषु ध्यात्वा ज्वलनमर्चयेत् ।।

इत्यादिना अनुयागप्रकारः पश्चरात्रे प्रपश्चितो वेदितव्यः ।। ६७ ।।

**अ.सं.–** होमः कति ? संख्याकः मन्त्रश्च कः ? किमङ्गं तस्येत्यत आह– **पुष्पाञ्जलिश्चेति ।।** मूलमन्त्रेण अष्टोत्तरशतं पुष्पाञ्जलिश्च होमश्च कार्यः । **अन्यैः** पीठदेवतामन्त्रैरावरणदेवतामन्त्रैश्च **सकृत्सकृत्** एकैकवारं पुष्पाञ्जलिः । **तस्य** पुष्पाञ्जलेः सकाशात् चतुर्गुणहोम इत्यर्थः । सङ्ग्रहे पक्षान्तरमुक्तम् । 'पीठावरणदेवानामेकैकामहतिं यजेत्' इति । इदं त्ववश्यं कार्यमित्येतदभिप्रायकम् । अत्र पूर्वं पीठदेवतामन्त्रैरनन्तरं मूलमन्त्रेण पश्चादावरणदेवतामन्त्रैर्होमादिः कार्य इति क्रमः । उक्तं च योगदीपिकायाम्–

हुत्वा व्याहृतिभिः पीठदेवेभ्योऽप्यथ मूलतः ।
उक्तावरणदेवेभ्योऽप्यथ सम्यक् स्मरन् हरिम् । इति ।। (३.४८)

व्याहृतिभिर्गर्भाधानादिषोडशसंस्कारानुद्दिश्य हुत्वेत्यर्थः। गर्भाधानादिषोडशसंस्कारांश्च 'कुर्यात् क्रियाः षोडश च'(तं.सा.२-२०) इत्यत्र वक्ष्यामः। अथवाऽन्यैः प्रणवादिमहामन्त्रैर्वाराहादिमन्त्रैश्च। अथवाऽन्यैरित्यस्य अस्य गोरन्योऽन्वेष्टव्य इतिवत् मूलमन्त्रसदृशैः प्रणवादिसप्तमन्त्रैरेवेत्यर्थः ।। ६७ ।।

**गु.दी.**– होमः कतिसङ्ख्याकः? मन्त्रश्च कः? किमङ्गं तस्येत्यत आह– **पुष्पाञ्जलिश्चेति ।।** चावन्योन्यसमुच्चये। अष्टोत्तरशतं पुष्पाञ्जलिः होमश्च कार्य इति शेषः। अनेन पुरतः पुष्पाञ्जलिरनन्तरं होम इति सूचयति। **अन्यैः** नारायणाष्टाक्षरमन्त्रादन्यैः प्रणवादिसप्तमन्त्रैर्वाराहादिभिश्चेत्यर्थः। सकृत्पुष्पं चतुर्वारं होमः। 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः' इतिवत् मूलमन्त्रसदृशानामेवान्यपदेनोपस्थितिः ।।

ततश्चायमनुयागविधिः। विधिना विहिते आग्नेयादिदिक्स्थे कुण्डे गोमयाद्यैरलङ्कृते स्थण्डिले वा 'चतुष्कपर्दा युवतिः' इत्यैतरेयभाष्ये भाषितलक्ष्मीमन्त्रेण श्रियमावाह्य ज्वलितमग्निं प्रणवेन प्रतिष्ठाप्य—

एह्यग्न इह होता निषीदादब्ध सुपुर एता भवा नः।
अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ।।
(ऋ.सं.१.७६.२)

इति 'चत्वारि शृङ्गा' इति (ऋ.सं.४-५८-३) च ऋचाऽग्निमावाह्य स्वशाखोक्तविधिनाऽग्निं संस्कृत्यान्वाधानं कृत्वा विष्णोरुत्पन्नस्य विष्णुवीर्यात्मकस्य नारायणादिसमस्तदेवानां हविःप्रापणसमर्थस्य यज्ञपुरुषस्य वैष्णवत्वसिद्ध्यर्थं

गर्भाधानं पुंसवनं सीमन्तो वैष्णवो बलिः।
जातकं नाम निष्क्रान्तिरन्नप्राशनचौलकम् ।।

उपनीतिर्महानाम्नी महाव्रतमतः परम्।
उपनिषच्च गोदानं समावर्तविवाहकम् ।।

इति प्रमाणोक्तान् गर्भाधानादिषोडशसंस्कारान् पृथग्व्याहृतिभिः करिष्ये। अग्निं

वायुं सूर्यं प्रजापतिं चेत्येताः प्रायश्चित्तदेवताः आज्येन, साङ्गेन कर्मणा सद्यो यक्ष्ये इति सङ्कल्प्य गर्भाधानादिकर्मणे 'भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवःसुवः स्वाहा' इत्यादिरूपेण षोडश संस्कारान् कृत्वा ततोऽग्नौ पीठपूजां विधाय अभीष्टदेवतां परशुरामं वा आवाह्य

अङ्गारवर्णमभितोऽण्डबहिः प्रभाभिर्व्याप्तं परश्वधधनुर्धरमेकवीरम् ।
ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयन्तम् ।।

(तं.सा.४-३४)

इति ध्यात्वा पीठस्थिताग्निस्थितदेवयोः समानकाले धूपदीपौ दत्वा नैवेद्यं दत्वा होमार्थमभिलषितमन्नमाज्यं वा संस्कृते पात्रे परिगृह्य होमकर्मणि मन्त्राणां स्वाहान्ततानियमात् 'परदेवतायै लक्ष्मीनारायणाय स्वाहा' इत्यादि क्रमेण स्वाहान्तैर्मन्त्रैः पीठावरणदेवताभ्यः एकैकामाहुतिं हुत्वाऽथ मूलमन्त्रेणाष्टोत्तरशतं पुष्पाञ्जलिं हरौ समर्प्याऽष्टोत्तरशतं जुहुयात् । ततः प्रणवादिसप्तमहामन्त्रै रेकैकवारं हुत्वा पुष्पाञ्जलिं समर्प्य चतुर्वारं चतुर्वारं होमं 'ओं स्वाहा' इति स्वाहान्तैर्मन्त्रैर्विष्णुगायत्र्या पूर्णाहुतिं दत्वा ततः स्विष्टकृद्धोमं समाप्याऽग्निं नत्वाऽभ्यर्च्य होमं समापयेदिति ।।

एतावत्क्रियाकरणाशक्तौ पुरुषसूक्तविधानेन वा होमः कार्य इति शैवतन्त्रे–

होमस्थानं प्रयायाच्च आसने तूपविश्य च ।
कुण्डेऽग्निकार्यं प्रवरं स्थण्डिले मध्यमं स्मृतम् ।।

आलयस्येशदिग्भागे होमस्थानमिति स्मृतम् ।
पूर्वस्यामग्निकोणे वा नान्यासु च कदाचन ।।

पुरतोऽग्निं प्रतिष्ठाप्याग्नावावाहयेत्ततः ।
सहस्रशीर्षमन्त्रेण देवबिम्बस्थितं तथा ।।

तस्मिन्नावाहयेदग्नौ दीपिते ज्वलिते स्वयम् ।
तुषाकेशास्थिविस्पृष्टो न योग्यो हविषोऽनलः ।।

जुहुयात्पुरुषसूक्तेन षोडशाज्यतिलान्नकैः ।
पुरुषसूक्तं जपेदत्र प्रार्थयेच्च मनोरथान् ।।

समाप्य होमं वह्निस्थं बिम्बे संयोज्य मन्त्रतः ।
पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि पौरुषैः ।।

भगवन् देवदेवेश सङ्गृहाण नमोऽस्तु ते ।
एतन्मन्त्रं समुच्चार्य देवहस्ते विनिक्षिपेत् ।।

स्थिरार्चने प्रतिष्ठाग्निर्दीप्ताग्निश्चरपूजने ।
एवं होमाग्निराख्यातो ज्ञात्वा होमं समाचरेत् ।। इति ।

कर्त्रादिवैगुण्येन होमाशक्तौ तूक्तमन्त्राणां होमे उक्तसङ्ख्यापेक्षया चतुर्गुणो जपः कार्य इत्यग्निपुराणे—

अग्नावावश्यकं होमं कुर्याच्छक्त्यनुसारतः ।
होमाशक्तौ तु कुर्वीत जपं तस्य चतुर्गुणम् ।।

केऽप्येवं मन्वतेऽवश्यं नैव होमं समाचरेत् ।
पुनश्चरणहोमस्याशक्तौ स विधिः स्मृतः ।। इति ।।६७।।

**मङ्गाली–** होमः कति सङ्ख्याकः ? मन्त्रश्च कः ? किमङ्गं तस्येत्यत आह- **पुष्पाञ्जलिश्चेति** ।। मूलेन मूलमन्त्रेणाष्टोत्तरशतं देवस्य पादयोः पुष्पाञ्जलिश्च होमश्च कार्यः। **अन्यैः** पीठदेवतामन्त्रैः आवरणदेवतामन्त्रैश्च **सकृत्सकृत्** एकैकवारं पुष्पाजलिः। **तस्य** पुष्पाञ्जलेः सकाशात् चतुर्गुणो होम इत्यर्थः। सङ्ग्रहे पक्षान्तरमुक्तम्। 'पीठावरणदेवानां एकैकामाहुतिं यजेत्' इति। इदन्तु अवश्यं कार्यमित्यभिप्रायेण। अत्र पूर्वं पीठदेवतामन्त्रैः अनन्तरं मूलमन्त्रेण पश्चादावरणदेवतामन्त्रैः होमादिः कार्य इति क्रमः। उक्तं च योगदीपिकायाम्-

हुत्वा व्याहृतिभिः पीठदेवेभ्योऽप्यथ मूलतः ।
उक्तावरणदेवेभ्योऽप्यथ सम्यक् स्मरन् हरिम् ।। इति । (३.४८)

व्याहृतिभिर्गर्भाधानादिषोडशसंस्कारानुद्दिश्य हुत्वेत्यर्थः। यद्वाऽन्यैः प्रणवादि-

महामन्त्रैः वाराहादिमन्त्रैश्चेत्यर्थः। अथवाऽन्यैरित्यस्य अस्य गोरन्योऽन्वेष्टव्य इतिवत् मूलमन्त्रसदृशैः प्रणवादिसप्तमन्त्रैरेवेत्यर्थः ।। ६७ ।।

नैवेद्यविसर्जन-तुलस्यादिसम्पूजन-धूपदीपदान-अष्टोत्तरजप-ध्यानादीनां अनुयगानन्तरकृत्यानां निरूपणम्

**तं.सा.** **विसर्जयित्वा नैवेद्यं मूलेन त्रिः समर्च्य(र्प्य) च ।**
**धूपदीपौ पुनर्दत्त्वा पुनर्मूलेन पूर्ववत् ।। ६८ ।।**
**अर्चयित्वा हरिं ध्यात्वा जपेदष्टोत्तरं शतम् ।**
**पुनर्ध्यायेद्धरिं सर्वदेवदेवेश्वरं प्रभुम् ।। ६९ ।।**

**तं.कं.–** अनुयागानन्तरं कर्तव्यमाह– **विसर्जयित्वेति ।।** मूलमन्त्रेण त्रिवासमुच्चरितेन नैवेद्यं समर्प्य विसर्जयित्वा च धूपदीपौ दद्यादिति योजनीयम्। 'समर्च्य च' इति पाठे नैवेद्यं विसर्जयित्वा मूलमन्त्रेण त्रिवारं पुष्पैः समर्च्य धूपदीपौ दद्यादिति योजनीयम्। अत्र दीपशब्देन पञ्चार्तिकपुष्पाञ्जलिच्छत्र-चामरादिशङ्खभ्रमणान्तमुपलक्ष्यते। धूपदीपदानानन्तरं पुनर्हृदयावासं विज्ञापयितुमर्घ्यपाद्याद्युपचारान् मूलमन्त्रेण पीठपूजादिपूर्वकं पुनः कुर्यात्। ततः अष्टोत्तरशतं हरिं ध्यात्वा मूलमन्त्रं जपेदिति योज्यम्। ततो 'याचेऽहं त्वां हृषीकेश' इत्यादिना स्वहृदये भगवन्तमावाहयेदिति शेषः।

नन्वत्र बह्व्यः इतिकर्तव्यता उक्ता जपहोमध्यानाद्याः। तत्र किमवश्य-कर्तव्यमित्यपेक्षायां ध्यानमेवेति वदन् पुनर्ध्यानं विधत्ते— **पुनर्ध्यायेदिति ।। सर्वदेवेति ।।** देवेश्वरत्वं ब्रह्मरुद्रदीनामप्यस्तीति **देवदेवेश्वरम्** इत्युक्तम्। तत्सम्भावकम्— **प्रभुमिति ।।** अनेन देवदेवैरपि न स्वात्मैक्येन ध्यातव्यः। किमु मानुषैरिति सूचयति। अनेन प्रणवादिमन्त्राणां जीवब्रह्मैक्यमर्थ इत्यापाततः सनत्कुमारसंहितादिवाक्यजनितभ्रान्त्या वदन्तो निरस्ताः। अत एव च पुनः पुनर्ध्यानविधानं नानर्थकम्। प्रकारेऽवहितैः शिष्यैर्भवितव्यमिति सूचनात् ।।६८,६९।।

**अ.सं.**– होमानन्तरकृत्यमाह– **विसर्जयित्वेति** ।। अत्र क्त्वाप्रत्ययान्तानि विधायकानीति ज्ञेयम् । ततश्च नैवेद्यं **विसर्जयित्वा** विसर्जयेदित्यर्थः । तदनन्तरकृत्यमाह– **मूलेनेति** ।। मूलेन मन्त्रेण **त्रिः**त्रिवारं पुष्पाञ्जलिभिः **समर्च्य** हरिं संपूजयेच्च । तदुक्तम् योगदीपिकायाम्– 'त्रिशः संप्रीतिपूजार्थं कुर्वीत कुसुमाञ्जलीन्' इति (३.५४) । तदनन्तरकृत्यमाह– **धूपेति** ।। पुनः धूपदीपौ दत्वा **मूलेन** मूलमन्त्रेण पूर्ववत् त्रिवारं पुष्पाञ्जलिभिः हरिं पूजयेदित्यर्थः । इदं चोक्तम्– 'धूपयेद्दीपयेत्पुष्पैस्त्रिश आराधयेत्पुनः' इति । अत्र मूलेनेत्युपलक्षणम् । अन्यैरपि वैष्णवैर्मन्त्रैरित्यपि ज्ञेयम् । उक्तं च हारीते–

सर्वैश्च वैष्णवैर्मन्त्रैः कुर्यात्पुष्पाञ्जलिं ततः ।
सूक्तैश्च विष्णुदैवत्यैर्नामभिश्शार्ङ्गिणस्तथा ।। इति ।।

मन्त्रैः पुष्पाञ्जलिप्रदानानन्तरं कृत्यमाह– **अर्चयित्वेति** ।।

नारायणं नमस्कुर्याज्जितन्तेत्यादिसंस्तवैः ।
दीर्घमञ्जलिमाबध्योपविश्याराधयेत्त्रिशः ।।
अर्घ्यं समाहितो दद्यात्कुर्याद् ब्रह्मार्पणं पुनः ।। (३.५६, ५७)

इति योगदीपिकोक्तप्रकारेण स्तोत्रपाठपूर्वकं प्रदक्षिणनमस्कारादिपूर्वकं त्रिशः पुष्पाञ्जलिभिः हरिमर्चयित्वा अर्चयेदित्यर्थः । तदनन्तरं कृत्यमाह– **ध्यात्वेति** ।। **ध्यात्वा** 'उद्यद्भास्वत्' इति ध्यात्वा (तं.सा.१.१६) **मूलमन्त्रमष्टोत्तरशतं** जपेत् । पूजासद्गुण्यार्थमिति भावः । जपानन्तरकृत्यमाह– **पुनरिति** ।। पूजायाः ब्रह्मार्पणं कृत्वा 'नाहं कर्ता हरिः कर्ता' (गीतातात्पर्ये-३.२७) इत्यादिप्रकारेण हरिस्वातन्त्र्यादिकं ध्यायेदित्यर्थः । **पुनरनन्तरं** स्वहृदि आवाहनार्थं **सर्वदेवदेवेश्वरं** प्रभुं हरिं ध्यायेत् । ध्यायेदित्युपलक्षणम् । देवस्य न्यासं कृत्वा देवं हृदि आवाहयेदित्यपि ज्ञेयम् । 'न्यासं विधाय देवेशमुद्वास्य हृदि विन्यसेत्' इत्युक्तेः । देवस्य हृदि स्थापनानन्तरं स्वस्यापि न्यासं कुर्यादिति ज्ञेयम् । 'न्यस्याङ्गानि हरेः स्वस्य न्यसेदङ्गादिकं पुनः' (३.५८) इति योगदीपिकोक्तेः ।। ६८,६९ ।।

**गु.दी**– एवं होमानन्तरकृत्यमाह— **विसर्जयित्वेति** ।। **नैवेद्यं विसर्जयित्वा** वहिर्निष्कास्य **मूलेन** मन्त्रेण **त्रिः** वारत्रयं **समर्च्य** तुलस्यादिद्रव्यैः

सम्पूज्येत्यर्थः। प्रथममेकवारं दत्तत्वात् पुनर्धूपदीपौ दत्वेत्युक्तम्। **पूर्ववदिति** ॥ मूलमन्त्रेण तुलसीपुष्पादिभिर्भगवदर्चनं त्रिवारं कार्यमित्यर्थः। अत्र मूलेनेति सर्ववैष्णवमन्त्राणां सूक्तानां चोपलक्षणम्।

सर्वैश्च वैष्णवैर्मन्त्रैः कुर्यात्पुष्पाञ्जलिं ततः।
सूक्तैश्च विष्णुदैवत्यैर्नामभिः शार्ङ्गिणस्तथा ॥ इति हारीतवचनात्।

अर्चनोत्तरभाविकार्यमाह— **अर्चयित्वेति** ॥ न्यासाङ्गं पुनर्ध्यानं कृत्वा स्वबिम्बं हरिं हृद्यावाहयेदित्याह- **पुनर्ध्यायेदिति** ॥ सर्वदेवोत्तमं प्रभुं हरिं हृदि आवाहयेदिति शेषः। यथोक्तं पुरुषविधाने—

'न्यासं विधाय देवेशमुद्वास्य हृदि विन्यसेत्' इति। अशक्तानामनुकल्प-स्तूक्तं पुराणे—

यदि विस्तरतः पूजा कर्तुं नैव हि शक्यते।
तदा सङ्क्षेपतो वापि विष्णोः पूजनमाचरेत् ॥

सङ्क्षेपतोऽपि पूजायां यद्यशक्तो भवेत्तदा।
जलं दलं तुलस्या वाऽवश्यं विष्णौ समर्पयेत्।
पश्येद्वाऽन्यकृतां पूजां सोऽपि स्यात्कृतपूजनः ॥ इति ॥६८,६९॥

**मङ्गाली**– होमानन्तरकृत्यमाह- **विसर्जयित्वेति** ॥ अत्र क्त्वाप्रत्ययान्तानि विधायकानीति ज्ञेयम्। ततश्च नैवेद्यं विसृजेदित्यर्थः। तदनन्तरकृत्यमाह- **मूलेनेति**। मूलेन मन्त्रेण **त्रिस्त्रिवारं** पुष्पाञ्जलिभिः **समर्च्य** हरिं समर्चयेच्च। तदुक्तं योगदीपिकायाम्—

त्रिशः संप्रीतिपूजार्थं कुर्वीत कुसुमाञ्जलीन्। इति। (यो.दी.३-५४)

तदनन्तरकृत्यमाह— **धूपेति**। पुनर्धूपदीपौ दत्वा **मूलेन** मूलमन्त्रेण पूर्ववत् त्रिवारं पुष्पाञ्जलिभिर्हरिं पूजयेदित्यर्थः। इदं चोक्तम्। 'धूपयेद्दीपयेत्पुष्पैस्त्रिश आराधेत्पुनः'इति। अत्र मूलेनेत्युपलक्षणं, अन्यैरपि वैष्णवैर्मन्त्रैरित्यपि ज्ञेयम्। उक्तं च हारीते।

सर्वैश्च वैष्णवैर्मन्त्रैः कुर्यात्पुष्पाञ्जलिं ततः ।
सूक्तैश्च विष्णुदैवत्यैः नामभिः शार्ङ्गिणस्तथा ।। इति ।।

पुष्पाञ्जलिप्रदानन्तरकृत्यमाह– **अर्चयित्वेति ।।**

नारायणं नमस्कुर्यात् जितन्तेत्यादिस्तवैः ।
दीर्घमञ्जलिमाबध्योपविश्याराधयेत् त्रिशः ।
अर्घ्यं समाहितोदद्यात्कुर्यात् ब्रह्मार्पणं पुनः । (यो.दी.३-५६,५७)

इति योगदीपिकोक्तप्रकारेण स्तोत्रपाठपूर्वकं प्रदक्षिणनमस्कारादिकं कृत्वा त्रिशः पुष्पाञ्जलिभिर्हरिमर्चयेदित्यर्थः। तदनन्तरकृत्यमाह– **ध्यात्वेति ।** उद्यद्भास्वदिति ध्यात्वा मूलमन्त्रमष्टोत्तरशतं जपेत् । पूजाषाड्गुण्यार्थमिति भावः । पूजानन्तरकृत्यमाह— **पुनरिति ।** पूजायाः ब्रह्मार्पणं कृत्वा 'नाहं कर्ते'त्यादि प्रकारेण हरिस्वातन्त्र्यादिकं ध्यायेदित्यर्थः । **पुनः** अनन्तरं स्वहृदि आवाहनार्थं सर्वदेवदेवेश्वरं प्रभुं हरिं ध्यायेत् । ध्यायेदित्युपलक्षणम् । न्यासं कृत्वा देवं हृदि आवाहयेदित्यपि ज्ञेयम् । 'न्यस्याङ्गानि हरेः स्वस्य न्यसेदंगादिकं पुनः' इति योगदीपिकोक्तेः (यो.दी.३-५८) ।।६८,६९।।

जपादिफलनिरूपणम्

**तं.सा. जपध्यानहुतार्चादीनेवं यः कुरुते सदा ।**
**धर्मार्थकाममोक्षाणां भाजनं स्यात् स एव हि ।। ७० ।।**

**तं.कं.–** एवं भगवत्पूजाविधानेन वर्णचक्रेभ्यो मन्त्रानुद्धृत्य गुरुः शिष्याय उपदिशेदित्युक्तं प्रमेयं फलकथनेनावधारयति— **जपध्यानेति ।। यो गुरुः** शिष्योपदेशार्थं पूर्वोक्तविधानेन जपध्यानहोमभगवत्पूजादीन् करोति स एव हि गुरुर्धर्मार्थकाममोक्षाणां **भाजनम्** आश्रयो भवति। स्वोपदिष्टशिष्यार्जितधर्मार्थादीनां भोक्ता भवति। 'शिष्यादष्टगुणं मुक्तौ गुरुराप्नोति शोभनम्' इत्याद्युक्तेः। स्वशिष्यं धर्मादिभाजनं करोतीति वा। यद्वा 'सप्तसु प्रथमा' इति सूत्रात् यं शिष्यमुद्दिश्य, तदुपदेशार्थं इति यावत्, एवं जपादीन् करोति गुरुः स एव

शिष्यो धर्मादिभाजनं स्यात् । यद्वा, सत्स्वपि बहुषु साधनेषु जपादय एव किमिति पौनःपुन्येन विधीयन्त इति शङ्कां निवारयति– **जपेति ।। स एव** उक्तसाधनसम्पन्न एव । नान्य इति योजनीयम् ।। ७० ।।

**अ.सं.–** जपादिकर्तुः फलमाह– **जपेति ।। हुतं** होमः । **अर्चा** पूजा । **आदि**पदेन तदुपयुक्तं स्नानादिकम् । **एवं** पूर्वोक्तप्रकारेण **भाजनं** पात्रं योग्य इति यावत् ।। ७० ।।

**गु.दी.–** ननु जपेदित्यादिना जपादेरनुष्ठेयत्वमभिहितम् । तदयुक्तम् । निष्फलत्वादित्यत आह— **जपेति ।।** अत्र ध्यानशब्देन जपाङ्गध्यानं होमाङ्गध्यानमर्चनाङ्गध्यानं च ग्राह्यम् । **हुतं** होमोऽनुयाग इति यावत् । **एवम्** ऋष्यादिज्ञानपूर्वकम् । **सदेति** नित्यत्वं सूचयति । मोक्षाणामित्युपलक्षणम् । प्रत्यवायतन्निमित्तदुःखाद्यनिष्टनिवृत्तेश्चेत्यपि ग्राह्यम् । **भाजनं** पात्रमाश्रय इत्यर्थः । स्यादेवेति सम्बन्धः ।

इदमुक्तं भवति । इष्टावाप्तिरनिष्टनिवृत्तिश्च खलु पुरुषार्थः । जपादिकं तावन्मोक्षसाधनमिति 'जप्येनैव तु संसिद्धेत्' (स.स्मृ.) इत्यादिवाक्यसिद्धम् । यदकरणे प्रत्यवायो ब्राह्मण्यं निमित्तमुपादाय विहितं तन्नित्यम् । यथा सन्ध्यावन्दनादि । तादृशं च जपादिकम् ।

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ।। (श्लोकवार्तिकम्)

इत्यादिवाक्यादनिष्टनिवर्तकं च । तथा हि— दुःखात्मको हि संसारः । स चाधर्मनिमित्त एव । नित्याकरणे ह्यधर्मप्रचयेन दुःखतत्साधनावाप्तिर्भवतीति तत्करणमनिष्टनिवर्तकमिति ।। ७० ।।

**मङ्गाली–** जपादिकर्तुः फलमाह— **जपेति ।। हुतं** होमः, **अर्चा** पूजा । आदिपदेन तदुपयुक्तं स्नानादिकम् । **एवं** पूर्वोक्तप्रकारेण, **भाजनं** पात्रं योग्य इति यावत् ।। ७० ।।

**तं.सा. सर्वोत्तमं हरिं ज्ञात्वा य एवं भक्तिपूर्वकम् ।**
**जपध्यानादिभिर्नित्यं पूजयेन्नास्य दुर्लभम् ॥ ७१ ॥**

**त.क.** ननु तर्हि गुरुणा शिष्योपदेशसमय एव भगवान् पूज्य इति प्राप्तम् । तथा च 'पूज्यश्च भगवान् नित्यम्'(तं.सा.१-४९) इत्युक्तविरोध इत्यतः पूर्वोक्तनित्यपूजामपि स्तौति— **सर्वोत्तममिति** ।। यद्वा, गुरूपदिष्टः शिष्यो मन्त्रप्राप्त्यैव किं कृती स्यादित्याशङ्क्य, नैवम्, किन्तु स्वगुरूर्जपध्यानहुतार्चादीन् नित्यमेव यथा करोत्येवं स्वयमपि भक्तिपूर्वकं जपध्यानादीन् कुर्यादिति विधातुं तथाकारिणं स्तौति— **सर्वोत्तममिति** ।। औदुम्बराधिकरणन्यायेनार्थवादिको विधिरुन्नेय इति भावः । नित्यपूजायां प्रकारभेदो नास्तीत्याह— **एवमिति** ।। नित्यं च पूजयेदिति योज्यम् । ननु नित्यं पूजयेदित्ययुक्तम् । वक्ष्यमाणरीत्या नैवेद्यादेर्वित्तव्ययसाध्यत्वावगमात् । तथाच वित्तहीनानां संन्यासादीनां पूजा नित्यं कथं कर्तव्या स्यादित्यत्रोक्तम्— **जपध्यानादिभिरिति** ।। इत्थम्भूतलक्षणे तृतीया । जपध्यानादिरेव पूजा । न ततोऽन्याऽऽस्तीति भावः । सर्वत्र सर्वदा हरिध्यानमावश्यकमित्युक्तं 'हरिं ध्यात्वा' इति । ध्यानं च 'देवदेवेश्वरम्' इत्युक्तप्रकारेणैव । नात्र प्रमदितव्यमिति भावेन पुनः स्मारयति— **सर्वोत्तममिति** ।। 'भक्तिर्मोक्षाय केवला' इत्युक्तेः,

परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।
सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ।
मुख्यमेवैषा नान्या स्यातसर्वं व्यर्थं तया विना ।।(तं.सा.४-१७१.१७२)

इति वक्ष्यमाणत्वाच्च भक्तिरत्यावश्यकीत्याह– **भक्तिपूर्वकमिति** ।। ७१ ।।

**अ.सं–** भक्त्या सर्वोत्तमत्वज्ञानपूर्वकमेवानुष्ठितं जपादिकं महाफलसाधनं भवतीत्याशयेन पूर्वोक्तमेवाह– **सर्वोत्तममिति** ।। **अस्य** पूजकस्य चतुर्विध-पुरुषार्थेषु मध्ये **दुर्लभं** लब्धुमशक्यं किमपि नास्ति । किन्तु सर्वं

शिष्यो धर्मादिभाजनं स्यात् । यद्वा, सत्स्वपि बहुषु साधनेषु जपादय एव किमिति पौनःपुन्येन विधीयन्त इति शङ्कां निवारयति– **जपेति ।। स एव** उक्तसाधनसम्पन्न एव । नान्य इति योजनीयम् ।। ७० ।।

**अ.सं.–** जपादिकर्तुः फलमाह– **जपेति ।। हुतं** होमः । **अर्चा** पूजा । **आदि**पदेन तदुपयुक्तं स्नानादिकम् । **एवं** पूर्वोक्तप्रकारेण **भाजनं** पात्रं योग्य इति यावत् ।। ७० ।।

**गु.दी.–** ननु जपेदित्यादिना जपादेरनुष्ठेयत्वमभिहितम् । तदयुक्तम् । निष्फलत्वादित्यत आह— **जपेति ।।** अत्र ध्यानशब्देन जपाङ्गध्यानं होमाङ्गध्यानमर्चनाङ्गध्यानं च ग्राह्यम् । **हुतं** होमोऽनुयाग इति यावत् । **एवम्** ऋष्यादिज्ञानपूर्वकम् । **सदेति** नित्यत्वं सूचयति । मोक्षाणामित्युपलक्षणम् । प्रत्यवायतन्निमित्तदुःखाद्यनिष्टनिवृत्तेश्चेत्यपि ग्राह्यम् । **भाजनं** पात्रमाश्रय इत्यर्थः । स्यादेवेति सम्बन्धः ।

इदमुक्तं भवति । इष्टावाप्तिरनिष्टनिवृत्तिश्च खलु पुरुषार्थः । जपादिकं तावन्मोक्षसाधनमिति 'जप्येनैव तु संसिद्धेत्' (स.स्मृ.) इत्यादिवाक्यसिद्धम् । यदकरणे प्रत्यवायो ब्राह्मण्यं निमित्तमुपादाय विहितं तन्नित्यम् । यथा सन्ध्यावन्दनादि । तादृशं च जपादिकम् ।

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ।। (श्लोकवार्तिकम्)

इत्यादिवाक्यादनिष्टनिवर्तकं च । तथा हि— दुःखात्मको हि संसारः । स चाधर्मनिमित्त एव । नित्याकरणे ह्यधर्मप्रचयेन दुःखतत्साधनावाप्तिर्भवतीति तत्करणमनिष्टनिवर्तकमिति ।। ७० ।।

**मञ्जाली–** जपादिकर्तुः फलमाह— **जपेति ।। हुतं** होमः, **अर्चा** पूजा । आदिपदेन तदुपयुक्तं स्नानादिकम् । **एवं** पूर्वोक्तप्रकारेण, **भाजनं** पात्रं योग्य इति यावत् ।। ७० ।।

हरिसर्वोत्तमत्वज्ञानहरिभक्त्योरावश्यकत्वसमर्थनम्

**तं.सा. सर्वोत्तमं हरिं ज्ञात्वा य एवं भक्तिपूर्वकम् ।**
**जपध्यानादिभिर्नित्यं पूजयेन्नास्य दुर्लभम् ॥ ७१ ॥**

**त.क.** ननु तर्हि गुरुणा शिष्योपदेशसमय एव भगवान् पूज्य इति प्राप्तम् । तथा च 'पूज्यश्च भगवान् नित्यम्'(तं.सा.१-४९) इत्युक्तविरोध इत्यतः पूर्वोक्तनित्यपूजामपि स्तौति— **सर्वोत्तममिति ॥** यद्वा, गुरूपदिष्टः शिष्यो मन्त्रप्राप्त्यैव किं कृती स्यादित्याशङ्क्य, नैवम्, किन्तु स्वगुरूर्जपध्यानहुतार्चादीन् नित्यमेव यथा करोत्येवं स्वयमपि भक्तिपूर्वकं जपध्यानादीन् कुर्यादिति विधातुं तथाकारिणं स्तौति— **सर्वोत्तममिति ॥** औदुम्बराधिकरणन्यायेनार्थवादिको विधिरुन्नेय इति भावः । नित्यपूजायां प्रकारभेदो नास्तीत्याह— **एवमिति ॥** नित्यं च पूजयेदिति योज्यम् । ननु नित्यं पूजयेदित्ययुक्तम् । वक्ष्यमाणरीत्या नैवेद्यादेर्वित्तव्ययसाध्यत्वावगमात् । तथाच वित्तहीनानां संन्यासादीनां पूजा नित्यं कथं कर्तव्या स्यादित्यत्रोक्तम्— **जपध्यानादिभिरिति ॥** इत्थम्भूतलक्षणे तृतीया । जपध्यानादिरेव पूजा । न ततोऽन्याऽऽस्तीति भावः । सर्वत्र सर्वदा हरिध्यानमावश्यकमित्युक्तं 'हरिं ध्यात्वा' इति । ध्यानं च 'देवदेवेश्वरम्' इत्युक्तप्रकारेणैव । नात्र प्रमदितव्यमिति भावेन पुनः स्मारयति— **सर्वोत्तममिति ॥** 'भक्तिर्मोक्षाय केवला' इत्युक्तेः,

परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।
सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ।
मुख्यमेवैषा नान्या स्यातसर्वं व्यर्थं तया विना ॥(तं.सा.४-१७१,१७२)

इति वक्ष्यमाणत्वाच्च भक्तिरत्यावश्यकीत्याह– **भक्तिपूर्वकमिति ॥** ७१ ॥

**अ.सं–** भक्त्या सर्वोत्तमत्वज्ञानपूर्वकमेवानुष्ठितं जपादिकं महाफलसाधनं भवतीत्याशयेन पूर्वोक्तमेवाह– **सर्वोत्तममिति ॥ अस्य** पूजकस्य चतुर्विध-पुरुषार्थेषु मध्ये **दुर्लभं** लब्धुमशक्यं किमपि नास्ति । किन्तु सर्वं

सुलभमेवेत्यर्थः। 'अभक्त्योदाहृतं नैव फलदातृ भविष्यति' (भा.६.२.१४) इत्यादि वचनात्। भक्तेरप्यावश्यकत्वं वक्तुं **भक्तिपूर्वकमित्युक्तम्** ।। ७१ ।।

**गु.दी.–** जपादाववश्यानुष्ठेयाङ्गद्वयकथनपूर्वकमुक्तधर्मादिरूपफलस्यातिसौलभ्यमाह— **सर्वोत्तममिति** ।। दुर्निषेधे। तथा च 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायादुक्तं धर्मादिकमिति सुलभमेवेत्यर्थः सिद्ध्यति। तत्र सर्वोत्तमत्वज्ञानरूपांशस्यात्यावश्यकत्वं सूचयितुं तदभावेऽनिष्टमाह— **सर्वेति** ।। अविज्ञाय जपाद्यनुष्ठातुरनुष्ठितं जपादिकं व्यर्थं भवतीति शेषः। उपलक्षणमेतत्। भक्तिमकृत्वा जपाद्यनुष्ठातुरनुष्ठितं जपादिकं व्यर्थमेव। 'अभक्तोदाहृतं नैव फलदातृ भविष्यति'(भाग.६-२-१४)इत्यादेरिति भक्तेरप्यावश्यकत्वं द्रष्टव्यम् ।।७१।।

**मङ्गाली–** भक्त्या सर्वोत्तमत्वज्ञानपूर्वकमेवानुष्ठितं जपादिकं महाफलसाधनं भवतीत्याशयेन पूर्वोक्तमेवाह— **सर्वोत्तममिति** ।। **अस्य** पूजकस्य चतुर्विधपुरुषार्थेषु मध्ये **दुर्लभं** लब्धुमशक्यं नास्ति किंतु सर्वं सुलभमेवेत्यर्थः ।। ७१ ।।

भगवत्सर्वोत्तमज्ञानस्यावश्यकत्वं विपरीतज्ञानपूर्वं जपाद्यनुष्ठानेऽनर्थकथम्

**तं.सा.** **भक्तिं कृत्वाऽन्यदेवेषु ब्रह्मरुद्रादिकेष्वपि ।**
**सर्वोत्कर्षमविज्ञाय विष्णोर्याति तमो ध्रुवम्** ।। ७२ ।।

**त.क.–** ननु 'सर्वदेवदेवेश्वरम्' इति पूर्वश्लोके 'सर्वोत्तमं हरिम्' इत्यत्र च सर्वोत्कृष्टत्वप्रकारकध्यानमेवावश्यकमित्ययुक्तम्। यथाकथञ्चिद् देवताध्यानस्यैवाभीष्टसाधनत्वोपपत्तेः। न च विष्णुप्रसादसिद्ध्यर्थं तदावश्यकमिति वाच्यम्। तत्तन्मन्त्रदेवताध्यानजपादिकाले तत्तद्देवतोत्कर्षज्ञानादिना प्रसन्नाभ्यस्तत्तद्देवताभ्य एव फलोपपत्तेरित्याशङ्क्य नैवं ज्ञातानां देवतानां प्रसादो भवति। प्रत्युत कोप एव। स्वस्वाम्यवमानात्। ततश्च तम एव भवति। तथा च का प्रत्याशा तत्प्रसादे? का च ततः फलप्राप्तावित्याह— **भक्तिं कृत्वेति** ।। ७२ ।।

**अ.सं.**— भगवत्सर्वोत्तमत्वज्ञानस्यावश्यकत्वं विपरीतज्ञानेन जपाद्यनुष्ठानेऽनर्थं वन्नपि समर्थयति— **भक्तिं कृत्वेति** ।। विष्णोः सर्वोत्कर्षमविज्ञाय अन्यदेवेषु ब्रह्मरुद्रादिकेषु **भक्तिं** सर्वोत्कर्षज्ञानपूर्वकं स्नेहं कृत्वा जपाद्यनुष्ठाता **ध्रुवं** निश्चयेन **तमः** अन्धंतमः **याति** प्राप्नोति । तस्माद्विष्णोरेव सर्वोत्तमत्वं ज्ञातव्यमिति भावः ।। ७२ ।।

**गु.दी.**— एवमङ्गद्वयाभावे फलाभावरूपमनिष्टमभिधाय विपरीतानुष्ठाने महानर्थमाह— **भक्तिमिति** ।। रुद्रादिसर्वोत्कृष्टत्वेन प्रमितेष्वपि ब्रह्मादिषु **भक्तिं** सर्वोत्कर्षज्ञानपूर्वकस्नेहं कृत्वा तमो याति। अज्ञानमात्रस्य तमःसाधनत्वा-योगादेवं योजितम् । एतेन

मोक्षो ज्ञानं च क्रमशो मुक्तिगो भोग एव च ।
उत्तरेषां प्रसादेन नीचानां नान्यथा भवेत् ।। (म.भा.ता.नि.१-७९)

इत्यादौ ब्रह्माद्यनुग्रहस्य मोक्षहेतुत्वाभिधानात् तदनुग्रहार्थं तेषूत्कृष्टभक्तिरावश्य-कीत्यपि प्रत्युक्तम् । अङ्गीक्रियत एव ब्रह्माद्यनुग्रहो मोक्षहेतुः । किन्तु भगवत्प्रसादसाधनतयैव । न तु परोक्तस्तदुत्कर्षः स्वतन्त्रः साधनभूत इति ।। ७२ ।।

**मङ्गाली**— भगवत्सर्वोत्तमत्वज्ञानस्यावश्यकत्वं तदभावेऽनर्थं वदन्नपि समर्थयति— **भक्तिं कृत्वेति** ।। ७२ ।।

यज्ञदानव्रतादयः अभक्तस्य पापनिवारणेऽसमर्थाः

**तं.सा.** **न यज्ञा न च तीर्थानि नोपवासव्रतनि च ।**
**दैवतानि च सर्वाणि त्रातुं तं शक्नुयुः क्वचित्** ।। ७३ ।।

**त.क.**— ननु विष्णोः सर्वोत्कर्षाविज्ञानेन ब्रह्मरूद्रादीनां कोपो भवति, ततः तमःप्राप्तिश्च भवतीत्येतत् पाक्षिकमेव। यस्मिन् पक्षे ब्रह्मरुद्रादीनां कोपो न जायते, प्रत्युत स्वोत्कर्षज्ञानेन प्रसाद एव तस्मिन् पक्षे मोक्ष एव । 'न देवतोषणं वृथा' इति न्यायात् । किं च यज्ञतीर्थस्नानोपवासव्रतानि च वेदेषु श्रेयःसाधनत-

योपदिष्टानि। तद्बलान्मोक्षो भविष्यति। किमुत्कर्षज्ञानेन ? अन्यथा वेदाप्रामाण्यापत्तिरित्यत आह— **न यज्ञा इति ।।** ब्रह्मरुद्रादिकेष्वेव भक्तिं कृत्वा तदुत्कृष्टतामेव ज्ञात्वा यो वर्तते तमेतं पापिनं यज्ञादयः क्वचिदपि त्रातुं न शक्नुयुरिति सम्बन्धः। यद्यपि चतुर्मुखव्यतिरिक्तानां रुद्रादीनां कथञ्चित् प्रसादो भवति। तथापि न ते कार्यकारिणः। अशक्तत्वात्। न हि प्रसन्न इत्येतावता स्वासाध्यं कार्यं कर्तुं शक्नोति। अन्यथा प्रसन्नोऽप्यन्धो मार्गं दर्शयेत्। एतेन वेदाप्रामाण्यं परिहृतम्। यतः सर्वेऽपि वेदा यद्ययं महापातकी तदाऽस्य यज्ञादिभिर्निःश्रेयसं भवतीत्येव प्रतिपादयन्ति न पुनर्निराबाधमिति भावः ।।७३।।

**अ.सं.–** प्रायश्चित्तेनानर्थनिवारणं भविष्यतीत्यत आह– **न यज्ञा इति ।।** सम्यगनुष्ठिता यज्ञाः, स्नानपानादिना सेवितानि **तीर्थानि** भागीरथ्यादितीर्थानि, आचरितानि **उपवासव्रतानि** उपवासाः मासोपवासादयः व्रतानि चान्द्रायणादिव्रतानि, सम्यक् पूजितानि **अन्यदेवतानि** च अन्यदेवता अपि **सर्वाणि** मिलितान्यपि तं विपरीतज्ञानिनमभक्तं **क्वचिदपि** यस्मिन् कस्मिन्नपि अनर्थविषये **त्रातुं** रक्षितुं प्राप्तव्यानर्थपरिहारं कर्तुमिति यावत्। **न शक्नुयुः** न समर्थानि । किमु प्रत्येकं न शक्तानीति वक्तव्यमिति भावः ।। ७३ ।।

**गु.दी.–** प्रायश्चित्तेन तमोरूपानर्थनिवारणं भविष्यतीत्यत आह— **न यज्ञा इति ।। तीर्थानि** तीर्थस्थानानि, दैवतानि पूजितानीति शेषः। **सर्वाणि च** मिलितान्यपि। किमु प्रत्येकम्। **त्रातुं** तमःप्राप्तेः। **क्वचित्** कदाचिदपि न शक्नुयुरित्यर्थः ।

ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः ।
तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ।।

द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम् ।
सर्वं भक्त्यर्थमुद्दिष्टं सर्वं व्यर्थं तया विना ।। (बृ.भा.अव्याकृतब्राह्मणम्)

इति बृहद्भाष्योदाहृतपद्मवचनात् ।।७२,७३।।

**मङ्गाली–** प्रायश्चित्तेनानर्थनिवारणं भविष्यतीत्यत आह- **न यज्ञा इति** ।। तं विष्णुत्कर्षाज्ञानिनम् ।। ७३ ।।

भगवतः सर्वोत्तमत्त्वकथनपुरस्सरं प्रथमाध्यायोपसंहारः

**तं.सा.** **हरिर्हि सवेदेवानां परमः पूर्णशक्तिमान् ।**
**स्वतन्त्रोऽन्ये तद्वशा हि सर्वेऽतः स जगद्गुरुः ।। ७४ ।।**

**ब्रह्मादयश्च तद्भक्त्या भागिनो भोगमोक्षयोः ।**
**तस्माज्ज्ञेयश्च पूज्यश्च वन्द्यो ध्येयः सदा हरिः ।। ७५ ।।**

## ।। इति श्रीमदानन्दतीर्थभगवत्पदाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे प्रथमोऽध्यायः ।।

**त.क.–** नन्वेवं बाधकान्तरमापतितम् । विष्णोः सर्वोत्कर्षज्ञाने देवतान्तरावमत्या तत्कोपस्यैव प्राप्तेः । न चायमकिञ्चित्करः । 'हयषीर्षो मां पथि देवहेलनात्' (भाग.६-८-१७) इत्यादौ तत्परिहारप्रर्थनाविरोधादित्यत आह— **हरिर्हीति** ।। यतो हरिरेव स्वतन्त्रस्तदन्ये तद्वशा एवातस्तेषां कोपो न जायत इति शेषः । स्वातन्त्र्यस्योपपादनं— **परमः पूर्णशक्तिमानिति** ।। कैमुतिकन्यायेनापि स्वातन्त्र्यं साधयति— **सर्वेऽत इति** ।। यतो ब्रह्मादयोऽपि भगवद्भक्त्या सर्वतो मोक्षभोगयोर्भागिनो जाताः स्वातन्त्र्योपदेशद्वाराऽतः स जगद्गुरुरेव । अतोऽस्य स्वातन्त्र्ये किं वक्तव्यमित्यर्थः । तेन विष्णूत्कर्षज्ञातरि देवानां कोपो न जायते । विष्णोः स्वतः सर्वोत्कृष्टत्वात् । न हि यथा वस्तु तथा ज्ञानिषु विवेकिनां कोप उद्भवति । कथञ्चित्तदुद्भवेऽपि सोऽयमकिञ्चित्कर एव । भगवतः पूर्णशक्तित्वादिना-ऽभीष्टदानेनास्य कृतार्थत्वात् । स्वाधमादप्यधमत्वज्ञानमेव देवहेलनमिति सूचितम् ।।

ननु तथापि 'जपध्यानादिभिर्नित्यं पूजयेत्' इत्ययुक्तम् ।

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ।। (सु.भा.३-३-४३)

इत्यादिवचनेनाज्ञानसंशयविपर्ययपरिहारानन्तरं हि ध्यानेऽधिकारः। न चायं सर्वसुसम्पाद इत्यत उक्तं विवृण्वन्नुपसंहरति— **ब्रह्मादयश्चेति ॥** अत्र चशब्दौ विकल्पार्थौ। ज्ञेयो वा पूज्यो वा वन्द्यो वा ध्येयो वा हरिरिति यस्माद्व्याख्यायते तस्मात् हरिर्ध्यानादिभिः सदा पूज्य एवेत्युक्तमित्यर्थः। न हि वयं सर्वदा सर्वैर्ध्यानाख्यपूजैव कार्येति वदामः। किन्तु यो यस्मिन् ज्ञाने वन्दने ध्याने वाऽधिकारी स तत्कुर्यादेव। भगवद्विषयकायकरणवृत्तिः सर्वदा भवेदित्यस्मदाशय इति 'जपध्यानादिभिर्नित्यं पूजयेत्' इत्येतद्विवृतं ज्ञातव्यम्। ननु—

विलेखनार्थात् कृषतेः कृष्णशब्दस्य सम्भवः।
विलेखनं च नासवे नाकृतार्थत्वमात्मनः ॥

कृष्णशब्दस्तदर्थोऽतो णश्चानन्दात्मको मतः।
सदानन्दात्मकं ब्रह्म कृष्णशब्देन शब्द्यते ॥

गावदशब्दास्तेन सम्यग्ज्ञाता एवार्थबोधकाः।
अतो गोशब्दतो ज्ञानं लाभो विन्दतिनोच्यते ॥

गवा ज्ञानात्मना स्वात्मन्युपलभ्यो भवेदतः।
गोविन्दः स्वाश्रया माया गोपीशब्देन गीयते ॥

गोपयन्ती परं तेजो गोपयन्ती जगत्त्रयम्।
महदादि पृथिव्यन्तं तस्यां यज्जनाज्जगत् ॥

सदानन्दचिदाकारः परमात्मेह वल्लभः।
स्वाहाशब्दादिसम्बन्धाच्चतुर्थी नान्यथाऽर्थतः ॥

स्वाहाशब्दो विरुद्ध्येत ह्यन्यथा सोऽहमर्थकः।
स्वशब्दादिह तन्त्रेण परो जीवश्च गृह्यते ॥

आत्मन्यस्य प्रसिद्धत्वाद्धाशब्दो गतिवाचकः।
ओहाङ् गताविति गिरो ज्ञानं च गतिरिष्यते ॥

सोऽहमस्मीत्यवस्थानमतः स्वाहागिरः पदे ।
अखण्डसच्चिदानन्दः स्वमायावैभवैर्जगत् ।।

स्वात्मन्येव सृजन् रक्षन् संहरंश्चाहमास्थितः ।
परमात्माहमस्मीति तस्मान्मन्त्रार्थसङ्ग्रहः ।।

इत्यादिना सोऽहमस्मीत्यादिज्ञानस्य 'कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति कृष्णमन्त्रार्थत्वेन सनत्कुमारसंहितायामभिधानात् तन्न्यायेन सर्वमन्त्रणामपि जीवब्रह्मैक्यमेवार्थ इति कथं 'स्वतन्त्रोऽन्ये तद्वशा हि' इत्युच्यत इति चेन्न ।

निरुक्तिमस्य मन्त्रस्य कथयामि यथातथम् ।
अपिः क्विबन्तो व्याप्त्यर्थः स्मर्यते कर्तृसाधनः ।।

ओकारे वर्णव्यत्यासात् स्यादकारस्य पद्मज ।
मकारो वर्णव्यत्यासः पकारस्याप्ययं मतः ।।

अन्तर्बहिश्च यत्सर्वं व्याप्नोतीति तदीर्यते ।
अथवा तन्तुसन्तानवृत्तेर्वेञो मनिष्यते ।।

टेश्च लोपो वकारस्य प्रसारणमतः परम् ।
पूर्वत्वं चोपसर्गेण स्यादन्तश्चाद्गुणः कृतः ।।

यस्मिन्नोतमिदं सर्वं तदेवमभिधीयते ।
अवते रक्षणार्थाद्वा मन् टिलोपश्चात्र वर्तते ।।

वकारस्योपधायाश्च द्वयोरूठागमस्ततः ।
गुणे च रूपं यत्सर्वं त्रायते तत्परं पदम् ।।

अभिधेयमिति प्रोक्ता निरूक्तिः प्रणवस्य सा ।
नम्यते देव एवैकस्तेषामेवं परायणम् ।।

नरो देवः परः श्रेष्ठः सर्गादौ पाथसामथ ।
तस्मान्नाराणि पाथांसि तान्येवायनमुच्यते ।।

देवस्य हेतोश्चामुष्मान्नारायणसमाह्वयः ।
नारा वाऽयनमावासः पुरुषस्य मधुद्विषः ।।

अण्प्रत्ययः प्रकृत्यर्थे ततो वा स समाह्वयः ।
एवं मन्त्रमिदं लब्ध्वा सम्यग्गुरुमुखात्ततः ।
गुरुशुश्रूषणपरः सर्वमन्त्राणि साधयेत् ।।

इत्यादिना पञ्चरात्रेऽष्टाक्षरमन्त्रस्य जीवब्रह्मभेदपरत्वेनैव व्याख्यातत्वात् । अत्र हि 'आप्लृ व्याप्तौ' इत्यस्मात् अन्तर्बहिश्च तत्सर्वं व्याप्नोतीत्यस्मिन्नर्थे कर्तरि क्विपि तस्य सर्वस्यापि लोपे धात्वादेराकारस्य निरुक्तत्वात् वर्णव्यत्यासेनौकारादेशे धात्वन्तस्य पकारस्य निरूक्तत्वादेव मकारदेशे 'ॐ' इति सिद्ध्यतीत्येकं व्याख्यानम् । 'तेभ्योऽपितप्तेभ्यस्त्रयो वर्णा अजायन्त । अकार उकार मकार इति । त एकाधा समभवन् तदेतत् ओम् इति' इत्यादिश्रुतिषु यद्यप्यन्यथा व्याख्यायते । तथापि तदपरित्यगेनैव व्याख्यनान्तरमिदमारभ्यत इति न दोषः । एवमग्रेऽपि ।

आङ्पूर्वात् वेञ् तन्तुसन्ताने इत्यस्मात् यस्मिन्नोतमिदं सर्वमित्यस्मिन्नर्थेऽधिकरणे मनूप्रत्यये प्रत्ययस्य टिलोपे मकारमात्रावशेषे 'नेड्वशि कृति' (पा.सू.७-२-८) इति इट्प्रतिषेधे 'आदेच उपदेशेऽशिति' (पा.सू.६-१-४५) इत्येकारस्याऽत्वे धात्वादेर्वकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' (पा.सू.६-१-१०८) इति पूर्वरूपे उपसर्गभूतस्याऽकारस्य च 'आद्गुणः' (पा.सू.७-१-८७) इति गुणे कृते 'ॐ' इति रूपं भवतीति द्वितीयव्याख्यानम् । 'अव रक्षणकान्तिगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यिव्याप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इत्यस्माद्धातोः सर्वं जगत्त्रयं रक्षतीत्यस्मिन्नर्थे रक्षणार्थात् कर्तरि मन्प्रत्यये पूर्ववदेव प्रत्ययटिलोपे 'अवम्' इति स्थिते 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा.सू.६-४-२०) ज्वर, त्वर, स्रिवि, अवि, मव इत्येतेषामङ्गानां वकारस्योपधायाश्च स्थानेऽनुनासिके परतः ऊठ् इत्ययमादेशो भवतीत्यकारणवकारयोरूठि कृते ठकारलोपे 'ऊ+म्' इति स्थिते 'सार्वधातुकार्धधातुकयोः' (पा.सू.७-३-८४) इति गुणेन ओकारादेशे 'ॐ' इति रूपं भवतीति प्रणावस्त्रेधा व्याख्यायते ।

नम्यते इति नमः इति नमःपदं च व्याख्यातम् । न रीयते न क्षीयत इति नरो विष्णुः । तस्मात् 'तस्येदम्' (पा.सू.४-३-१२०) इत्यणि कृते तत्सृष्टत्वान्नारणि जलानि । तान्येव अयनं यस्य सः 'नारायणः' इत्येकं व्याख्यानम् । नरा मनुष्याः । तेषामयनं नारायणः । ततः स्वार्थे अण्प्रत्ययः । नरायण एव नारायणः । अतः पूर्वो वाशब्दः अमुष्माद्धेतोर्वेति पूर्वेण सम्बध्यते । न हि व्याप्यव्यापकयोराधारधेययोः पाल्यपालकयोर्नमस्कार्यनमस्कर्त्रोः स्रष्टृसृज्ययोश्चाभेदो दृष्टचरः । सनत्कुमारसंहितावाक्येऽपि कृष विलेखन इत्यस्माद्धातोः 'नक्' प्रत्यये कित्त्वात् गुणाभावे णत्वे कृते कृष्णशब्दो निष्पन्नः । विलेखनं च स्वस्यासत्त्वे न सम्भवति । अत आत्मनः परमात्मनः अकृतार्थत्वमसत्त्वं न सम्भवति । णकारश्चाऽनन्दार्थको मतः । तथा च कृष्णशब्दः सदात्मकमानन्दात्मकं च ब्रह्म वक्तीत्योवोच्यते । न तु जीवब्रह्मैक्यम् । प्रत्युत विलेखनस्य विलेख्यजगत्सापेक्षत्वात् विलेख्य- जगाद्ब्रह्मणोर्भेद एवोच्यते ।

एवं गोशब्दो वेदादिशब्दपरः । विदलृ लाभे । तैः लभ्यत इति गोविन्दः । कोऽर्थः ? यतः उपक्रमोपसंहारदिना सम्यग्ज्ञाततात्पर्या एव शब्दा अर्थबोधका अतो गवा ज्ञानात्मना स्वात्मनि स्वशरीर उपलभ्यो भवति । अतः भगवान् गोविन्द इत्युच्यत इति गोविन्दशब्दोऽपि भेदपर एव व्याख्यायते । न हि कर्तृकर्म-करणानामभेदः । एवं जगत्त्रयं परं तेजश्च स्वस्य परस्य वा आच्छादयतीति गोविन्दाश्रया जीवाश्रया वा माया परं तेजो जगत्त्रयं च गोपयन्ती सती गोपीशब्देनोच्यते । गोप्या जायत इति महदादि पृथिव्यन्तं तत्त्वं 'गोपीजनम्' इत्युच्यते । गोपीजनस्य वल्लभः सदानन्दचिदाकारः परमात्मा गोपीजनवल्लभ-शब्देनोच्यत इत्येव भेदपरो व्याख्यायते ।।

ननु यया कयाचिद्विभक्त्या निर्देशसम्भवात् किं चतुर्थ्या इत्यत आह— **स्वाहाशब्देति ।।** आदिशब्देन नमःशब्दः । 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्-योगाच्च'(पा.सू.२-३-१६) इति चतुर्थीविधानादित्यर्थः । न केवलं शब्दसाधुत्वार्थमेव चतुर्थी । अर्थविशेषोऽप्यस्तीत्याह– **नान्यथेति ।।** सार्वविभक्तिकस्तसिः ।

जीवानामन्यथा स्वातन्त्र्यं नास्तीति चतुर्थ्यर्थ इत्यर्थः। अन्यो राजा इत्यादौ स्वातन्त्र्ये प्रयोगदर्शनात् चतुर्थ्याः स्वातन्त्र्याभाव एवार्थ इति कुत इत्यत आह— **स्वाहेति** ।। स्वाहाशब्दो हि सोऽहमित्यर्थकः अस्वातन्त्र्यमाह । तथा च तद्विरेध इत्यर्थः। ननु स्योदवं यदि स्वाहाष्दस्यास्वातन्त्र्यपरत्वं स्यात् । तदेव कुत इत्यतः स्वाहाशब्दं तावत् निर्वक्ति— **स्वशब्दादिति** ।। स्वशब्दो ह्यात्मवाचकः । तस्य तत्र प्रसिद्धत्वात् । तथाचेह स्वशब्देन जीवपरौ तन्त्रेण गृह्येते । ओहाङ् गताविति धातोर्भावे क्विपि निष्पन्नत्वात् 'हा' शब्दो गतिवाचकः । गतिश्च ज्ञानमेवेष्यते अतो यो जीवः सोऽहमेवं विधोऽस्मि, यः परः स एवंविध इत्यवस्थानं ज्ञानमेव स्वाहापदस्य प्रतिपाद्यम् । तदेव स्पष्टं विवृणोति— **अखण्डेति** ।। अखण्ड-सच्चिदानन्दो भगवान् स्वमायाविभवैः प्रकृतिविस्तारैः सत्त्वादिभिः स्वात्मनि जगत् सृजन् रक्षन् संहरंश्च अहमित्यहङ्कारोपलक्षितचतुर्विंशतितत्त्वात्मके जीवशरीरे स्थित इति 'सोऽहम्' इति शब्देनोच्यते । अतो जीवस्यास्वातन्त्र्यं स्फुटमेव वक्ति ।

विशिष्टमन्त्रार्थं सङ्गृह्णाति— **परमात्मेति** ।। यस्मात् तत्तज्जीवशरीरान्त-र्गताहमादितत्त्वेषु परमात्मा तिष्ठति तस्मात् परमात्मा अहमिति ज्ञानं मोक्षसाधनम् । शरीरान्तर्गताहंतत्त्वे स्थितस्य भगवतो वाचकस्याहंत्वमादिशब्दस्य प्रयोगे 'अस्मि', 'असि' इत्यादिपदप्रयोगः शब्दसाधुत्वार्थः । असनान्मनानाच्चा-स्मीति सुबन्तं वा पदम् । तथा च परमात्मा मयि स्थित्वा यथायोग्यं सृष्ट्यादिकं करोतीति निश्चयरूपं ज्ञानं स्वाहाशब्देन विवक्षितम् । तादृशशब्दप्रयोगे प्राप्तायाश्चतुर्थ्याः जीवस्वातन्त्र्याभाव एव अर्थ इति भावः । अन्यथा अखण्डसच्चिदानन्देत्यादिना, उदाहृतपञ्चरात्रवचनेन च विरोधात् । तस्माद्भेद एव सर्वमन्त्राणामर्थो न त्वभेद इति प्रत्येतव्यम् । तदेतदाह— **'सर्वोत्तमं हरिं'**, **'सर्वोत्कर्षमविज्ञाय'** **'स्वतन्त्रोऽन्ये तद्वशा हि'** इत्यादि ।।

।। इति श्रीमत्परमहंसपरिव्राजकाचार्यणां सर्वतन्त्रस्वतन्त्राणां लक्ष्मीनारायणतीर्थ पूज्यपादानां शिष्येण रघुनाथयतिना कृतायां तन्त्रसारसङ्ग्रहटीकायां तत्त्वकणिकायां प्रथमोऽध्यायः समाप्तः ।।

**अ.सं.**– ब्रह्मादिपरित्यागेन भगवानेव सर्वोत्तमत्वेन ज्ञेय इत्यादिकं कुत इत्याशङ्कां परिहरन्नुपसंहरति– **हरिर्हीति ।।** **हि**शब्दो हेतौ। ब्रह्मादिसर्वदेवानां **परमः** उत्तमः कुतः **पूर्णशक्तिमान्।** हेतुगर्भमिदं विशेषणम्। ब्रह्माद्यपेक्षया अतिशयितपूर्णशक्तिमत्वादित्यर्थः। तत्राप्युपपत्तिः– **स्वतन्त्र इति ।।** ब्रह्मादीनामपि स्वतन्त्रत्वे तेषामेवोक्तहेतुनोत्तमत्वं सेत्स्यतीत्यतः **अन्ये सर्वे** ब्रह्मादयस्**तद्वशा** इत्युक्तम्। **हि** यतः स्वतंत्रो हरिः यतश्च ब्रह्मादयस्तद्वशाः अतः स जगद्गुरुः। गुरुत्वादपि परम इति भावः। न केवलमेतावत् किन्तु ब्रह्मादीनां मोक्षः सांसारिकभोगश्च भगवदधीन इत्याह– **ब्रह्मादय इति ।।** यद्वा ननु ब्रह्माद्यपेक्षया हरेः सर्वोत्तमत्वं कुतः येन सर्वोत्तमत्वज्ञानस्यावश्यकत्वं स्यादित्यतः तत्सर्वोत्तमत्वं साधयति– **हरिरिति ।।** हरिः **सर्वदेवानां** ब्रह्मादीनां **परमः** उत्तम इत्येतत् हि 'अग्निर्वै देवानामवमो विष्णुः परमः' (ऐतरेयब्राह्मणे १.१.१) 'उत्तमः पुरुषस्त्वन्यः' (गी १५.१८) इत्याद्यागमप्रसिद्धमित्यर्थः। युक्त्याऽपि साधयति– **पूर्णेति ।।** **हि** शब्दौ हेतौ। हरिः **पूर्णशक्तिमान्** ब्रह्माद्यपेक्षयाऽतिशयितपूर्णशक्तिमान्। अतः परम इत्यर्थः। अत्र 'नाहं न च शिवोऽन्ये च तच्छक्त्यैकांशभागिनः' (ब्रह्मसूत्रभाष्योद्धृत ब्रह्मवैवर्तवचनम् १.११) इत्युक्तिर्मानम्। हेत्वन्तरमाह– **स्वतन्त्र इति ।।** **हि** यस्मात् हरिः स्वतन्त्रः **अन्ये** ब्रह्मादयः सर्वे तद्वशाश्च अतः परमः। निमित्तान्तरमाह– **स इति ।।** यतः **स** हरिः जगद्गुरुरतोऽपि परम इत्यर्थः। अतो हरेस्सर्वोत्तमत्वज्ञानमावश्यकमिति भावः ।।

भक्तेरप्यावश्यकत्वमुपपादयति– **ब्रह्मादयश्चेति ।।** यतः ब्रह्मादयोऽपि **तद्भक्त्या** विष्णुभक्त्यैव **भोगमोक्षयोः** भोगः सांसारिकः फलातिशयः। मोक्षो नित्यानन्दानुभवलक्षणस्तयोर्भागिनः योग्याः स्युरित्यर्थः। अतो भक्तिरावश्यकीति भावः। अध्यायार्थमुपसंहरति– **तस्मादिति ।।** यस्माद्भक्त्यैव विष्णुसर्वोत्तमत्वज्ञानपूर्वकमनुष्ठितजपादेस्सफलत्वं तस्मादित्यर्थः। **ज्ञेयः** सर्वोत्तमत्वादिना। **पूज्यश्च** पूर्वोक्तप्रकारेणावाहनादिषोडशोपचारैः, **वन्द्यः** नम्यः स्तुत्यश्च। **ध्येयः** जपहोमादिकाले सदा तद्व्यतिरिक्तकालेऽपि मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इति। त्वं मम स्वामी। अहं तत्र दास इति वा स्मर्त्तव्य इत्यर्थः। देवस्य पूजाऽकरणे प्रत्यवाय उक्तः कौर्मे–

यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम् ।
भुङ्क्ते स याति निरयं सूकरत्वं च गच्छति ।।

यदि विस्तरतः पूजां कर्तुं नैव हि शक्यते ।
जलं दलं तुलस्या वाऽवश्यं विष्णौ समर्पयेत् ।।
पश्येद्वाऽन्यकृतां पूजां सोऽपि स्यात्कृतपूजनः ।। इति ।। ७४,७५ ।।

।। इति श्रीमदान्दतीर्थभगवत्पादविरचितश्रीमत्तन्त्रसारसङ्ग्रहस्य टीकायां छलारी नरसिंहाचार्यशिष्येण शेषेण कृतायां प्रथमोऽध्यायः ।।

**गु.दी–** सिद्धान्तज्ञानपूर्वकमेव जपादि सफलमित्यभिप्रेत्य सत्सिद्धान्तं निरूपयति— **हरिरित्यादिना सार्धश्लोकेन ।।** द्विविधो हि सत्सिद्धान्तः परापरभेदात् । तत्र परो द्विविधः वाचनिक आनुषङ्गिकश्चेति । साक्षाद्ब्रह्मस्वरूपावधारणपरेषु जन्मादिसूत्रेषूक्तो वाचनिकः । प्राधान्येनोक्त इति यावत् । प्रधानप्रमेयोपयोगितयाऽभिहितो ह्यानुषङ्गिकः तदुपपादक इति यावत् । तत्र **'पूर्णशक्तिमान्' 'अन्ये तद्वशाः' 'जगद्गुरुः'** इत्येतैर्वाचनिकं परं सत्सिद्धान्तमाह । **शक्तिरिति** गुणसामान्योपलक्षणम् । पूर्णगुण इत्यर्थः । **अन्ये तद्वशाः** इत्येतन्न यथास्थितं गृहीतुं शक्यं परसत्सिद्धान्तत्वाभावात् । भगवन्निष्ठस्वातन्त्र्यपरतया व्याख्याने 'स्वतन्त्रः' इत्यनेन पौनरुक्त्यं स्यात् । अतः **अन्ये तद्वशाः** इत्यनेन सकलजगज्जन्मादिकारणत्वमुच्यते । तत्र 'अन्ये' इति सामान्योक्त्या सकलेत्यस्य 'वशाः' इति तदधीनसत्ताकत्वोक्त्या जन्मादिकारणत्वस्य लाभ इति ज्ञेयम् । जगतः गुरुः उत्तम इति यावत् । **स्वतन्त्रः** सर्वतः पर इति । आनुषङ्गिकपरसिद्धान्तमाह– स्वाधीनसत्तादिमान् **स्वतन्त्रः सर्वतः** प्रकृतिजीवजडेभ्यः **परमः** अत्यन्तभिन्नः । अस्वातन्त्र्येऽभिन्नत्वे च पूर्णगुणत्वाद्ययोगात् तत्सिद्ध्यर्थमङ्गीकार्यत्वात्स्वातन्त्र्यभेदयोरानुषङ्गिकत्वम् । अपरसिद्धान्त माह— **ब्रह्मादय इति ।।** तस्य हरेर्भक्त्या भोगाः समस्ताः मोक्षश्च तयोर्भागिनः सन्तीति शेषः । **क्रमेणेति** च मुक्तौ संसारे च तारतम्यक्रमेणेत्यर्थः भगवदितरब्रह्मादिनिष्ठधर्मरूपत्वादयमपरः सत्सिद्धान्त इति ज्ञेयम् ।।

अध्यायार्थमुपसंहरति— **तस्मादिति ।।** **तस्मात्** धर्मादेः फलस्य सत्वात् । **हरिर्ज्ञेयः** सर्वोत्तमत्वादिना प्रणवादिमन्त्रैः । **पूज्यः** अष्टाक्षरेण चक्राब्जादौ । **ध्येयः** 'उद्यद्भास्वत्' इत्याद्युक्तप्रकारेण । तस्मात्सदा वन्द्य इत्यर्थः ।। ७४, ७५।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारसङ्ग्रहस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधकश्रीनिवासाचार्यपूज्यपादानां शिष्येण वेङ्कटपतिना कृतायां गुर्वर्थदीधितौ प्रथमोऽध्यायः समाप्तः ।।

।। श्रीकृष्णार्पणमस्तु ।।

**मङ्गाली–** ननु ब्रह्मादिपरित्यागेन भगवत एव सर्वोत्तमत्वादिना ज्ञेयत्वादिकं कुत इत्याशङ्कां परिहरन्नुपसंहरति- **हरिर्हीति ।।** हिशब्दो हेतौ हरिरेव ब्रह्मादिसर्वदेवानां परमः कुतः **पूर्णशक्तिमान् ।** ब्रह्माद्यपेक्षयाऽत्यतिशयितपूर्णशक्तिमत्वादिति हेतुगर्भविशेषणमेतत् । तत्राप्युपपत्तिः **स्वतन्त्र** इति । स्वातन्त्र्यस्य पूर्णशक्तिमत्वोपपादकत्वं हठवादे स्पष्टम् । ब्रह्मादीनामपि स्वतन्त्रत्वे तेषामेवोक्तहेतुनोत्तमत्वं सेत्स्यतीत्यतो **अन्ये ब्रह्मादयः तद्वशा** इत्युक्तं । **हि** यतः स्वतन्त्रो हरिः यतश्च ब्रह्मादयस्तद्वशाः अतः स जगद्गुरुः गुरुत्वादपि परम इति भावः । भक्तेरप्यावश्यकत्वमुपपादयति— **ब्रह्मादय इति ।।** ।। ७४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारस्य तत्तट्टीकाकारोक्तार्थसङ्ग्रहरूपायां मङ्गलधर्माचार्यरचितायां टीकायां प्रथमोऽध्यायः ।।

## ।। द्वितीयोऽध्यायः ।।

मातृकान्यासविधिः

**तं.सा. यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः ।**
**वीर्यदः केऽभितोवक्त्रमक्षिकर्णेषु नासयोः ।। १ ।।**

**गण्डयोरोष्ठयोर्दन्तपङ्क्त्योर्मूर्ध्नि च वाचि च ।**
**दोःपत्सन्धिषु साग्रेषु पार्श्वयोः पृष्ठगुह्ययोः ।। २ ।।**

**तुन्दे च हृदि धातूनां सप्तके प्राणजीवयोः ।**
**सक्षकारान्(सक्षकारं) न्यसेद्वर्णान् नृसिंहः क्षस्य देवता।।३।।**

**त.क.–** पूर्वाध्याये शिष्योपदेशे प्रवृत्तस्य गुरोर्जपहोमार्चनाद्याः मन्त्रोद्धारणाङ्गत्वेनेतिकर्तव्यता विहिताः। मन्त्रोद्धारणानन्तरभाविनमितिकर्तव्यतासमूहं वक्तुं द्वितीयाध्याय आरभ्यते। नन्वेवमध्यायभेदः किं निबन्धनः ? अस्यापीतिकर्तव्यतासमूहस्य पूर्वाध्याय एव निवेशसंभवात्। मैवम्। द्विविधा हीतिकर्तव्यता। योग्यतासम्पादिका एका। अन्या तु वीर्यप्रदा। योग्यताप्रदात्रीणामितिकर्तव्यतानां पूर्वत्र निवेशः। इह तु वीर्यप्रदानामित्यवान्तरविजिज्ञापयिषया तदुपपत्तेः। वीर्यप्रदत्वं च यदनुष्ठाने सति मन्त्राणां वलवत्तरप्रतिबन्धकोपनिपातेऽपि स्वकार्यक्षमत्वं तत्त्वमिह विवक्षितम्। अत एव सहस्रायुतहोमा अप्यत्रैव निवेशिताः। अत एवात्रापि 'पञ्चाशदक्षरैर्न्यासो मन्त्रस्य वीर्यदः' इत्युपक्रमः। अत एव पूर्वत्रोक्तो होम एवात्रापि 'जुहुयात् सहस्रमयुतं लक्षं कोटिमथापि वा' (तं.सा.२-१४) इति पुनः कुत उच्यत इति चोद्यमनुपपन्नम्। तत्र योग्यताप्रदानां होमानां कथनेऽपीह प्रतिबन्धकनिरासकत्वेन वीर्यप्रदानां कथनात्। अत एव वक्ष्यति 'उपसर्गेषु जातेषु' (तं.सा.२-१३) इत्यादि। यद्यपी तिकर्तव्यतात्वात् 'पूज्यश्च भगवान्नित्यम्' (तं.सा.१-४९) इत्यादिनोक्तेतिकर्तव्य-

ताऽप्यत्रैव निवेशमर्हति। तथाप्युक्तभेदो दुर्विज्ञेयः स्यादित्यतोऽध्यायभेदः। तत्रादौ गुरुः शिष्यशरीरे सक्षकारान् वर्णानङ्गविशेषेषु न्यसेदिति मातृकान्यासेतिकर्तव्यतां विधातुं मातृकान्यासं स्तौति— **यस्य कस्यापीति** ।। अष्टमहामन्त्रस्येति सम्बन्धः। वराहादिमन्त्रस्य वा लक्ष्म्यादिमन्त्रस्य वा पञ्चाशदक्षरैस्तत्तदक्षरप्रतिपाद्याजादीनां शिर आद्यङ्गेषु **न्यासः** अवस्थितिप्रार्थनं **वीर्यदः** प्रतिवन्धकसहस्राणामपि निवर्तनं, न फलदानौन्मुख्यसम्पादको यतोऽतो वर्णान्नयसेदिति शेषः। पञ्चाशदक्षरात्मकैर्मन्त्रैर्न्यसनीयानामजादिमूर्तीनां तावन्ति स्थानान्याह— **केऽभितोवक्त्रमित्यादि** ।। कं शिरः। अभितोवक्त्रम् इत्यस्य अव्ययीभावसमासेन सर्वस्मिन् वक्त्र इत्यर्थः। अक्षिणी च कर्णौ च तेष्विति विग्रहः। गोलकानां चतुष्ट्वाद्बहुवचनम्। एवमग्रेऽपि। दोषोः पदोः सन्धय इति विग्रहः। दोषोः पदोः सन्धिषु चाग्रसहितेष्वित्येन विंशतिस्थानानि निर्दिष्टानि। धातूनां सप्तकम् 'त्वक्चर्ममांस' (भाग.२-१०-३१) इत्युक्तं सप्तकं। ननु शिरआदिवाक्पर्यन्तेषु षोडशस्थानेष्वकारादिविसर्गान्तैः षोडशभिर्वर्णैन्यसः। साग्रेषु दोःपत्सन्धिषु विंशतिस्थानेषु ककारादिनकारान्तैर्विंशत्यक्षरैर्न्यासः। पार्श्वादिगुदान्तेषु पञ्च स्थानेषु पकारादिमकारान्तैः पञ्चभिर्न्यासः। हृदयादिष्वष्टसु स्थानेषु यकारादिहकारान्तैर्यासः। प्राणे लकारेण न्यास इति यद्यप्यवगन्तुं शक्यते। तथापि जीवे न्यासः केनाक्षरेण ? पञ्चाशतां वर्णानां समाप्तत्वादित्याशङ्क्य कषयोर्योगे क्ष इति न्यायेन समाधत्ते— **सक्षकारानिति** ।। **वर्णान्** वर्णदेवानजादीन् न्यसेदित्यर्थः। क्षकारस्य देवतानुक्तेः तामाह– **नृसिंह इति** ।। १-३ ।।

**अ.सं–** पूर्वाध्यायोक्तमन्त्रजपपूजाहोमाद्युपयुक्तमितिकर्तव्यताविशेषमाहास्मिन्नध्याये। तत्रादौ जपोपयुक्तमातृकान्यासफलमाह— **यस्येति** ।। **यस्य कस्यापि** सर्वस्येत्यर्थः। **मन्त्रस्य** मन्त्रजपस्य। आदावन्ते चेति शेषः। **पञ्चाशदक्षरैः** 'ॐ अं अजाय नमः, ॐ आम् आनन्दाय नमः' इत्यादि पञ्चाशदक्षरयुक्तमन्त्रैर्न्यासः कार्यः। अथवा 'विन्यसेद्वर्णमेकैकं बिद्धन्तं ध्रुववेष्टितं' इत्युक्तेः ॐकारानुस्वारसहितानां वर्णानामेव मन्त्रत्वात्। 'ॐ अं ॐ आं'

इत्यादिभिः केवलैः पञ्चाशदक्षरैरेव न्यासः कार्यः। कुतः **विर्यदः** मन्त्रप्रयोगेऽभीष्टफलदानशक्तिप्रदो यतः अत इत्यर्थः। मन्त्रजपात्पूर्वं पश्चाच्च वीर्यदः मातृकान्यासः कार्य इति भावः।

केचित्तु 'नमोबिन्दुसमेतांश्च विन्यसेदक्षरान् सुधीः' इति पञ्चरात्रोक्तेः 'ॐ अं नमः, ॐ आं नमः' इत्याद्येवमन्त्रः। अन्यत्तु मन्त्रप्रतिपाद्यदेवतानुसन्धानार्थं शिष्टैरुच्चार्यते। न तु मन्त्रान्तर्गतम्। अतो न कश्चिद्दोष इति व्याचक्षते।

पञ्चाशद्वर्णानां न्यासस्थानान्याह– **क इत्यादिना**॥ **के** शिरसि। ललाटोपरितनभाग इत्यर्थः। 'सताराश्च लिपीर्न्यसेदलिके परितो मुखं' (२.७१) इत्यादि योगदीपिकोक्तेः। तत्र हि अकारस्यालिकशब्दवाच्यं ललाटस्थानयुक्त-मलीकपदेन। 'परितोमुखं' इत्यनेनाकारस्य अत उक्त एवार्थः। **अभितोवक्त्रं** मुखसमन्ततः सर्वस्मिन् मुख इत्यर्थः। **अक्षिकर्णेषु** अक्ष्णोः कर्णयोश्च। **मूर्ध्नि** शिखापुरोभागे। अतः के इत्यनेन न पौनरुक्त्यम्। 'नासागण्डोष्ठदन्तेषु पुनर्मूर्ध्नि मुखे तथा' इत्युक्तेः। पुनरपि मस्तक एवेत्यप्याहुः। **वाचि** वागिन्द्रिये, **साग्रेषु दोःपत्सन्धिषु** करयोस्सन्धिषु। तदग्रयोश्च पादयोस्सन्धिषु पादाग्रयोश्च पार्श्वयोर्जठरस्य दक्षिणवामप्रदेशयोः **पृष्ठगुह्ययोः** पृष्ठे उदरस्य पश्चाद्भागे **गुह्ये** शिश्ने **तुन्दे** उदराधोभागे **हृदि** हृदये **धातूनां** त्वक्चर्ममांसरुधिरमेदोमज्जास्थिनामकानां सप्तके। तदुक्तं द्वितीयस्कन्धे– 'त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः' इति (२.१०.३१)। **प्राणो** मुख्यवायुः। केचित्तु प्राणो नाम देहे अहंकारकार्यविशेषः। स एव श्वासोच्छ्वासजनक इत्याहुः। **जीवः** प्रसिद्धः। एषु स्थानेषु **वर्णान्** अकारादीन् क्रमेण न्यसेत्। ननु स्थानानामेकपञ्चाशत्वात् वर्णानां पञ्चाशत्वात्कथं न्यासः कार्य इत्यत आह– **सक्षकारानिति**। सकारेण सहितान् क्षकारेण सह एकपंचाशद्वर्णानित्यर्थः। 'सक्षकारं' इति पाठे क्रियाविशेषणम्। ककारषकारद्वयसंयोगरूपक्षकारस्य देवताया असंयुक्तवर्णदेवताकथनप्रकरणेऽ-नुक्तत्वात्तामाह– **नृसिंह इति**॥ **क्षस्य** क्षकारस्येत्यर्थः। यथाऽकारादिवर्णसमान-प्रथमवर्णवदजादिपदवाच्यानामजादीनामकारादिदेवतात्वम्। तथा ककारषका-द्वयात्मकस्य क्षकारस्य पुरुषमृगेन्द्रद्वयाकारः नृसिंहो देवतेति ज्ञेयम्। यद्वा

'वर्णयोरन्तरे स्थितम्। नृसिंहरूपमित्याह' इत्यैतरेयभाष्योक्तेः वर्णद्वयसन्धिदेवतात्वेन नृसिंहस्य कषसन्धिरूपक्षकारदेवतात्वं ज्ञेयम्। क्षकाररूपैकाक्षरनृसिंहमन्त्रराजप्रतिपाद्यनृसिंहदेवताध्यानं तु–

हृद्याकाशेऽष्टपत्रे सरसिभुवि गुहायां सदा कर्णिकायां
दीप्यन्तं सूर्यकोटिप्रभमजरमजं नित्यमानन्दमूर्तिम् ।
इन्दूनां कोटिभासा परिगतमथ पञ्जानुसंसक्तबाहु-
द्वन्द्वं शङ्खारिबाहुं सुविवृतवदनं नारसिंहं नतोऽस्मि ।।

इत्यागमान्तरोक्त्याकारेण ज्ञेयम् । सरसिभुवीत्यस्य सरोज इत्यर्थः। केचित्तु– चतुर्थाध्यायोक्तप्रकारेण नृसिंहध्यानं (४.४५) कर्तव्यमित्याहुः। सक्षकारान् वर्णानित्यत्र सक्षकारान् वर्णान् जपेच्चेति विधिर्द्रष्टव्यः। जपे न्यासे चेत्युत्तरत्रानुवादात् ।।१-३।।

**गु.दी–** प्रणम्य श्रीनिवासार्यगुरूणां चरणौ शुभौ ।
करिष्यामि यथाबोधं द्वितीयाध्यायपञ्चिकाम् ।।

पूर्वाध्यायोक्तप्रणवादीनां वक्ष्यमाणवराहादीनां च जपापेक्षया पूर्वोत्तरकाल-मवश्यमनुष्ठेयं मातृकान्यासं तत्रैवापेक्षितप्राणायामं कलशेऽऽवाह्यरूपविशेषान् दीक्षालक्षणहोमकुण्डलक्षाणादिकं च निरूपयत्यस्मिन्नध्याये ।

तत्रादौ मातृकान्यासमाह— **यस्येति ।। यस्य कस्यापि** सर्वस्यापि **मन्त्रस्य** मन्त्रजपस्यादौ अन्ते च **पञ्चाशदक्षरैः** 'अं अजाय नमः' इत्यादिपञ्चाशदक्षरप्रयुक्तैर्मन्त्रैः **न्यासः** कार्य इत्यर्थः। कुत इत्यत आह— **वीर्यद इति ।।** यतोऽत इति शेषः। मन्त्रे वीर्यमतिशयफलाधायकत्वं द्रष्टव्यम्। न्यासस्थानान्याह— **क इत्यादिना ।। के** परितः ललाटे ललाटोपरितनभागे। **अभितोवक्त्रं** वक्त्रमभितः मुखं परितः। अक्षिणी कर्णौ च तेषु। **मूर्ध्नि** शिखापुरोभागे। अतः क इत्यनेन न पौनरुक्त्यम्। **साग्रेषु दोःपत्सन्धिषु** दोःसन्धिषु पत्सन्धिषु चेत्यर्थः। **पार्श्वयोः** कट्योः। **पृष्ठगुह्ययोः** पृष्ठे गुह्ये च। **तुन्दे** नाभेरधः। **धातूनां सप्तके** त्वक्चर्ममांसरुधिरमेदोमज्जास्थीति सप्तधातुषु।

**प्राणजीवयोः** प्राणापानादिवृत्तिपञ्चके । यद्वा, प्राणो नामाहङ्कारकार्यविशेषः । स एव श्वासोच्छ्वासजनकः । अत एव तत्त्वविवेकटीकायां 'प्राणोऽहङ्कारकार्यविशेषः' इति । सुधायां च 'शारीरो वायुः' (सुधा आरम्भणादिकरणम्) इत्युक्तम् । वाराहे च 'नासाद्वारा वहिर्याति प्राणोऽहङ्कारनामवान्' इति ॥

ननूक्तैकपञ्चाशत्स्थानेषु पञ्चाशन्मन्त्राणां न्यासः कथमित्यत उक्तं— **सक्षकारानिति** ॥ तद्देवतामाह— **नृसिंह इति** ॥ ॥१-३॥

**मङ्गाली–** पूर्वाध्यायोक्तमन्त्रजपपूजाहोमाद्युपयुक्तमङ्गविशेषमाहास्मिन्नध्याये । तत्रादौ जपोपयुक्तमातृकान्यासफलमाह– **यस्येति** ॥ **यस्य कस्यापि** सर्वस्येत्यर्थः । **मन्त्रस्य** मन्त्रजपस्यादावन्ते चेति शेषः । **पञ्चाशदक्षरैः** 'ॐ अं अजाय नमः । ॐ आं आनन्दाय नमः' इत्यादि पञ्चाशदक्षरयुक्तैर्मन्त्रैः न्यासः कार्यः । अथवा 'विन्यसेद्वर्णमेकैकं' इत्युक्तेः ॐकारानुस्वारसहितानां वर्णानामेव मन्त्रत्वात् 'ॐ अं' इत्यादिभिः केवलैः पञ्चाशदक्षरैरेव न्यासः कार्यः । कुतः? **वीर्यदः** मन्त्रप्रयोगेऽभीष्टफलदानशक्तिप्रदो यत अत इत्यर्थः । केचित्तु 'नमोविन्दुसमेतांश्च विन्यसेदक्षरान् सुधीः' इति पञ्चरात्रोक्तेः 'ॐ अं नमः' 'ॐ आं नमः' इत्याद्येव मन्त्रः । अन्यत्तु मन्त्रप्रतिपाद्यदेवतानुसन्धानार्थं शिष्टैरुच्चार्यते न तु मन्त्रान्तर्गतमित्याचक्षते ।

पञ्चाशद्वर्णानां न्यासस्थानान्याह– **क इत्यादिना** ॥ **के** शिरसि ललाटोपरितनभाग इत्यर्थः । **अभितोवक्त्रं** इत्यव्यम् । मुखस्य समन्ततः सर्वस्मिन्मुख इत्यर्थः । **अभिकर्णेषु** अक्ष्णोः कर्णयोश्च **मूर्ध्नि** शिखापुरोभागे । अतः क इत्यनेन न पौनरुक्त्यम् । 'नासां गण्डोष्ठदन्तेषु पुनर्मूर्ध्निमुखे तथा' इत्युक्तेः । पुनरपि मस्तक एवेत्यप्याहुः । **वाचि** वागिन्द्रिये, **साग्रेषु दोपत्सन्धिषु** करयोः सन्धिषु तदग्रयोश्च पादयोः सन्धिषु, पादाग्रयोश्च पार्श्वयोः जठरस्य दक्षिणवामप्रदेशयोः । **पृष्टगुह्ययोः** पृष्टे उदरस्य पश्चाद्भागे । गुह्यम् शिश्नम् । **तुन्दे** उदराधरभागे, **हृदि** हृदये, **धातूनां** त्वक्चर्ममांसरुधिरमेदोमज्जास्थिनामकानां सप्तके । तदुक्तं द्वितीयस्कन्धे– 'त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः'

(२-१०-३१)इति । **प्राणो** मुख्यवायुः । केचित्तु– प्राणो नाम देहेऽहङ्कारकार्य-विशेषः स एव श्वासोच्छ्वासजनक इत्याहुः । **जीवः** प्रसिद्धः । एषु स्थानेषु **वर्णान्** अकारादीन् क्रमेण न्यसेत् ।

ननु स्थानानामेकपञ्चाशत्वात्, वर्णानां पञ्चाशत्वात् कथं न्यासः कार्य इत्यत आह- **सक्षकारानिति** ।। क्षकारेण सहितान् क्षकारेण सह पञ्चाशद्वर्णानित्यर्थः । 'सक्षकारं' इति पाठे क्रियाविशेषणम् । ककारषकारद्वयसंयोगरूपक्षकारस्य देवताया असंयुक्तवर्णदेवताकथनप्रकरणेऽनुक्तत्वात् तामाह– **नृसिंह इति** ।। **क्षस्य** क्षकारस्येत्यर्थः । यथाऽकारादिवर्णसमानप्रथमवर्णवदजादिपदवाच्यानाम् अजादी-नामकारादिदेवतात्वं तथा षकारककारद्वयात्मकस्य क्षस्य पुरुषमृगेन्द्र-द्वयाकारः नृसिंहो देवतेति ज्ञेयं । क्षकाररूपैकाक्षरनृसिंहमन्त्रराज-प्रतिपाद्यनृसिंहध्यानं तु–

हृद्याकाशेऽष्टपत्रे सरसिभुवि गुहायां सदा कर्णिकायां
दीप्यन्तं सूर्यकोटिप्रभमजरमजं नित्यमानन्दमूर्तिम् ।
इन्दूनां कोटिभासापरिगतमथ पञ्जानुसंसक्तबाहु-
द्वन्द्वं शङ्खारिबाहुं सुविवृतवदनं नारसिंहं नमामि ।।

इत्यागमान्तरोक्तं ज्ञेयम् ।

केचित्तु– चतुर्थाध्यायोक्तमेव नृसिंहध्यानमित्याहुः । सक्षकारान् वर्णान् जपेच्चेति विधिर्द्रष्टव्यः । जपे न्यासे चेत्युत्तरत्रानुवादात् ।।१,२,३ ।।

क्षकारस्यान्ते न्यासः प्राणायामनिरूपणं च

**तं.सा. जपे न्यासे च विहितः क्षोऽक्षराणां सदाऽन्ततः ।**
**प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके ।। ४ ।।**

**त.क.**– ननु क्षकारो जीवे न्यसनीय इति कुतः? आद्ये शिरसि स्थाने कस्मान्न न्यसनीयः । ककारषकारयोरनन्तरं वा न्यास उचित इत्यत आह– **जप इति** ।। यस्मादक्षराणामन्ततः सदा शास्त्रे विहितः, अन्तत एवोच्चार्य इति यावत्, अतो जपे न्यासे च कार्ये अन्तत एव न्यसनीय इत्यर्थः ।

**प्राणजीवयोः** प्राणापानादिवृत्तिपञ्चके । यद्वा, प्राणो नामाहङ्कारकार्यविशेषः । स एव श्वासोच्छ्वासजनकः । अत एव तत्त्वविवेकटीकायां 'प्राणोऽहङ्कारकार्यविशेषः' इति । सुधायां च 'शारीरो वायुः' (सुधा आरम्भणादिकरणम्) इत्युक्तम् । वाराहे च 'नासाद्वारा बहिर्याति प्राणोऽहङ्कारनामवान्' इति ।।

ननूक्तैकपञ्चाशत्स्थानेषु पञ्चाशन्मन्त्राणां न्यासः कथमित्यत उक्तं— **सक्षकारानिति** ।। तद्देवतामाह— **नृसिंह इति** ।। ।।१-३।।

**मङ्गाली**— पूर्वाध्यायोक्तमन्त्रजपपूजाहोमाद्युपयुक्तमङ्गविशेषमाहास्मिन्न-ध्याये । तत्रादौ जपोपयुक्तमातृकान्यासफलमाह— **यस्येति ।। यस्य कस्यापि** सर्वस्येत्यर्थः । **मन्त्रस्य** मन्त्रजपस्यादावन्ते चेति शेषः । **पञ्चाशदक्षरैः** 'ॐ अं अजाय नमः । ॐ आं आनन्दाय नमः' इत्यादि पञ्चाशदक्षरयुक्तैर्मन्त्रैः न्यासः कार्यः । अथवा 'विन्यसेद्वर्णमेकैकं' इत्युक्तेः ॐकारानुस्वारसहितानां वर्णानामेव मन्त्रत्वात् 'ॐ अं' इत्यादिभिः केवलैः पञ्चाशदक्षरैरेव न्यासः कार्यः । कुतः? **वीर्यदः** मन्त्रप्रयोगेऽभीष्टफलदानशक्तिप्रदो यत अत इत्यर्थः । केचित्तु 'नमोविन्दुसमेतांश्च विन्यसेदक्षरान् सुधीः' इति पञ्चरात्रोक्तेः 'ॐ अं नमः' 'ॐ आं नमः' इत्याद्येव मन्त्रः । अन्यत्तु मन्त्रप्रतिपाद्यदेवतानुसन्धानार्थं शिष्टैरुच्चार्यते न तु मन्त्रान्तर्गतमित्याचक्षते ।

पञ्चाशद्वर्णानां न्यासस्थानान्याह— **क इत्यादिना ।। के** शिरसि ललाटोपरितनभाग इत्यर्थः । **अभितोवक्त्रं** इत्यव्यम् । मुखस्य समन्ततः सर्वस्मिन्मुख इत्यर्थः । **अभिकर्णेषु** अक्ष्णोः कर्णयोश्च **मूर्ध्नि** शिखापुरोभागे । अतः क इत्यनेन न पौनरुक्त्यम् । 'नासां गण्डोष्ठदन्तेषु पुनर्मूर्ध्निमुखे तथा' इत्युक्तेः । पुनरपि मस्तक एवेत्यप्याहुः । **वाचि** वागिन्द्रिये, **साग्रेषु दोपत्सन्धिषु** करयोः सन्धिषु तदग्रयोश्च पादयोः सन्धिषु, पादाग्रयोश्च पार्श्वयोः जठरस्य दक्षिणवामप्रदेशयोः । **पृष्ठगुह्ययोः** पृष्ठे उदरस्य पश्चाद्भागे । गुह्यम् शिश्नम् । **तुन्दे** उदराधरभागे, **हृदि** हृदये, **धातूनां** त्वक्चर्ममांसरुधिरमेदोमज्जास्थिनामकानां सप्तके । तदुक्तं द्वितीयस्कन्धे— 'त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः'

(२-१०-३१)इति । **प्राणो** मुख्यवायुः । केचित्तु– प्राणो नाम देहेऽहङ्कारकार्य-विशेषः स एव श्वासोच्छ्वासजनक इत्याहुः । **जीवः** प्रसिद्धः । एषु स्थानेषु **वर्णान्** अकारादीन् क्रमेण न्यसेत् ।

ननु स्थानानामेकपञ्चाशत्वात्, वर्णानां पञ्चाशत्वात् कथं न्यासः कार्य इत्यत आह- **सक्षकारानिति** ।। क्षकारेण सहितान् क्षकारेण सह पञ्चाशद्वर्णानित्यर्थः । 'सक्षकारं' इति पाठे क्रियाविशेषणम् । ककारषकारद्वयसंयोगरूपक्षकारस्य देवताया असंयुक्तवर्णदेवताकथनप्रकरणेऽनुक्तत्वात् तामाह– **नृसिंह इति** ।। **क्षस्य** क्षकारस्येत्यर्थः । यथाऽकारादिवर्णसमानप्रथमवर्णवदजादिपदवाच्यानाम् अजादी-नामकारादिदेवतात्वं तथा षकारककारद्वयात्मकस्य क्षस्य पुरुषमृगेन्द्र-द्वयाकारः नृसिंहो देवतेति ज्ञेयं । क्षकाररूपैकाक्षरनृसिंहमन्त्रराज-प्रतिपाद्यनृसिंहध्यानं तु–

हृद्याकाशेऽष्टपत्रे सरसिभुवि गुहायां सदा कर्णिकायां
दीप्यन्तं सूर्यकोटिप्रभमजरमजं नित्यमानन्दमूर्तिम् ।
इन्दूनां कोटिभासापरिगतमथ पद्मानुसंसक्तबाहु-
द्वन्द्वं शङ्खारिबाहुं सुविवृतवदनं नारसिंहं नमामि ।।

इत्यागमान्तरोक्तं ज्ञेयम् ।

केचित्तु– चतुर्थाध्यायोक्तमेव नृसिंहध्यानमित्याहुः । सक्षकारान् वर्णान् जपेच्चेति विधिर्द्रष्टव्यः । जपे न्यासे चेत्युत्तरत्रानुवादात् ।।१,२,३ ।।

क्षकारस्यान्ते न्यासः प्राणायामनिरूपणं च

**तं.सा.** **जपे न्यासे च विहितः क्षोऽक्षराणां सदाऽन्ततः ।**
**प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके** ।। ४ ।।

**त.क.**– ननु क्षकारो जीवे न्यसनीय इति कुतः? आद्ये शिरसि स्थाने कस्मान्न न्यसनीयः । ककारषकारयोरनन्तरं वा न्यास उचित इत्यत आह– **जप इति** ।। यस्मादक्षराणामन्ततः सदा शास्त्रे विहितः, अन्तत एवोच्चार्य इति यावत्, अतो जपे न्यासे च कार्ये अन्तत एव न्यसनीय इत्यर्थः ।

जपाङ्गतया प्रसिद्धेष्वङ्गेषु प्राक् अङ्गन्यासाक्षरन्यासध्यानादीन्युक्तानि । अधुना सिंहावलोकनन्यायेनावशिष्टानि प्राणायामपापपुरुषध्यानादीन्यङ्गान्युपदिशति— **प्रणायाम इति ।।** यद्यपि प्राणायामादीनि मातृकान्यासात् पूर्वमेव वक्तव्यानि । यद्वक्ष्यति 'आदावेव जपे कुर्यात्'(तं.सा.२-६) इति । तथापि अङ्गन्यासादेरन्तरङ्गत्वेन तस्य शिष्यस्योत्कटाकङ्क्षावशाद्रहस्यत्वेन क्रमस्याविवक्षणाद्व्यत्ययेनोक्तिः । अत एव तत्त्वन्यासस्य मातृकान्यासापेक्षया पूर्वभावित्वेऽपि तृतीये निरूपणम् । एवमन्यात्रापि द्रष्टव्यम् ।

नन्वाचार्यस्येतिकर्तव्यतान्तरमस्मिन्नुच्यत इत्युक्तेस्तत्कथं प्राणायामपापपुरुषदाहनाद्यत्र निरूप्यते । उपदेष्ट्राचार्यस्य इतिकर्तव्यतात्वाभावादिति चेत् । सत्यम् । सर्वमन्त्रसाधारण्येन वीर्यप्रदत्वादिनोपकारकस्य वर्णन्यासस्य कथनप्रसङ्गात् प्राणायामादेरपि सर्वमन्त्रसाधारण्यादत्र कथनं न विरूद्धम् । न हि प्राणायामादयोऽक्षरन्यासादिवत् प्रतिमन्त्रं भिद्यान्त इति । प्राणायामः आकारयितव्य इत्यन्तर्णीतण्ययर्थत्वेन वा योजनीयम् । अत्र प्राणायामः कार्य इति सम्वन्धः ।

तत्रेत्थम्भावमाह— **रेचयित्वेति ।।** रेचनं बहिर्निस्सारणम् । पूरणं पुनर्ग्रहणम् । कुम्भनं क्वचिदवस्थापनम् । तथा च वायुं पिङ्गलया नाड्या वहीर्गमयित्वा पुनरिडानाड्या द्वात्रिंशन्मात्राकालेन कुक्षौ प्रपूर्य पुनरशीतिमात्राकालपर्यन्तं कुम्भवत् स्थिते देहे कुम्भयित्वा प्राणायामः कर्तव्य इति ग्राह्यम् । उक्तं च पञ्चरात्रे योगपादे प्रथमाध्याये—

आकुञ्चितशिराः किञ्चिन्निबध्नन् योगमुद्रया ।
हस्तौ यथोक्तविधिना प्रणायामं समाचरेत् ।।

रेचनं पूरणं वायो रोधनं रेचनं तथा ।
पातनं सेचनं वायोः प्रणायाम उदीरितः ।।

हस्तेन दक्षिणेनैव पीडयन् नासिकापुटम् ।
शनैश्शनैरथ वहिः क्षिपेत् पिङ्गलयाऽनिलम् ।।

द्वात्रिंशन्मात्रया कुक्षौ पूरयेदिडयाऽनिलम् ।
भूयः षोडशमात्राभिश्चतुःषष्ठ्या तु मात्रया ।।

सम्पूर्य कुम्भवद्देहं कुम्भयेन्मातरिश्वना ।
पूरयेन्नाडयः सर्वाः पूर्यते मातरिश्वना ।।

एवं कृते सति ब्रह्मन् चरन्ति दश वायवः ।
हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् ।। इत्यादि ।

योगमुद्रया हस्तौ निबघ्नन् रेचनं पूरणं यथा भवति तथा यथोक्तविधानेन प्राणायामं समाचरेदिति सम्बन्धः। तत्र वायोः पातनम्। कोऽर्थः ? रेचनं विसर्जनमिति यावत्। तत्सेचनं नाम यत्तु वायो रोधनम् अन्तः तत्पूरणमुच्यत इत्यर्थः। नाडय इति गुणश्छान्दसः ।। ४ ।।

**अ.सं.**– ननु क्षकारसहितैरेभिः पञ्चाशदक्षरैर्न्यासो जपश्च कार्य इत्युक्तम्। तत्र क्षकारस्य जपादौ पञ्चाशद्वर्णेभ्य आदौ वा उतान्ते वा पाठः कार्य इत्यत आह– **जपेति ।। अक्षराणां** पञ्चाशदक्षराणां जपे न्यासे च **अन्ते** पञ्चाशदक्षरानन्तरं **क्षः** क्षकारः विहितः। पठनीयत्वेनेति शेषः । तृतीयाध्याये 'क्रमव्युत्क्रमतस्तु ताः। वर्णमूर्तीः पुनश्चैवम्' (३.१०९) इत्यत्र वर्णानां क्रमव्युत्क्रमाभ्यां आवाहनस्योक्तत्वात्तत्र क्रमेणावाहने क्षकारस्य पञ्चाशद्वर्णानन्तर्यं व्युत्क्रमेणावाहने तु क्षकारस्य पञ्चाशद्वर्णापेक्षया आदित्वं यथाऽस्ति तथा वर्णानां जपे न्यासे च क्षकारस्य कदाचिदन्त्यत्वं कदाचिदादित्वं नास्तीति ज्ञापयितुं **सदा** इत्युक्तं नियमेनेत्यर्थः। अनेन अन्त एव क्षकारस्य पाठः । न तु प्रथमत इत्यर्थलाभे जपे न्यासे च वर्णानां व्युत्क्रमो नास्तीति सूच्येते। जपाङ्गप्राणायामप्रकारमाह– **प्राणायाम इति।** 'रेचयेद्दक्षया नासा पूरयेद्वामतस्ततः' इत्युक्तेः। **रेचयित्वा** नासादक्षिणरन्ध्रेण श्वासवायुं बहिर्निःसार्य वामरन्ध्रेण वायुं **पूरयित्वा** अन्तः प्रवेशयित्वा अङ्गुलिभिर्नासापुटद्वयं बध्वा सुषुम्नायां नाड्यां कुम्भकवायुनिरोधे सति प्राणायामः सम्पद्यत इति शेषः ।

प्राणो वायुरिति प्रोक्त आयामस्तन्निरोधनम् ।
प्राणायाम इति प्रोक्तो योगिनां योगसाधनम् ।। इत्युक्तेः ।(भृ.भा.३-७)

जपाङ्गतया प्रसिद्धेष्वङ्गेषु प्राक् अङ्गन्यासाक्षरन्यासध्यानादीन्युक्तानि । अधुना सिंहावलोकनन्यायेनावशिष्टानि प्राणायामपापपुरुषध्यानादीन्यङ्गान्युपदिशति— **प्रणायाम इति ।।** यद्यपि प्राणायामादीनि मातृकान्यासात् पूर्वमेव वक्तव्यानि । यद्वक्ष्यति 'आदावेव जपे कुर्यात्'(तं.सा.२-६) इति । तथापि अङ्गन्यासादेरन्तरङ्गत्वेन तस्य शिष्यस्योत्कटाकङ्क्षावशाद्रहस्यत्वेन क्रमस्याविवक्षणाद्व्यत्ययेनोक्तिः । अत एव तत्त्वन्यासस्य मातृकान्यासापेक्षया पूर्वभावित्वेऽपि तृतीये निरूपणम् । एवमन्यात्रापि द्रष्टव्यम् ।

नन्वाचार्यस्येतिकर्तव्यतान्तरमस्मिन्नुच्यत इत्युक्तेस्तत्कथं प्राणायामपापपुरुषदाहनाद्यत्र निरूप्यते । उपदेष्टाचार्यस्य इतिकर्तव्यतात्वाभावादिति चेत् । सत्यम् । सर्वमन्त्रसाधारण्येन वीर्यप्रदत्वादिनोपकारकस्य वर्णन्यासस्य कथनप्रसङ्गात् प्राणायामादेरपि सर्वमन्त्रसाधारण्यादत्र कथनं न विरूद्धम् । न हि प्राणायामादयोऽक्षरन्यासादिवत् प्रतिमन्त्रं भिद्यान्त इति । प्राणायामः आकारयितव्य इत्यन्तर्णीतण्ययर्थत्वेन वा योजनीयम् । अत्र प्राणायामः कार्य इति सम्बन्धः ।

तत्रेत्थम्भावमाह— **रेचयित्वेति ।।** रेचनं बहिर्निस्सारणम् । पूरणं पुनर्ग्रहणम् । कुम्भनं क्वचिदवस्थापनम् । तथा च वायुं पिङ्गलया नाड्या बहीर्गमयित्वा पुनरिडानाड्या द्वात्रिंशन्मात्राकालेन कुक्षौ प्रपूर्य पुनरशीतिमात्राकलपर्यन्तं कुम्भवत् स्थिते देहे कुम्भयित्वा प्राणायामः कर्तव्य इति ग्राह्यम् । उक्तं च पञ्चरात्रे योगपादे प्रथमाध्याये—

आकुञ्चितशिराः किञ्चिन्निबध्नन् योगमुद्रया ।
हस्तौ यथोक्तविधिना प्रणायामं समाचरेत् ।।

रेचनं पूरणं वायो रोधनं रेचनं तथा ।
पातनं सेचनं वायोः प्रणायाम उदीरितः ।।

हस्तेन दक्षिणेनैव पीडयन् नासिकापुटम् ।
शनैश्शनैरथ बहिः क्षिपेत् पिङ्गलयाऽनिलम् ।।

द्वात्रिंशन्मात्रया कुक्षौ पूरयेदिडयाऽनिलम् ।
भूयः षोडशमात्राभिश्चतुःषष्ट्या तु मात्रया ।।

सम्पूर्य कुम्भवद्देहं कुम्भयेन्मातरिश्वना ।
पूरयेन्नाडयः सर्वाः पूर्यते मातरिश्वना ।।

एवं कृते सति ब्रह्मन् चरन्ति दश वायवः ।
हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् ।। इत्यादि ।

योगमुद्रया हस्तौ निबघ्नन् रेचनं पूरणं यथा भवति तथा यथोक्तविधानेन प्राणायामं समाचरेदिति सम्बन्धः। तत्र वायोः पातनम्। कोऽर्थः ? रेचनं विसर्जनमिति यावत्। तत्सेचनं नाम यत्तु वायो रोधनम् अन्तः तत्पूरणमुच्यत इत्यर्थः। नाडय इति गुणश्छान्दसः ।। ४ ।।

**अ.सं.**– ननु क्षकारसहितैरेभिः पञ्चाशदक्षरैर्न्यासो जपश्च कार्य इत्युक्तम्। तत्र क्षकारस्य जपादौ पञ्चाशद्वर्णेभ्य आदौ वा उतान्ते वा पाठः कार्य इत्यत आह– **जपेति ।। अक्षराणां** पञ्चाशदक्षराणां जपे न्यासे च **अन्ते** पञ्चाशदक्षरानन्तरं **क्षः** क्षकारः विहितः। पठनीयत्वेनेति शेषः । तृतीयाध्याये 'क्रमव्युत्क्रमतस्तु ताः। वर्णमूर्तीः पुनश्चैवम्' (३.१०९) इत्यत्र वर्णानां क्रमव्युत्क्रमाभ्यां आवाहनस्योक्तत्वात्तत्र क्रमेणावाहने क्षकारस्य पञ्चाशद्वर्णानन्तर्यं व्युत्क्रमेणावाहने तु क्षकारस्य पञ्चाशद्वर्णापेक्षया आदित्वं यथाऽस्ति तथा वर्णानां जपे न्यासे च क्षकारस्य कदाचिदन्त्यत्वं कदाचिदादित्वं नास्तीति ज्ञापयितुं **सदा** इत्युक्तं नियमेनेत्यर्थः। अनेन अन्त एव क्षकारस्य पाठः । न तु प्रथमत इत्यर्थलाभे जपे न्यासे च वर्णानां व्युत्क्रमो नास्तीति सूच्येते। जपाङ्गप्राणायामप्रकारमाह– **प्राणायाम इति।** 'रेचयेद्दक्षया नासा पूरयेद्वामतस्ततः' इत्युक्तेः। **रेचयित्वा** नासादक्षिणरन्ध्रेण श्वासवायुं बहिर्निःसार्य वामरन्ध्रेण वायुं **पूरयित्वा** अन्तः प्रवेशयित्वा अङ्गुलिभिर्नासापुटद्वयं बध्वा सुषुम्नायां नाड्यां कुम्भकवायुनिरोधे सति प्राणायामः सम्पद्यत इति शेषः ।

प्राणो वायुरिति प्रोक्त आयामस्तन्निरोधनम् ।
प्राणायाम इति प्रोक्तो योगिनां योगसाधनम् ।। इत्युक्तेः ।(भृ.भा.३-७)

एतच्च सविस्तरं चतुर्थाध्याये आचार्यः स्वयमेव वक्ष्यति ।। ४ ।।

**गु.दी.–** क्षकारस्य कदा न्यास इत्यत आह– **जप इति ।।** जपे न्यासे चेति सदाऽक्षराणाम् **अन्ततः** अन्ते क्षकारस्य प्रयोगो विहित इत्यर्थः । 'प्राणायामत्रयं कृत्वा मातृकान्यासमाचरेत्' इत्युक्तत्वेन प्राणायामपूर्वकत्वान्मातृकान्यासस्य तत्पूर्वभाविनं प्राणायाममाह— **प्राणायाम इति ।। रेचनं** दक्षिणनासारन्ध्रेण श्वासस्याधोविसर्जनम् । वामघ्राणरन्ध्रेण देह वायोरूर्ध्वनयनं पूरणम् । 'रेचयित्वा दिक्षणतः पूरयित्वा च वामतः' इति वक्ष्यमाणत्वात् (तं.सा.४-१६०) । **कुम्भकम्** उभयश्वासनिरोधः । **रेचयित्वा पूरयित्वा कुम्भके** प्रथमार्थे सप्तमी, कुम्भकः श्वासनिरोधः प्राणायाम इति । यद्वा कुम्भके सति प्राणायामः सम्पन्न इति शेषः । न तु रेचनाद्यतिरिक्तः प्राणायामः । 'रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः । प्राणायामः' (तं.सा.४-१४९) इति वक्ष्यमाणत्वात् प्राणनिरोधसमये मन्त्रजपश्च कर्तव्य इति शेषः ।। ४ ।।

**मङ्गली–** ननु क्षकारान् न्यसेद्वर्णानित्युक्तम् । तत्र क्षकारस्य जपादौ पञ्चाशद्वर्णेभ्यः आदावन्ते वा पाठ इत्याशङ्कयामाह– **जप इति ।। अक्षराणां** पञ्चाशदक्षराणां जपे न्यासे च **अन्ततः** अन्ते पञ्चाशदक्षरानन्तरं **क्षः** क्षकारः **विहितः** पठनीयत्वेनेति शेषः । तृतीयाध्याये 'क्रमव्युत्क्रमतस्तु ताः । वर्णमूर्तीः पुनश्चैव'(तं.सा.३-१०९) इति वर्णानां क्रमव्युत्क्रमाभ्यामावाहनस्योक्तत्वात्तत्र क्रमेणावाहने क्षस्य वर्णानन्तर्यं व्युत्क्रमेणावाहने आदित्वं च यथाऽस्ति तथा वर्णानां जपे न्यासे च क्षस्य न व्यात्यास इति ज्ञापयितुं **सदे**त्युक्तं नियमेनेत्यर्थः । जपाङ्गप्राणायामप्रकारमाह– **प्राणायाम इति ।।** 'रेचयेद्दक्षया नासा पूरयेद्वामतस्ततः' इत्युक्तेः **रेचयित्वा** नासादक्षिणरन्ध्रेण श्वासवायुं बहिर्निस्सार्य वामरन्ध्रेण वायुं **पूरयित्वा** अन्तः प्रवेशयित्वा अङ्गुलिभिर्नासापुटद्वयं बध्वा सुषुम्नायां नाड्यां **कुम्भके** वायुनिरोधे कृते सति प्राणायामः संपाद्यत इति शेषः ।

प्राणो वायुरिति प्रोक्त आयामस्तन्निरोधनम् ।
प्राणायाम इति प्रोक्तो योगिनां योगसाधनम् ।। इत्युक्तेः ।(भृ.भा.३-७)

प्राणनिरोधसमये मन्त्रं जपेत्। कुम्भके नासापुटद्वयं बध्वा अवस्थानलक्षण-कुम्भकावस्थायां प्राणायामः श्वासनिरोधः कार्य इत्यर्थ इति केचित्। मन्त्रं जपेदिति अध्याहृतकृत्यापेक्षया वा क्त्वाप्रत्ययोपपत्तिः ।।४।।

प्राणायामकाले जप्यमन्त्रस्य तत्सङ्ख्याश्च निरूपणम्

**तं.सा. तारैस्त्रिद्वा(स्त्रिर्द्वा)दशावृत्तैर्व्येकद्वादशकेन वा ।**
**तत्तन्मन्त्रेण वा कार्यो गायत्र्या दशतारकैः ।। ५ ।।**

**त.क.**– अथ प्रणायामे मन्त्रमाह— **तारैरिति ।।** द्वादशसङ्ख्यायास्त्रिवारमावृत्तौ षट्त्रिंशदावृत्तः सम्पद्यते। षट्त्रिंशद्वारं तारोच्चारणेन प्राणायामः कार्य इत्यर्थः। पक्षान्तरमाह— **व्येकद्वादशकेन वेति। द्विद्वादशकेन** द्विवारमावृत्तद्वादश-सङ्ख्याविशिष्टेन चतुर्विंशतिवारमुच्चरितेन तारेणेति यावत्। **एकद्वादशकेन** द्वादशवारमुच्चरितेन तारेण वेत्यर्थः। यद्वा, तारमन्त्रजपाङ्गतया प्राणायाम उक्तवैकल्पिकसङ्ख्येन तारेण कर्तव्यः। मूलमन्त्रजपाङ्गतया कर्तव्यस्तु प्राणायामः मूलमन्त्रेणैव। व्याहृत्यङ्गं तु व्याहृत्यैव। एवं तत्तदङ्गन्तु तत्तन्मन्त्रेणेत्याह— **तत्तन्मन्त्रेण वेति ।।** पक्षान्तरमाह— **गायत्र्या दशतारकैरिति ।।** दशौङ्कारघटितया गायत्र्या वेत्यर्थः। अयं च वनस्थानामेवाधिकरिविशेषाणामिति व्यवस्थितो विकल्पः। गायत्र्या दशतारकत्वं च व्याहृतित्रये ओङ्कारत्रयम्। महर्जनस्तपस्सत्यशब्देभ्यः पूर्वमोङ्कारचतुष्टयम्। गायत्र्याः प्रतिपादमोङ्कारत्रयमिति द्रष्टव्यम् ।

ननु सत्स्वपि बहुषु प्रसाधनेषु सिंहावलोकनन्यायेन प्राणायामं पुनः स्मृत्वा कुतोऽत्र वदत्याचार्यः ? न हि प्राणायामे कश्चिदतिशय उपलभ्यत इति चेदत्रोच्यते। मानुषाणां शरीरं तावत् षण्णवत्यङ्गुलोन्नतम्। द्वादशाङ्गुलोन्नतप्राण-वायुवच्च ।

देहमानं स्वाङ्गुलिभिः षण्णवत्यङ्गुलायुतम् ।
प्राणाः शरीरावधिकौ द्वादशाङ्गुलमानतः । इत्युक्तेः ।

तत्र नाभिदेशः देहमध्यम् । तत्र त्रिकोणाकारमग्निमण्डलमस्ति यत्र स्थित्वा वैश्वानरनामको जाठरग्निर्बहुप्रकारमशितमन्नं पचति ।

देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ।
त्रिकोणं द्विपदामन्यच्चतुरस्रं चतुष्पदाम् ।।

वैश्वानरोऽग्निः पचति प्राणापानसमायुतः ।
चतुष्प्रकारमशितं............ ।। इत्यादेः ।

ततः कन्दस्थानं नवाङ्गुलायतं कालचक्राधारमसितम् । तच्च कालचकं द्वादशारं द्वादशमासनामकविष्ण्वाद्यधिष्ठिता यस्याराः सन्ति, यस्मिन् अयं जीवः ऊर्णनाभिविततततन्तुलग्नक्रिमिवद् बम्भ्रमीति ।

कन्दस्थानं मनुष्याणां देहमध्यं नवाङ्गुलम् ।
तत्र चक्रं द्वादशारमाहुर्मासचराणि तु ।।

विष्ण्वादिमूर्तयस्तेषु द्वादश द्वादशस्वपि ।
अहं तत्र स्थितं चक्रं भ्रमयामि स्वमायया ।।

अरेषु भ्रमते जीवः क्रमेण कमलासन ।
तन्तुपञ्जरमध्यस्था यथा भ्रमति लूतिका ।। इत्यादेः ।

नाभिस्थद्वादशारचक्रस्योपरि कुण्डलिस्थानमस्ति यस्मिन् सहस्रशीर्षका सर्परूपा रज्जुर्नाभेस्तिर्यगूर्ध्वं वाऽऽवेष्ट्य महदहङ्कारादिभेदेन अष्टविधप्रकृतिसचिवा वायुसञ्चारानुसारेण तत्रस्थाग्निमण्डलस्थज्वलनमुद्दीपयति । कन्दस्थानपार्श्वमारभ्यो-र्ध्वमुखतया मुखेन समावेष्ट्य ब्रह्मरन्ध्राभिमुखा तिष्ठति । या च सर्परूपा रज्जुर्योगपरिपाककाले मरुता सहाग्निना विनश्यति । ततोऽयं जीवः सुषुम्नानाड्या वायुप्रदर्शितमार्गो गाच्छति ।

तस्योर्ध्वं कुण्डलिस्थानं नाभेस्तिर्यगधोर्ध्वतः ।
अष्टप्रकृतिरूपा या तथाऽसौ कुण्डलीकृता ।।

यथावद्वायुसञ्चारं ज्वलनादि च नित्यशः ।
परितः कन्दपार्श्वे तु निरूर्ध्वेव सदा स्थिता ।।

मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं यथा ।
योगकाले च मरुता स्वाग्निना बोधिता सती ।।

स्फुरिता हृदयाकाशे नागरूपा महोज्वला ।
वायुर्वायुमुखेनैव ततो याति सुषुम्नया ।। इत्युपदेशात् ।

कन्दस्थानस्य मध्ये सुषुम्नानाडिः। तस्याः सव्यपार्श्वे इडानाम्नी नाडिका दक्षिणनासापुटपर्यन्तं व्याप्य तिष्ठति। सुषुम्नाया दक्षिणपार्श्वे पिङ्गलाख्या नाडिका दक्षिणनासापुटपर्यन्तं व्याप्य तिष्ठति। सुषुम्नायाः पुरोभागे गान्धारीनाम्नी नाडिका दक्षिणनेत्रपर्यन्तं व्याप्य तिष्ठति। सुषुम्नायाः पृष्ठभागे हस्तिजिह्वानाम्नी नाडिका वामनेत्रपर्यन्तं व्याप्य तिष्ठति। सुषुम्नायास्ततोऽपि सव्यपार्श्वे पूषानाम्नी नाडिका सव्यकर्णपर्यन्तं व्याप्य तिष्ठति। सुषुम्नाया दक्षिणभागे यशस्विनीनाम्नी नाडिका दक्षिणकर्णपर्यन्तं व्याप्य तिष्ठति। कन्दस्थानादधः पायुपर्यंतमधोगताऽलम्बुसानाम्नी नाडिका तिष्ठति । कन्दस्थानादधो मेढ्रपर्यन्तं गुह्यानाम्नी तिष्ठति। पादाङ्गुष्ठपर्यन्तं कौशिनीनाम्नी नाडिका तिष्ठति। आहत्य कन्दसम्भवा नाड्यः सुषुम्ना, इडा, पिङ्गला, गान्धारी, हस्तिजिह्वा, पूषा, यशस्विनी, अलम्बुसा, गुह्या कौशिनी चेतीमा दश प्रधानाः। एतत्सम्भवाश्चान्याः स्थूलसूक्ष्माः द्वासप्ततिसहस्राणि। तत्रामूषु सुषुम्नादिप्रधाननाडीषु दशसु प्राणादयो दश वायवः सञ्चरन्ति। तत्र प्राणस्यास्यनासिकयोर्मध्ये नतमिव स्थानं, हृदयं, नाभिमण्डलं, पादाङ्गुष्ठमिति स्थानचतुष्टयम्। अपानस्य तु पायुरूपस्थमूरू जानुश्चेति चतुष्टयं सञ्चारस्थानम्। समानस्य सर्वाणी गात्राणि। उदानस्य सर्वाः सन्धयः। व्यानस्य पादौ, श्रोत्रे उदरः, कटिः, गुल्फः, स्कन्धौ, गलं चेत्येतानि स्थानानि। नागस्य त्वक् स्थानम्। कूर्मस्य चर्म। कृकरस्य मांसम्। देवदत्तस्य रूधिरम्। धनञ्जयस्य मेदः। एवं प्राणादीनां चेष्टा अपि भिन्ना एव। तत्र प्राणवायुर्मध्यगतश्चिरभुक्तान्नपानादीन् वा समीकरोति। अपानः मूत्रादीन्निस्सारयति। व्यानस्तु श्वासोछ्वासादिसर्वप्राणनादिचेष्टां करेति। उदानस्तु शरीरस्वास्थ्यम्। कृकरः क्षुधादिकमुत्पादयति। देवदतः निद्रादिकर्मकृत्। धनञ्जयस्तु मृतगात्रशोभादिप्रदः।

कन्दमध्यस्थिता नाडी सुषुम्ना सुप्रतिष्ठिता ।
पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्वप्रवर्तिनी ।।

ब्रह्मणो विवरं यावद्विद्युदाभासनालिका ।
वैष्णवी ब्रह्मनाडी च निर्वाणप्राप्तपद्धतिः ।।

शुद्धा च पिङ्गला चैव तस्यास्सव्येतरस्थिते । शुद्धेति इडायाः संज्ञा ।
शुद्धा समुत्थिता कन्दाद्वामनासापुटावधि ।।

गान्धारी हस्तिजिह्वा च द्वे चान्ये नाडिके स्थिते ।
पुरतः पृष्ठतस्तस्या वामेतरदृशौ प्रति ।।

पूषा यशस्विनी नाड्यौ तस्मादेव समुत्थिते ।
सव्येतरश्रुत्यवधि वायुमूला त्वलम्बुसा ।।

अधोगता गुह्यनाडी मेढ्रान्तावधिरायता ।
पादाङ्गुष्ठावधिः कन्दादधो याता च कौशिनी ।।

दश प्रदानभूतास्ताः कथिताः कन्दसम्भवाः ।
तन्मूला बहवो नाड्यः स्थूलाः सूक्ष्माश्च नाडिकाः ।।

द्वासप्ततिसहस्राणि स्थूलास्सूक्ष्मास्तु पद्मज ।
सङ्ख्यां तु नैव शक्यन्ते स्थूलमूलाः पृथग्विधाः ।।

यथाश्वत्थदले सूक्ष्माः स्थूलाश्च विततास्तथा ।
प्रणोऽपानः समानश्च उदानो व्यान एव च ।।

नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ।
चरन्ति दशनाडीषु दशप्राणादिवायवः ।।

प्राणादिपञ्चकं तेषु प्रधानं तत्र च स्वयम् ।
प्राण एवाथवा श्रेष्ठो जीवात्मानं बिभर्ति यः ।।

आस्यनासिकयोर्मध्यं हृदयं नाभिमण्डलम् ।
पादाङ्गुष्ठमिति प्राणस्थानानि कमलासन ।।

अपानश्चरति ब्रह्मन् गुदमेढ्रोरूजानुषु ।
समानस्सर्वगात्रेषु सर्वव्यापी व्यवस्थितः ।।

उदानस्सर्वसन्धिस्थः पादयोरूभयोरपि ।
व्यानः श्रोत्रोरुकट्यां च गुल्फस्कन्धगलेषु च ।।

नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।
तुन्दस्थश्चिरमन्नं च रसानि च समीकृतम् ।।

तुन्दमध्यगतः प्राणः स्थानीकुर्यात् पृथक् पृथक् ।
समीकृतमिति क्रियाविशेषणम् ।
इत्यादिचेष्टाः स प्राणः करोति वपुषि स्थितः ।।

अपानवायुर्मूत्रादेः करोति च विसर्जनम् ।
प्राणापानदिचेष्टा च क्रियते व्यानवायुना ।।

उदीर्यते शरीरस्य उदानेन च भास्वता ।
पोषणादि शरीरस्य समानः कुरुते सदा ।।

उद्धारादिक्रियां नागः कूर्मोऽक्ष्णादिनिमीलनम् ।
कृकरस्तु क्षुधाकर्ता दत्तो निद्रादिकर्मकृत् ।
मृतगात्रस्य शोभादौ धनञ्जय उदाहृतः ।। इत्यादिप्रमाणप्रमितत्वात् ।

ततश्च प्राणपानादिवायवो नाडीषु समधिकं वा सञ्चरन्ति । ततस्तदनुसारेण देहपीडा । तदनु निषिद्धादौ प्रवृत्तिश्च जायते । तत्परीहारः प्राणायामेन भवति । प्राणायामेन नाभिदेशस्थितवह्न्युद्बोधेन नष्टदर्पाणां वायूनां न्यूनता समता भवति । ततो नाड्यः शुद्धा भवन्ति । ततः पूरकप्राणायामाभ्यासेन हृदयकमलं कदलीपुष्पवत् अधोमुखमपि प्रबोध्यते । ततो निर्धूतपाप्मनः ब्रह्मदर्शनं च भवति । ऐहिकमप्यपमृत्युजयादिकं च । न ह्येवंभूतः प्रणायामः नावश्यं निरूपणीयो भवति । वक्ष्यति चैतत्सर्वं चतुर्थे स्वयमेवाचार्यः । एतदप्युक्तं तत्रैव—

नाडीभेदं मरुद्भेदं मरुतां स्थानमेव च ।
चेष्टाश्च विविधास्तेषां ज्ञात्वैवं कमलासन ।।

शुद्धौ यतेत नाडीनां वक्ष्यमाणेन वर्त्मना ।
पूरणेन तथा कुम्भीकरणादुन्मुखं स्थितम् ।।

गलरूपविरूढन्तु तदधोमुखमम्बुजम् ।
नालं तालमितं तस्य दलाष्टकसमन्वितम् ।
कदलीपुष्पसङ्काशं चन्द्रकान्तसमप्रभम् ।।

अधोमुखमप्यम्बुजं पूरणादिनोन्मुखं स्थितं भवति । ऊर्ध्वमुखीभवतीत्यर्थः ।

किमन्यैर्बहुभिः प्रोक्तैः प्राणायामपरायणाः ।
निर्धूतसर्वपाप्मानो वत्सरत्रयपूरणे ।।

पश्यन्ति मामपि ब्रह्मन् हृदयाम्भोरुहे स्थितम् ।
संवत्सरत्रयादूर्ध्वे प्राणायामपरो नरः ।
अपमृत्युमतिक्रम्य दीर्घमायुरवाप्नुयात् ।। इत्यादि ।

**अ.सं.**— प्राणनिरोधसमये मन्त्रं जपेत् । कोऽयं मन्त्रः कतिवारमावर्तयेदित्यत आह— **तारैरिति ।। त्रिद्वादशावृत्तैः** त्रिगुणितद्वादशवारमावृत्तैः षट्त्रिंशद्वारमावृत्तैरिति यावत् । 'षट्त्रिंशदभ्यसेन्मन्त्रं प्राणायामः स उच्यते' इत्युक्तेः । 'त्रिः' इति पाठे **त्रिः** त्रिवारं आवृत्ता द्वादश त्रिद्वादशावृत्तास्तैरित्यर्थः । **तारैः** प्रणवैः प्राणायामः कार्य इत्यन्वयः । पक्षान्तरद्वयमाह— **द्व्येकेति ।।** द्वौ च एकं च द्व्येकम् । तच्च तद्द्वादशकं च तेन चेत्यर्थः । द्विगुणितद्वादशकेन, चतुर्विंशतिवारमावृत्तैः । एकद्वादशकेन द्वादशवारं वा आवृत्तैस्तारैरित्यर्थः । शक्ताशक्तविषयं वा । प्रवचनादिसत्कर्मव्यासङ्गसत्वासत्वविषयं वा । स्थूलसूक्ष्ममन्त्रभेदेन वा इदं पक्षत्रयं ज्ञेयम् । अत्राप्यशक्तौ उक्तं गौतमीतन्त्रे— 'मन्त्रावृत्तिं तु षड्वारं कुर्याद्रेचादिपूर्वकं' इति । अनेन सर्वमन्त्रजपेषु तारेण उक्तसङ्ख्यया प्राणायाम इत्युक्तं भवति । अयं पक्षः यतिमात्रविषयः । शुद्धगृहस्थादीनामपीत्यप्याहुः । इदं प्रथमाध्याये विचारितम् । प्राणायामे

मन्त्रान्तरमाह– **तत्तदिति** ।। सङ्ख्या तु पूर्वोक्तैवेति भावः। तत्तन्मन्त्रेण प्राणायामकरणपक्षे गायत्रीमन्त्रजपे चतुर्विंशत्यक्षरगायत्रीमन्त्रेणैव प्राणायामे प्राप्ते विशेषमाह– **गायत्र्येति** ।। **दशतारकैः** दशप्रणवैः। उपलक्षणमेतत्। सव्याहृतिभिः गायत्रीशिरसा च सहितया गायत्र्येत्यर्थः। 'ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॐ आपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्' इति सप्तव्याहृतिदशप्रणवगायत्रीशिरोभिः सहितगायत्रीमन्त्रस्वरूपम्। अत्र 'ओमापोज्योतिः' इत्येतत् गायत्रीशिर इति ज्ञेयम्। तदुक्तं योगयाज्ञवल्क्येन–

भूर्भुवःस्वर्महर्जनस्तपः सत्यं तथैव च।
सप्तोङ्कारसमायुक्तं तथा तत्सवितुः परम् ।।
ॐमापोज्योतिरित्येतत् शिरः पश्चात्प्रयोजयेत्। इति।

यद्वा सर्वमन्त्रजपे प्राणायामे पक्षान्तरमुच्यते। गायत्र्येत्यनेन प्रणवेन वा तत्तन्मन्त्रेण वा दशप्रणवयुक्तगायत्र्या वेति। गायत्र्यादिस्थूलमन्त्रजपे प्राणायामे सङ्ख्यान्तरमुक्तमुत्तमादिभेदेन हारीते–

उत्तमो मुनिभिः प्रोक्तः प्राणायामो नृपोत्तम।
जपे द्वादशवारं वै मध्यमस्तु प्रकीर्तितः।
षड्वारं तु कनीयान् स्यात् त्रिवारं समुदाहृतः ।। इति।

तत्र गायत्रीप्रणवौ सर्वमन्त्रसाधारणौ। तत्तन्मन्त्रेषु तत्तन्मन्त्र एवासाधारणः। सर्वमन्त्रसाधारणः मूलमन्त्रोऽपि ज्ञेयः। अथवा

निखिलेषु हरिमन्त्रजपविधिषु मूलमन्त्रतः।
संयमनममलधीर्मरुतो विधिनाऽभ्यसंश्च ।। इत्युक्तेः।

एवं च प्राणायामे चत्वारो मन्त्रा इत्युक्तं भवति ।। ५ ।।

**गु.दी.–** कोऽयं मन्त्रः? कतिवारमित्यपेक्षायामाह— **तारेति** ।। **त्रिभिः द्वादशभिः** षट्त्रिंशत्सङ्ख्याकैः **तारैः** प्रणवैः। पक्षान्तरमाह— **द्व्येकेति** ।। **द्विर्द्वादशकेन** चतुर्विंशता एकद्वादशकेन वेत्यर्थः। अशक्तिप्रवचनव्यासङ्गाद्यपेक्षयेदं

नाडीभेदं मरुद्भेदं मरुतां स्थानमेव च ।
चेष्टाश्च विविधास्तेषां ज्ञात्वैवं कमलासन ।।

शुद्धौ यतेत नाडीनां वक्ष्यमाणेन वर्त्मना ।
पूरणेन तथा कुम्भीकरणादुन्मुखं स्थितम् ।।

गलरूपविरूढन्तु तदधोमुखमम्बुजम् ।
नालं तालमितं तस्य दलाष्टकसमन्वितम् ।
कदलीपुष्पसङ्काशं चन्द्रकान्तसमप्रभम् ।।

अधोमुखमप्यम्बुजं पूरणादिनोन्मुखं स्थितं भवति । ऊर्ध्वमुखीभवतीत्यर्थः ।

किमन्यैर्बहुभिः प्रोक्तैः प्राणायामपरायणाः ।
निर्धूतसर्वपाप्मानो वत्सरत्रयपूरणे ।।

पश्यन्ति मामपि ब्रह्मन् हृदयाम्भोरुहे स्थितम् ।
संवत्सरत्रयादूर्ध्वे प्राणायामपरो नरः ।
अपमृत्युमतिक्रम्य दीर्घमायुरवाप्नुयात् ।। इत्यादि ।

**अ.सं.–** प्राणनिरोधसमये मन्त्रं जपेत् । कोऽयं मन्त्रः कतिवारमावर्तयेदित्यत आह— **तारैरिति ।। त्रिद्वादशावृत्तैः** त्रिगुणितद्वादशवारमावृत्तैः षट्त्रिंशद्वारमावृत्तैरिति यावत् । 'षट्त्रिंशदभ्यसेन्मन्त्रं प्राणायामः स उच्यते' इत्युक्तेः । 'त्रिः' इति पाठे **त्रिः** त्रिवारं आवृत्ता द्वादश त्रिद्वादशावृत्तास्तैरित्यर्थः । **तारैः** प्रणवैः प्राणायामः कार्य इत्यन्वयः । पक्षान्तरद्वयमाह– **द्व्येकेति ।।** द्वौ च एकं च द्व्येकम् । तच्च तद्द्वादशकं च तेन चेत्यर्थः । द्विगुणितद्वादशकेन, चतुर्विंशतिवारमावृत्तैः । एकद्वादशकेन द्वादशवारं वा आवृत्तैस्तारैरित्यर्थः । शक्ताशक्तविषयं वा । प्रवचनादिसत्कर्मव्यासङ्गसत्त्वासत्त्वविषयं वा । स्थूलसूक्ष्ममन्त्रभेदेन वा इदं पक्षत्रयं ज्ञेयम् । अत्राप्यशक्तौ उक्तं गौतमीतन्त्रे– 'मन्त्रावृत्तिं तु षड्वारं कुर्याद्रेचादिपूर्वकं' इति । अनेन सर्वमन्त्रजपेषु तारेण उक्तसङ्ख्यया प्राणायाम इत्युक्तं भवति । अयं पक्षः यतिमात्रविषयः । शुद्धगृहस्थादीनामपीत्यप्याहुः । इदं प्रथमाध्याये विचारितम् । प्राणायामे

मन्त्रान्तरमाह– **तत्तदिति** ।। सङ्ख्या तु पूर्वोक्तैवेति भावः। तत्तन्मन्त्रेण प्राणायामकरणपक्षे गायत्रीमन्त्रजपे चतुर्विंशत्यक्षरगायत्रीमन्त्रेणैव प्राणायामे प्राप्ते विशेषमाह– **गायत्र्येति ।। दशतारकैः** दशप्रणवैः। उपलक्षणमेतत्। सव्याहृतिभिः गायत्रीशिरसा च सहितया गायत्र्येत्यर्थः। 'ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॐ आपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्' इति सप्तव्याहृतिदशप्रणवगायत्रीशिरोभिः सहितगायत्रीमन्त्रस्वरूपम्। अत्र 'ओमापोज्योतिः' इत्येतत् गायत्रीशिर इति ज्ञेयम्। तदुक्तं योगयाज्ञवल्क्येन–

भूर्भुवःस्वर्महर्जनस्तपः सत्यं तथैव च ।
सप्तोङ्कारसमायुक्तं तथा तत्सवितुः परम् ।।
ॐमापोज्योतिरित्येतत् शिरः पश्चात्प्रयोजयेत् । इति ।

यद्वा सर्वमन्त्रजपे प्राणायामे पक्षान्तरमुच्यते। गायत्र्येत्यनेन प्रणवेन वा तत्तन्मन्त्रेण वा दशप्रणवयुक्तगायत्र्या वेति। गायत्र्यादिस्थूलमन्त्रजपे प्राणायामे सङ्ख्यान्तरमुक्तमुत्तमादिभेदेन हारीते–

उत्तमो मुनिभिः प्रोक्तः प्राणायामो नृपोत्तम ।
जपे द्वादशवारं वै मध्यमस्तु प्रकीर्तितः ।
षड्वारं तु कनीयान् स्यात् त्रिवारं समुदाहृतः ।। इति ।

तत्र गायत्रीप्रणवौ सर्वमन्त्रसाधारणौ। तत्तन्मन्त्रेषु तत्तन्मन्त्र एवासाधारणः। सर्वमन्त्रसाधारणः मूलमन्त्रोऽपि ज्ञेयः। अथवा

निखिलेषु हरिमन्त्रजपविधिषु मूलमन्त्रतः ।
संयमनममलधीर्मरुतो विधिनाऽभ्यसंश्च ।। इत्युक्तेः ।

एवं च प्राणायामे चत्वारो मन्त्रा इत्युक्तं भवति ।। ५ ।।

**गु.दी.–** कोऽयं मन्त्रः? कतिवारमित्यपेक्षायामाह— **तारेति ।। त्रिभिः द्वादशभिः** षट्त्रिंशत्सङ्ख्याकैः **तारैः** प्रणवैः। पक्षान्तरमाह— **द्व्येकेति ।। द्विर्द्वादशकेन** चतुर्विंशता एकद्वादशकेन वेत्यर्थः। अशक्तिप्रवचनव्यासङ्गाद्यपेक्षयेदं

पक्षद्वयं ज्ञेयम् । जपः कार्य इति सम्बन्धः । पक्षान्तरमाह— **तत्तदिति ।।** अनेन सर्वमन्त्रजपेष्वपि तारेणैव प्राणायामस्तारजपाधिकारिभिः संन्यासिभिः कार्य इति पूर्वोक्तमिति सूचयति । तान् प्रत्येव तत्तदिति विकल्पः । इतरेषां तु तारजपाधिकाराभावात् तत्तन्मन्त्रेणैवेति नियमो ज्ञेयः । नन्वेवं सति संन्यासिनां गायत्रीजपाङ्गप्राणायामस्तारेण वा गायत्र्या वा ? इतरेषां तु चतुर्विंशत्यक्षरगायत्र्यैवेति प्राप्तमत आह— **गायत्र्या दशतारकैरिति ।। तारकैः** प्रणवैः । 'ॐ भूः' इत्यारभ्य सुवरों' इत्यन्तैर्दशतारकैर्युक्तगायत्र्येत्यर्थः । **गायत्र्याः** इति च पदं षष्ठ्यन्तं ज्ञेयम् । प्राणायामः कार्य इति सम्बन्धः । यथोक्तं—

प्रणवेन च संयुक्तां व्याहृतीभिश्च संयुताम् ।
प्राणायामः स विज्ञेयो गायत्रीं यज्जपेत् त्रिशः ।। इति ।

प्राणायामेऽङ्गुलिप्रकारस्तु–

पञ्चाङ्गुलीभिर्नासाग्रे पीडनं प्रणवाभिधा ।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ।।

कनिष्ठानामिकाङ्गुष्ठैर्नासाग्रे यत्प्रपीडनम् ।
ॐकारमुद्रिका प्रोक्ता यतेश्च ब्रह्मचारिणः ।।

इति वचनादवगन्तव्यः । अत एव

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयो तर्जनीमध्यमे विना ।।

इति वचनं संन्यासिब्रह्मचारिणां परं ज्ञेयम् ।। ५ ।।

**मङ्गली–** कोऽयं मन्त्रस्तं कति वारमावर्त्तयेदित्यत आह– **तारैरिति ।। त्रिद्वादशावृत्तैः** त्रिगुणितद्वादशवारमावृत्तैः षट्त्रिंशद्वारमावृत्तैरिति यावत् । 'त्रिः' इति पाठे **त्रिः** त्रिवारं आवृत्ताः द्वादश त्रिद्वादशावृत्ताः तैरित्यर्थः । **तारैः** प्रणवैः प्राणायामः जपः कार्य इत्यन्वयः । पक्षान्तरे आह– **व्द्येकेति ।।** द्वौ च एकं च व्द्येकं । तच्च तत् द्वादशकं च तेन वेत्यर्थः । द्विगुणितद्वादशकेन

चतुर्विंशतिवारमावृत्तैः। **एकद्वादशकेन** द्वादशवारमावृत्तैस्तारैरित्यर्थः। शक्ताशक्तविषयं वा प्रवचनादिसत्कर्मव्यासङ्गसत्यासत्यविषयं वा स्थूलसूक्ष्म-मन्त्रभेदेन वेदं पक्षत्रयं ज्ञेयम्। अत्राप्यशक्तावुक्तं गौतमीतन्त्रे– 'मन्त्रावृत्तिं तु षड्वारं कुर्याद्रेचादिपूर्वकं' इति। अनेन सर्वमन्त्रजपेषु तारेणोक्तसङ्ख्यया प्राणायाम इत्युक्तं भवति। अयं पक्षो यतिमात्रविषयः। शुद्धगृहस्थादीनामपीत्यप्याहुः। प्राणायामे मन्त्रान्तरमाह– **तत्तदिति**॥ सङ्ख्या तु पूर्वोक्तैवेति भावः। तत्तन्मन्त्रेण प्राणायामकरणपक्षे गायत्री मन्त्रजपे चतुर्विंशत्यक्षरगायत्री मात्रेणैव प्राणायामे प्राप्ते विशेषमाह– **गायत्र्येति**॥ **दशतारकैः** दशप्रणवैः। उपलक्षणमेतत्। सप्तव्याहृतिभिः गायत्रीशिरसा च सहितगायत्र्येत्यर्थः। 'ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो योनः प्रचोदयात्। ओमापोज्योती रसोमृतं ब्रह्म भूर्भुवस्स्वरों' इति दशप्रणवसप्तव्याहृतिशिरोयुक्त-गायत्रीस्वरूपं योगयाज्ञवल्क्येनोक्तम्–

भूर्भुवस्स्वर्महर्जनः तपस्सत्यं तथैव च॥
प्रत्योङ्कारसमायुक्तं तथा तत्सवितुः परम्।
ओमापोज्योतिरित्येतत् शिरः पश्चात्प्रयोजयेत्॥ इति।

यद्वा सर्वमन्त्रजपे प्राणायामे गायत्र्येत्यनेन पक्षान्तरमुच्यते। प्रणवेन वा तत्तन्मन्त्रेण वा दशप्रणवयुक्तगायत्र्या वेति। गायत्र्यादिस्थूलमन्त्रजपे प्राणायामे सङ्ख्यान्तरमुक्तम् उत्तमादिभेदेन हारीतेन–

उत्तमो मुनिभिः प्रोक्तः प्राणायामो नृपोत्तम।
जपेद्द्वादशवारं वै मध्यस्तु प्रकीर्तितः।
षड्वारं तु कनीयान् स्यात् त्रिवारं समुदाहृतः॥ इति।

तत्र गायत्री प्रणवौ सर्वमन्त्रसाधारणौ तत्तन्मन्त्रस्तु तत्तन्मन्त्र एवासाधारणः। सर्वमन्त्रसाधारणो मूलमन्त्रोऽपि ज्ञेयः। अथवा निखिलेषु हरिमन्त्रजपविधिषु मूलमन्त्रतः। 'संयमनममलधीः मरुतो विधिनाभ्यसंश्च' इत्युक्तेः। एवं च प्राणायामे चत्वारो मन्त्रा इत्युक्तं भवति॥ ५॥

जपाङ्गशुद्धिनिरूपणम्

**तं.सा. आदावेव जपे कुर्याच्छोषणं दहनं प्लुतिम् ।**
**वाय्वग्निवरूणैर्बीजैर्ध्यात्वा तन्मण्डले हरिम् ॥ ६ ॥**

**त.क.–** एवं महाफलहेतुत्वात् प्राणायामः सातिशय इति परिहारे सत्येव स्वयमतिशयान्तरमाह— **आदावेवेति** ॥ त्रिषु कार्येष्वपि क्रमेण मन्त्रानाह– **वाय्वग्निवारूणैर्बीजैरिति** ॥ वायवीयं च आग्नेयं च वारुणं चेति विग्रहः । वाय्वग्निपदोत्तरतद्धितलोपः । तथा च 'यं' इति वायुबीजं, 'रं' इत्याग्निबीजं, 'वं' इति वरुणबीजं इत्येतेषु मन्त्रेषु वायुबीजेन शोषणम्, अग्निबीजेन दहनं, वरुणबीजेन आप्लवनं च जपस्यादावेव कृतेन प्राणायामेनाधिकारी कुर्यात् । जपस्यादौ कृतप्राणायामः शोषणादिकं कुर्याद्यतस्ततः प्राणायामः सर्वातिशयित इति शेषेण योज्यम् । जपस्यादावेव कर्तव्य इति पूर्वेणैव सम्बन्धः ।

हरिस्मरणादिना सहितमेव मन्त्रजातं कार्यकारि नान्यथेत्युक्तं प्रमेयं न विस्मरणार्हमिति पुनः स्मारयति— **ध्यात्वेति** ॥ तेषां वाय्वग्निवरूणानां मण्डलेष्वित्यर्थः । नीलवर्णे षट्कोणं वायुमण्डलं, रक्तवर्णे त्रिकोणमग्निमण्डलं, श्वेतवर्णे वर्तुलं वरुणमण्डलमिति तेषां लक्षणं द्रष्टव्यम् । तदिदं स्पष्टमाह योगदीपिकायां पण्डिताचार्यः—

प्राणायामं ततः कुर्याद्वायुबीजेन सोऽचलः ।
स त्र्यङ्गो रेचकश्चैव पूरकः कुम्बकस्त्विति ॥

असव्यसव्यनास्यौ तावाद्यावन्त्यो मरुद्गतिः ।
द्विगुणो रेचकात् पूरः कुम्भकस्त्रिगुणोऽथवा ॥

पूरकात् स्खलितोद्बुद्धमूलशक्तिमुखोद्गलत् ।
आस्फालयति पाप्मानं वायुः कौम्भकसंयुतः ॥

स संशुष्यति च द्वेषांस्तत्र तत्र परिभ्रमन् ।
जीवः सर्वशरीरान्तः स्थूलसूक्ष्मशरीरवान् ॥

वह्निना पवनायामैः वाय्वास्फालप्रसारिभिः ।
हृदब्जगौर्नृसिंहाग्निज्वालैः पाप्माऽथ दह्यते ।।

वायुना सानुबन्धेऽस्मिन् भस्मरूपेण रेचिते ।
स्वर्णवन्निर्मलौ स्यातामदूनौ देहदेहिनौ ।।

स्विन्नादिन्दोः कपद्मस्थात् करात् पातयते सुधा ।
संस्रुताऽऽप्लावयतेऽन्तःस्थितं सर्वशरीरिणम् ।। इति ।।

तस्यायमर्थः— तादृग्देहेन्द्रियान्वितश्चाञ्चल्यरहितः सोऽधिकारी 'यं' इति वायुबीजेन प्राणायामं कुर्यात्। 'प्राणः स्वदेहगो वायुरायामस्तन्निरोधनम्' इत्युक्तेः स्वदेहगतवायुं निरुधीतेत्यर्थः। यद्यपि 'तारैस्त्रिर्द्वादशावृत्तैः' (तं.सा.२-५) इति ताराख्यो मन्त्र उक्तः। तथापि पापपुरुषशोषणादिकार्यान्तरे वैशेषिकोऽयं मन्त्रः। वैकल्पिको वा भवतीत्यदोषः। स प्राणायामोऽङ्गत्रयोपेतः। रेचकः पूरकः कुम्भक इत्यङ्गत्रयसूचनम्। रेचनं पूरणं कुम्भनं चेत्यङ्गत्रयमुक्तम्। तत्रावयवविशेषनियम उच्यते। तत्र त्रिषु मध्ये रेचकः पूरकश्चेत्युक्तावाद्यौ प्राणायामौ असव्यसव्यनास्यौ दक्षिणनासापुटसव्यनासापुटभावौ। दक्षिणनासापुटेन रेचनं, सव्यनासापुटेन पूरणं कर्तव्यमित्यर्थः। अन्त्यकुम्भकाख्यप्राणायामो मरुद्धृतिः वायुधारणरूपः। वायोर्देहे कुम्भ इव स्थापनं कुम्भकप्राणायाम इत्यर्थः। तेषां कालनियम उच्यते। रेचकप्राणायामाद् द्विगुणकालः पूरकः। त्रिगुणकालः कुम्भकः। पूरकादेव त्रिगुणकालो वेति पक्षान्तरम्।

त्रिविधप्राणायामस्याप्युपयोग उच्यते। कौम्भकप्राणायामसंयुतो वायुर्देह एव सम्भृत इत्यर्थः। देहस्थं पाप्मानं पूरकात् प्राणायामात् स्खलितं स्वकार्याक्षमाम् उद्बुद्धम् अभिवृद्धिरहितं मूलं यस्याः सा स्खलितोद्बुद्धमूला शक्तिः। सैव मुखं आद्या यस्य चलनादेस्तत्तथोक्तम्। तच्चलनादिकं उद्गलत् विमुञ्चत् यथा भवति तथा आस्फालयति दहतीति योज्यम्। पूरकवायुना शोषे प्रसक्ते पापपुरुषस्य शक्तिर्मूलोच्छेदेनोच्छिद्यते। ततोऽस्य सञ्चलनादिकमप्युद्गलितं भवति। ततः कुम्भकवायुः पाप्मानं भस्मीकरोतीतीममर्थमेव स्पष्टयति— **स संशुष्यतीति** ।।

द्वेष्टा पापपुरुषः पूरकवायुना संशुष्यति। शरीरान्तः स्थितः स्थूलसूक्ष्मशरीरवान् जीवस्तु स्वस्य यथा शोषे न भवति तथा तत्र तत्र नाडीविशेषे परिभ्रमन्नास्ते। तदा त्वयं पापपुरुषः प्राणायामेन वायुनिग्रहे सत्युद्बुद्धेन वह्निना वाय्वास्फालप्रसारिभिर्वायुसंघर्षणेन विस्तृतहृत्कमलस्य नृसिंहाख्याग्निज्वालावद्भिः देहस्याग्निभिः दह्यत इत्यर्थः। अनेन द्वयोः प्रयोजनमुक्तम्। रेचकप्राणायामस्य प्रयोजनमुच्यते— **वायुनेति**॥ 'ब्रह्महत्याशिरस्कम्' इत्याद्युक्तप्रकारेण शिरोभुजाद्यङ्गसरितेऽस्मिन् पापपुरुषे वायुना भस्मसात्कृते रेचकवायुना तद्भस्म बहिः रेचयेद्विसर्जयेदिति शेषः।

एवं त्रयाणामुपयोगे सिद्धे कस्ततोऽप्यधिकारिण उपकार इत्यतोऽनुरूप-दृष्टान्तकथनपूर्वं तं दर्शयति— **अस्मिन् भस्मरूपेणेति**॥ एवं प्राणायामत्रयेण पापपुरुषे देहाद्विसृष्टे सत्यधिकारी तद्देहश्चेत्युभावग्नितप्तस्वर्णवन्निर्मलौ भूत्वाऽदूनौ स्याताम्। अक्लिष्टौ भवत इत्यर्थः। नन्वेवं पापपुरुषदहनेन शरीरे व्याप्तोष्मणा अधिकार्यपि दूयत इत्यत आह— **स्विन्नादिति**॥ कं शिरः। तत्र स्थितं पद्मं कपद्मम्। तत्स्थादिन्दोः मण्डलात् स्विन्नादमृतभिन्दुयुक्तात् करात् सुधा पातयते। सुधा स्रवतीत्यर्थः। सा च संस्रुता सुधा अन्तःशरीरे स्थितं जीवं प्लावयति। अतोऽयं न दूयत इति युक्तमेवेति भावः।

प्राणायामेन देहशुद्धिः सनत्कुमारसंहितायां पञ्चमपटले स्पष्टमभिहिता—

विधायास्त्रेण शोधयेद्भौतिकीं तनुम्।
आदाय बाह्यपवनं वामया नासयाऽग्रतः॥

षोडशाभ्यस्य सततं गतिबीजेन मन्त्रयेत्।
शोधयेत्कुम्भकं कुर्वन् द्वात्रिंशद्वारबीजतः॥

दक्षया संविसृज्याथ वह्निबीजेन सानलम्।
अग्निं तयाऽन्तराधाय पूर्ववत् कुम्भकं चरेत्॥

सन्दह्य देहं तद्भस्म विसृजेद्वामया बहिः।
पृथिव्यादीनि तत्त्वानि प्रकृतौ तां च पूरुषे॥

विलीनं भावयित्वाऽथ प्लावनेन सजेत्तनुम् ।
अश्रुतान्तरबीजेन प्रकृत्यादिक्रमेण तु ।। इति ।

देहाद्बहिष्ठं वायुं प्रथमतो वामनासिकया सततं गतिबीजेन षोडशवारमभ्यास्यान्तःप्रवेशलक्षणेन पूरणेन देहमादौ शोधयेत्। ततो द्वात्रिंशद्वारं अग्निबीजतः कुम्भकं कुर्वन् बाह्याग्निप्रवेशेन देहं शोधयेत्। ततो दक्षिणनासापुटेनान्तःप्रविष्टं वायुमग्निं च विसृजेत्। अथ वह्निबीजेनाग्निं वायुं च वामनासया पुनरन्तःप्रवेशयित्वा कुम्भकं चरेत्। ततस्तत्स्थं पापपुरुषं सन्दह्य, तत्र विशेषणनाशेन विशिष्टनाशावश्यंभवाद्देहं सन्दह्येत्युक्तं, पृथिव्याद्यव्यक्तपर्यन्तं व्युत्क्रमेण शरीरावयवानां लयं चिन्तयित्वा पुरुषे लयं चिन्तयेत्। ततः परमपुरुषानुग्रहेण वरुणमण्डलस्थभगवताऽमृतप्लावनेन पुनः प्रकृत्यादिक्रमेण देहसृष्टिं भावयेदित्यर्थः। तथा चैवंभूतः प्राणायामः कथं विशिष्टो न स्यादिति भावः ।। ६ ।।

**अ.सं.**– जपाङ्गशुद्धिमाह– **आदावेवेति ।। आदौ** प्राणायामात्पूर्वं **तन्मण्डले** तेषां वाय्वग्निवरुणानां मण्डले मण्डलस्थवाय्वग्निवरुणेषु **हरिं** ध्यात्वा **वाय्वग्निवारुणैः** 'वाय्वग्निवरुणानां च बीजानि यरवाः क्रमात्' (पद्यमाला- श्लो. ३१) इत्युक्तेः वाय्वग्निवरुणसम्बन्धिभिर्बीजैर्बीजाक्षरैर्यरवैस्तज्जपैरित्यर्थः । तत्र 'ॐ यं' इति वायुबीजम् । 'ॐ रं' इत्यग्निबीजम् । 'ॐ वं' इति वरुणबीजमिति विवेको द्रष्टव्यः । **शोषणं** दहनं **प्लुतिं** क्षालनं च कुर्यात् । अत्र वाय्वग्निबीजाभ्यां पापपुरुषस्य शोषणं दहनं च। वरुणबीजेन शरीरस्य क्षालनमिति विवेकः । तदुक्तम् पद्यमालायाम्–

ततश्च ब्रह्महत्येति ध्यायेत्स्वं पापपूरुषम् ।
आनीय नाभिदेशं तं वायुबीजेन शोषयेत् ।।

हृद्यग्निबीजतो दग्ध्वा भस्म वामनसा त्यजेत् ।
वारुणेनाथ बीजेन शिरःस्थामृतधारया ।।
प्लावयेत्सर्वगात्राणि कृत्वाऽऽत्मानं ततो हृदि ।। इति ।। (३३.३५)

वाय्वग्निवरुणमण्डललक्षणं तूक्तं हारीते–

नाभिस्थानस्थितं नीलं चक्रं षट्कोणसंयुतम् ।
त्रिकोणमनलं चक्रं रक्तबीजयुतं हृदि ।।
वर्तुलं वारुणं चक्रं मूर्ध्नि स्फटिकसन्निभम् । इति ।

यरवाख्यबीजाक्षरजपे सङ्ख्या चोक्ता तत्रैव । 'षट् द्विषट् चतुर्विंशत्सङ्ख्याबीजं जपेत्क्रमात्'इति । अत्रायं क्रमः । पूर्वं पापपुरुषदहनादिना देहशुद्धिस्ततः प्राणायामस्तत मातृकान्यासस्ततो जपः । अत्र तत्त्वन्यासोऽपि ग्राह्यः । तस्य तृतीये वक्ष्यमाणत्वात् । स च मातृकान्यासात्पूर्वमेवानुष्ठेयः । तदुक्तम्–

प्रथमं वैष्णवे मन्त्रे तत्त्वानां न्यसनं पुरा ।
एकपञ्चाशद्वर्णानां न्यसनं च ततः परम् ।। इति गौतमीतन्त्रे ।

पद्मसंहितायाम्–

आदावष्टाक्षरे मन्त्रे तत्त्वन्यासं समाचरेत् ।
पश्चादजादिमन्त्राणां न्यसनं परिकीर्तितम् ।। इति । यत्तु–

जपादौ सर्वमन्त्राणां विन्यासेन लिपेर्विना ।
कृतं तन्निष्फलं विन्द्यात्तस्मात्पूर्वं लिपीन्र्यसेत् ।।

इति मन्त्रमहोदधिवाक्यं तत्तन्मन्त्रमात्रस्थजपात्पूर्वं मातृकान्यासानुष्ठानस्यावश्यकत्वोक्तिपरम् । न तु तत्त्वन्यासात्पूर्वं मातृकान्यासानुष्ठानोक्तिपरम् । निरवकाशपूर्वोक्तवाक्यबलाल्लक्ष्मीब्रह्माद्यन्यदेवतामन्त्रविषयं वा ज्ञेयम् ।। ६ ।।

**गु.दी.–** शुद्धस्य प्राणायामेऽधिकारात् प्राणायामपूर्वभाविनीं शुद्धिमाह— **आदाविति ।। आदौ** प्राणायामात् । **वाय्वादिबीजैः** 'यं रं वम्' इत्येवंरूपैः क्रमेण पापपुरुषशोषणदहनशरीरप्लुतीः कुर्यादित्यर्थः । **आदावेव** इत्येवकारेणेदं शोषणादिकं पूर्वाङ्गमेव नोत्तराङ्गमिति सूचयति ।

अयं भावः । करन्यासगुरुनमस्कारपूर्वकं वाय्वग्निवरुणैर्बीजैर्नाभिहृच्छिरस्सु षट्कोणत्रिकोणवर्तुलमण्डलेषु हरिं ध्यायन् पापपुरुषशोषणादिकं कृत्वा तत्त्वन्यासमातृकान्यासौ कृत्वा प्रणवादिजपमारभेदिति ।।६।।

**मङ्काली–** जपाङ्गशुद्धिमाह– **आदावेवेति** ।। **आदौ** प्राणायामात्पूर्वं **तन्मण्डले** तेषां वाय्वग्निवरुणानां मण्डले हरिं ध्यात्वा । **वाय्वग्निवारुणैः** 'वाय्वग्निवारुणानां च बीजानि यरवाः क्रमात्' (प.मा.३१) इत्युक्तेर्वाय्वग्निव-रुणसम्बन्धिभि**र्बीजैः** बीजाक्षरैः यरवैस्तज्जपैरित्यर्थः । तत्र 'ॐ यं' इति वायुबीजं 'ॐ रं' इत्यग्निवीजम् । 'ॐ वं' इति वरुणबीजमिति विवेकः । शोषणं दहनं च पापपुरुषस्य स्वदेहस्य प्लुतिं च एभिर्बीजैः क्रमात्कुर्यादित्यर्थः । तदुक्तं पद्ममालायाम्–

ततश्च ब्रह्महत्येति ध्यायेत्तं पापपूरुषम् ।
आनीय नाभिदेशं तं वायुबीजेन शोषयेत् ।

हृद्यग्निबीजतो दग्ध्वा भस्म वामनसा त्यजेत् ।
वरुणेनाथ बीजेन शिरस्थामृतधारया ।
प्लावयेत्सर्वगात्राणि कृत्वाऽऽत्मानं ततो हृदि ।। इति । (प.मा.३३,३५)

वाय्वग्निवरुणमण्डललक्षणं तूक्तं हारीते–

नाभिस्थाने स्थितं नीलं चक्रं षट्कोणसंयुतम् ।
त्रिकोणमनलं चक्रं रक्तं बीजयुतं हृदि ।
वर्तुलं वरुणं चक्रं मर्ध्नि स्फटिकसन्निभम् ।। इति ।

एतेषां बीजानां जपे सङ्ख्याचोक्ता तत्रैव–

षट् द्विषट् चतुर्विंशत्सङ्ख्या बीजजपे क्रमात् । इति ।

तत्रायं क्रमः । पूर्वं पापपुरुषदहनादिना देहशुद्धिः । ततः प्राणायामः । ततो मातृकान्यासः । ततो जपः । अत्र तत्त्वन्यासोऽपि ग्राह्यः । तस्य तृतीये वक्ष्यमाणत्वात् । स च मातृकान्यासात् पूर्वमेवानुष्ठेयः । तदुक्तं–

प्रथमं वैष्णवे मन्त्रे तत्वानां न्यसनं पुरा ।
एकपञ्चाशद्वर्णानां न्यसनं च ततः परम् ।। इति ।

गौतमी तन्त्रे पद्मसंहितायां च–

आदावष्टाक्षरे मन्त्रे तत्त्वन्यासं समाचरेत् ।
पश्चादजादिमन्त्राणां न्यसनं परिकीर्तितम् ।। इति । यत्तु–

जपादौ सर्वमन्त्राणां विन्यासेन लिपेर्विना ।
कृतं तन्निष्फलं विद्यात् तस्मात्पूर्वं लिपीर्न्यसेत् ।।

इति मन्त्रमहोदधिवाक्यं तत्तु मन्त्रमात्रस्य जपात्पूर्वं मातृकान्यासानुष्ठानस्यावश्यकत्वोक्तिपरम् । न तु तत्त्वन्यासात्पूर्वं मातृकान्यासानुष्ठानोक्तिपरम् । निरवकाशपूर्वोक्तवाक्यबलात् लक्ष्मीब्रह्माद्यन्यदेवतामन्त्रविषयं वा ज्ञेयम् ।। ६ ।।

कलशपूजाप्रकारनिरूपणम्

**तं.सा.** **एकपञ्चाशद्वर्णानां चतुर्विंशच(ति) मूर्तयः ।**
**आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ।। ७ ।।**

**कोलो नृसिंहः सवटुर्जामदग्न्यरघूद्वहौ ।**
**वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।। ८ ।।**

**शिंशुमारश्चेति शतं कलाः कलशनामकाः(देवताः) ।**
**एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः ।। ९ ।।**

**त.क.–** एवमुपदेष्टुर्गुरोः शिष्यशरीरे कर्तव्यं मातृकान्यासमभिधाय प्रसङ्गादुपदेश्यस्वशिष्यस्य प्राणायामाख्यामितिकर्तव्यतामभिधायेदानीं शिष्यस्य स्वोपदेश्यत्वसिद्धये मन्त्रादिग्रहणयोग्यतापादकतया प्रसिद्धं कलशपूजाख्यमितिकर्तव्यतान्तरमादावाह— **एकपञ्चाशद्वर्णानामिति ।।** मूर्तय इत्यत्रापि सम्बद्ध्यते । एकपञ्चाशद्वर्णानां वाच्या इत्यर्थः । वर्णनां पञ्चाशत्त्वेऽप्युक्तरीत्यैकपञ्चाशत्त्वं ज्ञेयम् । विंशतिशब्दपर्यायो विंशच्छब्दोऽस्ति । केशवाद्याश्चतुर्विंशतिमूर्तय इत्यर्थः । **आत्माद्या** ज्ञानात्मान्ताश्चतस्रो मूर्तयः । वासुदेवाद्यनिरुद्धान्ताश्चतस्रः । विश्वाद्यास्तुरीयान्ताश्चतस्रः । मत्स्यद्याः शिंशुमारान्तास्त्रयोदश । आहत्य भगवतः कलामूर्तयः शतं **कलशनामकाः** कलशशब्दाभिधेयाः । यत्र कलशं पूरयेदिति विधीयते तत्र अजादयः शिंशुमारान्ताः शतं कलाः प्रतिपत्तव्याः । तथा च

दीक्षाङ्गतया विहितकलशपूजायां कर्तव्यायां शिष्याभ्युदयकारणाभिज्ञः **सुधीर्गुरुः** शतं मूर्तीः कलशे आवाहयेदिति शेषः। कुम्भाभिषेकसिद्ध्यर्थमाह— **एताभिरिति** ॥ अजादिशिंशुमारान्ताभिः कलाभिः सहितां **मूलमूर्तिं**मुद्यद्भास्वदित्यादिना उक्तलक्षणं कुम्भोदके आवाहयेदित्यर्थः ॥ ७-९ ॥

**अ.सं.**— इदानीं पूजोपयुक्तं कलशपूजाप्रकारमाह— **एकेति** ॥ **एकपञ्चाशद्वर्णानां** अकारादिक्षकारान्तानां **मूर्तयः** देवताः अजाद्याः नृसिंहान्ताः, (५१) **चतुर्विंशन्मूर्तयः** केशवाद्याः (२४), **आत्माद्याः** आत्मान्तरात्मपरमात्मज्ञानात्मानश्चतस्रो मूर्तयः (४), **वासुदेवाद्याः** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्याश्चतस्रः (४), **विश्वाद्याः** विश्वतैजसप्राज्ञतुरीयाख्याश्चतस्रः (४), मत्स्यः **कच्छपः** कूर्मः, **कोलो** वराहः, नारसिंहः, **वटुर्वामनः** । **जामदग्न्यः** भार्गवरामः। **रघूद्वहः** रघुरामः । **वासिष्ठः** वेदव्यासः । **यादवः** श्रीकृष्णः । **आत्रेयः** दत्तात्रेयः । बुद्धः कल्किः शिशुंमारान्तास्त्रयोदश (१३) मूर्तयः इत्येवं शतमूर्तयः मम **कलाः** स्वरूपांशाः। कलशेति नाम यासां तास्तथोक्ताः कलशदेवता इति यावत्। कलशेति नामकथनम् यत्र कलशपूजा तत्र एता एव देवताः पूज्या इति ज्ञापनार्थम्। 'कलशदेवताः' इति क्वचित्पाठः। **एताभिः** पूर्वोक्ताभिः शतमूर्तिभिः सहितां **मूलमूर्तिं** बुधवरुणान्तर्यामिणं श्रीलक्ष्मीनारायणं कुम्भोदके **सुधीः** पूजकः आवाहयेदिति शेषः। अत्रैके दिवापूजायां कलशोदके आवाह्यानामजादिशतमूर्तीनां विशेषावधिभूतां सूर्यमण्डलान्तर्गतां रात्रौ पूजायां तु चन्द्रमण्डलान्तर्गतां मूलमूर्तिमावाहयेदित्याहुः। अत्र पूजाकाले द्वौ कलशौ पूज्यौ । स्नानीयकलशः पूर्णकलशश्चेति । तत्र स्नानीयकलशे मूलोक्तेनाजादिक्रमेण शतमूर्तीनामावाहनम् । 'कलशदेवताः' इति सामान्योक्तेः । 'आहूय पूजयेदेताः स्नानीयकलशे बुधः' इति पञ्चरात्रोक्तेश्च। पूर्णकलशे तु एकोत्तरशतमूर्तीनामावाहनम् । 'एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः' इति कुम्भोदके विशेषोक्तेः । कुम्भोदके आवाहनं तु शिशुंमारमारभ्याजादिपर्यन्तं पूर्वोक्तक्रमवैपरीत्येन। 'सतारं शिशुंमाराद्यं प्रतिलोमं कलाशतं' इति योगदीपिकोक्तेः ।

शिशुंमारादिभिः पूर्ण आवहेत्कलशे सुधीः ।
अजादिमूर्तिभिः प्राज्ञः अभिषेकं समाचरेत् ।।

इति पञ्चरात्रोक्तेश्च । कुम्भोदकेनाभिषेके अजादिमूर्तिभिरिति मन्त्रविशेषोक्त्या तृतीयाध्याये वक्ष्यमाणः पुरुषसूक्तादिमन्त्रः स्नानीयकलशोदकैरभिषेक इति ज्ञेयम् । 'कुम्भोदकं' इति उदकग्रहणेन उदक एवैषामावाहनं न वहिः । 'कलशस्य मुखे विष्णुः' इतिवदिति सूचयति ।। ७-९ ।।

**गु.दी.–** दीक्षां विना मन्त्रजपेऽधिकाराभावात् दीक्षां सूचयितुं तदुपयुक्तं कलशार्चनं वक्तुं कलशे आवाह्यरूपविशेषानाह— **एकेति ।।** एकाधिक-पञ्चाशद्वर्णानामकारादिक्षकारान्तानामभिधेया इति शेषः । **मूर्तयः** अजाद्याः । **चतुर्विंशन्मूर्तयः** केशवाद्याः, **आत्माद्याः** अत्मान्तरात्मपरमात्मज्ञानात्मानश्चत्वारः । **वासुदेवाद्याः** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाद्याश्चत्वारः । **विश्वाद्याः** विश्वतैजसप्राज्ञतुर्याः । **कोलो** वराहः । **वटुः** वामनस्तेन सहितो नृसिंहः । **वासिष्ठो** व्यासः । **आत्रेयो** दत्तः । इति शतं मम **कलाः** स्वरूपांशाः । 'कल ज्ञाने' इति धातोः ज्ञानसुखरूपत्वात् कलशदेवतात्वाच्च कलशनामका इत्यर्थः । कलशेति नामकथनेन यत्र यत्र कलशपूजोच्यते तत्र सर्वत्र एतेषां पूजेति सूचयति । 'कलशदेवता' इत्यपि क्वचित्पाठः । **मूलमूर्तिं** नारायणम् । 'कुम्भोदके' इत्यनेन उदक एवैतेषामावाहनं न तु 'कलशस्य मुखे विष्णुः कण्ठे रुद्रः' इत्यादाविव बहिरिति सूचयति ।।७.८.९।।

**मङ्गाली–** इदानीं पूजोपयुक्तकलशपूजाप्रकारमाह– **एकेति ।। एकपञ्चाशद्वर्णानां** अकारादिक्षकारान्तानां, **मूर्त्तयो** देवताः अजाद्याःनृसिंहान्ताः । **चतुर्विंशतिमूर्त्तयः** केशवाद्याः । **आत्माद्याः** आत्मान्तरात्मापरमात्माज्ञानात्मानश्चतस्रो मूर्त्तयः । **वासुदेवाद्याः** वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यश्चतस्रः । **विश्वाद्याः** विश्वतैजसप्राज्ञतुरीयाख्याश्चतस्रः। **कच्छपः** कूर्मः । **कोलः** वराहः । **वटुर्वामनः** । **जामदग्न्यः** भार्गवो रामः । **वासिष्ठः** वेदव्यासः । **यादवः** श्रीकृष्णः । **आत्रेयो** दत्तात्रेयः । एवं मत्स्याद्याः शिंशुमारान्तास्त्रयोदशमूर्तयः

इत्येवं शतमूर्त्तयः । मम **कलाः** स्वरूपांशाः । कलशेति नाम यासां तास्तथोक्ताः कलशदेवता इति यावत् । कलशेति नामकथनम् यत्र कलशपूजा तत्र एता एव देवताः पूज्याः इति ज्ञापनार्थं 'कलशदेवताः' इति क्वचित्पाठः । **एताभिः** पूर्वोक्ताभिः शतमूर्तिभिः सहितां **मूलमूर्तिं** बुधवरुणान्तर्यामिणं श्रीलक्ष्मीनारायणं कुम्भोदके **सुधीः** पूजकः आवाहयेदिति शेषः । अत्रैके– दिवा पूजायां कलशोदके आवाह्यानामजादिशतमूर्तीनां विश्लेषावधिभूतां सूर्यमण्डलान्तर्गताम् । रात्रौ पूजायां तु चन्द्रमण्डलान्तर्गतां मूलमूर्तिमावाहयेदित्याहुः । अत्र पूजाकाले द्वौ कलशौ पूज्यौ स्नानीयकलः पूर्णकलशश्चेति । तत्र स्नानीयकलशे मूलोक्तेनाजादिक्रमेण शतमूर्तीनामावाहनम् । 'कलशदेवताः' इति सामान्योक्तेः 'आहूय पूजयेदेताः स्नानीयकलशे बुधः' इति पञ्चरात्रोक्तेश्च । पूर्णकलशे तु एकोत्तरशतमूर्तीनामावाहनम् । 'एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः' इति विशेषोक्तेः । कुम्भोदके आवाहनं शिंशुमारमारभ्याजादिपर्यन्तं पूर्वोक्तक्रमपरीत्येन । 'सतारं शिंशुमाराद्यं प्रतिलोमं कलाशतम्' इति योगदीपिकोक्तेः ।

शिंशुमारादिभिः पूर्ण आवहेत्कलशे सुधीः ।
अजादिमूर्तीभिः प्राज्ञ अभिषेकं समाचरेत् । इति पञ्चरात्रोक्तश्चेति ।

कुम्भोदकेनाभिषेके अजादिमूर्तिभिरिति विशेषोक्त्या तृतीयाध्याये वक्ष्यमाणाः पुरुषसूक्तादिमन्त्राः स्नानीयकलशोदकैरभिषेके इति ज्ञेयम् । 'कुम्भोदके' इत्युदकग्रहणेन उदक एवैषामावाहनम् । न बहिः 'कलशस्य मुखे विष्णुः' इतिवदिति सूचयति ।। ९ ।।

कलशदेवातानां पूजाभिधानम्, शिष्याभिषेकविधानं, अभिषेकफलनिरूपणं च

**तं.सा.** **पूर्वोक्तविधिनाऽभ्यर्च्य प्रतिमां शिष्यमेव वा ।**
**स्नापयेत् पूर्वमर्चायां जपोऽनूनः सहस्रतः ।। १० ।।**

**मूलमन्त्रस्य चाङ्गानां न्यासः स्नानादनन्तरम् ।**
**प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद्भवेत् ।। ११ ।।**

**त.क.**– ततः किं कार्यमित्यत आह– **पूर्वोक्तेति ।।** 'अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम्' (तं.सा.१-५०) इत्यादिनोक्तपीठपूजावरणपूजादिक्रमेण ताः कला अभ्यर्च्य हुत्वा च शिष्यं स्नापयेत् । नित्यपूजाया अपि प्रकृतत्वात् सङ्क्षेपशास्त्रेण ग्रन्थगौरवनिवारणाय नित्यपूजायां प्रतिमायामप्यधिष्ठानं विकल्प्यत इति स्नपने प्रतिमामपि संयोजयति— **प्रतिमामिति ।।** एतेन 'आग्नेयादिषु च क्रमात्' (तं.सा.१-५१) इत्यादिनोक्तपीठपूजाप्रथममेव कलशपूजा वक्तव्या । तत्कुतः क्रमाभङ्गः ? इति चोद्यं निरस्तम् । एवमन्यत्रापि क्रमभङ्गः समाधेयः । 'सर्वोत्तमं हरिं ध्यात्वा' (तं.सा.१-७१) इत्यव्यवधानेन नित्यपूजायाः प्रकृतत्वात् प्रतिमायाः प्रथमोद्देशेऽपि प्रसङ्गानुगुण्याय वाशब्दो भिन्नक्रमो व्याख्येयः । अयोग्यस्याभिषेकं निषेधति— **एवेति ।।** स्वशिक्षाविषयं सात्त्विकप्रकृतिमेवेत्यर्थः । पूर्वोक्तविधिना भगवन्मूर्तीरभ्यर्च्यैव स्नापयेन्न त्वर्चनां विनेति वा ।

एवं सङ्कल्प्योक्तयोः प्रतिमाशिष्ययोरभिषेकविधौ प्रतिमाया विशेषाङ्गान्याह — **पूर्वमिति ।।** अर्चायामभिषेके कर्तव्ये मूलमन्त्रस्य सहस्रादन्यूनो जपः कर्तव्य इत्यर्थः । शिष्ये त्वभिषेकात् पूर्वं न जपोऽपेक्षितः । चशब्देन तत्तत्प्रतिमायां तत्तन्मन्त्रजपो वा कार्य इति सूचयति । 'वीर्यदः केऽभितो वक्त्रम्' (तं.सा.२-१) इत्यादिनोक्ताङ्गानां न्यासोऽभिषेकानन्तरमिति तस्येदानीं कालो विधीयते । अयं च अभिषेको मातृकान्यासादिश्च प्रतिमाशिष्ययोरवश्यं कर्तव्य इति फलभेदोक्त्या स्तूयते— **प्रतिमायां सन्निधिकृदिति ।।** सन्निधिः फलदानोन्मुख्यमित्यवगतम् । ।। १०, ११ ।।

**अ.सं.**– एवमावाहितानां कलशदेवतानां पूजामाह– **पूर्वोक्तविधिनाऽभ्यर्च्येति ।। पूर्वोक्तविधिना** 'तत्रावाह्य हरिं चार्घ्यं...' (तं.सा.१-५९) इत्यादिना प्रथमाध्यायोक्तेन प्रकारेण पीठावरणदेवतापूजासहितार्घ्यादिषोडशोपचारैरर्चयेदित्यर्थः । तदनन्तरकृत्यमाह— **प्रतिमामिति ।।** एवं संस्कृतैः कलशोदकैः उत्सवादौ पर्वकाले च **प्रतिमां स्नापयेत्** अभिषेचयेदित्यर्थः ।

तस्माद्दीक्षाविधानेन शिष्यं भक्तिसमन्वितम् ।
मन्त्रमध्यापयेद्विद्वान् वैष्णवं पापनाशनम् ।। इत्युक्तेः ।

मन्त्रस्वीकारार्थं शिष्यदीक्षाया अपेक्षितत्वात्तस्य वैष्णवदीक्षायां शिष्यस्याभिषेकेऽप्ययमेव विधिरित्यभिप्रायेण प्रसङ्गादुक्तिलाघवायात्रैव शिष्याभिषेकमाह– **शिष्यमेव वेति** ।। मन्त्रस्वीकारार्थं क्रियमाणायां दीक्षायां **शिष्यं वा** शिष्यमपि पूर्वोक्तविधिनैवाभिषेचयेदित्यर्थः । अभिषेकात्पूर्वं कर्तव्यमाह– **पूर्वमिति** ।। **अर्चायां** प्रतिमायामभिषेकात्पूर्वं, सहस्रतः **ऊनः** न्यूनः न भवतीत्यनूनः ऊनश्चेत्सहससंख्याकः मूलमन्त्रस्य जपः कार्यः। स्नानादनन्तरं त्वङ्गानां विभक्तिविपरिणामेनाङ्गेषु न्यासः तत्त्वानां मातृकाणां च न्यासः कार्य इति शेषः ।

अभिषेकात्पुरा वाऽपि पश्चाद्वा परमात्मनि ।
तत्त्वन्यासादिध्यानान्तं कृत्वा पूजां समारभेत् ।।

इति जयतीर्थीयोक्तेः (पद्यमालाताम्-७९) । अत्रार्चायामिति विशेषोक्त्या जपादिकं प्रतिमायामेव । न तु शिष्येऽपीति ज्ञातव्यम् । यद्वा अर्चायामित्युपलक्षणम् । शिष्येऽपि प्रतिमावत् जपादिसर्वं कार्यम् । प्रतिमाशिष्ययोरभिषेकजपन्यासफलमाह– **प्रतिमायामिति** ।। अभिषेकः जपः न्यासश्च प्रतिमायां **सन्निधिकृत्** हरिसामर्थ्याभिव्यञ्जनरूपसन्निधानकृत् । अभिषेकेण जपेन न्यासेन च हरिः प्रतिमायां सन्निहितो भवतीति भावः । शिष्येऽप्यभिषेकादि**र्माहात्म्यकृत्** ज्ञानभक्त्यादिगुणसंपादनपूर्वकं माहात्म्यकृत् महत्त्वकृत् स्वजातिश्रैष्ठ्यकृदिति भावः ।। १०,११ ।।

**गु.दी.– ।। पूर्वोक्तविधिनेति ।।** 'अष्टाक्षरेण सम्पूज्य' इत्यादिना (तं.सा.१-५०) तथा 'अर्घ्यं पाद्यमाचमनीयकम्' इत्यादिना (तं.सा.१-५९) 'लक्ष्मीधरे यजेद्' इत्यादिना (तं.सा.१-६१) 'धूपदीपौ ततो दत्वा नैवेद्यं मूलमन्त्रतः' (तं.सा.१-६६) इत्यादिना चोक्तप्रकारेण **अभ्यर्च्य** प्रपूज्य **प्रतिमाम्** उत्सवादौ **शिष्यं** दीक्षायां **स्नापयेत्** अभिषिञ्चयेदित्यर्थः । तृतीये वक्ष्यमाणप्रकारेण गुरुभिः कलशान् प्रतिष्ठाप्य शुद्धोदकेन पूरयित्वा तुलसीं निक्षिप्य पूर्वोक्तप्रकारेण कलशे पीठपूजां कृत्वा शतमूर्तिभिः सहितायाः मूलमूर्तेरावाहनं कृत्वा धूपादिपूजां विधाय तैः कलशैः शिष्याभिषेचनं कार्यमिति भावः अर्चास्नापनात्पूर्वं कृत्यमाह— **पूर्वमिति** ।। स्नापनादिति शेषः। अर्चायामित्युक्त्या न तु शिष्य इति ज्ञायते।

सहस्रतोऽनूनः **मूलमन्त्रस्य** जपः कार्य इति शेषः । स्नानादनन्तरम् **अङ्गानां च** कृद्धोल्कादीनाम् । चशब्दात् तद्वर्णानां च न्यासः कार्य इत्यर्थः । ननु–

आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ।
पाद्योपस्पर्शनाद्यर्घ्यादीनुपचारान् प्रकल्पयेत् ।। (भा.११-२३-२४)

इत्यादिनाऽभिषेकात्पूर्वं न्यासकथनात् तद्विरोध इति चेत्सत्यम्। एकादशस्कन्धोक्तस्तु मातृकातत्त्वन्यासः। स च स्नापनात्पूर्वमेव भवति। अत्रोक्तस्तु स्नानोत्तरभावी मूलमन्त्रतदङ्गादिन्यास इत्यविरोधः। स्नानफलमाह— **प्रतिमायामिति ।। सन्निधिः** सन्निधानम् । **माहात्म्यं** वर्चोविशेषः ।।१०,११।।

**मङ्गली–** एवमावाहितानां कलशदेवतानां पूजामाह– **पूर्वोक्तेति ।।** पूर्वोक्तविधिना 'तत्रावाह्य हरिं चार्घ्यं'(तं.सा.१-५९) इत्यादिना प्रथमाध्यायोक्तेन प्रकारेण पीठावरणदेवतापूजादिसहिताघ्र्यादिषोडशोपचारैः **अभ्यर्च्य** अभ्यर्चयेदित्यर्थः। तदनन्तरकृत्यमाह– **प्रतिमामिति ।।** एवं संस्कृतैः कलशोदकैः उत्सवादौ पर्वकाले च प्रतिमां **स्नापयेत्** अभिषेचयेदित्यर्थः ।

तस्माधीक्षाविधानेन शिष्यं भक्तिसमन्वितम् ।
मन्त्रमध्यापयेद्विद्वान् वैष्णवं पापनाशनम् ।।

इत्युक्तेर्मन्त्रस्वीकारार्थं शिष्यदीक्षाया अपेक्षितत्वात्। तस्यां वैष्णवदीक्षायां शिष्यस्याभिषेकेऽप्ययमेव विधिरित्यभिप्रायेण प्रसङ्गादुक्तिलाघवायात्रैव शिष्याभिषेकमाह– **शिष्यमेव वेति ।।** मन्त्रस्वीकारार्थं क्रियमाणायां दीक्षायां **शिष्यं वा** शिष्यमपि पूर्वोक्तविधिनैवाभिषेचयेदित्यर्थः । अभिषेकात्पूर्वं कर्तव्यमाह– **पूर्वमिति ।। अर्चायां** प्रतिमायामभिषेकात्पूर्वं सहस्रतः **अनूनः** उनः न्यूनः न भवतीत्यनूनः ऊनश्चेत्सहस्रसङ्ख्यः मूलमन्त्रस्य जपः कार्यः।। स्नानादनन्तरं त्वङ्गानां विभक्तिविपरिणामेनाङ्गेषु न्यासस्तत्वानां मातृकाणां च न्यासः कार्य इति शेषः ।

अभिषेकात्पुरा वापि पश्चाद्वा परमात्मनि ।
तत्वन्यासादि ध्यानान्तं कृत्वा पूजां समाचरेत् ।। इति टीकाकारोक्तेः ।
(पंमा.७९)

अर्चायामिति विशेषोक्त्या जपादिकं प्रतिमायामेव न तु शिष्येऽपीति ज्ञातव्यम् । यद्वा अर्चायामिति उपलक्षणम् । शिष्येऽपि प्रतिमावत्सर्वं जपादि कार्यम् । प्रतिमाशिष्ययोरभिषेकजपन्यफलमाह— **प्रतिमायामिति ॥** अभिषेकादिः प्रतिमायां **सन्निधिकृत्** हरिसामर्थ्याभिव्यञ्जनरूपसन्निधानकृत् । शिष्ये चाभिषेकादिः **माहात्म्यकृत्** ज्ञानभक्त्यादिगुणसंपादनपूर्वकं महत्वकृत् । स्वजातिश्रैष्ठ्यकृदिति भावः ॥ १०,११ ॥

कलशदेवताजादिमूर्त्यर्च्यनफलकथनम्

**तं.सा. कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् ।**
**योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ॥ १२ ॥**

**त.क.–** शिष्ये माहात्म्यमित्येतत् किं रूपमित्यतो विवृणेति— **कलश इति ॥** आयुष्याद्याधिक्यमेव माहात्म्यमिति भावः । यद्वा माहात्म्यं निग्रहानुग्रहसामर्थ्यं प्रसिद्धमेव । फलान्तरमाह— **कलश इति ॥ १२ ॥**

**अ.सं.–** कलशार्चनफलमाह– **कलश इति ॥** कलशः पूर्वोक्तविधिनाऽर्चित इति शेषः । यद्वा कलशाभिषेकफलमाह– **कलश इति ॥ कलशः** कलशाभिषेकः । **मेधां** धारणाशक्तिम् । **श्रियं** कान्तिम् । **भगम्** ऐश्वर्यम् । **योग्यतां** योग्यताभिव्यक्तिम् ॥ १२ ॥

**गु.दी.–** कलशशब्दिताजाद्यर्चनफलमाह— **कलश इति ॥** उक्तविधिना अर्चित इति शेषः । **प्रज्ञां** बुद्धिम् । **मेधां** धारणाशक्तिम् । **श्रियं** शरीरकान्तिम् । **भगम्** ऐश्वर्यादिषट्कम् । **योग्यतां** योग्यताव्यक्तिम् । कलशलक्षणं तूक्तमन्यत्र—

सौवर्णं कलशं रम्यं रौप्यं ताम्रमथापि वा ।
निर्दोषं मृण्मयं वापि चन्दनेन विलेपितम् ॥
षडङ्गुलोन्नताः कार्याः...............॥ इति ॥१२ ॥

**मङ्गाली–** कलशार्चनफलमाह– **कलश इति ॥ कलशः** कलशाभिषेकः **मेधां** धारणाशक्तिं **श्रियं** कीर्तिं **भगं** ऐश्वर्यं **योग्यतां** योग्यताभिव्यक्तिम् ॥ १२ ॥

पूजादौ प्राप्तविघ्नशान्त्यर्थं स्वापेक्षितफलप्राप्त्यर्थं च
मन्त्रहोमनिरूपणम् कुण्डलक्षणकथनं च

**तं.सा. उपसर्गेषु जातेषु दैवभूतात्महेतुषु ।**
**आयुषे वाऽथ शान्त्यै वा श्रिये वा पुण्यवृद्धये ॥ १३ ॥**

**योग्यतायै मन्त्रसिद्ध्यै विष्णोः प्रीत्यर्थमेवं वा ।**
**जुहुयात् सहस्रमयुतं लक्षं कोटिमथापि वा ॥ १४ ॥**

**पूर्ववत् संस्कृते वह्नौ ध्यात्वा देवं जनार्दनम् ।**
**कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम् ॥ १५ ॥**

**त.क.–** नन्वत्र दीक्षाङ्गत्वेनाभिषेकात् पूर्वं पञ्चरात्रादौ शास्त्रे होमोऽभिहितः । स कुतो नोक्तः? इति चेत्, नैष दोषः । 'एवमेव तु दीक्षायामाज्येनैवाऽहुतिः क्रिया'(तं.सा.२-२३) इत्यतिदेशेन वक्ष्यमाणत्वात् । 'अनेन क्रमयोगेन जुहुयात् संस्कृतेऽनले'(तं.सा.१-६६) इति प्रथम एव सूचितत्वाच्च । अध्यायादावेव कुतो नोच्यत इति चेन्न । यद्ययं तत्रोच्येत तर्ह्यभिशेकाङ्गमेव विज्ञायेत । न चायं तथा । यत आध्यात्मिकादिसकलोपद्रवनाशकः, आयुरादिसकलाभ्युदयसाधकः, विष्णु-प्रीतिहेतुतया मोक्षसाधकश्च । तस्मात् क्रमोल्लङ्घनं युक्तमेवेति भावेन होमस्य नैमित्तिकप्रकारमाह — **उपसर्गेष्विति ॥ उपसर्गाः** उपद्रवाः । दैवभूतात्मनो हेतवो येषां ते तथोक्ताः । आधिदैविकाधिभौतिकाध्यात्मिकोपद्रवसूचकेषु जातेषु तच्छान्ति-द्वाराऽयुराद्यभिवृद्ध्यर्थं ऐश्वर्याद्यर्थं तत्तत्कामानुगुण्येन सहस्रमयुतं, लक्षं, कोटिं वा जुहुयादित्यर्थः । उक्तं च पञ्चरात्रे—

................दुःस्वप्नाश्चाशोभनाः ।
कथ्यन्ते मुण्डितैः सार्धं सम्भाषा सह वर्तनम् ॥

स्वयं मुण्डश्च बिभ्राणो जीर्णं नीलं तथाऽम्बरम् ।
कन्थां रक्तां तथा नीलां पुष्पमालां च मूर्धनि ॥

गर्दभारोहणं भग्नयानाधिष्ठानमब्जज ।
छिन्नछत्रधरो वाऽपि महिषारोहणं तथा ॥

दक्षिणाभिमुखो गच्छन् उष्ट्रवाहादिरोहणम् ।
दष्टश्च कपिभिर्देहे सृगालैर्वा वृकैस्तथा ॥

कर्णपादशिरच्छेदौ दन्तानां पातनं तथा ।
नववस्त्रधरः पीडाभटैः पाशेन बन्धनम् ॥

विधवालिङ्गनं नीचैः पाषण्डैः प्रतिलोमजैः ।
वर्तनं गोपुरादीनां पतनं शाखिनामपि ॥

तुरगारोहणं भुक्तिः बौद्धाद्यालयसेवनम् ।
मदिरापायिभिः पापरोगिभिः कितवैः सह ॥

वर्तनं दीपनिर्वापं देवानामुत्सवं तथा ।
ग्रामादिदाहो भक्ष्याणां फलादीनां च भक्षणम् ॥

मधूच्छिष्टं प्रतिच्छाया यात्रा युद्धोद्यमं भटैः ।
अभ्यङ्गं तैललाभं च मरीचं लवणं तथा ॥

लोकयन् एवमादीनि स्वप्ने शान्तिं समाचरेत् ।
जपहोमादिभिर्विद्वान् .......॥ इत्यादि ।

अत्र प्रथमान्तानां पदानां 'दृष्टश्च' इत्यध्याहारेण योजना द्रष्टव्या ॥

प्रकृतस्य होमस्येतिकर्तव्यतामाह– **पूर्ववदित्यादिना** ॥ संस्कृते वह्नौ जनार्दनं देवं ध्यात्वा वह्निगतहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेज्जुहुयादिति सम्बन्धः। संस्कारो नाम यथाशास्त्रं निर्मिते कुण्डे वह्निक्षेपः, प्रक्षिप्तस्य वह्नेः गर्भादानादि-षोडशक्रियानुष्ठानमेवेति मत्वा कुण्डनिर्माणप्रकारं किञ्चिदाह— **कृत्वेति** ॥ तिस्रो मेखला यस्य तदिति विग्रहः। मेखला नामोपर्युपरि विद्यमानवेदिकाविशेषः। मेखलात्रययुतस्य कुण्डलस्योच्छ्रयं विकल्पेनाऽह— **चतुर्विंशेति** ॥ १३, १४, १५ ॥

**अ.सं.–** अथ पूजादौ कर्मणि प्राप्तविघ्नपरिहारार्थं स्वस्वकाम्यफलावाप्त्यर्थं स्वापेक्षितमन्त्रस्य वीर्यवत्तासिद्ध्यर्थं श्रीविष्णुप्रीत्यर्थं च मन्त्रैर्होमः कार्य इत्याह–

पूजादौ प्राप्तविघ्नशान्त्यर्थं स्वापेक्षितफलप्राप्त्यर्थं च
मन्त्रहोमनिरूपणम् कुण्डलक्षणकथनं च

**तं.सा.** **उपसर्गेषु जातेषु दैवभूतात्महेतुषु ।**
**आयुषे वाऽथ शान्त्यै वा श्रिये वा पुण्यवृद्धये ॥ १३ ॥**

**योग्यतायै मन्त्रसिद्ध्यै विष्णोः प्रीत्यर्थमेवं वा ।**
**जुहुयात् सहस्रमयुतं लक्षं कोटिमथापि वा ॥ १४ ॥**

**पूर्ववत् संस्कृते वह्नौ ध्यात्वा देवं जनार्दनम् ।**
**कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम् ॥ १५ ॥**

**त.क.**– नन्वत्र दीक्षाङ्गत्वेनाभिषेकात् पूर्वं पञ्चरात्रादौ शास्त्रे होमोऽभिहितः। स कुतो नोक्तः? इति चेत्, नैष दोषः। 'एवमेव तु दीक्षायामाज्येनैवाऽऽहुतिः क्रिया'(तं.सा.२-२३) इत्यतिदेशेन वक्ष्यमाणत्वात्। 'अनेन क्रमयोगेन जुहुयात् संस्कृतेऽनले'(तं.सा.१-६६) इति प्रथम एव सूचितत्वाच्च। अध्यायादावेव कुतो नोच्यत इति चेन्न। यद्ययं तत्रोच्येत तर्ह्यभिशेकाङ्गमेव विज्ञायेत। न चायं तथा। यत आध्यात्मिकादिसकलोपद्रवनाशकः, आयुरादिसकलाभ्युदयसाधकः, विष्णुप्रीतिहेतुतया मोक्षसाधकश्च। तस्मात् क्रमोल्लङ्घनं युक्तमेवेति भावेन होमस्य नैमित्तिकप्रकारमाह — **उपसर्गेष्विति ॥ उपसर्गाः** उपद्रवाः। दैवभूतात्मनो हेतवो येषां ते तथोक्ताः। आधिदैविकाधिभौतिकाध्यात्मिकोपद्रवसूचकेषु जातेषु तच्छान्ति-द्वाराऽऽयुराद्यभिवृद्ध्यर्थं ऐश्वर्याद्यर्थं तत्तत्कामानुगुण्येन सहस्रमयुतं, लक्षं, कोटिं वा जुहुयादित्यर्थः। उक्तं च पञ्चरात्रे—

................दुःस्वप्नाश्चाशोभनाः ।
कथ्यन्ते मुण्डितैः सार्धं सम्भाषा सह वर्तनम् ॥

स्वयं मुण्डश्च बिभ्राणो जीर्णं नीलं तथाऽम्बरम् ।
कन्थां रक्तां तथा नीलां पुष्पमालां च मूर्धनि ॥

गर्दभारोहणं भग्नयानाधिष्ठानमब्जज ।
छिन्नछत्रधरो वाऽपि महिषारोहणं तथा ॥

दक्षिणाभिमुखो गच्छन् उष्ट्रवाहादिरोहणम् ।
दष्टश्च कपिभिर्देहे सृगालैर्वा वृकैस्तथा ।।

कर्णपादशिरच्छेदौ दन्तानां पातनं तथा ।
नववस्त्रधरः पीडाभटैः पाशेन बन्धनम् ।।

विधवालिङ्गनं नीचैः पाषण्डैः प्रतिलोमजैः ।
वर्तनं गोपुरादीनां पतनं शाखिनामपि ।।

तुरगारोहणं भुक्तिः बौद्धाद्यालयसेवनम् ।
मदिरापायिभिः पापरोगिभिः कितवैः सह ।।

वर्तनं दीपनिर्वापं देवानामुत्सवं तथा ।
ग्रामादिदाहो भक्ष्याणां फलादीनां च भक्षणम् ।।

मधूच्छिष्टं प्रतिच्छाया यात्रा युद्धोद्यमं भटैः ।
अभ्यङ्गं तैललाभं च मरीचं लवणं तथा ।।

लोकयन् एवमादीनि स्वप्ने शान्तिं समाचरेत् ।
जपहोमादिभिर्विद्वान् .......।। इत्यादि ।

अत्र प्रथमान्तानां पदानां 'दृष्टश्च' इत्यध्याहारेण योजना द्रष्टव्या ।।

प्रकृतस्य होमस्येतिकर्तव्यतामाह– **पूर्ववदित्यादिना** ।। संस्कृते वह्नौ जनार्दनं देवं ध्यात्वा वह्निगतहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेज्जुहुयादिति सम्बन्धः । संस्कारो नाम यथाशास्त्रं निर्मिते कुण्डे वह्निक्षेपः, प्रक्षिप्तस्य वह्नेः गर्भादानादि-षोडशक्रियानुष्ठानमेवेति मत्वा कुण्डनिर्माणप्रकारं किञ्चिदाह— **कृत्वेति** ।। तिस्रो मेखला यस्य तदिति विग्रहः । मेखला नामोपर्युपरि विद्यामानवेदिकाविशेषः । मेखलात्रययुतस्य कुण्डलस्योच्छ्रयं विकल्पेनाऽह— **चतुर्विंशेति** ।। १३, १४, १५ ।।

**अ.सं.**– अथ पूजादौ कर्मणि प्राप्तविघ्नपरिहारार्थं स्वस्वकाम्यफलावाप्त्यर्थं स्वापेक्षितमन्त्रस्य वीर्यवत्तासिद्ध्यर्थं श्रीविष्णुप्रीत्यर्थं च मन्त्रैर्होमः कार्य इत्याह–

**उपसर्गेष्विति ।। दैवभूतात्महेतुषु** दैवयोगतः जातेषु महावायुमहावृष्टि-दुर्भिक्षमरकादिषु भूतहेतुषु अन्नाग्न्युदकादिभूतजातेषु स्फोटकहिक्काज्वरादिषु, आत्महेतुषु मनोजातेषु दुःस्वप्नादिषु उपसर्गेषु दुःखेषु जातेषु सत्सु । यद्वा दैवहेतुषु दिवि सूर्यादिग्रहजातेषु धूमकेत्वादिषु, भूतमन्तरिक्षं तत्र जातेषु सूर्यपरिवेषादिषु, आत्मा भूमिः तत्र जातेषु भूकम्पादिषु उपसर्गेषु अरिष्टसूचकेषु उत्पातेषु जातेष्वित्यर्थः । दिव्यन्तरिक्षभौमास्तु बार्हस्पत्ये उक्ताः-

स्वर्भानुकेतुनक्षत्रग्रहतारार्कचन्द्रजम् ।
दिवि चोत्पद्यते यस्मात्तद्दिव्यमिह भाषितम् ।।

यदभ्रसन्ध्यादिग्दाहपरिवेषादयस्तथा ।
यदन्तरिक्षसञ्जातं नाभसं तत्प्रचक्षते ।।
भूमावुत्पद्यते यत्तु तद्भौमं परिकार्तितम् । इति ।

**शान्त्यै** पूर्वोक्तोपसर्गपरिहाराय। **आयुषे** अपमृत्युपरिहारेण पूर्णायुष्यसिद्ध्यर्थम् । **श्रियै** ऐश्वर्याय । **योग्यतायै** स्वयोग्यताभिव्यक्तये । **मन्त्रसिद्ध्यै** मन्त्राणामुद्दिष्टफलदानशक्तिसिद्ध्यै च **पूर्ववत्** 'अनेन क्रमयोगेन' (तं.सा.१-६६) इत्युक्तप्रकारेण पीठपूजादिना संस्कृते वह्नौ देवं ध्यात्वा सहस्राद्याहुतिं जुहुयादिति सम्बन्धः ।

दिव्यन्तरिक्षभौमेषु अद्भुतेषु न संशयः ।
कोटिहोमं विदुः प्राज्ञाः लक्षं वाऽयुतमेव वा ।। इत्युक्तेः ।

अद्भुतेषु उत्पातेषु विकल्पस्याल्पे निमित्ते अल्पमधिके अधिकमिति वा शक्ताशक्तविषयमिति वा व्यवस्था ज्ञेया । कुण्डस्थवह्नौ होमः । अतः कुण्डलक्षणमाह– **कृत्वेति ।।** कृत्वा ध्यात्वेत्यस्य निक्षिपेदित्यनेनान्वयः । तिस्रो मेखलाः यस्येति विग्रहः । मेखला नाम कुण्डपरितः क्रियमाणचतुरस्राकारा वलयाकारा वा चतुरङ्गुलादिपरिमाणदैर्घ्यविस्तारयुता वेदिका । **चतुर्विंशाङ्गुलोच्छ्रितं** भूमेरूर्ध्वं चतुर्विंशत्यङ्गुलैरुच्चं ।। १३, १४, १५ ।।

**गु.दी.**–एवं दीक्षाङ्गभूतमभिषेकमुक्त्वा शान्तिकं काम्यमकाम्यं च होममाह–

**उपसर्गेष्वित्यादिना सार्धश्लोकद्वयेन ।।** **दैवहेतुषु** उल्कापाताद्यनावृष्ट्यादिष्वाधिदैविकेषु । **भूतहेतुषु** भूकम्पनादिभौतिकेषु । **आत्महेतुषु** वामचक्षुःस्फुरणादिष्वाध्यात्मिकेषु । **उपसर्गेषु** दुःखहेतुषु उपद्रवेषु जातेषु सत्सु तत्परिहारायेति शेषः । **पूर्ववत्** अनुयागस्थलवत् षोडशकर्मभिः पीठपूजादिना च संस्कृते वह्नौ देवं ध्यात्वा सहस्रमयुतं लक्षं कोटिं वा जुहुयादित्यन्वयः । निमित्ताल्पेऽल्पो होमः । तदाधिक्ये सोऽप्यधिक इति निमित्ताल्पत्वबहुत्वापेक्षया व्यवस्थितविकल्पो वाशब्दः । **आयुषे** आयुर्वृद्ध्यै । **शान्त्यै** दुस्स्वप्नग्रहवक्रतादिप्रयुक्तपीडानिवृत्त्यै । 'मन्त्रसिद्ध्यै जुहुयात्'इति काम्यो होमः । 'विष्णोः प्रीत्यर्थमेव वा' इत्यकाम्यो होम इति ज्ञेयम् ।।

कुण्डलक्षणपुरस्सरं वह्निस्थापनमाह— **कृत्वेत्यादिना ।।** अत्र 'कुण्डं कृत्वा' इत्यस्य 'वह्निं निक्षिपेत्' (तं.सा.२-१९) इदित्यग्रिमेण निक्षिपेदित्यनेनान्वयः । एवं ध्यात्वेत्यस्यापि । तत्रादौ कुण्डलक्षणमाह— **त्रिमेखलमिति ।।** तिस्रो मेखलाः सोपानायिताः वेदिका यस्य तत् । वेदिकात्रयसंयुक्तमित्यर्थः । **त्रिमेखल**मिति ब्राह्मणाभिप्रायम् । क्षत्रियादीनामन्यथोक्तेर्ग्रन्थान्तरे ।

त्रिमेखलं द्विजकुण्डं क्षत्रियस्य द्विमेखलम् ।
मेखलैकं तु वैश्यस्य.................।। इति ।

यद्वा त्रिमेखलमिति मध्यमः कल्पः । उपलक्षणमेतत् । एकद्विपञ्चमेखला अपि ज्ञेयाः । यथाह लक्षसङ्ग्रहे—

मुख्यास्तु पञ्च ताः प्रोक्ताः मध्यमास्तिस्र एव तु ।
द्वे स्यातामधमे पक्षे एका स्यात् त्वधमाधमा ।। इति ।

मेखलायाः परिमाणमाह– **चतुर्विंशेति ।।** क्रियाविशेषणमेतत् । **चतुर्विंशाङ्गुलोच्छ्रितं** भूमेरूर्ध्वं चतुर्विंशत्यङ्गुलैरुच्छ्रितम् । प्रत्येकमष्टाङ्गुलोच्छ्रितत्त्वं ज्ञेयम् ।।

**मङ्गाली–** अथ पूजादौ कर्मणि प्राप्तविघ्नपरिहारार्थं स्वस्वकाम्यफलावाप्त्यर्थं स्वापेक्षितमन्त्रवीर्यवत्तासिद्ध्यर्थं श्रीविष्णुप्रीत्यर्थं च मन्त्रैर्होमः कर्तव्य इत्याह– **उपसर्गेष्विति । दैवभूतात्महेतुषु** दैवयोगतो जातेषु महावायुवृष्टिदुर्भिक्षमरकादिषु

भूतहेतुषु अन्नाग्न्युदकादिभूतजातेषु स्फोटकाहिक्काज्वरादिषु आत्महेतुषु मनोजातेषु दुःस्वप्नादिषूपसर्गेषु दुःखहेतुषु जातेषु सत्सु। **शान्त्यै** पूर्वोक्तोपसर्गपरिहाराय **आयुषे** अपमृत्युपरिहारेण पूर्णायुष्यसिद्ध्यर्थं **श्रियै** ऐश्वर्याय **योग्यतायै** स्वयोग्यताभिव्यक्तये **मन्त्रसिद्ध्यै** मन्त्राणामुद्दिष्टफलदानशक्तिसिद्ध्यै च । **पूर्ववत्** 'अनेन क्रमयोगेन'(तं.सा.१-६६) इत्युक्तप्रकारेण पीठपूजनादि संस्कृते वह्नौ देवं ध्यात्वा सहस्रादि जुहुयादिति भावः। विकल्प्यस्याल्पे निमित्तेऽल्पमधिकेऽधिकमिति वा शक्ताशक्तविषयमिति वा व्यवस्था ज्ञेया। कुण्डस्थवह्नौ होमोऽतः कुण्डलक्षणमाह– **कृत्वेति ।।** कृत्वा ध्यात्वेत्यस्य निक्षिपेदित्यनेनान्वयः । तिस्रो मेखला यस्येति विग्रहः। मेखला नाम कुण्डपरितः क्रियमाणा चतुरस्राकारा वलयाकारा वा चतुरङ्गुलादिपरिमाणदैर्घ्यविस्तारयुता वेदिका । चतुर्विंशाङ्गुलोच्छ्रितं भूमेरूर्ध्वं चतुर्विंशत्वङ्गुलैरुच्चम् ।। १३,१४,१५ ।।

खातकुण्डलमेखलानां विकल्पेन परिमाणाभिधानम्

**तं.सा. तावत्खातं चतुष्कोणमुच्छ्रितं द्वादशैव(द्वादशेन) वा ।**
**व्यङ्गुलं त्र्यङ्गुलं वाऽपि चतुरङ्गुलमेव वा ।। १६ ।।**
**विस्तारो मेखलानां स्यादन्त्या वा चतुरङ्गुला ।**
**चतुर्विंशाङ्गुला वा तद्विस्तारो द्वादशैव वा ।। १७ ।।**

**त.क.–** अधस्तात् खननप्रमाणमाह— **तावत् खातमिति ।।** चतुर्विंशाङ्गुलप्रमाणखातमित्यर्थः । यद्यपि शास्त्रे वर्तुलमपि कुण्डमभिहितं, तथापि चतुरस्रं प्रशस्तमित्याह— **चतुष्कोणमिति ।।** द्वादशैवोच्छ्रितं कुण्डमित्यनेन चतुर्विंशाङ्गुलोच्छ्रयस्य पाक्षिकत्वमुक्तम्। 'तावत् खातं' इत्येतद् द्वादशाङ्गुलखातमित्यर्थं पदमत्रापि सम्बध्यते। अत्र 'कृत्वा' इत्यस्य

तदात्मनि हरिं ध्यात्वा कुण्डदेवीं श्रियं तथा ।
विष्णुवीर्यात्मकं वह्निं प्रणवेन विनिक्षिपेत् । (तं.सा.२-१९)

इति वक्ष्यमाणेनान्वयः। 'कृत्वा त्रिमेखलम्' इत्युक्तमेखलानां विस्तारं विकल्पेनाह— **त्र्यङ्गुलमिति ।।** 'अन्त्या वा चतुरङ्गुला' इति पक्षान्तरम्। आद्यद्वितीययोस्तु विकल्प इति भावः। कुण्डान्तरपरिमाणं पक्षान्तरेणाह— **चतुर्विंशाङ्गुलं वेति ।।** चतुर्विंशाङ्गुलोच्छ्रितत्वपक्षे कुण्डान्तरालप्रदेशस्तावानेव, पक्षान्तरे तु द्वादशाङ्गुलपरिमित इति योजनीयम्। 'चतुर्विंशाङ्गुलं वा' इत्यत्र वाशब्देन सहस्राहुतिष्वेव चतुर्विंशाङ्गुलपरिमितत्वम्। अयुताहुतौ तु द्विगुण-प्रकारम्। नियुताहुतौ द्विहस्तम्। प्रयुताहुतौ त्रिहस्तम्। शङ्कुसङ्ख्याहुतौ चतुर्हस्तमित्यादिक्रमेणोद्याहुतिपर्यन्तं चतुर्विंशतिहस्तपर्यन्तं परिमाणविकल्पं सूचयति ।। १६, १७ ।।

**अ.सं.–** भूमेरधस्तात् खातं गर्त्तं तावत् चतुर्विंशाङ्गुलं चतुष्कोणं चतुरस्रम्। पक्षान्तरमाह– **उच्छ्रितमिति ।।** द्वादशाङ्गुलमेव वा भूमेरूर्ध्वमुच्छ्रितं खातं चतुर्विंशाङ्गुलमेवेति भावः। खातं द्वादशाङ्गुलं भूमेरूर्ध्वमुच्छ्रितमपि द्वादशाङ्गुलमित्यप्याहुः ।। इदानीं मेखलाविस्तारपीरमाणमाह– **द्व्यङ्गुलमिति ।।** तिसृणां मेखलानां द्व्यङ्गुलं वा त्र्यङ्गुलं वा चतुरङ्गुलं वा विस्तारः स्यात्। पक्षान्तरमाह– **अन्त्या वेति। अन्त्या वा** बाह्या वा नियतचतुरङ्गुलेति। आद्यद्वितीययोः द्व्यङ्गुलादिनियमातिक्रमेऽपि अन्त्यायाश्चतुरङ्गुलत्वं नियतमेवेत्याशयः। पक्षान्तरमाह– **चतुर्विंशेति ।।** तद्विस्तारस्तिसृणां मेखलानां मिलित्वा विस्तारः चतुर्विंशाङ्गुलं वा स्यात्। एकैकस्या अष्टाङ्गुलत्वमिति भावः। पक्षान्तरमाह– **द्वादशैवेति ।।** तिसृणां मेखलानां मिलित्वा विस्तारः द्वादशाङ्गुलं वा स्यात्। प्रत्येकं चतुरङ्गुलत्वमिति भावः। अथवा मेखलादि विस्तारमुक्त्वा इदानीं चतुर्विंशाङ्गुलोच्छ्रितत्वपक्षे कुण्डविस्तारमाह– **चतुर्विंशेति । तद्विस्तारः** तस्य कुण्डस्य विस्तारः अन्तरालः। द्वादशाङ्गुलोच्छ्रितत्वपक्षे कुण्डविस्तारमाह– **द्वादशैव वेति ।।** तथा च वाशब्दौ व्यवस्थितविकल्पार्थौ। खातपरिमाणं तु कुण्डवत्। 'यावत्कुण्डस्य विस्तारः खननं तावदीरितं' इत्युक्तेः। 'कुण्डस्य विस्तारवन्निम्नः' इति वायवियोक्तेश्च। एकद्व्यादिमेखलकुण्डेषु सत्सु त्रिमेखलकुण्डग्रहणं तु तस्योत्तमत्वात्। तदुक्तम् क्रियासारे–

भूतहेतुषु अन्नाग्न्युदकादिभूतजातेषु स्फोटकाहिक्काज्वरादिषु आत्महेतुषु मनोजातेषु दुःस्वप्नादिषूपसर्गेषु दुःखहेतुषु जातेषु सत्सु । **शान्त्यै** पूर्वोक्तोपसर्गपरिहाराय **आयुषे** अपमृत्युपरिहारेण पूर्णायुष्यसिद्ध्यर्थं **श्रियै** ऐश्वर्याय **योग्यतायै** स्वयोग्यताभिव्यक्तये **मन्त्रसिद्ध्यै** मन्त्राणामुद्दिष्टफलदानशक्तिसिद्ध्यै च । **पूर्ववत्** 'अनेन क्रमयोगेन'(तं.सा.१-६६) इत्युक्तप्रकारेण पीठपूजनादि संस्कृते वह्नौ देवं ध्यात्वा सहस्रादि जुहुयादिति भावः । विकल्पस्याल्पे निमित्तेऽल्पमधिकेऽधिकमिति वा शक्ताशक्तविषयमिति वा व्यवस्था ज्ञेया । कुण्डस्थवह्नौ होमोऽतः कुण्डलक्षणमाह– **कृत्वेति ।।** कृत्वा ध्यात्वेत्यस्य निक्षिपेदित्यनेनान्वयः । तिस्रो मेखला यस्येति विग्रहः। मेखला नाम कुण्डपरितः क्रियमाणा चतुरस्राकारा वलयाकारा वा चतुरङ्गुलादिपरिमाणदैर्घ्यविस्तारयुता वेदिका । चतुर्विंशाङ्गुलोच्छ्रितं भूमेरूर्ध्वं चतुर्विंशत्वङ्गुलैरुच्चम् ।। १३,१४,१५ ।।

खातकुण्डलमेखलानां विकल्पेन परिमाणाभिधानम्

**तं.सा.** **तावत्खातं चतुष्कोणमुच्छ्रितं द्वादशैव(द्वादशेन) वा ।**
**व्यङ्गुलं त्र्यङ्गुलं वाऽपि चतुरङ्गुलमेव वा ।। १६ ।।**
**विस्तारो मेखलानां स्यादन्त्या वा चतुरङ्गुला ।**
**चतुर्विंशाङ्गुला वा तद्विस्तारो द्वादशैव वा ।। १७ ।।**

**त.क.–** अधस्तात् खननप्रमाणमाह— **तावत् खातमिति ।।** चतुर्विंशाङ्गुलप्रमाणखातमित्यर्थः । यद्यपि शास्त्रे वर्तुलमपि कुण्डमभिहितं, तथापि चतुरस्रं प्रशस्तमित्याह— **चतुष्कोणमिति ।।** द्वादशैवोच्छ्रितं कुण्डमित्यनेन चतुर्विंशाङ्गुलोच्छ्रयस्य पाक्षिकत्वमुक्तम् । 'तावत् खातं' इत्येतद् द्वादशाङ्गुलखातमित्यर्थं पदमत्रापि सम्बध्यते । अत्र 'कृत्वा' इत्यस्य

तदात्मनि हरिं ध्यात्वा कुण्डदेवीं श्रियं तथा ।
विष्णुवीर्यात्मकं वह्निं प्रणवेन विनिक्षिपेत् । (तं.सा.२-१९)

इति वक्ष्यमाणेनान्वयः। 'कृत्वा त्रिमेखलम्' इत्युक्तमेखलानां विस्तारं विकल्पेनाह— **व्यङ्गुलमिति**॥ 'अन्त्या वा चतुरङ्गुला' इति पक्षान्तरम्। आद्यद्वितीययोस्तु विकल्प इति भावः। कुण्डान्तरपरिमाणं पक्षान्तरेणाह— **चतुर्विंशाङ्गुलं वेति**॥ चतुर्विंशाङ्गुलोच्छ्रितत्वपक्षे कुण्डान्तरालप्रदेशस्तावानेव, पक्षान्तरे तु द्वादशाङ्गुलपरिमित इति योजनीयम्। 'चतुर्विंशाङ्गुलं वा' इत्यत्र वाशब्देन सहस्राहुतिष्वेव चतुर्विंशाङ्गुलपरिमितत्वम्। अयुताहुतौ तु द्विगुण-प्रकारम्। नियुताहुतौ द्विहस्तम्। प्रयुताहुतौ त्रिहस्तम्। शङ्कुसङ्ख्याहुतौ चतुर्हस्तमित्यादिक्रमेणोद्याहुतिपर्यन्तं चतुर्विंशतिहस्तपर्यन्तं परिमाणविकल्पं सूचयति॥ १६, १७॥

**अ.सं.–** भूमेरधस्तात् खातं गर्त्तं तावत् चतुर्विंशाङ्गुलं चतुष्कोणं चतुरस्रम्। पक्षान्तरमाह– **उच्छ्रितमिति**॥ द्वादशाङ्गुलमेव वा भूमेरूर्ध्वमुच्छ्रितं खातं चतुर्विंशाङ्गुलमेवेति भावः। खातं द्वादशाङ्गुलं भूमेरूर्ध्वमुच्छ्रितमपि द्वादशाङ्गुलमित्यप्याहुः॥ इदानीं मेखलाविस्तारपीरमाणमाह– **द्व्यङ्गुलमिति**॥ तिसृणां मेखलानां द्व्यङ्गुलं वा त्र्यङ्गुलं वा चतुरङ्गुलं वा विस्तारः स्यात्। पक्षान्तरमाह– **अन्त्या वेति। अन्त्या वा** बाह्या वा नियतचतुरङ्गुलेति। आद्यद्वितीययोः द्व्यङ्गुलादिनियमातिक्रमेऽपि अन्त्यायाश्चतुरङ्गुलत्वं नियतमेवेत्याशयः। पक्षान्तरमाह– **चतुर्विंशेति**॥ तद्विस्तारस्तिसृणां मेखलानां मिलित्वा विस्तारः चतुर्विंशाङ्गुलं वा स्यात्। एकैकस्या अष्टाङ्गुलत्वमिति भावः। पक्षान्तरमाह– **द्वादशैवेति**॥ तिसृणां मेखलानां मिलित्वा विस्तारः द्वादशाङ्गुलं वा स्यात्। प्रत्येकं चतुरङ्गुलत्वमिति भावः। अथवा मेखलादि विस्तारमुक्त्वा इदानीं चतुर्विंशाङ्गुलोच्छ्रितत्वपक्षे कुण्डविस्तारमाह– **चतुर्विंशेति। तद्विस्तारः** तस्य कुण्डस्य विस्तारः अन्तरालः। द्वादशाङ्गुलोच्छ्रितत्वपक्षे कुण्डविस्तारमाह– **द्वादशैव वेति**॥ तथा च वाशब्दौ व्यवस्थितविकल्पार्थौ। खातपरिमाणं तु कुण्डवत्। 'यावत्कुण्डस्य विस्तारः खननं तावदीरितं' इत्युक्तेः। 'कुण्डस्य विस्तारवन्निम्नः' इति वायवियोक्तेश्च। एकद्व्यादिमेखलकुण्डेषु सत्सु त्रिमेखलकुण्डग्रहणं तु तस्योत्तमत्वात्। तदुक्तम् क्रियासारे–

नाभियोनिसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलम् ।
कुण्डं द्विमेखलं मध्यं नीचं स्यादेकमेखलम् ।। इति ।

'चतुर्विंशाङ्गुलोच्छ्रितं' इति हस्तपरिमितस्यैव कुण्डस्य कथनं तु सहस्रहोमस्य प्रथमप्राप्तत्वात् । अन्यत्रान्यत्कुण्डपरिमाणं ज्ञेयम् । तदुक्तं भविष्यपुराणे–

मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् ।
सहस्रे त्वथ होतव्ये कुर्यात्कुण्डं करात्मकम् ।।

द्विहस्तमयुते तद्वल्लक्षहोमे चतुष्करम् ।
अष्टहस्तात्मकं कुण्डं कोटिहोमे तु नाधिकम् ।। इति ।

यद्वा, एकहस्तमितं कुण्डं घृतपुष्पादिशीघ्रदाहिद्रव्यैः क्रियमाणेषु सहस्रायुत-लक्षकोटिहोमेषु द्रष्टव्यम् । 'एकहस्तमितं कुण्डमेकलक्षे विधीयते' इत्यादेः । अनुयागे तु–

पूर्वोक्तलक्षणैर्युक्तं कुण्डं तालप्रमाणकम् ।
उक्तं सर्वार्चने चैव न स्थिरे तु चतुर्मुख ।।

इति क्रियासारोक्तकुण्डपरिमाणं ज्ञेयम् । तालो नाम मध्यमाङ्गुलिमारभ्य मणिबन्धावधिहस्ततलं सार्धनवाङ्गुल इति यावत् ।। १६,१७ ।।

**गु.दी–** खातोपरिस्थितवेदिकापरिमाणमुक्त्वा तत्परिमाणमाह— **तावदिति ।। तावत्खातं** भूमेरधस्ताच्चतुर्विंशत्यङ्गुलं खातम् । 'यावत्कुण्डस्य विस्तारः खननं तावदीरितम्' इति वचनात् । **चतुष्कोणं** चतुरस्रम् । 'मेखलोच्छ्रितसमः खातः' इति समेखलाखातपक्ष उक्तः । इदानीं मेखलोच्छ्रयसमो न भवति खात इत्यपरमेखलाखातपक्षमभिप्रेत्याह— **उच्छ्रितमिति ।।** उच्छ्रितमेव द्वादश । खातं तु चतुर्विंशाङ्गुलमिति योज्यम् । 'द्वादशेन वा' इत क्वचित्पाठः । **द्वादशेन** अङ्गुलीनां द्वादशकेनोच्छ्रितं वेत्यर्थः । एवं मेखलोच्छ्रयं निरूप्य इदानीं मेखलाविस्तारमाह– **अङ्गुलमिति ।।** तिसृणां मेखलानामेव विस्तारः त्र्यङ्गुलं वा चतुरङ्गुलं वा स्यादिति व्यवस्थितविकल्पः । **वा** अथवा अन्त्या कण्ठसंलग्ना मेखला नियतं चतुरङ्गुला

अनयोरनियम इत्याशयः। अन्त्यमेखलायाश्चतुरङ्गुलत्वमुक्तमेवोच्यत इति पुनरुक्तिर्दोष इति चेन्न। 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन चतुरङ्गुलतानियमार्था पुनरुक्तिरित्यदोषः। **तद्विस्तारः** कुण्डविस्तार एव चतुर्विंशाङ्गुलं वा द्वादश वेत्यर्थः ॥१५-१७॥

**मङ्गाली—** भूमेरधः **तावत्खातं** चतुर्विंशत्यङ्गुलखातं **चतुष्कोणं** चतुरस्रम्। पक्षान्तरमाह— **उच्छ्रितमिति ॥** द्वादशाङ्गुलमेव वा भूमेरूर्ध्वमुच्छ्रितं खातं चतुर्विंशाङ्गुलमेवेति भावः। खातं द्वादशाङ्गुलम्। भूमेरूर्ध्वमुच्छ्रितमपि द्वादशाङ्गुलमित्यप्याहुः। इदानीं मेखलाविस्तारपरिमाणमाह— **द्व्यङ्गुलमिति ॥** तिसृणां मेखलानां द्व्यङ्गुलं वा त्र्यङ्गुलं वा चतुरङ्गुलं वा विस्तरः स्यात्। केचित्तु सर्वासां द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा विस्तार इत्यर्थः। तत्रापवादमाह— **अन्त्या वेति। वाशब्द** एवार्थः। चतुरङ्गुलेत्यतः परं सम्बध्यते। आद्याया द्व्यङ्गुलं विस्तारः। द्वितीयाः त्र्यङ्गुलं अन्त्यायाश्चतुरङ्गुलमिति व्याचक्षते। पक्षान्तरमाह— **अन्त्या वेति ॥ अन्त्या वा** बाह्या वा नियतचतुरङ्गुलेति। **अन्त्या** कण्ठसंलग्नेति केचित्। आद्यद्वितीययोः द्व्यङ्गुलादिनियमातिक्रमेऽपि अन्त्यायाश्चतुरङ्गुलत्वं नियतमेवेत्याशयः। पक्षान्तरमाह— **चतुर्विंशेति ॥** तद्विस्तारः तिसृणां मेखलानां मिलित्वा विस्तारः चतुर्विंशाङ्गुलं वा स्यात्। एकैकस्याः अष्टाङ्गुलत्वमिति भावः। पक्षान्तरमाह— **द्वादशैवेति ॥** तिसृणां मेखलानां विस्तारः द्वादशाङ्गुलं वा स्यात्। प्रत्येकं चतुरङ्गुलत्वमिति भावः। अथवा मेखलाविस्तारमुक्त्वा इदानीं चतुर्विंशाङ्गुलोच्छ्रितत्वपक्षे कुण्डविस्तारमाह— **चतुर्विंशेति ॥ तद्विस्तारः** तस्य कुण्डस्य विस्तारः अन्तरालः। द्वादश्याङ्गुलोच्छ्रितत्वपक्षे कुण्डविस्तारमाह— **द्वादशैव वेति ॥** तथा च वाशब्दौ व्यवस्थितविकल्पार्थौ। खातपरिमाणं तु कुण्डवत्। 'यावत्कुण्डस्य विस्तारः खननं तावदीरितं' इत्युक्तेः। 'कुण्डविस्तारवन्निम्न' इति वायवीयोक्तेश्च। चतुर्विंशाङ्गुलोच्छ्रितमिति हस्तपरिमितस्यैव कुण्डस्य कथनं तु सहस्रहोमस्य प्रथमं प्राप्तत्वात्। अन्यत्रान्यत् कुण्डपरिमाणं ज्ञेयम्। तदुक्तं भविष्यत्पुराणे—

मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् ।
सहस्रे त्वथ होतव्ये कुर्यात् कुण्डं करात्मकम् ।

द्विहस्तमयुते तद्वत् लक्षहोमे चतुष्करम् ।
अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम् ।। इति ।।

यद्वा एकहस्तमितं कुण्डं घृतपुष्पादिशीघ्रदाहिद्रव्यैः क्रियमाणेषु सहस्रायुत लक्षकोटिहोमेषु द्रष्टव्यम् । 'एकहस्तमितं कुण्डं एकलक्षे विधीयते' इत्यादेः । अनुयागे तु 'पूर्वोक्तलक्षणैर्युक्तं कुण्डं तालप्रमाणकम् । उक्तं चरार्चने चैव न स्थिरे तु चतुर्मुख' इति क्रियासारोक्तं कुण्डपरिमाणं ज्ञेयम् । तालो नाम मध्याङ्गुल्यग्रमारभ्य मणिबन्धावधिहस्ततलं सार्धनवाङ्गुल इति यावत् ।।१६,१७।।

योनिलक्षणम्

**तं.सा. अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला ।**
**योनिः खाते च विनता प्रविष्टा व्यङ्गुलं तथा ।। १८ ।।**

**त.क.**– योनिलक्षणमाह– **अश्वत्थपत्रेति** ।। मेखलामारभ्य द्वादशाङ्गुलमिता पूर्वपश्चिमतो द्वादशाङ्गुलोदीर्णा किञ्चिन्निम्नयुता **खाते** कुण्डमध्ये व्यङ्गुलं प्रविष्टा मेखलोपरि दशाङ्गुलदीर्घा अश्वत्थदलाकारा योनिरित्यर्थः । सा तु मेखलोपरि घृतप्रक्षेपणप्रदेशे कर्तव्या । तदुक्तं—

दैर्घ्यात् सूर्याङ्गुला योनिरंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा ।।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।। १८ ।।

**अ.सं.**– 'योनिः स्यान्मेखलोपरि'इत्युक्तेः मेखलोपरि घृतप्रक्षेपणप्रदेशे कर्तव्ययोनिलक्षणमाह– **अश्वत्थेति** ।। **योनिरश्वत्थपत्राकृतिः** अश्वत्थदलाकारा स्यात् । दैर्घ्यमाह– **मूलत इति** ।। **योनिमूलतः** मूलमारभ्य द्वादशाङ्गुला । पूर्वपश्चिमतो दशाङ्गुलदीर्घा सा क्रमात् किञ्चित् किञ्चित् **विनता** प्रवणा सती

**खाते** कुण्डमध्ये द्व्यङ्गुलं प्रविष्टा मेखलोपरि दशाङ्गुलदीर्घा अग्रे द्व्यङ्गुलं कुण्डमध्ये किञ्चित् अधोमुखत्वेन स्थितेति भावः। योनिविस्तारस्तु उक्तस्त्रैलोक्यसारे–

दैर्घ्यात्सूर्याङ्गुला योनिः त्र्यंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा ।।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।

त्र्यंशोना प्रथमे भागे तृतीयांशन्यूना। मेखलाया उपरि एकाङ्गुलेनोन्नता । कुम्भद्वयेन मूलभागे घटाकारवृत्तद्वयेन आज्यधृतिः शुचिः घृतधारणबिलवत् बिलयुक्तेति । तथा–

योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलविस्तारः क्रमान्न्यूनाग्रमिष्यते ।। इति ।। १८ ।।

**गु.दी.**– कुण्डान्तर्घृताद्याहुतिप्रक्षेपार्थं कुण्डान्त्यमेखलोर्ध्वं विनता सती या स्थाप्यते सा योनिरुच्यते यज्ञकाण्डे। तल्लक्षणमाह— **अश्वत्थेति ।।** अत्रैवेत्यनुवर्तते। अश्वत्थपत्राकृतिरेव योनिस्स्यादित्यनेन 'अश्वत्थपत्रवद्योनि-र्गजोष्ट्रप्रतिमाऽथवा' इत्यत्र द्वितीयपादोक्तं पराचष्टे। तद्दैर्घ्यमाह— **स्यादिति** । मूलमारभ्य द्वादशाङ्गुलदैर्घ्योपेता। यद्वा **मूलतः** मूले द्वादशाङ्गुला। उत्तरोत्तरमीषन्न्यूना चेत्यपि ग्राह्यम्। योनिः सा विनता सती खाते द्व्यङ्गुलं प्रविष्टा। अत्र द्वादशाङ्गुलेत्यस्य सामान्यवचनत्वादुच्चत्वे आयतत्त्वे च द्वादशङ्गुलेत्यर्थो ज्ञेयः । यथोक्तं पञ्चरात्रे—

अर्धाङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम् ।। इति ।

कुण्डस्य न्यूनाधिक्यकरणे दोष उक्तः ।

मानहीने महाव्याधिरधिके शत्रुवर्धनम् ।
योनिहीने त्वपस्मारं वाक्कुण्ठः कण्ठवर्जिते ।।
शृङ्गाररहितं यच्च यजमानविनाशकृत् ।। इति ।। १८ ।।

मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् ।
सहस्रे त्वथ होतव्ये कुर्यात् कुण्डं करात्मकम् ।

द्विहस्तमयुते तद्वत् लक्षहोमे चतुष्करम् ।
अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम् ।। इति ।।

यद्वा एकहस्तमितं कुण्डं घृतपुष्पादिशीघ्रदाहिद्रव्यैः क्रियमाणेषु सहस्रायुत लक्षकोटिहोमेषु द्रष्टव्यम् । 'एकहस्तमितं कुण्डं एकलक्षे विधीयते' इत्यादेः । अनुयागे तु 'पूर्वोक्तलक्षणैर्युक्तं कुण्डं तालप्रमाणकम् । उक्तं चरार्चने चैव न स्थिरे तु चतुर्मुख' इति क्रियासारोक्तं कुण्डपरिमाणं ज्ञेयम् । तालो नाम मध्याङ्गुल्यग्रमारभ्य मणिबन्धावधिहस्ततलं सार्धनवाङ्गुल इति यावत् ।।१६,१७।।

योनिलक्षणम्

**तं.सा. अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला ।**
**योनिः खाते च विनता प्रविष्टा व्यङ्गुलं तथा ।। १८ ।।**

**त.क.**– योनिलक्षणमाह– **अश्वत्थपत्रेति** ।। मेखलामारभ्य द्वादशाङ्गुलमिता पूर्वपश्चिमतो द्वादशाङ्गुलोदीर्णा किञ्चिन्निम्नयुता **खाते** कुण्डमध्ये व्यङ्गुलं **प्रविष्टा** मेखलोपरि दशाङ्गुलदीर्घा अश्वत्थदलाकारा योनिरित्यर्थः । सा तु मेखलोपरि घृतप्रक्षेपणप्रदेशे कर्तव्या । तदुक्तं—

दैर्घ्यात् सूर्याङ्गुला योनिरंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा ।।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।। १८ ।।

**अ.सं.**– 'योनिः स्यान्मेखलोपरि'इत्युक्तेः मेखलोपरि घृतप्रक्षेपणप्रदेशे कर्तव्ययोनिलक्षणमाह– **अश्वत्थेति** ।। **योनिरश्वत्थपत्राकृतिः** अश्वत्थदलाकारा स्यात् । दैर्घ्यमाह– **मूलत इति** ।। **योनिमूलतः** मूलमारभ्य द्वादशाङ्गुला । पूर्वपश्चिमतो दशाङ्गुलदीर्घा सा क्रमात् किञ्चित् किञ्चित् **विनता** प्रवणा सती

**खाते** कुण्डमध्ये द्व्यङ्गुलं प्रविष्टा मेखलोपरि दशाङ्गुलदीर्घा अग्रे द्व्यङ्गुलं कुण्डमध्ये किञ्चित् अधोमुखत्वेन स्थितेति भावः। योनिविस्तारस्तु उक्तस्त्रैलोक्यसारे–

दैर्घ्यात्सूर्याङ्गुला योनिः त्र्यंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा ।।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।

त्र्यंशोना प्रथमे भागे तृतीयांशन्यूना। मेखलाया उपरि एकाङ्गुलेनोन्नता । कुम्भद्वयेन मूलभागे घटाकारवृत्तद्वयेन आज्यधृतिः शुचिः घृतधारणबिलवत् बिलयुक्तेति । तथा–

योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलविस्तारः क्रमान्न्यूनाग्रमिष्यते ।। इति ।। १८ ।।

**गु.दी.**– कुण्डान्तर्घृताद्याहुतिप्रक्षेपार्थं कुण्डान्त्यमेखलोर्ध्वं विनता सती या स्थाप्यते सा योनिरुच्यते यज्ञकाण्डे। तल्लक्षणमाह— **अश्वत्थेति ।।** अत्रैवेत्यनुवर्तते। अश्वत्थपत्राकृतिरेव योनिस्स्यादित्यनेन 'अश्वत्थपत्रवद्योनिर्गजोष्ट्रप्रतिमाऽथवा' इत्यत्र द्वितीयपादोक्तं पराचष्टे। तद्दैर्घ्यमाह— **स्यादिति ।** मूलमारभ्य द्वादशाङ्गुलदैर्घ्योपेता। यद्वा **मूलतः** मूले द्वादशाङ्गुला। उत्तरोत्तरमीषन्न्यूना चेत्यपि ग्राह्यम्। योनिः सा विनता सती खाते द्व्यङ्गुलं प्रविष्टा। अत्र द्वादशाङ्गुलेत्यस्य सामान्यवचनत्वादुच्चत्वे आयतत्त्वे च द्वादशाङ्गुलेत्यर्थो ज्ञेयः । यथोक्तं पञ्चरात्रे—

अर्धाङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम् ।। इति ।

कुण्डस्य न्यूनाधिक्यकरणे दोष उक्तः ।

मानहीने महाव्याधिरधिके शत्रुवर्धनम् ।
योनिहीने त्वपस्मारं वाक्कुण्ठः कण्ठवर्जिते ।।
शृङ्गाररहितं यच्च यजमानविनाशकृत् ।। इति ।। १८ ।।

मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् ।
सहस्रे त्वथ होतव्ये कुर्यात् कुण्डं करात्मकम् ।

द्विहस्तमयुते तद्वत् लक्षहोमे चतुष्करम् ।
अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम् ।। इति ।।

यद्वा एकहस्तमितं कुण्डं घृतपुष्पादिशीघ्रदाहिद्रव्यैः क्रियमाणेषु सहस्रायुत लक्षकोटिहोमेषु द्रष्टव्यम् । 'एकहस्तमितं कुण्डं एकलक्षे विधीयते' इत्यादेः । अनुयागे तु 'पूर्वोक्तलक्षणैर्युक्तं कुण्डं तालप्रमाणकम् । उक्तं चरार्चने चैव न स्थिरे तु चतुर्मुख' इति क्रियासारोक्तं कुण्डपरिमाणं ज्ञेयम् । तालो नाम मध्याङ्गुल्यग्रमारभ्य मणिबन्धावधिहस्ततलं सार्धनवाङ्गुल इति यावत् ।।१६,१७।।

योनिलक्षणम्

**तं.सा. अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला ।**
**योनिः खाते च विनता प्रविष्टा व्यङ्गुलं तथा ।। १८ ।।**

**त.क.–** योनिलक्षणमाह– **अश्वत्थपत्रेति** ।। मेखलामारभ्य द्वादशाङ्गुलमिता पूर्वपश्चिमतो द्वादशाङ्गुलोदीर्णा किञ्चिन्निम्नयुता **खाते** कुण्डमध्ये व्यङ्गुलं प्रविष्टा मेखलोपरि दशाङ्गुलदीर्घा अश्वत्थदलाकारा योनिरित्यर्थः । सा तु मेखलोपरि घृतप्रक्षेपणप्रदेशे कर्तव्या । तदुक्तं—

दैर्घ्यात् सूर्याङ्गुला योनिरंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा ।।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।। १८ ।।

**अ.सं.–** 'योनिः स्यान्मेखलोपरि'इत्युक्तेः मेखलोपरि घृतप्रक्षेपणप्रदेशे कर्तव्ययोनिलक्षणमाह– **अश्वत्थेति** ।। **योनिरश्वत्थपत्राकृतिः** अश्वत्थदलाकारा स्यात् । दैर्घ्यमाह– **मूलत इति** ।। **योनिमूलतः** मूलमारभ्य द्वादशाङ्गुला । पूर्वपश्चिमतो दशाङ्गुलदीर्घा सा क्रमात् किञ्चित् किञ्चित् **विनता** प्रवणा सती

**खाते** कुण्डमध्ये द्व्यङ्गुलं प्रविष्टा मेखलोपरि दशाङ्गुलदीर्घा अग्रे द्व्यङ्गुलं कुण्डमध्ये किञ्चित् अधोमुखत्वेन स्थितेति भावः। योनिविस्तारस्तु उक्तस्त्रैलोक्यसारे–

दैर्घ्यात्सूर्याङ्गुला योनिः त्र्यंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा ।।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।

त्र्यंशोना प्रथमे भागे तृतीयांशन्यूना। मेखलाया उपरि एकाङ्गुलेनोन्नता । कुम्भद्वयेन मूलभागे घटाकारवृत्तद्वयेन आज्यधृतिः शुचिः घृतधारणबिलवत् बिलयुक्तेति । तथा–

योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलविस्तारः क्रमान्न्यूनाग्रमिष्यते ।। इति ।। १८ ।।

**गु.दी.**– कुण्डान्तर्घृताद्याहुतिप्रक्षेपार्थं कुण्डान्त्यमेखलोर्ध्वं विनता सती या स्थाप्यते सा योनिरुच्यते यज्ञकाण्डे। तल्लक्षणमाह— **अश्वत्थेति ।।** अत्रैवेत्यनुवर्तते। अश्वत्थपत्राकृतिरेव योनिस्स्यादित्यनेन 'अश्वत्थपत्रवद्योनिर्गजोष्ट्रप्रतिमाऽथवा' इत्यत्र द्वितीयपादोक्तं पराचष्टे। तद्दैर्घ्यमाह— **स्यादिति ।** मूलमारभ्य द्वादशाङ्गुलदैर्घ्योपेता। यद्वा **मूलतः** मूले द्वादशाङ्गुला। उत्तरोत्तरमीषन्न्यूना चेत्यपि ग्राह्यम्। योनिः सा विनता सती खाते द्व्यङ्गुलं प्रविष्टा। अत्र द्वादशाङ्गुलेत्यस्य सामान्यवचनत्वादुच्चत्वे आयतत्त्वे च द्वादशङ्गुलेत्यर्थो ज्ञेयः । यथोक्तं पञ्चरात्रे—

अर्धाङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम् ।। इति ।

कुण्डस्य न्यूनाधिक्यकरणे दोष उक्तः ।

मानहीने महाव्याधिरधिके शत्रुवर्धनम् ।
योनिहीने त्वपस्मारं वाक्कुण्ठः कण्ठवर्जिते ।।
शृङ्गाररहितं यच्च यजमानविनाशकृत् ।। इति ।। १८ ।।

**मङ्गाली–** 'योनिः स्यान्मेखलोपरि' इत्युक्तेः मेखलोपरिघृतप्रक्षेपणप्रदेशे कर्तव्ययोनिलक्षणमाह– **अश्वत्थेति ।। योनिरश्वत्थपत्राकृतिरश्वत्थदलाकरा** स्यात् । दैर्घ्यमाह– **मूलत इति ।।** योनिः **मूलतः** मूलमारभ्य द्वादशाङ्गुला । पूर्वपश्चिमतो द्वादशाङ्गुलदीर्घा सा क्रमात् किञ्चिद्विनता प्रवणा सती खाते कुण्डमध्ये ह्यङ्गुलं प्रविष्टा मेखलोपरि दशाङ्गुलदीर्घा अग्रे ह्यङ्गुलं कुण्डमध्ये किञ्चिदधोमुखत्वेन स्थितेति भावः । योनिविस्तारस्तूक्तः त्रैलोक्यसारे–

दैर्घ्यात्सूर्याङ्गुला योनिः त्र्यंशोना विस्तरेण तु ।
एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा ।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ।
अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा ।। इति ।

त्र्यंशोना प्रथमभागे तृतीयांशन्यूना । मेखलाया उपरि एकाङ्गुलेनोन्नता सूर्याङ्गुला द्वादशांगुला कुम्भद्वयेन मूलभागे घटाकारवृत्तद्वयेन युक्ता । आज्यधृतिः स्रुचि घृतधारणबिलवत् विलयुक्तेति । तथा–

योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिह्येकाङ्गुलविस्तारः क्रमान्यूनाग्रमिष्यते ।। इति ।। १८ ।।

अग्निस्थापनं, अग्नेः षोडशसंस्कारनिरूपणं च

**तं.सा. तदात्मनि हरिं ध्यात्वा कुण्डे देवीं श्रियं तथा ।**
**विष्णुवीर्यात्मकं वह्निं निक्षिपेत् प्रणवेन तु (ह) ।। १९ ।।**

**कुर्यात् क्रियाः षोडश च व्याहृतीभिः पृथक् पृथक् ।**
**वह्नेस्तद्वद्हरेः प्रीतिं कुर्वन् द्रव्यैर्यजेत्ततः ।। २० ।।**

**त.कं.–** वह्नेः जन्मसिद्ध्यर्थमाह– **तदात्मनीति** ।। एवमुक्तरूपे कुण्डे हरिं, देवीं श्रियं च मिथुनीभावेन ध्यात्वा विष्णुवीर्यजातं वह्निं च ध्यात्वा प्रणवेन वह्निं निक्षिपेत् । गर्भादानादिक्रियाङ्गहोमेषु मन्त्रानाह— **व्याहृतीभिरिति** ।। पृथक्

पृथगित्यनेन षोडशस्वपि कर्मसु व्याहृतय एव मन्त्रा इति सूचयति। दीर्घश्छान्दसः। षोडशक्रियाश्च विष्णुतीर्थीयेऽभिहिताः।

गर्भादानं पुंसवनं सीमन्तो वैष्णवो बलिः।
जातकर्मोपनिष्क्रामोऽन्नाशनं चौलकर्म च ॥

उपवीतिर्महानाम्नी महाव्रतमतः परम्।
उपानिषच्च गोदानं समावर्तनमेव च।
विवाहश्चैवमित्येतत् कुर्यात् षोडश च क्रियाः ॥ इति ॥

तदेतत्सर्वं पञ्चरात्रेऽप्युक्तम्–

............होमशालां प्रकल्पयेत्।
धूमनिर्गमनोपेतां चतुरस्रां मनोरमाम् ॥

तन्मध्ये कल्पयेत्कुण्डमाहुत्यनुगुणं शुभम्।
वृत्तं वा चतुरस्रं वा मेखलात्रयसंयुतम् ॥

योनिवन्मृत्स्नया ब्रह्मन् मानं कुण्डस्य कथ्यते।
अयुताहुतिपर्यन्ते होमे हस्तप्रमाणकम् ॥

द्विहस्तं नियुते कुण्डं त्रिहस्तं प्रयुते तथा।
शङ्कुहोमे चतुर्हस्तं महाशङ्कौ तु षट्करम् ॥

वृन्ताहुतौ सप्तहस्तं महावृन्देऽष्टहस्तकम्।
अर्बुदे नवहस्तं स्यान्न्यर्बुदे दशहस्तकम् ॥

एकादशकरं खर्वे परार्धे द्वादशायुतम्।
त्रयोदशकरं मध्येऽन्तके च चतुर्दश ॥

पद्मे कराः पञ्चदश महापद्मे तु षोडश।
समुद्रे विंशतिकरो मोघे द्वाविंशतिः स्मृतम्।
इतोऽधिकाहुतिविधौ चतुर्विंशतिहस्तकम् ॥

सहस्रऽयुतलक्षकोट्यादीनां लक्षणमुक्तं तत्रैव ।

प्रसङ्गादुच्यते सङ्ख्या तां क्रमेणावधारय ।
एकमारभ्य गणयेत् प्रयुतान्तं यथाक्रमम् ।।

स्थानात्स्थानं दशगुणं वर्धयेत्प्रयुतावधि ।
लक्षस्य नियुतं संज्ञा कोटिः प्रयुतमिष्यते ।।

शङ्कमारभ्य गणयेन्महौघान्तं क्रमाद्यथा ।
शतं कोटिसहस्रणां शङ्कुः सम्यङ् निगद्यते ।।

तथैव स्यान्महाशङ्कुः खे वृन्दं सम्प्रकीर्तितम् ।
तद्वदेव महावृन्दमेवमेवार्बुदं स्मृतम् ।।

इत्थं न्यर्बुदमाख्यातमेवं खर्वमुदाहृतम् ।
एवमेव परार्धं स्यान्मध्यमित्थं चतुर्मुख ।।

एवमान्तं तथा पद्मं महापद्मं तथैव च ।
सागरप्रलयावेवं नास्ति सङ्ख्या ततः परम् ।। इत्यादि ।। १९,२० ।।

**अ.सं.**– एवं सपरिकरं कुण्डं निरूप्य तत्राग्निस्थापनविधिं वक्ति– **तदात्मनीति** ।। तादृगलक्षणे कुण्डे **तदात्मनि** तस्य परमात्मनः आत्मनि देहे प्रतिमारूपे कुण्डे वा हरिं **ध्यात्वा** हरिरेव वीर्याधायक इत्यनुसंधायेति भावः । **श्रियं** च रममाणां ध्यात्वा तथा **वह्निं** विष्णुवीर्याभिमानिवह्न्यभिमन्यमानं ध्यात्वा **प्रणवेन** ॐकारेण कुण्डे **निक्षिपेत्** प्रतिष्ठापयेत् । तदुक्तम् योगदीपिकायाम्–

.............. ध्यायेत्तत्र परां श्रियम् ।
रममाणं स्मरेद्देव्या परं नारायणं ततः ।।

अङ्गारान् सुशुभान् शुद्धान् शरावे परिपूर्य च ।
योनावस्य हरेर्वीर्यमिति स्मृत्वा समर्चयेत् ।।
कुण्डे न्यसेद्धरिर्गर्भमाधत्तेति विचिन्तयेत् । (७.४७-४९) इति ।।१९।।

इदानीं अग्नेः षोडशसंस्कारान् कुर्यादित्याह–**कुर्यादिति** ।। व्याहृतिभिश्चतसृभिः पृथक् पृथगमुकसंस्कारं करिष्यामीति सङ्कल्प्य पुष्पं समर्प्य वासुदेवादिकाः

भूरादिव्याहृतिदेवताः ध्यात्वा व्याहृतिमन्त्रैः अग्नेः **षोडशक्रियाः** गर्भाधानादिषोडशसंस्कारान् कुर्यात् । एकैकसंस्कारार्थं चतुश्चतुःसंख्ययाऽऽज्येन जुहुयादिति भावः । ततः पर्युक्षणादि । तदुक्तं योगदीपिकायाम्–

गर्भाधानं करिष्यामीत्याज्ञाय च कृताञ्जलिः ।
मूलेन पुष्पमाराध्य संस्मरेत्तत्र देवताः ।।

वासुदेवादिकास्तत्र स्रुवेण जुहुयात् घृतम् ।
पूर्णाहुत्यां(पूर्णामन्त्यां) समस्तेन पर्युक्षेच्च ततः परम् ।। (७.५३.५४)
इति ।

षोडशसंस्काराश्चोक्ताः विष्णतीर्थीये–

गर्भाधानं पुंसवनं सीमन्तो वैष्णवो बलिः ।
जातकं नाम निष्क्रामोऽन्नाशनं चौलकर्म च ।।

उपनीतिर्महानाम्नी महाव्रतमतः परम् ।
उपनिषच्च गोदानं समावर्तनमेव च ।।
विवाहश्चैवमित्येताः कुर्यात्तु षोडश क्रियाः ।। (३.११४-११६) इति ।

अथ प्रधानहोममाह– **वह्नेरिति ।। ततः** अनेन क्रमयोगेनेत्युक्तप्रकारेण पीठावरणदेवतापूजापूर्वकमावाहनादिषोडशोपचारैरग्नौ हरिं पूज्य इध्माधानादि चक्षुष्मन्तं हुत्वा वह्नेस्तद्गहरेश्च वह्न्यन्तर्यामिणः परशुरामस्य **प्रीतिं कुर्वन्** प्रीत्यर्थमिति यावत् **द्रव्यैर्यजेत्** जुहुयादित्यर्थः । तच्चोक्तं विष्णुतीर्थीये—

पूजयित्वा हरिं वह्नौ इध्माधानाज्यभागकान् ।
हुत्वा प्रधानहवने चतुर्लोकाग्निना कृतः । (३.११७,११८) इति
।।१९,२०।।

**गु.दी.**– अथ कुण्डेऽग्निस्थापनविधिमाह— **तदात्मनीति ।। तस्य** हरेः **आत्मनि** प्रतिमास्थानीये **कुण्डे** कुण्डमध्ये । तादृग्लक्षणोपेतस्वरूपे कुण्ड इति वा । देवीं श्रियं च ऋतुस्नातां तेन रममाणां ध्यात्वा वह्निं विष्णुवीर्यात्मकं ध्यात्वा प्रणवेन वह्निं कुण्डे निक्षिपेत् । हरिरेव वीर्याधायक इत्यनुसन्धाय विष्णुवीर्याभिमानिदेवाभिमन्यमानं वह्निं निक्षिपेदिति भावः । यद्वा तदा **आत्मनि**

स्वात्मनि हरिं ध्यात्वा कुण्डे श्रियं ध्यात्वेत्यर्थः। इदानीमग्नेः षोडश-संस्कारानाह— **कुर्यादिति ।। क्रियाः** गर्भाधानादिषोडशसंस्कारान् ।। **पृथक् पृथगिति** ।। अग्नेराराधानसिद्ध्यर्थममुकसंस्कारार्थं व्याहृतिहोमं करिष्य इति सङ्कल्प्य 'भूः स्वाहा' इत्यादिव्याहृतिभिश्चतस्र आहुतीर्हुत्वा पर्युक्ष्य पुनः सङ्कल्पादीति पृथक् पृथगित्यर्थः।

इदमुक्तं विष्णुतीर्थीये—

उपलिप्य शुचौ देशे कुण्डे वा स्थण्डिलेऽपि वा ।
संस्कृत्य विधिवद्भूमौ समादध्याद्धुताशनम् ।।

पत्राण्यासाद्य सम्प्रोक्ष्य संस्कृत्याज्यं यथोक्तवत् ।
गर्भाधानादिसंस्कारानग्नेः कुर्यात्पृथक् पृथक् ।।

मूलेन पुष्पमाराध्य संस्मरेत् तत्र देवताः ।
वासुदेवादिकास्ताभ्यः स्रुवेण जुहुयाद्धुतम् ।।

गर्भाधानं पुंसवनं सीमन्तं जातकर्म च ।
नामान्नप्राशने चौलं मौञ्जी व्रतचतुष्टयम् ।
गोदानाख्यं स्नातकं च विवाहः पैतृमेधिकम् ।। इति ।।

प्राजापत्यसौम्याग्नेयवैश्वदेवरूपं व्रतचतुष्टयं द्रष्टव्यम्। प्रकृते बहिर्निष्क्रमणेन वैष्णवबलिना वा सह षोडशक्रियाः, अग्नेरुत्तरक्रियाभावादिति द्रष्टव्यम् ।। अथ प्रधानहोममाह— **तद्वेति ।। ततो**ऽग्नौ हरिसम्पूजनोत्तरं गर्भाधानाद्युत्तरं च तद्वहरेः प्रीतिं कुर्वन् वक्ष्यमाणद्रव्यैः हरिं यजेदित्यर्थः ।। १८,१९।।

**मङ्गाली**— एवं सपरिकरं कुण्डं निरूप्य तत्राग्निस्थापनविधिं वक्ति— **तदात्मनीति** ।। तादृग्लक्षणे कुण्डे **तदात्मनि** तस्य परमात्मनः आत्मनि देहे प्रतिमारूपकुण्डे वा **हरिं ध्यात्वा** हरिरेव वीर्याधायक इत्यनुसन्धायेति भावः । श्रियं च रममाणां ध्यात्वा तथा **वह्निं** विष्णुवीर्याभिमानिवह्न्यभिमन्यमानं ध्यात्वा **प्रणवेनोङ्कारेण** कुण्डे निक्षिपेत् । तदुक्तं योगदीपिकायाम्—

................ध्यायेत्तत्र परां श्रियं ।
रममाणं स्मरेद्देव्यां परं नारायणं ततः ।

अङ्गारान् सुशुभान् शुद्धान् शरावोपरि पूर्य च ।
योनौ न्यस्य हरेवीर्यमिति स्मृत्वा समर्चयेत् ।
कुण्डे न्यसेद्धरिं गर्भमाधत्तेति विचिन्तयेत् ।। इति ।।(७.४७,४९)

इदानीमाग्नेः षोडशसंस्कारान् कुर्यादित्याह- **कुर्यादिति** ।। व्याहृतिभिश्चतसृभिः पृथक् पृथक् अमुकसंस्कारं करिष्यामीति संकल्प्य पुष्पं समर्प्य वासुदेवादिकाः भूरादिव्याहृतिदेवताः ध्यात्वा व्याहृतिमन्त्रैः अग्नेः **षोडशक्रियाः** गर्भाधानादिषोडशसंस्कारान् कुर्यात्। एकैकसंस्कारार्थं चतुश्चतुस्सङ्ख्ययाऽऽज्येन जुहुयादिति भावः। ततः पर्युक्षणादि । तदुक्तं योगदीपिकायाम्-

गर्भाधानं करिष्यामीत्याज्ञाय च कृताञ्जलिः ।
मूलेन पुष्पमाराध्य संस्मरेत्तत्र देवताः ।।

वासुदेवादिकास्तत्र स्रुवेण जुहुयात् घृतम् ।
पूर्णामन्त्यां समस्तेन पर्युक्षेच्च ततः परम् ।। इति । (७.५३,५४)

षोडशसंस्काराश्चोक्ताः विष्णुतीर्थीये-

गर्भाधानं पुंसवनं सीमन्तो वैष्णवो बलिः ।
जातकं नाम निष्क्रामोऽन्नाशं चौलकर्म च ।।

उपनीतिर्महानामाम्नी महाव्रतमतः परम् ।
उपनिषच्च गोदानं समावर्तनमेव च ।
विवाहश्चैवमित्येताः कुर्यात् षोडश च क्रियाः ।। इति ।।

नामान्नप्राशनं चौलं मौञ्जी व्रतचतुष्टयम् ।
गोदानाख्यं स्नातकं च विवाहः पैतृमेधिकम् ।।

प्राजापत्यसौम्याग्नेयवैश्वदेवरूपं व्रतचतुष्टयम्। प्रकृते वह्नेः निष्क्रमणे वैष्णवबलिभ्यां सह षोडशक्रियाः अग्नेरुत्तरक्रियाभावादित्याहुः। अथ प्रधान-होममाह— **वह्नेरिति** ।। **ततः** 'अनेन क्रमयोगेन'(तं.सा.१-६६) इत्युक्तप्रकारेण

स्वात्मनि हरिं ध्यात्वा कुण्डे श्रियं ध्यात्वेत्यर्थः। इदानीमग्नेः षोडश-संस्कारानाह— **कुर्यादिति ।।** **क्रियाः** गर्भाधानादिषोडशसंस्कारान् ।। **पृथक् पृथगिति ।।** अग्नेराराधानसिद्ध्यर्थममुकसंस्कारार्थं व्याहृतिहोमं करिष्य इति सङ्कल्प्य 'भूः स्वाहा' इत्यादिव्याहृतिभिश्चतस्र आहुतीर्हुत्वा पर्युक्ष्य पुनः सङ्कल्पादीति पृथक् पृथगित्यर्थः ।

इदमुक्तं विष्णुतीर्थीये—

उपलिप्य शुचौ देशे कुण्डे वा स्थण्डिलेऽपि वा ।
संस्कृत्य विधिवद्भूमौ समादध्याद्धुताशनम् ।।

पत्राण्यासाद्य सम्प्रोक्ष्य संस्कृत्याज्यं यथोक्तवत् ।
गर्भाधानादिसंस्कारानग्नेः कुर्यात्पृथक् पृथक् ।।

मूलेन पुष्पमाराध्य संस्मरेत् तत्र देवताः ।
वासुदेवादिकास्ताभ्यः स्रुवेण जुहुयाद्धुतम् ।।

गर्भाधानं पुंसवनं सीमन्तं जातकर्म च ।
नामान्नप्राशने चौलं मौञ्जी व्रतचतुष्टयम् ।
गोदानाख्यं स्नातकं च विवाहः पैतृमेधिकम् ।। इति ।।

प्राजापत्यसौम्याग्नेयवैश्वदेवरूपं व्रतचतुष्टयं द्रष्टव्यम् । प्रकृते बहिर्निष्क्रमणेन वैष्णवबलिना वा सह षोडशक्रियाः, अग्नेरुत्तरक्रियाभावादिति द्रष्टव्यम् ।। अथ प्रधानहोममाह— **तद्वेति ।।** **ततोऽग्नौ** हरिसम्पूजनोत्तरं गर्भाधानाद्युत्तरं च तद्वहरेः प्रीतिं कुर्वन् वक्ष्यमाणद्रव्यैः हरिं यजेदित्यर्थः ।। १८,१९।।

**मङ्गाली—** एवं सपरिकरं कुण्डं निरूप्य तत्राग्निस्थापनविधिं वक्ति— **तदात्मनीति ।।** तादृग्लक्षणे कुण्डे **तदात्मनि** तस्य परमात्मनः आत्मनि देहे प्रतिमारूपकुण्डे वा **हरिं ध्यात्वा** हरिरेव वीर्याधायक इत्यनुसन्धायेति भावः । श्रियं च रममाणां ध्यात्वा तथा **वह्निं** विष्णुवीर्याभिमानिवह्न्यभिमन्यमानं ध्यात्वा **प्रणवेनोङ्कारेण** कुण्डे निक्षिपेत् । तदुक्तं योगदीपिकायाम्—

................ध्यायेत्तत्र परां श्रियं ।
रममाणं स्मरेद्देव्यां परं नारायणं ततः ।

अङ्गारान् सुशुभान् शुद्धान् शरावोपरि पूर्य च ।
योनौ न्यस्य हरेर्वीर्यमिति स्मृत्वा समर्चयेत् ।
कुण्डे न्यसेद्धरिं गर्भमाधत्तेति विचिन्तयेत् ।। इति ।।(७.४७,४९)

इदानीमाग्नेः षोडशसंस्कारान् कुर्यादित्याह– **कुर्यादिति** ।। व्याहृतिभिश्चतसृभिः पृथक् पृथक् अमुकसंस्कारं करिष्यामीति संकल्प्य पुष्पं समर्प्य वासुदेवादिकाः भूरादिव्याहृतिदेवताः ध्यात्वा व्याहृतिमन्त्रैः अग्नेः **षोडशक्रियाः** गर्भाधानादिषोडशसंस्कारान् कुर्यात्। एकैकसंस्कारार्थं चतुश्चतुस्सङ्ख्ययाऽऽज्येन जुहुयादिति भावः । ततः पर्युक्षणादि । तदुक्तं योगदीपिकायाम्–

गर्भाधानं करिष्यामीत्याज्ञाय च कृताञ्जलिः ।
मूलेन पुष्पमाराध्य संस्मरेत्तत्र देवताः ।।

वासुदेवादिकास्तत्र स्रुवेण जुहुयात् घृतम् ।
पूर्णामन्त्यां समस्तेन पर्युक्षेच्च ततः परम् ।। इति । (७.५३,५४)

षोडशसंस्काराश्चोक्ताः विष्णुतीर्थीये–

गर्भाधानं पुंसवनं सीमन्तो वैष्णवो बलिः ।
जातकं नाम निष्क्रामोऽन्नाशं चौलकर्म च ।।

उपनीतिर्महानामाम्नी महाव्रतमतः परम् ।
उपनिषच्च गोदानं समावर्तनमेव च ।
विवाहश्चैवमित्येताः कुर्यात् षोडश च क्रियाः ।। इति ।।

नामान्नप्राशनं चौलं मौञ्जी व्रतचतुष्टयम् ।
गोदानाख्यं स्नातकं च विवाहः पैतृमेधिकम् ।।

प्राजापत्यसौम्याग्नेयवैश्वदेवरूपं व्रतचतुष्टयम् । प्रकृते वह्नेः निष्क्रमणे वैष्णवबलिभ्यां सह षोडशक्रियाः अग्नेरुत्तरक्रियाभावादित्याहुः । अथ प्रधान-होममाह— **वह्नेरिति** ।। **ततः** 'अनेन क्रमयोगेन'(तं.सा.१-६६) इत्युक्तप्रकारेण

पीठावरणदेवतापूजापूर्वकमावाहनादिषोडशोपचारैरग्नौ हरिं संपूज्य इध्माधानादि चक्षुष्मन्तं हुत्वा वह्नेस्तद्गहरेश्च वह्नयन्तर्यामिणः परशुरामस्य प्रीतिं कुर्वन् प्रीत्यर्थमिति यावत् । द्रव्यैर्यजेज्जुहुयादित्यर्थः । तच्चोक्तं विष्णुतीर्थीये–

पूजयित्वा हरिं वह्नौ इध्माधानाज्यभागकान् ।
हुत्वा प्रधानहवने चतुर्लोकाग्निनाकृतः ।। इति ।।१९,२० ।।

होमद्रव्यनिरूपणम्

**तं.सा. आज्येन वा पायसेन समिद्भिः क्षीरिणामथ ।**
**तिलैर्वा तण्डुलैर्वाऽपि (थ) मधुरैस्त्रिभिरेव वा ।। २१ ।।**

**ब्रह्मवृक्ष(पत्र)समिद्भिर्वा समिद्भिर्वाऽमृतोद्भवैः ।**
**अमृताः समिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः ।। २२ ।।**

**त.क.–** ननु 'अनेन क्रमयेगेन जुहुयात् संस्कृतेऽनले' (तं.सा.१-६६) इत्यनुयागान्तत्वेन होमः कर्तव्य इत्युक्तम् । शिष्यविद्योपदेशाङ्गदीक्षाहोमोऽपि शास्त्रे प्रसिद्धः । यद्वक्ष्यति 'एवमेव तु दीक्षायां' (तं.सा.२-२३) इति । एवमुत्पातदर्शनादौ तच्छान्त्यर्थं होमोऽपि कर्तव्य इत्यव्यवधानेनोक्तम्– 'वह्नोस्तद्गहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेत्ततः' (तं.सा.२-२०) इति । आयुराद्यभिवृद्ध्यर्थं च होमः कर्तव्यः । तदेवमेषु होमेषु द्रव्यं किमित्यतो विकल्पेन दशयति— **आज्येनेति ।। पायसं** क्षीरपक्वमन्नम् । **क्षीरिणां** क्षीरवताम् औदुम्बरादिवृक्षाणां समिद्भिः । **मधुरैः** मधुभिस्त्रिभिराज्यदधिमधुभिः । **ब्रह्मवृक्षो** ब्रह्मपत्रवृक्षः । **अमृतोद्भवैः** अमृतवल्लीसमुद्भूताभिः समिद्भिः । लिङ्गव्यत्ययश्छान्दसः । ततश्चाऽज्याद्यन्यतमद्रव्येण प्रणवाद्यैर्मन्त्रैः यथाशक्ति द्विलक्षाद्याहुतिसङ्ख्यया जुह्वता आयुराद्यभिवृद्धिर्भवतीति शेषः । यजेदिति पूर्वेण वा सम्बन्धः । उपलक्षणमेतद्दूर्वाकुशचरुलाजादीनाम् । अथशब्दो वा दूर्वादिद्रव्यसमुच्चायकः ।

आयुष्कामो द्विलक्षं तु जप्त्वा दूर्वाङ्कुराणि च ।
हुत्वा दशसहस्राणि दीर्घमायुर्हि गच्छति ।।

दधिमध्वाज्यसंयुक्ताश्चतुरङ्गुलिसंयुता: ।
गुलूचीरयुतं हुत्वा मृत्युमेवातिवर्तते ।।

चरुलाजादिभिर्होमं तिलैः सिक्तं पुनर्नवैः ।
कृत्वा व्याधिविनिर्मुक्तो दृढो भवति वै पुनः ।।

श्वेतपद्मायुतैर्होमं श्वेतस्रक्चन्दनाम्बरः ।
गव्यक्षीराशनः कृत्वा महतीं श्रियमश्नुते ।।

दधिमध्वाज्यसंयुक्तैरलक्ष्मीनाशनैः फलैः ।
बिल्वैरयुतहोमेन महाधनपतिर्भवेत् ।।

दध्याज्यश्वितपद्मानि जुहुयाल्लक्षसङ्ख्यया ।
हुत्वाऽयुतमपामार्गां संसिक्तां मधुरैस्त्रिभिः ।।

अश्वत्थकाष्ठैर्दीप्ताग्नौ राजानमनुरञ्जयेत् ।
अन्नमष्टशतं नित्यमन्नकामस्य जुह्वतः ।
भूमौ भूयिष्ठमेवान्नमन्वयेऽपि महीयते ।। इत्यादेः ।

एवं जुहुयात् सहस्रमयुतमित्येतत्,

शनैश्चरदिनेऽश्वत्थं जपेदालभ्य पाणिना ।
पञ्चविंशतिकृत्वश्च जपशुद्धाः पिबेदपः ।।

उदकुम्भं नवं पूर्णमुपस्पृश्यायुतं जपेत् ।
तेनाभिषिक्तस्तोयेन व्याधिभिः परिमुच्यते ।।

अश्नीयादन्वहं विद्वानन्नं प्राप्याभिमन्त्रितम् ।
प्रक्षिप्यौदुम्बरे पात्रे कपिलाज्यं चतुष्पलम् ।।

फलं श्वेतवजाचूर्णं जपेदालभ्य पाणिना ।
शतमष्टोत्तरं जप्त्वा मन्त्रपूतं जलं पिबेत् ।।

इत्यादेरश्वत्थस्पर्शपूर्वकं तत्तन्मन्त्रजपः, मन्त्राभिमन्त्रितोदकपानं, स्नानमभि-

पीठावरणदेवतापूजापूर्वकमावाहनादिषोडशोपचारैरग्नौ हरिं संपूज्य इध्माधानादि चक्षुष्मन्तं हुत्वा वह्नेस्तद्गहरेश्च वह्न्यन्तर्यामिणः परशुरामस्य प्रीतिं कुर्वन् प्रीत्यर्थमिति यावत् । द्रव्यैर्यजेज्जुहुयादित्यर्थः । तच्चोक्तं विष्णुतीर्थीये–

पूजयित्वा हरिं वह्नौ इध्माधानाज्यभागकान् ।
हुत्वा प्रधानहवने चतुर्लोकाग्निनाकृतः ।। इति ।।१९,२० ।।

होमद्रव्यनिरूपणम्

**तं.सा. आज्येन वा पायसेन समिद्भिः क्षीरिणामथ ।**
**तिलैर्वा तण्डुलैर्वाऽपि (थ) मधुरैस्त्रिभिरेव वा ।। २१ ।।**

**ब्रह्मवृक्ष(पत्र)समिद्भिर्वा समिद्भिर्वाऽमृतोद्भवैः ।**
**अमृताः समिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः ।। २२ ।।**

**त.क.–** ननु 'अनेन क्रमयेगेन जुहुयात् संस्कृतेऽनले' (तं.सा.१-६६) इत्यनुयागान्तत्वेन होमः कर्तव्य इत्युक्तम् । शिष्यविद्योपदेशाङ्गदीक्षाहोमोऽपि शास्त्रे प्रसिद्धः । यद्वक्ष्यति 'एवमेव तु दीक्षायां' (तं.सा.२-२३) इति । एवमुत्पातदर्शनादौ तच्छान्त्यर्थं होमोऽपि कर्तव्य इत्यव्यवधानेनोक्तम्– 'वह्नोस्तद्गहरेः प्रीतिं कुर्वन् द्रव्यैर्यजेत्ततः' (तं.सा.२-२०) इति । आयुराद्यभिवृद्ध्यर्थं च होमः कर्तव्यः । तदेवमेषु होमेषु द्रव्यं किमित्यतो विकल्पेन दशयति— **आज्येनेति ।। पायसं** क्षीरपक्वमन्नम् । **क्षीरिणां** क्षीरवताम् औदुम्बरादिवृक्षाणां समिद्भिः । **मधुरैः** मधुभिस्त्रिभिराज्यदधिमधुभिः । **ब्रह्मवृक्षो** ब्रह्मपत्रवृक्षः । **अमृतोद्भवैः** अमृतवल्ली-समुद्भूताभिः समिद्भिः । लिङ्गव्यत्ययश्छान्दसः । ततश्चाऽज्याद्यन्यतमद्रव्येण प्रणवाद्यैर्मन्त्रैः यथाशक्ति द्विलक्षाद्याहुतिसङ्ख्यया जुह्वता आयुराद्यभिवृद्धिर्भवतीति शेषः । यजेदिति पूर्वेण वा सम्बन्धः । उपलक्षणमेतद्दूर्वाकुशचरुलाजादीनाम् । अथशब्दो वा दूर्वादिद्रव्यसमुच्चायकः ।

आयुष्कामो द्विलक्षं तु जप्त्वा दूर्वाङ्कुराणि च ।
हुत्वा दशसहस्राणि दीर्घमायुर्हि गच्छति ।।

दधिमध्वाज्यसंयुक्ताश्चतुरङ्गुलिसंयुताः ।
गुलूचीरयुतं हुत्वा मृत्युमेवातिवर्तते ।।

चरुलाजादिभिर्होमं तिलैः सिक्तं पुनर्नवैः ।
कृत्वा व्याधिविनिर्मुक्तो दृढो भवति वै पुनः ।।

श्वेतपद्मायुतैर्होमं श्वेतस्रक्चन्दनाम्बरः ।
गव्यक्षीराशनः कृत्वा महतीं श्रियमश्नुते ।।

दधिमध्वाज्यसंयुक्तैरलक्ष्मीनाशनैः फलैः ।
बिल्वैरयुतहोमेन महाधनपतिर्भवेत् ।।

दध्याज्यश्वितपद्मानि जुहुयाल्लक्षसङ्ख्यया ।
हुत्वाऽयुतमपामार्गां संसिक्तां मधुरैस्त्रिभिः ।।

अश्वत्थकाष्ठैर्दीप्ताग्नौ राजानमनुरश्चयेत् ।
अन्नमष्टशतं नित्यमन्नकामस्य जुह्वतः ।
भूमौ भूयिष्ठमेवान्नमन्वयेऽपि महीयते ।। इत्यादेः ।

एवं जुहुयात् सहस्रमयुतमित्येतत्,

शनैश्चरदिनेऽश्वत्थं जपेदालभ्य पाणिना ।
पञ्चविंशतिकृत्वश्च जपशुद्धाः पिबेदपः ।।

उदकुम्भं नवं पूर्णमुपस्पृश्यायुतं जपेत् ।
तेनाभिषिक्तस्तोयेन व्याधिभिः परिमुच्यते ।।

अश्नीयादन्वहं विद्वानन्नं प्राप्याभिमन्त्रितम् ।
प्रक्षिप्यौदुम्बरे पात्रे कपिलाज्यं चतुष्पलम् ।।

फलं श्वेतवजाचूर्णं जपेदालभ्य पाणिना ।
शतमष्टोत्तरं जप्त्वा मन्त्रपूतं जलं पिबेत् ।।

इत्यादेरश्वत्थस्पर्शपूर्वकं तत्तन्मन्त्रजपः, मन्त्राभिमन्त्रितोदकपानं, स्नानमभि-

मन्त्रितान्नभक्षणम्, अभिमन्त्रिताज्यपानमित्यादेरप्युपलक्षणम्। अत्रामृतसमिधां परिमाणजिज्ञासायामाह— **अमृता इति ।।** सर्वत्र आयुराद्यनेकफलोद्देश्येषु नानाप्रयोगेष्वपि चतुरङ्गुला एव कर्तव्या इति। अनेन औदुम्बरसमिधां तत्तत्काम्यप्रयोगेषु परिमाणभेदोऽस्तीति सूचितम्। स च पञ्चरात्रादौ व्यक्तः ।। २१, २२ ।।

**अ.सं.**— होमद्रव्याण्याह— **आज्येनेति ।।** क्षीरिणां छेदनेन दुग्धश्राविणामश्वत्थवटौदुम्बरप्लक्षादिवृक्षाणां **समिद्भिस्त्रिभिर्मधुरैर्मधुशर्करागुडैः।** यद्वा मध्वाज्यक्षीरैः। 'आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते' इति कात्यायनोक्तेः। ब्रह्मवृक्षस्य पालाशवृक्षस्य समिद्भिः। **अमृतोद्भवैः** अमृतवल्लीसम्भूतैरित्यर्थः। उक्तं चैतत् फेत्कारितन्त्रे—

शान्तिके तु पयः सर्पिस्तिलक्षीरद्रुमादयः ।
अमृताख्यलता चैव पायसं परिकीर्तितम् ।। इति ।

तथा आहुतिप्रमाणमुक्तम्—

कर्षमात्रघृतं होमे शुक्तिमात्रं पयः स्मृतम् ।
गुडः पलार्धमानः स्याच्छर्कराऽपि तथा मता ।।

तिलाश्चुलकमात्राः स्युस्तण्डुला अर्धमुष्टयः ।
प्रसृत्यर्धं पायसं स्यात्प्रादेशास्समिधःस्मृताः ।। इति ।

गुञ्जाभिः पञ्चभिर्माषः कर्षः षोडशकैस्तथा ।। इति ।

होममन्त्राश्चोक्ताः देवीपुराणे—

गायत्र्या ग्रहमन्त्रैश्च कूष्माण्डैर्जातवेदसैः ।
ऐन्द्रवारुणवाह्नेयैर्वायुसौम्यैः सवैष्णवैः ।।

होमश्शतसहस्रैस्तु अत्युत्कृष्टे विधीयते ।
लक्षहोमः प्रकर्तव्यो सर्वपीडानिवारणः ।। इति ।

समिधां प्रादेशपरिमाणस्य प्रसिद्धत्वात् अमृतवल्लीसमिधामपि तत्परिमाणे प्राप्ते विशेषमाह— **अमृता इति ।। सर्वत्र** सर्वशान्तिकादौ कर्मणि ।

सर्वाद्भुतप्रशमनीं सर्वविघ्नविनाशिनीम् ।
शान्तिके चामृताङ्कुर्यादायुरारोग्यवर्धनीम् ।। इत्युक्तेः ।। २१, २२ ।।

**गु.दी.–** होमद्रव्याण्याह— **आज्येन वेति ।। आज्येन** गोघृतेन । **पायसेन वा** गोक्षीरसिद्धेन । **क्षीरिणाम्** अश्वत्थवटौदुम्बरादीनां समिद्भिः । **त्रिभिर्मधुरैः** आज्यमधुक्षीरैः । 'आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते' इति कात्यायनवचनादिति । मधुशर्करागुडैस्त्रिमधुरैरिति गुरुमतम् । **ब्रह्मवृक्षसमिद्भिः** पालाशसमिद्भिः अश्वत्थसमिद्भिर्वा । क्षीरवृक्षत्वेऽप्यस्य प्राधान्यात् पृथग्ग्रहणम् । **अमृतोद्भवैः** अमृतवल्लीसंज्ञैर्वा यजेत् । विशेष्यलिङ्गत्वाभावश्छान्दसः । अन्यसमित्सु स्मृत्युक्तस्य प्रादेशपरिमाणस्य सम्मतत्वादमृतासु समित्सु परिमाणविशेषमाह— **अमृता इति ।। सर्वत्र** सर्वहोमेषु **चतुरङ्गुलाश्चतुरङ्गुल-**परिमाणा इत्यर्थः ।।२०-२२।।

**मङ्गाली–** होमद्रव्याण्याह– **आज्येनेति ।।** क्षीरिणां छेदनेन दुग्धश्राविणाम् अश्वत्थवटौदुम्बरप्लक्षादिवृक्षाणां समिद्भिः । **त्रिभिर्मधुरैः** मधुशर्करागुडैः । यद्वा मध्वाज्यक्षीरैः 'आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते' इति कात्यायनोक्तेः । ब्रह्मवृक्षस्य पलाशवृक्षस्य समिद्भिः । क्षीरवृक्षत्वेऽपि अस्य प्रधानात् पृथग्ग्रहणम् । **अमृतोद्भवैः** अमृतवल्लीसमुद्भूतैः । विशेष्यलिङ्गत्वाभावश्छा-न्दसः । उक्तं चैतत् फेत्कारितन्त्रे–

शान्तिके तु पयः सर्पिः तिलक्षीरद्रुमादयः ।
अमृताख्यलता चैव पायसं परिकीर्तितम् । इति ।

तथा आहुतिप्रमाणमुक्तम्–

कर्षमात्रं घृतं होमे शुक्तिमात्रं पयःस्मृतम् ।
गुडः पलार्धमानस्स्यात् शर्करापि तथा मता ।।

तिलाश्चुलकमात्राः स्युः तण्डुला अर्धमुष्टयः ।
प्रसृत्यर्थं पायसं स्यात् प्रादेशाः समिधस्मृताः ।। इति ।

गुञ्जाभिः पञ्चभिः माषः कर्षषोडशकैस्तथा । इति ।

होममन्त्राश्चोक्ता देवीपुराणे–

गायत्र्याग्रहमन्त्रैश्च कूष्माण्डैर्जातवेदसैः ।
ऐन्द्रावरुणवाह्नेयैः वायुसौम्यैः सवैष्णवैः ।।

होमः शतसहस्रैस्तु अत्युत्कृष्टो विधीयते ।
लक्षहोमः प्रकर्तव्यः सर्वपीडानिवारणे ।। इति ।

समिधां प्रादेशपरिमाणत्वस्य प्रसिद्धत्वादमृतवल्लीसमिधामपि तत्परिमाणे प्राप्तावाह– **अमृता इति ।। सर्वत्र** शान्तिकादौ कर्मणि ।

सर्वाहुतप्रशमनीं सर्वविघ्नविनाशिनीम् ।
शान्तिके चामृतां कुर्यादायुरारोग्यवर्धनीम् ।। इत्युक्तेः ।। २२ ।।

दीक्षाङ्गहोमद्रव्यनिरूपणम्

**तं.सा.** **एवमेव च दीक्षायामाज्येनैवाहुतिक्रिया (हुतिक्रिया) ।**
**पूजा च कार्या विधिवत् पूर्वं सर्वहुतेष्वपि ।। २३ ।।**

**त.क.**– नन्वत्राचार्योपदेशप्रकारमुपक्रम्योपसर्गशान्तिहोमप्रकार आरभ्यते । तथा च कथं नासङ्गतिरित्यत उपदेशाङ्गदीक्षाहोममेव वक्तुं प्रवृत्ता वयम्, उपसर्गशान्त्यादिहोमं तु प्रसंगादवोचाम इति कथमसङ्गतिरिति भावेनातिदिशति— **एवमेवेति ।।** एवमेव सुधीराचार्यो दीक्षायां जुहुयादिति पूर्वावृत्त्या अन्वयः । तर्हि द्रव्यविकल्पोऽपि स्यादित्यतोऽपवदति— **आज्येनैवेति ।।** कार्येति वक्ष्यमाणमत्राप्यनुकृष्यते । दीक्षायामाज्येनैवाहुतिक्रिया कार्या न शान्तिकादाविव पयआदिद्रव्यैर्विकल्प इति तुशब्दसूचितवैषम्यं विवृतम् । दीक्षाहोमप्रकारः पञ्चरात्रे अभिहितः ।

समिच्चर्वाज्यकान् हुत्वा सम्यक् पुरुषसूक्तः । (य.प्र.क.१)

इति प्रणवकल्पे संगृहीतश्च । एवं मन्त्रोपदेशे प्रवृत्तस्य गुरोरितिकर्तव्यतान्तरमाह– **पूजा चेति ।। सर्वहुतेष्वपीति ।।** सप्तमी पञ्चम्यर्थे । हुतशब्दो भावे निष्पन्नः । सर्वशब्दः पूर्णपरः । पूर्णाहुतेः पूर्वमेवाग्नेः पूजा च विधिवत्कार्या । यद्वा

गुरूपदेशानन्तरं शिष्येतिकर्तव्यतामाह— **पूजा चेति** ।। गुरोर्दीक्षाभिषेकादिना संस्कारपूर्वं मन्त्रं प्राप्तवता शिष्येण गुरुपूजा कार्या । न केवलं दीक्षाङ्गहोमसमाप्तौ। किन्तु **सर्वहुतेष्वपि** शान्त्याद्यर्थहोमसमाप्तावपि गुरुपूजा कार्येत्यर्थः ।। २३ ।।

**अ.सं.–** दीक्षायां होमस्यानुक्तत्वात् प्रसंगात् होमं होमद्रव्यं चाह– **एवमेवेति ।। दीक्षायां** वैष्णवदीक्षायां **एवमेव** कुण्डनिर्माणगर्भाधानादिकं कृत्वा आहुतिक्रिया कार्येति शेषः । **आज्येनैव** नान्यद्रव्येणेत्युक्त्या पायसादीनां निषेधः । विष्णुदीक्षाविधिश्च संक्षेपत उक्तः तत्त्वसारे–

दीक्षां वक्ष्ये प्रसंक्षिप्तामशक्तावार्यसंमताम् ।
मुहूर्ते सर्वतोभद्रे नवकुम्भं निधाय च ।।

सोदकं गन्धपुष्पादिनाऽर्चितं वस्त्रसंयुतम् ।
ततः कलावाहनादिपूजां तत्र विधाय च ।।

ततो देवार्चनं कृत्वा हुवेदष्टोत्तरं शतम् ।
शिष्यं स्वलङ्कृतं वेद्यामुपाग्निमुपवेशयेत् ।।

मन्त्रितं प्रोक्षिणीतोयैरथ कुम्भोदकेन च ।
मूलमन्त्रैः कलामन्त्रैरभिषिच्य न्यसेन्मनुम् ।।
तत्त्वादीन्यस्य के हस्तं स्थाप्य मन्त्रं वदेदथ ।। इति ।

कलामन्त्रैः अजादिभिः । विशेषविधिस्तु योगदीपिकोक्तप्रकारेण ज्ञेयः । इदानीं होमात्प्राक्कर्त्तव्यमाह– **पूजेति ।। सर्वहुतेषु पूर्वं** होमात्प्राक् गणेशपूजा प्रधानदेवतापूजा ग्रहपूजा चेत्यर्थः । चशब्देन पुण्याहवाचनं समुच्चिनोति । हुतेष्वपीत्यपिपदेन होमातिरिक्तोत्सवेष्वपि गणेशपूजादिकमनुजानाति । गणेशपूजादिकं योगदीपिकायामुक्तम्—

शङ्खचक्रगदापद्मधरं नारायणं त्विह ।
प्रसाद्य स्थण्डिले विघ्नं दीपाद्यैः पूजयेत्सुधीः ।।
नान्दीपूजां ततः कृत्वा पुण्याहं वाचयेद्विजैः ।। ६.२४,२५ इति ।

स्कान्दे च–

अहुत्वैता असन्तर्प्य महत्कर्म न चाचरेत् ।
ग्रहयज्ञमकुर्वाणो विघ्नैश्च परिभूयते ।। इति ।। २३ ।।

**गु.दी.**– प्रसङ्गाद्दीक्षायां होमं होम्यं चाह— **एवमिति** ।। क्रिया कार्येति शेषः । आज्येनैव न त्वन्यत्रोक्तचर्वादिनेत्यर्थः ।।

इदानीं सर्वहोमेषु समाप्तेषु कर्तव्यमाह— **पूजेति** ।। **सर्वहुतेषु** सर्वहोमेषु समाप्तेष्विति शेषः। अपिः पश्चादिति पदार्थे । 'अपिः पदार्थसम्भावना' (पा.सू.१-४-९६) इति स्मरणात् । मधुनोऽपि स्यादिति यथा । पश्चाच्च । पूर्वमिति लुप्तोपमा । पूर्वमिव धूपदीपादिपूजा कार्येत्यर्थः ।।२३।।

**मङ्गली**– प्रसङ्गात् होमद्रव्यमाह– **एवमेवेति** ।। **दीक्षायां** वैष्णवदीक्षायां **एवमेव** कुण्डनिर्माणगर्भाधानादिकं कृत्वा आहुतिक्रिया कार्येति शेषः । आज्येनैष नान्यद्रव्येणेत्युक्त्या पायसादीनां निषेधः । विष्णुदीक्षाविधिश्च संक्षेपत उक्तस्तत्त्वसारे–

दीक्षां वक्ष्येऽथ संक्षिप्तामशक्तावार्यसंमताम् ।
मुहूर्ते सर्वतोभद्रे नवकुम्भं निधाय च ।।

सोदकं गन्धपुष्पादिनाऽर्चितं वस्त्रसंयुतम् ।
ततः कलावाहनादिपूजां तत्र विधाय च ।।

ततो देवार्चनं कृत्वा हुवेदष्टोत्तरं शतम् ।
शिष्यं स्वलङ्कृतं वेद्यां उपाग्निमुपवेशयेत् ।।

मन्त्रितं प्रोक्षणीतोयैरथ कुम्भोदकेन च ।
मूलमन्त्रैः कलामन्त्रैरभिषिच्य न्यसेन्मनुम् ।।
तत्त्वादिन्यस्य के हस्तं स्थाप्य मन्त्रं वदेदथ । इति ।

इदानीं होमात्प्राक् कर्तव्यमाह– **पूजेति** ।। **सर्वहुतेषु** सर्वहोमेषु **पूर्वं** होमात्प्राक् **पूजा** गणेशपूजा प्रधानदेवतापूजा ग्रहेपूजा चेत्यर्थः । चशब्देन

पुण्याहवाचनं समुच्चिनोति। हुतेष्वपीत्यपिपदेन होमातिरिक्तोत्सवेष्वपि गणेशपूजादिक-मनुजानाति। गणेशपूजादिकं योगदीपिकायामुक्तम्–

शङ्खचक्रगदापद्मधरं नारायणं त्विह।
प्रसाद्य स्थंडिले विघ्नं दीपाद्यैः पूजयेत्सुधीः ।। (६-२४,२५)
नान्दीपूजां ततः कृत्वा पुण्याहं वाचयेद्विजैः ।। इति । स्कान्देच–
अहुत्वैता असंतर्प्य महत्कर्म न चाचरेत् ।
ग्रहयज्ञमकुर्वाणो विघ्नैश्चपरिभूयते ।। इति ।। २३ ।।

गुरुदक्षिणासाङ्ख्यानिरूपणम्

**तं.सा.** **गुरवे दक्षिणां दद्याल्लक्षे लक्षे शतं सुधीः ।**
**आत्मनैव कृते होमं शक्तितो गुरुदक्षिणाम् (णा) ।। २४ ।।**

।। इति श्रीमदान्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसंग्रहे
द्वितीयोऽध्यायः समाप्तः ।।

**त.क.**– गुरुपूजाप्रकारमेव दक्षिणादानस्य प्राधान्यात्सङ्ख्यापूर्वं दर्शयति– **गुरव इति ।। लक्षे लक्षे** प्रतिलक्षं शतं गाः दक्षिणां दद्यादित्यर्थः। उपलक्षणमेतत् । तृतीये वक्ष्यमाणस्य वस्त्रादेः। ननु यदि गुरुः गृहस्थः स्यात्तदा दीक्षाहोमादौ तस्याधिकाराद्गुरुदक्षिणा युक्ता स्यात्। यदा तु न्यासी गुरुस्तदा दीक्षाहोमादिः कथमिति चेत्तदा शिष्यः स्वयं यं कञ्चित् ऋत्विजं सम्पाद्य स्वयमेव होमं कुर्यात्। ततः न्यासिनो विवक्षितमन्त्रं प्राप्नुयात्।

यदि शिष्यः स्वयमेव होमकर्ता तदाऽपि गुरुदक्षिणा न लुप्यत इत्याह— **आत्मनैवेति ।।** गुरुदक्षिणां शक्तिः गोपश्चकादिरूपेण दद्यादेव। न त्वात्यन्तिकलोपः। यद्वा, शतगवादिप्रदाने शक्तो यदि स्वयमेव होमकरणे कुशलस्तदा स्वयमेव होमं कृत्वा यथाशक्ति गुरुदक्षिणां दद्यात्। यदि सर्वथा निस्स्वः तदाऽपि भक्त्या क्षमापयेदिति वक्ष्यमाणं प्रार्थनं कार्यमित्यर्थः। 'यद्द्यात्

स्कान्दे च–

अहुत्वैता असन्तर्प्य महत्कर्म न चाचरेत् ।
ग्रहयज्ञमकुर्वाणो विघ्नैश्च परिभूयते ।। इति ।। २३ ।।

**गु.दी.–** प्रसङ्गाद्दीक्षायां होमं होम्यं चाह— **एवमिति ।।** क्रिया कार्येति शेषः । आज्येनैव न त्वन्यत्रोक्तचर्वादिनेत्यर्थः ।।

इदानीं सर्वहोमेषु समाप्तेषु कर्तव्यमाह— **पूजेति ।। सर्वहुतेषु** सर्वहोमेषु समाप्तेष्विति शेषः। अपिः पश्चादिति पदार्थे । 'अपिः पदार्थसम्भावना' (पा.सू.१-४-९६) इति स्मरणात् । मधुनोऽपि स्यादिति यथा । पश्चाच्च । पूर्वमिति लुप्तोपमा । पूर्वमिव धूपदीपादिपूजा कार्येत्यर्थः ।।२३।।

**मङ्गाली–** प्रसङ्गात् होमद्रव्यमाह– **एवमेवेति ।। दीक्षायां** वैष्णवदीक्षायां **एवमेव** कुण्डनिर्माणगर्भाधानादिकं कृत्वा आहुतिक्रिया कार्येति शेषः । आज्येनैष नान्यद्रव्येणेत्युक्त्या पायसादीनां निषेधः । विष्णुदीक्षाविधिश्च संक्षेपत उक्तस्तत्त्वसारे–

दीक्षां वक्ष्येऽथ संक्षिप्तामशक्तावार्यसंमताम् ।
मुहूर्ते सर्वतोभद्रे नवकुम्भं निधाय च ।।

सोदकं गन्धपुष्पादिनाऽर्चितं वस्त्रसंयुतम् ।
ततः कलावाहनादिपूजां तत्र विधाय च ।।

ततो देवार्चनं कृत्वा हुवेदष्टोत्तरं शतम् ।
शिष्यं स्वलङ्कृतं वेद्यां उपाग्निमुपवेशयेत् ।।

मन्त्रितं प्रोक्षणीतोयैरथ कुम्भोदकेन च ।
मूलमन्त्रैः कलामन्त्रैरभिषिच्य न्यसेन्मनुम् ।।
तत्त्वादिन्यस्य के हस्तं स्थाप्य मन्त्रं वदेदथ । इति ।

इदानीं होमात्प्राक् कर्तव्यमाह– **पूजेति ।। सर्वहुतेषु** सर्वहोमेषु **पूर्वं** होमात्प्राक् **पूजा** गणेशपूजा प्रधानदेवतापूजा ग्रहेपूजा चेत्यर्थः । चशब्देन

पुण्याहवाचनं समुच्चिनोति । हुतेष्वपीत्यपिपदेन होमातिरिक्तोत्सवेष्वपि गणेशपूजादिक-मनुजानाति । गणेशपूजादिकं योगदीपिकायामुक्तम्–

शङ्खचक्रगदापद्मधरं नारायणं त्विह ।
प्रसाद्य स्थंडिले विघ्नं दीपाद्यैः पूजयेत्सुधीः ।। (६-२४,२५)
नान्दीपूजां ततः कृत्वा पुण्याहं वाचयेद्विजैः ।। इति । स्कान्देच–
अहुत्वैता असंतर्प्य महत्कर्म न चाचरेत् ।
ग्रहयज्ञमकुर्वाणो विघ्नैश्चपरिभूयते ।। इति ।। २३ ।।

गुरुदक्षिणासाङ्ख्यानिरूपणम्

तं.सा. **गुरवे दक्षिणां दद्याल्लक्षे लक्षे शतं सुधीः ।**
**आत्मनैव कृते होमं शक्तितो गुरुदक्षिणाम् (णा) ।। २४ ।।**

।। इति श्रीमदान्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसंग्रहे
द्वितीयोऽध्यायः समाप्तः ।।

**त.क.**– गुरुपूजाप्रकारमेव दक्षिणादानस्य प्राधान्यात्सङ्ख्यापूर्वं दर्शयति– **गुरव इति ।। लक्षे लक्षे** प्रतिलक्षं शतं गाः दक्षिणां दद्यादित्यर्थः । उपलक्षणमेतत् । तृतीये वक्ष्यमाणस्य वस्त्रादेः । ननु यदि गुरुः गृहस्थः स्यात्तदा दीक्षाहोमादौ तस्याधिकाराद्गुरुदक्षिणा युक्ता स्यात् । यदा तु न्यासी गुरुस्तदा दीक्षाहोमादिः कथमिति चेत्तदा शिष्यः स्वयं यं कश्चित् ऋत्विजं सम्पाद्य स्वयमेव होमं कुर्यात् । ततः न्यासिनो विवक्षितमन्त्रं प्राप्नुयात् ।

यदि शिष्यः स्वयमेव होमकर्ता तदाऽपि गुरुदक्षिणा न लुप्यत इत्याह— **आत्मनैवेति ।।** गुरुदक्षिणां शक्तिः गोपञ्चकादिरूपेण दद्यादेव । न त्वात्यन्तिकलोपः । यद्वा, शतगवादिप्रदाने शक्तो यदि स्वयमेव होमकरणे कुशलस्तदा स्वयमेव होमं कृत्वा यथाशक्ति गुरुदक्षिणां दद्यात् । यदि सर्वथा निस्स्वः तदाऽपि भक्त्या क्षमापयेदिति वक्ष्यमाणं प्रार्थनं कार्यमित्यर्थः । 'यद्दद्यात्

सुप्रसन्नधीः । शिष्याय सत्यं भवति' इति न्यायेन सर्वथा गुरुप्रसादः सम्पादनीय इति भावः ।। २४ ।।

।। इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां लक्ष्मीनारायणतीर्थपूज्यपादानां शिष्येण रघुनाथयतिना विरचितायां तन्त्रसारसंग्रहव्याख्यायां तत्त्वकणिकायां द्वितीयोऽध्यायः सम्पूर्णः ।।

**अ.सं.–** होमसमाप्त्यनन्तरं दक्षिणामाह– **गुरव इति ।।** **लक्षे लक्षे** प्रतिलक्षहोमे **शतं** शतसङ्ख्याकाः गाः **गुरवे** आचार्याय दक्षिणां दद्यात् । इदं चाचार्यकर्तृके होमे । यजमानकर्तृके विशेषमाह– **आत्मनैवेति ।।**

।। इति श्रीमदान्दतीर्थभगवत्पादविरचितश्रीमत्तन्त्रसारसङ्ग्रहटीकायां छलारिनृसिंहाचार्यशिष्येण शेषेण कृतायां द्वितीयोऽध्यायः ।।

**गु.दी.–** इदानीं यज्ञे दक्षिणासङ्ख्यामाह— **गुरव इति ।। सुधीः** शोभनबुद्धिः यजमानः **गुरवे** आचार्याय **लक्षेलक्षे** प्रतिलक्षं होमे कृते सतीति शेषः । **शतं** गाः धनादिकं वा दद्यादिति सम्बन्धः । इदं च स्वाशक्त्या ऋत्विगादिकृते होमे । यजमानकर्तृके होमे तु विशेषं वक्ति— **आत्मनैवेति ।।** न तु परेणेत्यर्थः । **शक्तितः** ल्यब्लोपनिमित्तेयं पञ्चमी । शक्तिमनतिक्रम्य गुरुदक्षिणां दद्यादित्यनेन न शतमिति नियम इति सूचयति ।।२४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधक श्रीनिवासाचार्यपूज्यपादानां शिष्येण वेङ्कटपतिना विरचितायां गुर्वर्थदीधितौ द्वितीयोऽध्यायः ।।

**मङ्गाली–** होमसमाप्त्यनन्तरं दक्षिणामाह– **गुरव इति । लक्षेलक्षे** प्रतिलक्षं होमे **शतं** शतसङ्ख्याकाः गाः **गुरवे** आचार्याय दक्षिणं दद्यात् । इदं चाचार्यकतृकहोमे । यजमानकर्तृके विशेषमाह– **आत्मनैवेति ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारस्य तत्तट्टीकाकारोक्तार्थसङ्ग्रहरूपायां मङ्गलधर्माचार्यरचितायां टीकायां द्वितीयोऽध्यायः ।।

# ।। तृतीयोऽध्यायः ।।

## श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः

प्रतिमानिर्माणप्रकाराभिधानम्, प्रतिमानिर्माणोपयुक्तलोहकथनं च

**तं.सा.** **प्रतिष्ठां कारयन् विष्णोः कुर्यात् सुप्रतिमां बुधः ।**
**लोहैर्वा शिलया दार्वा मृदा वाऽपि यथाक्रमम् ।। १ ।।**

**त.क–** 'हृदये वाऽचले वापि' (तं.सा.१-४९) इति प्रतिमायां पूजा कर्तव्येत्युक्तं पूर्वाध्याये । सैव पूजा प्रतिमानिर्माणादिप्रकारकथनेन विवरणीया । किं च—

(तत्) स्थापयित्वा तु मां स्थाने शास्त्रदृष्टेन वर्त्मना ।
यजस्व मां वक्ष्यमाणविधिना कमलासान ।।

कर्षणादिप्रतिष्ठान्तं क्रियाविधिमथ शृणु ।
वक्ष्यामि येन विधिना प्रसीदाम्यचिरादहम् ।।

अधीतिनो ये विद्यासु शास्त्राणि श्रुतपूर्विणः ।
ते मां भजन्ते पुरूषा ज्ञानयोगपरायणाः ।।

अन्येषामप्यविदुषां भक्तानां बहुसम्पदाम् ।
जायते सिद्धिरचिरात् स्थाने स्थापयतां च माम् ।।

ज्ञानं योगश्च तदिदं केवलं मुक्तिकारणम् ।
स्थापयित्वाऽच्युतं स्थाने पुरुषः सर्वमश्नुते ।।

यो मां संस्थाप्य सदने समाराधयति स्वयम् ।
न तस्य केवलं सिद्धिः स्थानाभ्यर्णजुषामपि ।
तस्मात् सर्वात्मना ब्रह्मन् स्थाने मां स्थापयेत् पुमान् ।। इत्यादिना,

प्रतिष्ठायाः सार्वभौमः सद्मनां भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्समतामियात् ।
भक्तियोगं स लभते एवं यः पूजयीत माम् ।।

इत्यादिना च मन्त्रसिद्ध्याद्युपयुक्तपूजाङ्गत्वावगमेन प्रतिष्ठादेरावश्यकत्वात् प्रतिष्ठादिरवश्यं वक्तव्यः । प्रतिष्ठा च प्रतिमानिर्माणमपेक्षते । प्रतिमा च–

'प्रतिमा कर्मार्चा चोत्सवार्चा च बल्यर्चा च तथैव च ।
स्थानतीर्थोभयार्चा च स्वापोत्थानार्चया सह ।।

प्रतिमाः षड् विधातव्यास्तत्पूजा चोत्तमा भवेत् ।
तिसृभिर्मध्यमा ज्ञेया आद्यया चाधमा भवेत् ।।

इत्यादिना अनेकविधा । अङ्गुष्ठपरिमाणमारभ्य पुरुषप्रमाणपर्यन्तं तन्मानं चानेकविधम् । यथोक्तम् —

ध्रुवबेरसमुच्छ्राये विभक्ते दशधा सति ।
एकांशेन प्रतिकृतेः कर्मार्चायाः समुच्छ्रयः ।।

द्वादशांशेन यदा स्यात् षोडशांशेन वा भवेत् ।
यदाऽष्टादशभागेन चतुर्विंशांशमेव वा ।।

महाबेरङ्गुलापेक्षा यद्वा तस्याः समुन्नतिः ।
चतुर्विंशाङ्गुला यद्वा भवेदष्टादशाङ्गुला ।।

षोडशाङ्गुलमाना वा यद्वा स्याद् द्वादशाङ्गुला ।
अष्टाङ्गुलाऽथवा यद्वा षडङ्गुलसमुच्छ्रया ।।

चतुरङ्गुलमाना वा यद्वा मानाङ्गुलेन तु ।
पूर्वोक्ताङ्गुलमानानि कर्तव्यानि यथारुचि ।। इत्यादि ।

तत्रास्य संक्षेपशास्त्रत्वादर्चामधिकृत्य प्रतिमालक्षणाद्यस्मिन्नध्याये प्रतिपाद्यते । तत्र मानमनेकविधम् । यथोक्तम्—

मानं प्रमाणमुन्मानं परिमाणोपमानकम् ।
लम्बमानं षडेतानि मानानि कथयाम्यहम् ।।

मानमुत्सेधमानं स्यादुन्मानं नहनं भवेत् ।
मानं च तिर्यगूर्ध्वं यत् तत्प्रमाणमिहोच्यते ।। इत्यादि ।

तथाचोत्सेधमानं प्रथमतो वक्तव्यम्। उत्सेधमानं चैकतालमारभ्य दशतालपर्यन्तमनेकविधम्। उक्तं च पाद्मे तन्त्रे—

उत्तमाधममध्यानि तालानि कमलासन ।
एकादिदशपर्यन्तं सङ्ख्यया भेदवन्ति च ।। इत्यादि ।

'ध्रुवायामुत्तमं तालम्' इत्युत्तमतालस्य ध्रुवायां विनियुक्तत्वात् 'अर्चायां मध्यमम् भवेत्' इति वचनानुसारेण मध्यमतालमनुसृत्योत्सेधमानं वक्तव्यम्। तदप्यष्टतालमुत्तममध्यमाधमभेदेन त्रिविधम्। शताङ्गुलमुत्तमम्। षण्णवात्यङ्गुलं मध्यमम्। द्विनवत्यङ्गुलमधमम्। एतदप्युक्तम्–

अष्टतालं शतं श्रेष्ठं मध्यमं षण्णवत्यपि ।
तच्चतुर्हीनमधममथ तालं प्रकीर्तितम् ।। इति ।।

अङ्गुलिमानं चानेकविधम्। प्रतिमामानमङ्गुलिमानं चेत्यादि। तत्राष्टतालमध्यमकल्पमनुसृत्य गृहार्चाप्रतिमदिसाधारण्येन तत्प्रकृतिद्रव्यकथनपूर्वकं साधारणलक्षणं सूचयन् प्रतिमानिर्माणं विधत्ते– **प्रतिष्ठां कारयन् विष्णोरित्यादिना ।।** गुरूपदेशान्मन्त्रं प्राप्तो बुधः यतो मन्त्राणां पूर्वोक्तरीत्या पूजायां विनियोगः, पूजा च 'अप्रतिष्ठितंबिम्बस्य पूजनं नैव शक्यते' इत्यादिवचनात् प्रतिष्ठामपेक्षते, स च स्वकर्मीभूतबिम्बमपेक्षते। ततो यथाक्रममं यथोपयोगं विष्णोः प्रतिमायां प्रतिष्ठां सन्निधानं **कारयन्**, स्वार्थे णिच्, कुर्वन् बुधः **सुप्रतिमां** सुलक्षणां **कुर्यात्** कारयेदित्यर्थः। तत्र प्रकृतिद्रव्याण्याह— **लोहैर्वेति ।। यथाक्रमं** यथाशक्ति। **लोहैः** स्वर्णरजतताम्रादिभिः। तत्राशक्तौ शिलया। तदलाभे दारुणा। तदलाभे मृदा वाऽपि कारयेत्। अत्र दार्वेति यणादेशश्छान्दसः ।। १ ।।

**अ.सं.–** 'पूज्यश्च भगवान्नित्यं'(१.४९) इत्यत्र भगवत्पूजा कार्येत्युक्तम्। पूजायाश्च 'प्रतिमास्वप्रबुद्धानां' इत्युक्तेरज्ञानां प्रतिमासापेक्षत्वात् प्रतिमायाश्च

'ऊर्ध्वदृष्टिमधोदृष्टिं तिर्यग्दृष्टिं विवर्जयेत्' इत्यादिवचनेन लक्षणरहिताया अपूज्यत्वोक्त्या लक्षणोपेताया एव पूज्यत्वावगमात् प्रतिमालक्षणं तत्प्रसंगात् प्रतिमानिर्माणविधिं च प्रतिमास्थापनार्थं देवालयनिर्माणविधिं च 'अप्रतिष्ठित-विम्बस्य पूजनं सिद्धिहानिकृत्' इत्युक्तेः प्रतिमायाः प्रतिष्ठाविधानं च 'अशुचित्वं यदा भूयात्पुनस्संप्रोक्षणं भवेत्' इति स्मृतेः सम्प्रोक्षणविधिं च जीर्णदेवालयोद्धारादिकं चाहास्मिन्नध्याये ।

तत्रादौ प्रतिमानिर्माणप्रयोजनमाह– **प्रतिष्ठामिति ।।** अत्र प्रतिष्ठाशब्देन प्रतिष्ठानन्तरकालीनमूजा लक्षणया गृह्यते। लक्षणाप्रयोजनं तु प्रतिष्ठाया आवश्यकत्वद्योतनम् । 'अप्रतिष्ठितबिम्बस्य पूजनं सिद्धिहानकृत्' इत्युक्तेः । तथा च **विष्णोः** विष्णुप्रतिमायाः **प्रतिष्ठां** पूजां **कारयन्** कुर्वन् वा । अन्यैः कारयितुं स्वयं कर्त्तुं चेति यावत् । **सुप्रतिमां** लक्षणवत्तया शोभनां प्रतिमां **कुर्यात्** कारयेच्छिल्पिभिरिति शेषः । अन्तर्णीतणिजर्थोऽयम् । निपुणश्चेत्स्वयमेव कुर्यादिति वा । अत एव **बुधः** इत्युक्तम् । प्रतिमालक्षणज्ञानी तन्निर्माणप्रकाराभि-ज्ञश्चेत्यर्थः । प्रतिमानिर्माणे योग्यद्रव्यमाह– **लोहैरिति ।।** सुवर्णरजतताम्रै-स्त्रिविधैरित्यर्थः । 'सुवर्णं रजतं ताम्रं त्रिविधं लोहमिष्यते' इत्युक्तेः । **दार्वा** **काष्ठेन** । दारुशब्दः स्त्रीलिङ्गोऽप्यस्ति । तृतीयान्तपदानां प्रतिमामित्यनेनान्वयः । **यथाक्रमं** लोहैर्वेत्यादेः । प्राशस्त्यक्रममपेक्ष्य पूर्वपूर्वालाभे उत्तरोत्तरग्रहणमिति भावेनानेकपक्षोक्तिरिति भावः । उक्तं च पद्मसंहितायाम्–

हिरण्मयी प्रतिकृतिः सर्वसम्पत्करी भवेत् ।
वित्तं पशुश्च विजयं विज्ञानं राजती फलम् ।।

ताम्रा धर्मं च वृद्धिं च करोति बहुसौख्यदा ।
खेदप्रदा शिलाजा च तेजोदा दारुजा तथा ।।
शुभा प्रोक्ता मृण्मयी च पैत्तली शत्रुनाशिनी ।। इति ।। १ ।।

**गु.दी.–** सुरैः सम्पद्भिरर्च्याय मानुषैरुदविप्लुषा ।
वेदव्यासाय देवाय नमस्कुर्मोऽनिशं वयम् ।। १ ।।

प्रणम्य श्रीनिवासार्यगुरूणां पादपङ्कजे ।
तन्त्रसारतृतीयाध्यायार्थं वक्ष्यामि लेशतः ।। २ ।।

पूजायाः सुप्रतिष्ठितप्रतिमासापेक्षत्वादग्रे मूर्तिप्रतिष्ठाप्रकारं निरूपयितुमादौ तावद्देवालयगतप्रतिमालक्षणमाह— **प्रतिष्ठामिति** ।। विष्णोः प्रतिष्ठां कारयन् आचार्यादिभिरिति शेषः । **बुधः** वक्ष्यमाणलक्षणज्ञानी निपुणो वा । **सुप्रतिमां** शोभनप्रतिमां कुर्यात् । स्वयमेव । यद्वा कुर्यादित्यन्तर्णीतणिच् । कारयेदित्यर्थः । **लोहैः** सुवर्णरजतताम्रैः । 'सुवर्णं रजतं ताम्रं त्रिविधं लोहमिष्यते' इति वचनाद्विष्णुतीर्थीये । **दार्वा** चन्दनकाष्ठादिना । **मृदा** गङ्गादीनाम् । शोभनमृत्तिकया वा । **अपि**पदात् पित्तलादिना । **यथाक्रमं** शास्त्रोक्तक्रममनतिक्रम्य कुर्यात् ।।१।।

**मङ्गाली**— 'पूज्यश्चभगवान्'(१.४९) इत्यत्र भगवत्पूजाकार्येत्युक्तम् । तस्याश्च 'प्रतिमास्वप्रबुद्धानां' इत्यज्ञानां प्रतिमासापेक्षत्वात् । तस्याश्च 'ऊर्ध्वदृष्टिमधोदृष्टिं तिर्यक्दृष्टिं विवर्जयेत्' इति लक्षणरहिताया अपूज्यत्वोक्त्या लक्षणोपेताया एव पूज्यत्वावगमात् । प्रतिमालक्षणं तत्प्रसङ्गात्प्रतिमानिर्माणविधिं प्रतिमास्थापनार्थं देवतालयनिर्माणप्रकारं 'अप्रतिष्ठितबिम्बस्य पूजनं सिद्धिहानिकृत्' इत्युक्तेः प्रतिमायाः प्रतिष्ठाविधानं च 'अशुचित्वं यदा भूयात् पुनः संप्रोक्षणं भवेत्' इति स्मृतेः संप्रोक्षणविधिं च जीर्णदेवालयोद्धारादिकं चाहास्मिन्नध्याये ।

तत्रादौ प्रतिमानिर्माणप्रयोजनमाह— **प्रतिष्ठामिति** ।। अत्र प्रतिष्ठाशब्देन प्रतिष्ठानन्तरकालीना पूजा लक्षणया गृह्यते । लक्षणाप्रयोजनं तु प्रतिष्ठाया आवश्यकत्वद्योतनम् । तथा च **विष्णोः** विष्णुप्रतिमायाः **प्रतिष्ठां** पूजां **कारयन्** कुर्वन्वा । अन्यैः कारयितुं स्वयं कर्तुं वेति यावत् । **सुप्रतिमां** लक्षणवत्तया शोभनां प्रतिमां **कुर्यात्** कारयेत् । शिल्पिभिरिति शेषः । अन्तर्णीतणिजर्थोऽयम्। निपुणश्चेत् स्वयमेव कुर्यादिति वा । अत एव **बुध** इत्युक्तम् । प्रतिमालक्षणज्ञानी तन्निर्माणप्रकाराभिज्ञश्चेत्यर्थः । प्रतिमानिर्माणयोग्यद्रव्यमाह— **लोहैरिति** ।। सुवर्णरजताम्रैस्त्रिविधैरित्यर्थः । 'सुवर्णं रजतं ताम्रं त्रिविधं लोहमिष्यते'

इत्युक्तेः । **दार्वा** काष्टेन । दारुशब्दस्त्रीलिङ्गोऽप्यस्ति । तृतीयान्तपदानां प्रतिमामित्यनेनान्वयः । **यथाक्रमम्** लोहैर्वेत्यादेः प्राशस्त्यक्रममपेक्ष्य । उक्तं च पद्मसंहितायाम्–

हिरण्मयी प्रतिकृतिः सर्वसंपत्करी भवेत् ।
वित्तं यशश्चविजयं विज्ञानं राजती फलम् ।।

ताम्रा धर्मं च वृद्धिं च करोति बहुसौख्यदा ।
खेदप्रदा शिलाजा च तेजोदा दारुजा तथा ।
शुभा प्रोक्ता मृन्मयी च पैत्तली शत्रुनाशनी ।। इति ।।१।।

प्रतिमालक्षणकथनं आकारविशेषकथनं च

**त.सा. षण्णवत्यङ्गुलां योग आसीनामथवा स्थिताम् ।**
**शयानां वा मुमुक्षूणां व्याचक्षाणां निजां स्थितिम् ।। २ ।।**

**त.क.–** वैकल्पिकद्रव्यचतुष्टयसाधारण्येन सुप्रतिमामित्युक्तप्रतिमासौलक्षण्यं विवृणोति– **षण्णवत्यङ्गुलामिति ।। योगे** योगपीठे । योगपीठकरणप्रकारो वक्ष्यते । **आसीनां** उत्थितां, **स्थितां** उपविष्टां **शयानां** शयने विन्यस्ताम् वा षण्णवत्यङ्गुलपरिमाणोपेतां कुर्यादिति पूर्वेणान्वयः । पक्षत्रयसाधारण्येन लक्षणमाह— **मुमुक्षूणामिति ।। निजां स्थितिं** स्वस्वरूपं भगवत्स्वरूपं वा मुमुक्षून् प्रति व्याचक्षाणामासीनां वेत्यादिना सर्वत्र सम्बन्धः । यद्वा, शयाना प्रतिमा मुमुक्षूणामेव योग्या नेतरेषामित्याह— **मुमुक्षूणामिति ।।** अनेनेतरेषां आसीना स्थिता वा पूज्येति सिद्ध्यति ।

ननु– दीर्घश्च कलमास्तिस्रस्तिर्यगष्टयवोदराः ।
अङ्गुल्या मध्यरेखायाः समा लक्षणतः स्मृताः ।।(तं.सा.३-५७,५८)

इत्यादिना वक्ष्यमाणाङ्गुलिपरिमाणपर्यालोचनाया प्रतिमायाः षण्णवत्यङ्गुलत्वे अङ्गुष्ठप्रादेशहस्तादिपरिमितप्रतिमानां षण्णवात्यङ्गुलत्वायोगेन कथमिदं षण्णवत्युङ्गुलत्वं सौलक्षण्यं स्यात् । न च पुरुषप्रमाणप्रतिमाया एवेदं लक्षणमिति

वाच्यम् । अषण्णवत्यङ्गुलपरिमाणप्रतिमाया निन्दनेनाङ्गुष्ठादिपरिमाणप्रतिमाया अपूज्यत्वप्राप्तेरिति चेन्न ।

अतः परं प्रवक्ष्यामि प्रतिमामानलक्षणम् । इत्युपक्रम्य,

एकादिदशपर्यन्तं सङ्ख्यामानयुतां भिदाम् ।
तालानामुत्तमादीनां रूपाविष्कृतिपूर्वकम् ।।

यत्किञ्चित्प्रतिमामानं विभज्य दशधा पुनः ।
एकं द्वादशधा भङ्क्त्वा तस्यैवांशोऽङ्गुलिः स्मृतः ।।

अङ्गुलिं चाष्टधा कृत्वा तस्यैकांशो यतः स्मृतः ।
तेनैवाङ्गुलिमानेन अङ्गप्रत्यङ्गकल्पना ।।

द्वादशाङ्गुलकं मानं तालाख्यमिह कथ्यते ।
द्वादशाङ्गुलकस्तालो मुखं चेति प्रकीर्तितम् ।।

त्र्यङ्गुलं गोलकं ज्ञेयं कलेति व्यपदिश्यते ।
एकाङ्गुलं भवेन्मात्रा भागो मात्राचतुष्टयम् ।।

उत्तमाधममध्यानि तालानि कमलासन ।
एकादिदशपर्यन्तं सङ्ख्याया भेदवन्ति च ।।

मीयते दशतालेन वासुदेवः सनातनः ।
नवार्धतालौ ब्रह्मेशौ नवतालेन देवताः ।।

अष्टार्धताला द्वारस्थाः कुमुदादिगणस्तथा ।
अष्टतालांश्च मनुजान् पिशाचादींश्च सप्तकान् ।।

षट्तालान् कुब्जकान् विद्धि पञ्चतालांस्तु वामनान् ।
चतुस्तालानि भूतानि त्रितालाः किन्नरास्तथा ।।

मत्स्या द्वितालां विज्ञेयास्तालेनैकेन पन्नगाः ।
दशतालं चतुर्विंशदङ्गुलिना शतं भवेत् ।।

उत्तमं मध्यमं विंशत्कनिष्ठं षोडशं स्मृतम् ।
नवतालं तु तच्छ्रेष्ठं मध्यमं षण्णवत्यापि ।।

तच्चतुर्हीनमधमामष्टतालं प्रकीर्तितम् ।
उत्तमादिक्रमोऽन्येषु सप्ततालदिषूह्यते ।।

चतुश्चतुर्विहीनं चेत्क्रमादङ्गुलिभिर्भवेत् ।
पूर्वं पूर्वं यथोक्तं च त्रैविध्यमनुगम्यते ।।

ध्रुवायामुत्तमं तालमर्चायां मध्यमं भवेत् ।
अधमं परिवाराणां सर्वेषां कमलासन ।।

इत्यादिनाऽङ्गुलिमानस्य प्रकारान्तरेण कथनादङ्गुष्ठमात्रं प्रादेशमात्रं वा स्वस्य चिकीर्षितं मनसि परिवर्तमानं प्रतिमामानं दशधा विभक्तं कृत्वा तस्य चैकस्य द्वादशधा विभागे तत्र एकांशपरिमाणात्मकस्य अङ्गुलिपरिमाणस्य विवक्षया षण्णवत्यङ्गुलस्य सर्वप्रतिमासाधारण्येनोपपादयितुं शक्यत्वात् । तदिदं प्रतिमाङ्गुलमानं उच्यते । तदेवमङ्गुलिमानस्य अनेकविधत्वात् सर्वप्रतिमासाधारणं षण्णवत्यङ्गुलत्वमिति स्थितम् ।। २ ।।

**अ.सं.–** अथ प्रतिमालक्षणमाह– **षण्णवत्यङ्गुलामिति ।।** अत्र द्वितीयान्तस्य सर्वस्यापि - पदस्य प्रतिमामिति पूर्वेणान्वयः । **षण्णवत्यङ्गुलां** षडधिकनवतिसङ्ख्यकानि अङ्गुलानि दर्घ्ये परिमाणं यस्याः सा तथोक्ता ताम् । प्रतिमाऽनेकविधा । पुरुषप्रमाणहस्तप्रमाणप्रादेशप्रमाणादिभेदात् । अत्र च पुरुषप्रमाणैव ग्राह्या । अङ्गुलिश्च सर्वत्रापि प्रतिमाकारयितुरेव । 'स्वाङ्गुल्या मध्यरेखा तु' इति (३.५८) वक्ष्यमाणत्वात् । अङ्गुलिपरिमाणं च दीर्घव्रीहित्रयदैर्घ्यम् । 'दीर्घाश्चकलमास्तिस्रः' (३.५७) इति वक्ष्यमाणत्वात् । एतादृशाङ्गुलेनैव षण्णवत्युङ्गुलत्वं विवक्षितम् । तच्च पुरुषप्रमाणप्रतिमायामेव सम्भवति । प्रादेशादिप्रतिमायां तु न सम्भवतीति ज्ञेयम् । प्रतिमायाः आकारविशेषमाह– **योगेत्यादिना ।। योगे** योगासने आसीनां योगाभ्यासावस्थाप्रदर्शिकामिति यावत् । लक्ष्मीनारायणनरसिंहादिमूर्तिम् ।

**स्थितामुत्थितां** वा रामकृष्णादिमूर्तिं वा। **शयानां** रङ्गाथानन्तशयनादिमूर्तिम्। मुमुक्षूणामर्थे **निजां स्थितिं** स्वस्वरूपं **व्याचक्षाणां** व्याकुर्वाणां वै ज्ञानमुद्रया युतामित्यर्थः। मोक्षेच्छुभिस्तत्साधनज्ञानार्थं ज्ञानमुद्रायुतवेदव्यासहयग्रीवादिप्रतिमा कार्येति भावः। अत्र शयानप्रतिमा मृद्दार्वादिप्रतिमा च गृहे न पूज्येति ज्ञेयम्। 'शयानां नार्चयेद्गेहे न च मृद्दारुजां तथा' इत्युक्तेः। तस्याधिकारिभेदेनापवादश्चोक्तस्तत्रैव–

अश्वत्थनिर्मिता पूज्या राज्यकामेन धामनि।
न्यग्रोधनिर्मितं बिम्बं वंशविस्तारलक्षणम्॥
प्लक्षजम्बीरफलदं.................... । इत्यादिना ॥ २ ॥

**गु.दी–** प्रतिमायाः शोभनत्वं कथमित्यतः एवमित्याह— **षडित्यादिना॥** यद्वा यथाक्रममित्युक्तम्। कोऽसावित्यतस्तं निरूपयति— **षडित्यादिना॥** षण्णवत्यङ्गुलोच्छ्रिताम्। **योगे** योगासने **आसीनां** उपविष्टां व्यासादिरूपाम्। अथवा **स्थितां** रामादिप्रतिमाम्। **शयानाम्** अनन्तशयनरङ्गनाथादिप्रतिमाम्। **निजां स्थितिं** स्वस्वरूपं माहात्म्यं वा। **मुमुक्षूणां** इति कर्मणि षष्ठी। मुमुक्षून् प्रति व्याचक्षाणाम्। अथवा तादर्थ्ये षष्ठी। मुमुक्षूणामर्थे व्याचक्षाणां हयास्यादिकाम्। अत्र शयानामिति संन्यासिविषयम्।

शयानां नार्चयेद्गेही न च मृद्दारुजां तथा।

इति पञ्चरात्रे गृहस्थस्य शयानमूर्तेः प्रतिषेधात् ॥२॥

**मङ्गाली–** अथ प्रतिमालक्षणमाह– **षण्णवत्यङ्गुलामिति॥** अत्र द्वितीयान्तानां प्रतिमामिति पूर्वेणान्वयः। **षण्णवत्यङ्गुलां** षडधिकनवतिसङ्ख्याकानि अङ्गुलानि दैर्घ्ये परिमाणं यस्याः सा तथोक्ता तां। **'स्वाङ्गुल्या मध्यरेखा तु'**(तं.सा.३-५७) इति वक्षमाणत्वात् **'दीर्घाश्च कलमास्तिस्रः'** (तं.सा.३-५८) इति वक्ष्यमाणत्वाच्च प्रतिमाकारयितुः पुरुषस्याङ्गुलेनैव षण्णवत्यङ्गुलत्वं विवक्षितम्। तच्च पुरुषप्रमाणप्रतिमायामेव सम्भवति। प्रादेशादिप्रतिमायां न सम्भवतीति ज्ञेयम्। प्रतिमाया आकारविशेषमाह– **योग** इत्यादिना॥ **योगे** योगासने **आसीनां**

योगाभ्यासावस्थाप्रदर्शिकामिति यावत्। लक्ष्मीनारायणनृसिंहादिमूर्तिम् **स्थितामुत्थितां** वा रामकृष्णादिमूर्तिं **शयानां** वा रङ्गनाथानन्तशयनादिमूर्तिं मुमुक्षूणामर्थे **निजां स्थितिं** स्वस्वरूपं **व्याचक्षाणां** व्याकुर्वाणां वा ज्ञानमुद्रया युतामित्यर्थः। मोक्षेच्छुभिः तत्साधनज्ञानार्थं ज्ञानमुद्रायुतवेदव्यासहयग्रीवादि प्रतिमा कार्येति भावः। अत्र शयाना मृद्दार्वादिप्रतिमा च गृहे न पूज्या। 'शयानां नार्चयेद्गेहे न च मृद्दारुजां तथा' इत्युक्तेः।

अश्वत्थनिर्मिता पूज्या राज्यकामेन धामनि ।
न्यग्रोधनिर्मितं बिम्बं वंशविस्तारलक्षणम् ।
प्लक्षजम्बीरफलदं.........॥ इति तस्याप्यपवादः ॥२॥

मुखमारभ्य जङ्घापर्यन्तं अवयवशः परिमाणकथनम्

**तं.सा.** **मुखादूर्ध्वं त्र्यङ्गुलोच्चां नवाङ्गुललसन्मुखाम् ।**
**सुवृत्तत्र्यङ्गुलग्रीवामा स्तनाच्च षडङ्गुलाम्** ॥ ३ ॥

**पश्चाद्दशाङ्गुलां नाभेरा सार्धदशकाङ्गुलाम् ।**
**वृषणादा मूलतश्च सार्धत्र्यङ्गुलमायताम्** ॥ ४ ॥

**तावदा गुदतो दीर्घं चैत्याद(दा)ष्टादशांगुलाम् ।**
**तथा त्र्यंगुलचैत्यां च द्वाविंशज्जङ्घया युताम्** ॥ ५ ॥

**त.क.–** अत एव सर्वसाधारण्येन षण्णवत्यङ्गुलत्वं विभज्य दर्शयति— **मुखादूर्ध्वं त्र्यङ्गुलोच्चाम् इत्यादिना षडङ्गुलोच्चप्रपादाम्** इत्यतः प्राक्तेन सार्धश्लोकत्रयेण। तत्र शिर आरभ्य पादतलपर्यन्तं परिमाणमुच्यते। शिरोमध्यमारभ्य केशान्तं मुखादूर्ध्वं त्र्यङ्गुलम् उच्चं शिरो यस्यास्तां त्र्यङ्गुलोच्चां प्रतिमां कारयेदिति पूर्वेणान्वयः। एवमग्रेऽपि। केशान्तमारभ्य चुबुकान्तं मुखमुच्यते। नवाङ्गुलपरिमाणेन लसत् मुखं यस्याः। तत्राप्ययं विवेकः। केशान्तमारभ्य ललाटान्तं त्र्यङ्गुलम्। तदारभ्य नासिकान्तं त्र्यङ्गुलम्।

नासिकादधश्चुबुकान्तं त्र्यङ्गुलमिति। एवमाहत्य मुखं नवाङ्गुलमित्यर्थः। चुबुकादधःप्रदेशो ग्रीवा इत्युच्यते। तस्याः परिमाणं त्र्यङ्गुलमित्यर्थः। 'गलस्तु चतुरङ्गुलः' इति बृहदारण्यकभाष्यविरोधं परिहरति— **सुवृत्तेति**॥ पुरोभागे एकाङ्गुलपरिमाणाधिक्येऽपि न सर्वत्र तथेति भावः। त्र्यङ्गुलपरिमितग्रीवाधः प्रदेशपरिमाणमाह— **आस्तनाच्च षडङ्गुलामिति**॥ स्तनपर्यन्तं ग्रीवाधःप्रदेशः षडङ्गुलपरिमित इत्यर्थः। चशब्दस्तुशब्दार्थः। तेन विवक्षिताया अर्चाया इदं परिमाणमुच्यते। न ध्रुवादेः। तेन,

उत्सेधमानं मूर्धादिपादान्तमनुपूर्वशः।
लब्धानां देहिनां तावदङ्गुलानां शतेन तु।
चतुर्विंशेन मानेन प्रतिमां परिकल्पयेत्॥

इति चतुर्विंशत्यधिकपरिमाणमुक्त्वा,

उष्णीषमङ्गुलमितं केशान्तं त्र्यङ्गुलं ततः।
उत्सूत्रान्तं तदारभ्य षट्त्रिंशद्यवसंमितम्॥

तद्वन्नासापुटान्तं स्यात्तद्वच्च चुबुकावधि।
तेन केशान्तमारभ्य मुखमानं चतुर्मुख॥

अष्टोत्तरं यवशतं चुबुकावयवावधि।
गलमर्धाङ्गुलं सार्धत्र्यङ्गुलं कर्णमिष्यते॥

इत्यादिपद्मतन्त्रविरोधो नास्तीति सूचयति। दशतालनवतालाष्टतालसप्तताल-षट्तालपञ्चतालादिक्रमेण एकतालपर्यन्तमुत्तमाधममध्यमभेदेन प्रत्येकं तालं विभज्य, उत्तमदशतालं चतुर्विंशत्यङ्गुलाधिकशतांगुलं, विंशत्यधिकशताङ्गुलं मध्यम-दशतालं, षोडशादिकशताङ्गुलाधिकशतांगुलं, द्वादशाधिकशताङ्गुलमुत्तमनवतालम्, अष्टाधिकशताङ्गुलं मध्यमनवतालं, चतुरधिकशताङ्गुलमधमनवतालम्। एवं शतङ्गुलमुत्तमाष्टतालम्। षण्णवात्यङ्गुलं मध्यमाष्टतालम्। द्विनवत्यङ्गुलमधमाष्ट-तालमित्यादिव्यवस्थामुक्त्वा,

ध्रुवायामुत्तमं तालमर्चायां मध्यमं भवेत् ।
अधमं परिवारणां सर्वेषां कमलासन ।

इत्यादिवचनात् मध्यमाष्टतालविवक्षया अर्चालक्षणस्य उपक्रान्तत्वान्न विरोध इति भावः। यद्वक्ष्यति स्वयमेव— 'अस्य संक्षेपशास्त्रत्वात् न विस्तरविरोधिता' (तं.सा.३-४७) इति ।। ३ ।।

स्तनमण्डलमारभ्य नाभिपर्यन्तं परिमाणमाह— **पञ्चादशाङ्गुलां नाभेरिति ।।** आङ् मर्यादार्थः। **नाभेः आ** नाभिपर्यन्तं पञ्चदशाङ्गुलं परिमाणमित्यर्थः। उपपददीर्घः। नाभिमारभ्य वृषणपर्यन्तं परिमाणमाह— **सार्धदशाङ्गुलं वृषणादिति ।।** वृषणपर्यन्तमर्धाङ्गुलसहितदशाङ्गुलमित्यर्थः। वृषणावस्थिति-प्रदेशपरिमाणमाह– **मूलतश्च सार्धव्यङ्गुलमायतामिति ।।** वृषणावस्थितिप्रदेशः अर्धाधिकाङ्गुलद्वयपरिमाण इत्यर्थः ।। ४ ।।

वृषणावस्थितिप्रदेशमारभ्यापानवायुद्वारपर्यन्तं परिमाणमाह– **तावदा गुदतो दीर्घमिति ।।** गुदपर्यन्तप्रदेशः अर्धाधिकांगुलद्वयपरिमाण एवेत्यर्थः। गुदमारभ्य जानुपर्यन्तप्रदेशस्य परिमाणमाह— **चैत्यादष्टादशांगुलामिति ।। चैत्यं** जानुः। चैतन्यपर्यन्तं प्रदेशः अष्टादशांगुलपरिमाण इत्यर्थः। जानुमण्डलपरिमाणमाह– **तथा व्यंगुलचैत्यां चेति ।। जानुमण्डलं** अंगुलिद्वयपरिमाणमित्यर्थः। तेन 'चतुरंगुलमुत्सेधं जानुमण्डलमिष्यते' इति दशतालोत्तमकल्पविवक्षया प्रवृत्तवचनविरोधं परिहरति। जानुमण्डलादधःप्रदेशपरिमाणमाह– **द्वाविंशज्जङ्घया युतमिति ।।** जान्वधो गुल्फपर्यन्तं जङ्घेत्युच्यते। द्वाविंशत्यंगुलपरिमाणं जङ्घाया इत्यर्थः ।। ५ ।।

**अ.सं.–** षण्णवत्यङ्गुलायाः प्रतिमायाः एकैकावयवे कियदङ्गुलिपपरिमितत्व-मित्यत आह– **मुखादित्यादिना ।।** अधरोष्ठादधश्चुबुकमित्युच्यते। तदारभ्य ललाटान्तः प्रदेशः मुखम्। तस्मात् **ऊर्ध्वं** उपरि **द्व्यङ्गुलोच्चां** द्व्यङ्गुलदीर्घशीर्षवर्ती शीर्षादधः **नवाङ्गुललसन्मुखां** नवसङ्ख्याकांगुलपरिमितदैर्घ्योपेतशोभनमुखयुक्तां **सुवृत्तत्र्यङ्गुलग्रीवां** अत्यन्तवर्तुलामङ्गुलित्रयपरिमितदीर्घा कन्धरा यस्या सा ताम्। ग्रीवामारभ्य **आस्तनात्** स्तनपर्यन्तं **षडङ्गुलां** षडङ्गुलदीर्घाम् ।। ३ ।।

स्तनमारभ्य **आ नाभेः** नाभिपर्यन्तं पश्चादशाङ्गुलदीर्घा पश्चेत्यत्र दीर्घः च्छान्दसः । नाभिमारभ्य **वृषणादा** वृषणपर्यन्तं **सार्धदशकाङ्गुलां** अर्धाधिकदशाङ्गुलदीर्घां **मूलतश्च** वृषणमूले तु वृषणावच्छिन्नप्रदेश इत्यर्थः । **सार्धद्व्यङ्गुलमायतां दीर्घां** अर्धाधिकाङ्गुलिद्वयविस्तृतवृषणावस्थानप्रदेशयुक्ता-मिति भावः ॥ ४ ॥

वृषणमूलमारभ्य **आगुदतः** अपानवायुद्वारपर्यन्तं तावत् सार्धव्यङ्गुलदीर्घां गुदमारभ्य **चैत्यादा** आचैत्यम् । जानु तत्पर्यन्तम् । अष्टादशाङ्गुलोच्चां द्व्यङ्गुलचैत्यामङ्गुलिद्वयदीर्घजानुयुक्ताम् । जान्वधः **द्वाविंशज्जंघया युतां** द्वाविंशत्यङ्गुलदीर्घजङ्घायुताम् ॥ ५ ॥

**गु.दी.–** षण्णवत्यङ्गुलामिति समग्रप्रतिमायाः षण्णवत्यङ्गुलपरिमितत्वमुक्तम् । एकैकस्मिन्नवयवे कियदङ्गुलपरिमितत्वमित्यपेक्षायां तामेव षण्णवतिमवयवशो विभज्याऽह— **मुखादूर्ध्वमित्यादिना** ॥ ललाटोपरिस्थकेशपर्यन्तं मुखम् । तदुपरि व्यङ्गुलोच्चशीर्षवतीम् । 'ललाटाव्योमसञ्ज्ञं स्याव्यङ्गुलद्वयमेव हि' इति याज्ञवल्क्यवचनात् । अत्र सर्वत्र ह्रस्वमध्योच्चभेदभिन्नतत्तत्प्रतिमाङ्गुलमेव ग्राह्यम् । 'ह्रस्वमध्योच्चभेदेन तत्तन्मानं समस्तश' (तं.सा.३-५९) इति वक्ष्यमाणत्वात् । लसच्च तत् मुखं च लसन्मुखम् । नवाङ्गुलपरिमितं तत् यस्याः सा तामिति विग्रहः । तदुक्तं बृहद्भाष्ये पञ्चमेऽध्याये–

नवाङ्गुलमुखो यस्तु गले च चतुरङ्गुलः ।
चतुर्विंशाङ्गुलतनुस्तद्भाक्यं देवपूजितम् इति ।

ननु मुखस्य नवाङ्गुलत्वे 'दशतालो दशमुखो ललाटत्रिंशकस्तथा' इति (बृ.भा.३अध्याये शाकल्यब्राह्मणे) बृहद्भाष्ये दशमुख इत्युक्तेर्विरोधः । अत्र षण्णवत्यङ्गुलामिति षण्णवत्यङ्गुलत्वस्योक्तत्वात् । तत्र दशमुखत्वोक्त्या नवाङ्गुलत्वस्यैव लाभादिति चेन्न । 'नासाया उच्चत्वेनैव मापने' (तं.सा.३-२८) इति वक्ष्यमाणत्वेन मुखस्य सार्धनवाङ्गुलत्वेनाविरोधात् । एवमपि तत्र पञ्चनवत्यङ्गुलत्वमेव लब्धमिति चेन्न । तत्राप्येकाङ्गुलस्य ग्राह्यत्वात् । अनुक्तिः

स्वल्पत्वादिति सम्प्रदायविदः। सुवृत्ता त्र्यङ्गुलपरिमिता ग्रीवा यस्याः सा तथा ताम्। न चात्र 'गले च चतुरङ्गुलम्' (बृ.भा.३अध्याये शाकल्यब्राह्मणे) इति बृहद्भाष्यविरोधः, तत्र गलस्य चतुरङ्गुलपरिमितत्वोक्तेरिति। तस्य कण्ठाधः-कूपमादाय जिह्वामूलपर्यन्तं परिमाणकथनपरत्वात्। 'कण्ठकूपात्तु जिह्वायाः मूलं स्याच्चतुरङ्गुलम्' इति विष्णुतीर्थीयवचनात्। अस्य त्र्यङ्गुलत्वस्य कण्ठकूपं विहाय मध्यभागपरिमाणमपेक्ष्य प्रवृत्तेरिति। **आस्तनात्** स्तनपर्यन्तम्। आङ् मर्यादायाम्। एवमुत्तरत्रापि। स्तनशब्दस्य विभक्तिपरिणामेन द्वितीयान्ततया आङश्चानुवृत्तिः। स्तनमारभ्य **नाभेरा** नाभिपर्यन्तं पञ्चदशाङ्गुलामित्यर्थः। **पञ्चा** इत्यत्र दीर्घश्छान्दसः॥ **सार्धेति** ॥ नाभिपदमाङ् च पूर्ववदनुवर्तते। **वृषणात् आ** इति विभागः। नाभिमारभ्य वृषणपर्यन्तं **सार्धदशकाङ्गुलाम्** अर्धाधिकदशा-ङ्गुलामित्यर्थः। वृषणपरिमाणं तूत्तरत्र वक्ष्यति (तं.सा.३-१२)। **मूलतः** मूलप्रदेशे सार्धद्व्यङ्गुलम् **आयतां** विस्तृतामित्यर्थः। यद्वा आ ऋद्धद्व्यङ्गुलसहितां **आयतां** विस्तृतामित्यर्थः। ततश्च द्व्यङ्गुलायतत्वमेव न तु सार्धद्व्यङ्गुलत्वमिति भाव इति केचित्। वृषणमारभ्य गुदपर्यन्तं तावद्दीर्घा सार्धद्व्यङ्गुलदीर्घामित्यर्थः॥ **चैत्यादा** ॥ चैत्यं जानु। गुदमारभ्य जानुपर्यन्तमष्टादशाङ्गुलाम्॥ **द्व्यङ्गुलेति** ॥ तावद्दैर्घ्योपेतजानुप्रदेशयुतामित्यर्थः। द्वाविंशत्यङ्गुलोच्चजङ्घया युताम्॥ ३-९॥

**मङ्गाली--** षण्णवत्यङ्गुलायाः प्रतिमाया एकैकावयवे कियदङ्गुलिपरिमितत्व-मित्यत आह-- **मुखादिति**॥ अधरोष्ठादधः चुबुकमित्युच्यते। तदारभ्य ललाटान्तप्रदेशो मुखम्। तस्मादूर्ध्वमुपरि **द्व्यङ्गुलोच्चां** द्व्यङ्गुलदीर्घशीर्षवतीम्। शीर्षादधः **नवाङ्गुललसन्मुखाम्** नवसङ्ख्याकांगुलपरिमितदैर्घ्योपेतशोभमान-मुखयुक्ताम्। **सुवृत्तत्र्यङ्गुलग्रीवां** अत्यन्तवर्तुलाङ्गुलित्रयपरिमितदीर्घा कन्धरा यस्यास्सा तां। ग्रीवामारभ्य **आस्तनात्** स्तनपर्यन्तं षडङ्गुलदीर्घां स्तनमारभ्यानाभेः नाभिपर्यन्तं **पञ्चादशाङ्गुलदीर्घां** पञ्चेत्यत्र दीर्घच्छान्दसः। नाभिमारभ्य **वृषणादा** वृषणपर्यन्तं **सार्धदशकाङ्गुलां** अर्धाधिकदशाङ्गुलदीर्घां **मूलतश्च** वृषणमूले तु वृषणावच्छिन्नप्रदेश इत्यर्थः। सार्धद्व्यङ्गुलं **आयतां** दीर्घां अर्धाधिकाङ्गुलिद्वयविस्तृतवृषणावस्थानप्रदेशयुक्तामिति भावः। वृषणमूलमारभ्य

**आगुदतः** अपानवायुद्वारपर्यन्तं तावत् **सार्धत्र्यङ्गुलदीर्घां** गुदमारभ्य **चैत्यादा** चैत्यं जानु तत्पर्यन्तम् अष्टादशाङ्गुलोच्चां त्र्यङ्गुलचैत्यां अङ्गुलिद्वयदीर्घजानुयुक्तां जान्वधः **द्वाविंशज्जङ्घया युतां** द्वाविंशत्यङ्गुलदीर्घजङ्घया युतां ।। ३,४,५ ।।

गुल्फमारभ्य पादमध्याङ्गुलिपर्यन्तं अवयवपरिमाणकथनम्

तं.सा. **आरभ्य गुल्फमध्यं च (मद्धैव) सहार्धचतुरंगुलाम् ।**
**षडंगुलोच्चप्रपदां सार्धत्र्यंगुलमेव च** ।। ६ ।।

**प्रपदोच्चयुतामन्ते व्यंगुलप्रपदोच्छ्रयाम् ।**
**त्र्यंगुलव्यंगुलामर्धहीनमध्यांगुलामपि** ।। ७ ।।

**त.क.**– गुल्फमारभ्य तदधःपादतलपर्यन्तं परिमाणमाह– **आरभ्य गुल्फमध्यं चेति ।।** गुल्फमध्यमारभ्य पादतलपर्यन्तोऽवयवः अर्धादिकांगुलिचतुष्टयपरिमाण इत्यर्थः । एवमाहत्य षण्णवत्यंगुलां प्रतिमां कुर्यादिति शेषः । यद्यप्येवं परिमाणेन एकोऽङ्गुलिरधिको भवति । तथाऽपि 'तावदा गुदतो दीर्घम्' (तं.सा.३-५) इत्यत्र एकोऽङ्गुलिरधिकः प्रसङ्गान्निक्षिप्तः । उत्सेधमानकथनावसरे तिर्यङ्मानस्याग्राह्यत्वात् । तथा च सर्वं सुस्थं भवति । एवं षण्णवत्यंगुलत्वमुपपाद्य पादतलोपरिप्रदेशमादिमध्यान्तभेदेन त्रेधा विभज्य तदुत्सेधपरिमाणमाह– **षडंगुलोच्चप्रपदामिति ।।** अन्त इति वक्ष्यमाणत्वादत्रादाविति ग्रह्यम् । प्रपदस्य आदिभागे षडंगुलोन्नतत्वमित्यर्थः । मध्यमपरिमाणमाह– **सार्धत्र्यंगुलमेव चेति ।।**

**प्रपदोच्चयुतामिति ।।** मध्य इति शेषः । प्रपदमध्यप्रदेशः अर्धाधिकांगुलित्रयपरिमाणोन्नत इत्यर्थः । अन्त्यप्रदेशपरिमाणमाह— **अन्ते व्यंगुलप्रपदोच्छ्रयामिति ।।** प्रपदान्तप्रदेशः अंगुलिद्वयपरिमाणोन्नत इत्यर्थः । अत्र चशब्दः पूर्ववत् ग्रन्थान्तरविरोधपरिहारसूचकः । पदांगुलिदैर्घ्यप्रमाणमुच्यते । अंगुष्ठमारभ्य अंगुलिद्वयपरिमाणं युगपदाह– **त्र्यंगुलव्यंगुलामिति ।।** त्र्यंगुलपरिमाणोपेतांगुलिद्वययुक्तामित्यर्थः । पञ्चसु पादांगुलिषु अंगुष्ठाद्यंगुलिद्वयं अंगुलित्रयपरिमाणोपेतमिति भावः । तृतीयांगुलिपरमिणमाह— **अर्धहीनमध्यांगुलामपीति ।।** अर्धहीनत्वमङ्गुलिविशेषणं अंगुलिमित्यनेन सम्बद्ध्यते ।

अर्धहीनत्र्यंगुलपरिमाणोपेतो मध्यांगुलिः यस्या इति मध्यमपदलोपगर्भबहुव्रीहिः। तृतीयः मध्यांगुलिरपि अधिकांगुलद्वयपरिमाण इत्यर्थः ।। ७ ।।

**अ.सं.–** जङ्घाधोभागे पादपार्श्वद्वये विद्यमानौ गोलाकारौ ग्रन्थी गुल्फावित्युच्येते। गुल्फमध्यमारभ्य गुल्फमध्यात् अधःपादतलपर्यन्तं **सहार्धचतुरङ्गुलां** अर्धाधिकचतुङ्गुलदीर्घामित्यर्थः ।

नन्वत्राङ्गुलिगणने क्रियमाणे सप्तनवत्यङ्गुलानि भवन्ति । षण्णवत्यङ्गुलामिति कथमुक्तमिति चेत् ।

अत्र वदन्ति । 'तावदागुदतो दीर्घा' (तं.सा.३-५) इति वृषणमूलमारभ्य गुदपर्यन्तं सार्धद्व्यङ्गुलत्वमुक्तम्। तत्र सार्धैकाङ्गुलमेव गणनीयम् । तावन्मात्रस्यैव ऋजुत्वेन दीर्घत्वात्। ततोऽधः एकाङ्गुलस्य गुदपर्यन्तं तिर्यक्स्थितत्वेन ऋजुत्वाभावात्। अतस्तत्र वक्रैकाङ्गुलपरित्यागे सति षण्णवत्यङ्गुलत्वं सेत्स्यतीति ।

अपरे तु– 'मूलतश्च सार्धव्यङ्गुलमायतां' (३-४) इति वृषणमूलपरिमाणकथनं 'तावदा गुदतो दीर्घा' (३-५) इति गुदपर्यन्तं दैर्घ्यकथनं च प्रासङ्गिकम्। अतोऽत्र पञ्चाङ्गुलानपि परित्यज्य 'वृषणं चतुरङ्गुलं' (३-१३) इति वक्ष्यमाणवृषणदैर्घ्य-परिमाणेन चतुरङ्गुलेन सह षण्णवत्यङ्गुलत्वं सेत्स्यति। व्यवधानेन कथनं त्वतिरहस्यत्वादिति ज्ञेयमिति ।

अन्ये तु– 'सार्धद्व्यङ्गुलमायतां'(३-४) इत्यत्रार्धशब्दो भावप्रधानः। आर्धत्वं पुष्टत्वं तेन सहितं सार्धं, तच तद्व्यङ्गुलत्वं चेति तत्तथोक्तम् । मध्येऽङ्गुलिषु पुष्टत्वकथनं तु देहलिप्रदीपन्यायेन सर्वाङ्गुलीनामपि पुष्टत्वज्ञापनार्थम्। तथाच **मूलतः** वृषणमूले **सार्धव्यङ्गुलं** सम्यक् पुष्टाङ्गुलिद्वयपरिमाणमायताम्। मूलादागु-दतस्तावत् द्व्यङ्गुलदीर्घामित्यर्थः। गुदवृषणयोर्मध्यप्रदेशस्य द्व्यङ्गुलदीर्घत्वमुक्तं शेखरे–

गुदध्वजान्तरे कन्दमुत्सेधव्यङ्गुलं विदुः ।
तस्माद्विगुणविस्तारं वृत्तरूपेण शोभितम् ।। इति ।

गुदध्वजान्तरे गुदवृषणयोर्मध्ये कन्दं वृषणमूलाधारप्रदेशमुत्सेधात्।

ल्यब्लोपनिमित्ता पञ्चमी। दैर्घ्यमपेक्ष्य द्व्यङ्गुलमङ्गुलिद्वयदैर्घ्यम्। तस्माद्दैर्घ्याद्विगुणविस्तारं चतुरङ्गुलविस्तारमिति यावत्। **वृत्तरूपेण शोभितं** वर्तुलाकारं विदुरित्यर्थः। तथा च षण्णवत्यङ्गुलत्वमेव सेत्स्यतीति।

एके तु– 'द्व्यङ्गुलोच्चां' इत्यादौ न्यूनत्वेऽप्यल्पत्वादविवक्षया द्व्यङ्गुलोच्चामित्याद्युक्त्याऽधिकत्वेन प्रतीतस्यैकाङ्गुलस्य तत्र तत्र किञ्चित् प्रवेशे सति षण्णवत्यङ्गुलत्वमेव सेत्स्यतीति।

इदानीं पादस्यादिमध्यान्त्यभागानामुच्चत्वपरिमाणमाह– **षडङ्गुलेति** ।। अन्ते इत्युक्तेः आदौ मध्ये चेति ग्राह्यम्। तथा च गुल्फसहिते आदिभागे षडङ्गुलोच्चप्रपदाम्। मध्यभागे **सार्धत्र्यङ्गुलप्रपदोच्चयुतां** अर्धाधिकत्र्यङ्गुलोच्चप्रपदाम्। **अन्ते** पादान्त्यभागे द्व्यङ्गुलप्रपदोच्छ्रयाम्। पादाङ्गुलीनां दैर्घ्यपरिमाणमाह– **त्र्यङ्गुलेत्यादिना** ।। **त्र्यङ्गुलद्व्यङ्गुलां** त्र्यङ्गुलमङ्गुलित्रयपरिमाणयुक्तां द्व्यङ्गुलमङ्गुलिद्वयं यस्या सा ताम्। अङ्गुष्ठस्य त्र्यङ्गुलदैर्घ्यं तदनन्तरस्याङ्गुलेश्च त्र्यङ्गुलं दैर्घ्यमिति भावः। **अर्धहीनमध्याङ्गुलां** अर्धेन अर्धाङ्गुलेन हीनं न्यूनं त्र्यङ्गुलपीरमाणं यस्य तत् अर्धहीनम्। सार्धद्व्यङ्गुलदीर्घमिति यावत्, तादृशं मध्याङ्गुलमङ्गुलिद्वयमध्यस्थं तृतीयाङ्गुलं यस्या सा ताम् ।। ६,७ ।।

**गु.दी.–** पादपृष्ठभागस्योपरितनग्रन्थिर्गुल्फशब्देनोच्यते। गुल्फादधस्तात्पादपर्यन्तं परिमाणं वक्ति— **आरभ्येति** ।। गुल्फमारभ्य, अधरमिति शेषः। सहार्धचतुरङ्गुलामेवेत्यन्वयः। **अद्धेति** 'पादान्मानं तु गुल्फस्य सार्धाङ्गुलचतुष्टयम्' इति प्रमाणप्रसिद्धिमाह। इदानीं गुल्फमारभ्य पादाग्रपर्यन्तं प्रपदः, तस्यादिमध्यान्तेति विविक्षाभेदेन परिमितिमाह– **षडङ्गुलेति** ।। आदाविति ग्राह्यम्। षडङ्गुलोच्चप्रपदादिभागामित्यर्थः ।। **सार्धेति** ।। मध्य इति ग्राह्यम्। सार्धत्र्यङ्गुलमेवोच्चप्रपदयुतामिति बुद्ध्या विवेकेन सम्बन्धः। सार्धत्र्यङ्गुलोच्चप्रपदमध्यामित्यर्थः। **अन्ते** प्रपदाग्रे। **द्व्यङ्गुलप्रपदोच्छ्रयां** द्व्यङ्गुलोच्चप्रपदाग्रयुतामिति यावत्। ननु 'मुखादूर्ध्वं द्व्यङ्गुलोच्चाम्' (तं.सा.३-३) इत्युक्तशीर्षपरिमाणमारभ्य 'आरभ्य गुल्फमद्धैव सहार्धचतुरङ्गुलाम्' (तं.सा.३-६)

अर्धहीनत्र्यंगुलपरिमाणोपेतो मध्यांगुलिः यस्या इति मध्यमपदलोपगर्भबहुव्रीहिः । तृतीयः मध्यांगुलिरपि अधिकांगुलद्वयपरिमाण इत्यर्थः ।। ७ ।।

**अ.सं.–** जङ्घाधोभागे पादपार्श्वद्वये विद्यमानौ गोलाकारौ ग्रन्थी गुल्फावित्युच्येते । गुल्फमध्यमारभ्य गुल्फमध्यात् अधःपादतलपर्यन्तं **सहार्धचतुरङ्गुलां** अर्धाधिकचतुङ्गुलदीर्घामित्यर्थः ।

नन्वत्राङ्गुलिगणने क्रियमाणे सप्तनवत्यङ्गुलानि भवन्ति । षण्णवत्यङ्गुलामिति कथमुक्तमिति चेत् ।

अत्र वदन्ति । 'तावदागुदतो दीर्घां' (तं.सा.३-५) इति वृषणमूलमारभ्य गुदपर्यन्तं सार्धद्व्यङ्गुलत्वमुक्तम्। तत्र सार्धैकाङ्गुलमेव गणनीयम् । तावन्मात्रस्यैव ऋजुत्वेन दीर्घत्वात् । ततोऽधः एकाङ्गुलस्य गुदपर्यन्तं तिर्यक्स्थितत्वेन ऋजुत्वाभावात् । अतस्तत्र वक्रैकाङ्गुलपरित्यागे सति षण्णवत्यङ्गुलत्वं सेत्स्यतीति ।

अपरे तु– 'मूलतश्च सार्धव्यङ्गुलमायतां' (३-४) इति वृषणमूलपरिमाणकथनं 'तावदा गुदतो दीर्घां' (३-५) इति गुदपर्यन्तं दैर्घ्यकथनं च प्रासङ्गिकम् । अतोऽत्र पञ्चाङ्गुलानपि परित्यज्य 'वृषणं चतुरङ्गुलं' (३-१३) इति वक्ष्यमाणवृषणदैर्घ्य-परिमाणेन चतुरङ्गुलेन सह षण्णवत्यङ्गुलत्वं सेत्स्यति। व्यवधानेन कथनं त्वतिरहस्यत्वादिति ज्ञेयमिति ।

अन्ये तु– 'सार्धद्व्यङ्गुलमायतां'(३-४) इत्यत्रार्धशब्दो भावप्रधानः । आर्धत्वं पुष्टत्वं तेन सहितं सार्धं, तच तद्व्यङ्गुलत्वं चेति तत्तथोक्तम् । मध्येऽङ्गुलिषु पुष्टत्वकथनं तु देहलिप्रदीपन्यायेन सर्वाङ्गुलीनामपि पुष्टत्वज्ञापनार्थम् । तथाच **मूलतः** वृषणमूले **सार्धव्यङ्गुलं** सम्यक् पुष्टाङ्गुलिद्वयपरिमाणमायताम् । मूलादागु-दतस्तावत् द्व्यङ्गुलदीर्घामित्यर्थः । गुदवृषणयोर्मध्यप्रदेशस्य द्व्यङ्गुलदीर्घत्वमुक्तं शेखरे–

गुदध्वजान्तरे कन्दमुत्सेधव्यङ्गुलं विदुः ।
तस्माद्विगुणविस्तारं वृत्तरूपेण शोभितम् ।। इति ।

गुदध्वजान्तरे गुदवृषणयोर्मध्ये कन्दं वृषणमूलाधारप्रदेशमुत्सेधात् ।

ल्यब्लोपनिमित्ता पञ्चमी। दैर्घ्यमपेक्ष्य **द्व्यङ्गुलमङ्गुलिद्वयदैर्घ्यम्**। तस्माद्दैर्घ्याद्विगुणविस्तारं चतुरङ्गुलविस्तारमिति यावत्। **वृत्तरूपेण शोभितं** वर्तुलाकारं विदुरित्यर्थः। तथा च षण्णवत्यङ्गुलत्वमेव सेत्स्यतीति।

एके तु– 'द्व्यङ्गुलोच्चां' इत्यादौ न्यूनत्वेऽप्यल्पत्वादविवक्षया द्व्यङ्गुलोच्चामित्याद्युक्त्याऽधिकत्वेन प्रतीतस्यैकाङ्गुलस्य तत्र तत्र किञ्चित् प्रवेशे सति षण्णवत्यङ्गुलत्वमेव सेत्स्यतीति।

इदानीं पादस्यादिमध्यान्त्यभागानामुच्चत्वपरिमाणमाह– **षडङ्गुलेति**॥ अन्ते इत्युक्तेः आदौ मध्ये चेति ग्राह्यम्। तथा च गुल्फसहिते आदिभागे षडङ्गुलोच्चप्रपदाम्। मध्यभागे **सार्धत्र्यङ्गुलप्रपदोच्चयुतां** अर्धाधिकत्र्यङ्गुलोच्चप्रपदाम्। **अन्ते** पादान्त्यभागे द्व्यङ्गुलप्रपदोच्छ्रयाम्। पादाङ्गुलीनां दैर्घ्यपरिमाणमाह– **त्र्यङ्गुलेत्यादिना**॥ **त्र्यङ्गुलद्व्यङ्गुलां** त्र्यङ्गुलमङ्गुलित्रयपरिमाणयुक्तां द्व्यङ्गुलमङ्गुलिद्वयं यस्या सा ताम्। अङ्गुष्ठस्य त्र्यङ्गुलदैर्घ्यं तदनन्तरस्याङ्गुलेश्च त्र्यङ्गुलं दैर्घ्यमिति भावः। **अर्धहीनमध्याङ्गुलां** अर्धेन अर्धाङ्गुलेन हीनं न्यूनं त्र्यङ्गुलपीरमाणं यस्य तत् अर्धहीनम्। सार्धद्व्यङ्गुलदीर्घमिति यावत्, तादृशं मध्याङ्गुलमङ्गुलिद्वयमध्यस्थं तृतीयाङ्गुलं यस्या सा ताम्॥ ६,७॥

**गु.दी.–** पादपृष्ठभागस्योपरितनग्रन्थिर्गुल्फशब्देनोच्यते। गुल्फादधस्तात्पादपर्यन्तं परिमाणं वक्ति— **आरभ्येति**॥ गुल्फमारभ्य, अधरमिति शेषः। सहार्धचतुरङ्गुलामेवेत्यन्वयः। **अद्धेति** 'पादान्मानं तु गुल्फस्य सार्धाङ्गुलचतुष्टयम्' इति प्रमाणप्रसिद्धिमाह। इदानीं गुल्फमारभ्य पादाग्रपर्यन्तं प्रपदः, तस्यादिमध्यान्तेति विविक्षाभेदेन परिमितिमाह– **षडङ्गुलेतिं**॥ आदाविति ग्राह्यम्। षडङ्गुलोच्चप्रपदादिभागामित्यर्थः॥ **सार्धेति**॥ मध्य इति ग्राह्यम्। सार्धत्र्यङ्गुलमेवोच्चप्रपदयुतामिति बुद्ध्या विवेकेन सम्बन्धः। सार्धत्र्यङ्गुलोच्चप्रपदमध्यामित्यर्थः। **अन्ते** प्रपदाग्रे। **व्यङ्गुलप्रपदोछ्रयां** व्यङ्गुलोच्चप्रपदाग्रयुतामिति यावत्। ननु 'मुखादूर्ध्वं व्यङ्गुलोच्चाम्' (तं.सा.३-३) इत्युक्तशीर्षपरिमाणमारभ्य 'आरभ्य गुल्फमद्धैव सहार्धचतुरङ्गुलाम्' (तं.सा.३-६)

इत्यन्तेनोक्तपादपर्यन्तं परिमाणे गण्यमाने सप्तनवत्यङ्गुलानि भवन्ति । 'षणवत्यङ्गुलां' (तं.सा.३-२) इति प्राचीनं वचनं कथमिति चेन्न । अस्त्यत्र गुरुपादोक्तः सम्प्रदायविशेषः ।

(तथाहि– 'मूलतश्च सार्धद्व्यङ्गुलमायतां' (तं.सा.३-४)इति वृषणमूलपरिमाणकथनं 'तावदागुदतो दीर्घां' (तं.सा.३-५)इति दैर्घ्यकथनं प्रासङ्गिकम् । ततोऽत्रोक्तपश्चाङ्गुलमपि त्यक्त्वा 'वृषणं चतुरङ्गुलं' (तं.सा.३-१३) इति वक्ष्यमाणवृषणदैर्घ्यपरिमाणेन चतुरङ्गुलेन सह षण्णवत्यङ्गुलत्वं सेत्स्यति । व्यवधानेनाभिधानं त्वतिरहस्यत्वात् इत्यवगन्तव्यमिति । अन्ये तु 'तावदागुतो दीर्घां' (तं.सा.३-५) इति वृषणमूलाधोभागमारभ्य गुदपर्यन्तं सार्धद्व्यङ्गुलपरिमाणमुक्तम् । तत्र सार्धैकाङ्गुलमेव गणनीयम् । वृषणमूलाधोभागापेक्षया तिर्यगेकाङ्गुलव्यवधानेनाधोभागे गुदस्य विद्यमानत्वात् । ततस्तत्रैकाङ्गुलपरित्यागे षण्णवत्यङ्गुलत्वं सम्भवतीति समाधानं वर्णयन्ति । अथवा, सार्धद्व्यङ्गुलमायताम् इत्युक्तसार्धद्व्यङ्गुलायतत्वग्रहणेन ग्रीवाचतुरङ्गुलसाहित्येन गणने अर्धन्यूनषण्णवतिर्जायते । तत्रार्धस्याल्पत्वादविवक्षेति केचित् । वस्तुतस्तु फालादुपरिविद्यमानद्व्यङ्गुलग्रहणेन षण्णवत्यङ्गुलत्वमिति भाति)

पादस्थाङ्गुष्ठादिपश्चाङ्गुलीनां दैर्घ्यपरिमाणमाह– **त्र्यङ्गुलद्व्यङ्गुलामित्यादिना ।।** **त्र्यङ्गुलं** त्र्यङ्गुलपरिमितं **द्व्यङ्गुलम्** अङ्गुलिद्वयम् अङ्गुष्ठं तदनन्तरं चेति यस्याः सा तथोक्ता । अयं भावः । अङ्गुष्ठस्य त्र्यङ्गुलं दैर्घ्यम् । तदनन्तरस्य च त्र्यङ्गुलदैर्घ्यमिति । अर्धहीनं त्र्यङ्गुलम् । सार्धद्वयाङ्गुलं तत्परिमितं मध्याङ्गुलं यस्यास्ताम् ।। ६,७।।

**मङ्घाली–** जङ्घाधोभागे पादपार्श्वद्वये विद्यमानौ गोलाकारौ ग्रन्थी गुल्फावित्युच्येते । गुल्फमध्यमारभ्य गुल्फमध्यादधः पादतलपर्यन्तं **सहार्धचतुरङ्गुलां** अर्धाधिकचतुरङ्गुलदीर्घामित्यर्थः ।

नन्वत्राङ्गुलिगणने क्रियमाणे सप्तनवत्यङ्गुलाति भवन्ति । 'षण्णवत्यङ्गुलां' (तं.सा.३-२) इति कथमुक्तमिति चेत् । अत्र वदन्ति । 'तावदागुदतो दीर्घां'

(तं.सा.३-५) इति वृषणमूलमारभ्य गुदपर्यन्तं सार्धद्व्यङ्गुलत्वमुक्तम् । तत्र सार्धैकाङ्गुलमेव गणनीयम् । तावन्मात्रस्यैव ऋजुत्वेन दीर्घत्वात् । ततोऽधः एकाङ्गुलस्य गुदपर्यन्तं तिर्यक्स्थितत्वेन ऋजुत्वाभावात् । अतस्तत्र वक्रैकाङ्गुलपरित्यागे सति षण्णवत्यङ्गुलत्वं सेत्स्यतीति ।

अपरे तु– 'मूलतश्च सार्धद्व्यङ्गुलमायतां' (तं.सा.३-४)इति वृषणमूलपरिमाणकथनं 'तावदागुदतोदीर्घा' (तं.सा.३-५) इति गुदपर्यन्तं दैर्घ्यकथनं च प्रासङ्गिकम् । अतोऽत्र पश्चाङ्गुलानपि परित्यज्य 'वृषणं चतुरङ्गुलं' (तं.सा.३-१३) इति वक्ष्यमाण-वृषणदैर्घ्यपरिमाणेन चतुरङ्गुलेन सह षण्णवत्यङ्गुलत्वं सेत्स्यति । व्यवधानेन कथनं त्वतिरहस्य त्वादिति ज्ञेयमिति ।

अन्ये तु– 'सार्धद्व्यङ्गुलमायतां'(तं.सा.३-४) इत्यत्र आर्धशब्दो भावप्रधानः । आ ऋद्धत्वं पुष्टत्वम् अर्धत्वं तेन सहितं सार्धं, तच्च तत् द्व्यङ्गुलं चेति तत्तथोक्तम् । मध्येऽङ्गुलिपुष्टत्वकथनं तु देहलीदीपन्यायेन सर्वाङ्गुलीनामपि पुष्टत्वज्ञापनार्थम् । तथा च मलतः वृषणमूले सार्धद्व्यङ्गुलं सम्यक् पुष्टाङ्गुलिद्वयपरिमाणं अयतां मूलादागुदतः तावत् द्व्यङ्गुलदीर्घामित्यर्थः । गुदवृषणयोर्मध्यप्रदेशस्य द्व्यङ्गुलदीर्घत्वमुक्तम् शेखरे–

गुदध्वजान्तरे कन्दमुत्सेधद्व्यङ्गुलं विदुः ।
तस्मात् द्विगुणविस्तारं वृत्तरूपेण शोभितम् ।। इति ।

गुदध्वजान्तरे गुदवृषयोर्मध्ये कन्दं वृषणमूलाधारप्रदेशं, उत्सेधात् । ल्यब्लोपनिमित्ता पश्चीमी । दैर्घ्यमपेक्ष्य, द्व्यङ्गुलं अङ्गुलिद्वयदीर्घं तस्मात् दैर्घ्यात् द्विगुणविस्तारं चतुरङ्गुलविस्तारमिति यावत् । वृत्तरूपेण शोभितं वर्त्तुलाकारं विदुरित्यर्थः । तथा च षण्णवत्यङ्गुलत्वमेव सेत्स्यतीति ।

एके तु– द्व्यङ्गुलोच्चामित्यादौ तत्र तत्र किंचित् किञ्चिन्यूनत्वेऽपि अल्पत्वादविवक्षया द्व्यङ्गुलोच्चामित्याद्युक्त्याऽधिकत्वेन प्रतीतस्यैकाङ्गुलस्य तत्र तत्र किंचित्किञ्चित्प्रवेशे सति षण्णवत्यङ्गुलत्वमेव सेत्स्यतीति ।

इदानीं पादस्यादिमध्यान्त्यभागानामुच्चत्वपरिमाणमाह– षडङ्गुलेति ।। अन्त

इत्युक्तेः आदौ मध्ये चेति ग्राह्यम्। तथा च गुल्फसहिते आदिभागे षडङ्गुलोच्चपादम्। मध्यभागे सार्धत्र्यङ्गुलं **प्रपदोच्छ्रयां।** अर्धाधिकत्र्यङ्गुलोच्चप्रपदाम्। **अन्ते** पदान्तिमभागे व्यङ्गुलप्रपदोच्छ्रयाम्। पदाङ्गुलीनां दैर्घ्यपरिमाणमाह– **त्र्यङ्गुलेत्यादिना ।।** **त्र्यङ्गुलव्यङ्गुलां** त्र्यङ्गुलं अङ्गुलित्रयपरिमाणयुक्तं व्यङ्गुलम् अङ्गुलिद्वयं यस्याः सा ताम्। अङ्गुष्ठस्य त्र्यङ्गुलं दैर्घ्यं तदनन्तरस्याङ्गुलेश्च त्र्यङ्गुलं दैर्घ्यमिति भावः। **अर्धहीनमध्याङ्गुलां** अर्धेन अर्धाङ्गुलेन हीनं न्यूनं त्र्यङ्गुलं परिमाणं यस्य तत् अर्धहीनं। सार्धव्यङ्गुलदीर्घमिति यावत्। तादृशं **मध्याङ्गुलं** अङ्गुलिद्वयमध्यस्थं तृतीयाङ्गुलं यस्याः सा तां ।।६,७।।

पादगतचतुर्थाङ्गुलिपरिमाणमारभ्य पादाङ्गुलिनखपरिमाणकथनम्

**तं.सा. त्रिपदांगुलहीनान्यां ततस्तादृक्षतत्पराम् ।**
**पादोनोच्चांगुष्ठनखां तदर्धतदनन्तराम् ।। ८ ।।**

**त.क.–** पादगतचतुर्थांगुलिपरिमाणमाह— **त्रिपदांगुलहीनान्यामिति ।।** हीनेत्यतः परं त्र्यंगुलेति ग्राह्यम्। त्रयश्च ते पादाश्च त्रिपादाः। अंगुलस्य त्रिपादाः त्रिपादांगुलम्। कडारादित्वात् परनिपातः। अंगुलत्रिपादहीनाः त्रयः अंगुलयः यस्य सः त्रिपादांगुलित्र्यंगुलः, अन्यः चतुर्थः अंगुलिः यस्याः सा त्रिपादांगुलहीनत्र्यंगुलान्या इति विग्रहः। त्रिष्वंगुलिषु एकस्यांगुलेः भागत्रयत्यागे एक एव भागोऽवशिष्टः। तथाच भागत्रयहीनत्र्यंगुलशब्देन अंगुलिचतुर्भागसहितव्यंगुलपरिमाणत्वाप्राप्तेः चतुर्थांगुलिः सपादव्यंगुलपरिमितदीर्घ इत्यर्थः। पञ्चमांगुलिप्रमाणमाह— **तादृक्षतत्परामिति ।।** तादृशशब्देन त्रिपादहीनत्वमेवोच्यते। त्रिपादहीनत्र्यंगुलपरिमाणं त्रेधा विभज्य त्रिष्वेकं भागं परित्यज्य अवशिष्टभागद्वयोपेतं अंगुलपरिमितं यस्य सः, तादृशतत्परः पञ्चमांगुलिर्यस्य इति विग्रहः। पादपञ्चमांगुलिः सार्धैकांगुलिपरिमित इत्यर्थः। तथाच अंगुष्ठं त्र्यंगुलपरिमितदीर्घम्। तदनन्तरांगुलमपि त्र्यंगुलपरिमितमेव। तदनन्तरांगुलं सार्धव्यंगुलपरिमितम्। चतुर्थं तु सपादव्यंगुलपरिमितम्। तदन्तरांगुलं सार्धैकांगुलपरिमितमिति विवेक्तव्यम्।

प्रसंगात् पादांगुलिगतनखदैर्घ्यप्रमाणं क्रमेणोच्यते। तत्र अंगुष्ठनख-परिमाणमाह— **पादोनोच्चांगुष्ठनखामिति ।।** पादोनेत्यतः परं एकांगुलेत्यध्याहार्यम्। पादात् चतुर्थांशात् ऊनः यस्य तत् पादोनम्। तच्च तदेकांगुलं च पादोनैकांगुलम्। उच्चम् अंगुष्ठं, तद्गतं नखं उच्चांगुष्ठनखम्। पादेनैकांगुल-परिमाणम् उच्चांगुष्ठनखं यस्या इति विग्रहः। चतुर्थभागहीनांगुलपरिमाणं अंगुष्ठनखस्येत्यर्थः। तदनन्तरांगुलिनखपरिमाणमाह— **तदर्धतदनन्तरामिति ।।** तच्छब्देन अंगुष्ठनखपरिमाणं परामृश्यते। द्वितीयेन तच्छब्देन अंगुष्ठम्। तदर्धप्रमाणं तदनन्तरांगुलिनखपरिमाणं यस्या इति विग्रहः। द्वितीयांगुलिनखं अष्टभागसहितचतुर्थभागपरिमितमित्यर्थः ।। ८ ।।

**अ.सं.– त्रिपादाङ्गुलहीनान्यां** त्रयः पादाः भागाः यस्य तत् त्रिपादं, तच्च तत् अङ्गुलं च त्रिपादाङ्गुलं तेन त्रिपादाङ्गुलेन पादत्रयेण हीनं त्र्यङ्गुलं परिमाणं यस्य तत् त्रिपादाङ्गुलहीनम्। तादृशम् अन्यत् त्र्यङ्गुलं यस्याः सा तां सपादद्व्य-ङ्गुलपरिमितचतुर्थाङ्गुलयुक्तामित्यर्थः। **ततस्तादृशतत्परां** तादृशं चतुर्थाङ्गुलसदृशं तस्मात् चतुर्थाङ्गुलात् परमन्यत् पञ्चमाङ्गुलं यस्य सा ताम् । पञ्चमस्य तादृशपदोक्तं चतुर्थाङ्गुलसादृश्यं तु यथा चतुर्थस्य तृतीयाङ्गुलापेक्षया पादोनत्वमेवं पञ्चमस्यापि चतुर्थाङ्गुलापेक्षया पादोनत्वेन ज्ञेयम्। अङ्गुलिद्वय-परिमितकनिष्ठाङ्गुलामिति भावः। यद्वा **ततः तादृशतत्परां** ततः चतुर्थापेक्षया तादृशं त्रिपादन्यूनं तत्परं पञ्चमाङ्गुलं यस्याः सा तथोक्ता ताम्। सार्धैकाङ्गुलपरिमितकनिष्ठाङ्गुलोपेतामिति भावः। अथवा तत इत्यस्य त्रिपादा-ङ्गुलहीनान्यामित्यत्रापि सम्बन्धः। एवं च **ततः** सार्धद्व्यङ्गुलपरिमित-मध्याङ्गुलापेक्षया त्रिपादन्यूनान्यांगुलामित्यर्थः। पादोनव्यङ्गुलपरिमितचतुर्थाङ्गु-लोपेतामिति भावः। **ततः** पादोनद्व्यङ्गुलपरिमितचतुर्थाङ्गुलापेक्षया **तादृशतत्परां** त्रिपादन्यूनकनिष्ठाङ्गुलाम् एकाङ्गुलपरिमितपञ्चमाङ्गुलोपेतामिति भावः ।

अयं भावः। प्रथमद्वितीययोरङ्गुलयोः प्रत्येकं त्र्यङ्गुलदैर्घ्यं, तृतीयस्य सार्धद्व्यङ्गुलं, चतुर्थस्य सपादद्व्यङ्गुलम्, पञ्चमस्य द्व्यङ्गुलदैर्घ्यं सार्धैकाङ्गुलं वा । यद्वा चतुर्थस्य पादोनव्यङ्गुलम्। पञ्चमस्य एकाङ्गुलमिति योजनाभेदेन एते पक्षाः

ज्ञेया इति । तादृशं चतुर्थसदृशं पादद्वयाङ्गुलपरिमितं तत्परं पञ्चमं यस्यास्ताम् । चतुर्थपञ्चमयोः समपरिमाणत्वमिति भाव इत्यपि व्याचक्षते । इदानीं नखपरिमाणमाह– **पादोनेति** ।। पादन्यूनैकाङ्गुलपरिमाणोच्चः दीर्घः अङ्गुष्ठस्य नखो यस्याः सा ताम् । **तदर्धतदनन्तरां** तदर्धेन पूर्वपरिमाणार्धेन पादपादार्धेन दीर्घः तदनन्तरः द्वितीयाङ्गुलिनखो यस्याः सा ताम् ।। ८ ।।

**गु.दी.–** त्रयः **पादाः** भागाः यस्य तादृशाङ्गुलेन हीनं यत् त्र्यङ्गुलं सपादाङ्गुलिद्वयमिति यावत् । तत्परिमितं **अन्यत्** अनामिकाख्यं चतुर्थमङ्गुलं यस्यास्ताम् । **ततः** अनामिकातः । **तादृशं** तुरीयाङ्गुलिसदृशं **तत्परं** तस्मात्तुरीयत्परं कनिष्ठानामकं पञ्चममङ्गुलं यस्याः सा तादृशतत्परा । पञ्चमस्य तुरीयाङ्गुलसादृश्यं तादृशपदोक्तम् । यथा तुरीयस्य स्वाव्यवहितपूर्वापेक्षया पादोनत्वमेवं तुरीयाख्याव्यवहितपूर्वाक्षया पादोनत्वेन ज्ञेयम् । तथा च अङ्गुलद्वयपरिमितदीर्घमित्यर्थः । **ततः** अनन्तरं **तादृशं** सपादद्व्ययाङ्गुलपरिमाणं तत्परं पञ्चमं यस्याः सा तामिति केचित् ।।

इदानीं तन्नखपरिमाणमाह— **पादेति** ।। **पादोनोच्चाङ्गुष्ठनखाम्** पादेन चतुर्थभागेन न्यूनैकाङ्गुलिपरिमाणेनोन्नतः अङ्गुष्ठस्य नखो यस्यास्ताम् । **तदर्धेन** सार्धपादेनोच्चः । **तदनन्तरः** द्वितीयाङ्गुलनखो यस्यास्ताम् । सार्धैकपादतदनन्तराङ्गुलिनखामिति यावत् ।। ८ ।।

**मङ्गाली– त्रिपादाङ्गुलहीनान्यां** त्रयः पादाः भागाः यस्य तत् त्रिपादं, तच्च तत् अङ्गुलं च त्रिपादाङ्गुलं, तेन त्रिपादाङ्गुलेन पादत्रयेण हीनं त्र्यङ्गुलं परिमाणं यस्य तत् त्रिपादाङ्गुलहीनं, तादृशं अन्यदङ्गुलं यस्याः सा तां । सपादद्व्यङ्गुलपरिमितचतुर्थाङ्गुलयुक्ताम् इत्यर्थः । **ततस्तादृशंतत्परां** ततश्चतुर्थापेक्षया तादृशं चतुर्थाङ्गुलसदृशं स्वाव्यवहिताङ्गुलापेक्षया पादोनपरिमाणं तस्माच्चतुर्थाङ्गुलात् परमन्यत् पञ्चमाङ्गुलं यस्यास्सा तां । पञ्चमस्य तादृशपदोक्तं चतुर्थाङ्गुलसादृश्यन्तु यथा चतुर्थस्य तृतीयाङ्गुलापेक्षया पादोनत्वं एवं पञ्चमस्यापि चतुर्थाङ्गुलापेक्षया पादोनत्वेन ज्ञेयम् । अङ्गुलिद्वयपरिमितकनिष्ठाङ्गुलामिति भावः । यद्वा तत

चतुर्थापेक्षया तादृशं त्रिपादन्यूनं तत्परं पञ्चमाङ्गुलं यस्यास्सा तथोक्ता तां सार्धैकाङ्गुलपरिमितकनिष्ठाङ्गुलोपेतामिति भावः। अथवा **तत** इत्यस्य त्रिपादाङ्गुलहीनान्यामित्यत्रापि सम्बन्धः। एवं च ततः सार्धद्व्यङ्गुलपरिमितं मध्याङ्गुलापेक्षया त्रिपादन्यूनान्याङ्गुलामित्यर्थः। पादोनद्व्यङ्गुलपरिमितचतुर्थाङ्गुलोपेतामिति भावः। ततः पादोनद्व्यङ्गुलपरिमितचतुर्थाङ्गुलापेक्षया तादृशतत्परां त्रीपादन्यूनकनिष्ठाङ्गुलाम्। एकाङ्गुलपरिमितपञ्चमाङ्गुलोपेतामिति भावः। अन्ये तु– तादृशं चतुर्थसदृशं सपादद्वयाङ्गुलपरिमितं तत्परं पञ्चमं यस्यास्तां चतुर्थपञ्चमयोः समपरिमाणत्वमिति भाव इति व्याचक्षते।

इदानीं नखपरिमाणमाह– **पादोनेति ॥** पादन्यूनैकाङ्गुलपरिमाणोच्चदीर्घः अङ्गुष्ठस्य नखो यस्यास्सातां। **तदर्धतदनन्तरां** पादार्धादिकपादाङ्गुलपरिमिततदनन्तराङ्गुलिनखामित्यर्थः ॥८॥

पादाङ्गुलिनखपरिमाणमारभ्य पादाग्रपर्यन्तं अवयवानां परिमाणकथनम्

**तं.सा. क्रमशः पादहीनान्यां रक्तपादनखां शुभाम्।**
**विस्तारः प्रपदस्यापि षडंगुल उदाहृतः ॥ ९ ॥**

**त.क.**– तदनन्तरांगुलित्रयनखपरिमाणानि युगपदाह– **क्रमशः पादहीनान्यामिति ॥** द्वितीयांगुलिनखपरिमाणापेक्षया चतुर्थभागहीनपरिमाणं तृतीयांगुलिनखस्य। तच्चतुर्भागहीनपरिमाणं चतुर्थांगुलिनखस्य। तच्चतुर्भागहीनपरिमाणं पञ्चमांगुलिनखस्येति विवेक्तव्यम्। पादहीनपरिमाणानि अन्यानि नखानि यस्या इति विग्रहः। एवं 'सुप्रतिमाम्' (तं.सा.३-१) इत्युक्तसौष्ठवं षण्णवत्यंगुलतया उपपाद्य प्रकारान्तरेणाप्युपपादयति— **रक्तपादनखां शुभामिति ॥** रक्तत्वं पादे नखे च अन्वेति। उपलक्षणमेतत्। रक्तपादाब्जनेत्राधरकरनखरसनाग्र इत्युक्तेः। एवमुत्सेधमानमभिधाय 'मानं च तिर्यगूर्ध्वं यत्तत् प्रमाणमिहोच्यते' इत्युक्तप्रमाणमाह— **विस्तार इति ॥** अपिशब्दः प्रमाणमप्युच्यत इति संबध्यते। प्रपदस्य अग्रभागविस्तारः अंगुलिषट्कपरिमितः प्रमाणिकैरुदाहृत इत्यर्थः ॥ ९ ॥

**अ.सं.– क्रमशः पादहीनान्यां** पूर्वपूर्वापेक्षपा क्रमात् पादेन न्यूना अन्ये

ज्ञेया इति। तादृशं चतुर्थसदृशं पादद्वयाङ्गुलपरिमितं तत्परं पञ्चमं यस्यास्ताम्। चतुर्थपञ्चमयोः **समपरिमाणत्वमिति** भाव इत्यपि व्याचक्षते। इदानीं नखपरिमाणमाह– **पादोनेति** ॥ पादन्यूनैकाङ्गुलपरिमाणोच्चः दीर्घः अङ्गुष्ठस्य नखो यस्याः सा ताम्। **तदर्धतदनन्तरां** तदर्धेन पूर्वपरिमाणार्धेन पादपादार्धेन दीर्घः तदनन्तरः द्वितीयाङ्गुलिनखो यस्याः सा ताम् ॥ ८ ॥

**गु.दी.–** त्रयः **पादाः** भागाः यस्य तादृशाङ्गुलेन हीनं यत् त्र्यङ्गुलं सपादाङ्गुलिद्वयमिति यावत्। तत्परिमितं **अन्यत्** अनामिकाख्यं चतुर्थमङ्गुलं यस्यास्ताम्। **ततः** अनामिकातः। **तादृशं** तुरीयाङ्गुलिसदृशं **तत्परं** तस्मात्तुरीयत्परं कनिष्ठानामकं पञ्चममङ्गुलं यस्याः सा तादृशतत्परा। पञ्चमस्य तुरीयाङ्गुलसादृश्यं तादृशपदोक्तम्। यथा तुरीयस्य स्वाव्यवहितपूर्वापेक्षया पादोनत्वमेवं तुरीयाख्याव्यवहितपूर्वाक्षया पादोनत्वेन ज्ञेयम्। तथा च अङ्गुलद्वयपरिमितदीर्घमित्यर्थः। **ततः** अनन्तरं **तादृशं** सपादद्व्ययाङ्गुलपरिमाणं तत्परं पञ्चमं यस्याः सा तामिति केचित् ॥

इदानीं तन्नखपरिमाणमाह— **पादेति** ॥ **पादोनोच्चाङ्गुष्ठनखाम्** पादेन चतुर्थभागेन न्यूनैकाङ्गुलिपरिमाणेनोन्नतः अङ्गुष्ठस्य नखो यस्यास्ताम्। **तदर्धेन** सार्धपादेनोच्चः। **तदनन्तरः** द्वितीयाङ्गुलनखो यस्यास्ताम्। सार्धैकपादतदनन्तराङ्गुलिनखामिति यावत् ॥ ८ ॥

**मङ्गाली– त्रिपादाङ्गुलहीनान्यां** त्रयः पादाः भागाः यस्य तत् त्रिपादं, तच्च तत् अङ्गुलं च त्रिपादाङ्गुलं, तेन त्रिपादाङ्गुलेन पादत्रयेण हीनं त्र्यङ्गुलं परिमाणं यस्य तत् त्रिपादाङ्गुलहीनं, तादृशं अन्यदङ्गुलं यस्याः सा तां। सपादद्व्यङ्गुलपरिमितचतुर्थाङ्गुलयुक्ताम् इत्यर्थः। **ततस्तादृशंतत्परां** ततश्चतुर्थापेक्षया तादृशं चतुर्थाङ्गुलसदृशं स्वाव्यवहिताङ्गुलापेक्षया पादोनपरिमाणं तस्माच्चतुर्थाङ्गुलात् परमन्यत् पञ्चमाङ्गुलं यस्यास्सा तां। पञ्चमस्य तादृशपदोक्तं चतुर्थाङ्गुलसादृश्यन्तु यथा चतुर्थस्य तृतीयाङ्गुलापेक्षया पादोनत्वं एवं पञ्चमस्यापि चतुर्थाङ्गुलापेक्षया पादोनत्वेन ज्ञेयम्। अङ्गुलिद्वयपरिमितकनिष्ठाङ्गुलामिति भावः। यद्वा तत

चतुर्थापेक्षया तादृशं त्रिपादन्यूनं तत्परं पञ्चमाङ्गुलं यस्यास्सा तथोक्ता तां सार्धैकाङ्गुलपरिमितकनिष्ठाङ्गुलोपेतामिति भावः। अथवा **तत** इत्यस्य त्रिपादाङ्गुलहीनान्यामित्यत्रापि सम्बन्धः। एवं च ततः सार्धद्ब्यङ्गुलपरिमितं मध्याङ्गुलापेक्षया त्रिपादन्यूनान्याङ्गुलामित्यर्थः। पादोनद्ब्यङ्गुलपरिमितचतुर्थाङ्गु-लोपेतामिति भावः। ततः पादोनद्ब्यङ्गुलपरिमितचतुर्थाङ्गुलापेक्षया तादृशतत्परां त्रीपादन्यूनकनिष्ठाङ्गुलाम्। एकाङ्गुलपरिमितपञ्चमाङ्गुलोपेतामिति भावः। अन्ये तु– तादृशं चतुर्थसदृशं सपादद्वयाङ्गुलपरिमितं तत्परं पञ्चमं यस्यास्तां चतुर्थपञ्चमयोः समपरिमाणत्वमिति भाव इति व्याचक्षते।

इदानीं नखपरिमाणमाह– **पादोनेति ।।** पादन्यूनैकाङ्गुलपरिमाणोच्चदीर्घः अङ्गुष्ठस्य नखो यस्यास्सातां। **तदर्धतदनन्तरां** पादार्धादिकपादाङ्गुल-परिमितततदनन्तराङ्गुलिनखामित्यर्थः ।।८ ।।

पादाङ्गुलिनखपरिमाणमारभ्य पादाग्रपर्यन्तं अवयवानां परिमाणकथनम्

**तं.सा.** **क्रमशः पादहीनान्यां रक्तपादनखां शुभाम् ।**
**विस्तारः प्रपदस्यापि षडंगुल उदाहृतः ।। ९ ।।**

**त.क.–** तदनन्तरांगुलित्रयनखपरिमाणानि युगपदाह– **क्रमशः पादहीनान्या-मिति ।।** द्वितीयांगुलिनखपरिमाणापेक्षया चतुर्थभागहीनपरिमाणं तृतीयांगु-लिनखस्य। तच्चतुर्भागहीनपरिमाणं चतुर्थांगुलिनखस्य। तच्चतुर्भागहीनपरिमाणं पञ्चमांगुलिनखस्येति विवेक्तव्यम्। पादहीनपरिमाणानि अन्यानि नखानि यस्या इति विग्रहः। एवं 'सुप्रतिमाम्' (तं.सा.३-१) इत्युक्तसौष्ठवं षण्णवत्यंगुलतया उपपाद्य प्रकारन्तरेणाप्युपपादयति— **रक्तपादनखां शुभामिति ।।** रक्तत्वं पादे नखे च अन्वेति। उपलक्षणमेतत्। रक्तपादाब्जनेत्राधरकरनखरसनाग्र इत्युक्तेः। एवमुत्सेधमानमभिधाय 'मानं च तिर्यगूर्ध्वं यत्तत् प्रमाणमिहोच्यते' इत्युक्तप्रमाणमाह— **विस्तार इति ।।** अपिशब्दः प्रमाणमप्युच्यत इति संवध्यते। प्रपदस्य अग्रभागविस्तारः अंगुलिषट्कपरिमितः प्रमाणिकैरुदाहृत इत्यर्थः ।। ९ ।।

**अ.सं.– क्रमशः पादहीनान्यां** पूर्वपूर्वापेक्षपा क्रमात् पादेन न्यूना अन्ये

अङ्गुलित्रयनखाः यस्यास्ताम् । अयं भावः । एकाङ्गुलपरिमाणे चतुर्धा विभक्ते तत्र पादत्रयपरिमिताङ्गुलिदैर्घ्यमङ्गुष्ठनखस्य । द्वितीयाङ्गुलनखस्य तु पादपादार्धोच्चत्वम्। पादपादार्धाङ्गुलिपरिमाणे चतुर्धा विभक्ते तत्रैकांशोनपरिमाणत्वम् । तृतीयाङ्गुलिनखस्य तृतीयनखपरिमाणे चतुर्धा विभक्ते तत्रैकपादोनपरिमाणत्वं चतुर्थनखस्य । तत्परिमाणे चतुर्धा विभक्ते तत्रैकभागन्यूनत्वं पञ्चमनखस्येति । रक्ताः लोहिताः पादनखाः यस्याः तां । रक्तत्वं पादनखयोर्विशेषणमित्यप्याहुः । अत्र पादग्रहणमिदमङ्गुलिपरिमाणं नखपरिमाणं च पादाङ्गुलिपादनखानामेवेति ज्ञापनार्थम् । **शुभां** पुष्टावयवत्वादिना मनोहराम् । पादाग्रविस्तारपरिमाणमाह– **विस्तार इति ।। प्रपदस्य** पादाग्रस्य ।। ९ ।।

**गु.दी.– क्रमश इति ।।** क्रमेण पादेन हीनाः **अन्ये** मध्यमानामिकाकनिष्ठिकाङ्गुलित्रयनखाः यस्याः सा ताम् । द्वितीयाङ्गुलिनखपरिमाणापेक्षया पादोनपरिमाणत्वं तृतीयनखस्य । तत्परिमाणापेक्षया पादोनपरिमाणोपेतत्वं तुरीयनखस्य । तत्परिमाणापेक्षायाऽन्तिमनखस्य पादोनपरिमाणोपेतत्वमित्यर्थः ।

अयं भावः । अङ्गुष्ठनखस्य त्रिपादोच्चत्वम् । तदनन्तराङ्गुलिनखस्य सार्धैकपादोच्चत्वम् । सार्धैकपादाङ्गुलपरिमाणे चतुर्धा विभक्ते तत्रैकांशोनपरिमाणत्वं तृतीयनखस्य । तृतीयनखपरिमाणे चतुर्धा विभक्ते तत्रैकांशोनपरिमाणत्वं तुरीयनखस्य । तत्परिमाणे चतुर्धा विभक्ते तत्रैकांशोनत्वं कनिष्ठिकानखस्येति । **रक्ताः** शोणाः पादाः नखाश्च यस्यास्ताम् । पादग्रहणेनेदमङ्गुलिपरिमाणं पादाङ्गुलिपादनखानामेवेति सूचयति । **शुभां** पुष्टावयवत्वादिना मनोरमाम् । षडङ्गुलोच्चप्रपदाम् ।।

पूर्वं प्रपदौन्नत्यस्य षडङ्गुलत्वमुक्त्वेदानीं प्रपदतिर्यक् विस्तारस्य षडङ्गुलपरिमितत्वमाह— **विस्तार इति ।। प्रपदस्य** पादाग्रस्य विस्तारोऽपीत्यन्वयः । तेन प्रागुक्तोच्चत्वसमुच्चयः ।। ९ ।।

**मङ्काली– क्रमशः पादहीनान्यां** पूर्वपूर्वापेक्षया क्रमात् पादोनन्यूनाः अन्ये अङ्गुलित्रयनखा यस्यास्तां । रक्ताः लोहिताः पादनखा यस्यास्तां । रक्तत्वं

पादनखयोर्द्वयोरपि विशेषणमित्यप्याहुः । अत्र पादग्रहणं इदमङ्गुल्यादिपरिमाणं पादङ्गुल्यादीनामेवेति ज्ञापनार्थं । **शुभां** पुष्टावयवत्वादिना मनोहरां । पादाग्रविस्तारपरिमाणमाह– **विस्तार** इति ।। **प्रपदस्य** पादाग्रस्य । विस्तारोऽपीत्यपिपदेन न केवलं षडङ्गुलोच्चत्वमिति समुच्चिनोति ।। ९ ।।

पादाङ्गुलीनां स्थौल्यपरिमाणकथनम्

**तं.सा.** **अंगुष्ठपरिणाहस्तु चतुरंगुल ईरितः ।**
**त्र्यंगुलस्तु तदन्यस्य (तदन्यस्याः, तदन्यः स्यात्)**
**व्रीह्यर्धोनाः क्रमात्पराः ।। २० ।।**

**त.क.–** उन्मानं नहनं भवेदित्युक्तमुन्मानपरिमाणमाह– **अंगुष्ठेति** ।। यद्यपि प्रमाणशब्दितं तिर्यक्परिमाणं समस्ताङ्गेष्वभिधायोन्मानमुपक्रमणीयम् । तथापि पादांगुलीनां बुद्धिस्थतया तद्गतोन्नाहनाकाङ्क्षया उत्कटत्वादत्रोक्तिः । तत्रादौ अंगुष्ठपरिणाहमाह– **त्र्यंगुलस्तु तदन्यस्येति** ।। त्रीणि अंगुलानि प्रमाणं यस्य परिणाहस्य स तथा । तदन्यस्य अंगुष्ठात् भिन्नाया द्वितीयांगुलेरित्यर्थः । अंगुलिशब्दः स्त्रीलिङ्गोऽप्यस्ति । अवशिष्टानां त्रयाणामंगुलीनां परिणाहं युगपादाह— **व्रीह्यर्धोनाः क्रमात् परा इति** ।। **पराः** तिस्र अंगुलयः । व्रीहेरर्धं व्रीह्यर्धम् । व्रीह्यर्धोन ऊनत्र्यंगुलपरिणाहा इत्यर्थः । तृतीयांगुलिः अर्धव्रीह्यून-त्र्यंगुलपरिणाहः, चतुर्थंगुलिरर्धव्रीहिन्यूनपूर्वोक्तपरिणाहः । व्रीहिन्यूनत्र्यंगुलपरिणाह इति यावत् । पञ्चमांगुलिः व्रीह्यर्धोनत्र्यंगुलपरिणाह इति क्रमात् ज्ञातव्यम् । तदुपरि स्थितायाः जङ्घाया अधरमध्योर्ध्वभेदेन त्रेधा विभज्य क्रमेण परिणाह उच्यते ।। २० ।।

**अ.सं–** इदानीं पादाङ्गुलिस्थौल्यपरिमाणमाह– **अङ्गुष्ठेति** । **अङ्गुष्ठपरिणाहः** अङ्गुष्ठस्य स्थूलता । चतुरङ्गुलत्वं चतुरङ्गुलपरिमितसूत्रवेष्ठयोग्य इति भावः । एवमुत्तरत्रापि **तदन्यस्य** तत्सन्निहितस्य द्वितीयस्य परिणाह इति बुद्ध्या विविच्य सर्वत्रान्वेतव्यम् । **पराः** प्रथमद्वितीयाभ्याम् अन्यास्तिस्रोऽङ्गुल्यः क्रमात् **व्रिह्यर्धोनाः** अर्धव्रीह्यूनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः ।

अत्रायं विवेकः। अङ्गुष्ठस्य परिणाहः चतुरङ्गुलः, द्वितीयस्य त्र्यङ्गुलः, तृतीयस्य अर्धव्रीह्यूनत्र्यङ्गुलः, चतुर्थस्य तृतीयापेक्षया पुनर्व्रीह्यर्धोनत्र्यङ्गुलः व्रीह्यूनत्र्यङ्गुल इति यावत्। पञ्चमस्य चतुर्थापेक्षया पुनरर्धव्रीह्यूनत्र्यङ्गुल इति यावत् ॥ १० ॥

**गु.दी.–** इदानीं पादाङ्गुलिपरिणाहमाह– **अङ्गुष्ठेति** ॥ **परिणाहो** नाम परितः परिमाणस्थौल्यमिति यावत् ॥ **चतुरङ्गुल इति** ॥ चतुरङ्गुलमितसूत्रवेष्टनयोग्य इति भावः। **तदन्यस्याः** द्वितीयाङ्गुलेः त्र्यङ्गुलस्तु परिणाह इति बुद्ध्या विविक्तस्यानुवृत्तिः। 'त्र्यङ्गुलस्तु तदन्यस्य' इत्यपरः पाठः। तत्र **तदन्यस्य** द्वितीयाङ्गुलस्येत्यर्थः। क्वचित् 'तदन्यः स्यात्' इति पाठः ॥ **व्रीहीति** ॥ **पराः** उभाभ्यामन्याः तिस्रः अङ्गुल्यः क्रमात् **व्रीह्यर्धोनाः** व्रीह्यर्धोनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः।

अयं भावः। तृतीयाङ्गुलस्य व्रीह्यर्धोनाङ्गुलित्रयपरिणाहत्वम्। तुरीयस्य तृतीयपरिणाहापेक्षया व्रीह्यर्धोनपरिणाहत्वम्। अन्तिमस्य तुरीयपरिणाहापेक्षया व्रीह्यर्धोनपरिणाहत्वमिति ॥ तथा च अर्धव्रीहिन्यूनत्र्यङ्गुलपरिणाहा तृतीया। चतुर्थी व्रीह्यूनत्र्यङ्गुलपरिणाहा। पञ्चमी सार्धव्रीह्यूनत्र्यङ्गुलपरिणाहेत्युक्तं भवति ॥१०॥

**मङ्गाली–** इदानीं पादाङ्गुलिस्थौल्यपरिमाणमाह– **अङ्गुष्ठेति** ॥ परिणाहः **चतुरङ्गुलः** चतुरङ्गुलपरिमितसूत्रवेष्टनयोग्य इति भावः। एवमुत्तरत्रापि। **तदन्यस्याः** तत्सन्निहितायाः द्वितीयायाः परिणाह इति बुद्ध्या विविच्य सर्वत्रान्वेतव्यम्। **पराः** प्रथमद्वितीयाभ्याम् अन्यास्तिस्रोऽङ्गुलयः क्रमात् **व्रीह्यर्धोनाः** अर्धव्रीह्यूनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः ॥ १० ॥

जङ्घाद्यवयवानां परिणाहकथनम्

**तं.सा.** **दशांगुलं जङ्घमूलं मध्यं च(तन्मध्यं)(तत्) त्र्यंगुलाधिकम्।**
**सप्तादशांगुलं तूर्ध्वं जानुरष्टादशांगुलम्(लः) ॥ ११ ॥**

**ऊर्वन्तोऽपि तथा ज्ञेयो मध्यं द्विर्द्वा(द्वा)शांगुलः।**
**चतुरंगुलाधिकं मूलं गुह्यं सार्धचतुष्टयम् ॥ १२ ॥**

**(सार्धत्रयपरीणाहः) सार्धत्रयं परीणाहाद्वृषणं चतुरंगुलम् ।**
**सप्तांगुलं परीणाहाद्वृत्तं प्रोक्तं समस्तशः ।। १३ ।।**

**अष्टात्रिंशाङ्गुलः(लं) कट्याः परीणाह उदाहृतः ।**
**सुवृत्तत्वं तथा श्रोण्योः(श्रोण्याः) पीनत्वं च**
**समस्तशः(समत्वतः) ।। १४ ।।**

**त.क.**– तत्र जङ्घाधरभागस्य परिणाहमाह– **दशांगुलं जङ्घमूलमिति ।।** ह्रस्वत्वं छान्दसम् । अकारान्तो जङ्घशब्दोऽस्तीत्येके । जङ्घाया मूलं गुल्फोपरिप्रदेशः **दशांगुलं** दशांगुलपरिणाहोपेतमित्यर्थः । तदुपरिभागपरिणाहमाह— **मध्यं च त्र्यंगुलाधिकमिति ।।** सन्निधानात् जङ्घाया इति लक्ष्यते । जङ्घामध्यप्रदेशस्तु त्र्यंगुलाधिकमिति । सन्निधानात् जङ्घाया इति लक्ष्यते । जङ्घामध्यप्रदेशस्तु त्रयोदशांगुलपरिणाह इत्यर्थः । तदूर्ध्वभागपरिणाहमाह— **सप्तादशांगुलं तूर्ध्वमिति ।।** दीर्घश्छान्दसः । जङ्घाया ऊर्ध्वप्रदेशः सप्तदशांगुलपरिणाह इत्यर्थः । अत्र . तुशब्दः दशतालादिप्रतिमातः अष्टतालप्रतिमाया विशेषं सूचयति । एवमन्यत्रापि । तदुपरिप्रदेशपरिणाहमाह— **जानुरष्टादशांगुलमिति ।।** अष्टादशांगुलपरिमितसूत्रवेष्टनयोग्यजानुप्रदेश इत्यर्थः । एवमन्यत्रापि ।।

अथ ऊर्वोः परिणाहमधरमध्योर्ध्वभेदेन दर्शयति । तत्रादौ ऊर्ध्वरपरिणाहमाह— **ऊर्वन्तोऽपि तथा ज्ञेय इति ।।** जानोरूपरिप्रदेशः, ऊर्वधोभागोऽपि **तथा ज्ञेयः** अष्टादशाङ्गुलपरिणाहतया ज्ञेय इत्यर्थः । तदुपरिप्रदेशपरिणाहमाह– **मध्यं द्विर्द्वादशाङ्गुलमिति ।।** ऊरुमध्यप्रदेशः द्विरावृत्तद्वादशाङ्गुलपरिणाहः । चतुर्विंशाङ्गुलपरिणाह इत्यर्थः । तदुपरिप्रदेशपरिणाहमाह— **चतुरंगुलाधिकं मूलमिति ।।** ऊरुमूलप्रदेशः चतुरङ्गुलधिकद्विर्द्वादशाङ्गुलपरिणाह इत्यर्थः । प्रसङ्गात् तदुपरिस्थशिश्नदैर्घ्यप्रमाणमाह— **गुह्यं सार्धचतुष्टयमिति ।।** अर्धाधिकाङ्गुलिचतुष्टयदीर्घमित्यर्थः ।।

गुह्यपरिणाहप्रमाणमाह— **सार्धत्रयं परीणाहादिति ।।** 'प्रासादात् प्रेक्षते' इत्यादिवत् पञ्चमी । परीणाहमपेक्ष्य सार्धत्रयमर्धाधिकाङ्गुलित्रयपरीणाहोपेतम्

अत्रायं विवेकः। अङ्गुष्ठस्य परिणाहः चतुरङ्गुलः, द्वितीयस्य त्र्यङ्गुलः, तृतीयस्य अर्धव्रीह्यूनत्र्यङ्गुलः, चतुर्थस्य तृतीयापेक्षया पुनर्व्रीह्यर्धोनत्र्यङ्गुलः व्रीह्यूनत्र्यङ्गुल इति यावत्। पञ्चमस्य चतुर्थापेक्षया पुनरर्धव्रीह्यूनत्र्यङ्गुल इति यावत् ।। १० ।।

**गु.दी.–** इदानीं पादाङ्गुलिपरिणाहमाह– **अङ्गुष्ठेति ।। परिणाहो** नाम परितः परिमाणस्थौल्यमिति यावत् **।। चतुरङ्गुल इति ।।** चतुरङ्गुलमितसूत्रवेष्टनयोग्य इति भावः। **तदन्यस्याः** द्वितीयाङ्गुलेः त्र्यङ्गुलस्तु परिणाह इति बुद्ध्या विविक्तस्यानुवृत्तिः। 'त्र्यङ्गुलस्तु तदन्यस्य' इत्यपरः पाठः। तत्र **तदन्यस्य** द्वितीयाङ्गुलस्येत्यर्थः। क्वचित् 'तदन्यः स्यात्' इति पाठः **।। व्रीहीति ।। पराः** उभाभ्यामन्याः तिस्रः अङ्गुल्यः क्रमात् **व्रीह्यर्धोनाः** व्रीह्यर्धोनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः।

अयं भावः। तृतीयाङ्गुलस्य व्रीह्यर्धोनाङ्गुलित्रयपरिणाहत्वम्। तुरीयस्य तृतीयपरिणाहापेक्षया व्रीह्यर्धोनपरिणाहत्वम्। अन्तिमस्य तुरीयपरिणाहापेक्षया व्रीह्यर्धोनपरिणाहत्वमिति ।। तथा च अर्धव्रीहिन्यूनत्र्यङ्गुलपरिणाहा तृतीया। चतुर्थी व्रीह्यूनत्र्यङ्गुलपरिणाहा। पञ्चमी सार्धव्रीह्यूनत्र्यङ्गुलपरिणाहेत्युक्तं भवति ।।१०।।

**मङ्गाली–** इदानीं पादाङ्गुलिस्थौल्यपरिमाणमाह– **अङ्गुष्ठेति ।।** परिणाहः **चतुरङ्गुलः** चतुरङ्गुलपरिमितसूत्रवेष्टनयोग्य इति भावः। एवमुत्तरत्रापि। **तदन्यस्याः** तत्सन्निहितायाः द्वितीयायाः परिणाह इति बुद्ध्या विविच्य सर्वत्रान्वेतव्यम्। **पराः** प्रथमद्वितीयाभ्याम् अन्यास्तिस्रोऽङ्गुलयः क्रमात् **व्रीह्यर्धोनाः** अर्धव्रीह्यूनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः ।। १० ।।

जङ्घाद्यवयवानां परिणाहकथनम्

**तं.सा.** **दशांगुलं जङ्घमूलं मध्यं च(तन्मध्यं)(तत्) त्र्यंगुलाधिकम्।**
**सप्तादशांगुलं तूर्ध्वं जानुरष्टादशांगुलम्(लः) ।। ११ ।।**

**ऊर्वन्तोऽपि तथा ज्ञेयो मध्यं द्विर्द्वा(द्वा)शांगुलः।**
**चतुरंगुलाधिकं मूलं गुह्यं सार्धचतुष्टयम् ।। १२ ।।**

**(सार्धत्रयपरीणाहः) सार्धत्रयं परीणाहाद्वृषणं चतुरंगुलम् ।**
**सप्तांगुलं परीणाहाद्वृत्तं प्रोक्तं समस्तशः ॥ १३ ॥**

**अष्टात्रिंशाङ्गुलः(लं) कट्याः परीणाह उदाहृतः ।**
**सुवृत्तत्वं तथा श्रोण्योः(श्रोण्याः) पीनत्वं च**
**समस्तशः(समत्वतः) ॥ १४ ॥**

**त.क.–** तत्र जङ्घाधरभागस्य परिणाहमाह– **दशांगुलं जङ्घमूलमिति ॥** ह्रस्वत्वं छान्दसम् । अकारान्तो जङ्घशब्दोऽस्तीत्येके । जङ्घाया मूलं गुल्फोपरिप्रदेशः **दशांगुलं** दशांगुलपरिणाहोपेतमित्यर्थः । तदुपरिभागपरिणाहमाह— **मध्यं च त्र्यंगुलाधिकमिति ॥** सन्निधानात् जङ्घाया इति लक्ष्यते । जङ्घामध्यप्रदेशस्तु त्र्यंगुलाधिकमिति । सन्निधानात् जङ्घाया इति लक्ष्यते । जङ्घामध्यप्रदेशस्तु त्रयोदशांगुलपरिणाह इत्यर्थः । तदूर्ध्वभागपरिणाहमाह— **सप्तादशांगुलं तूर्ध्वमिति ॥** दीर्घश्छान्दसः । जङ्घाया ऊर्ध्वप्रदेशः सप्तदशांगुलपरिणाह इत्यर्थः । अत्र तुशब्दः दशतालादिप्रतिमातः अष्टतालप्रतिमाया विशेषं सूचयति । एवमन्यत्रापि । तदुपरिप्रदेशपरिणाहमाह— **जानुरष्टादशांगुलमिति ॥** अष्टादशांगुलपरिमितसूत्रवेष्टनयोग्यजानुप्रदेश इत्यर्थः । एवमन्यत्रापि ॥

अथ ऊर्वोः परिणाहमधरमध्योर्ध्वभेदेन दर्शयति । तत्रादौ ऊर्ध्वरपरिणाहमाह— **ऊर्वन्तोऽपि तथा ज्ञेय इति ॥** जानोरूपरिप्रदेशः, ऊर्वधोभागोऽपि **तथा ज्ञेयः** अष्टादशाङ्गुलपरिणाहतया ज्ञेय इत्यर्थः । तदुपरिप्रदेशपरिणाहमाह– **मध्यं द्विर्द्वादशाङ्गुलमिति ॥** ऊरुमध्यप्रदेशः द्विरावृत्तद्वादशाङ्गुलपरिणाहः । चतुर्विंशाङ्गुल-परिणाह इत्यर्थः । तदुपरिप्रदेशपरिणाहमाह— **चतुरंगुलाधिकं मूलमिति ॥** ऊरुमूलप्रदेशः चतुरङ्गुलधिकद्विर्द्वादशाङ्गुलपरिणाह इत्यर्थः । प्रसङ्गात् तदुपरिस्थ-शिश्नदैर्घ्यप्रमाणमाह— **गुह्यं सार्धचतुष्टयमिति ॥** अर्धाधिकाङ्गुलिचतुष्टयदी-र्घमित्यर्थः ॥

गुह्यपरिणाहप्रमाणमाह— **सार्धत्रयं परीणाहादिति ॥** 'प्रासादात् प्रेक्षते' इत्यादिवत् पञ्चमी । परीणाहमपेक्ष्य सार्धत्रयमर्धाधिकाङ्गुलित्रयपरीणाहोपेतम्

अत्रायं विवेकः। अङ्गुष्ठस्य परिणाहः चतुरङ्गुलः, द्वितीयस्य त्र्यङ्गुलः, तृतीयस्य अर्धव्रीह्यूनत्र्यङ्गुलः, चतुर्थस्य तृतीयापेक्षया पुनर्व्रीह्यर्धोनत्र्यङ्गुलः व्रीह्यूनत्र्यङ्गुल इति यावत्। पञ्चमस्य चतुर्थापेक्षया पुनरर्धव्रीह्यूनत्र्यङ्गुल इति यावत् ।। १० ।।

**गु.दी.–** इदानीं पादाङ्गुलिपरिणाहमाह– **अङ्गुष्ठेति ।। परिणाहो** नाम परितः परिमाणस्थौल्यमिति यावत् ।। **चतुरङ्गुल इति** ।। चतुरङ्गुलमितसूत्रवेष्टनयोग्य इति भावः। **तदन्यस्याः** द्वितीयाङ्गुलेः त्र्यङ्गुलस्तु परिणाह इति बुद्ध्या विविक्तस्यानुवृत्तिः। 'त्र्यङ्गुलस्तु तदन्यस्य' इत्यपरः पाठः। तत्र **तदन्यस्य** द्वितीयाङ्गुलस्येत्यर्थः। क्वचित् 'तदन्यः स्यात्' इति पाठः ।। **व्रीहीति ।। पराः** उभाभ्यामन्याः तिस्रः अङ्गुल्यः क्रमात् **व्रीह्यर्धोनाः** व्रीह्यर्धोनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः।

अयं भावः। तृतीयाङ्गुलस्य व्रीह्यर्धोनाङ्गुलित्रयपरिणाहत्वम्। तुरीयस्य तृतीयपरिणाहापेक्षया व्रीह्यर्धोनपरिणाहत्वम्। अन्तिमस्य तुरीयपरिणाहापेक्षया व्रीह्यर्धोनपरिणाहत्वमिति ।। तथा च अर्धव्रीहिन्यूनत्र्यङ्गुलपरिणाहा तृतीया। चतुर्थी व्रीह्यूनत्र्यङ्गुलपरिणाहा। पञ्चमी सार्धव्रीह्यूनत्र्यङ्गुलपरिणाहेत्युक्तं भवति ।।१०।।

**मङ्गाली–** इदानीं पादाङ्गुलिस्थौल्यपरिमाणमाह– **अङ्गुष्ठेति ।।** परिणाहः **चतुरङ्गुलः** चतुरङ्गुलपरिमितसूत्रवेष्टनयोग्य इति भावः। एवमुत्तरत्रापि। **तदन्यस्याः** तत्सन्निहितायाः द्वितीयायाः परिणाह इति बुद्ध्या विविच्य सर्वत्रान्वेतव्यम्। **पराः** प्रथमद्वितीयाभ्याम् अन्यास्तिस्रोऽङ्गुलयः क्रमात् **व्रीह्यर्धोनाः** अर्धव्रीह्यूनस्वस्वपूर्वपरिमाणोपेतपरिणाहा इत्यर्थः ।। १० ।।

जङ्घाद्यवयवानां परिणाहकथनम्

**तं.सा.** **दशांगुलं जङ्घमूलं मध्यं च(तन्मध्यं)(तत्) त्र्यंगुलाधिकम् ।**
**सप्तादशांगुलं तूर्ध्वं जानुरष्टादशांगुलम्(लः) ।। ११ ।।**

**ऊर्वन्तोऽपि तथा ज्ञेयो मध्यं द्विर्द्वा(द्वा)शांगुलः ।**
**चतुरंगुलाधिकं मूलं गुह्यं सार्धचतुष्टयम् ।। १२ ।।**

**(सार्धत्रयपरीणाहः) सार्धत्रयं परीणाहाद्वृषणं चतुरंगुलम् ।**
**सप्तांगुलं परीणाहाद्वृत्तं प्रोक्तं समस्तशः ॥ १३ ॥**

**अष्टात्रिंशाङ्गुलः(लं) कट्याः परीणाह उदाहृतः ।**
**सुवृत्तत्वं तथा श्रोण्योः(श्रोण्याः) पीनत्वं च**
**समस्तशः(समत्वतः) ॥ १४ ॥**

**त.क.**– तत्र जङ्घाधरभागस्य परिणाहमाह– **दशांगुलं जङ्घमूलमिति ॥** ह्रस्वत्वं छान्दसम् । अकारान्तो जङ्घशब्दोऽस्तीत्येके । जङ्घाया मूलं गुल्फोपरिप्रदेशः **दशांगुलं** दशांगुलपरिणाहोपेतमित्यर्थः । तदुपरिभागपरिणाहमाह— **मध्यं च त्र्यंगुलाधिकमिति ॥** सन्निधानात् जङ्घाया इति लक्ष्यते । जङ्घामध्यप्रदेशस्तु त्र्यंगुलाधिकमिति । सन्निधानात् जङ्घाया इति लक्ष्यते । जङ्घामध्यप्रदेशस्तु त्रयोदशांगुलपरिणाह इत्यर्थः । तदूर्ध्वभागपरिणाहमाह— **सप्तादशांगुलं तूर्ध्वमिति ॥** दीर्घश्छान्दसः । जङ्घाया ऊर्ध्वप्रदेशः सप्तदशांगुलपरिणाह इत्यर्थः । अत्र तुशब्दः दशतालादिप्रतिमातः अष्टतालप्रतिमाया विशेषं सूचयति । एवमन्यत्रापि । तदुपरिप्रदेशपरिणाहमाह— **जानुरष्टादशांगुलमिति ॥** अष्टादशांगुलपरिमितसूत्रवेष्टनयोग्यजानुप्रदेश इत्यर्थः । एवमन्यत्रापि ॥

अथ ऊर्वोः परिणाहमधरमध्योर्ध्वभेदेन दर्शयति । तत्रादौ ऊर्ध्वरपरिणाहमाह— **ऊर्वन्तोऽपि तथा ज्ञेय इति ॥** जानोरूपरिप्रदेशः, ऊर्वधोभागोऽपि **तथा ज्ञेयः** अष्टादशाङ्गुलपरिणाहतया ज्ञेय इत्यर्थः । तदुपरिप्रदेशपरिणाहमाह– **मध्यं द्विर्द्वादशाङ्गुलमिति ॥** ऊरुमध्यप्रदेशः द्विरावृत्तद्वादशाङ्गुलपरिणाहः । चतुर्विंशाङ्गुलपरिणाह इत्यर्थः । तदुपरिप्रदेशपरिणाहमाह— **चतुरंगुलाधिकं मूलमिति ॥** ऊरुमूलप्रदेशः चतुरङ्गुलधिकद्विर्द्वादशाङ्गुलपरिणाह इत्यर्थः । प्रसङ्गात् तदुपरिस्थशिश्नदैर्घ्यप्रमाणमाह— **गुह्यं सार्धचतुष्टयमिति ॥** अर्धाधिकाङ्गुलिचतुष्टयदीर्घमित्यर्थः ॥

गुह्यपरिणाहप्रमाणमाह— **सार्धत्रयं परीणाहादिति ॥** 'प्रासादात् प्रेक्षते' इत्यादिवत् पञ्चमी । परीणाहमपेक्ष्य सार्धत्रयमर्धाधिकाङ्गुलित्रयपरीणाहोपेतम्

गुह्यमित्यर्थः। वृषणपरिणाहं वक्तुं तद्दैर्घ्यमाह— **वृषणं चतुरंगुलमिति ।।** चतुरङ्गुलपरिमितदीर्घमित्यर्थः। तत्परिणाहमाह— **सप्तांगुलं परीणाहादिति ।।** परिणाहमपेक्ष्य सप्ताङ्गुलपरिणाहोपेतं वृषणमित्यर्थः। अङ्गुष्ठमारभ्य एतदन्तानामेषां चतुरस्रपरिणाह एव ज्ञातव्यः किमित्यत आह— **वृत्तं प्रोक्तं समस्तश्च इति ।। समस्तश्चः** कात्स्र्येन प्रोक्तमङ्गुष्ठादिवृत्तमेव ज्ञातव्यं न चतुरस्रादीत्यर्थः ।।

वृषणोपरिभागपरिमाणमाह— **अष्टात्रिंशाङ्गुलः कट्या इति ।।** वूर्पवत् अष्टात्रिंशाङ्गुलपरिमाणसूत्रवेष्टनयोग्यः कटिपरिणाह इत्यर्थः। पादमारभ्य कटिपर्यन्तभागेषु आवश्यकं धर्मजातमाह— **सुवृत्तत्वमित्यादिना श्लोकेन ।।** तथाचशब्दौ परस्परसमुच्चये। **श्रोण्योर्जघनयोः** वर्तुलत्वं च पुष्टत्वमावश्यकमित्यर्थः। न केवलं श्रोण्योरेव किन्तु समस्तशः गुल्फमारभ्य कट्यन्तेषु समस्तेष्वङ्गेषु वर्तुलत्वं पीनत्वं चावश्यकमित्यर्थः ।। ११-१४ ।।

**अ.सं—** इदानीं जङ्घाया अधोमध्योर्ध्वभागस्थौल्यपरिमाणमाह— **दशेति ।। दशाङ्गुलं** दशाङ्गुलपरिणाहोपेतं **जङ्घमूलं** जङ्घाधोभागः **मध्यं** जङ्घमध्यं **तत्त्र्यङ्गुलाधिकं** तेभ्यः दशाङ्गुलेभ्यः त्र्यङ्गुलैरधिकः परिणाहो यस्य तत्। त्रयोदशाङ्गुलमिति यावत्। **ऊर्ध्वं तु** जङ्घायाः ऊर्ध्वभागः सप्तदशाङ्गुलपरिणाहोपेतं जानुरष्टादशाङ्गुलपरिणाह इति ।।

ऊर्वोरधोमध्योर्ध्वभागपरिमाणमाह— **ऊर्वन्तोऽपीति।** ऊर्वधोभाग इत्यर्थः। **तथा** अष्टादशाङ्गुलत्वेन ज्ञेयः। **मध्यं** ऊरुमध्यम्। **द्विर्द्वादशाङ्गुलं** द्विगुणितद्वादशाङ्गुलं चतुर्विंशाङ्गुलपरिणाहोपेतम्। **मूलं** ऊर्वोरूर्ध्वभागः **चतुरङ्गुलाधिकं द्विर्द्वादशाङ्गुलं** अष्टाविंशत्यङ्गुलपीरणाहमित्यर्थः। गुह्यदैर्घ्यपरिमाणमाह— **गुह्यमिति ।।** शिश्न इत्यर्थः। **सार्धचतुष्टयं** अर्धाङ्गुलसहितचतुरङ्गुलदीर्घमित्यर्थः ।।

तत्स्थौल्यपरिमाणमाह— **सार्धेति ।। परीणाहात्** ल्यब्लोपानिमित्ता पञ्चमी। परिणाहमपेक्ष्य, सार्धत्रयाङ्गुलं गुह्यपरिणाहः सार्धत्र्यङ्गुल इत्यर्थः। वृषणदैर्घ्यपरिमाणमाह— **वृषणमिति ।। चतुरङ्गुलं** चतुरङ्गुलदीर्घं परिणाहमपेक्ष्य वृषणं सप्ताङ्गुलम्। **समस्तशः** सर्वगुह्यं वृषणं च **वृत्तं** वर्तुलम्। जङ्घादिसर्वं वृत्तमित्यप्याहुः ।।

कटिपरिमाणमाह– **अष्टेति** ।। **परिणाहः** स्थूलता **श्रोण्योः** जघनयोः **सुवृत्तत्वं** अतिवर्त्तुलत्वं च कर्त्तव्यम् । सर्वशः सर्वस्मिन् जङ्घादौ अवयवे **पीनत्वं** पुष्टत्वं च कर्त्तव्यम् ।। ११-१४ ।।

**गु.दी.**– जङ्घाया आदिमध्यान्तभागपरिणाहमाह— **दशेति** ।। दशाङ्गुल-परिणाहवत् । **जङ्घमूलमिति** ह्रस्वः 'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्' (पा.सू.६-३-६३) इति वचनात् छान्दसः । **तन्मध्यम्** तस्याः मध्यं जङ्घामध्यं **त्र्यङ्गुलाधिकं** त्रयोऽङ्गुला अधिकाः येषां दशानां तत्परिमितः परिणाहो यस्य तत् । 'तत् त्रयङ्गुलाधिकम्' इति पाठे तेभ्यो दशभ्यः त्र्यङ्गुलैरधिकः परिणाहो यस्य तत् । 'मध्यतः' इति पाठे मध्यमित्येवार्थः । **ऊर्ध्वं** जङ्घोर्ध्वभागः जङ्घावसानभाग इति यावत् । सप्तादशाङ्गुलपरिणाहम् । 'सप्तादश' इति दीर्घश्छान्दसः । **जानुः** जानुप्रदेशः । जानुशब्दः पुंनपुंसकलिङ्ग इति ज्ञेयम् ।।

**ऊर्वन्तो** जानूपरिभागोऽपि **तथा** अष्टादशाङ्गुलपरिणाहत्वेन ज्ञेयः । **मध्यम्** ऊरुमध्यम् । **द्विर्द्वादशाङ्गुलं** चतुर्विंशत्यङ्गुलपरिणाहम् । **मूलम्** ऊरुमूलं **चतुरङ्गुलाधिकं द्विर्द्वादशाङ्गुलम्** अष्टाविंशत्यङ्गुलपरिणाहम् । गुह्येन्द्रियस्य दैर्घ्यपरिमाणं पूर्वमनुक्तत्वात् प्रसङ्गादाह — **गुह्यमिति** ।। शिश्नापरपर्यायं लिङ्गं सार्धचतुष्टयदीर्घम् ।

तस्य परिणाहमाह— **सार्धेति** ।। परिणाहात् सार्धत्रयं गुह्यमिति सम्वन्धः । सार्धत्र्यङ्गुलस्थूलमिति यावत् । वृषणं चतुरङ्गुलं दैर्घ्ये । परिणाहात् सप्ताङ्गुलम् । **समस्तशः** समस्तं गुह्यं वृषणं च **समस्तशः** सर्वत्र **वृत्तं** पीनमित्यर्थः । **समस्तशः** जङ्घादिकं सर्वमित्यप्याहुः । **समस्तशः श्रोण्योः** समग्रश्रोण्योः पीनत्वं सुवृत्तत्वं च **तथा** अष्टत्रिंशाङ्गुलम् । 'समत्वतः' इति क्वचित्पाठः । समत्वेनेत्यर्थः ।।११-१४।।

**मङ्काली**– इदानीं जङ्घाया अधोमध्योर्ध्वभागस्थौल्यपरिमाणमाह– **दशेति** ।। दशाङ्गुलं दशाङ्गुलपरिणाहोपेतं **जङ्घमूलं** जङ्घाधोभागः । ह्रस्वः छान्दसः । **मध्यं** जङ्घामध्यं **तत् त्र्यङ्गुलाधिकं** तेभ्यो दशाङ्गुलेभ्यः त्र्यङ्गुलैरधिकः परिणाहो यस्य तत् । त्रयोदशाङ्गुलमिति यावत् । **ऊर्ध्वं तु** जङ्घाया ऊर्ध्वभागः **सप्तादशाङ्गुलं**

सप्तदशाङ्गुलपरिणाहोपेतम् । जानुरष्टादशाङ्गुलपरिणाह इति । सप्तादशेति दीर्घः छान्दसः ॥

ऊर्वोरधोमध्योर्ध्वभागपरिणाहमाह— **ऊर्वन्तोऽपीति** ॥ ऊर्वधोभाग इत्यर्थः । **तथाऽष्टादशाङ्गुलेत्वेन** ज्ञेयः । **मध्यं** ऊरुमध्यम् । **द्विर्द्वादशाङ्गुलं** चतुर्विंशाङ्गुल-परिणाहोपेतम् । **मूलं** ऊर्वोरुर्ध्वभागः । **चतुरङ्गुलाधिकं द्विद्वादशाङ्गुलम्** अष्टविंशत्यङ्गुलपरिणाहमित्यर्थः । गुह्यदैर्घ्यपरिमाणमाह— **गुह्यमिति** ॥ शिश्न इत्यर्थः । **सार्धचतुष्टयं** अर्धाङ्गुलसहितचतुरङ्गुलदीर्घमित्यर्थः ॥

तत्स्थौल्यपरिमाणमाह— **सार्धेति** ॥ **परिणाहात्** ल्यब्लोपनिमत्ता पञ्चमी । परिणाहमपेक्ष्य **सार्धत्रयं** सार्धत्रयाङ्गुलं गुह्यपरिणाहम् । सार्धत्रयाङ्गुल इत्यर्थः । 'सार्धत्रयपरीणाहः' इति क्वचित् पाठः । तत्र गुह्यस्येति शेषः । वृषणदैर्घ्यपरिमाणमाह— **वृषणमिति** ॥ **चतुरङ्गुलं** चतुरङ्गुलदीर्घं परिणाहमपेक्ष्य वृषणं सप्ताङ्गुलम् । **समस्तशः** सर्वगुह्यं वृषणं च **वृत्तं** वर्त्तुलम् । जङ्घादिसर्वं वृत्तमित्यप्याहुः ॥

कटिपरिणाहमाह— **अष्टेति** ॥ **परिणाहः** स्थूलता **श्रोण्योः** जघनयोः सुवृत्तत्वमिति वर्त्तुलत्वं च कर्त्तव्यम् । 'श्रोण्याः' इति क्वचित्पाठः । तदा जघनस्येत्यर्थः । **समस्तशः** सर्वस्मिन् जङ्घादौ अवयवे **पीनत्वं** पुष्टत्वं कर्त्तव्यम् ॥ ११-१४ ॥

कटिविस्तारकथनं पादयोः सुप्रतिष्ठितत्वं तथा दन्दपरिमाणकथनम्

**तं.सा.** **विस्तारश्च तथा कट्याः सुप्रतिष्ठितता पदोः ।**
**कट्याश्चैवांगुलाधिक्यं नाभेरध उदाहृतः(तम्)** ॥ १५ ॥

**त.क.—** कट्या अवश्यसम्पाद्यमाह— **विस्तारश्चेति** ॥ यथा श्रोण्यादौ वर्तुलत्वमावश्यकं कट्यादौ विस्तारश्च तथोत्यर्थः । पादयोरवश्यसम्पाद्यमाह— **सुप्रतिष्ठिततेति** ॥ पादयोः सम्यक् पीठसम्वद्धत्वमावश्यकमित्यर्थः । एवं प्रसाङ्गिकं समाप्य कट्या उपरिप्रदेशपरिणाहमाह— **कट्याश्चैवाङ्गुलाधिक्यमिति** ॥ नाभेरधःप्रदेशः कट्या उपरिप्रदेशः कन्दः कटिमपेक्ष्य अङ्गुलाधिक्यपरिणाहोपेतः । एकोनचत्वारिंशदङ्गुलपरिणाह इत्यर्थः ॥ १५ ॥

**अ.सं.–** कट्याः **विस्तारश्च** विस्तृतता आवश्यकी। पूर्वमनुक्तत्वात् सिंहावलोकनन्यायेन पादतलाकारमाह– **सुप्रतिष्ठिततेति ।। पदोः** पादतलयोः **सुप्रतिष्ठितता** सु समानं यथा स्यात्तथा उपवेशनयोग्यता आवश्यकी। निःश्छिद्रत्वेन पीठोपरि सम्यक् सम्बद्धपादतलां प्रतिमां कारयेदिति भावः। नाभेरधः प्रदेशस्तुन्द इत्यर्थः। कट्याः सकाशात् अङ्गुलाधिका। एकोनचत्वारिंशदङ्गुलपरिणाहोपेतत्वमिति भावः ।। १५ ।।

**गु.दी.–** कट्याः परिणाहं पूर्वमुक्त्वा विस्तृतिमाह— **विस्तार इति ।।** विततत्वम्। **पदोः सुप्रतिष्ठितता** च पीठे निश्छिद्रतयोपवेशनं च विधेये इति शेषः।

अयं भावः। पादयोः पीठस्योपरि प्रक्षेपे पादपीठयोर्मध्ये यथा छिद्रं न भवेत् तथा कारयेत्। छिद्रे सति सर्वदाऽपवित्रपल्यादिसूक्ष्मजन्त्वाश्रयणसम्भवेन तथा तन्मूत्रादिदूषणसम्भवेन च तस्य परिहार्यत्वादिति।

**नाभेरधः** अधःप्रदेशस्य कट्याः सकाशादष्टत्रिंशाख्यकटिपरिणाहादिति यावत्। **अङ्गुलाधिक्यं** अङ्गुलाधिकपरिणाहोपेतत्वमित्यर्थः। एकोनचत्वारिंशदङ्गुलपरिणाह इत्युक्तं भवति ।। १५ ।।

**मङ्गाली–** कट्याः **विस्तारश्च** विस्तृतता आवश्यकः। पूर्वमनुक्तत्वात् पादतलाकारमाह– **सुप्रतिष्ठिततेति ।। पदोः** पादतलयोः **सुप्रतिष्ठितता** सु समानं यथा स्यात्तथा उपवेशनयोग्यता आवश्यकी। निश्छिद्रत्वेन पीठोपरि सम्यक् सम्बद्धपादतलां प्रतिमां कारयेदिति भावः। नाभेरधःप्रदेशे तुंद इत्यर्थः। कट्याः सकाशात् **अङ्गुलाधिक्यं** एकोनचत्वारिंशदङ्गुलपरिणाहोपेतत्वमिति भावः ।। १५ ।।

नाभि-उदर-उरसां परिमाणकथनम्

**तं.सा. नाभिः सार्धांगुलश्चैव गम्भीरोऽर्धांगुलोन्नतः(ऽन्ततः,लोत्तरः)।**
**वृत्तः प्रदक्षिणश्चैव द्विचत्वारिंश्रदंगुलम् ।। १६ ।।**

**मध्यं स्तने परीणाहः षडंगुलमतोऽधिकः ।**

**एकोनविंशांगुलं तदुरोविस्तारलक्षणम् ॥ १७ ॥**

**पादोनमंगुलश्चैव.................।**

**त.क.–** नाभिविस्तारमाह— **नाभिः सार्धाङ्गुलश्चैवेति ॥** अर्धाधिकाङ्गुलविस्तारो नाभिरित्यर्थः । नाभिगाम्भीर्यप्रमाणमाह— **गम्भीरोऽर्धाङ्गुलोन्नत इति ॥** नाभेरन्ततः मध्ये अर्धाङ्गुलं गम्भीरत्वमित्यर्थः । नाभेर्लक्षणान्तरमाह— **वृत्तः प्रदक्षिणश्चैवेति ॥** नाभिः वर्तुलः प्रदक्षिणावर्तश्च कर्तव्य इत्यर्थः । तदुपरि स्तनपर्यन्तपरिणाहमाह— **द्विचत्वारिंशदङ्गुलमिति ॥ मध्यमिति॥** नाभिस्तनयोरिति वक्तव्यम् । नाभिस्तनयोः मध्यमुदरं द्विचत्वारिंशदङ्गुलपरिणाहसूत्रवेष्टनयोग्यमित्यर्थः । तदुपरिप्रदेशपरिणाहमाह– **स्तने परिणाहः षडंगुलमतोऽधिक इति ॥ अतः** द्विचत्वारिंशदंगुलात् **षडंगुलमधिकः** अष्टचत्वारिंशदंगुलपरिणाहः स्तनप्रदेश इत्यर्थः । तन्मध्यगतवक्षोविस्तारपरिमाणमाह— **एकोनविंशाङ्गुलं तदुरोविस्तारलक्षणमिति ॥ पादोनमंगुलश्चैवेति ॥** तस्याः प्रतिमायाः उरोविस्तारपरिमाणं पादोनविंशांगुलमित्यर्थः । अत्र योगविभागः यत्र ग्रन्थे एकोनविंशांगुलपरिमितत्वोक्तिस्तत्र पादोनैकांगुलस्य अल्पत्वादाविवक्षेति ज्ञापनाय ॥ १६,१७ ॥

**अ.सं.–** नाभिपरिमाणमाह– **नाभिरिति ॥** नाभिः बहिः **अर्धाङ्गुलोन्नतः** अर्धाङ्गुलदीर्घः **गम्भीरश्च** नाभिनिम्नप्रदेशस्तु सार्धाङ्गुलः । 'अर्धाङ्गुलोत्तरः' इति क्वचित्पाठः । तत्रार्धाङ्गुलपरिमितः उत्तरभागः उपरिभागः यस्य स इत्यर्थः । यद्वा तस्मिन्नेव पाठे **नाभिः** नाभ्युपरिभागः सार्धाङ्गुलः तद्गम्भीरस्तु **अर्धाङ्गुलोत्तरः** अर्धाङ्गुलेन उत्तरः अधिकः सार्धाङ्गुलः द्व्यङ्गुलपरिमितमिति यावत् । **वृत्तः** वर्तुलः **प्रदक्षिणः** दक्षिणावर्त्तवान् । **मध्यं** नाभिस्तनयोर्मध्यम् उदरमध्यमिति यावत् । **द्विचत्वारिंशदङ्गुलम्** तावत्परिणाहम् । **स्तने** स्तनावच्छिन्नप्रदेशे **अतः** मध्यात् **षडङ्गुलमधिकः परीणाहः** अष्टचत्वारिंशदङ्गुलपरिणाह इत्यर्थः । उरोविस्तारपरिमाणमाह– **एकोनेति ॥ तदुरोविस्तारलक्षणं ।** तस्याः प्रतिमायाः उरोविस्तारस्य

वक्षोविस्तारस्य लक्षणं परिमाणमेकोनविंशाङ्गुलं तथा पादोनमङ्गुलमिति योज्यम्। तथा च वक्षसो विस्तारः पादन्यूनविंशत्यङ्गुलपरिमाण इति भावः ।। १६, १७ ।।

**गु.दी.–** नाभिः सार्धाङ्गुलगम्भीर एव। **अन्ततो** बहिरर्धाङ्गुलोन्नतः। **वृत्तो** वर्तुलः **प्रदिक्षणः** दिक्षणावर्तश्च। मध्यमिति मध्यशब्देन नाभेरुपरितनः प्रदेशो विवक्षितः । तथा च **मध्यं** उदरं **द्विचत्वारिंशदङ्गुलं** तावत्परिणाहम्। **स्तने** स्तनभागे **अतः** मध्यात् **षडङ्गुलमधिकः परिणाहः** स्तनभागोऽष्टचत्वारिंशदङ्गुल-परिणाह इत्याशयः ।।

उरसो विस्तृतिमाह— **एकेति ।। तत्** तस्याः प्रतिमायाः उरोविस्तारलक्षण-मेकोनविंशाङ्गुलं पादोनमङ्गुलं चेति योजना। उरः पादोनविंशाङ्गुलविस्तारमिति भाव इति बहवः। गुरवस्तु पादस्याप्यूनमङ्गुलम्। अङ्गुलस्य पञ्चधा विभागं कृत्वा पादस्याप्यूनमङ्गुलं चेत्यर्थः। अङ्गुलस्य पञ्चमोंऽशश्चेति भाव इति। ननूरसः पादोनविंशाङ्गुलत्वे 'पञ्चोराः सप्तपादो यो नाशङ्क्यं तद्वचः क्वचित्' (बृ.भा.३. शाकल्यब्राह्मणम्) इति बृहद्भाष्ये पञ्चोरा इति समग्रकायस्य पञ्चोरःपरिमितदैर्घ्योक्त्या पादोननवनवत्यङ्गुलत्वं स्यात्। षण्णवत्यङ्गुलत्वं कथमिति चेन्न । उरसो भागविशेषस्य तावद्विस्तारस्य भावेन तद्विवक्षया 'पञ्चोरा' इति वाक्यप्रवृत्तेः। अत्र पुनर्भागान्तरविवक्षया पादोनविंशाङ्गुलत्वोक्तेरिति केचित्। पादस्याऽप्यूनमिति योजनान्तरेण षण्णवतेरेव लाभादिति गुरूपदिष्टोऽर्थः ।। १६,१७ ।।

**मङ्गाली–** नाभिपरिमाणमाह– **नाभिरिति ।।** नाभिः बहिः **अर्धाङ्गुलोन्नतः** अर्धाङ्गुलदीर्घः। **गम्भीरश्च** नाभिनिम्नदेशस्तु **सार्धाङ्गुलः** 'अर्धाङ्गुलोत्तरः' इति क्वचित्पाठः। तत्रार्धाङ्गुलपरिमितः उत्तरभागः उपरिभागः यस्य स इत्यर्थः। यद्वा तस्मिन्नेव पाठे **नाभिः** नाभ्युपरिभागः सार्धाङ्गुलः। तद्गम्भीरस्तु **अर्धाङ्गुलोत्तरः** अर्धाङ्गुलेनोत्तरः अधिकः सार्धाङ्गुलः। व्यङ्गुलपरिमित इति यावत्। **वृत्तः** वृर्त्तुलः **प्रदक्षिणः** दक्षिणावर्तवान्। **मध्यं** नाभिस्तनयोर्मध्यं उदरमिति यावत् । द्विचत्वारिंशदङ्गुलं तावत्परिणाहम् । **स्तने** स्तनावच्छिन्नप्रदेशे । **अतो** मध्यात् ।

**षडङ्गुलं अधिकः परीणाहः** अष्टचत्वारिंशदङ्गुलपरिणाह इत्यर्थः। उरोविस्तारपरिमाणमाह– **एकोनेति ।। तदुरोविस्तारलक्षणं** तस्याः प्रतिमायाः उरोविस्तारस्य लक्षणं परिमाणं एकोनविंशाङ्गुलम्। तथा पादोनमङ्गुलं चेति योज्यम्। तथा च वक्षसो विस्तारः पादन्यूनविंशत्यङ्गुलपरिमाण इति भावः ।।१६,१७।।

भुजविशिष्टोरसः विस्तारकथनम्

**तं.सा. ................भुजाभ्यां सह सार्धकम् ।**
**अंसयोर्विस्तृतिश्चैव पृथगष्टांगुला मता ।। १८ ।।**

**त.कं.–** भुजविशिष्टस्योरसो विस्तारमाह— **भुजाभ्यां सह सार्धकमिति ।।** भुजाभ्यां सहितमुरः अर्धसहितपूर्वोक्तपरिमाणवत्। पादार्धसहितपादोनत्रिंशदंगुलपरिमितमित्यर्थः। सन्निहितत्वात् स्कन्दयोः विस्तारमाह— **अंसयोर्विस्तृतिश्चैवेति ।।** प्रत्येकं प्रत्येकं स्कन्दयोः अष्टांगुला विस्तृतिरित्यर्थः। **एवेति** न्यूनाधिकसङ्ख्यां व्यवच्छिनत्ति। तत्र हेतुं प्रमित्वं **मता** इत्यनेनाऽचष्टे। चशब्दः तुशब्दार्थः ।।१८।।

**अ.सं.–** भुजविशिष्टस्य उरसो विस्तारमाह– **भुजाभ्यामिति ।।** पादोनविंशाङ्गुलमुरोविस्तारपरिमाणं भुजाभ्यां सहितं चेत् **सार्धकम्** पूर्वोक्तविंशाङ्गुलस्यार्धेन अर्धपादन्यूनदशाङ्गुलेन सहितमित्यर्थः। भुजद्वयविशिष्टमुरः पादपादार्धोनत्रिंशदङ्गुलमिति भावः। **अंसयोः** स्कन्धयोः पृथगेकैकस्य विस्तृतिः अष्टाङ्गुला ।। १८ ।।

**गु.दी.–** भुजद्वयविशिष्टोरसो विस्तारमाह— **भुजाभ्यामिति ।।** भुजाभ्यां सहोरसो माने कृते सति तत्सहितमुरः सार्धकं पूर्वोक्तमानं अर्धसहितपूर्वोक्तमानं ज्ञेयमित्यर्थः। भुजद्वयविशिष्टमुरः पादपादार्धोनत्रिंशाङ्गुलविस्तारमिति भावः। **अंसयोः** स्कन्धयोः विस्तृतिः पृथक् पृथक् अष्टाङ्गुलपरिमिता ।। १८ ।।

**मङ्गाली–** भुजविशिष्टस्योरसो विस्तारमाह– **भुजाभ्यामिति ।।** पादोनविंशाङ्गुलं उरोविस्तारपरिमाणं **भुजाभ्यां सह** सहितं चेत् **सार्धकं**

पूर्वोक्तपादोनविंशाङ्गुलस्यार्धेन अर्धपादन्यूनदशाङ्गुलेन सहितमित्यर्थः । भुजद्वयविशिष्टमुरः पादपादार्धोनत्रिंशदङ्गुलमिति भावः । **अंसयोः स्कन्धयोः पृथक्** एकैकस्य विस्तृतिः अष्टाङ्गुला ।। १८ ।।

स्कन्धहस्तबाहूनां परिमाणपरिणाहयोः कथनम्

**तं.सा.** **सप्तांगुलोच्छ्रयः कक्षादुपरि स्कन्धयोर्मतः ।**
**अष्टात्रिंशदंगुलं हस्तयोर्मानमुच्यते** ।। १९ ।।

**अष्टादशांगुलो बाह्वोः परिणाह उदाहृतः ।**
**क्रमादूनं तदन्ते तु सार्धाष्टांगुलमीरितम्** ।। २० ।।

**त.क.–** स्कन्धयोरून्मानमाह— **सप्तांगुलोच्छ्रय इति ।।** कक्षादुपरि स्थितयोः स्कन्धयोः सप्तांगुलं मानमित्यर्थः । मानप्रसङ्गात् सन्निहितत्वात् हस्तयोः दैर्घ्यप्रमाणमाह— **अष्टात्रिंशदंगुलमिति ।।** चस्त्वर्थः । उन्मानन्त्वन्यदेवेति तस्यार्थः । एवशब्दः पक्षान्तरव्यावृत्त्यर्थः । तत्रोपपत्तिस्तन्त्रसारादावुच्यत इति । हस्तयोरिति द्विवचनेन प्रत्येकमष्टात्रिंशदंगुलदैर्घ्यमुच्यते न तु मिलितयोरिति वा तुशब्दः ।।

तयोरेवोन्मानमाह– **अष्टादशांगुल इति।।** अष्टादशांगुलपरिमितसूत्रवेष्टनयोग्यः हस्तमूलपरिणाह इत्यर्थः । तन्मध्यपरिणाहमाह— **क्रमादूनमिति ।।** मध्यभागे एकैकांगुलन्यूनमित्यर्थः । अन्त्यभागे परिणाहमाह— **तदन्ते त्विति ।।** मणिबन्धप्रदेशे अर्धसहिताष्टाङ्गुलपरिमितसूत्रवेष्टनपरिणाह इत्यर्थः ।। १९,२० ।।

**अ.सं.–** तथा **कक्षादुपरि** ऊर्ध्वं स्कन्धयोरेकैकस्य सप्ताङ्गुलोच्छ्रयः मतः । हस्तयोः परिमाणमाह– **अष्टेति ।।** पृथगित्यनुवर्त्तते । हस्ततलपरिमाणस्य पृथक् वक्ष्यमाणत्वात् तलवर्ज्ययोर्हस्तयोरेकैकस्याष्टत्रिंशाङ्गुलं **मानं** परिमाणमुच्यते । **बाह्वोर्भुजयोरूर्ध्वभागे** परिणाहः अष्टादशाङ्गुलः **क्रमादधोधः** ऊनः **तत्** वाहुद्वयम् । **अन्ते** कङ्कणस्थापनप्रदेशे सार्धाष्टाङ्गुलं मानमीरितम् ।। १९, २० ।।

**गु.दी.–** स्कन्धयोर्हस्तयोर्बाह्वोरित्यत्र सर्वत्रैकैकस्य एकैका सङ्ख्या न तु

द्वयोर्मिलित्वेति ज्ञातव्यम्। कक्षादुपरि स्कन्धयोः पृथक् **सप्ताङ्गुलोच्छ्रयः** सप्ताङ्गुलोन्नतत्वम्। हस्तयोः **मानं** औन्नत्यमष्टत्रिंशाङ्गुलम्। बाह्वोः परिणाहोऽष्टादशाङ्गुल उदाहृतः। क्रमादधोध ऊनं तद्बाहुद्वयम्। **अन्ते** बाह्वन्ते **सार्धाष्टाङ्गुलमीरितं** द्वादशाङ्गुलमित्यर्थः। अर्धाधिकाष्टाङ्गुलमिति वार्थः॥ १९,२०॥

**मङ्गाली–** तथा कक्ष्यादुपरि ऊर्ध्वं स्कन्धयोरेकैकस्य सप्ताङ्गुलोच्छ्रयो मतः। हस्तयोः परिमाणमाह– **अष्टेति**॥ पृथगित्यनुवर्तते। हस्ततलपरिमाणस्य पृथग्वक्ष्यमाणत्वात्। तलवर्जयोर्हस्तयोः एकैकस्याष्टत्रिंशाङ्गुलं **मानं** परिमाणमुच्यते। **बाह्वोर्भुजयोरुर्ध्वभागे परिणाहः** अष्टादशाङ्गुलः। क्रमादधोधः ऊनं **तत्** बाहुद्वयं **अन्ते** कङ्कणस्थापनप्रदेशे सार्धाष्टाङ्गुलं मानमीरितम्॥ ९, २०॥

हस्ततलपरिमाणाभिधानम्

**तं.सा.** **सांगुलस्तु तलः सार्धनवांगुल उदाहृतः।**
**समं तदुभयं ज्ञेयं तथैव तलविस्तृतिः** ॥ २१॥

**त.क.–** एवमुन्मानमभिधायावशिष्टस्य हस्तस्य मानमाह— **सांगुल इति**॥ पञ्चभिरंगुलिभिः सहितस्तलः प्रत्येकं प्रत्येकमर्धांगुलसहितनवांगुलमानवानित्यर्थः। 'अष्टत्रिंशांगुलं चैव हस्तयोर्मानमुच्यते' इत्यनेन अस्य विरोधपरिहारं सूचयति। तुशब्देन मणिबन्धपर्यन्तमेव पूर्वोक्तं मानम्, इदं तु तलमारभ्य अंगुलिपर्यन्तमिति भावः। तयोरेव अवान्तरमानजिज्ञासायामाह— **सममिति**॥ अंगुलिपर्यन्तं तलः अंगुलिश्चेत्युभयं मानेन समम्। पादोनपञ्चांगुलः मणिबन्धमारभ्य तलो दीर्घः। अंगुलिरपि तावद्दीर्घ एवेत्यर्थः। प्रत्येकं तलयोः तिर्यक् परिमाणाख्यप्रमाणजिज्ञासायां वाऽऽह– **तथैव तलविस्तृतिरिति**। तलयोः तिर्यक्प्रमाणमपि पादोनपञ्चांगुलमेवेत्यर्थः॥ २१॥

**अ.सं.–** साङ्गुलहस्ततलपरिमाणमाह– **साङ्गुल इति**॥ अङ्गुलैः सहितस्तलः। हस्ततलः सार्धनवाङ्गुल उदाहृतः। तलपीरमाणाङ्गुलिपरिमाणं च कियदित्यत आह–

**सममिति ।। तदुभयमङ्गुलयः** तलश्च इत्युभयं **समम्** पृथक् पृथक् पादोनपञ्चाङ्गुलम् । तलविस्तृतिस्त**थैव** तलदैर्घ्यवदेव पादोनपञ्चाङ्गुलेति भावः ।। २१ ।।

**गु.दी.– साङ्गुलः** अङ्गुलैः सहितः **तलः** पाणितलः **सार्धनवाङ्गुलः** अर्धाधिकनवाङ्गुलदीर्घः उदाहृत इत्यर्थः ।

ननु तलस्य सार्धनवाङ्गुलत्वे 'दशतालः' (बृ.भा.३अध्याये शाकल्यब्राह्मणे) इति वृहद्भाष्ये 'दशतालौ सप्तपादौ विन्यात्तौ च सुरोत्तमौ' इति (गी.ता.१३-२७) त्रयोदशाध्यायगीतातात्पर्ये च समग्रकायस्य दशतालपरिमितत्वोक्तेः समग्रदेहस्य पञ्चनवत्यङ्गुलत्वमेव स्यात् । न तु षण्णवत्यङ्गुलत्वमिति चेत् न । एकाङ्गुल-परिमाणस्याप्यस्याविवक्षया 'दशतालः' इति ग्रन्थप्रवृत्तेस्तत्रापि तत्परिमाणस्य ग्राह्यत्वादिति बहवः । तालशब्दस्य तलापेक्षयाऽर्थान्तरत्वेन विरोधप्रसक्तिरेव नास्तीति प्रतिभाति । तथा चोक्तं गीतातात्पर्यन्यायदीपिकायाम्– 'मध्यमाङ्गुल्य-ग्रमारभ्य मणिबन्धपर्यन्तं करस्तालः' (१३-२७) इति । 'प्रादेशतालगोकर्णा-स्तर्जन्यादियुते तते' इत्यमरकोशः ।।

ननु 'साङ्गुलस्तलः' इत्युक्तम् । तत्र तलपरिमाणमङ्गुलपरिमाणं च कियदित्यत आह— **सममिति ।। तदुभयं** तलमङ्गुलश्चेत्युभयं समं ज्ञेयम् । अङ्गुलोच्छ्रयः पादोनपञ्चाङ्गुलः तलोच्छ्रयोऽपि पादोनपञ्चाङ्गुल इति समं ज्ञेयमित्यर्थः । **तलविस्तृतिस्तथैव** तलदैर्घ्यवदेव पादोनपञ्चाङ्गुलेति भावः ।। २१ ।।

**मञ्जाली–** साङ्गुलहस्ततलपरिमाणमाह– **साङ्गुल इति ।।** अङ्गुलैस्सहितः तलः हस्ततलः सार्धनवाङ्गुल उदाहृतः । तलपरिमाणमङ्गुलिपरिमाणं च कियदित्यत आह– **सममिति ।। तदुभयं** अङ्गुलयः तलश्चेत्युभयं **समं** पृथक् पृथक् पादोनपञ्चाङ्गुलं तलविस्तृतिस्त**थैव** तलदैर्घ्यवदेव । पादोनपञ्चाङ्गुलेति भावः ।।२१।।

हस्ताङ्गुलीनां दैर्घ्याभिधानम्

**तं.सा. अर्धाङ्गुलोन्नता मध्या(त्) द्वयोः सार्धाङ्गुलोन्नता(लोनता) ।**
**कनिष्ठिकायास्तस्यास्तु व्रीहिमात्राधिकः परः ।। २२ ।।**

**त.कं.**– हस्तांगुलीनां मानमाह– **अर्धांगुलोन्नतेति** ।। तर्जन्यनामिकयोर्मध्ये स्थिता अंगुलिः तर्जन्यनामिकापेक्षया अर्धाङ्गुलोन्नता कनिष्ठिकापेक्षया अर्धसहितांगुलदीर्घा चेत्यर्थः । तस्या मध्यांगुलेः परेऽन्योऽङ्गुष्ठः **व्रीहिमात्राधिकः** कनिष्ठिकाया व्रीह्याधिकदीर्घ इत्यर्थः । यद्यप्यत्र 'समं तदुभयं ज्ञेयम्'(तं.सा.३-२१) इति पादोनपञ्चांगुलं अंगुलिपरिमाणमुक्तम् । इह तु तद्विरुद्धमुच्यत इति प्रतिभाति । तथापि तलान्तरमारभ्य मध्यांगुलिदैर्घ्यमेव पादोनपञ्चांगुलं 'समं तदुभयं ज्ञेयम्' इत्यत्रोक्तम् । अत्र तु तदितरांगुलीनां तारतम्येन दैर्घ्यमुच्यत इत्यदोषः । तथा च तर्जन्यनामिकयोः अर्धांगुलन्यूनपादोनपञ्चांगुलदैर्घ्यम् । कनिष्ठिकायास्तु सार्धाङ्गुलन्यूनपादोनपञ्चांगुलदैर्घ्यम् । अंगुष्ठस्य तु सार्घांगुलन्यूनपादोनपञ्चांगुलेन व्रीहिमात्राधिकेन दैर्घ्यमिति विवेक्तव्यम् ।।२२।।

**अ.सं.**– इदानीं हस्ताङ्गुलीनां दैर्घ्यं परस्परं तारतम्यं चाह– **अर्धेत्यादिना** ।। **मध्या** मध्याङ्गुलिः **द्वयोस्तर्जन्यनामिकयोः** सकाशात् **अर्धाङ्गुलोन्नता** अर्धाङ्गुलेन दीर्घा । कनिष्ठिकायास्तु सकाशात् **सार्धाङ्गुलोन्नता** मध्या कनिष्ठिकापेक्षया । अङ्गुष्ठस्याधिक्यमाह– **तस्या इति** ।। **परः** अङ्गुष्ठः **तस्याः** कनिष्ठिकायाः सकाशात् **व्रीहिमात्राधिकः** व्रीहिपरिमाणेनाधिक इत्यर्थः ।

अयं भावः । मध्यमाङ्गुलेः समं तदुभयमित्युक्तत्वात् पादोनपञ्चाङ्गुलपरिमाणत्वम्, तर्जन्यनामिकयोः सपादचतुरङ्गुलत्वम् । कनिष्ठिकायाः सपादत्र्यङ्गुलत्वमङ्गुष्ठस्य व्रीह्यधिकसपादत्र्यङ्गुलत्वमिति ।। २२ ।।

**गु.दी.**– पञ्चाङ्गुलीनां दैर्घ्ये परस्परं तारतम्यमाह— **अर्धेत्यादिना** ।। **मध्या** मध्याङ्गुलिः **द्वयोः** तर्जन्यनामिकयोः सकाशात् **अर्धाङ्गुलोन्नता** तर्जन्यनामिकाभ्यामर्धाङ्गुलोन्नता । तर्जन्यनामिकाभ्यामर्धाङ्गुलोन्नतत्वेऽपि मध्यायाः कनिष्ठिकातः कियदाधिक्यमित्यत आह— **सार्धेति** ।। मध्येत्यनुवर्तते । तथा च मध्या कनिष्ठिकायाः सकाशात् सार्धाङ्गुलोन्नता । कनिष्ठिकापेक्षयाऽङ्गुष्ठस्याधिक्यमाह— **तस्या इति** ।। **तस्याः** कनिष्ठिकायाः सकाशात् व्रीहिपरिमाणेनाधिकः । **परः** अङ्गुष्ठः ।।२२।।

**मङ्गाली–** इदानीं हस्ताङ्गुलीनां दैर्घ्यं परस्परतारतम्यं चाह– **अर्धेति ।।** मध्याङ्गुलिः **द्वयोस्तर्जन्यनामिकयोस्सकाशात् अर्धाङ्गुलोन्नता** अर्धाङ्गुलेन दीर्घा कनिष्टकायास्तु सकाशात् सार्धाङ्गुलोन्नता मध्या । कनिष्ठिकापेक्षयाऽङ्गुष्ठ-स्याधिक्यमाह– **तस्या इति ।। पर** अङ्गुष्ठः **तस्याः** कनिष्ठिकायाः सकाशात् **व्रीहिमात्राधिकः** व्रीहिपरिमाणेनाधिक इत्यर्थः ।

अयं भावः । मध्याङ्गुलेः 'समं तदुभयं' (तं.सा.३-२१) इत्युक्तत्वात् पादोनपञ्चाङ्गुलपरिमाणत्वं तर्जन्यनामिकयोः सपादचतुरङ्गुलत्वं, कनिष्ठकायाः सपादत्र्यङ्गुलत्वं अङ्गुष्ठस्य व्रीह्यधिकसपादत्र्यङ्गुलत्वमिति ।। २२ ।।

अङ्गुलीनां स्थौल्यकथनम्

**तं.सा. सार्धत्रयपरीणाहौ मध्यज्येष्ठावुदाहृतौ ।**
**अन्यौ व्रीहितदर्धोनावन्या सार्धद्वयांगुला ।। २३ ।।**

**त.क.–** इदानीमंगुलीनामुन्मानमाह— **सार्धत्रयेति ।। परीणाहः** उन्मानम् । मध्यांगुलिः अंगुष्ठश्चेतीमौ द्वौ **सार्धत्रयपरीणाहौ** सार्धाङ्गुलित्रयसूत्रवेष्टनयोग्या-वित्यर्थः । तर्जन्यनामिकयोः परिणाहमाह— **अन्याविति ।।** व्रीहिस्तदर्धश्च ताभ्यामूनसार्धाङ्गुलित्रयपरीणाहावित्यर्थः । कनिष्ठायास्तमाह— **अन्येति ।।** अर्धाधिकव्यांगुलपरिणाहेत्यर्थः । अत्र सर्वत्राप्युदाहृतेति सम्बद्ध्यते । तेनांगुलीनां पादोनपरिणाहत्वं ग्रन्थन्तरोक्तं न मन्तव्यमिति सूचयति ।। २३ ।।

**अ.सं.–** अङ्गुलिपरिमाणमाह– **सार्धत्रयेति ।।** मध्या च ज्येष्ठश्च **मध्यज्येष्ठौ** मध्याङ्गुल्यङ्गुष्टावित्यर्थः । **सार्धत्रयपरीणाहौ** सार्धत्र्यङ्गुलसूत्रवेष्टनयोग्यौ । **अन्यौ** अनामिकातर्जन्याख्यौ अङ्गुली **व्रीहितदर्धोनौ** व्रीहिव्रीह्यर्धन्यूनसार्धत्र्यङ्गुल-परिणाहौ । तत्रानामिका व्रीह्यूनसार्धत्र्यङ्गुलपरिणाहा । तर्जनी तु अर्धव्रीह्यूनसार्ध-त्र्यङ्गुलपरिणाहेति ज्ञातव्यम् । यद्वा उभावपि **व्रीहितदर्धोनौ** सार्धव्रीहिन्यूनौ । व्रीहित्रयस्याङ्गुलित्वात् । सार्धव्रीह्यूनत्वेऽर्धाङ्गुलिन्यूनत्वस्यैव प्राप्तेः त्र्यङ्गुलपरीणाहाविति भावः । **अन्या** कनिष्ठिका सार्धद्वयाङ्गुलपरिणाहा ।। २३ ।।

**गु.दी.**— एवमौन्नत्यमुक्त्वा स्थौल्यमाह— **सार्धत्रयेति** ।। मध्या च ज्येष्ठश्चेति द्वौ सार्धत्रयाङ्गुलपरिणाहावुदाहृतौ । **अन्यौ** मध्यमायाः पूर्वापरपार्श्ववर्तिनौ अनामिकातर्जन्याख्यावयवौ व्रीहितदर्धेन सार्धत्रयपरिणाहौ । अत्रायं विवेकः । अनामिका व्रीह्यूनसार्धत्रयाङ्गुलपरिणाहा । तर्जनी व्रीह्यर्धोनसार्धत्रयाङ्गुलपरिणाहेति केचित् । वस्तुतस्तु पूर्वापरावुभावपि सार्धव्रीहिन्यूनपरिणाहाविति ज्ञेयम् । 'अर्धाङ्गुलोन्नता मध्या द्वयोः'(तं.सा.३-२२) इति पूर्ववाक्यात् । **अन्या** कनिष्ठिका सार्धद्वयाङ्गुलपरिणाहा ।। २३ ।।

**मङ्गाली**— अङ्गुलिपरिणाहमाह— **सार्धत्रयेति** ।। मध्यं च ज्येष्ठश्च **मध्यज्येष्ठौ** मध्याङ्गुल्यङ्गुष्ठावित्यर्थः । **सार्धत्रयपरीणाहौ** सार्धत्र्यङ्गुलसूत्रवेष्टनयोग्यौ **अन्यौ** अनामिकातर्जन्याख्यौ अङ्गुल्यौ **व्रीहितदर्धोनौ** व्रीहिवीह्यर्धन्यूनसार्धत्र्यङ्गुलपरिणाहौ । तत्रानामिका व्रीह्यूनसार्धत्र्यङ्गुलपरिणाहा । तर्जनी तु अर्धव्रीह्यूनसार्धत्र्यङ्गुलपरिणाहेति ज्ञातव्यम् । यद्वा उभावपि **व्रीहितदर्धोनौ** सार्धव्रीहिन्यूनौ व्रीहित्रयस्याङ्गुलित्वात् । सार्धव्रीहिन्यूनत्वेऽर्धाङ्गुलिन्यूनत्वस्यैव प्राप्तेः त्र्यङ्गुलपरिणाहाविति भावः । **अन्या** कनिष्ठिका सार्धद्वयाङ्गुलपरिणाहा ।। २३ ।।

ज्येष्ठाङ्गुलिं विना अन्यासामङ्गुलीनां परिमाणकथनं, गलपरिमाणकथनं च

**तं.सा.** **पादोनान्त(न्तः)परीणाहाः(हः) सर्वे ज्येष्ठां विना स्मृताः ।**
**वक्षोविस्तारसदृशः परिणाहो गलस्य च ।। २४ ।।**

**त.क.**— तर्हि तदुक्तेः का गतिरित्यत आह— **पादोनेति** ।। सर्वांगुलयः स्वस्वपरिमाणापेक्षया अंगुलिचतुर्भागेनान्त्यपरिणाहाः । सपादांगुलित्रयपरिणाहयुक्तान्त्यभागोपेता मध्यांगुलिः आदिभागे तु सार्धांगुलित्रयपरिणाहोपेता । एवं तर्जन्यनामिके अपि उपरिभागे अंगुलित्रयपरिणाहेऽप्यन्त्यभागे पादोनांगुलित्रयपरिणाह एव इत्यादि योज्यम् । इमं न्यायं ज्येष्ठायामपवदति— **ज्येष्ठां विनेति** ।। अंगुष्ठस्य आदिमध्यान्तभागेषु समपरिणाहत्वमेवेत्यर्थः । अंगुलिशब्दः पुल्लिङ्गोऽप्यस्तीति **सर्वे** इत्युक्तम् । तथा च सपादांगुलित्रयपरिणाह-

मध्येत्यादिग्रन्थान्तरोक्तिरन्त्यभागपरिणाहविक्षया प्रवृत्ता । अस्माभिस्तु आदिभागपरिणाह उक्त इति न विरोध इति भावः । अत्र 'पादोनान्तः परीणाहः' इति क्वचित् पाठः । तत्र अन्तःप्रदेशपरीणाहवचनेन अन्तःपरीणाह एव उच्यत इति वा, विसर्गागमो वेति ध्येयम् । यद्यपि 'सुवृत्तत्र्यंगुलग्रीवां' (तं.सा.३-३) इति गलमानमुक्तम् । तथापि उन्मानं नोक्तम् । इह परीणाहप्रसङ्गात् गलपरिणाहजिज्ञासायामाह– **वक्ष इति** ।। पादोनविंशत्यंगुलसूत्रवेष्टनयोग्यो गल इत्यर्थः ।। २४ ।।

**अ.सं.–** अङ्गुलीनामन्तिमभागपरिणाहमाह– **पादोनेति** ।। ज्येष्ठाङ्गुष्ठं विना सर्वा अङ्गुलयः **पादोनान्तपरिणाहाः** स्वस्वमूलपरिणाहापेक्षया पादेन अङ्गुलिचतुर्थांशेन ऊनाः न्यूनाः,अन्तपरिणाहाः अन्तिमभागे परिणाहयुता इत्यर्थः। अयं भावः । तर्जनीमध्यमानामिकाङ्गुलीनामादिभागे सार्धत्र्यङ्गुलपरिणाहत्वमन्त्यभागे सपादत्रयाङ्गुलपरिणाहत्वम् । यद्वा तर्जन्यनामिकयोः मूले त्र्यङ्गुलत्वम्। अन्ते पादोनत्र्यङ्गुलत्वमिति । कनिष्ठिकायाः आदिभागे सार्धद्व्यङ्गुलपरिणाहत्वम् । अन्त्यभागे सपादद्व्यङ्गुलपरिणाहत्वम् । ज्येष्ठायास्तु आदिभागे अन्त्यभागेऽपि समपरिणाहत्वमिति । 'पादोनोन्तःपरीणाहः' इति क्वचित्पाठः । तत्र अन्तः अङ्गुलिप्रान्तः अङ्गुल्यादिभाग इति यावत् । स्वमध्यभागापेक्षया आदिभागे पादोनपरिणाहा इत्यर्थः । पूर्वोक्ताङ्गुलिपरिणाहस्तु मध्यभागविषय इति भावः । अत्र 'द्विपर्वोऽङ्गुष्ठको ज्ञेयः शेषाङ्गुल्यस्त्रिपर्विका' इति हयशीर्षवचनात् अङ्गुष्ठादिलक्षणं ज्ञेयम् । गलपरिणाहमाह– **वक्ष इति** ।। गलस्य परिणाहः वक्षोविस्तारेण पादोनविंशत्यङ्गुलपीरणाहेन **सदृशः** तुल्यः ।। २४ ।।

**गु.दी.–** ज्येष्ठामङ्गुलिं विनेतराङ्गुलीनामन्त्यभागपरिमाणमाह— **पादोनेति** ।। स्वस्वमूलपरिणाहस्येति शेषः । सर्वाः अङ्गुलयः स्वस्वमूलपरिणाहस्य **पादेन ऊनान्तपरिणाहाः** अन्त्यभागे स्वस्वमूलापेक्षया पादोनाङ्गुलपरिणाहा इत्यर्थः ।

अयं भावः । मध्यमाङ्गुलादिभागे सार्धत्रयाङ्गुलपरिणाहत्वम् । अन्त्यभागे पादोनसार्धत्रयाङ्गुलत्वम् । सपादाङ्गुलत्रयत्वमिति यावत् । अनामिकायास्त्वादिभागे सार्धव्रीह्यूनसार्धत्रयाङ्गुलपरिणाहत्वम् । अन्त्यभागे सार्धव्रीह्यूनस-

पादाङ्गुलित्रयपरिणाहत्वम् । तर्जन्या अप्यादिभागे सार्धव्रीह्यूनसार्धत्रयाङ्गुल-परिणाहत्वम् । अन्त्यभागे सार्धव्रीह्यूनसपादाङ्गुलत्रयपरिणाहत्वम् । कनिष्ठिकायाः आदिभागे सार्धद्वयाङ्गुलपरिणाहत्वम् । अन्त्यभागे सपादाङ्गुलिद्वयपरिणाहत्वमिति । 'ज्येष्ठां विना' इत्यनेन ज्येष्ठाया अन्त्यभागे आदिभागपरिणाहसमपरिणाहत्वं भाति । यथोक्तं विष्णुतीर्थीये– 'मूलेऽन्त्येऽपि समोऽङ्गुष्ठः शेषाङ्गुल्यस्तथा न हि' इति ॥

गलपरिणाहमाह—**वक्ष इति ॥ गलस्य** कण्ठस्य परिणाहः वक्षोविस्तारेण **सदृशः** तुल्यः पादोनविंशत्यङ्गुलपरिणाह इत्यर्थः ॥ २४ ॥

**मङ्काली–** अङ्गुलीनामन्तिमभागपरिणाहमाह– **पादोनेति ॥** ज्येष्ठाङ्गुलिं अङ्गुष्ठं विना सर्वा अङ्गुलयः **पादोनान्तपरीणाहाः** स्वस्वमूलपरिणाहापेक्षया पादोनाङ्गुलिचतुर्थांशेन ऊनाः न्यूनाः अन्तपरिणाहाः अन्तिमभागे परिणाहयुता इत्यर्थः । ज्येष्ठां विनेति कथनेन ज्येष्ठाया आदिभागे अन्त्यभागे च समपरिणाहत्वमभिप्रेतमिति गम्यते । 'पादोनन्तः परिणाहाः' इति क्वचित्पाठः । तत्रान्तः अङ्गुलिप्रान्तः अङ्गुल्यादिभाग इति यावत् । स्वस्वमध्यभागापेक्षया आदिभागे पदोनपरिणाह इत्यर्थः । पूर्वोक्ताङ्गुलिपरिणाहस्तु मध्यभागविषय इति भावः । अत्र 'द्विपर्वोऽङ्गुष्ठको ज्ञेयः शेषाङ्गुल्यस्त्रिपर्विका' इति हयशीर्षवचनादङ्गुष्ठादिलक्षणं ज्ञेयम् । गलपरिणाहमाह– **वक्ष इति ॥** गलस्य परिणाहः वक्षोविस्तारेण पादोनविंशत्यङ्गुलपरिणाहेन **सदृशः** तुल्यः ॥ २४ ॥

ललाटकुक्षिकण्ठादीनां लक्षणाभिधानम्

**तं.सा. ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ।**
**वृत्तो गलो बाहवश्च स्तनावंगुलयस्तथा ॥ २५ ॥**

**रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च ।**
**उत्तरोष्ठश्च जिह्वा च नखौ पादोनकांगुलौ ॥ २६ ॥**

**अर्धांगुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः ।**
**नासिकाया अधस्ताच्च(त्तु) नासिका च रराटिका ॥ २७ ॥**
**समा मानेन नासाया उच्चत्वेनैव मापने ।**
**अर्धांगुलाधिकं सर्व(र्वं)मुखस्य तु भविष्यति ॥ २८ ॥**

**त.क.–** सुलक्षणप्रतिमाया एव पूज्यत्वज्ञापनाय ललाटमारभ्य तत्तदवयवेषु क्रोडीकृत्य लक्षणान्याह— **ललाटेत्यादिना ॥** क्रमोऽत्र न विवक्षितः । वस्तुनिर्देशेनैव चरितार्थत्वात् । ललाटकण्ठकुक्षिषु त्रिषु दीर्घरेखात्रययुक्तत्वं लक्षणम् । कण्ठबाहुस्तनांगुलिषु वर्तुलत्वं लक्षणम् । तलनखाश्चैवेति बहुचनेन हस्ततलयोः, पादतलयोः, हस्तनखयोः, पादनखयोश्च ग्रहणम् । तलनखनेत्रान्ताधरोष्ठोत्तरोष्ठजिह्वासु रक्तत्वं लक्षणम् । एवं लक्षणाढ्यां प्रतिमां कुर्यादिति भावः । 'लोहैर्वा शिलया दार्वा'(तं.सा.३-१) इति प्रकृतिद्रव्याणां वहूनामुक्तत्वात् सौधादिप्रतिमायामन्तिमं लक्षणमपि सुश्लकमिति ज्ञातव्यम् ।

मांनप्रमाणोन्मानेषु यथायोग्यं तत्तदङ्गसम्वन्धिषु कथितेषु हस्तनखमानमुर्वसितम् । तदाह— **नखावित्यादिना ॥** नखशब्दः हस्तद्वयांगुष्ठनिष्ठनखद्वयपरः। मध्यमनखादेरग्रे परिमाणकथनात् । 'पादोनोच्चांगुष्ठनखाम्' (३-८) इत्यादिना पादनखपरिणामस्योक्तत्वाच्च । स्वार्थे कः । अंगुलशब्देन एकांगुलमुच्यते, योग्यतावशात् । चतुर्थभागेन एकांगुलपरिमितावित्यर्थः । मध्यांगुलिगतौ नखौ अर्धांगुलिपरिमितदीर्घावित्यर्थः । अन्ये तर्जन्यनामिकाकनिष्ठिकागतनखास्तु अष्टांशक्रमेणोनाः । मध्यांगुलिनखापेक्षया तर्जनीनखयोरष्टांशन्यूनत्वम् । तदपेक्षया अनामिकानखयोरष्टांशन्यूनत्वम् । तदपेक्षया कनिष्ठिकानखयोरष्टांशन्यूनत्वमित्यर्थः । तदुक्तं पूर्वं 'नवांगुललसन्मुखां'(३-३) इति । तत्र मुखस्य उच्चमध्याधरभेदेन त्रैविध्यादधरभागमानमुर्वरितम् । तदत्र उर्वरितकथनप्रसङ्गान्निरूपयति— **अधस्ताच्चेति ।** नासिकाया अधस्ताद्भागः मुखस्य अधरभागः । नासिकामध्यभागः रराटिका । ललाटमूर्ध्वभागः । एवं भागत्रयमपि सममेवेत्यर्थः ।

पादाङ्गुलित्रयपरिणाहत्वम् । तर्जन्या अप्यादिभागे सार्धव्रीह्यूनसार्धत्रयाङ्गुलपरिणाहत्वम् । अन्त्यभागे सार्धव्रीह्यूनसपादाङ्गुलत्रयपरिणाहत्वम् । कनिष्ठिकायाः आदिभागे सार्धद्वयाङ्गुलपरिणाहत्वम् । अन्त्यभागे सपादाङ्गुलिद्वयपरिणाहत्वमिति । 'ज्येष्ठां विना' इत्यनेन ज्येष्ठाया अन्त्यभागे आदिभागपरिणाहसमपरिणाहत्वं भाति । यथोक्तं विष्णुतीर्थीये– 'मूलेऽन्त्येऽपि समोऽङ्गुष्ठः शेषाङ्गुल्यस्तथा न हि' इति ।।

गलपरिणाहमाह—**वक्ष इति ।। गलस्य** कण्ठस्य परिणाहः वक्षोविस्तारेण **सदृशः** तुल्यः पादोनविंशत्यङ्गुलपरिणाह इत्यर्थः ।। २४ ।।

**मङ्गाली–** अङ्गुलीनामन्तिमभागपरिणाहमाह– **पादोनेति ।।** ज्येष्ठाङ्गुलिं अङ्गुष्ठं विना सर्वा अङ्गुलयः **पादोनान्तपरीणाहाः** स्वस्वमूलपरिणाहापेक्षया पादोनाङ्गुलिचतुर्थांशेन ऊनाः न्यूनाः अन्तपरिणाहाः अन्तिमभागे परिणाहयुता इत्यर्थः । ज्येष्ठां विनेति कथनेन ज्येष्ठाया आदिभागे अन्त्यभागे च समपरिणाहत्वमभिप्रेतमिति गम्यते । 'पादोनन्तः परिणाहाः' इति क्वचित्पाठः । तत्रान्तः अङ्गुलिप्रान्तः अङ्गुल्यादिभाग इति यावत् । स्वस्वमध्यभागापेक्षया आदिभागे पदोनपरिणाह इत्यर्थः । पूर्वोक्ताङ्गुलिपरिणाहस्तु मध्यभागविषय इति भावः । अत्र 'द्विपर्वोऽङ्गुष्ठको ज्ञेयः शेषाङ्गुल्यस्त्रिपर्विका' इति हयशीर्षवचनादङ्गुष्ठादिलक्षणं ज्ञेयम् । गलपरिणाहमाह– **वक्ष इति ।।** गलस्य परिणाहः वक्षोविस्तारेण पादोनविंशत्यङ्गुलपरिणाहेन **सदृशः** तुल्यः ।। २४ ।।

ललाटकुक्षिकण्ठादीनां लक्षणाभिधानम्

**तं.सा.** **ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ।**
**वृत्तो गलो बाहवश्च स्तनावंगुलयस्तथा ।। २५ ।।**

**रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च ।**
**उत्तरोष्ठश्च जिह्वा च नखौ पादोनकांगुलौ ।। २६ ।।**

**अर्धांगुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः ।**
**नासिकाया अधस्ताच्च(त्तु) नासिका च रराटिका ॥ २७ ॥**

**समा मानेन नासाया उच्चत्वेनैव मापने ।**
**अर्धांगुलाधिकं सर्व(र्वं)मुखस्य तु भविष्यति ॥ २८ ॥**

**त.क.–** सुलक्षणप्रतिमाया एव पूज्यत्वज्ञापनाय ललाटमारभ्य तत्तदवयवेषु क्रोडीकृत्य लक्षणान्याह— **ललाटेत्यादिना ॥** क्रमोऽत्र न विवक्षितः। वस्तुनिर्देशेनैव चरितार्थत्वात्। ललाटकण्ठकुक्षिषु त्रिषु दीर्घरेखात्रययुक्तत्वं लक्षणम्। कण्ठबाहुस्तनांगुलिषु वर्तुलत्वं लक्षणम्। तलनखाश्चैवेति बहुचनेन हस्ततलयोः, पादतलयोः, हस्तनखयोः, पादनखयोश्च ग्रहणम्। तलनखनेत्रान्ताधरोष्टोत्तरोष्ठजिह्वासु रक्तत्वं लक्षणम्। एवं लक्षणाढ्यां प्रतिमां कुर्यादिति भावः। 'लोहैर्वा शिलया दार्वा'(तं.सा.३-१) इति प्रकृतिद्रव्याणां वहूनामुक्तत्वात् सौधादिप्रतिमायामन्तिमं लक्षणमपि सुशकमिति ज्ञातव्यम्।

मानप्रमाणोन्मानेषु यथायोग्यं तत्तदङ्गसम्बन्धिषु कथितेषु हस्तनखमानमुर्वसितम्। तदाह— **नखावित्यादिना ॥** नखशब्दः हस्तद्वयांगुष्ठनिष्ठनखद्वयपरः। मध्यमनखादेरग्रे परिमाणकथनात्। 'पादोनोच्चांगुष्ठनखाम्' (३-८) इत्यादिना पादनखपरिणामस्योक्तत्वाच्च। स्वार्थे कः। अंगुलशब्देन एकांगुलमुच्यते, योग्यतावशात्। चतुर्थभागेन एकांगुलपरिमितावित्यर्थः। मध्यांगुलिगतौ नखौ अर्धांगुलिपरिमितदीर्घावित्यर्थः। अन्ये तर्जन्यनामिकाकनिष्ठिकागतनखास्तु अष्टांशक्रमेणोनाः। मध्यांगुलिनखापेक्षया तर्जनीनखयोरष्टांशन्यूनत्वम्। तदपेक्षया अनामिकानखयोरष्टांशन्यूनत्वम्। तदपेक्षया कनिष्ठिकानखयोरष्टांशन्यूनत्वमित्यर्थः। तदुक्तं पूर्वं 'नवांगुललसन्मुखां'(३-३) इति। तत्र मुखस्य उच्चमध्याधरभेदेन त्रैविध्यादधरभागमानमुर्वरितम्। तदत्र उर्वरितकथनप्रसङ्गान्निरूपयति— **अधस्ताच्चेति।** नासिकाया अधस्ताद्भागः मुखस्य अधरभागः। नासिकामध्यभागः रराटिका। ललाटमूर्ध्वभागः। एवं भागत्रयमपि सममेवेत्यर्थः।

पादाङ्गुलित्रयपरिणाहत्वम् । तर्जन्या अप्यादिभागे सार्धव्रीह्यूनसार्धत्रयाङ्गुल-परिणाहत्वम् । अन्त्यभागे सार्धव्रीह्यूनसपादाङ्गुलत्रयपरिणाहत्वम् । कनिष्ठिकायाः आदिभागे सार्धद्वयाङ्गुलपरिणाहत्वम् । अन्त्यभागे सपादाङ्गुलिद्वयपरिणाहत्वमिति । 'ज्येष्ठां विना' इत्यनेन ज्येष्ठाया अन्त्यभागे आदिभागपरिणाहसमपरिणाहत्वं भाति । यथोक्तं विष्णुतीर्थीये– 'मूलेऽन्त्येऽपि समोऽङ्गुष्ठः शेषाङ्गुल्यस्तथा न हि' इति ॥

गलपरिणाहमाह—**वक्ष इति ॥ गलस्य** कण्ठस्य परिणाहः वक्षोविस्तारेण **सदृशः** तुल्यः पादोनविंशत्यङ्गुलपरिणाह इत्यर्थः ॥ २४ ॥

**मङ्गाली–** अङ्गुलीनामन्तिमभागपरिणाहमाह– **पादोनेति ॥** ज्येष्ठाङ्गुलिं अङ्गुष्ठं विना सर्वा अङ्गुलयः **पादोनान्तपरीणाहाः** स्वस्वमूलपरिणाहापेक्षया पादोनाङ्गुलिचतुर्थांशेन ऊनाः न्यूनाः अन्तपरिणाहाः अन्तिमभागे परिणाहयुता इत्यर्थः । ज्येष्ठां विनेति कथनेन ज्येष्ठाया आदिभागे अन्त्यभागे च समपरिणाहत्वमभिप्रेतमिति गम्यते । 'पादोनन्तः परिणाहाः' इति क्वचित्पाठः । तत्रान्तः अङ्गुलिप्रान्तः अङ्गुल्यादिभाग इति यावत् । स्वस्वमध्यभागापेक्षया आदिभागे पदोनपरिणाह इत्यर्थः । पूर्वोक्ताङ्गुलिपरिणाहस्तु मध्यभागविषय इति भावः । अत्र 'द्विपर्वोऽङ्गुष्ठको ज्ञेयः शेषाङ्गुल्यस्त्रिपर्विका' इति हयशीर्षवचनादङ्गुष्ठादिलक्षणं ज्ञेयम् । गलपरिणाहमाह– **वक्ष इति ॥** गलस्य परिणाहः वक्षोविस्तारेण पादोनविंशत्यङ्गुलपरिणाहेन **सदृशः** तुल्यः ॥ २४ ॥

ललाटकुक्षिकण्ठादीनां लक्षणाभिधानम्

तं.सा. **ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ।**
**वृत्तो गलो बाहवश्च स्तनावंगुलयस्तथा** ॥ २५ ॥

**रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च ।**
**उत्तरोष्ठश्च जिह्वा च नखौ पादोनकांगुलौ** ॥ २६ ॥

**अर्धांगुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः ।**
**नासिकाया अधस्ताच्च(त्तु) नासिका च रराटिका ॥ २७ ॥**

**समा मानेन नासाया उच्चत्वेनैव मापने ।**
**अर्धांगुलाधिकं सर्व(र्वं)मुखस्य तु भविष्यति ॥ २८ ॥**

त.क.— सुलक्षणप्रतिमाया एव पूज्यत्वज्ञापनाय ललाटमारभ्य तत्तदवयवेषु क्रोडीकृत्य लक्षणान्याह— **ललाटेत्यादिना ॥** क्रमोऽत्र न विवक्षितः। वस्तुनिर्देशेनैव चरितार्थत्वात्। ललाटकण्ठकुक्षिषु त्रिषु दीर्घरेखात्रययुक्तत्वं लक्षणम्। कण्ठबाहुस्तनांगुलिषु वर्तुलत्वं लक्षणम्। तलनखाश्चैवेति बहुचनेन हस्ततलयोः, पादतलयोः, हस्तनखयोः, पादनखयोश्च ग्रहणम्। तलनखनेत्रान्ताधरोष्ठोत्तरोष्ठजिह्वासु रक्तत्वं लक्षणम्। एवं लक्षणाढ्यां प्रतिमां कुर्यादिति भावः। 'लोहैर्वा शिलया दार्वा'(तं.सा.३-१) इति प्रकृतिद्रव्याणां वहूनामुक्तत्वात् सौधादिप्रतिमायामन्तिमं लक्षणमपि सुश्रकमिति ज्ञातव्यम्।

मानप्रमाणोन्मानेषु यथायोग्यं तत्तदङ्गसम्बन्धिषु कथितेषु हस्तनखमान-मुर्वसितम्। तदाह— **नखावित्यादिना ॥** नखशब्दः हस्तद्वयांगुष्ठनिष्ठ-नखद्वयपरः। मध्यमनखादेरग्रे परिमाणकथनात्। 'पादोनोच्चांगुष्ठनखाम्' (३-८) इत्यादिना पादनखपरिणामस्योक्तत्वाच्च। स्वार्थे कः। अंगुलशब्देन एकांगुल-मुच्यते, योग्यतावशात्। चतुर्थभागेन एकांगुलपरिमितावित्यर्थः। मध्यांगुलिगतौ नखौ अर्धांगुलिपरिमितदीर्घावित्यर्थः। अन्ये तर्जन्यनामिकाकनिष्ठिकागतनखास्तु अष्टांशक्रमेणोनाः। मध्यांगुलिनखापेक्षया तर्जनीनखयोरष्टांशन्यूनत्वम्। तदपेक्षया अनामिकानखयोरष्टांशन्यूनत्वम्। तदपेक्षया कनिष्ठिकानखयोरष्टांशन्यूनत्व-मित्यर्थः। तदुक्तं पूर्वं 'नवांगुललसन्मुखां'(३-३) इति। तत्र मुखस्य उच्चमध्याधरभेदेन त्रैविध्यादधरभागमानमुर्वरितम्। तदत्र उर्वरितकथनप्रसङ्गा-न्निरूपयति— **अधस्ताच्चेति ।** नासिकाया अधस्ताद्भागः मुखस्य अधरभागः। नासिकामध्यभागः रराटिका। ललाटमूर्ध्वभागः। एवं भागत्रयमपि सममेवेत्यर्थः।

पादाङ्गुलित्रयपरिणाहत्वम् । तर्जन्या अप्यादिभागे सार्धव्रीह्यूनसार्धत्रयाङ्गुल-परिणाहत्वम् । अन्त्यभागे सार्धव्रीह्यूनसपादाङ्गुलत्रयपरिणाहत्वम् । कनिष्ठिकायाः आदिभागे सार्धद्वयाङ्गुलपरिणाहत्वम् । अन्त्यभागे सपादाङ्गुलिद्वयपरिणाहत्वमिति । 'ज्येष्ठां विना' इत्यनेन ज्येष्ठाया अन्त्यभागे आदिभागपरिणाहसमपरिणाहत्वं भाति । यथोक्तं विष्णुतीर्थीये– 'मूलेऽन्त्येऽपि समोऽङ्गुष्ठः शेषाङ्गुल्यस्तथा न हि' इति ॥

गलपरिणाहमाह—**वक्ष इति** ॥ **गलस्य** कण्ठस्य परिणाहः वक्षोविस्तारेण **सदृशः** तुल्यः पादोनविंशत्यङ्गुलपरिणाह इत्यर्थः ॥ २४ ॥

**मङ्गाली–** अङ्गुलीनामन्तिमभागपरिणाहमाह– **पादोनेति** ॥ ज्येष्ठाङ्गुलिं अङ्गुष्ठं विना सर्वा अङ्गुलयः **पादोनान्तपरीणाहाः** स्वस्वमूलपरिणाहापेक्षया पादोनाङ्गुलिचतुर्थांशेन ऊनाः न्यूनाः अन्तपरिणाहाः अन्तिमभागे परिणाहयुता इत्यर्थः । ज्येष्ठां विनेति कथनेन ज्येष्ठाया आदिभागे अन्त्यभागे च समपरिणाहत्वमभिप्रेतमिति गम्यते । 'पादोनन्तः परिणाहाः' इति क्वचित्पाठः । तत्रान्तः अङ्गुलिप्रान्तः अङ्गुल्यादिभाग इति यावत् । स्वस्वमध्यभागापेक्षया आदिभागे पदोनपरिणाह इत्यर्थः । पूर्वोक्ताङ्गुलिपरिणाहस्तु मध्यभागविषय इति भावः । अत्र 'द्विपर्वोऽङ्गुष्ठको ज्ञेयः शेषाङ्गुल्यस्त्रिपर्विका' इति हयशीर्षवचनादङ्गुष्ठादिलक्षणं ज्ञेयम् । गलपरिणाहमाह– **वक्ष इति** ॥ गलस्य परिणाहः वक्षोविस्तारेण पादोनविंशत्यङ्गुलपरिणाहेन **सदृशः** तुल्यः ॥ २४ ॥

ललाटकुक्षिकण्ठादीनां लक्षणाभिधानम्

तं.सा. **ललाटकुक्षिकण्ठास्तु दीर्घरेखात्रयान्विताः ।**
**वृत्तो गलो बाहवश्च स्तनावंगुलयस्तथा ॥ २५ ॥**

**रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च ।**
**उत्तरोष्ठश्च जिह्वा च नखौ पादोनकांगुलौ ॥ २६ ॥**

**अर्धांगुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः ।**
**नासिकाया अधस्ताच्च(त्तु) नासिका च रराटिका ।। २७ ।।**

**समा मानेन नासाया उच्चत्वेनैव मापने ।**
**अर्धांगुलाधिकं सर्व(र्वं)मुखस्य तु भविष्यति ।। २८ ।।**

**त.क.–** सुलक्षणप्रतिमाया एव पूज्यत्वज्ञापनाय ललाटमारभ्य तत्तदवयवेषु क्रोडीकृत्य लक्षणान्याह— **ललाटेत्यादिना ।।** क्रमोऽत्र न विवक्षितः। वस्तुनिर्देशेनैव चरितार्थत्वात्। ललाटकण्ठकुक्षिषु त्रिषु दीर्घरेखात्रययुक्तत्वं लक्षणम्। कण्ठवाहुस्तनांगुलिषु वर्तुलत्वं लक्षणम्। तलनखाश्चैवेति बहुचनेन हस्ततलयोः, पादतलयोः, हस्तनखयोः, पादनखयोश्च ग्रहणम्। तलनखनेत्रान्ताधरोष्टोत्तरोष्ठजिह्वासु रक्तत्वं लक्षणम्। एवं लक्षणाढ्यां प्रतिमां कुर्यादिति भावः। 'लोहैर्वा शिलया दार्वा'(तं.सा.३-१) इति प्रकृतिद्रव्याणां वहूनामुक्तत्वात् सौधादिप्रतिमायामन्तिमं लक्षणमपि सुशकमिति ज्ञातव्यम्।

मानप्रमाणोन्मानेषु यथायोग्यं तत्तदङ्गसम्बन्धिषु कथितेषु हस्तनखमानमुर्वसितम्। तदाह— **नखावित्यादिना ।।** नखशब्दः हस्तद्वयांगुष्ठनिष्ठनखद्वयपरः। मध्यमनखादेरग्रे परिमाणकथनात्। 'पादोनोच्चांगुष्ठनखाम्' (३-८) इत्यादिना पादनखपरिणामस्योक्तत्वाच्च। स्वार्थे कः। अंगुलशब्देन एकांगुलमुच्यते, योग्यतावशात्। चतुर्थभागेन एकांगुलपरिमितावित्यर्थः। मध्यांगुलिगतौ नखौ अर्धांगुलिपरिमितदीर्घावित्यर्थः। अन्ये तर्जन्यनामिकाकनिष्ठिकागतनखास्तु अष्टांशक्रमेणोनाः। मध्यांगुलिनखापेक्षया तर्जनीनखयोरष्टांशन्यूनत्वम्। तदपेक्षया अनामिकानखयोरष्टांशन्यूनत्वम्। तदपेक्षया कनिष्ठिकानखयोरष्टांशन्यूनत्वमित्यर्थः। तदुक्तं पूर्वं 'नवांगुललसन्मुखां'(३-३) इति। तत्र मुखस्य उच्चमध्याधरभेदेन त्रैविध्यादधरभागमानमुर्वरितम्। तदत्र उर्वरितकथनप्रसङ्गान्निरूपयति— **अधस्ताच्चेति ।** नासिकाया अधस्ताद्भागः मुखस्य अधरभागः। नासिकामध्यभागः रराटिका। ललाटमूर्ध्वभागः। एवं भागत्रयमपि सममेवेत्यर्थः।

मुखस्य अधारभागस्त्र्यङ्गुलः। नासिकाख्यो मध्यभागस्त्र्यंगुलः। ललाटाख्य उर्ध्वभागस्त्र्यंगुलः। एवं मुखं नवांगुलं सम्पन्नमिति भावः।

नन्वेषां त्रयाणां भागानां साम्यं प्रमाणेन नोपपद्यते। ललाटतिर्यक्प्रमाणस्य नासिकायामसम्भवादित्यत आह— **मानेनेति ।।** दैर्घ्येणेत्यर्थः। नन्वेवं चेत् सार्धनवांगुलत्वं कथमन्यत्रोच्यत इति शङ्कामत्र प्रसङ्गात् परिहरति— **नासिकाया इति ।।** नासिकाया उच्चत्वेन सह माने कृते अर्धांगुलाधिकं नवांगुलं सर्वमुखस्य मानं भविष्यतीति हेतोः ग्रन्थान्तरे तथोक्तम्। अस्माभिस्तु षण्णवत्यंगुलत्वोपपादनसमये दैर्घ्यस्यैव वक्तव्यतया नासिकागतोच्चत्वस्य विवक्षा नाश्रितेति भावः ।। २५-२९ ।।

**अ.सं.**— ललाटादीनां लक्षणमाह— **ललाटेति ।। कुक्षिः** उदरम्। गलादीनां वर्तुलतामाह— **वृत्त इति ।। वृत्तः** वर्तुलः **गलः** बाहवो वृत्ताः स्तनौ वृत्तौ इति वचनविपरिणामेन वृत्तपदं योज्यम् ।।

नखादीनां रक्तत्वमाह— **रक्ता इति ।। तलनखाः** हस्ततलनखाः। पादतलनखानामुक्तत्वात्। तलानि च नखाश्च रक्ताः **नेत्रान्तः** नयनप्रान्तः रक्तः अधरः अधरोष्ठश्च रक्तः जिह्वा च रक्ता इत्येवं लिङ्गवचनविपरिणामेन रक्तपदं योज्यम्। हस्ताङ्गुष्ठनखदैर्घ्यमाह— **नखाविति ।।** हस्तद्वयाङ्गुष्ठनखावित्यर्थः। पादोनैकाङ्गुलपरिमितदैर्घ्योपेतौ ।।

**मध्यौ** हस्तद्वयगतमध्याङ्गुलिनखौ अर्धाङ्गुलिपरिमाणौ। **अन्ये** हस्तद्वयगत-तर्जन्यनामिकाकनिष्ठाङ्गुलिनखा **अष्टांशक्रमोनकाः** अष्टांशेन क्रमादूनाः। अयं भावः। मध्याङ्गुलिनखापेक्षया तर्जनीनखयोः अष्टांशन्यूनत्वं, तर्जन्यपेक्षया अनामिकानखयोरष्टांशोनत्वम्। अनामिकानखापेक्षया कनिष्ठिकानखयोरष्टांश-न्यूनत्वमिति। उक्तं च हयशीर्षे—

पादोनमङ्गुलं कार्यमङ्गुष्ठस्य नखं तथा ।
अर्धाङ्गुलं तथा कार्यं मध्यमाया नखं तथा ।।
अष्टमांशाष्टमांशोना शेषाङ्गुल्यः क्रमेण तु ।। इति ।

विष्णुतीर्थास्तु– मध्यमनखापेक्षया तर्जन्यनामिकानखानामष्टांशोनत्वम्। तदपेक्षया कनिष्ठिकानखयोरष्टांशोनत्वमिति भाव इति मन्यन्ते।

'नवाङ्गुललसन्मुखां'(३-३) इति मुखस्य नवाङ्गुलत्वमुक्तम्। तत्र भागत्रयमस्ति। तस्य परस्परसाम्यमाह– **नासिकेति**॥ नासिकायाः **अधस्तात्तु** अधोभागः। नासिका तद्रूपो भागः। **रराटिका** ललाटाख्यो भागः। एते त्रयो भागाः **मानेन** परिमाणेन **समाः**। नासिकाधोभागः त्र्यङ्गुलः नासिका त्र्यङ्गुला ललाटं च त्र्यङ्गुलमिति भावः। ननु ग्रन्थान्तरे मुखस्य सार्धनवाङ्गुलत्वमुक्तम्। अत्र नवाङ्गुलत्वमेवोच्येते। अतो विरोध इत्यत आह– **नासाया इति**॥ नासिकाया उच्चत्वेन सहैव **मापने** चुबुकमारभ्य केशपर्यन्तं सूत्रेण मापने कृते सति **सर्वमुखस्य** भागत्रयोपेतस्य मुखस्य पूर्वोक्तनवाङ्गुलपरिमाणमर्धाङ्गुलेनाधिकं **भविष्यति** भवति। नान्यथेत्यर्थः।

अयं भावः। अन्यत्र नासिकोच्चत्वेन सह मुखस्य सार्धनवाङ्गुलत्वमुक्तम्। अत्र तु नासिकोच्चत्वं विनैव नवाङ्गुलत्वमुच्यते। अतो न विरोध इति। अत्रापि नासिकोच्चत्वेन सह सार्धनवाङ्गुलत्वं कुतो नोक्तमिति चेत्। षण्णवत्यङ्गुलदैर्घ्यस्य शिरआदिपादपर्यन्तं ऋजुभूतावयवविभागेनोपपादनसमये नासिकोच्चत्वस्य तिर्यगुच्चत्वेनानुपयोगात्॥ २५-२८॥

**गु.दी.– दीर्घरेखात्रयान्विताः** दीर्घेण रेखात्रयेण युक्ताः ललाटादित्रयः। गलो बाहवश्च स्तनौ अङ्गुलयश्च वृत्तः वृत्ताः वृत्तावित्यादि योज्यम्। **तलः** पाणितलः **नखाः** हस्तनखाश्च, पादनखानां रक्तत्वस्य 'रक्तपादनखां शुभां' इत्यत्रोक्तत्वात्, नेत्रान्तश्च अधर इत्यत्र बुध्या विवेकेनोष्ठपदस्याऽकर्षः, उत्तरोष्ठश्च जिह्वा चेत्येते रक्ताः॥

नखदैर्घ्यपरिमाणमाह— **नखाविति**॥ ज्येष्ठाङ्गुलनखावित्यर्थः। द्विवचनं तु हस्तद्वयस्याङ्गुलापेक्षया। अन्यथा अन्य इति बहुवचनानुपपत्तिरिति ज्ञेयम्। अङ्गुष्ठनखौ पादोनैकाङ्गुलिदीर्घौ। **मध्याविति** द्विवचनं पूर्ववदेव। **मध्यौ** मध्यमाङ्गुलीनखौ अर्धाङ्गुलिदीर्घौ। **अन्ये** तर्जन्यनामिकाकनिष्ठिकानखाः **अष्टांशक्रमोनकाः** क्रमेण मध्याद्यपेक्षयाऽष्टांशोनाः।

अयं भावः। तर्जनीनखस्य मध्यनखपरिमाणापेक्षयाऽष्टांशोनमध्यनखपरिमितदैर्घ्यम्। अनामिकानखस्यापि तर्जनीनखवत् मध्यनखापेक्षयाऽष्टांशोनतत्परिमितदैर्घ्यम्। कनिष्ठिकानखस्य तदुभयापेक्षयाऽष्टांशोनतत्परिमितदैर्घ्यमिति। तथा चोक्तं विष्णुतीर्थीये—

पादोनमङ्गुलं कार्यमङ्गुष्ठस्य नखं तथा।
अर्धाङ्गुलं तथा कार्यं मध्यमाया नखं तथा।
अष्टमांशाष्टमांशोनाः शेषाङ्गुल्यः क्रमेण तु ॥ इति ॥

'नवाङ्गुललसन्मुखां'(३-३) इत्युक्तम्। नवाङ्गुलत्वं नासाधोभागस्त्र्यङ्गुलः नासा त्र्यङ्गुली ललाटं च त्र्यङ्गुलमित्यवयवशो विभज्य दर्शयति— **नासिकाया इति ॥** नासिकायाः **अधस्तात्** अधःप्रदेशः नासिका च **ललाटिका** ललाटमित्येते मानेन समाः। एतत् त्रितयं **मानेन समं** त्र्यङ्गुलमित्यर्थः। तथा च 'नवाङ्गुललसन्मुखां' (तं.सा.३-३) इति प्रागुक्तमुपपन्नं भवति। चुबुकाग्रमारभ्य नासिकापर्यन्तं त्र्यङ्गुलम्। भ्रूपर्यन्तं नासिका च तावती। तदुपरि रराटिका च त्र्यङ्गुलेति नवाङ्गुलत्वं सम्पन्नं भवति। ननु सार्धनवाङ्गुलपरिमितो हि हस्तः। तेन समपरिमाणत्वमन्यत्रोक्तम्। अत्र तु नवाङ्गुलपरिमितत्वमेव मुखस्योच्यतेऽतो विरोध इत्यत आह— **नासाया इति ॥** नासिकायाः उच्चत्वेन निमित्तेन चुबुकादिमारभ्य केशपर्यन्तं मापने कृते सति **मुखस्य** नवाङ्गुलात्मकस्य मुखस्य, **सर्वं** परिमाणं पूर्वोक्तनवाङ्गुलापेक्षयाऽर्धाङ्गुलमधिकं यस्य तत् तादृशं भवतीत्यर्थः। **सर्वमुखस्य** इति पाठे चुबुकादिमारभ्य नासाग्रेण ललाटान्तपर्यन्तं मापने क्रियमाणे नासाया उच्चतया सर्वमुखस्यार्धाङ्गुलाधिकम्। भावप्रधानो निर्देशः। अधिकत्वं भविष्यतीत्यर्थः। पूर्वोक्तं नवाङ्गुलत्वं तूच्चत्वेन मापनं विनेति ज्ञेयम्। तथा च मुखस्य सार्धनवाङ्गुलत्वं लब्धमिति हस्तसमानत्वं वर्तत एवेति भावः ॥२५-२८॥

**मङ्गली**— ललाटादीनां लक्षणमाह— **ललाटेति ॥ कुक्षिरुदरम्**। गलादीनां वर्तुलतामाह— **वृत्त इति ॥ वृत्तो** वर्त्तुलो गलः बाहवो वृत्ताः स्तनौ वृत्ताविति वचनविपरिणामेन वृत्तपदं योज्यम् ॥

नखादीनां रक्तत्वमाह— **रक्ता इति ।। तलनखाः** हस्ततलनखाः । पादतलनखानामुक्तत्वात् । तलावि च नखाश्चारक्ताः **नेत्रान्तो** नयनप्रान्तः रक्तः अधरः अधरोष्ठः उत्तरोष्ठश्च रक्तः जिह्वा च रक्ता इत्येवं लिङ्गवचनविपरिणामेन रक्तपदं योज्यम् । हस्ताङ्गुष्ठनखदैर्घ्यमाह— **नखाविति ।** हस्तद्वयाङ्गुष्ठनखावित्यर्थः । पादोनैकाङ्गुलपरिमितदैर्घ्योपेतौ ।।

**मध्यौ** हस्तद्वयगतमध्याङ्गुलिनखौ अर्धाङ्गुलिपरिमाणौ । अन्यहस्तद्वयगततर्जन्यनामिकाकनिष्ठाङ्गुलिनखाः **अष्टांशक्रमोनकाः** अष्टांशेन क्रमादूनाः ।

अयं भावः । मध्याङ्गुलिनखापेक्षया तर्जनीनखयोः अष्टांशन्यूनत्वं, तर्जनीनखापेक्षया अनामिकानखयोरष्टांशोनत्वं, अनामिकानखापेक्षया कनिष्ठिकानखयोरष्टांशन्यूनत्वमिति । उक्तं च हयशीर्षे–

पादोनमङ्गुलं कार्यमङ्गुष्ठस्य नखं तथा ।
अर्धाङ्गुलं तथा कार्यं मध्यमाया नखं तथा ।
अष्टमांशाष्टमांशोनाः शेषाङ्गुल्यः क्रमेण तु ।। इति ।

विष्णुतीर्थास्तु– मध्यमनखापेक्षया तर्जन्यनामिकानखानामष्टमांशोनत्वम् । तदपेक्षया कनिष्ठिकानखयोरष्टांशोनत्वमिति भाव इति मन्यन्ते ।

'नवाङ्गुलसन्मुखां'(३-३) इति मुखस्य नवाङ्गुलत्वमुक्तम् । तत्र भागत्रयमस्ति । तस्य परस्परं साम्यमाह– **नासिकेति ।।** नासिकाया **अधस्तात्** अधोभागः नासिका तद्रूपो भागः । **रराटिका** ललाटाख्यो भागः । एते त्रयो भागाः **मानेन** परिमाणेन **समाः।** नासिकाधोभागः त्र्यङ्गुलः नासिका त्र्यङ्गुला ललाटं च त्र्यङ्गुलमिति भावः । ननु ग्रन्थान्तरे मुखस्य सार्धनवाङ्गुलत्वमुक्तम् । अत्र नवाङ्गुलत्वमेवोच्यते । अतो विरोध इत्यत आह– **नासाया इति ।।** नासिकाया उच्चत्वेन सहैव मापने चुबुकमारभ्य केशपर्यन्तं सूत्रेण मापने कृते सति **सर्वमुखस्य** भागत्रयोपेतस्य मुखस्य पूर्वोक्तं नवाङ्गुलपरिमाणं अर्धाङ्गुलेनाधिकं **भविष्यति** भवति नान्यथेत्यर्थः ।

अयं भावः । अन्यत्र नासिकोच्चत्वेन सह मुखस्य सार्धनवाङ्गुलत्वमुक्तम् । अत्र

तु **नासिकोच्चत्वं** विनैव नवाङ्गुलत्वमुच्यते। अतो न विरोध इति। अत्रापि नासिकोच्चत्वेन सह सार्धनवाङ्गुलत्वं कुतो नोक्तमिति चेत्। षण्णवत्यङ्गुलदैर्घ्यस्य शिरआदिपादपर्यन्तं ऋजुभूतावयवविभागेनोपपादनसमये नासिकोच्चत्वस्य तिर्यगुच्चत्वेनानुपयोगात् ।।। २५-२८ ।।

आस्यस्य तिर्यक्प्रमाणकथनं, अधरोष्ठोत्तरोष्ठयोः परिमाणकथनं च

**तं.सा.** **चतुरंगुलं तथैवाऽस्यं सार्धव्रीह्यधरं स्मृतम् ।**
**उत्तरं व्रीहिमात्रं तु तदूर्ध्वं चाधरोपमम् ।। २९ ।।**

**त.क.**– एवं प्रासङ्गिकं समाप्यास्य तिर्यक्प्रमाणमाह— **चतुरंगुलमिति ।। तथा** वक्षोविस्तारादिरुक्तपरिमाणस्तथा, आस्यमपि चतुरंगुलपरिमितिर्यक्-प्रमाणम्। आस्यस्य पूर्वोत्तरभागयोर्दैर्घ्यमाह— **सार्धेति ।।** आस्याधरमोष्ठं सार्धव्रीहिमात्रप्रमाणकम्। तदूर्ध्वनासिकाया अधरो भागः अधरोष्ठप्रमाणः। सार्धैकव्रीहिपरिमित इति यावत् ।। २९ ।।

**अ.सं.**– आस्यतिर्यक्परिमाणमाह– **चतुरङ्गुलमिति ।। आस्यं** वदनम्। **चतुरङ्गुलं** चतुरङ्गुलतिर्यक्दैर्घ्योपेतम्। नवाङ्गुलपरिमितमुखे नासिकाधोभागस्य समा मानेनेत्यत्र त्र्यङ्गुलत्वं तूक्तम् । तत्रावान्तरभागपरिमाणमाह— **सार्धेति । अधरं** अधरोष्ठः **सार्धव्रीहि** सार्धैकव्रीहिपरिमाणः, अर्धाङ्गुलपरिमित इति भावः। व्रीहित्रयपरिमाणस्य एकाङ्गुलपरिमाणत्वात्। **उत्तरं** उत्तरोष्ठः **व्रीहिमात्रं** व्रीहिपरिमितः **तदूर्ध्वमु**त्तरोष्ठादूर्ध्वं नासायाः अधः **अधरोपमम् ।** अधरोष्ठो-पममर्धाङ्गुलपरिमितमिति भावः ।। २९ ।।

**गु.दी.**– आस्यतिर्यक्परिमाणमाह— **चतुरङ्गुलमिति ।। आस्यं** आस्यदैर्घ्यं **चतुरङ्गुलम् ।** नासाधोऽङ्गुलित्रयपरिमाणमुक्तम्। तत्रापि कस्मिन् भागे कियत्परिमाणमित्यपेक्षायामाह— **सार्धव्रीहीति ।। अधरं सार्धव्रीहि** अधरोष्ठः सार्धव्रीहिपरिमाणः। **उत्तरं व्रीहिमात्रं** उत्तरोष्ठो व्रीहिपरिमितः। **तदूर्ध्वम्** उत्तरोष्ठापेक्षयोर्ध्वं नासिकान्तपर्यन्तं **अधरोपमं** सार्धव्रीहिमितम्। नासापेक्षयाऽधोभागेऽधरोष्ठोपम इत्यर्थः ।। २९ ।।

**मङ्गाली–** आस्यतिर्यक्परिमाणमाह– **चतुरङ्गुलमिति ।। आस्यं** वदनं **चतुरङ्गुलम्** चतुरङ्गुलतिर्यक्दैर्घ्योपेताम् । नवाङ्गुलपरिमितमुखे नासिकाधोभागस्य **'समा मानेन'**(तं.सा.३-२८)इत्यत्र त्र्यङ्गुलत्वमुक्तम् । तत्रावान्तरभागपरिमाणमाह– **सार्धेति ।। अधरं** अधरोष्टः **सार्धव्रीहि** सार्धैकव्रीहिपरिमाणः अर्धाङ्गुलपरिमित इति भावः । व्रीहित्रयपरिमाणस्यैकाङ्गुलपरिमाणत्वात् । **उत्तरमुत्तरोष्ठः व्रीहिमात्रं** व्रीहिपरिमितः **तदूर्ध्वमुत्तरोष्ठादूर्ध्वं** नासाया अधः अधरोष्ठोपमम् अर्धाङ्गुलिपरिमितमिति भावः ।। २९ ।।

अधरोष्ठाधोभागस्य वदनपार्श्वद्वयस्य च परिमाणकथनम्

**तं.सा. सार्धगुलमथ(धः) प्रोक्तमधरादध एव च ।**
**आस्यपार्श्वद्वयं प्रोक्तमाकर्णात्तु षडंगुलम् ।। ३० ।।**

**त.क.–** एवमुत्तरोष्ठस्योर्ध्वदेशपरिमाणमुक्त्वा अधारोष्ठस्याधोदेशपरिमाण-माह— **सार्धगुलमिति ।। अधः** अधारो भागः सार्धैकांगुलदीर्घः । कस्याधोभाग इति न ज्ञायत इत्यतः स्वयमेव विवृणोति— **अधरादध एव चेति ।।** अधरादध एव भागोऽत्र विवक्षितः, न तूत्तरोष्ठाधरभाग इत्येवार्थः । नन्वेवं नासिकाधोभागमारभ्य अधरोष्ठाधरभागान्तस्य प्रदेशस्य मध्ये नासिकाया अधः सार्धैकव्रीहिपरिमाणं, ततः उत्तरोष्ठं व्रीरिमात्रपरिमाणम्, अधरोष्ठं सार्धैकव्रीहिपरिमाणं, तदधः सार्धैकाङ्गुलपरिमाणमित्युक्तं स्यात् । तथा चाहत्य नासिकाधोभागः अर्धव्रीह्यूनत्र्यङ्गुलपरिमाणः स्यात् । पूर्वं चोक्तं 'नवांगुल-सन्मुखाम्'(३-३) इत्युक्त्वा 'नासिकाया अधस्ताच्च नासिका च रराटिका । समा मानेन...'(३-२७)इति नासिकाया अधस्त्र्यंगुलत्वम् । तथा च कथमनयोर्न विरोध इति चेत् । इहाऽस्यमवधीकृत्य तदुत्तराधरोष्ठतदुत्तराधरप्रदेशपरिणामस्योक्तत्वेऽपि उत्तराधरोष्ठसन्धिप्रदेशस्यानुक्तत्वेन तस्यार्धव्रीहिपरिमाणत्वासम्भवादविरोधो द्रष्टव्यः । आस्यमधिकृत्यैव कर्णान्तपार्श्वद्वयपरिमाणमाह— **आस्येति ।।** वदनस्य कर्णान्तं पार्श्वद्वयं षडंगुलपरिमाणं प्रोक्तमित्यर्थः ।। ३० ।।

**अ.सं.–** अथ **अधरात्** अधरोष्ठात् अधोभागः **सार्धाङ्गुलः**

तु नासिकोच्चत्वं विनैव नवाङ्गुलत्वमुच्यते। अतो न विरोध इति। अत्रापि नासिकोच्चत्वेन सह सार्धनवाङ्गुलत्वं कुतो नोक्तमिति चेत्। षण्णवत्यङ्गुलदैर्घ्यस्य शिरआदिपादपर्यन्तं ऋजुभूतावयवविभागेनोपपादनसमये नासिकोच्चत्वस्य तिर्यगुच्चत्वेनानुपयोगात् ।।। २५-२८ ।।

आस्यस्य तिर्यक्प्रमाणकथनं, अधरोष्ठोत्तरोष्ठयोः परिमाणकथनं च

**तं.सा.** **चतुरंगुलं तथैवाऽस्यं सार्धव्रीह्यधरं स्मृतम् ।**
**उत्तरं व्रीहिमात्रं तु तदूर्ध्वं चाधरोपमम् ।। २९ ।।**

**त.क.**– एवं प्रसाङ्गिकं समाप्यास्य तिर्यक्प्रमाणमाह— **चतुरंगुलमिति ।। तथा** वक्षोविस्तारादिरुक्तपरिमाणस्तथा, आस्यमपि चतुरंगुलपरिमितिर्यक्-प्रमाणम्। आस्यस्य पूर्वोत्तरभागयोर्दैर्घ्यमाह— **सार्धेति ।।** आस्याधरमोष्ठं सार्धव्रीहिमात्रप्रमाणकम्। तदूर्ध्वनासिकाया अधरो भागः अधरोष्ठप्रमाणः। सार्धैकव्रीहिपरिमित इति यावत् ।। २९ ।।

**अ.सं.**– आस्यतिर्यक्परिमाणमाह– **चतुरङ्गुलमिति ।। आस्यं** वदनम्। **चतुरङ्गुलं** चतुरङ्गुलतिर्यक्दैर्घ्योपेतम्। नवाङ्गुलपरिमितमुखे नासिकाधोभागस्य समा मानेनेत्यत्र त्र्यङ्गुलत्वं तूक्तम् । तत्रावान्तरभागपरिमाणमाह— **सार्धेति । अधरं** अधरोष्ठः **सार्धव्रीहि** सार्धैकव्रीहिपरिमाणः, अर्धाङ्गुलपरिमित इति भावः। व्रीहित्रयपरिमांणस्य एकाङ्गुलपरिमाणत्वात्। **उत्तरं** उत्तरोष्ठः **व्रीहिमात्रं** व्रीहिपरिमितः **तदूर्ध्वमु**त्तरोष्ठादूर्ध्वं नासायाः अधः **अधरोपमम् ।** अधरोष्ठोपममर्धाङ्गुलपरिमितमिति भावः ।। २९ ।।

**गु.दी.**– आस्यतिर्यक्परिमाणमाह— **चतुरङ्गुलमिति ।। आस्यं** आस्यदैर्घ्यं **चतुरङ्गुलम् ।** नासाधोऽङ्गुलित्रयपरिमाणमुक्तम्। तत्रापि कस्मिन् भागे कियत्परिमाणमित्यपेक्षायामाह— **सार्धव्रीहीति ।। अधरं सार्धव्रीहि** अधरोष्ठः सार्धव्रीहिपरिमाणः। **उत्तरं व्रीहिमात्रं** उत्तरोष्ठो व्रीहिपरिमितः। **तदूर्ध्वम्** उत्तरोष्ठापेक्षयोर्ध्वं नासिकान्तपर्यन्तं **अधरोपमं** सार्धव्रीहिमितम्। नासापेक्षयाऽधोभागेऽधरोष्ठोपम इत्यर्थः ।। २९ ।।

**मङ्गाली–** आस्यतिर्यक्परिमाणमाह– **चतुरङ्गुलमिति ।। आस्यं** वदनं **चतुरङ्गुलम्** चतुरङ्गुलतिर्यक्दैर्घ्योपेताम् । नवाङ्गुलपरिमितमुखे नासिकाधोभागस्य **'समा मानेन'**(तं.सा.३-२८)इत्यत्र त्र्यङ्गुलत्वमुक्तम् । तत्रावान्तरभागपरिमाणमाह– **सार्धेति ।। अधरं** अधरोष्टः **सार्धव्रीहि** सार्धैकव्रीहिपरिमाणः अर्धाङ्गुलपरिमित इति भावः । व्रीहित्रयपरिमाणस्यैकाङ्गुलपरिमाणत्वात् । **उत्तरमुत्तरोष्ठः व्रीहिमात्रं** व्रीहिपरिमितः **तदूर्ध्वमुत्तरोष्ठादूर्ध्वं** नासाया अधः अधरोष्ठोपमम् अर्धाङ्गुलिपरिमितमिति भावः ।। २९ ।।

अधरोष्ठाधोभागस्य वदनपार्श्वद्वयस्य च परिमाणकथनम्

**तं.सा. सार्धंगुलमथ(धः) प्रोक्तमधरादध एव च ।**
**आस्यपार्श्वद्वयं प्रोक्तमाकर्णात्तु षडंगुलम् ।। ३० ।।**

**त.क.–** एवमुत्तरोष्ठस्योर्ध्वदेशपरिमाणमुक्त्वा अधारोष्ठस्याधोदेशपरिमाणमाह— **सार्धंगुलमिति ।। अधः** अधारो भागः सार्धैकांगुलदीर्घः । कस्याधोभाग इति न ज्ञायत इत्यतः स्वयमेव विवृणोति— **अधरादध एव चेति ।।** अधरादध एव भागोऽत्र विवक्षितः, न तूत्तरोष्ठाधरभाग इत्येवार्थः । नन्वेवं नासिकाधोभागमारभ्य अधरोष्ठाधरभागान्तस्य प्रदेशस्य मध्ये नासिकाया अधः सार्धैकव्रीहिपरिमाणं, ततः उत्तरोष्ठं व्रीरिमात्रपरिमाणम्, अधरोष्ठं सार्धैकव्रीहिपरिमाणं, तदधः सार्धैकाङ्गुलपरिमाणमित्युक्तं स्यात् । तथा चाहत्य नासिकाधोभागः अर्धव्रीह्यूनत्र्यङ्गुलपरिमाणः स्यात् । पूर्वं चोक्तं 'नवांगुलसन्मुखाम्'(३-३) इत्युक्त्वा 'नासिकाया अधस्ताच्च नासिका च रराटिका । समा मानेन...'(३-२७)इति नासिकाया अधस्त्र्यंगुलत्वम् । तथा च कथमनयोर्न विरोध इति चेत् । इहाऽस्यमवधीकृत्य तदुत्तराधरोष्ठतदुत्तराधरप्रदेशपरिणामस्योक्तत्वेऽपि उत्तराधरोष्ठसन्धिप्रदेशस्यानुक्तत्वेन तस्यार्धव्रीहिपरिमाणत्वासम्भवादविरोधो द्रष्टव्यः । आस्यमधिकृत्यैव कर्णान्तपार्श्वद्वयपरिमाणमाह— **आस्येति ।।** वदनस्य कर्णान्तं पार्श्वद्वयं षडंगुलपरिमाणं प्रोक्तमित्यर्थः ।। ३० ।।

**अ.सं.– अथ अधरात्** अधरोष्ठात् अधोभागः **सार्धाङ्गुलः**

सार्धैकाङ्गुलपरिमितः। 'सार्धाङ्गुलमधः प्रोक्तम्' इति पाठे तु, अध इत्येतत् उत्तरोष्ठादध इति प्रतीतिं वारयितुं स्वयमेव विवृणोति– **अधरादध एवेति ॥** नन्वत्र नासिकाधोभागस्योक्तावान्तरपरिमाणगतेन क्रियमाणे अर्धव्रीहिन्यूनत्र्यङ्गुलत्वमेव लभ्यते तत्कथमिति चेत्, इत्थम्। उत्तरत्र 'दन्तैर्युक्तं च सस्मितं' इति मन्दस्मितयुक्तत्वस्य वक्ष्यमाणत्वात् सुस्मितत्वार्थमोष्ठयोर्मध्येऽर्धव्रीहिपरिमितं विवरं कर्त्तव्यम्। तेन नासिकाधः त्र्यङ्गुलत्वं सेत्स्यति। एतेनैतदपि परास्तम्। उत्तरत्र दन्तर्युक्तमित्यनुपपन्नम्। ओष्ठाच्छादितदन्तानां दर्शनायोग्यत्वेन कर्त्तुमशक्यत्वादिति। सुस्मितत्वार्थं विवरकरणे दन्तानां दर्शनसम्भवात्। आस्यस्य वदनस्य पार्श्वद्वयं **आकर्णात्** कर्णद्वयमारभ्य षडङ्गुलमेव प्रोक्तम् ॥ ३० ॥

**गु.दी.–** अधरादधः सार्धाङ्गुलं प्रोक्तमिति योजना। अधरोष्ठादधोभागः सार्धैकाङ्गुल इत्यर्थः। एवं हि त्रयस्यैकाङ्गुलत्वमिति परिभाषयाऽर्धव्रीहिन्यूनत्र्यङ्गुलत्वं सिद्धम्। उपलक्षणमेतत्। ओष्ठयोर्मध्ये मन्दस्मितमर्धव्रीहिपरिमितं ग्राह्यम्। तथा च नासाधोभागस्य त्र्यङ्गुलत्वसिद्धिरिति द्रष्टव्यम्। आस्यमारभ्य **आ कर्णात्** कर्णद्वयपरिमितम्। आस्यपार्श्वद्वयमिति यावत्। प्रत्येकं षडङ्गुलं प्रोक्तम् ॥ ३० ॥

**मङ्गली–** '**अधः** अधरात् अधरोष्ठादधोभागः **सार्धाङ्गुलः** सार्धैकाङ्गुलपरिमितः 'सार्धाङ्गुलमधः प्रोक्तम्' इति पाठे अध इत्येतदुत्तरोष्ठादध इति प्रतीतिं वारयितुं स्वयमेव विवृणोति– **अधरादध एवेति ॥** नन्वत्र नासिकाधोभागस्योक्तावान्तरपरिमाणगणने क्रियमाणेऽर्धव्रीहिन्यूनत्र्यङ्गुलत्वमेव लभ्यते। तत्कथमिति चेदित्थम्। उत्तरत्र 'दन्तैर्युक्तं च सुस्मितं'(३-४३) इति मन्दस्मितयुक्तत्वस्य वक्ष्यमाणत्वात्। सुस्मितत्वार्थमोष्ठयोर्मध्येऽर्धव्रीहिपरिमितं विवरं कर्तव्यं तेन नासिकाधः त्र्यङ्गुलत्वं सेत्स्यति। एतेनै तदपि परास्तम्। उत्तरत्र दन्तैर्युक्तमित्यनुपपन्नम्। ओष्ठाच्छादितदन्तानां दर्शनायोग्यत्वेन कर्तुमशक्यत्वादिति। सुस्मितत्वार्थं विवरकरणे दन्तानां दर्शनसम्भवात्। आस्यस्य वदनस्य पार्श्वद्वयम् **आकर्णात्** कर्णद्वयमारभ्य षडङ्गुलमेव प्रोक्तम् ॥ ३० ॥

नासिकामारभ्य चक्षुःपर्यन्तपरिमाणकथनम्

तं.सा. **सप्तांगुलं नासिकायाः पार्श्वमाकर्णतः स्मृतम् ।**
**सपादांगुलमुचा च नासिका परिकीर्तिता ।। ३१ ।।**

**अर्धांगुले पुटे तस्या मध्यं च समुदाहृतम् ।**
**नासिका व्रीहिविस्तारा चगुषी चांगुलित्रये ।। ३२ ।।**

**त.क.–** नासिकामारभ्य कर्णान्तपरिमाणमप्याह— **सप्तांगुलमिति ।।** नासिकायाः पार्श्वद्वयं कर्णपर्यन्तं सप्तांगुलमित्यर्थः । मुखान्तर्गतनासिकास्वरूपमवान्तरपरिमाणकथनेन स्पष्टयति— **सपादांगुलमिति ।।** पादसहितैकांगुलोन्नता नासिकेत्यर्थः । यद्यपि नासाया उच्चत्वेनैव मापनेऽर्धाङ्गुलाधिकं भवतीत्युक्तम् । तथापि पादोनैकांगुलपरिमाणस्य मुखान्तर्गतत्वेनार्धांगुलपरिमितभागस्य वहिर्निर्गतत्वाद्वहिर्निर्गताधिकभागमात्रस्य तत्रोक्तिः । इह तु मुखान्तः प्रविष्टपादोनैकङ्गुलपरिमितभागेन सह सपादैकांगुलोचत्वोक्तिरिति न विरोधः । **तस्या** नासिकायाः पुटद्वयमर्धांगुलविस्तृतम् । नासिकापुटयोः मध्यप्रदेशश्च अर्धांगुलविस्तृत इत्यर्थः । नासिकाग्रभागपरिमाणमाह— **नासिका व्रीहिविस्तारेति ।।** एकव्रीहिपरिमितं नासिकाग्रपृथुत्वमित्यर्थः । मुखान्तर्गतयोः चगुषोस्तिर्यक्प्रमाणमाह— **चक्षुषी चांक्षुलित्रये इति ।।** अंगुलित्रयपरिमिततिर्यक्प्रमाणं चक्षुर्द्वयमित्यर्थः ।।

**अ.सं.–** नासिकायाः **पार्श्वं** पार्श्वद्वयं **आकर्णतः** कर्णद्वयमारभ्य सप्ताङ्गुलं स्मृतम् । नासिका च **सपादाङ्गुलं** पादसहितैकाङ्गुलं **उच्चा** उन्नता । **तस्याः** नासिकायाः पुटे अर्धाङ्गुलोच्चे । **मध्यं** पुटयोर्मध्यं च अर्धाङ्गुलोच्छ्रितम् । नासिका व्रीहिविस्तारा । अग्रभाग इति शेषः । चक्षुषी **अङ्गुलित्रये** अङ्गुलपरिमितदैर्घ्ये ।।३१, ३२ ।।

**गु.दी.–** नासिकायाः **पार्श्वं** पर्श्वद्वयम् । **आकर्णतः** कर्णद्वयमारभ्य सप्ताङ्गुलं स्मृतम् । **नासिका** नासिकास्तम्भः । **तस्याः** नासिकायाः पुटे अर्धाङ्गुलोच्चे ।

सार्धैकाङ्गुलपरिमितः। 'सार्धाङ्गुलमधः प्रोक्तम्' इति पाठे तु, अध इत्येतत् उत्तरोष्ठादध इति प्रतीतिं वारयितुं स्वयमेव विवृणोति– **अधरादध एवेति ॥** नन्वत्र नासिकाधोभागस्योक्तावान्तरपरिमाणगतेन क्रियमाणे अर्धव्रीहिन्यूनत्र्यङ्गुलत्वमेव लभ्यते तत्कथमिति चेत्, इत्थम्। उत्तरत्र 'दन्तैर्युक्तं च सस्मितं' इति मन्दस्मितयुक्तत्वस्य वक्ष्यमाणत्वात् सुस्मितत्वार्थमोष्ठयोर्मध्येऽर्धव्रीहिपरिमितं विवरं कर्त्तव्यम् । तेन नासिकाधः त्र्यङ्गुलत्वं सेत्स्यति। एतेनैतदपि परास्तम्। उत्तरत्र दन्तर्युक्तमित्यनुपपन्नम्। ओष्ठाच्छादितदन्तानां दर्शनायोग्यत्वेन कर्त्तुमशक्यत्वादिति। सुस्मितत्वार्थं विवरकरणे दन्तानां दर्शनसम्भवात्। आस्यस्य वदनस्य पार्श्वद्वयं **आकर्णात्** कर्णद्वयमारभ्य षडङ्गुलमेव प्रोक्तम् ॥ ३० ॥

**गु.दी.–** अधरादधः सार्धाङ्गुलं प्रोक्तमिति योजना। अधरोष्ठादधोभागः सार्धैकाङ्गुल इत्यर्थः। एवं हि त्रयस्यैकाङ्गुलत्वमिति परिभाषयाऽर्धव्रीहिन्यूनत्र्यङ्गुलत्वं सिद्धम्। उपलक्षणमेतत्। ओष्ठयोर्मध्ये मन्दस्मितमर्धव्रीहिपरिमितं ग्राह्यम्। तथा च नासाधोभागस्य त्र्यङ्गुलत्वसिद्धिरिति द्रष्टव्यम्। आस्यमारभ्य **आ कर्णात्** कर्णद्वयपरिमितम्। आस्यपार्श्वद्वयमिति यावत्। प्रत्येकं षडङ्गुलं प्रोक्तम् ॥ ३० ॥

**मङ्गाली–** **अधः** अधरात् अधरोष्ठादधोभागः **सार्धाङ्गुलः** सार्धैकाङ्गुलपरिमितः 'सार्धाङ्गुलमधः प्रोक्तम्' इति पाठे अध इत्येतदुत्तरोष्ठादध इति प्रतीतिं वारयितुं स्वयमेव विवृणोति– **अधरादध एवेति ॥** नन्वत्र नासिकाधोभागस्योक्तावान्तरपरिमाणगणने क्रियमाणेऽर्धव्रीहिन्यूनत्र्यङ्गुलत्वमेव लभ्यते। तत्कथमिति चेदित्थम्। उत्तरत्र 'दन्तैर्युक्तं च सुस्मितं'(३-४३) इति मन्दस्मितयुक्तत्वस्य वक्ष्यमाणत्वात्। सुस्मितत्वार्थमोष्ठयोर्मध्येऽर्धव्रीहिपरिमितं विवरं कर्तव्यं तेन नासिकाधः त्र्यङ्गुलत्वं सेत्स्यति। एतेनै तदपि परास्तम्। उत्तरत्र दन्तैर्युक्तमित्यनुपपन्नम्। ओष्ठाच्छादितदन्तानां दर्शनायोग्यत्वेन कर्तुमशक्यत्वादिति। सुस्मितत्वार्थं विवरकरणे दन्तानां दर्शनसम्भवात्। आस्यस्य वदनस्य पार्श्वद्वयम् **आकर्णात्** कर्णद्वयमारभ्य षडङ्गुलमेव प्रोक्तम् ॥ ३० ॥

नासिकामारभ्य चक्षुःपर्यन्तपरिमाणकथनम्

तं.सा. **सप्तांगुलं नासिकायाः पार्श्वमाकर्णतः स्मृतम् ।**
**सपादांगुलमुच्चा च नासिका परिकीर्तिता ।। ३१ ।।**

**अर्धांगुले पुटे तस्या मध्यं च समुदाहृतम् ।**
**नासिका व्रीहिविस्तारा चगुषी चांगुलित्रये ।। ३२ ।।**

**त.क.–** नासिकामारभ्य कर्णान्तपरिमाणमप्याह— **सप्तांगुलमिति ।।** नासिकायाः पार्श्वद्वयं कर्णपर्यन्तं सप्तांगुलमित्यर्थः । मुखान्तर्गतनासिकास्वरूपमवान्तरपरिमाणकथनेन स्पष्टयति— **सपादांगुलमिति ।।** पादसहितैकांगुलोन्नता नासिकेत्यर्थः । यद्यपि नासाया उच्चत्वेनैव मापनेऽर्धाङ्गुलाधिकं भवतीत्युक्तम् । तथापि पादोनैकांगुलपरिमाणस्य मुखान्तर्गतत्वेनार्धांगुलपरिमितभागस्य वहिर्निर्गतत्वाद्वहिर्निर्गताधिकभागमात्रस्य तत्रोक्तिः । इह तु मुखान्तः प्रविष्टपादोनैकङ्गुलपरिमितभागेन सह सपादैकांगुलोच्चत्वोक्तिरिति न विरोधः । **तस्या** नासिकायाः पुटद्वयमर्धांगुलविस्तृतम् । नासिकापुटयोः मध्यप्रदेशश्च अर्धांगुलविस्तृत इत्यर्थः । नासिकाग्रभागपरिमाणमाह— **नासिका व्रीहिविस्तारेति ।।** एकव्रीहिपरिमितं नासिकाग्रपृथुत्वमित्यर्थः । मुखान्तर्गतयोः चगुषोस्तिर्यक्प्रमाणमाह— **चक्षुषी चांक्षुलित्रये इति ।।** अंगुलित्रयपरिमिततिर्यक्प्रमाणं चक्षुर्द्वयमित्यर्थः ।।

**अ.सं.–** नासिकायाः **पार्श्वं** पार्श्वद्वयं **आकर्णतः** कर्णद्वयमारभ्य सप्ताङ्गुलं स्मृतम् । नासिका च **सपादाङ्गुलं** पादसहितैकाङ्गुलं **उच्चा** उन्नता । **तस्याः** नासिकायाः पुटे अर्धाङ्गुलोच्चे । **मध्यं** पुटयोर्मध्यं च अर्धाङ्गुलोच्छ्रितम् । नासिका व्रीहिविस्तारा । अग्रभाग इति शेषः । चक्षुषी **अङ्गुलित्रये** अङ्गुलपरिमितदैर्घ्ये ।।३१, ३२ ।।

**गु.दी.–** नासिकायाः **पार्श्वं** पर्श्वद्वयम् । **आकर्णतः** कर्णद्वयमारभ्य सप्ताङ्गुलं स्मृतम् । **नासिका** नासिकास्तम्भः । **तस्याः** नासिकायाः पुटे अर्धाङ्गुलोच्चे ।

**मध्यं** पुटमध्यं चार्धाङ्गुलमिति वचनव्यत्ययेन सम्बध्यते। चगुषी **अङ्गुलित्रये** तत्परिमितदैर्घ्ये ।। ३१-३२ ।।

**मङ्गाली–** नासिकायाः **पार्श्वं** पार्श्वद्वयं **आकर्णतः** कर्णद्वयमारभ्य सप्ताङ्गुलं स्मृतम्। नासिका च **सपादाङ्गुलं** पादसहितैकाङ्गुलमुच्चं उच्चा उन्नता ।। **तस्याः** नासिकायाः पुटे अर्धाङ्गुलोच्चे। **मध्यं** पुटयोर्मध्यं च अर्धाङ्गुलोतम्। नासिका व्रीहिविस्तारा। अग्रभाग इति शेषः। चगुषी **अङ्गुलित्रये** त्र्यङ्गुलपरिमितदैर्घ्ये ।। ३१-३२ ।।

आपादमस्तकं प्रतिमायाः परिमाणविशेषकथनम् आयुधादिकथनं च

तं.सा. **अंगुलं चैव विस्तीर्णे फुल्लेऽर्धं च तदन्यथा ।**
**चतुरंगुलौ भ्रुवै चैव तथाऽर्धाङ्गुलविस्तृतौ ।। ३३ ।।**

**असंहतौ च निबिडौ तथा पक्ष्म सुनीलकम् ।**
**कर्णौ च त्र्यंगुलौ सार्धद्वयविस्तारसंयुतौ ।। ३४ ।।**

**सकुण्डलं तावदेव विवरं सम्प्रकीर्तितम् ।**
**तथा त्र्यंगुलविस्तारं लताभ्यां सह कथ्यते ।। ३५ ।।**

**कर्णपूरयुतौ कर्णावुत्पलाभ्यां च संयुतौ ।**
**नीलालकसहस्रेण युक्तं तन्मुखपङ्कजम् ।। ३६ ।।**

**ललाटं सुविशालं च तथा सार्धनवांगुलम् (लः) ।**
**विस्तारो मूर्ध्नि वृत्तं च शिरश्छत्राकृति स्मृतम् ।। ३७ ।।**

**दीर्घाश्च कुञ्चिताग्राश्च नीलाः केशा हरेर्मताः ।**
**मुखमानेन चैवोच्चं किरीटं केशवस्य हि ।। ३८ ।।**

**कुण्डले मकराकारे वक्षश्चैव सकौस्तुभम् ।**
**सश्रीवत्सं दक्षिणतः पीनं तुङ्गमुदाहृतम् ।। ३९ ।।**

**हारग्रैवेयसहितमुपवीतयुतं तथा ।**
**बाहवश्च सकेयूरकङ्कणाङ्गदमुद्रिकाः ॥ ४० ॥**

**समध्यबन्धं मध्यं च नितम्बे पीतमम्बरम् ।**
**काञ्चीगुणश्च पदयोर्नूपुरे चातिसुस्वने ॥ ४१ ॥**

**अंगुलीयानि च पदोः कृतिभिः साधु कारयेत् ।**
**सोत्तरीयं च चक्राद्यैरायुधैश्च समन्वितम् ॥ ४२ ॥**

**अनुन्नतैरविरलैर्दन्तैर्युक्तं च सुस्मितम् ।**
**समदृष्टियुतं कार्यं श्लक्ष्णं(हृद्यं) चैव मनोहरम् ॥ ४३ ॥**

**त.क.**– विस्तारे विकल्प(वैकल्पिक)परिमाणमाह— **अंगुलं चैवेति ॥ फुल्ले** विकसिते चगुषी क्रियेते चेत् तदेकांगुलमानं कर्तव्यमिति सम्बन्धः। प्रतिमायाः जडत्वात् फुल्लत्वं विवृणोति— **विस्तीर्णेति ॥ तदन्यथा** विस्तीर्णत्वाभावे परिमाणमर्धमंगुलं कर्तव्यमित्यर्थः। मानप्रमाणोन्मानादिकथनपूर्वकमापादमस्तकं तदुक्तिसौकर्याय सङ्कलय्य लक्षणविशेषानप्याह— **चतुरंगुलौ भ्रुवौ चैवेत्यादिना श्लक्ष्णं चैव मनोहरमित्यन्तेन ॥** चतुरंगुलौ इत्यादिलिङ्गव्यत्ययश्छान्दसः। भ्रूशब्दो वा पुलिङ्गः। भ्रुवोः तिर्यक् प्रमाणं चतुरंगुलम्। विस्तृतिस्त्व-र्धांगुलेत्यर्थः। चतथाशब्दौ परस्परसमुच्चये। एवशब्दः पक्षान्तरव्यावृत्त्यर्थः। **असंहतौ** अन्योन्यसम्बन्धरहितौ। **निबिडौ** चतुरंगुलपरिमितिमध्येऽवकाशरहितौ। एवंभूतौ भ्रवौ कुर्यादिति संबन्धः। **पक्ष्म** चक्षुःस्थानचर्मविशेषः। तच्च **सुनीलकं** नीलकेशयुक्तं कुर्यादित्यर्थः। तथाविधरेखाविशेषं कुर्यादिति भावः। एवमग्रेऽपि। त्र्यंगुलदीर्घौ सार्धद्वयांगुलतिर्यक्प्रमाणयुक्तौ कर्णौ च कुर्यात्। (सकुण्डलं कुण्डलाकारप्रदेशसहितं च कुर्यात्) तस्य कर्णस्य विवरं तु **तावदेव** सार्धद्व्यंगुलमेव सम्प्रकीर्तितम्। लताशब्देन कर्णमध्यस्थदीर्घाकारोन्नतप्रदेश उच्यते। स च कर्णविवरस्य दक्षिणतः उत्तरतश्चास्ति। ताभ्यां सहितयोः विस्तारः द्व्यंगुलः कथ्यते। **कर्णपूरेति** कर्णाभरणविशेष उच्यते। **उत्पलाभ्यामिति ॥**

कर्णद्वयाभिप्रायेण सहस्रशब्दो बहुत्वोपलक्षकः। ललाटं **सुविशालं** तीर्यग्विस्तारयुक्तम्। **मूर्ध्नि विस्तारः** शिरउपरिविस्तारस्तु सार्धनवांगुलः। शिरस्तु **छत्राकृति** वृत्तमिति पर्यवसितम्। कुञ्चितम् अग्रं येषां ते तथोक्ताः। किरीटे तु मुखमानेन नवांगुलेनोच्चमित्यर्थः। मकराकारे कुण्डले कर्णयोः कुर्यादिति सम्बन्धः। उपवीतयुतं तथा वक्षः कुर्यादित्यर्थः। केयूरकङ्कणाङ्गदमुद्रिकाः येषु वाहुषु ते तथोक्ताः। **मध्यमबन्धः** कट्याभरणविशेषः। **मध्यं** कटिः। काञ्चीगुणश्च नितम्बस्थितपीताम्बरे कर्तव्यः। सुस्वने नूपुरे पादयोश्च। **पदोरंगुलीयानि** पादांगुल्याभरणानि। **कृतिभिः** शिल्पिभिः। 'सोत्तरीयम्' इत्यादीनां 'विग्रहं कुर्यात्' इत्यध्याहृतेन सम्बन्धः ।। ३३-४३ ।।

**अ.सं– फुल्ले** विकसिते चगुषी। **अङ्गुलं** एकाङ्गुलं विस्तीर्णे, **तदन्यथा** विकसितत्वाभावे। अर्धाङ्गुल्यर्धं विस्तीर्णे इत्यर्थः। भ्रुवौ चतुरङ्गुलदीर्घौ। तथाऽर्धाङ्गुलविस्तृतौ। **असंहतौ** परस्परसम्बन्धरहितौ **निबिडौ** निबिडकेशौ च तथा। **पक्ष्म** अक्षिपक्ष्म सुनीलकं ज्ञेयम्। कर्णौ च **त्र्यङ्गुली** त्र्यङ्गुलदीर्घौ। **सार्धद्वयविस्तारसंयुतौ** सार्धद्व्यङ्गुलिवस्तीर्णौ।। **सकुण्डलमिति ।।** कुण्डलाकारः प्रदेशविशेषः कुण्डलमित्युच्यते। तेन सहितं **विवरं** कर्णविवरं **तावदेव** सार्धद्व्यङ्गुलदीर्घपरिमितमित्यर्थः। **तथा** सकुण्डलस्य कर्णविवरस्य **लताभ्यां** च्छिद्रदक्षिणोत्तरभागाभ्यां सह द्व्यङ्गुलविस्तारः। दक्षिणलता व्रीह्यर्धाङ्गुलविस्तारः। एवं च सार्धव्यङ्गुलविस्तृतत्वं कर्णस्य सिद्ध्यति। लताशब्देन कर्णमध्यस्थदीर्घाकारोन्नतप्रदेश उच्यते। द्विवचनं कर्णद्वयापेक्षयेत्यप्याहुः ।।

**कर्णपूरयुतौ** कर्णपूर इति कर्णाभरणविशेषः। उत्पलाभ्यां नीलाम्बुजाभ्यां संयुतौ। **तन्मुखपङ्कजं** तस्याः प्रतिमायाः मुखकमलम् **नीलालकसहस्रेण युतं** सहस्रनीलकुन्तलसहितं। ललाटं **सुविशालं** अत्यन्तविस्तीर्णं नवाङ्गुलमित्यर्थः। 'नवाङ्गुलं ललाटं तु विस्तरेण प्रकीर्तितम्' इति हयशीर्षात्। **मूर्ध्नि** प्रतिमाशिरसि विस्तारः पूर्वापरयोर्दक्षिणोत्तरयोश्च सार्धनवाङ्गुलः। 'नवाङ्गुलं' इति पाठे क्रियाविशेषणम्। शिरः **छत्राकृति** छत्राकारम्। **वृत्तं** वर्तुलम्। मध्यभागे उच्चमित्यर्थः ।।

हरेः **केशाः** कुलितमङ्गुलीयकवत् वर्तुलमग्रं येषां ते तथोक्ताः। नीलाः दीर्घाश्च। केशवस्य किरीटं मुखमानेनैवोच्चम् । नवाङ्गुलोच्छ्रितमिति भावः। कुण्डले कर्णयोरिति शेषः । **मकराकारे** मकरो जलजन्तुविशेषः। वक्षः **सकौस्तुभं** कौस्तुभमणिसहितम् । **दक्षिणतः** दक्षिणस्तनोर्ध्वभागे श्रीवत्ससहितं च। **पीनं** पुष्टं तुङ्गं च उन्नतं चोदाहृतम् ॥

**हारग्रैवेयसहितं** हारेण मुक्तावल्याः ग्रैवेयकेन ग्रीवाभूषणेन रुचकादिना च सहितम्। **उपवीतयुतं** यज्ञोपवीतयुक्तम्। **सकेयूरकङ्कणाङ्गदमुद्रिकाः** केयूरं बाहुमध्यभूषणम्। कङ्कणं मणिबन्धभूषणम्। अङ्गदं बहुमूलभूषणम्। मुद्रिकाः अङ्गुलिभूषणम्। एतैः सहिताः बाहव इत्यर्थः ॥

**मध्यमुदरमध्यम्। समध्यबन्धम्** मध्यबन्धेन सहितम्। मध्यबन्धो नाम नडकट्ट इत्यपभ्रष्टभाषा। **नितम्बे** कट्यां पीतमम्बरं काञ्चीगुणश्च पीताम्बरोपरीति ज्ञेयम्। **पादयोः** चरणयोः **सुस्वने नूपुरे** ध्वनन्मञ्जीरे ॥

**पदोः** पादयोः। **अङ्गुलीयानि** मुद्रिकाः **कृतिभिः** निपुणैः: शिल्पिभिः **साधु** सम्यक् कारयेत्। **सोत्तरीयं च** उत्तरीयवस्त्रसहितं च। **चक्राद्यैः** चक्रशङ्खगदापद्माख्यैरायुधैश्च समन्वितम् ॥

**अनुन्नतैः** अदीर्घैः **अविरलैः** परस्परसंहतैः दन्तैर्युक्तम्। **सुस्मितं** मन्दस्मितयुक्तम्। समदृष्टियुतं च। **श्लक्ष्णं** स्निग्धं च। मनोहरं प्रतिमाख्यं वस्त्विति शेषः। समदृष्टियुतमित्यनेन ऊर्ध्वदृष्ट्यादि व्यावर्तयति। तच्चोक्तं पञ्चरात्रे–

ऊर्ध्वदृष्टिमधोदृष्टिं तिर्यग्गूढदृष्टिं विवर्जयेत् ।
ऊर्ध्वदृष्ट्या वित्तनाशो ह्यधोदृष्ट्या कुलक्षयः ।
तिर्यक्दृष्ट्या द्वयोर्नाशः तस्माद्ग्राह्या समेक्षणा ॥ इति ।

नन्वत्रोक्तं षण्णवत्यङ्गुलत्वादि प्रतिमायाः लक्षणं न सम्भवति । कथम् ?

दशतालो दशमुखो ललाटत्रिंशकस्तथा ।
सार्धोन्नतश्चैव पुनः तिर्यक् दशशिरास्तथा ॥

पञ्चोनाः सप्तपादो यो नाशंक्यं तद्वचः क्वचित् ।
नवाङ्गुलमुखो यस्तु गले च चतुरङ्गुलः ।
चतुर्विंशाङ्गुलतनुः तद्वाक्यं देवपूजितम् ।।(भृ.भा.३-शाकल्यब्राह्मणम्)

इत्यादि बृहद्भाष्यविरोधात् । तत्र हि तालशब्दस्य सार्धनवाङ्गुलत्वमर्थः । अत्र 'साङ्गुलस्तु तलः सार्धनवाङ्गुल उदाहृतः'(३-२१) इति तलपरिमाणस्य सार्धनवाङ्गुलत्वोक्तेः । तलतालशब्दयोः पर्यायत्वात् । दशताल इत्यादेः दशमणिबन्धपरिमितकाय इत्यादिरर्थ इति भावबोधे तालशब्दस्य व्याख्याततत्वाच्च । तथा च समग्रकायस्य दशतालपरिमितत्वे पञ्चनवत्यङ्गुलत्वेन षण्णवत्यङ्गुलत्वालाभात् । तथा 'दशशिराः' इत्यनेनापि पञ्चनवत्यङ्गुलत्वस्यैव लाभात् । शिरोविस्तारस्यापि सार्धनवाङ्गुलत्वात् । तथा 'सार्धनवाङ्गुलम् । विस्तारो मूर्ध्नि' (३-३७) इति अत्रैवोक्तेः । तथा तत्र 'गले च चतुरङ्गुलः' इत्युक्तम् । अत्र तु 'सुवृत्तत्र्यङ्गुलग्रीवां'(३-३) इत्युच्यते । अतोऽपि विरोधादिति चेत् न । अल्पत्वेनाविवक्षयोपपत्तेः । पृष्ठभागे चतुरङ्गुलत्वम् । पुरोभागे त्र्यङ्गुलत्वमिति विषयभेदात् । यद्वा उभयोः ग्रन्थयोर्भिन्नविषयत्वात् । अत्रोक्तस्य विष्णुब्रह्मवाय्वाद्युत्तमपुरुषलक्षणत्वात् तत्रोक्तस्य तदतिरिक्तलक्षणत्वादिति ।। ३३-४३ ।।

**गु.दी.–** यदा **फुल्ले** विकसिते तदाऽङ्गुलविस्तृते । **तदन्यथा** फुल्लत्वाभावे । **अर्धम्** अर्धाङ्गुलं विस्तीर्णे । भ्रुवौ च **चतुरङ्गुलौ** चतुरङ्गुलदीर्घौ । भ्रूश्ब्दः पुल्लिङ्गे च वर्तते । **असंहतौ** मध्ये विच्छिन्नौ **निबिडौ** घनौ । **पक्ष्म सुनीलकं** सुतरां नीलमित्यर्थः । पक्ष्म **सुनीलकं** ज्ञेयमिति अन्ये ।।

कर्णौ **त्र्यङ्गुलौ** त्र्यङ्गुलदीर्घौ । **सकुण्डलं** कुण्डलसहितं **विवरं** कुण्डलप्रक्षेपाधिकरणं कर्णच्छिद्रमिति यावत् । **तावदेव** सार्धद्व्यङ्गुलपरिणाहमेव । अत्र कुण्डलशब्देन कुण्डलाकारकर्णशष्कुल्यधःप्रदेश एव विवक्षितः। तस्य सार्धद्व्यङ्गुलत्वमुपपन्नम् । तथा कर्णविर **लताभ्यां** कर्णरन्ध्रपार्श्वद्वयस्थत्वविशेषाभ्यां सह द्व्यङ्गुलविस्तारम् । **कर्णपूरं** कर्णालङ्कारविशेषः । **सुविशालं** शोभनं विशालं च ।

**मूर्ध्नि विस्तारः सार्धनवाङ्गुलः** ब्रह्मरन्ध्रमारभ्य चतुर्दिगु सार्धनवाङ्गुल इत्यर्थः। शिर आरभ्य तन्मध्यपर्यन्तं गणने एकत्र सार्धनवाङ्गुलम्। एवं पर्यक्भागचतुष्टयेऽपीति भावः। **'सार्धनवाङ्गुलं'** इति पाठे मूर्ध्नि सार्धनवाङ्गुलं यथा भवति तथा विस्तारः स्यादित्यर्थः। ननु 'सार्धोन्नतश्चैव पुनः पर्यग्दशशिरास्तथा'(बृ.भा. ३अध्याये शाकल्यब्राह्मणे)इति बृहद्भाष्ये 'दशशिराः' इति समग्रकायस्य दशशिरस्त्वोक्त्या पञ्चनवत्यङ्गुलत्वप्राप्त्या षण्णवत्यङ्गुलत्वव्याघात इति चेन्न, एकाङ्गुलपरिमाणस्याल्पस्याविवक्षया तद्ग्रन्थस्य प्रवृत्तेरिति सम्प्रदायात्। नवाङ्गुलं ललाटमिति वा सम्बन्धः। 'नवाङ्गुलं ललाटं तु विस्तारेण प्रकीर्तितम्' इति विष्णुतीर्थीयवचनात्। शिरश्छत्राकृति वृत्तं च। मध्यभागे उच्चमिति केचित्॥

हरेः केशा इति सम्बन्धः। केशवस्य किरीटं मुखमानेनोन्नतं कार्यम्। मुखमानं च नासाया उच्चत्वेन मापने सार्धनवाङ्गुलम्। अन्यथा नवाङ्गुलमिति प्रागुक्तमनुसन्धेयम्। वक्षः **दक्षिणतः** दक्षिणभागे श्रीवत्ससहितम्। **पीनं** पुष्टं तुङ्गं उन्नतं चोदाहृतम्। **हारैः** मुक्ताहारैः **ग्रैवेयैः** ग्रीवाभरणैश्च सहितम्। बाहवः केयूरादिसहिताः। केयूराङ्गदयोरवान्तरभेदो मानान्तरादवगन्तव्यः। भुजकीर्तिस्तु केयूरमङ्गदो बाहुभूषणमिति द्राविडाः। **मध्यबन्धेन** कटिबन्धेन सहितं मध्यं कटिप्रदेशः। काञ्चीगुणश्च नितम्बे। नूपुरे **कृतिभिः** कुशलैः शिल्पिभिः कारयेदिति सम्बन्धः। **अविरलैः** परस्परसन्दष्टैः। **समदृष्टियुतं** समानलोचनाभ्यां युक्तम्। अन्यथा दोषः कथितः पञ्चरात्रे—

ऊर्ध्वदृष्टिमधोदृष्टिं तिर्यग्दृष्टिं विवर्जयेत्।
ऊर्ध्वदृष्ट्या वित्तनाशो ह्यधोदृष्ट्या कुलक्षयः।
तिर्यग्दृष्ट्या द्वयोनाशः तस्माद्ग्राह्या समेक्षणा॥ इति।

**श्लक्ष्णं** हृद्यम्। 'हृद्यम्' इत्येव क्वचित्पाठः। **मनोहरं** दर्शनमात्रादेव मानसहारि। एतादृशं प्रतिमाशरीरं कारयेदित्यन्वयः।

इदं भगवत्पादोक्तं प्रतिमापरिमाणं देवालयगतप्रतिमाया एव। गेहे त्वन्यदेवेति द्रष्टव्यम्। यथोक्तं मात्स्ये—

अङ्गुष्ठपर्वमारभ्य वितस्तिर्यावदेव तु ।
गेहेषु प्रतिमा कार्या नाधिका तत्र शस्यते ।। इति ।

न चात्र गेहीयमूर्तेर्लक्षणानुक्तेर्न्यूनता स्यादिति वांच्यम् । स्वस्वाभिमतमूर्तिं प्रकल्प्य षण्णवतिधा विभज्याङ्गुलिं प्रकल्प्य तेन मुखादिकं कल्पयेत् इत्याशयादित्यादि द्रष्टव्यम् । **इति प्रतिमालक्षणप्रकरणम्** ।।३३-४३ ।।

**मङ्गाली– फुल्ले** विकसिते चगुषी **अङ्गुलं** एकाङ्गुलं विस्तीर्णे । **तदन्यथा** विकसितत्वाभावे । अर्धाङ्गुल्यर्धं विस्तीर्णे इत्यर्थः । भ्रुवौ चतुरङ्गुलदीर्घौ तथा अर्धाङ्गुलविस्तृतौ **असंहतौ** परस्परसंबन्धरहितौ **निबिडौ** निबिडकेशौ च । तथा **पक्ष्म** अक्षिपक्ष्म सुनीलकं ज्ञेयम् । कर्णौ च **त्र्यङ्गुलौ** त्र्यङ्गुलदीर्घौ **सार्धद्वयविस्तारसंयुतौ** सार्धव्यङ्गुलविस्तीर्णौ ।।

सकुण्डमिति कुण्डलाकारः प्रदेशविशेषः कुण्डलमित्युच्यते । तेन सहितं विवरं कर्णविवरम् । **तावदेव** सार्धव्यङ्गुलदीर्घपरिमितमित्यर्थः । तथा सकुण्डलस्य कर्णविवरस्य **लताभ्यां** छिद्रदक्षिणोत्तरभागाभ्यां सह व्यङ्गुलविस्तारः । दक्षिणलताबहिः अर्धाङ्गुलविस्तारः, एवं च सार्धव्यङ्गुलविस्तृतत्वं कर्णस्य सिद्ध्यति । अन्ये तु– लताशब्देन कर्णमध्यस्थदीर्घाकारोन्नतप्रदेश उच्यते । द्विवचनं कर्णद्वयापेक्षयेत्यप्याहुः ।।

**कर्णपूरयुतौ** कर्णपूर इति कर्णाभरणविशेषः । **उत्पलाभ्यां** नीलाम्बुजाभ्यां संयुतौ **तन्मुखपङ्कजं** तस्याः प्रतिमायाः मुखकमलं **नीलालकसहस्रेण युक्तं** सहस्रनीलकुन्तलसहितम् । ललाटं **सुविशालं** अत्यन्तविस्तीर्णं नवाङ्गुलमित्यर्थः । 'नवाङ्गुलं ललाटं तु विस्तारेण प्रकीर्तितम्' इति हयशीर्षात् । **मूर्ध्नि** प्रतिमाशिरसि विस्तारः पूर्वापरयोदक्षिणोत्तरयोश्च सार्धनवाङ्गुलः । 'नवाङ्गुलं' इति पाठे क्रियाविशेषणम् । **शिरच्छत्राकृति** च्छत्राकारं वृत्तं वर्तुलं मध्यभागे उच्चमित्यर्थः।।

हरेः **केशाः** कुञ्चितमङ्गुलीयकवत् वर्तुलमग्रं येषां ते तथोक्ताः नीलाःदीर्घाश्च । केशवस्य किरीटं मुखमानेनैवोच्चम् । नवाङ्गुलोच्छ्रितमिति भावः । कुण्डले

कर्णयोरिति शेषः । **मकराकारे** मकरो जलजन्तुविशेषः । **वक्षः सकौस्तुभम्** कौस्तुभमणिसहितं **दक्षिणतः** दक्षिणस्तनोर्ध्वभागे श्रीवत्ससहितं च **पीनं** पुष्टं **तुङ्गं** च उन्नतं चोदाहृतम् ।।

**हारग्रैवेयसहितं** हारेण मुक्तावल्या ग्रैवेयकेया ग्रीवाभूषणेन रुचिकादिना च सहितं । **उपवीतयुतं** यज्ञोपवीतयुक्तं । **सकेयूरकंकणाङ्गदमुद्रिकाः** केयूरं बाहुमध्यभूषणं, कंकणं मणिबन्धभूषणम् । अङ्गदं बाहुमूलभूषणं, मुद्रिकाः अङ्गुलीभूषणं एतैस्सहिताबाहव इत्यर्थः ।।

**मध्यं** उदरमध्यं **समध्यबन्धं** मध्यबन्धेन सहितं । मध्यबन्धो नाम नडकट्टु इत्यपभ्रष्टभाषा । **नितम्बे** कट्यां पीतमम्वरं काञ्चीगुणश्च पीताम्बरोपरीति ज्ञेयम् । **पदयो**श्चरणयोः **सुस्वने नूपुरे** ध्वनन्मञ्जिरे ।।

**पदोः** पादयोः **अङ्गुलीयानि** मुद्रिकाः **कृतिभि**र्निपुणैः शिल्पिभिः **साधु** सम्यक् कारयेत् । **सोत्तरीयं च** उत्तरीयवस्त्रसहितं च **चक्राद्यैः** चक्रशङ्खगदापद्माख्यैरायुधैश्च समन्वितम् ।।

**अनुन्नतैरदीर्घैः अविरलैः** परस्परसंहतैः दन्तैर्युक्तं **सुस्मितं** मन्दस्मितयुक्तम् । समदृष्टियुतं च **श्लक्ष्णं** स्निग्धं च मनोहरं प्रतिमाख्यं, वस्त्विति शेषः । 'समदृष्टियुतं' इत्यनेन ऊर्ध्वदृष्ट्यादि व्यावर्तयति । न चात्रोक्तषण्णवत्यङ्गुलत्वे 'दशतालो दशमुखः'(भृ.भा.३-७) इत्यादि बृहद्भाष्यविरोधः । अ(त)त्रैव 'गलस्तु तलः सार्धनवाङ्गुलः' इत्युक्तं । तलतालशब्दौ च पर्यायौ 'दशतालः' इत्यस्य दशमणिबन्धपरिमितकाय इत्यर्थ इति भावबोधे तालशब्दस्य व्याख्यानात् । तथा च समग्रकायस्य दशतालादिपरिमितत्वपञ्चनवत्यङ्गुलत्वस्यैव लाभादिति वाच्यम् । अल्पत्वेनाविवक्षयोपपत्तेः । 'गले च चतुरङ्गुलः'(३-३) इति बृहद्भाष्योक्तिरपि पृष्ठभागे चतुरङ्गुलत्वविवक्षयोपपन्नेति । 'सुवृत्तत्र्यङ्गुलग्रीवां'(३-३) इति पुरोभागविवक्षया प्रवृत्तया अत्रत्योक्त्या न विरुद्धेति मन्तव्यम् ।। ३३-४३ ।।

प्रतिमानिर्माणार्थं शिलापरीक्षापूर्वकं शिलानयनप्रकारकथनम्

**तं.सा. प्रतिमार्थं व्रजन् पञ्चध्वनिभिर्मङ्गलैर्युतः ।**
**गत्वा शुचिस्थलं चैव शिलां तत्र परीक्षयेत् ॥ ४४ ॥**

**त.क.–** प्रतिमालक्षणाकांक्षाया उत्कटत्वात् तदादौ निरूप्य तत्प्रकृतिशिलाद्यानयनादिप्रकारजिज्ञासायां सोतिकर्तव्यताकं तत्प्रकारं निरूपयति— **प्रतिमार्थं व्रजन्नित्यादिना प्रतिमां पिण्डिकां पीठम् इत्यतः प्राक्तनग्रन्थेन ॥ प्रतिमार्थं** प्रतिमाप्रकृतिभूतशिलाद्यानयनार्थम् । भेरीमुरजवीणातालवेणुजन्यैः पञ्चभिः ध्वनिभिः युतः । तृतीयाया अलुक् । शिलामिति प्रकृतिद्रव्याणां लोहादीनामुपलक्षणम् । तदुक्तं पञ्चरात्रे पाद्मे—

रत्नं लोहः शिला मृच्च दारु स्फटीकमेव च ।
षड् द्रव्याणि प्रकृतयो यन्मय्याः प्रतिमाः स्मृताः ॥

निर्दोषाश्शैलजास्सर्वाः सर्वकर्मफलप्रदाः ।
सुवर्णं रजतं ताम्रं त्रिविधं लोहमुच्यते ॥

चतुर्विधाः शिला ब्रह्मन् वर्णभेदैश्चतुर्विधैः ।
शुभ्रा शिला ब्राह्मणस्य क्षत्रियस्य तु पाटला ॥

वैश्यस्य पीता शूद्रस्य कृष्णा मुख्या यथोदिता ।
ब्राह्मणस्य चतस्रः स्युस्तिस्रो राज्ञो विशो द्वयी ॥ इत्यादि ।

प्रतिष्ठापक आचार्यः शिल्पिभिः शिलादीन् परीक्षयेदेवेति संबन्धः । तेन परीक्षाभावेऽनर्थं सूचयति ॥ ४४ ॥

**अ.सं.–** एवं प्रतिमालक्षणमुक्त्वा तत्र देवालये पूज्यशिलादिप्रतिमानिर्माणप्रकारमाह– **प्रतिमार्थमित्यादिना ॥ प्रतिमार्थं** प्रतिमानिर्माणयोग्यशिलाद्यानयनार्थमित्यर्थः । **व्रजन्** गच्छन् । पुरुषः पञ्चध्वनिभिः मङ्गलद्रव्यैश्च युतो भवेदिति शेषः । पञ्चध्वनयस्तु– दण्डाहतं भेर्यादि । कराहतं मुरजादि । नखाहतं वीणादि । परस्पराहतं तालादि । मुखसम्बन्धेन ध्वनयद्वेण्वादि इतीमानि पञ्चमहावाद्यानि । एतेषां घोषा इति । मङ्गलद्रव्याणि तु–

सुवर्णं रजतं दूर्वा हरिद्रा मधुसर्पिषी ।
अक्षताः सर्षपाश्चैव मङ्गलाः परिकार्तिताः ।।

इति प्रमाणोक्तानि। प्रतिमां कारयन् पुरुषः मङ्गलद्रव्याणि गृहीत्वा पञ्चमहावाद्यानि वादयन् प्रतिमाशिलार्थं गच्छेदिति भावः। ततः **शुचि** पवित्रं **स्थलं** पाषाणसमुदाययुक्तं देशम्। **गत्वा** प्राप्य। **तत्र** पाषाणसमुदाये शिलां परीक्षयेत्। शिल्पिभिरिति शेषः ।। ४४ ।।

**गु.दी.–** एवं प्रतिमालक्षणमुक्त्वेदानीं प्रतिमार्थं शिलापरीक्षापूर्वकं शिलानयनप्रकारमाह— **प्रतिमार्थमिति ।।** प्रतिमानिर्माणार्थं व्रजन् शिलानयनायेति शेषः। **पञ्चध्वनिभिः** मुखाहत-कराहत-नखाहत-दण्डाहत-परस्पराहतेति पञ्चवाद्यानि तेषां ध्वनिभिः **मङ्गलैः** दूर्वाङ्कुरादिभिर्युतः गच्छेदिति शेषः। गमनानन्तरभाविकार्यमाह— **गत्वेति ।। शुचि** पवित्रं **स्थलं** पर्वतादिकं गत्वा **तत्र** स्थले शिलां परीक्षयेत्। शिल्पिभिरिति शेषः। वर्णभेदेन शिलाभेदः पाद्मसंहितायाम्—

शिला चतुर्विधा ब्रह्मन्! वर्णभेदैर्द्विजादिभिः ।
शुभा शिला ब्राह्मणस्य क्षत्रियस्य तु पाटला ।
वैश्यस्य पीता शूद्रस्य कृष्णा मुख्या यथोदिता ।। इति ।।३९।।

**मङ्गाली–** एवं प्रतिमालक्षणमुक्त्वा तत्र देवालये पूज्यशिलादिप्रतिमानिर्माण-प्रकारमाह– **प्रतिमार्थमित्यादिना ।।** प्रतिमानिर्माणयोग्यशिलाद्यानयनार्थ-मित्यर्थः। **व्रजन्** गच्छन् पुरुषः पञ्चध्वनिभिर्मङ्गलद्रव्यैश्च युतो भवेदिति शेषः। पञ्चध्वनयस्तु– दण्डाहतं भेर्यादि, कराहतं मुरजादि, नखहतं वीणादि, परस्पराहतं तालादि, मुखसम्बन्धेन ध्वनयद्वेण्वादि इतीमानि पञ्चवाद्यानि । एतेषां घोषा इति। मङ्गलद्रव्याणि तु सुवर्णरजतहरिद्रादीनि। ततः **शुचि** पवित्रं **स्थलं** पाषाणसमुदाययुक्तं देशं **गत्वा** प्राप्य **तत्र** पाषाणसमुदाये शिलां परिक्षयेत्। शिल्पिभिरिति शेषः ।। ४४ ।।

शिलपरीक्षनन्तरकृत्यकथनम्

**तं.सा. ध्वनिभेदेन विज्ञाय शिलां गर्भवतीं त्यजेत् ।**
**मूलमन्त्रं जपन् विष्णुं ध्यायंस्तिष्ठेदुपोषितः ॥ ४५ ॥**

**त.क.**— परीक्षाप्रकारान्तरं सूचयन् प्रयोजनं च दर्शयति— **ध्वनिभेदेनेति ॥** कांस्यघण्डादिध्वनिभेदेनेयं शिला गर्भवती न भवति, इयं तु भवतीति, उपलक्षणं चैतत्, उष्णस्पर्शादिभेदेन च गर्भागर्भौ निश्चित्य गर्भवतीं त्यजेत् । अगर्भवतीं संगृह्णीयादित्यर्थः । शिलायाः गर्भवत्त्वं नाम अन्तर्गूढमत्स्यादिमत्त्वम् । एवं पुंस्त्वस्त्रीत्वनपुंसकत्वजातीश्च ध्वनिभेदेन विज्ञाय बिम्बाद्यर्थं संगृह्णीयदिति च ग्राह्यम् । यद्वक्ष्यति—

स्वरस्थूलत्वभेदेन पुंस्त्र्याद्या जातितः शिलाः ।
पुंशिलाः प्रतिमार्थं स्युः स्त्रीशिलाः पीठक्लृप्तये ॥ इति ।(तं.सा.३-५०)

तदेतत् प्रपञ्चितं पञ्चरात्रे—

ध्वनिभिश्च शिलायास्तु स्पर्शे चौष्ण्यमथापि वा ।
तासु गर्भाः स्फुटं सन्ति यत्नेनोत्पाटयेत्तु तान् ॥

पाटले मण्डले पांसून् पाटलाच्छ्वेतपङ्कजे ।
श्वेतपांसून् स्थितानन्तर्गर्भरूपेण सञ्चितान् ॥

निर्दिशेत् कपिले वर्णे स्निग्धे चक्रमवस्थितम् ।
गौलीं कपोते मञ्जिष्ठे वर्णे लोहितदर्दुरे ॥

शुकं पाण्डुरवर्णे तु रक्ते पीते तु कच्छपम् ।
कुसुम्भपीनवर्णे तु पीतवर्णभुवं (पीतं वर्षाभवं) स्थितम् ॥

शुद्धहेमनिभे वर्णे गर्भे गुद्रविहङ्गमम् ।
कालायससमे वर्णे गोधामन्तरवस्थिताम् ॥

गुलवर्णे तु पाषाणं खद्योतं मधुसन्निभे ।
सारङ्गसदृशे वर्णे वृश्चिकं खङ्गसन्निभे ॥

सलिलं शलभं नीले रूक्षे फेनकमेव च ।
मूषिकां कपिले कष्णे कृष्णाहिं शुकसन्निभे ।।

मत्स्यमेवंविधं गर्भे मण्डले वर्णभेदतः ।
बुधो निश्चिनुयात् सर्वमुद्धरेच्च प्रयत्नतः ।।

गर्भवद्दारुशिलया प्रतिमां कुरुते यदि ।
अज्ञानाद्वाऽथ लोभाद्वा यजमानस्त्वरान्वितः ।।

समूलघातकं हन्यात् स्वकुलं त्वात्मनोऽधिकम् ।
राजा राष्ट्रमवाचीयात् स्थापकश्च विनश्यति ।।

बिम्वं शीतलया कुर्याच्छिलया यदि सादरम् ।
देवस्य सन्निधिः साक्षात् सम्पच्च वरदो हरिः ।।

कांस्यघण्टाध्वनिप्रख्यः छेदने जायते ध्वनिः ।
शिरप्रदेशे मध्ये तु कांस्यध्वनिसमो भवेत् ।।

मूले तालध्वनिसमो यत्र स्यात् सा शिला पुमान् ।
न्यूनं तस्माद् ध्वनिः किञ्चिच्छिद्रतो यस्य सा रमा ।
शिला(स्त्रीशिला नादहीना) नादविहीना तु नपुंसकमुदाहृतम् ।। इत्यादि ।

शिलापरीक्षान्तरं कर्तव्यमाह— **मूलेति** ।। **मूलमन्त्रः** अष्टाक्षरमन्त्रः। रात्रौ तत्रैव तिष्ठेदिति शेषः ।। ४५ ।।

**अ.सं.**— तत्परीक्षाप्रकारं लेशतो दर्शयति— **ध्वनिभेदेनेति** ।।

ध्वनिश्च शिथिलो यासु स्पर्श उष्णस्तथाऽपि वा ।
तासु गर्भाः स्फुटं सन्ति यत्नेनोत्पाटयेत्तु ताः ।।

इत्यादिशिल्पशास्त्राभिज्ञः पुरुषः ध्वनिभेदेन शिथिलेन शब्दविशेषेण। उपलक्षणं चैतत् । उष्णस्पर्शादिभिश्च गर्भवतीं शिलां विज्ञाय तादृशीं शिलां परित्यजेत्। तच्चोक्तम्– 'गर्भवत्यः शिला वर्ज्याः गर्भाश्चन्तरवस्थिताः' इति। अन्तः अवस्थिताः शिलाद्यन्तः विद्यमानाः मण्डूकादयः पदार्थाः गर्भा इत्युच्यन्त इत्यर्थः ।

अथवा शिलां गर्भवतीं विज्ञाय गर्भं त्यजेदित्यर्थः । 'यत्नेनोत्पाटयेच्च तान्' इति पाद्मोक्तेः । सगर्भशिलापरित्यागः परीक्षाफलम् । परीक्षानन्तरं तत्र कर्त्तव्यमाह– **मूलेति** ।। **उपोषितः** उपवासं कुर्वन् विष्णुं ध्यायन् **मूलमन्त्रं** नारायणाष्टाक्षरं जपन् **तिष्ठेत्** रात्रौ तत्र वसेदित्यर्थः ।। ४५ ।।

**गु.दी.–** परीक्षानन्तरं कार्यमाह— **ध्वनीति** ।। **ध्वनिभेदेन** शिथिलशब्देन गर्भवतीं शिलां विज्ञाय तां गर्भवतीं शिलां त्यजेत् । गर्भवतीं शिलां विज्ञाय गर्भं त्यजेदिति वार्थः ।

ध्वनिश्च शिथिलो यासु स्पर्शे उष्णमथापि वा ।
तासु गर्भाः स्फुटं सन्ति यत्नेनोत्पाटयेच्च तान् ।।

इति पाद्मसंहितावचनात् ।

ध्वनिभेदेनेत्युपलक्षणम् । अन्यान्यपि गर्भपरीक्षाज्ञापकानि द्रष्टव्यानि । तथा हि विष्णुतीर्थीये पञ्चरात्रागमे—

वृक्षगर्भं शिलागर्भं मण्डलेन परीक्षयेत् ।
माञ्जिष्टवर्णके वृक्षे मण्डले च शिलोत्तमे ।।

मण्डूकं तत्र गर्भस्थं जानीयाच्च गुरूत्तमः ।
मण्डले मधुवर्णे च खद्योतं तत्र निर्दिशेत् ।।

पीते गोधां सिते सर्पं कुलीरं हरितालके ।
गुडवर्णे तु पाषाणं मण्डले सति निर्दिशेत् ।।

स्फटिकाभेऽनलं विद्यात् कपिले तत्र मूषकम् ।
भस्माभे सिकतां विद्याच्चित्रवर्णे तु वृश्चिकम् ।।

एवं गर्भाः समुद्दिष्टा मण्डलैरश्मवृक्षयोः ।
शिलायामथ वृक्षे वा मण्डलानि तु सन्ति चेत् ।।

तत्र गर्भपरीक्षार्थं गुरुर्लेपं प्रकल्पयेत् ।
ब्रह्माणिं वज्रपाणिं च शूलपाणिं च वैष्णवम् ।।

अजाक्षीरेण संयोज्य लेपयेदुपलं गुरुः ।
एकरात्र्युषितं कुर्यात् पाषाणं तद्विलेपितम् ।
क्लिन्नत्वं यदि तत्र स्यात् सगर्भं तं विदुर्बुधा ।। इत्यादि ।

शिलापरीक्षानन्तरं कर्तव्यमाह— **मूलेति ।।** शुभसूचनाद्यर्थमुपोषितः । विष्णुं ध्यायन् **मूलमन्त्रं** अष्टाक्षरं जपन् **तिष्ठेद्** वसेत् । रात्र्यामिति शेषः ।। ४५ ।।

**मङ्गाली–** परीक्षा प्रकारं लेशतो दर्शयति– **ध्वनिभेदेनेति ।।**

ध्वनिश्च शिथिलो यासु स्पर्श उष्णस्तथापि वा ।
तासु गर्भाः स्फुटं सन्ति यत्नेनोत्पाटयेत्तु तान् ।। इत्यादि ।

शल्पिशास्त्राभिज्ञेयः ध्वनिभेदेन शिथिलेन शब्दविशेषेण । उपलक्षणं चैतत्। उष्णस्पर्शादिभिश्च गर्भवर्ती शिलां विज्ञाय तादृशीं शिलां परित्यजेत् । परिक्षानन्तरं तत्र कर्तव्यमाह– **मूलेति ।। उपोषितः** उपवासं कुर्वन् । विष्णुं ध्यायन् **मूलमन्त्रं** नारायणाष्टाक्षरं जपन् **तिष्ठेत्** रात्रौ तत्र वसेदित्यर्थः ।। ४५ ।।

वार्क्षीप्रतिमायां विशेषकथनम्, बलिदानकथनं च

**तं.सा. वार्क्षी चेद्यज्ञवृक्षस्य सारेणैव तु कारयेत् ।**
**बलिदानं च संक्षेपविधानेनैव कथ्यते ।। ४६ ।।**

**त.क.–** शिलाप्रतिमाचिकीर्षायामेवं शिलापरीक्षा आवश्यकीत्युक्त्वा वार्क्षी प्रतिमा चिकीर्षिता चेत् तत्संग्रहणेऽपि परीक्षाऽस्तीत्याह— **वार्क्षी चेदिति ।।** यज्ञसाधनवृक्षस्य अन्तःसारेणैव कारयेत् प्रतिमां, न तु यस्य कस्यापि वृक्षस्य काष्ठामात्रेणेत्येवार्थः । तेन यज्ञसाधनत्वादिनिश्चयार्थं तत्रापि परीक्षा आवश्यकीति भावः । एतदप्युक्तम्—

चन्दनश्चागरूश्चैव खादिरो हरिचन्दनम् ।
केसरं खदिरश्चैव कुरवश्चासनस्तथा ।।

मधुको देवदारूश्च जातिर्बिल्वः शमी तथा ।
शागश्च पनसश्चैव कुटुम्वस्तिलकस्तथा ।।

नमेरुः फलिनी चैव सुरभी चम्पकस्तथा ।
शिंशुपा क्षीरिका सालः बीजकः कुरविन्दकः ।।

त्रिमिशश्चन्दनश्चूतस्तमालः सरलोऽर्जुनः ।
कुटजः करकेली च सप्तपर्णो मधुष्ठिलः ।।

वरूणो मनिलश्चैव पुंनागः खदिरस्तथा ।
राजवृक्षश्चेत्येते प्रतिमार्थमुदाहृताः ।।

सारवन्तो घनोपेतास्सर्वदोषविवर्जिताः ।
एतैः कार्या प्रतिकृतिर्नान्येन तु कदाचन ।।

वर्जनीयानपि तरूनभिधास्यामि तच्छृणु ।
स्वयं शुष्काश्च दग्धाश्च स्वयं भग्ना हतत्वचः ।।

वक्रा घूणाः क्षताश्चैव कोटराः पक्षिसेविताः ।
चण्डालाद्यधमैः शश्वत् सेविताः प्रतिलोमजैः ।।

निवासवृक्षश्चैत्यस्थः देवताधिष्ठितस्तथा ।
स्मशानस्थश्च मार्गस्थः देवालयसमीपगः ।।
कूपस्थश्च तटाकस्थो विक्रीतश्चैव वर्जयेत् ।

अत्र यथायोग्यं क्रियाध्याहारेण योज्यम् ।

वर्जितैस्तरुभिः कुर्यात् प्रतिमाश्चेत् प्रमादतः ।
कर्ता कारयिता चोभौ सान्ववायौ विनश्यतः ।। इत्यादि ।

एवं मृत्तिकामपि परीक्ष्य प्रतिमां कारयेदिति द्रष्टव्यम् । प्रतिमां कर्तुमिच्छेदिति वा अर्थः । अत्रापि 'मूलमन्त्रं जपन् विष्णुं ध्यायन् तिष्ठेदुपोषितः'(तं.सा.३-४७) इति ग्राह्यम् । मूलमन्त्रमष्टोत्तरशतं जपन् विष्णुं ध्यायन् हरये उपहारं दत्त्वा, 'प्राच्येभ्यो विष्णुभूतेभ्यः स्वाहा', 'दक्षिणेभ्यो विष्णुभूतेभ्यः स्वाहा' इत्यादि मन्त्रपूर्वकं यथा भवति तथा प्राच्याद्यखिलदिक्षु तद्रूपेभ्यो हर्यधिष्ठानेभ्यो दिग्देवताभ्यो बलिं हरेत् । चशब्दात् ब्राह्मणान् भोजयित्वा स्वयमुपोषितः रात्रौ स्वप्नादिकमपेक्ष्य तिष्ठेत् स्वपेदित्यन्वयः । ननु—

यजमानो गुरुश्चैव श्रद्धया परयाऽन्वितः ।
रथकारेण सहितः स्थपतीनां गणैः सह ।

ब्राह्मणान् भोजयित्वाऽदौ तैः स्वस्त्यादि वाच्य च ।
शिलासंग्रहणे देशे कारयेन्महतीं प्रपाम् । इत्युपक्रम्याङ्कुरार्पणमुक्त्वा—

'अष्टदिक्षु न्यसेत् कुम्भान् सूत्रवस्त्रविवेष्टितान्' इत्यादिना सविस्तरं कलशस्थापनमभिधाय, 'होमं कुर्यात् चतुर्दिक्षु कुण्डे वा मण्डलेऽपि वा' इति सविस्तरं होममभिधाय, 'तत्तन्मन्त्रैर्बलिं हव्यैभूतेभ्यो निक्षिपेद्गुरुः ।' इत्यादिना बलिदानमन्तेऽभिहितम् । अत्र चाङ्कुरार्पणकुम्भस्थापनहोमादिकमनुक्त्वैव बलिदानमुच्यते । यदि च बलिदानमात्रेणैव शिलादि संस्कृतं स्यात् तर्हि पञ्चरात्रादौ उक्तमङ्कुरार्पणविधानादिकं व्यर्थं स्यात् । अत एकदेशेन समग्रसंस्काराभावादिदमयुक्तम् । न चानुक्तस्यान्यतो ग्रहणमङ्गीक्रियत इति वाच्यम् । बलिदानस्यापि इहोक्तिर्न स्यादित्यत आह— **बलिदानं चेति ।।** चस्त्वर्थः । इत्थंभूतलक्षणे तृतीया । संक्षेपशब्दः शक्तिसंक्षेपवत्पुरुषपरः । तमपेक्ष्य विधानमाश्रित्य कथ्यते । पञ्चरात्रादौ शक्तिविस्तारमपेक्ष्यान्यत्कथ्यते ।

इदमुक्तं भवति । शक्ताशक्तभेदेन अधिकरिणो द्विविधाः। शक्तानपेक्ष्य पञ्चरात्रे बहून्युक्तानि। अस्माभिस्तु 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्न भवति' इति वक्ष्यमाणान्यायेनात्यावश्यकविष्णुध्यानादिकथनपूर्वकं वलिदानाद्यङ्गजातं संक्षिप्योच्यते ।। अस्य शास्त्रस्य संक्षिप्तशक्तिं प्रति प्रवृत्तत्वान्न विस्तरविरोधिता विस्तारशक्त्यधिकारिकपञ्चरात्रादिशास्त्रविरोधिता नास्तीति ।।

**अ.सं.**— वृक्षप्रतिमायां विशेषमाह । **वार्क्षी चेदिति** । वक्षेण प्रतिमा कार्या चेत् तर्हि इति शेषः । तु शब्द एवार्थः । **यज्ञवृक्षस्यैव** यज्ञयोग्यवृक्षस्यैव **सारेणैव** वृक्षान्तर्गतदृढभूतभागविशेषेणैव प्रतिमां कारयेत् । ते तु वृक्षाः शेखरे उक्ताः—

देवदारुः शमी बिल्वो मधु खदिरकस्तथा ।
अरिष्टो राजवृक्षश्च चन्दनोऽश्वत्थ इत्यमी ।
शस्तवृक्षाश्च तैर्देवं कुर्याद्वाऽन्यैश्च चोदितैः ।। इति ।

नमेरुः फलिनी चैव सुरभी चम्पकस्तथा ।
शिंशुपा क्षीरिका सालः बीजकः कुरविन्दकः ।।

त्रिमिशश्चन्दनश्चूतस्तमालः सरलोऽर्जुनः ।
कुटजः करकेली च सप्तपर्णो मधुष्ठिलः ।।

वरूणो मनिलश्चैव पुंनागः खदिरस्तथा ।
राजवृक्षश्चेत्येते प्रतिमार्थमुदाहृताः ।।

सारवन्तो घनोपेतास्सर्वदोषविवर्जिताः ।
एतैः कार्या प्रतिकृतिर्नान्येन तु कदाचन ।।

वर्जनीयानपि तरूनभिधास्यामि तच्छृणु ।
स्वयं शुष्काश्च दग्धाश्च स्वयं भग्ना हतत्वचः ।।

वक्रा घूणाः क्षताश्चैव कोटराः पक्षिसेविताः ।
चण्डालाद्यधमैः शश्वत् सेविताः प्रतिलोमजैः ।।

निवासवृक्षश्चैत्यस्थः देवताधिष्ठितस्तथा ।
स्मशानस्थश्च मार्गस्थः देवालयसमीपगः ।।
कूपस्थश्च तटाकस्थो विक्रीतश्चैव वर्जयेत् ।

अत्र यथायोग्यं क्रियाध्याहारेण योज्यम् ।

वर्जितैस्तरुभिः कुर्यात् प्रतिमाश्चेत् प्रमादतः ।
कर्ता कारयिता चोभौ सान्ववायौ विनश्यतः ।। इत्यादि ।

एवं मृत्तिकामपि परीक्ष्य प्रतिमां कारयेदिति द्रष्टव्यम् । प्रतिमां कर्तुमिच्छेदिति वा अर्थः । अत्रापि 'मूलमन्त्रं जपन् विष्णुं ध्यायन् तिष्ठेदुपोषितः'(तं.सा.३-४७) इति ग्रह्याम् । मूलमन्त्रमष्टोत्तरशतं जपन् विष्णुं ध्यायन् हरये उपहारं दत्त्वा, 'प्राच्येभ्यो विष्णुभूतेभ्यः स्वाहा', 'दक्षिणेभ्यो विष्णुभूतेभ्यः स्वाहा' इत्यादि मन्त्रपूर्वकं यथा भवति तथा प्राच्याद्यखिलदिक्षु तद्रूपेभ्यो हर्यधिष्ठानेभ्यो दिग्देवताभ्यो वलिं हरेत् । चशब्दात् ब्राह्मणान् भोजयित्वा स्वयमुपोषितः रात्रौ स्वप्नादिकमपेक्ष्य तिष्ठेत् स्वपेदित्यन्वयः । ननु—

यजमानो गुरुश्चैव श्रद्धया परयाऽन्वितः ।
रथकारेण सहितः स्थपतीनां गणैः सह ।

ब्राह्मणान् भोजयित्वाऽदौ तैः स्वस्त्यादि वाच्य च ।
शिलासंग्रहणे देशे कारयेन्महतीं प्रपाम् । इत्युपक्रम्याङ्कुरार्पणमुक्त्वा—

'अष्टदिक्षु न्यसेत् कुम्भान् सूत्रवस्त्रविवेष्टितान्' इत्यादिना सविस्तरं कलशस्थापनमभिधाय, 'होमं कुर्यात् चतुर्दिक्षु कुण्डे वा मण्डलेऽपि वा' इति सविस्तरं होमममभिधाय, 'तत्तन्मन्त्रैर्बलिं हव्यैभूतेभ्यो निक्षिपेद्गुरुः ।' इत्यादिना बलिदानमन्तेऽभिहितम् । अत्र चाङ्कुरार्पणकुम्भस्थापनहोमादिकमनुक्त्वैव बलिदानमुच्यते । यदि च बलिदानमात्रेणैव शिलादि संस्कृतं स्यात् तर्हि पञ्चरात्रादौ उक्तमङ्कुरार्पणविधानादिकं व्यर्थं स्यात् । अत एकदेशेन समग्रसंस्काराभावादिदमयुक्तम् । न चानुक्तस्यान्यतो ग्रहणमङ्गीक्रियत इति वाच्यम् । बलिदानस्यापि इहोक्तिर्न स्यादित्यत आह— **बलिदानं चेति ।।** चस्त्वर्थः । इत्थंभूतलक्षणे तृतीया । संक्षेपशब्दः शक्तिसंक्षेपवत्पुरुषपरः । तमपेक्ष्य विधानमाश्रित्य कथ्यते । पञ्चरात्रादौ शक्तिविस्तारमपेक्ष्यान्यत्कथ्यते ।

इदमुक्तं भवति । शक्ताशक्तभेदेन अधिकरिणो द्विविधाः। शक्तानपेक्ष्य पञ्चरात्रे बहून्युक्तानि। अस्माभिस्तु 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्न भवति' इति वक्ष्यमाणान्यायेनात्यावश्यकविष्णुध्यानादिकथनपूर्वकं वलिदानाद्यङ्गजातं संक्षिप्योच्यते ।। अस्य शास्त्रस्य संक्षिप्तशक्तिं प्रति प्रवृत्तत्वान्न विस्तरविरोधिता विस्तारशक्त्यधिकारिकपञ्चरात्रादिशास्त्रविरोधिता नास्तीति ।।

**अ.सं.–** वृक्षप्रतिमायां विशेषमाह । **वार्क्षी चेदिति** । वक्षेण प्रतिमा कार्या चेत् तर्हि इति शेषः । तु शब्द एवार्थः । **यज्ञवृक्षस्यैव** यज्ञयोग्यवृक्षस्यैव **सारेणैव** वृक्षान्तर्गतदृढभूतभागविशेषेणैव प्रतिमां कारयेत् । ते तु वृक्षाः शेखरे उक्ताः–

देवदारुः शमी बिल्वो मधु खदिरकस्तथा ।
अरिष्टो राजवृक्षश्च चन्दनोऽश्वत्थ इत्यमी ।
शस्तवृक्षाश्च तैर्देवं कुर्याद्वाऽन्यैश्च चोदितैः ।। इति ।

शिलाकाष्ठोद्धारार्थं पूर्वं बलिदानं कार्यमिति भावेन तद्विधानं वक्तुं प्रतिजानीते। **बलिदानमिति।** बलिदानविधिः **संक्षेपविधोनेन** संक्षेपप्रकारेणो-च्यत इत्यर्थः

**गु.दी–** वार्क्ष्यां मूर्तौ विशेषमाह– **वार्क्षी चेदिति।।** वृक्षमयी चेत्प्रतिमा प्रतिष्ठाप्या तदा तु फलविशेषकामनायां, **यज्ञवृक्षस्येति** निर्धारणे षष्ठी एकवचनं समुदायापेक्षं, यज्ञसाधनस्य चन्दनागरुब्रह्मवृक्षशम्युदम्बराश्वत्थादेर्वृक्षस्य मध्ये सारेणैव कारयेत्। शिल्पिभिरिति शेषः। तथा हि वृक्षभेदेन फलभेदः पाद्मसंहितायाम्–

द्रुमजातिप्रतिकृतिः सा पूज्या कामिनां भवेत्।
प्रतिमा चन्दनमयी पूजिता श्रियमावहेत्।।

प्रतिमा चागरुमयी भुक्तिमुक्तिफलप्रदा।
ब्रह्मवर्चसकामेन ब्रह्मवृक्षसमुद्भवा।।

शमीप्रतिकृतिः स्वर्गं नयेत् सत्पुरुषं यथा।
अन्नाद्यकामैः प्रतिमा पूज्योदम्बरदारुजा।।

अश्वत्थनिर्मिता पूज्या राज्यकामेन धामनि।
न्यग्रोधनिर्मितं बिम्बं वंशविच्छेदकारणम्।। इति।।

शिलाद्युद्धारात्पूर्वं बलिदानं कार्यमिति भावेनाह— **बलिदानं चेति।। ४६।।**

**मङ्गाली–** वृक्षप्रतिमायां विशेषमाह– **वार्क्षी चेदिति।।** वृक्षेण प्रतिमा कार्या चेत्। तर्हीति शेषः। तुशब्द एवार्थः। **यज्ञवृक्षस्यैव** यज्ञयोग्यवृक्षस्यैव **सारेणैव** वृक्षान्तर्गतदृढभूतभागविशेषेणैव प्रतिमां कारयेत्। ते तु वृक्षाः शेखरे उक्ताः–

देवदारुः शमी बिल्वो मधुकः खादिरस्तथा।
अरिष्टो राजवृक्षश्च चन्दनोश्वत्थ इत्यमी।
शस्तवृक्षाश्च तैर्देवं कुर्याद्वाऽन्यैश्च चोदितैः।। इति।

शिलाद्युद्धारार्थं पूर्वं बलिदानं कार्यमिति भावेन तद्विधानं वक्तुं प्रतिजानीते– **बलिदानमिति।।** बलिदानविधिः **सङ्क्षेपविधानेन** सङ्क्षेपप्रकारेणोच्यत इत्यर्थः

।। ४६ ।।

तन्त्रसारसङ्ग्रहग्रन्थस्य संक्षिप्तशास्त्रत्वात् विस्तृतग्रन्थान्तरविरोधपरिहारः तथा विष्णुपार्षदेभ्यो बलिदानकथनं, प्रतिमा-पिण्डिक-पीठानां निर्माणे शिलाविशेषकथनं च

**त.सा. अस्य संक्षेपशास्त्रत्वान्न विस्तरविरोधिता ।**
**दत्त्वोपहारं हरये तद्भूतेभ्यो बलिं हरेत् ।। ४७ ।।**

**प्राच्येभ्यो विष्णुभूतेभ्य इत्याद्यखिलदिक्षु च ।**
**आदाय विष्णुभूतेभ्यो लोकपेभ्यस्तथा हरेः ।। ४८ ।।**

**अनुज्ञामुद्धरेद्वृक्षं शिलां च प्रतिमाकृते ।**
**प्रतिमां पिण्डिकां पीठं शिलाभिस्तु त्रिजातिभिः ।। ४९ ।।**

**त.क–** अत्र प्रातः कर्तव्यमाह— **आदायेति** ।। लोकपालदिभ्योऽनुज्ञाग्रहणं नाम तदनुग्रहप्राप्तशुभसूचकस्वप्नशकुनादिप्राप्तिरेव । उक्तं चैततत्—

वाद्याद्यैर्ब्रह्मघोषैश्च सर्वतो घोषयन्निशि ।
उपोष्य दर्भशय्यायां शुचिर्नियतमानसः ।
जपेदष्टोत्तरशतं स्वप्नाधिपतिमात्मवान् ।।

स्वप्नाधिपतिं विष्णुं स्मरन् जपेत् इत्यन्वयः ।

स्वप्ने स्वप्ने ततः शैलं यदि पश्येत्समुज्ज्वलम् ।
प्रातरेव शिला ग्राह्या शान्तिं कुर्याददर्शने ।।

दुर्दर्शने वा पूर्वोक्तदुर्निमित्तोदये तथा ।
शिलां मुहूर्ते सम्पश्येच्छोभने दैशिकोत्तमे ।। इत्यादि ।

प्रतिमाकृते प्रतिमां कर्तुं वृक्षं शिलां वा उद्धरेत् पातयेदित्यर्थः । एतदप्युक्तम्—

पर्वतेषु प्रसिद्धेषु गृह्णीयात् प्रतिमाशिलाम् ।
भूगतां वा शिलां शस्तां निन्दितां न कदाचन ।।

या पुष्पवनसङ्कीर्णा जलाशयसमावृता ।

सा भूमिर्वारुणी ज्ञेया तत्रस्था कामदा शिला ।।

तोयमुत्तरतो यस्याः क्षेत्रे दक्षिणतो महत् ।
प्रत्यक्च क्षीरिणो वृक्षाः सा माहेन्द्री क्षमा मता ।।

तत्रस्था पुष्टिदा नित्या शिला बहुमता तदा ।
वर्ज्यावर्ज्यं विदित्वैवं गुणदोषौ निरूप्य च ।।

देशभेदांश्च भूभेदान् ज्ञात्वा लिङ्गादिभिस्तदा ।
सितादिवर्णभेदांश्च गृह्णीयात् शुभदां शिलाम् ।। इत्यादिना ।

अत्र 'प्रतिमाकृते'(तं.सा.३-४९) इति सामान्योक्त्या रमादिस्त्रीप्रतिमानां परिवारदेवता-प्रतिमानां च निर्माणार्थं शिलामुद्धरेदिति लभ्यते ।

तस्मिन्नेव क्षणे ग्राह्याः परिवारशिलाः शुभाः ।
शिलासंग्रहणं तेषां कार्यं मन्त्रैर्यथाक्रमम् ।। इति वचनात् ।

गत्वा शुचिस्थलं तत्र शिलां चैव परीक्षयेत् । (तं.सा.३-४४)

इति शिलाशब्देनोपक्रम्य 'उद्धरेद्वृक्षं शिलां वा प्रतिमाकृते'(तं.सा.३-४९) इति वृक्षप्राधान्येन उपसंहरता

हुत्वा व्याहृतिभिः पश्चादुपतिष्ठेत भूरूहम् ।
कर्मणा पूर्ववृत्तेन स्थावराकारमाश्रितम् ।।

वृणोमि विष्णोः पूजार्थे सर्वसम्पत्करं तव ।
स्थावरत्वादितो गच्छ दिव्यरूपमनुत्तमम् ।।

भुंक्ष्व भोगाश्च विपुलान् वासुदेवप्रसादजान् ।
हिनस्मि नाहं त्वा वृक्ष किन्तु मुञ्चामि जन्मतः ।
इत्युपस्थानमन्त्रेण रक्षासूत्रेण वेष्टयेत् ।।

इत्यादीतिकर्तव्यताविशेषः वृक्षच्छेदनेषूच्यते । अत्र प्रतिमां कर्तुमुद्धृतां शिलां रथकारादिभिः पूर्वोक्तलक्षणां प्रतिमां कारयेदिति शेषः । एतदप्याह—

शिलां गृहीत्वा तां सम्यगारोप्य शकटादिषु ।

नीत्वा धाम्नि स्थपतयो रथकारमतानुगाः ।।

कुर्युरर्चां यथाशास्त्रचोदितां लक्षणैर्युताम् ।

ध्वनिभेदेन विज्ञाय शिलाम्....।

इत्यत्र स्त्र्यादिशिलाज्ञानमावश्यकमित्युक्तम्। तस्योपयोगं प्रयोगाद्दर्शयति— **प्रतिमां पिण्डिकामिति सार्धश्लोकेन ।।** तिस्रः स्त्रीत्वादयो जातयो यासां ताभिः शिलाभिः प्रतिमां पिण्डिकां पीठं च कुर्यादिति शेषः ।। ४७-४९ ।।

**अ.सं.–** नन्वेवं तर्हि बलिदानप्रतिपादकविस्तृतग्रन्थविरोधः। तत्रोक्तस्य विस्तरप्रकारस्यात्रानुक्तत्वादित्यत आह– **अस्येति। अस्य** ग्रन्थस्य **संक्षेपशास्त्रत्वात्** संक्षेपेण सर्वविधिप्रतिपादकत्वात् यावतः अननुष्ठाने कर्मसिद्धिर्न भवति तावतः समस्तस्यापि प्रतिपादकत्वादिति यावत्। **विस्तरविरोधिता** विस्तरेण ग्रन्थेन विरोधो नेत्यर्थः। अत्रोक्तं संक्षिप्तप्रकारेणैव कर्मपूर्तेर्जायमानत्वात् विस्तरेणानुक्तिर्न दोषायेति भावः। प्रतिज्ञातं बलिदानप्रकारमाह– **दत्वेति ।।** हरये मूलमन्त्रेण **उपहारं** नैवेद्यं दत्वा **तद्भूतेभ्यः** विष्णुभूतेभ्यः कुमुदादिविष्णुपार्षदेभ्यो प्राच्येभ्यः विष्णुभूतेभ्यः आदिपदेन दाक्षिणेभ्यो विष्णुभूतेभ्यः इत्यादिभिः एवमाकारकैरष्टभिर्मन्त्रैः चशब्दगृहीतेभ्यः इन्द्रादिलोकपालेभ्यश्च **अखिलदिक्षु** शिलादेः परितः पूर्वाद्यष्टदिक्षु बलिं **हरेत्** दद्यादित्यर्थः। तदुक्तं च–

कुमुदादींस्तु संस्थाप्य पूजयित्वा बलिं हरेत् ।

कुमुदं कुमुदाक्षं च पुण्डरीकं च वामनम् ।

शङ्कुकर्णं स्वर्णनेत्रं सुमुखं सुप्रतिष्ठितम् ।। इति । तथा–

.............पश्चात्तु दिक्पतीन् ।

इन्द्रादीनर्चयित्वा तु बलिशेषं विनिक्षिपेत् ।। इति ।

बलिदानानन्तरकृत्यमाह– **आदायेति ।।** हरेः सकाशात् विष्णुभूतेभ्यः तथा लोकपालेभ्यश्च **अनुज्ञामादाय** स्वीकृत्य वृक्षं शिलां वा **प्रतिमाकृते** प्रतिमानिर्माणार्थं **उद्धरेत्** वृक्षं च्छिन्यात्। शिलामुत्पाटयेदित्यर्थः। तदुक्तम्–

प्रातस्तुष्टो गुरुः शिल्पी तत्रस्थामधिदैवताम् ।
सम्प्रार्थ्य च विसृज्याथ च्छिन्द्याद् वृक्षं शिलां तु वा ।। इति ।

शिलाविशेषेण प्रतिमादिकं कार्यमित्याह– **प्रतिमामिति ।। त्रिजातिभिः** स्त्रीपुंनपुंसकजातिभिः शिलाभिः प्रतिमादिकं कुर्यादिति शेषः । पीठस्थापनार्थं पीठाधोभागे या शिला सा पिण्डकेत्युच्यते । प्रतिमायाः आधारभूतः उलूखलाकारशिलाविशेषः पिण्डकेत्युचयते इत्युप्याहुः ।। ४७-४९ ।।

**गु.दी.–** नन्वेवं ग्रन्थान्तरविरोधः स्यात्तेषां तत्र विधानान्तरस्य प्रतिपादितत्वादित्यत आह— **अस्येति ।।** सङ्क्षेपेण बलिदानेऽयं प्रकारो विस्तरेण बलिदाने प्रकारान्तरमिति भावः **।। दत्वेति ।।** पुरतो मूलमन्त्रेण चेति शेषः । उपहारं हरये दत्वा **तद्भूतेभ्यो** विष्णुपार्षदेभ्यः कुमुदकुमुदाक्षादिभ्यः **हरेत्** दद्यात् । भूतबलिदाने मन्त्रमाह– **प्राच्येभ्य इति ।।** 'प्राच्येभ्यो विष्णुभूतेभ्योऽयं बलिर्नमः' । आदिशब्देन 'आग्नेयेभ्यो विष्णुभूतेभ्योऽयं बलिर्नमः' इत्यादिमन्त्रेण **अखिलदिक्षु** अष्टदिक्षु । यथोक्तं विष्णुतीर्थीये—

कुमुदं कुमुदाक्षं च पुण्डरीकं च वामनम् ।
शङ्कुकर्णं स्वर्णनेत्रं सुमुखं सुप्रतिष्ठितम् ।
पूजयेन्नृत्यगीताद्यैर्बलिदानेन वै बुधः ।। इत्यादि ।

लोकपेभ्यो हरेश्चानुज्ञामादायेति सम्बन्धः । स्वप्नादावनुज्ञां प्राप्य वृक्षं शिलां वा **प्रतिमाकृते** प्रतिमार्थमुद्धरेत् । केचित्— इन्द्रादिभ्यो बलिदानं विधत्ते— **प्राच्येभ्य इति ।।** विष्णुभूतेभ्यः प्राच्यादिदिक्पेभ्य इन्द्रादिभ्यो बलिं हरेत् । दिक्पाश्चोक्ताः षट्प्रश्नोपनिषद्भाष्ये—

प्राच्याः प्राणास्तथेन्द्राद्याः दक्षिणाश्च यमादयः ।
प्रतीच्या वरुणाद्यास्तु सोमाद्याश्चोत्तराः स्मृताः ।।

शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ ।
सभार्याः कोणपैः सार्धं चत्वारो दिशि दिश्यपि ।। (ष.प्र.भा.१-५)

इत्याहुः ।।४७-४९।।

शिलाविशेषेण कृत्यमाह— **प्रतिमामिति ।। त्रिजातिभिः** पुंनपुंसकस्त्रीत्व-जातियुक्ताभिः क्रमात्प्रतिमादिकं कुर्यादिति शेषः । पीठाधःस्थितशिला **पिण्डिके**त्युच्यते । प्रतिमायाः आधारभूतः उलूखलाकारशिलाविशेषः पिण्डकेत्यप्याहुः ।। ४७-४९ ।।

**मङ्गाली—** नन्वेवं तर्हि बलिदानप्रतिपादकविस्तृतग्रन्थविरोधः । तत्रोक्तस्य विस्तरप्रकारस्यात्रानुक्तत्वादित्यत आह– **अस्येति ।। अस्य** ग्रन्थस्य **संक्षेपशास्त्रत्वात्** संक्षेपेण सर्वविधिप्रतिपादकत्वात् । यावतो ह्यननुष्ठाने कर्मसिद्धिर्न भवति तावतः समस्तस्यापि प्रतिपादकत्वादिति यावत् । **विस्तरविरोधिता** विस्तरेण ग्रन्थेन विरोधो नेत्यर्थः । प्रतिज्ञातं बलिदानप्रकारमाह– **दत्वेति ।।** हरये मूलमन्त्रेण **उपहारं** नैवेद्यं दत्वा । **तद्भूतेभ्यः** विष्णुभूतेभ्यः कुमुदादिविष्णुपार्षदेभ्यः प्राच्येभ्यो विष्णुभूतेभ्यः आदिपदेन दाक्षिणेभ्यो विष्णुभूतेभ्य इत्यादिभिरेवमाकारकैरष्टभिर्मन्त्रैः चशब्दगृहीतेभ्य इन्द्रादिलोकपालेभ्यश्च **अखिलदिक्षु** शिलादेः परितः पूर्वाद्यष्टदिक्षु बलिं **हरेत्** दद्यादित्यर्थः । बलिदानानन्तर कृत्यमाह– **आदायेति ।।** हरेः सकाशात् । विष्णुभूतेभ्यः तथा लोकपालेभ्यश्च अनुज्ञा**मादाय** स्वीकृत्य वृक्षं शिलां वा **प्रतिमाकृते** प्रतिमानिर्माणार्थं **उद्धरेत्** वृक्षं छिन्द्यात् । शिलामुत्पाटयेदित्यर्थः । शिलाविशेषेण प्रतिमादिकं कार्यमित्याह– **प्रतिमामिति ।। त्रिजातिभिः** स्त्रीपुंनपुंसकजातिभिः शिलाभिः प्रतिमादिकं कुर्यादिति शेषः । पीठस्थापनार्थं पीठाधोभागे या शिला सा पिण्डिकेत्युच्यते । प्रतिमाया आधारभूतः उलूखलाकारशिलाविशेषः पिण्डिकेत्युच्यत इत्यप्याहुः ।। ४७-४९ ।।

शिलादौ पुंस्त्वादिज्ञानार्थं उपायनिरूपणं, पुंशिलया प्रतिमानिर्माणं,
स्त्रीशिलया पीठनिर्माणकथनं च

त.सा. **स्वरस्थूलत्वभेदेन पुंस्त्र्याद्या जातितः शिलाः ।**
**पुंशिला प्रतिमार्थं तु स्त्रीशिला पीठक्लृप्तये** ।। ५० ।।

**त.क.**— कथं त्रिजातयः शिला ज्ञातव्या इत्यत आह— **स्वरस्थूलत्वभेदेनेति** ।। यस्याः शिलायाः छेदने कांस्यघण्टाध्वनिप्रख्यो ध्वनिः भवति सा पुंशिला, कथञ्चिन्न्यूनध्वनिश्चेत् सा स्त्रीशिलेत्यादिभेदेन विज्ञाताभिः । पुमादिशिला ज्ञातव्या इति सम्वन्धः । पुंस्त्रीनपुंसकशिलायां प्रतिमादौ यथाक्रममन्वयं वारयन्नुक्तं विवृणोति— **पुंशिलेति** ।। प्रतिमार्थं स्यादिति शेषः । **पीठं** पादाधःस्थितशिला-विशेषः । नपुंसकशिला पिण्डिकार्थमिति शेषः । पीठाधःस्थापिता शिला पिण्डिकेत्युच्यते । तदप्याह—

बिम्बं पुंशिलया कार्यं पीठे योषिच्छिला भवेत् ।
रत्नन्यासस्तु कर्तव्यो नपुंसकशिलोपरि ।। इति ।।

अत्र तुशब्देन पुंप्रतिमानिर्माणे एवेयं व्यवस्था, स्त्रीप्रतिमानिर्माणे तु विपरीतैवेति दर्शयति । तदिदमाह—

देवीनां च श्रियादीनां निर्माणे स्त्रीशिला भवेत् ।
स्त्रीशिला पादपीठे तु रत्नन्यासो नपुंसके ।। इति ।

शीतला घर्मकाले या महोष्णा शिशिरागमे ।
एकवर्णा शिला शुद्धा सा भवेत् प्रतिमाविधौ ।। इति च ।। ५० ।।

**अ.सं.**— पुंस्त्वादिजातिः शिलादौ केनोपायेन ज्ञेयेत्यत आह— **स्वरेति** ।। **जातिभिः** जात्या पुंस्त्र्याद्याः शिलाः **स्वरस्थूलत्वभेदेन** स्वराणां ध्वनीनां स्थूलत्वभेदेन उच्चोच्चतरोच्चतमत्वविशेषेण ज्ञेया इति शेषः। स्वरभेदेन स्थूलत्वभेदेन चेत्यप्याहुः । आद्यपदेन नपुंसकशिला ग्राह्या । उक्तं च हयशीर्षे—

या शिला ब्रुवते नादं कांस्यघंटानिनादवत् ।
मूले मध्ये तथा चाग्रे पुंल्लिङ्गेति च सा स्मृता ।।

तदेतल्लक्षणं यत्र मन्दं मन्दं प्रदृश्यते ।
स्त्रीलिङ्गेति स्मृता सा च भिन्नकांस्यध्वनिस्तु या ।
नपुंसकेति सा ज्ञेया न यत्रैतद्द्वयं भवेत् ।। इति ।

सिद्धांतशेखरेऽपि–

घण्टानादा तु पुंलिङ्गा ध्वनिहीना नपुंसका ।
स्त्रीशिला तारनादा स्यात् बाला ह्रस्वध्वनिः शिला ।।
तारशब्दा तु तरुणो वृद्धा दीर्घस्वरा मता ।। इति ।

तत्र किंजात्या शिलया किं वस्तु कार्यमित्यतः आह– **पुमिति ।।** पुंशिलया प्रतिमां स्त्रीशिलया पीठम् परिशेषात् नपुंसकशिलया पिण्डिकां कारयेदिति भावः । इदमुक्तं हयशीर्षे–

पुंलिङ्गात् प्रतिमा कार्या स्त्रीलिङ्गात् पादपीठकम् ।
पिण्डिकार्थं तु सा ग्राह्या दृष्टा या वर्णलक्षणा ।। इति ।

'प्रतिमार्थं व्रजेत्' *(३.४४)* इत्यादिनोक्तं सर्वं हयशीर्षेऽप्युक्तम्–

वृक्षस्य च शिलायाश्च ग्रहणे विधिरुच्यते ।
सुवारे सुतिथौ योगे स्वर्क्षे सुकरणान्विते ।।

आपूर्यमाणपक्षे तु सुग्रहे चोत्तरायणे ।
यजमानानुकूल्येन प्रतिमार्थं व्रजेद्गुरुः ।।

निपुणैः शिल्पिभिः सार्धं सहायैर्बलवत्तरैः ।
ब्राह्मणान् वाचयित्वा तु कुर्यान्मङ्गलदर्शनम् ।।

गीतवाद्यवरैर्घुष्टा यात्रा स्याद् वृद्धिदा नृणाम् ।
प्राचीदिशमथोदीचीमैशानीं वा व्रजेद्गुरुः ।।

एकवर्णां शिलां दृष्ट्वा बाह्यदोषविवर्जिताम् ।
प्लाव्य तोयेन पूतेन शुभ्रवस्त्रेण वेष्टयेत् ।।

गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैः पूजयेच्छिलाम् ।
ततस्तु मूलमन्त्रेण आज्येनाष्टाहुतिं हुवेत् ।।

एवं सन्तर्प्य सम्पूज्य दद्याद्भूतबलिं बुधः ।
पश्चिमे दर्भशय्यायां विशेत्तां रजनीं गुरुः ।।

**त.क.**– कथं त्रिजातयः शिला ज्ञातव्या इत्यत आह— **स्वरस्थूलत्वभेदेनेति ॥** यस्याः शिलायाः छेदने कांस्यघण्टाध्वनिप्रख्यो ध्वनिः भवति सा पुंशिला, कथञ्चिन्न्यूनध्वनिश्चेत् सा स्त्रीशिलेत्यादिभेदेन विज्ञाताभिः । पुमादिशिला ज्ञातव्या इति सम्बन्धः । पुंस्त्रीनपुंसकशिलायां प्रतिमादौ यथाक्रममन्वयं वारयन्नुक्तं विवृणोति— **पुंशिलेति ॥** प्रतिमार्थं स्यादिति शेषः । **पीठं** पादाधःस्थितशिला-विशेषः । नपुंसकशिला पिण्डिकार्थमिति शेषः । पीठाधःस्थापिता शिला पिण्डिकेत्युच्यते । तदप्याह—

बिम्बं पुंशिलया कार्यं पीठे योषिच्छिला भवेत् ।
रत्नन्यासस्तु कर्तव्यो नपुंसकशिलोपरि ॥ इति ॥

अत्र तुशब्देन पुंप्रतिमानिर्माणे एवेयं व्यवस्था, स्त्रीप्रतिमानिर्माणे तु विपरीतैवेति दर्शयति । तदिदमाह—

देवीनां च श्रियादीनां निर्माणे स्त्रीशिला भवेत् ।
स्त्रीशिला पादपीठे तु रत्नन्यासो नपुंसके ॥ इति ।

शीतला घर्मकाले या महोष्णा शिशिरागमे ।
एकवर्णा शिला शुद्धा सा भवेत् प्रतिमाविधौ ॥ इति च ॥ ५० ॥

**अ.सं.**– पुंस्त्वादिजातिः शिलादौ केनोपायेन ज्ञेयेत्यत आह– **स्वरेति ॥** **जातिभिः** जात्या पुंस्त्र्याद्याः शिलाः **स्वरस्थूलत्वभेदेन** स्वराणां ध्वनीनां स्थूलत्वभेदेन उच्चोच्चतरोच्चतमत्वविशेषेण ज्ञेया इति शेषः। स्वरभेदेन स्थूलत्वभेदेन चेत्यप्याहुः । आद्यपदेन नपुंसकशिला ग्राह्या । उक्तं च हयशीर्षे–

या शिला ब्रुवते नादं कांस्यघंटानिनादवत् ।
मूले मध्ये तथा चाग्रे पुंल्लिङ्गेति च सा स्मृता ॥

तदेतल्लक्षणं यत्र मन्दं मन्दं प्रदृश्यते ।
स्त्रीलिङ्गेति स्मृता सा च भिन्नकांस्यध्वनिस्तु या ।
नपुंसकेति सा ज्ञेया न यत्रैतद्द्वयं भवेत् ॥ इति ।

सिद्धांतशेखरेऽपि–

घण्टानादा तु पुंलिङ्गा ध्वनिहीना नपुंसका ।
स्त्रीशिला तारनादा स्यात् बाला ह्रस्वध्वनिः शिला ।।
तारशब्दा तु तरुणो वृद्धा दीर्घस्वरा मता ।। इति ।

तत्र किंजात्या शिलया किं वस्तु कार्यमित्यतः आह– **पुमिति ।।** पुंशिलया प्रतिमां स्त्रीशिलया पीठम् परिशेषात् नपुंसकशिलया पिण्डिकां कारयेदिति भावः । इदमुक्तं हयशीर्षे–

पुंलिङ्गात् प्रतिमा कार्या स्त्रीलिङ्गात् पादपीठकम् ।
पिण्डिकार्थं तु सा ग्राह्या दृष्टा या वर्णलक्षणा ।। इति ।

'प्रतिमार्थं व्रजेत्' *(३.४४)* इत्यादिनोक्तं सर्वं हयशीर्षेऽप्युक्तम्–

वृक्षस्य च शिलायाश्च ग्रहणे विधिरुच्यते ।
सुवारे सुतिथौ योगे स्वर्क्षे सुकरणान्विते ।।

आपूर्यमाणपक्षे तु सुग्रहे चोत्तरायणे ।
यजमानानुकूल्येन प्रतिमार्थं व्रजेद्गुरुः ।।

निपुणैः शिल्पिभिः सार्धं सहायैर्बलवत्तरैः ।
ब्राह्मणान् वाचयित्वा तु कुर्यान्मङ्गलदर्शनम् ।।

गीतवाद्यवरैर्घुष्टा यात्रा स्याद् वृद्धिदा नृणाम् ।
प्राचीदिशमथोदीचीमैशानीं वा व्रजेद्गुरुः ।।

एकवर्णां शिलां दृष्ट्वा बाह्यदोषविवर्जिताम् ।
प्लाव्य तोयेन पूतेन शुभ्रवस्त्रेण वेष्टयेत् ।।

गन्धैः पुष्पैश्च धूपैश्च नैवेद्यैः पूजयेच्छिलाम् ।
ततस्तु मूलमन्त्रेण आज्येनाष्टाहुतिं हुवेत् ।।

एवं सन्तर्प्य सम्पूज्य दद्याद्भूतबलिं बुधः ।
पश्चिमे दर्भशय्यायां विशेत्तां रजनीं गुरुः ।।

निराहारस्थितो भूत्वा शिल्पिभिः सह दैशिकः ।
अपरेऽहनि सम्प्राप्ते शिलां शस्त्रं च पूज्य च ।।

हरिं ध्यात्वा च तच्छस्त्रं प्रदद्याच्छिल्पिने गुरुः ।
मुखं पृष्ठं शिरोमूलं शिल्पिने दर्शयेद्गुरुः ।।

ततः शिल्पी टङ्कहस्तः च्छेदयेच्च शिलां तरुम् ।
किञ्चिन्मानाधिकं कृत्वा कल्पयेत् प्रतिमां शिलाम् ।
किञ्चिन्मानाधिका ग्राह्या विश्वाधारा च पिण्डिका ।। इति ।। ५० ।।

**गु.दी.**– पुंस्त्वादिजातिः केनोपायेन ज्ञेयेत्यत आह– **स्वरेति ।।** पुंस्त्र्याद्या ज्ञेया इति शेषः। घण्टानिनादवत्स्थूलस्वरा पुंशिला। भिन्नकांस्यध्वनिवत्सूक्ष्मस्वरा स्त्रीशिला। नादद्वयभिन्नसमस्वरा नपुंसकेति स्वरभेदेन पुंस्त्र्याद्या शिला ज्ञेया इत्यर्थः। तथा चोक्तं विष्णुतीर्थीये—

पुल्लिङ्गा ब्रुवते नादं कांस्यघण्टानिनादवत् ।
मूले मध्ये तथाऽग्रे च ज्ञेया सा पुंशिला बुधैः ।।

तदेतल्लक्षणं यत्र मन्दं मन्दं प्रदृश्यते ।
स्त्रीलिङ्गेति स्मृता सा च भिन्नकांस्यध्वनिस्तु या ।
नपुंसकेति सा ख्याता न यत्रैतद्द्वयं भवेत् ।। इति ।

स्वराभावे नपुंसकलिङ्गेत्यप्याहुः। कया शिलया किं कार्यमित्यत आह— **पुंशिलेति ।।** स्वीकर्येति शेषः। एवमुत्तरत्रापि। नपुंसकशिला पिण्डिकाकॢप्तय इत्यर्थात्सिद्धम् ।।४४।।

**मङ्कली**– पुंस्त्वादिजातिः शिलादौ केनोपायेन ज्ञेयेत्यत आह– **स्वरेति ।। जातिभिः** जात्या पुंस्त्र्याद्याः शिलाः, **स्वरस्थूलत्वभेदेन** स्वराणां ध्वनिनां स्थूलत्वभेदेन उच्चोच्चतरोच्चतमत्वविशेषेण, ज्ञेया इति शेषः। स्वरभेदेन स्थूलभेदेन चेत्यप्याहुः। आद्यपदेन नपुंसकशिला ग्राह्या। तत्र किं जात्या शिलया किं वस्तु कार्यमित्यत आह– **पुमिति ।।** पुंशिलया प्रतिमां स्त्रीशिलया पीठं परिशेषान्नपुंसकशिलया पिण्डिकां कारयेदिति भावः ।। ५० ।।

निर्मितप्रतिमायाः गृहानयनप्रकारकथनम् देवालयनिर्माणयोग्यदेशाकथनम् च

**तं.सा. वेदमङ्गलघोषेण वाद्यैश्च प्रतिमां हरेत् ।**
**प्रागुदक्प्रवणे देशे कुर्याद्देवालयं सुधीः ॥ ५१ ॥**

**स(रा)मावृते(तं) दक्षिणतः पश्चाद्दिर्यग्र एव वा ।**
**मध्ये वा ग्रामपुरयोर्विशाले सुशुचौ तथा ॥ ५२ ॥**

**त.क.**– रथकारादिभ्यः प्रतिमानिर्माणार्थं शिलादिप्रदानानन्तरं किमधिकारिणा कर्तव्यमत आह— **प्रगुदक्प्रवणे देश इति** ॥ अत्र यद्यपि 'वेदमङ्गलघोषेण वाद्यैः तत्प्रतिमां हरेत्' इति पादद्वयमस्ति । तथापि 'सक्तुभिश्च क्रमेणैव देवताः पायसेन वा'(तं.सा.३-८८) इत्येतदनान्तरं योज्यम् । अथवा, 'उद्धरेद्वृक्षं शिलां वा प्रतिमाकृते' इत्येतदनन्तरमेतद्योज्यम् । **प्रतिमां** प्रतिमाकृतिभूतां शिलां **हरेत्** गृहं प्रति नयेदित्यार्थः । **तत्** स्त्रीशिलाद्यं च नयेदित्यर्थः । अस्मिन् पक्षे तत्र शेषो नास्तीति ज्ञातव्यम् । यद्वा, प्रतिमां प्रति तच्छिलात्रयं रथकारं **हरेत्** प्रापयेदित्यर्थः । रथकाराय प्रतिमानिर्माणार्थं शिलात्रयं दद्यादिति यावत् । तस्मिन्नेव समये देवालयः कर्तव्य इत्याह— **प्रागुदक्प्रवण इति** ॥ **सुधीराचार्यः** क्वचिद्देशे शिल्पिभिः देवालयं कारयेदिति सम्बन्धः । तदुक्तम्—

भूपरीक्षादिकं सर्वं रथकारेण वै सह ।
आचार्यः पञ्चरात्रज्ञः कुर्यादभ्युदयोदितः ॥ इति ।

देशं विशिनाष्टि– **प्रागुदक्प्रवण इति** ॥ प्राक्प्रवणे उदक्प्रवणे चेत्यर्थः । वृष्टिकाले यद्देशे पतितं तोयं प्रग् उदग्वा प्रवहति तस्मिन् देश इति यावत् ॥ प्रदेशो वहुविधः । यथोक्तम्—

सुपद्मा भद्रका पुण्या धूम्रा चेति चतुर्विधाः ।
भूमयो लक्षणं तासां क्रमेणोपदिशामि ते ॥

चम्पकागरुखर्जूरकदम्बतिलकार्जुनैः ।
क्रमुकैस्तालकैरैश्च कुशकाशैस्समावृता ॥

पद्मोत्पलसमाकीर्णा प्रागुदक्प्रवणा शुभा ।
या च तोयावृता भूमिः सा सुपद्मेति कीर्तिता ।।

नदी सागरपार्श्वस्था तीर्थायतनमाश्रिता ।
क्षीरवृक्षसमाकीर्णा फलवृक्षसमाकुला ।।

उद्यानोपवनोपेता तालगुल्मसमन्विता ।
यज्ञवृक्षाः कुशाकाशा व्रीहिक्षेत्राणि तत्र वै ।।

अधोजलसमोपेता भद्रका इति सा स्मृता ।
कुलित्थकङ्गुनिष्पावकोद्रवश्यामकान्विता ।।

गिरिपार्श्वस्थिता चैव गिरेश्शिखरमाश्रिता ।
अप्रभूतोदका भूमिः सा पुण्येति प्रकीर्तिता ।।

यववेण्वादिसङ्कीर्णा कठिना शर्करान्विता ।
वायसश्येनगृध्राढ्या गोमायुव्रजसङ्कुला ।।

ऊषराद्यैस्समोपेता सा धूम्रेति प्रकीर्तिता ।
सुपद्मा शान्तिदा भूमिः सुखदा भद्रका भवेत् ।
सुपुण्या पुष्टिदा भूमिः क्षयदा धूम्रका भवेत् ।। इति ।।

तथाऽन्यच्च—

द्विविधं स्थानमाख्यातं सिद्धासिद्धप्रदेशतः ।
मूले मूर्धनि शैलानां नद्यास्तीरे च सङ्गमे ।।

समुद्रतीरे पुलिने ह्रदे तीर्थे च कानने ।
एतेषु निर्मितं सिद्धाख्यं विश्वकर्मणा ।।

देवादिभिरहं तत्र स्थापितश्चेयथाविधि ।
मनुष्यैर्निर्मितं ग्रामनगरादौ गृहे मम ।
असिद्धायतनं विद्धि ग्रामादिस्थितिहेतुकम् ।। इति ।।

तदेतत् सर्वं संमतमेवेति विकल्पेन योजयति– **मिर्यग्र एव वा मध्ये वा ग्रामपुरयोरिति ।।** 'समावृते' इत्यनेन चम्पकागरुखर्जूरेत्यादिनोक्तवृक्षविशेषैः समावृते देशे कुर्यादिति लभ्यते । ग्रामपुरयोर्दक्षिणतः पश्चाद्वेति सम्बन्धः । ग्रामपुरयोमध्यप्रदेशे वा कुर्यादित्यर्थः । 'विशाले' इत्यनेन 'किष्कुद्वादशतोऽनूनम्' (तं.सा.३-५४) इत्यादिवक्ष्यमाणायामो गृह्यते ।। ५१-५२ ।।

**अ.सं.–** एवं शिलां परीक्ष्य कारितायाः प्रतिमायाः गृहानयनप्रकारमाह– **वेदेति ।। हरेत्** आनयेत् । प्रतिमां गृहमिति शेषः । तदुक्तम्–

आनयेच्छङ्खनिर्घोषैः गीतमङ्गलनिस्वनैः ।
ऋग्यजुःसामशब्दैश्च प्रतिमां कारितां गृहम् ।। इति ।

एवमानीतायाः प्रतिमायाः स्थापनार्थं देवालयं कर्तुं तस्य देशमाह– **प्रागुदगित्यादिना ।।** ग्रामाद्बहिः समीपे **दक्षिणतः** दक्षिणस्यां दिशि **पश्चात्** पश्चिमायां दिशि वा । प्रागुदक्प्रवणे देशे स्थले देवालयं **कुर्यात्** कारयेत्सुधीः शिल्पिभिरिति शेषः । इति योजना । तत्र प्रागुदक्प्रवणे इति पदम् प्राक्प्रवणे प्राचीदिक्प्रवणे । उदक्प्रवणे उदीचीदिक्प्रवणे, प्राच्याः उदीच्याश्च अन्तरालं दिक् प्रागुदक् ऐशानी दिगित्यर्थः । तत्प्रवणे वेति व्याख्येयम् । वृष्टिकाले यद्देशे पतितं तोयं प्रागादिदिशिं प्रति प्रवहति स देशः प्रागादिप्रवण इति भावः । तदुक्तं नारदेन–

अत्यन्तवृद्धिदं नृणामीशानप्रागुदक्प्लवम् ।
अन्यदिक्षु प्लवं तेषां शश्वदत्यन्तदुःखदम् ।। इति ।।

देशं विशिनष्टि– **रामावृत इति ।। रामावृते** रामैः आरामैः उपवनैः आवृते परिवृते वनानां मध्य इत्यर्थः । 'आरामः स्यादुपवनं' इत्यभिधानम् । उक्तं च वराहसंहितायाम्–

सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च ।
स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः ।। इति ।

अथवा, रम्यैः प्रशस्तैः कुशदूर्वादितृणैरित्यर्थः। आवृते आच्छादिते पवित्रकुशदूर्वाद्युत्पत्तिस्थल इति यावत्। 'समावृते' इति क्वचित्पाठः। तत्र वनैरिति वा तृणैरिति वा अध्याहृत्य **समावृते** युक्ते इति व्याख्येयम्। यद्वा **समावृते** समतया वर्णादिलक्षणैः विप्रादियोग्यतया परीक्ष्य सम्यक् वृते स्वीकृते। उक्तं चैतत्सर्वं नारदेन–

निर्माणे पत्तनग्रामगृहादीनां समीपतः ।
क्षेत्रमादौ परीक्षेत गन्धवर्णरसप्लवैः ।।

गन्धः सुरभ्यादिः, वर्णः शुक्लादिः, रसः मधुरादिः, प्लवो गर्त्तः । एभिः क्षेत्रं देवालयनिर्माणयोग्यां भूमिं विप्रादियोग्यताभेदेन परीक्षेतेत्यर्थः । तत्प्रकारश्चोक्तो वास्तुशास्त्रे–

सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः ।
गन्धश्च भवति यस्याः घृतदधिमध्वाज्यमद्यसमः ।।

अनुवर्णवृद्धिकारी मधुरकटुकषाय(या) आम्लकटुका च ।
कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही ।। इति ।

तत्र गर्त्तं रत्निमात्रं खनित्वा तत्र पूरयेत् ।
अत्यन्तवृद्धिरधिके हीने हानिः समे समम् ।। इति ।

स्थलान्तरमाह– **गिर्यग्र इति ।।** पर्वतस्योपरि वेत्यर्थः । यद्वा पर्वतस्य अग्रे वा पूर्वदिशि वा तस्य दक्षिणतो वा पश्चाद्वा इति वा सम्बन्धो ज्ञेयः । स्थानांतरमाह– **मध्ये वेति ।।** 'ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम्'। ग्रामपुरयो**र्मध्ये** अन्तराले सन्धाविति यावत्। ग्रामस्य मध्ये पुरस्य मध्ये वा, **सुशुचौ** अत्यन्तशुद्धे विशाले स्थल इत्यर्थः। ग्रामान्तर्वा पुरान्तर्वा ऐशानीमेकां दिशं वर्जयित्वा अन्यासु सर्वासु सप्तदिक्षु शुचौ स्थले वेत्यर्थः ।। ५१,५२ ।।

**गु.दी.–** एवं शिलां परीक्ष्यारण्ये सुस्थले वा कारितायाः प्रतिमायाः गृहानयनप्रकारमाह— **वेदेति ।। हरेत्** नयेत् । गृहमिति शेषः ।।

अथ प्रतिमास्थापनाय देवालयः कुत्र कार्य इत्यतः स्थलनियममाह— **प्रागुदक्प्रवण इति ।।** प्राक् उदक्चेति द्वन्द्वः। **प्रवणो** निम्नः। प्राक्प्रवणदेशे उदक्प्रवणे वा देशे इति केचित्। **प्रागुदक्प्रवणे** पूर्वभागे ईषदुत्तरदिगभिमुखे, ईशान्याभिमुख इति यावत्, **देशे** स्थले देवालयं कुर्यात्। देवालयं विशिनष्टि— **समावृतमिति ।।** दिक्षणतः पश्चाच्च **समावृतं** कुड्याद्यावरणयुक्तम्। पूर्वद्वारमुत्तरद्वारं वा कुर्यादिति यावत्। 'समावृते' इति सप्तम्यन्तपाठे आरामादिनेति शेषः। 'आरामः स्यादुपवनम्' इत्यमरः। **दिक्षणतः** दिक्षणदिग्भागे **पश्चात्** पश्चाद्भागे च आरामादिना समावृतेत्यर्थः। **रामावृत** इति औत्तरीयकोशेषु पाठः । तत्र रमन्ते जना येष्विति रामाः क्रीडास्थानानि । तैरावृत इत्यर्थः ।। **ग्रामेति ।।** ग्राममध्ये पुरमध्ये वेत्यर्थः। एकामैशानीं दिशं विनाऽन्यासु सप्तसु कुर्यादिति भावः। केचित्तु प्रागुदकप्रवण इत्यस्य देवालयं प्राक् पूर्वभागे चेत् कुर्यात् तर्हि उदक्प्रवणे देशे कुर्यादिति योजना। पश्चाच्चेत् दिक्षणतः समोन्नते कुर्यादिति योजनेत्याहुः । तत्र 'समोन्नते दिक्षणतः' इति पाठो बहुकोशेष्वदर्शनात् कल्पित इति प्रतिभाति ।। ५१,५२ ।।

**मञ्जाली–** एवं शिलां परिक्ष्य कारितायाः प्रतिमायाः गृहानयनप्रकारमाह– **वेदेति ।। हरेत्** आहरेत् आनयेत् । गृहमिति शेषः । एवमानीतायाः प्रतिमायाः स्थापनार्थं देवालयं कर्तुं तस्य देशमाह– **प्रागुदगित्यादिना ।।** ग्रामाद्बहिः देवालयं प्राक् पूर्वभागे कुर्याच्चेत् तर्हि उदक्प्रवणे देशे कुर्यादिति योजना । ऐशानीं विना प्राग्भागस्थ एव उदकदेशसम्बन्धो देशः उदक्प्रवणः पश्चाच्चेत् दक्षिणतः । समावृते ईषद्दक्षिणसम्बन्धे देश इत्यर्थः। 'रामावृते' इति क्वचित्पाठः। तत्र रामैरारामैरुपवनैर्वृते परिवृते वनानां मध्य इत्यर्थः। 'आरामः स्यादुपवनं' इत्यभिधानम्। स्थलान्तरमाह– **गिर्यग्र इति ।।** पर्वतस्योपरि वेत्यर्थः। यद्वा पर्वतस्याग्रे पूर्वदिशि वा । स्थानान्तरमाह– **मध्ये वेति ।।** 'ग्रामो बहुजनाकीर्णो राजराजाश्रयः पुरं' ग्रामपुरयोर्मध्ये अन्तराले सन्धाविति यावत् । ग्रामस्य मध्ये पुरस्य मध्ये वा **सुशुचौ** अत्यन्तशुद्धे विशाले वा इत्यर्थः । ग्रामान्तर्वा पुरान्तर्वा

ऐशानीमेकां दिशं वर्जयित्वा अन्यासु पूर्वाद्यासु सप्तदिक्षु शुचौ स्थले वेत्यर्थः ।। ५१,५२ ।।

देवालयनिर्माणे दिङ्नियमाभिधानम्, देवालयस्य परिमाणाभिधानम्
देवालायार्थं भूशोधनाभिधानं, भूपरिग्रहाङ्गबलिदानादिकथनं च

**तं.सा.** **एशानीं दिशमेकां तु विनोदकविवर्जिते ।**
**जलाशयस्य मध्ये वा शिलावृक्षवि(क्षादि)वर्जिते ।। ५३ ।।**

**स्मशानादिकदेशानां विदूरे सुमनोहरे ।**
**किष्कुद्वादशतोऽनूनं कुर्याद्देवालयस्थलम् ।। ५४ ।।**

**द्विगुणं चतुर्गुणं वाऽपि शतकिष्कुप्रमाणकम् ।**
**कृत्वा भूशोधनं सम्यक् सार्धपुंमानतस्त्वधः ।। ५५ ।।**

**केशाङ्गारास्थिवल्मीकलोष्ठाश्मादिविवर्जिते ।**
**हरिं तत्रापि सम्पूज्य बलिं दत्त्वापि पूर्ववत् ।। ५६ ।।**

**मृद्दारुशैलैर्लोहैर्वा कुर्याद्देवालयं दृढम् ।**

**त.क.–** ग्रामादेर्दक्षिणतः पश्चाद्वेत्येतत् सप्तदिगुपलक्षणमिति सूचयन् दक्षिणतः पश्चादित्युक्तं विवृणोति– **एशानीं दिशमिति** ।। 'ग्रामपुरयोः मध्ये' इत्येतद्विवृणोति— **उदकविवर्जित इति** ।। उदकबाधवर्जित इत्यर्थः । जलाशयस्य मध्य इत्यनेन—

अधोजलसमोपेता भद्रका इति च स्मृता ।
अप्रभूतोदका भूमिः सा पुण्येति प्रकीर्तिता ।। इत्यादिलक्षणं सूचयति ।

सदा सुशुचावित्युक्तं विवृणोति— **शिलावृक्षेति** ।। यत्र भूः स्वन्यते तत्र वृक्षाद्यभावो विवक्षितः । तेन न चम्पकाद्यैस्समावृते देश इत्युक्तविरोधः । स्मशानादीत्यत्रादिशब्देन यववेण्वादिसङ्कीर्णेत्युक्तधूम्रभूमिं व्यावर्तयति । 'क्षयदा धूम्रका भवेत्' इत्युक्तः । सुमनोहर इत्यन्तेन—

दण्डमात्रायतां भूमिं तावद्भिस्तारसंयुताम् ।
जानुमात्रं खनद्भूमिं मृद्भिस्ताभिश्च पूरयेत् ॥

अधिके चोत्तमां विद्यात् समे चेन्मध्यमा भवेत् ।
न्यूनेऽधमां विजानीयात् तां भूमिं परिवर्जयेत् ॥

शालिमुद्गयवादीनामुप्त्वा बीजानि वै भुवि ।
परीक्षकः परीक्षेत प्रशस्तामथवेतराम् ॥

अंकुरो जायते यत्र त्रिरात्राभ्यन्तरे महीम् ।
तामुत्तमां विजानीयात् पञ्चषट्सु च मध्यमाम् ॥

अधमां सप्तरात्रे स्याददृश्ये वा तदन्तरे ।
वर्जयेदधमां भूमिं स्थापयेदन्ययोर्द्वयोः ॥

कुशाः पलाशा हरिणाः सन्ति यत्र स्वयं भुवि ।
अधमामपि तां विद्धि प्रशस्तां कमलासन ॥

रसेन मधुरेणोर्वीमुत्तमां कटुकात्मना ।
मध्यमामधमां भूमिं रसैरन्यैश्च विद्धि ताम् ॥

श्वेतवर्णोत्तमा भूमिर्मध्यमा पीतलोहिनी ।
अधमा कृष्णवार्णा स्यदित्येतद्भूमिलक्षणम् ॥

इत्युक्तोत्तमत्वाधमत्वे गृह्येते। विशाल इत्युक्तं विवृणोति— **किष्कुद्वादशातोऽनूनमिति ॥** किष्कूणां लक्षणं वक्ष्यति। **देवालयस्थलं** देवालयनिर्माणार्थं स्थलं स्वीकुर्यादिति भावः। शक्ततरादिविवक्षया द्विगुणं चतुर्गुणं वाऽपि शतकिष्कुप्रमाणमित्यादिपक्षान्तराणि।

स्थलस्वीकारानन्तरं कर्तव्यमाह— **कृत्वेति ॥** भूशोधनं कृत्वा तत्र प्रदेशे मृदादिभिर्देवालयं कुर्यादिति सम्बन्धः। भूशोधनमेव विवृणोति— **सार्धेति ॥** अर्धाधिकपुरुषमानतोऽधः खात्वा तत्रस्थान् केशाङ्गारादीन् बहिर्निष्कासयेदिति शेषः। एवं केशाङ्गारादिवर्जिते देशे इति सम्बन्धः। 'हरिं तत्रापि सम्पूज्य बलिं

दत्त्वा। पूर्ववत्' इत्येतत् 'कृत्वा भूशोधनं सम्यक्' इत्यतः पूर्वं योजनीयम्। शिलोद्धरणकाले हरिपूजा, प्राच्यादिदिक्पालेभ्यो बलिदानं यथा अनुष्ठितं तथेदानीं भुवः खननकाले तद्द्वयमनुष्ठेयमित्यर्थः। चशब्दात् वास्तुपुरुषपूजा होमादिकं च ग्रह्यम्। तदुक्तम्—

वास्तुविद्यासु कृतिना क्रियासु निपुणेन च ।
रथकारेण सहितः कुशलः पञ्चरात्रवित् ।।

आचार्यः प्रथमं कुर्यात् प्रवेशबलिमुत्तमम् ।
आचार्यो यजमानेन सहितो वास्तुसीमनि ।।

प्रदक्षिणां परिक्रम्य मन्त्रैस्स्वस्त्ययनैरपि ।
विदिक्षु दिक्षु पूर्वादिबलिं कुर्यात् समन्ततः ।।

भूतानां च पिशाचानां रक्षसां दितिजन्मनाम् ।
ग्रहाणामपि नागानामन्येषां च बलिं क्षिपेत् ।।

बलिं प्रक्षिप्य तदनु मन्त्रमेतदुदीरयेत् ।
भूताः पिशाचा नागाश्च असुरा राक्षसा ग्रहाः ।।

सर्वे तेऽप्यपगच्छन्तु बलितुष्टा यथायथम् ।
देवानां च द्विजानां च स्थानं सम्यक् करोम्यहम् ।।

वासुदेवस्य देवस्य सर्वभूतात्मकस्य च ।
अस्त्रमन्त्रेण सञ्जप्तां सिद्धार्थां सर्वतः क्षिपेत् ।।

कृत्वा बलिं यथाशास्त्रं सूत्राण्यपि च पातयेत् ।
शंकुं संस्थापयेत् तत्र सूत्रसन्धिषु सर्वतः ।।

अधोमुखं प्राविशन्(प्राक्शिरसं) विन्यसेद्वास्तुपूरुषम् ।
प्रसार्य पाणिपादौ द्वौ कोणभूषु प्रकल्पितौ ।।

एवं ध्यात्वा समभ्यर्च्य पूरुषं वास्तुकल्पितम् ।
तस्य दक्षिणपार्श्वे तु वास्तुहोमं प्रकल्पयेत् ।।

स्थण्डिले दीपयित्वाऽग्निं पञ्चोपनिषदा घृतम्(वृतः) ।
सहस्रं वा शतं वाऽपि जुहुयाद्वास्तुशान्तये ।।

अपामार्गश्च शम्यश्च खदिरश्च यथाक्रमम् ।
यक्षरक्षपिशाचानां समिधो जुहुयात्स्वयम् ।।

हुत्वा तु मूलमन्त्राभ्यां पृथगष्टोत्तरं शतम् ।
(मूलमन्त्राभ्यां नारायणाष्टाक्षरवासुदेवद्वादशाक्षराभ्याम् ।)
वास्तुनाथस्य चरुणा जुहुयाच्छतसङ्ख्यया ।।

पूर्णाहुतिं ततो हुत्वा इन्द्रादीनां बलिं क्षिपेत् ।
दिक्ष्वष्टसु यथायोग्यमेवं ग्रा(ना)मादि कल्पयेत् ।।

ब्राह्मणान् भोजयेत्तत्र सहस्रं शतमेव वा ।
भुक्तवद्भ्यो धनं दद्यात् ब्राह्मणेभ्यो गवादिकान् ।।

प्रोक्षयेत् पञ्चगव्येन पञ्चोपनिषदा भुवम् ।
कुद्दलैर्वा खनित्रैर्वा यावदम्भः खनेत् क्षितिम् ।।

भूतले खन्यमाने तु भस्माङ्गारतुषादिके ।
दुष्टसत्त्वोपलम्भे तु क्रिमिकीटादिदर्शने ।।

जुहुयाच्छान्तये तेषां आचार्यः सर्पिरदिना ।
ब्राह्मणेभ्यो यथाशक्ति दद्याद्धेमादिकं धनम् ।।

रत्नादि दर्शयेद्ग्राम समृद्धं सर्वदा भवेत् ।
खातहोमं बहिःखातस्थदण्डले चतुरस्रके ।।

स्थापयित्वाऽग्निमादीप्य कुर्यादाज्येन देशिकः ।
मूलमन्त्रेण सूक्तेन पौरुषेण चरूं पुनः ।।

गुग्गुलं तिलनीवारान् जुहुयान्मूलविद्यया ।
पुण्याहं वाचयित्वा तु शालीन् खातेषु पूरयेत् ।।

गन्धोदकेन तत्कुम्भान् पूरयित्वा समर्चयेत् ।
खातमृद्भिश्च पुण्याभिरदुष्टाभिरदूषणैः ।।

पूरयेद्वालुकाभिश्च जलैश्चोपरि पूरयेत् ।
हस्तिपादैः दृढं कृत्वा पुनस्तोयैश्च पूरयेत् ।।

कृत्वैव वास्तुशास्त्रज्ञ आरभेत् प्रथमेष्टकाम् ।
इष्टकास्त्रिविधाः प्रोक्ताः शिलाकाष्ठजमृण्मयाः ।
शैलजेषु विमानेषु शिला स्यात्प्रथमेष्टका ।। ५५,५६ ।।

**अ.सं–** अथवा, ग्रामाद्बहिः देवालयनिर्माणे दिङ्नियममाह– **ऐशानीमिति ।।** ऐशानीव्यतिरिक्तसर्वदिक्ष्वपि वेत्यर्थः । ग्रामादिमध्ये वा ग्रामाद्बहिर्वा ऐशान्यदिशि देवालयं न कुर्यादिति भावः । **उदकवर्जिते** उदकानाश्रये, यत्र वृष्टिकाले उदकं न तिष्ठति तादृशदेश इत्यर्थः । निम्नभूमौ न कर्तव्यमिति भावः । तदुक्तं सङ्ग्रहे– 'मध्यनिम्ना तु या भूमिः साधकं तु निपातयेत्' इति । यद्वा ऐशानीं दिशमेकां विना उदकवर्जिते स्थल इत्यर्थः । ऐशान्यां यद्युदकं तर्हि तत्र न दोषः । अन्यासु सप्तसु दिक्षु उदकरहितेषु कार्यमिति भावः । अथवा, उदकवर्जिते यत्र देवालयस्य उदकप्रवाहेण बाधो न भवेत् तादृशे नदीतीर इत्यर्थः । जलाशयस्य सरोवरादेः मध्ये वा । उक्तं च पञ्चरात्रे– 'सर्वतस्तु जले श्रेष्ठं स्थिरमस्थिरमेव वा' इति । **शिलावृक्षादिवर्जिते** यत्र पर्वते वने वा शिलावृक्षबाधा न स्यात् तादृशदेश इत्यर्थः । स्मशानादिकदेशानां सकाशात् । आदिपदेन अन्त्यजादिगृहं ग्राह्यम् । **विदूरे** बहुदूरे **सुमनोहरे** मनःप्रसादकारिणि देशे वेत्यर्थः । एषु देवालयं **कुर्यात्** शिल्पिभिः कारयेदित्यन्वयः । तदुक्तं वराहसंहितायाम्–

सरस्तु नलिनाच्छन्ननिरस्तरविरश्मिषु ।
वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु ।
रमन्ते देवता नित्यं पुरुषोद्यानवत्सु च ।। इति ।

इदानीं देवालयस्थलपरिमाणमाह– **किष्कुरिति ।।** 'किष्कुर्हस्ते वितस्तौ च'

इत्यभिधानात् किष्कुर्हस्त इत्यर्थः। स च हस्तः शिल्पिशास्त्रप्रसिद्ध एवात्र विवक्षितः।

रत्निस्त्वङ्गुलपर्वाणि विज्ञेयस्त्वेकविंशतिः ।
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः ।। इत्यादित्यपुराणोक्तेः ।

तथाच **किष्कुद्वादशतः** किष्कूणां हस्तानां द्वादशतः द्वादशसङ्ख्यया अन्यूनं उनं न भवेत् । ऊनं चेत् द्वादशहस्तपरिमाणमित्यर्थः ।।

**द्विगुणं** चतुर्विंशतिहस्तं वा **चतुर्गुणम्** अष्टचत्वारिंशद्धस्तं वा **शतकिष्कुप्रमाणकं** शतहस्तप्रमाणं वा देवालयस्य स्थलं **कुर्यात्** शिल्पिभिः कारयेदित्यर्थः । देवालयार्थं भूशोधनं कुर्यादित्याह– **कृत्वेति ।। सार्धपुंमानतः** सार्धपुरुषप्रमाणात् अधः, सार्धपुरुषपर्यन्तमिति यावत्। पुरुषप्रमाणं तु पञ्चहस्तम्। 'पञ्चरत्निः पुरुषः' इति श्रुतेः । उपलक्षणमेतत् । जलपर्यन्तम् पाषाणपर्यन्तम् पुरुषत्रयपर्यन्तं वा भूमिं कुद्दालादिभिः, खनित्वेति शेषः । केशादिवर्जितं यथा स्यात्तथा सम्यक् **भूशोधनं** भूशुद्धिं कृत्वा देवालयं कुर्यादिति पूर्वेणान्वयः। अङ्गारः निर्वापितोल्मुकम् । लोष्टाश्म वर्तुलपाषाणः। आदिपदात् तुषभस्मक्रिमिकीटादि ग्राह्यम्। तदुक्तं वास्तुशास्त्रे–

जलान्तं प्रस्तरान्तं वा पुरुषान्तमथापि वा ।
क्षेत्रदोषानुरूपेण पुरुषत्रयमानतः ।।

केशभस्माङ्गारतुषकीटास्थिशुद्धये ।
कुद्दालैर्वा खनित्रैर्वा निखनेत् भूमिमञ्जसा ।।

खनित्वा पूरयेत्तां च मृदश्मसिकताम्बुभिः ।
हस्तिपादैर्दृढं कृत्वा पुनस्तोयैश्च पूरयेत् ।। इति ।

एवं शोधितभूमिपरिग्रहस्यांगभूतां पूजामाह– **हरिमिति ।। तत्रापि** देवालयनिर्माणस्थलेऽपि **पूर्ववत्** शिलाद्युद्धरणादाविव पुर्वोक्तमन्त्रैरेव मध्ये हरिमष्टदिक्षु अष्टौ इन्द्रादिलोकपालानपि सम्पूज्य वलिमपि दत्वा विष्णुभूते-

भ्योऽपि बलिं दत्वा । **मृद्दारुशैलैः** मृद्भिर्वा दारुभिर्वा काष्टैर्वा शैलैः शिलासमूहैर्वा लोहैः सुवर्णरजतताम्रैर्वा दृढं यथा स्यात्तथा देवालयं कुर्यादित्यर्थः ।। ५३-५६ ।।

**गु.दी– उदकविवर्जिते** वृष्टिसमये यत्रोदकं न तिष्ठति तत्रेत्यर्थः । शिलावृक्षादिवर्जिते जलाशयस्य मध्ये वा 'सर्वतस्तु जले श्रेष्ठं' इति वचनात् । स्मशानादिदेशानां सकाशात् **विदूरे** बहुदूरे ।।

अथ देवालयस्थलपरिमाणमाह— **किष्किति ।।** हस्तमात्रं किष्कुः । 'किष्कुर्हस्ते वितस्तौ च' 'नल्वः किष्कुचतुःशतम्' इति कोशात् । तथा च द्वादशहस्तादन्यूनं द्वादशकरं, **द्विगुणं** चतुर्विंशतिहस्तपरिमाणं, **चतुर्गुणं** अष्टचत्वारिंशत्करं वा शतहस्तप्रमाणं वा देवालयस्थानं कुर्यादित्यर्थः ।।

देवालयार्थं भूशोधनप्रकारमाह— **कृत्वेति ।।** सार्धपुरुषप्रमाणतः अधस्तात् सम्यक् भूशोधनं कृत्वा केशादिवर्जितं कुर्यात् । **आदिपदेन** तुषादि । एवं संशोधितभूम्यां देवालयकरणेऽङ्गभूतपूजामाह— **हरिमिति ।। तत्रापि** देवालयनिर्माणेऽल्पेऽपि हरिं सम्पूज्य बलिदानेनेति शेषः । **पूर्ववत्** पूर्वमन्त्रेण भूतबलिं दत्वा मृदा दारुभिः **शैलैः** शिलाभिः **लोहैः** सुवर्णरजतताम्रैर्वा **दृढं** अभेद्यं देवालयं कुर्यादित्यर्थः । इदमेव भूशोधनं समन्त्रकमुक्तं पञ्चरात्रे–

पूर्वोक्तां भूमिमासाद्य प्रविश्य बलिपूर्वकम् ।
भूमिं प्रदिक्षणां कृत्वा मन्त्रमेनमुदीरयेत् ।।

यक्षाः पिशाचा नागाश्च येऽत्र तिष्ठन्ति सर्वदा ।
सर्वे प्रयान्तु तेऽन्यत्र विष्णोः स्थानं करोम्यहम् ।।

ततोऽस्त्रमन्त्रसंसिद्धान् सिद्धार्थान् मन्त्रतः क्षिपेत् ।
ततो भागवताचार्यो हलेन विलिखेद्ध्रुवम् ।
ब्राह्मणो यजमानश्च अनड्वान् गौरवर्णकः ।। इत्यादि ।।५३-५६।।

**मङ्गाली–** अथवा ग्रामात् बहिः देवालयनिर्माणे दिङ्नियममाह– **ऐशानीमिति ।।** ऐशानीव्यतिरिक्तसर्वदिक्ष्वपि वेत्यर्थः । **उदकवर्जिते** उदकानाश्रये। यत्र वृष्टिकाले उदकं न तिष्ठति तादृशे देश इत्यर्थः । निम्नभूमौ न

कर्तव्यमिति भावः । तदुक्तं सङ्गहे– 'मध्यनिम्ना तु या भूमिः साधकं तु निपातयेत्' इति । यद्वा ऐशानीमेकां दिशं वर्जयित्वा उदकवर्जितस्थल इत्यर्थः । ऐशान्यां यद्युदकं तर्हि तत्र न दोषः । अन्यासु सप्तसुदिक्षु उदकरहिते कार्यमिति भावः । अथवोदकवर्जिते यत्र देवालयस्योदकप्रवाहे वा बाधो न भवति तादृशे नदीतीर इत्यर्थः । जलाशयस्य सरोवरादेर्मध्ये वा शिलावृक्षादिवर्जिते यत्र पर्वते वने वा शिलावृक्षबाधो न भवेत् तादृशे देश इत्यर्थः । स्मशानादिकदेशानां सकाशात्, आदिपदेनांत्यजादिगृहं ग्राह्यम् । विदूरे, **सुमनोहरे** मनःप्रसादकारिणि देशे वेत्यर्थः । एषु देवालयं **कुर्यात्** शिल्पिभिः कारयेदित्यन्वयः । इदानीं देवालयस्थलपरिमाणमाह–**किष्कुरिति ।।** 'किष्कुर्हस्ते वितस्तौ च' इत्यभिधानात् किष्कुर्हस्त इत्यर्थः । सच हस्तः शिल्पिशास्त्रप्रसिद्ध एव विवक्षितः ।

रत्निस्त्वङ्गुलिपर्वाणि विज्ञेयस्त्वेक विंशतिः ।
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः ।। इत्यादित्यपुराणोक्तेः ।

तथा च **किष्कुद्वादशतः** किष्कूणां हस्तानां द्वादशतः द्वादशसङ्ख्यया **अनूनं** ऊनं न भवेत् । ऊनं चेत् द्वादशहस्तपरिमाणमित्यर्थः ।।

**द्विगुणं** च चतुर्विंशतिहस्तं वा । **चतुर्गुणं** अष्टचत्वारिंशद्धस्तं वा । शतकिष्कुप्रमाणकं शतहस्तप्रमाणं वा । देवालयस्थले **कुर्यात्** शिल्पिभिः कारयेदित्यर्थः ।।

देवालयार्थं भूशोधनं कुर्यादित्याह— **कृत्वैति ।। सार्धपुंमानतः** सार्धपुरुषप्रमाणादधः सार्धपुरुषपर्यन्तमिति यावत् । पुरुषप्रमाणं तु पञ्चहस्तं 'पञ्चारत्निः पुरुषः' इति श्रुतेः । केशादिवर्जितं यथा स्यात्तथा सम्यक् **भूशोधनं** भूशुद्धिं कृत्वा देवालयं कुर्यादिति पूर्वेणान्वयः । अङ्गारः निर्वापितोल्मुकं, लोष्टाश्म वर्तुलपाषाणः । आदिपदात् भस्मक्रिमिकीटादिकं ग्राह्यम् । एवं शोधितभूमिपरिग्रहस्याङ्गभूतां पूजामाह— **हरिमिति ।। तत्रापि** देवालय-निर्माणस्थलेऽपि **पूर्ववत्** शिलाद्युद्धरणादाविव पूर्वोक्तमन्त्रैरेव मध्ये हरिमष्टदिक्षु अष्टाविन्द्रादिलोकपालानपि संपूज्य बलिमपि दत्वा विष्णुभूतेभ्योऽपि बलिं दत्वा

**मृद्दारुशैलैः** मृद्भिर्वा दारुभिर्वा शैलैः शिलासमूहैर्वा लोहैः सुवर्णरजतताम्रैर्वा दृढं यथा स्यात्तथा देवालयं कुयादित्यर्थः ।। ५३-५६ ।।

अङ्गुलिपरिमाणकथम्

**त.सा.** **दीर्घस्थ(दीर्घाश्च)कलमास्तिस्रस्तिर्यगष्टयवोदराः ।। ५७ ।।**

**अंगुल्या मध्यरेखायाः समा लक्षणतः स्मृताः ।**

**स्वांगुल्या मध्यरेखा तु प्रतिमादिषु लक्षणम् ।। ५८ ।।**

**त.क.–** ...इत्याद्युक्तवक्ष्यमाणपरिमाणानां अंगुलिमानज्ञानाधीनज्ञानत्वादंगुलिमानलक्षणं सूचयति— **दीर्घेति ।। कलमा** व्रीहयः । तिस्रो दीर्घस्थाः कलमा दीर्घाकारेणन्योन्यसम्बद्धाः स्थापिता इत्यर्थः । **तिर्यगष्टयवोदराः** तिर्यग्वलयाकारेण स्थापितानामष्टानां मध्यप्रदेशा इत्यर्थः । अंगुल्या महापुरुषांगुष्ठस्य या मध्यरेखा सा चेत्येवं त्रयोऽमी **लक्षणतः** मानेन सामाः स्मृताः । समापरीमाणा इत्यर्थः । सप्तसर्षपा दीर्घाकारेणान्योन्यसन्दष्टाश्चेदेको व्रीहिः । तथाभूतव्रीहयः ऋजुतया सन्दष्टाश्चेदेकांगुलिः । तिर्यगष्टयवोदरा वा, अंगुष्ठस्य मध्यरेखा वेति अंगुलेर्लक्षणत्रयमित्यंगुलिपदाध्याहारेण योज्यम् । दीर्घस्थकलमास्तिस्रः एकांगुलिः इत्याद्ये वक्तव्ये यत् 'समा लक्षणतः स्मृताः' इत्याह तेन तिर्यगष्टयवोदरा एकांगुलिः, अंगुष्ठमध्यरेखा चैकांगुलिरित्यादिग्रन्थान्तरोक्तविसंवादपरिहारं सूचयति । एतेषां त्रयाणां परिमाणसाम्येन वचनव्यक्तिभेदमात्रेण विसंवादशङ्कया अनुचितत्वादिति भावः । यद्वा, अंगुल्या इत्यावर्तते । एकं षष्ठ्यन्तम् । अपरं प्रथमैकवचनान्तम् । 'सुपां सुलुक्' (पा.सू.७-१-३९) इति सोराकारादेशे यणादेशे च अंगुल्या इति रूपसंभवात् । यद्वा, 'तद्धिताः' (पा.सू.४-१-७६) इति बहुवचनज्ञापितः अंगुलिशब्दात् स्वार्थे यत्प्रत्ययः । तथा च दीर्घस्थाः कलमास्तिस्रः तिर्यगष्टयवोदराश्च अंगुल्याः अंगुष्ठस्य या मध्यरेखा सा च अंगुल्या अंगुलिरित्यर्थः । यथोक्तम्—

अंगुलिं चाष्टधा कृत्वा तस्यैकांशो यवः स्मृतः ।
तेनैवांगुलिमानेन अङ्गप्रत्यङ्गकल्पनां ।। इति ।

'दीर्घाश्च कलामास्तिस्रः' इति पाठेऽप्ययमेवार्थः । 'मध्यरेखायाः' इति षष्ठ्यन्तपाठे तु मध्यरेखायाः लक्षणतो मानतः कलमा यवोदराश्च समा इति योज्यम् । ननु देवालयनिर्माणप्रसङ्गे द्वारप्रसादविमानादिपरिमाणमेव वक्तव्यम् । अंगुलिपरिमाण-कथनं कथं सङ्गतमित्याशङ्क्याह— **स्वांगुल्या इति ।।** प्रतिमानिर्मातुर्यजमानस्य **अंगुल्याः** अंगुष्ठस्य मध्यरेखा । तुशब्दात् दीर्घकलमाद्याश्च । **प्रतिमादिषु** प्रतिमापिण्डिकापीठेषु कर्तव्येषु । यत्तु षण्णवत्यंगुलत्वमुक्ते प्राक् तस्यैवेदं लक्षणं घटकम् । मध्यपरिमाणादीनां (मध्यरेखादीनां) समपरिमाणत्वकथनं प्रतिमादिषु षण्णवत्यंगुलत्वघटकमेव । अतो नासङ्गतमिति भावः ।। ५३-५८ ।।

**अ.सं.–** पूर्वं षण्णवत्यङ्गुलामिति प्रतिमालक्षणमुक्तम् । तत्राङ्गुलिपरिमाणाज्ञाने षण्णवत्यङ्गुलत्वस्य ज्ञातुमशक्यत्वात् । तथा 'किष्कुद्वादशतः' (तं.सा.३-५४) इत्यत्र किष्कुशब्देन हस्तपरिमाणमुक्तम् । 'प्रादेशहस्तपुरुषमानं' (तं.सा.३-५६) इत्युरत्रापि हस्तादिपरिमाणं वक्ष्यति । तत्र हस्तादिपरिमाणाज्ञाने देवालयादिनिर्माणा-सम्भवात् । तज्ज्ञानस्य च 'किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः' इत्याद्युक्तेरङ्गुलिपरिमाणज्ञाना-धीनत्वादङ्गुलिपरिमाणलक्षणमाह– **दीर्घाश्चेति ।। दीर्घाः** दीर्घाकारेण स्थापिताः भूमौ पूर्वपूर्वाग्रसम्बन्धेन ऋजुतया निहिता इति यावत् । तिस्रः **कलमाः** तिर्यगष्टयवोदराश्च व्रीहयः तिर्यक् स्थापितानां 'दीर्घस्थकलमास्तिस्रः' इति पाठे दीर्घाकारेण स्थिताः कलमा इत्येवार्थः । **तिर्यगष्टयवोदराश्च** तिर्यक्स्थापितानामष्टानां यवानां धान्यविशेषाणामन्योन्यं सम्बद्धानां उदराः मध्यभागा वा । **अङ्गुल्या** महापुरुषस्य ज्येष्ठाङ्गुल्याः मध्यरेखायाः । उपलक्षणमेतत् । महापुरुषमध्याङ्गुलिमध्यपर्वणश्च **लक्षणतः** परिमाणेन **समाः** सपरिमाणा इत्यर्थः । अनेन दीर्घव्रीहित्रयं तिर्यग्यवोदराष्टकं महापुरुषाङ्गुष्ठमध्यरेखा च मध्याङ्गुलिमध्यपर्व चेत्येतचतुष्टयं परिमाणभूताङ्गुलमित्युच्यत इत्युक्तं भवति । तच्चोक्तं पञ्चरात्रे–

विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम् ।
शालिभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानान्तरं भवेत् ।। इति ।

च्छन्दोगपरिशिष्टे च– 'अङ्गुष्ठमध्यरेखा मध्याङ्गुलिमध्यपर्वमितम् अङ्गुलमाहुर्बहुधाः' इति। परिमाणभूतमङ्गुष्ठमध्यरेखास्वरूपम्। अङ्गुलं कस्य पुरुषस्य कस्मिंश्चित्कार्ये ग्राह्यमित्यत आह– **स्वेति**।। स्वस्य प्रतिमाकारयितुः पुरुषस्याङ्गुल्याः ज्येष्ठाङ्गुल्याः अङ्गुष्ठस्येति यावत्। **मध्यरेखा** मध्यरेखारूपमङ्गुलं तु विशेषेण **प्रतिमादिषु** प्रतिमायां आदिशब्दगृहीतपीठपिण्डिकाविमानादिकार्येषु **लक्षणं** परिमाणत्वेन ग्राह्यमित्यर्थः। एतादृशाङ्गुलपरिमाणेनैव षण्णवत्यङ्गुलपुरुषप्रमाणप्रतिमादि कार्यमिति भावः। तदुक्तम्–

मानान्तराङ्गुलेनैव प्रतिमाङ्गानि कारयेत्।
तेनैव वेदिकापीठं विमानादींश्च कारयेत्।। इति।

मानान्तराङ्गुलेनैव परिमाणविशेषभूततिर्यगष्टयवसदृशाङ्गुष्ठमध्यरेखारूपाङ्गुलेनैवेत्यर्थः।। ५७-५८।।

**गु.दी.**– पूर्वं प्रतिमालक्षणकथनावसरे 'षण्णवत्यङ्गुलां' (तं.सा.३-१) इत्याद्युक्तम्। तत्राङ्गुलिपरिमाणानामनुक्तत्वादङ्गुलिपरिमाणमाह— **दीर्घस्थेति**।। तिस्रः **दीर्घस्थकलमाः** दीर्घाकारेण स्थिताः कलमाः व्रीहयः। **तिर्यगष्टयवोदराः**। वाशब्दोऽध्याहार्यः। तिर्यक् स्थिता अष्टयवानामुदरा वा। **अङ्गुल्या** ज्येष्ठाङ्गुल्याः अङ्गुष्ठस्येति यावत्। मध्यरेखायाः **लक्षणतः** मानतः समाः स्मृता इत्यर्थः। तिर्यक् विहिता अष्टयवोदराः तिस्रो दीर्घस्थकलमाः दीर्घाकारेण स्थिताः धातुविशेषा इति अन्ये। तथा चाङ्गुलिमध्यरेखामादाय षण्णवत्यङ्गुलतादि द्रष्टव्यमिति भावः।।

कस्याङ्गुलिमानेन षण्णवत्यङ्गुलत्वादीनीति जिज्ञासायामाह– **स्वाङ्गुल्या इति**।। स्वशब्दः प्रतिमादिपरः। स्वाङ्गुल्याः प्रतिमाज्येष्ठाङ्गुल्याः **मध्यरेखा** मध्यरेखाप्रमाणं प्रतिमादिषु। **आदिपदात्** पीठपिण्डिकादेर्ग्रहणम्। तेषु **लक्षणं** ज्ञापकम्।। ५७,५८।।

**मङ्गाली**– पूर्वं 'षण्णवत्यङ्गुलां' (३-१) इति प्रतिमालक्षणमुक्तम्। तत्राङ्गुलपरिमाणाज्ञाने षण्णवत्यङ्गुलत्वस्य ज्ञातुमशक्यत्वात् 'किष्कुद्वादशतः'(३-५४)इत्यत्र किष्कुशब्देन हस्तपरिमाणमुक्तम्। 'प्रादेशहस्तपुरुषमानम्' (३-५६) इत्युत्तरत्रापि

हस्तादिपरिमाणं वक्ष्यति। तत्र हस्तादिपरिमाणाज्ञाने देवालयनिर्माणस्यासम्भवात्। तज्ज्ञानस्य 'किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः' इत्याद्युक्तेरङ्गुलिपरिमाणज्ञानाधीरनत्वादङ्गुलिपरिमाणलक्षणमाह– **दीर्घाश्चेति ॥** **दीर्घाः** दीर्घाकारेण स्थापिताः भूमौ पूर्वपूर्वाग्रसम्बन्धेन ऋजुतया निहिता इति यावत्। तिस्रः **कलमाः** धान्यविशेषाः व्रीह्यादयः, 'दीर्घस्थकलमास्तिस्रः' इति पाठे दीर्घाकारेण स्थिताः कलमा इत्यर्थः। **तिर्यगष्टयवोदराश्च** तिर्यक्स्थापितानामष्टानां यवानां धान्यविशेषणामन्योन्यसम्बद्धानामुदरा मध्यभागा वा **अङ्गुल्या** महापुरुषस्य ज्येष्ठाङ्गुल्याः मध्यरेखायाः। उपलक्षणमेतत्। महापुरुषमध्याङ्गुलिमध्यपर्वणश्च **लक्षणतः** परिमाणेन **समाः** समपरिमाणा इत्यर्थः। परिमाणभूतमगुंष्ठमध्यरेखारूपमङ्गुलं कस्य कस्मिन् कार्ये ग्राह्यमित्यत आह– **स्वेति ॥** स्वस्य प्रतिमाकारयितुः पुरुषस्याङ्गुल्याः ज्येष्ठाङ्गुल्याः अङ्गुष्ठस्येति यावत्। मध्यरेखा मध्यरूपमङ्गुलं तु विशेषेण **प्रतिमादिषु** प्रतिमायाम् आदिशब्दगृहीतपीठपिण्डिकाविमानादिकार्येषु **लक्षणं** परिमाणत्वेन ग्राह्यमित्यर्थः ॥ ५७,५८ ॥

अधममध्यमोत्तमभेदेन परिमाणकथनं प्रतिमासामान्यलक्षणकथनं च

**तं.सा.** **ह्रस्वमध्योच्चभेदेन तत्तन्मानं समस्तशः।**
**प्रादेशहस्तपुरुषमानं सामान्यलक्षणम्** ॥ ५९ ॥

**त.क.–** ननु षण्णवत्यंगुलत्वमेव प्रतिमालक्षणं न भवति—

द्वादशांगुलकं मानं तालाख्यमिह कथ्यते।
मीयते दशतालेन वासुदेवस्सनातनः॥

इति प्रतिमाया दशातालत्वोक्तेरित्यत आह— **ह्रस्वेति ॥** ह्रस्वोऽधमः। उच्च उत्तमः। भेदः कल्पः। अधममध्यमोत्तमकल्पेन समस्तशः शास्त्रे प्रतिपादितं **तत्तन्मानं** दशतालत्वं, नवतालत्वमष्टतालत्वं चेत्यादिमानं गृह्यत एव। अतोऽत्र अष्टतालमध्यमकल्पमाश्रित्य षण्णवत्यंगुलत्वमुक्तमिति न विरोधः। तर्हि

प्रादेशहस्तपुरुषदिप्रतिमानां बहुलमुपलम्भात् तथापि षण्णवत्यंगुलत्वं प्रतिमालक्षणं नोपपद्यत इत्यतश्चेदमुच्यते— **ह्रस्वेति ।।** ह्रस्वो लघुत्वम् । अणुमध्यमोत्तमप्रतिमाभेदेन तत्तन्मानं च अङ्गीकृतमेव । परं तु, 'स्वांगुल्या मध्यरेखा तु प्रतिमादिषु लक्षणम्'(३-५८) । स्वं तत्तद्विवक्षितप्रतिमा । तदंगुष्ठस्य मध्यरेखालक्षणम् अंगुलम् । अतः ह्रस्वादिप्रतिमादिषु तदेव गृह्यते । न तु दीर्घस्थकलमा इत्यादिनोक्तमंगुलिलक्षणमिति तुशब्देनाचष्टे । तथाच यद्यपि प्रतिमा अंगुष्ठमारभ्य प्रादेशपर्यन्तमणुपरिमाणोपेताः, प्रादेशमारभ्य हस्तपर्यन्तं मध्यमपरिमाणोपेताः, तदारभ्य पुरुषप्रमाणपर्यन्तमुच्चपीठमानोपेताः सन्ति । तासु सर्वास्वपि षण्णवत्यंगुलत्वं सामान्यलक्षणम् । तथाप्यंगुलिप्रमाणभेदोऽङ्गीक्रियते । प्रतिमांगुष्ठमध्यरेखाम् अंगुलित्वेन परिगृह्य परिमापने ह्रस्वादिप्रतिमाया अपि षण्णवत्यंगुलत्वं लभ्यते । न च प्रतिमानिर्माणान्तरमेव प्रतिमांगुष्ठरेखा ज्ञातव्या । अंगुलिज्ञानानन्तरमेव च प्रतिमा निर्मातव्या इति वाच्यम् । स्वस्य यावत्परिमाणा मूर्तिः कर्तुमिष्टा तावत्परिमाणतत्प्रतिकृतिं विधाय तां षण्णवतिधा विभज्य तत्र एकभागस्थांगुलित्वं ज्ञात्वा तन्मानेन प्रतिमानिर्माणोपपत्तेः । यथोक्तम्—

गृहीतप्रतिमायामं तत्तालांगुष्ठसङ्ख्यया ।
विभज्य तेषु भागैकं तदाहुर्लब्धमंगुलम् ।।

यत्किञ्चित् प्रतिमानं च विभाज्य दशधा पुनः ।
एकं द्वादशाधा भक्त्वा तस्यैकांशोऽगुलिः स्मृतः ।। इत्यादीति भावः ।

नन्वेवं तर्हि 'दीर्घस्थकलमास्तिस्रः'(३-५७)इत्यंगुलिलक्षणकथनं व्यर्थम् । सुतरां पुरुषमानप्रतिमानिर्माणकथनमित्यतश्चेदमुच्यते— **ह्रस्वेति ।।** उत्तमाधममध्यमकल्पेन शास्त्रे तत्तन्मानोपेताः प्रतिमाः प्रतिपादिताः । पुरुषमानप्रतिमाया उत्तमत्वात्तदनुसारेण अंगुलेर्लक्षणान्तरमुक्तमिति भावः । यद्यपि प्रतिमांगुलमानलक्षणेनैव सर्वप्रतिमानां षण्णवत्यंगुलादिकं ज्ञातुं शक्यम् । तथापि मार्गन्तरमेवैतदित्यदोषः । ननु 'तिर्यगष्टयवोदराः'(३-५८) इत्युक्तम् । षड्यवसप्तयवपरिमितयोऽगुलयोः शास्त्रे श्रवणादित्यतश्चेदमुच्यते— **ह्रस्वेति** ।।

अधमकल्पेन षड्यवपरिमितमंगुलं, मध्यमकल्पेन सप्तयवपरिमितम्, उत्तमकल्पेन अष्टयवपरिमितम्। अस्माभिस्तूत्तमकल्पमाश्रित्योक्तमिति भावः। नन्वेवं यथाऽङ्गुलिलक्षणं द्वेधा प्रतिपादितं तथा प्रादेशहस्तपुरूषमानानामपि मानान्तर(शाखान्तर)भेदनिरूपणं प्राप्नोतीत्यत आह— **प्रादेशहस्तेति ।। सामान्यं** समानो धर्मः। तेन लक्षणं ज्ञापनीयम्। प्रादेशहस्तपुरूषमानमेके-नैवांगुलिमानेन ज्ञातव्यम्। 'चतुर्विंशांगुलो हस्तः' इत्यादि तल्लक्षणात्। तत्र अंगुलप्रभेदमाश्रित्यैव हस्तादीनां प्रभेदो न तु स्वातन्त्र्येण। अतो न तत् पृथङ् निरूपणीयमिति भावः ।। ५९ ।।

**अ.सं.—** नन्वत्राष्टयवपरिमिताङ्गुलमेवोक्तम्। तद्व्यतिरिक्तयोः षड्यवसप्तयवपरिमितयोः परिमाणभूतयोरङ्गुल्योः सत्वात् कुतो नोक्त इत्यत आह— **ह्रस्वेति ।। तत्तत्** समस्तशः षट्सप्तयवादिरूपं सर्वमपि अङ्गुलं **ह्रस्वमध्योच्चभेदेन** अधममध्योत्तमभेदेन **मानं** परिमाणमित्यर्थः। अयं भावः। सत्यमङ्गुलान्तराणि सन्तीति। किं तु तानि अधममध्योत्तमभेदेन त्रिविधानि। तेषु षड्यवपरिमिताङ्गुलिरधमपरिमाणम्। सप्तयवात्मकाङ्गुलिः मध्यमम्। अष्टयवाङ्गुलिरुत्तमम्। उक्तं च पञ्चरात्रे—

तदष्टकं यवास्तेऽष्टौ अङ्गुलं समुदाहृतम्।
सा तूत्तमाङ्गुलिः सप्तयवा सैव तु मध्यमा ।।
षड्यवा साऽधमा प्रोक्ता मानाङ्गुलमितीरितम् ।। इति ।

एवं चोत्तमाङ्गुलिपरिमाणेनैव प्रतिमादेः कार्यत्वस्य मुख्यत्वात्तज्ज्ञानार्थं तदेवोक्तम्। अन्ययोस्तु अमुख्यत्वादनुक्तिरिति। अत एव 'अङ्गुल्या मध्यरेखा तु' इति विशेषार्थकतुशब्दः प्रयुक्तः। तेन इदमङ्गुलं प्रतिमादिषु विशेषलक्षणम्। उत्तमपरिमाणमित्यर्थ उक्तो भवति।

ननु हस्तादिपरिमाणस्य सत्वात् तदनुक्तिः कुत इत्यत आह— **प्रादेशेति ।।** प्रादेशहस्तादिमानं **सामान्यलक्षणं** समपरिमाणं विशेषरहितमित्यर्थः। अयं भावः। अङ्गुल एव षड्यवादिरूपविशेषस्य सत्वात् अत्र ग्राह्याङ्गुलिपरिमाण-

मेवोक्तम् । हस्तादौ परिमाणे विशेषाभावात् हस्तादिपरिमाणं नोक्तमिति । प्रादेशादिपरिमाणं तु 'पञ्चरत्निः पुरुषः चतूरत्निर्व्यामः चतुर्विंशत्यङ्गुलो रत्निः तदर्धं प्रादेशः' इति श्रुत्या ज्ञेयम् । अत्र रत्निशब्दः हस्तवाची । 'चतुर्विंशाङ्गुलः करः' इति हयशीर्षात् । 'चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु' इति च । तदर्धं द्वादशाङ्गुलः प्रादेशः वितस्तिरित्यर्थः । 'वितस्तिर्द्वादशाङ्गुलः' इत्यभिधानादिति ।

यद्वा, पूर्वं पुरुषप्रमाणप्रतिमाया एव षण्णवत्यङ्गुलत्वज्ञापनार्थं देवालय-निर्माणोपयोगि हस्तादिपरिमाणज्ञानाय च पुरुषाङ्गुष्ठमध्यरेखाङ्गुलपरिमाणमुक्तम् । इदानीं प्रादेशादिपरिमितप्रतिमाया अपि षण्णवत्यङ्गुलत्वं तत् प्रतिमाया एवाङ्गुष्ठमध्यरेखारूपाङ्गुलेन ज्ञेयम् । व्रीहित्रयपरिमिताङ्गुलस्य तत्रासम्भवादित्याह– **स्वाङ्गुल्या इति ॥** अत्र स्वशब्देन प्रकृतक्रियमाणप्रतिमापरामर्शः । आदिशब्देन पिण्डिकापीठपरिग्रहः । तथाच प्रतिमादिषु तु **स्वाङ्गुल्याः** स्वस्याः प्रतिमायाः अङ्गुल्या ज्येष्ठायाः अङ्गुष्ठस्येति यावत् । मध्यरेखा **लक्षणं** परिमाणत्वेन ज्ञेयेत्यर्थः । प्रतिमाङ्गुलिपरिमाणेनैव षण्णवत्यङ्गुलत्वादिकं ज्ञेयमिति भावः । ननु प्रतिमायाः षण्णवत्यङ्गुलत्वं प्रतिमाङ्गुलेनैव सम्पाद्यमित्युक्तम् । तन्न युज्यते । प्रतिमानिर्माणं प्रतिमाङ्गुलज्ञानाधीनम् । प्रतिमाङ्गुलज्ञानं च प्रतिमानिर्माणाधीनम् इत्यन्योन्याश्रयादिति चेत् । उच्यते । स्वस्य यावत्परिमाणा मूर्तिः कर्तुमिष्टा तावत्परिमाणां तत्प्रतिकृतिं प्रकल्प्य तां षण्णवतिधा विभज्य तत्रैकं भागमङ्गुलं प्रकल्प्य तादृशाङ्गुलेन तदवयवोक्ताङ्गुलसंख्यया प्रतिमायाः मुखाद्यङ्गानि शिल्पिभिः कारयेत् । तदुक्तं सिद्धान्तशेखरे–

गृहीतप्रतिमायामं तत्तदङ्गुलसंख्यया ।
विभज्य तेषु भागैकं तदाहुर्लब्धमङ्गुलम् ॥
लब्धाङ्गुलेन कुर्वीत प्रतिमावयवान् बुधः ॥ इति ।

गृहीयतिमायामं गृहीतायाः स्वेन स्वीकृतायाः नूतनप्रतिमायाः आयामं दैर्घ्यं तत्तदङ्गुलसंख्यया तस्याः प्रतिमायाः करतलस्याङ्गुलसंख्यया विभज्य षण्णवतिविभागं कृत्वा तेष्वेकं भागं लब्धाङ्गुलमाहुः । तेनैव प्रतिमावयवान् कारयेदिति प्रमाणार्थः ।

ननु प्रतिमाङ्गुलिमध्यरेखासंख्ययैव **षण्णवत्यङ्गुलत्वं** ज्ञेयं चेत् प्रतिमायाः हस्तादिभेदेन नानाविधत्वात् कस्याः प्रतिमायाः अङ्गुलिपरिमाणत्वेन ग्राह्यमित्यत आह– **ह्रस्वेति ।। ह्रस्वमध्योच्चभेदेन** ह्रस्वमध्योच्चत्वपरिमाणभेदेन स्थितासु **समस्तशः** सर्वासु प्रतिमासु **तत्तन्मानं** तस्याः ह्रस्वादिप्रतिमायाः अङ्गुलं मानं परिमाणत्वेन ग्राह्यमित्यर्थः । अयं भावः । ह्रस्वप्रतिमा चेत् तदङ्गुलिपरिमाणेन षण्णवत्यङ्गुलत्वं ज्ञेयम् । मध्या चेत् प्रतिमा तदङ्गुलिपरिमाणेन षण्णवत्यङ्गुलत्वम् । उच्चा चेत् तदङ्गुलिमानेन तस्याः प्रतिमायाः षण्णवत्यङ्गुलत्वं ज्ञेयमिति । कियत् कियत्परिमाणं ह्रस्वमध्योच्चशब्देन विवक्षितमित्यत आह– **प्रादेशेति ।।** प्रादेशमानं ह्रस्वं हस्तमानं मध्यं पुरुषमानमुच्चमित्युच्यत इति ज्ञेयम् । इदं प्रादेशादिपरिमाणं प्रतिमायाः सामान्यलक्षणम् । विशेषलक्षणन्तु षण्णवत्यङ्गुलत्वादिनोक्तमिति भावः ।

अत्र प्रादेशावधिप्रतिमैव गृहे पूज्येति ज्ञेयम् । तदुक्तं मात्स्ये–

अङ्गुष्ठपर्वमारभ्य वितस्तिर्यावदेव तु ।
गृहेषु प्रतिमा कार्या नाधिकोना प्रशस्यते ।। इति ।

अत्राङ्गुष्ठवितस्त्वादिकं प्रतिमाकारयितुरेव ग्राह्यम् । तथाच 'वितस्ति-द्वीशाङ्गुलं' इत्युक्तेरङ्गुष्ठपर्वमारभ्य द्व्यङ्गुलादिक्रमेण द्वादशाङ्गुलपरिमाणावधिरेव प्रतिमा गृहेषु कार्या । द्वादशाङ्गुलादधिका अङ्गुष्ठपर्वन्न्यूना वा प्रतिमा न शस्यते न योग्येति प्रमाणार्थः ।। ५९ ।।

**गु.दी.–** ननु प्रतिमाङ्गुलिमानं चेत् ग्राह्यं तर्हि द्वादशाङ्गुलापरपर्यायप्रादे-शमात्रप्रतिमा ह्रस्वा, चतुर्विंशत्यङ्गुलाख्या रत्यपरपर्यायहस्तपरिमिता मध्यमा, पञ्चहस्तापरपर्यायपुरुषपरिमिता उच्चेति ह्रस्वादिभेदेन प्रतिमाया अनेकविधत्वात् कुत्र किं मानं ग्राह्यमित्यत आह— **ह्रस्वेति ।।** ह्रस्वमध्योच्चभेदेन स्थितासु **सर्वशः** सर्वप्रतिमासु **तत्तन्मानं** तत्तत्परिमाणलब्धमङ्गुलमानं ग्राह्यमिति शेषः । अयं भावः । ह्रस्वप्रतिमा चेत् तदङ्गुलमानेनैव षण्णवत्यङ्गुलत्वादीत्यादीति । एतेन

यजमानाङ्गुल्या मध्यरेखा प्रतिमादिषु लक्षणमिति केषाञ्चित् प्रलापोऽपास्तः। उक्तं चान्यत्र—

गृहीतप्रतिमायां तु तत्तदङ्गुलिसङ्ख्यया ।
विभज्य तेषु भागैकं तदाहुर्लब्धमङ्गुलम् ।
लब्धाङ्गुलेन कुर्वीत प्रतिमावयवं बुधः ।। इति ।

'ह्रस्वमध्योच्चभेदेन' इत्युक्तम्। पुरुषादिमानस्यापि तालादिमानापेक्षया ह्रस्वमानत्वाद्ध्रस्वादि दुर्ज्ञेयमित्यत आह— **प्रादेशेति ।।** प्रादेशमानं ह्रस्वम्। हस्तमानं मध्यम्। पुरुषमानमुच्चमिति मानत्रयं **सामान्यलक्षणं** साधारण-लक्षणम्। विशेषलक्षणं तु 'षण्णवत्यङ्गुलाम्' (तं.सा.३-२) इत्यादिनोक्तमिति भावः ।।५९।।

**मङ्गाली—** नन्वत्राष्टयवपरिमिताङ्गुलमेवोक्तम्। तद्व्यतिरिक्तयोः षड्यवसप्तयवपरिमितयोः परिमाणभूतयोरङ्गुल्योस्सत्वात् ते कुतो नोक्त इत्यत आह— **ह्रस्वेति ।।** तत् **समस्तशः** षट्सप्तयवादिरूपं सर्वमप्यङ्गुलं **ह्रस्वमध्योच्चभेदेन** अधममध्यमोत्तमभेदेन **मानं** परिमाणमित्यर्थः। तथाचोत्तमाङ्गुलिपरिमाणेनैव प्रतिमादेः कार्यत्वस्य मुख्यत्वात्तज्ज्ञापनार्थं तदेवोक्तमन्ययोरमुख्यत्वादनुक्तिरिति भावः। अत एव 'अङ्गुल्या मध्यरेखा तु' इति विशेषार्थकः तुशब्दः प्रयुक्तः। ननु हस्तादिपरिमाणस्य सत्वात्तदनुक्तिः कुत इत्यत आह— **प्रादेशेति ।।** प्रादेशहस्तादिमानं **सामान्यलक्षणम्** समं परिमाणं विशेषरहितमित्यर्थः। अयं भावः। अङ्गुल एव षड्यवादिरूपविशेषसत्वात् अत्र ग्राह्यमङ्गुलपरिमाणमेवोक्तम्। हस्तादौ परिमाणे विशेषाभावात्। हस्तादिपरिमाणं नोक्तमिति। यद्वा पूर्वं पुरुषप्रमाणप्रतिमाया एव षण्णवत्यङ्गुलत्वज्ञापनार्थं देवालयनिर्माणोपयोगिहस्तादिपरिमाणज्ञानाय च पुरुषाङ्गुष्ठमध्यरेखाङ्गुल-परिमाणमुक्तम्। इदानीं प्रादेशादिपरिमितप्रतिमाया अपि षण्णवत्यङ्गुलत्वं तत्तत्प्रतिमाया एवाङ्गुष्ठमध्यरेखारूपाङ्गुलेन ज्ञेयम्। व्रीहित्रयपरिमिताङ्गुलस्य तत्रासम्भवादित्याह— **स्वाङ्गुल्या इति ।।** अत्र स्वशब्देन प्रकृतक्रियमाण-

प्रतिमापरामर्शः । आदिशब्देन पिण्डिकापीठपरिग्रहः । स्वस्य यावत् परिमाणमूर्तिः कर्त्तुमिष्टा तावत्परिमाणां तत्प्रकृतिं प्रकल्प्य तां षण्णवतिधा विभज्य तत्रैकं भागमङ्गुलं प्रकल्प्य तादृशाङ्गुलेन तत्तदवयवोक्ताङ्गुलसङ्ख्यया प्रतिमायाः मुखाद्यङ्गानि शिल्पिभिः कारयेदिति भावः । ननु प्रतिमाङ्गुलमध्यरेखा सङ्ख्ययैव षण्णवत्यङ्गुलत्वं ज्ञेयं चेत् प्रतिमायाः ह्रस्वादिभेदेन नानाविधत्वात्कस्याः अङ्गुलं परिमाणत्वेन ग्राह्यमित्यत आह– **ह्रस्वेति ।। ह्रस्वमध्योच्चभेदेन** ह्रस्वमध्योच्चत्वपरिमाणभेदेन स्थितासु **समस्तशः** सर्वासु प्रतिमासु **तत्तन्मानं** तस्याः ह्रस्वादिप्रतिमायाः अङ्गुलमानं परिमाणत्वे ग्राह्य इत्यर्थः । कियत्कियत्परिमाणं ह्रस्वमध्योच्चशब्देन विवक्षितमित्यत आह– **प्रादेशेति ।।** प्रादेशमानं ह्रस्वं, हस्तमानं मध्यं, पुरुषमानमुच्चमित्युच्यत इति ज्ञेयम् । इदं प्रादेशादिपरिमाणं प्रतिमायाः सामान्यलक्षणम् । विशेषलक्षणं तु षण्णवत्यङ्गुलत्वेनोक्तमिति भावः । अत्र प्रादेशावधिप्रतिमैव गृहे पूज्येति ज्ञेयम् । तदुक्तं मात्स्ये–

अङ्गुष्ठपर्वमारभ्य वितस्तिर्यावदेव तु ।
गृहेषु प्रतिमा कार्या नाधिकोना प्रशस्यते ।। इति ।

अत्राङ्गुष्ठवितस्त्यादिकं प्रतिमाकारयितुरेव ग्राह्यम् । तथा च 'वितस्तिर्द्वादशाङ्गुलं' इत्युक्तेः अङ्गुष्टपर्वमारभ्य अङ्गुलादिक्रमेण द्वादशाङ्गुलपरिमाणावधिरेव प्रतिमा ग्रहे कार्या । द्वादशाङ्गुलाधिका अङ्गुष्ठपर्वन्यूना वा प्रतिमा न शस्यते न योग्येति प्रमाणार्थः ।। ५९ ।।

गर्भगृहद्वारस्य दैर्घ्यविस्तृतिकथनम् पठिस्योच्चत्वपरिमाणाभिधानं च

**तं.सा. प्रतिमाध्यर्धकं द्वार(द्वारे)मूर्ध्वमर्ध(मध्यं) च विस्तृतिः ।**
**प्रतिमार्धप्रमाणेन पीठस्योच्चत्वमुच्यते ।। ६० ।।**

**त.क.**– एवं प्रासङ्गिकं समाप्य गर्भगृहस्य द्वारपरिमाणाद्याह— **प्रतिमेति ।।** पुरुषप्रमाणप्रतिमैवात्र गृह्यते । द्वारे गृहस्येति शेषः । **प्रतिमाध्यर्धकं**

प्रतिमाप्रमाणापेक्षयाऽर्धाधिकप्रतिमाप्रमाणं चतुश्चत्वारिंशदधिकशतांगुलपरिमितमूर्ध्वे द्वारमुन्नतं कुर्यादिति यावत्। द्वारस्य विस्तारपरिमाणमाह— **अर्धं च विस्तृतिरिति ।।** अर्धमिति क्रियाविशेषणम्। सन्निधानात् प्रतिमाया इति लभ्यते। अष्टचत्वारिंशदंगुला द्वारस्य विस्तृतिः कार्येत्यर्थः। प्रतिमार्धं प्रमाणप्रसङ्गात् पीठेन्नतिप्रमाणमाह— **प्रतिमेति ।।** अष्टचत्वारिंशदंगुलोन्नतं पीठं कुर्यादित्यर्थः। द्वारोर्ध्वप्रमाणार्धप्रमाणा द्वारविस्तृतिः। प्रतिमार्धप्रमाणं पीठोच्चत्वमप्याह ।। ६० ।।

**अ.सं.–** इदानीं विमानप्रासादापरपर्यायगर्भगृहद्वारदैर्घ्यपरिमाणमाह– **प्रतिमेति ।।** अत्र प्रतिमाशब्देन पुरुषप्रमाणप्रतिमैव ग्राह्या। प्रादेशादिप्रतिमा तु न ग्राह्या। तस्मिन् पक्षे द्वारस्य अल्पत्वेन पुरुषस्य गर्भगृहप्रवेशायोगात्। **द्वारम् ऊर्ध्वं** द्वारदैर्घ्यामिति यावत्। **प्रतिमाध्यर्धकं** सार्धप्रतिमापरिमितं कार्यम्। द्वारविस्तारपरिमाणमाह– **अर्धश्च विस्तृतिरिति ।। अर्धं** प्रतिमार्धं द्वारदैर्घ्यार्धं वा पादोनप्रतिमामानमिति यावत् यथा स्यात्तथा द्वारस्य विस्तारः कार्य इत्यर्थः। उक्तं च शेखरे–

> गर्भगेहं त्रिभागैकद्वारविस्तारमाचरेत् ।
> विस्तारद्विगुणोत्सेधं द्वारं सर्वत्र कारयेत् ।। इति ।

त्रिभागैकद्वारविस्तारं त्रिभागः चतुर्धाविभक्तप्रतिमायाः भागत्रयोपेतः पादोनप्रतिमामान इति यावत्। एकद्वारविस्तारो यस्य तत्। एकद्वारमित्यनेन गर्भगृहस्य एकमेव द्वारं कार्यमित्युक्तं भवति। विस्तारद्विगुणोत्सेधं विस्तारापेक्षया द्विगुणितदैर्घ्योपेतम्। सार्धप्रतिमामानमिति यावदिति। पीठे दैर्घ्यमानमाह– **प्रतिमेति ।। पीठस्योच्चत्वं** दैर्घ्यं प्रतिमार्धप्रमाणेन इष्यते ।। ६० ।।

**गु.दी.–** पूर्वं 'किष्कुद्वादश'(३-५४) इति स्थानपरिमाणस्योक्तत्वादिदानीं देवालयविमानद्वारस्योर्ध्वपरिमाणमाह— **प्रतिमेति ।। द्वारं** विमानद्वारम्। **ऊर्ध्वं प्रतिमाध्यर्धकम्** सपीठायाः प्रतिमायाः सकाशादर्धाधिकं सार्धप्रतिमामानोच्चमित्यर्थः। विस्तृतिश्च द्वारस्येति शेषः। **अर्धम्** ऊर्ध्वमाने अर्धम्। पादन्यूनप्रतिमामानम्। 'मध्यं च विस्तृतिः' इति पाठे देवालयमण्टपमध्यप्रदेशो

**मध्यम्** । **विस्तृतिः** भित्तिविस्तारश्च प्रतिमाध्यर्धकमित्यर्थः । पीठस्योन्नतिमाह— **प्रतिमार्धेति** ।। **पीठस्य** आसनस्योच्चत्वं प्रतिमार्धप्रमाणेन ।। ६० ।।

**मङ्गाली**– इदानीं विमानप्रासादापरपर्यायगर्भग्रहद्वारदैर्घ्यपरिमाणमाह– **प्रतिमेति** ।। अत्र प्रतिमाशब्देन पुरुषप्रमाणप्रतिमैव ग्राह्या । प्रादेशादिप्रतिमाग्रहणे द्वारस्याल्पत्वेन पुरुषस्य गर्भगृहप्रवेशायोगात् । **द्वारमूर्ध्वं** द्वारदैर्घ्यं **प्रतिमाध्यर्धकं** सार्धप्रतिमापरिमितं कार्यम् । द्वारविस्तारपरिमाणमाह– **अर्धं च विस्तृतिरिति** ।। **अर्धं** प्रतिमार्धं द्वारदैर्घ्यार्धं वा पादोनप्रतिमामानमिति यावत्, यथा स्यात्तथा द्वारस्य विस्तारः कार्य इत्यर्थः । पीठदैर्घ्यमानमाह– **प्रतिमेति** ।। पीठस्योच्चत्वं दैर्घ्यं प्रतिमार्धप्रमाणेनेष्यते ।। ६० ।।

पिण्डिकादैर्घ्यकथनं, गर्भगृहान्तः प्रतिमोपरि विवरदैर्घ्यकथनं,
गर्भगृहाद्बहिः विमानोपरि विकल्पेन दैर्घ्यकथनं च

तं.सा. **उन्नतिः पिण्डिकायास्तु चतुरंगुलमानतः ।**
**त्र्यंगुलं व्यंगुलं वाऽपि गृहान्तः प्रतिमासमम् ।। ६१ ।।**

**उच्चं पर्यक् च क्रमश उच्चत्वं मध्यतः स्मृतम् ।**
**तावदुच्चं बहिश्चैव यद्येकं शिखरं भवेत् ।। ६२ ।।**

**अर्धोच्चमथवाऽपि स्यादधस्तात्प्रतिमोन्नतम् ।**
**ततो द्विगुणमानं वा सार्धप्रतिममेव वा ।। ६३ ।।**

**त.क.**– पीठप्रसंगात् तदाधारपिण्डिकोन्नतिप्रमाणमाह— **उन्नतिरिति** ।। पिण्डिकाया उन्नतिश्चतुरंगुलमानतः कार्या । त्र्यंगुलं व्यंगुलं वाऽपीति तत्रैव पक्षान्तरम् । क्रियाविशेषणमेतत् । उपपीठं पिण्डिकोच्यते तदुक्तम्—

अधस्तादुपपीठं स्यादधिष्ठानस्य धारकम् ।
शोभार्थं लक्षणार्थं च समुच्छ्रायार्थमेव वा ।।

प्रतिमाप्रमाणापेक्षयाऽर्धाधिकप्रतिमाप्रमाणं चतुश्चत्वारिंशदधिकशतांगुलपरिमितमूर्ध्वे द्वारमुन्नतं कुर्यादिति यावत्। द्वारस्य विस्तारपरिमाणमाह— **अर्धं च विस्तृतिरिति ॥** अर्धमिति क्रियाविशेषणम्। सन्निधानात् प्रतिमाया इति लभ्यते। अष्टचत्वारिंशदंगुला द्वारस्य विस्तृतिः कार्येत्यर्थः। प्रतिमार्थं प्रमाणप्रसङ्गात् पीठोन्नतिप्रमाणमाह— **प्रतिमेति ॥** अष्टचत्वारिंशदंगुलोन्नतं पीठं कुर्यादित्यर्थः। द्वारोर्ध्वप्रमाणार्धप्रमाणा द्वारविस्तृतिः। प्रतिमार्धप्रमाणं पीठोच्चत्वमप्याह ॥ ६० ॥

**अ.सं.–** इदानीं विमानप्रासादापरपर्यायगर्भगृहद्वारदैर्घ्यपरिमाणमाह– **प्रतिमेति ॥** अत्र प्रतिमाशब्देन पुरुषप्रमाणप्रतिमैव ग्राह्या। प्रादेशादिप्रतिमा तु न ग्राह्या। तस्मिन् पक्षे द्वारस्य अल्पत्वेन पुरुषस्य गर्भगृहप्रवेशायोगात्। **द्वारम् ऊर्ध्वं** द्वारदैर्घ्यामिति यावत्। **प्रतिमाध्यर्धकं** सार्धप्रतिमापरिमितं कार्यम्। द्वारविस्तारपरिमाणमाह– **अर्धश्च विस्तृतिरिति ॥ अर्धं** प्रतिमार्धं द्वारदैर्घ्यार्धं वा पादोनप्रतिमामानमिति यावत् यथा स्यात्तथा द्वारस्य विस्तारः कार्य इत्यर्थः। उक्तं च शेखरे–

गर्भगेहं त्रिभागैकद्वारविस्तारमाचरेत्।
विस्तारद्विगुणोत्सेधं द्वारं सर्वत्र कारयेत् ॥ इति।

त्रिभागैकद्वारविस्तारं त्रिभागः चतुर्धाविभक्तप्रतिमायाः भागत्रयोपेतः पादोनप्रतिमामान इति यावत्। एकद्वारविस्तारो यस्य तत्। एकद्वारमित्यनेन गर्भगृहस्य एकमेव द्वारं कार्यमित्युक्तं भवति। विस्तारद्विगुणोत्सेधं विस्तारापेक्षया द्विगुणितदैर्घ्योपेतम्। सार्धप्रतिमामानमिति यावदिति। पीठे दैर्घ्यमानमाह– **प्रतिमेति ॥ पीठस्योच्चत्वं** दैर्घ्यं प्रतिमार्धप्रमाणेन इष्यते ॥ ६० ॥

**गु.दी.–** पूर्वं 'किष्कुद्वादश'(३-५४) इति स्थानपरिमाणस्योक्तत्वादिदानीं देवालयविमानद्वारस्योर्ध्वपरिमाणमाह— **प्रतिमेति ॥ द्वारं** विमानद्वारम्। **ऊर्ध्वं प्रतिमाध्यर्धकम्** सपीठायाः प्रतिमायाः सकाशादर्धाधिकं सार्धप्रतिमामानोच्चमित्यर्थः। विस्तृतिश्च द्वारस्येति शेषः। **अर्धम्** ऊर्ध्वमाने अर्धम्। पादन्यूनप्रतिमामानम्। 'मध्यं च विस्तृतिः' इति पाठे देवालयमण्टपमध्यप्रदेशो

**मध्यम्** । **विस्तृतिः** भित्तिविस्तारश्च प्रतिमाध्यर्धकमित्यर्थः । पीठस्योन्नतिमाह— **प्रतिमार्धेति** ।। **पीठस्य** आसनस्योच्चत्वं प्रतिमार्धप्रमाणेन ।। ६० ।।

**मङ्गाली**– इदानीं विमानप्रासादापरपर्यायगर्भग्रहद्वारदैर्घ्यपरिमाणमाह– **प्रतिमेति** ।। अत्र प्रतिमाशब्देन पुरुषप्रमाणप्रतिमैव ग्राह्या । प्रादेशादिप्रतिमाग्रहणे द्वारस्याल्पत्वेन पुरुषस्य गर्भगृहप्रवेशायोगात् । **द्वारमूर्ध्वं** द्वारदैर्घ्यं **प्रतिमाध्यर्धकं** सार्धप्रतिमापरिमितं कार्यम् । द्वारविस्तारपरिमाणमाह– **अर्धं च विस्तृतिरिति** ।। **अर्धं** प्रतिमार्धं द्वारदैर्घ्यार्धं वा पादोनप्रतिमामानमिति यावत्, यथा स्यात्तथा द्वारस्य विस्तारः कार्य इत्यर्थः । पीठदैर्घ्यमानमाह– **प्रतिमेति** ।। पीठस्योच्चत्वं दैर्घ्यं प्रतिमार्धप्रमाणेनेष्यते ।। ६० ।।

पिण्डिकादैर्घ्यकथनं, गर्भगृहान्तः प्रतिमोपरि विवरदैर्घ्यकथनं,
गर्भगृहाद्बहिः विमानोपरि विकल्पेन दैर्घ्यकथनं च

तं.सा. **उन्नतिः पिण्डिकायास्तु चतुरंगुलमानतः ।**
**त्र्यंगुलं व्यंगुलं वाऽपि गृहान्तः प्रतिमासमम्** ।। ६१ ।।

**उच्चं पर्यक् च क्रमश उच्चत्वं मध्यतः स्मृतम् ।**
**तावदुच्चं बहिश्चैव यद्येकं शिखरं भवेत्** ।। ६२ ।।

**अर्धोच्चमथवाऽपि स्यादधस्तात्प्रतिमोन्नतम् ।**
**ततो द्विगुणमानं वा सार्धप्रतिममेव वा** ।। ६३ ।।

**त.क.**– पीठप्रसंगात् तदाधारपिण्डिकोन्नतिप्रमाणमाह— **उन्नतिरिति** ।। पिण्डिकाया उन्नतिश्चतुरंगुलमानतः कार्या । त्र्यंगुलं व्यंगुलं वाऽपीति तत्रैव पक्षान्तरम् । क्रियाविशेषणमेतत् । उपपीठं पिण्डिकोच्यते तदुक्तम्—

अधस्तादुपपीठं स्यादधिष्ठानस्य धारकम् ।
शोभार्थं लक्षणार्थं च समुच्छ्रायार्थमेव वा ।।

अधिष्ठानसमोत्सेधमर्धं वा स्यात्त्रिपादकम् ।
द्विगुणं त्रिगुणं वाऽपि कर्तव्यमुपपीठकम् ।। इत्यादि ।

गृहान्तः प्रतिमोपरि विवरदैर्घ्यप्रमाणमाह— **गृहेति ।।** गर्भगृहस्थान्तः प्रतिमाया उपरि **उच्चत्वं** उन्नतिः प्रतिमासमम् । षण्णवत्यंगुलपरिमितमित्यर्थः । पर्यक् तिर्यक् चोच्चत्वं प्रतिमासम् स्मृतम् । किं सर्वत्र तिर्यक्प्रमाणमेव ? नेत्याह— **मध्यत इति ।।** सप्तम्यर्थे तसिः । प्रतिमाया उपरि मध्यप्रदेश एव तिर्यक्प्रमाणं प्रतिमासममित्यर्थः । तर्हि तदन्यत्र किं मानमित्यत आह— **क्रमश इति ।।** क्रमशः किञ्चित् किञ्चिन्न्यूनमिति शेषः । विमानोपरि शिखरदैर्घ्यमाह— **तावदुच्चमिति ।।** विमानाद् बहिः एकं शिखरं गलरहितं यदि भवेत्तर्हि **तावदुच्चं कुर्यात्** प्रतिमासमोच्चं कुर्यात् । अथवा अर्धप्रतिमोच्चं कुर्यादित्यर्थः । अपिशब्दः तत्रैव पक्षान्तरसूचकः । अनेकशिखरपक्षे परिमाणस्य वक्तव्यत्वेऽपि प्रतिमामानत्वप्रसङ्गात् शिखरस्याधः गर्भगृहान्तः परिमाणं विकल्पेनाह— **अधस्तात् प्रतिमोन्नतमिति ।।** गर्भगृहान्तर्वर्तुलाकारविमानाधोभागे भूमिपर्यन्तं शिखरावधिकं विवरं प्रतिमासमानदीर्घम् । अथवा प्रतिमाद्विगुणमानम् । अथवा सार्धप्रतिमामानं स्यादिति सम्बन्धः ।। ६१-६३ ।।

**अ.सं–** पिण्डिकादैर्घ्यमानमाह– **उन्नतिरिति ।। पिण्डिकायाः** पीठाधःशिलायाः **उन्नतिरुच्चता चतुरङ्गुलमानतः** चतुरङ्गुलपीरमाणा, त्र्यङ्गुलं वा द्व्यङ्गुलं वा उन्नतिर्ज्ञेयेत्यर्थः । गृहात् प्रतिमोपरि विवरदैर्घ्यपरिमाणमाह– **गृहान्तरिति ।। गहान्तः** गर्भगृहमध्ये प्रतिमोपरि विवरं **मध्यतः** मध्यभाग एव **प्रतिमासमं** प्रतिमापरिमाणं **उच्चम्** दीर्घम् । मध्यभागादधः **पर्यक्** चतुर्दिक्षु वर्तुलाकारविवरस्य प्रतिमापरिमाणचतुरस्रिभित्तिपर्यन्तं प्रतिमापरिमाणापेक्षया क्रमेण किञ्चित् किञ्चित् न्यूनमुच्चत्वं स्मृतमित्यर्थः । बहिर्विमानोपरि शिखरदैर्घ्यमाह– **तावदिति ।। बहिर्गृहोपरि** यदि शिखरमेकमेव गलरहितं स्यात् तर्हि तच्छिखरं **तावत्** प्रतिमासममुच्चम् । पक्षान्तरमाह– **अर्धोच्चमिति ।।** अथवा **अर्धोच्चं** प्रतिमायाः अर्धमपि दीर्घं स्यादित्यर्थः । गृहान्तः यत आरभ्य वर्तुलता

विमानस्यास्ति तदधोभागपरिमाणमाह– **अधस्तादिति** ।। गर्भगृहान्तः **अधस्तात्** वर्तुलाकारविमानात् अधोभागे भूमिपर्यन्तं भित्त्यवच्छिन्नं विवरं **प्रतिमोन्नतं** प्रतिमासमदीर्घं **ततः** प्रतिमायाः द्विगुणमानं वा उच्चम् । **सार्धप्रतिमम्** सार्धप्रतिमामानं वा उच्चमित्यर्थः ।।६१-६३।।

**गु.दी–** पिण्डिकाया ऊर्ध्वपरिमाणमाह— **उन्नतिरित्यादिना** द्व्यङ्गुलं **वापीत्यन्तेन** ।। **पिण्डिकायाः** पीठाधःशिलायाः उन्नतिः **चतुरङ्गुलमानतः** चतुरङ्गुलमानात् द्व्यङ्गुलं त्र्यङ्गुलं वोन्नतिरित्यर्थः ।

देवालयान्तःस्थगर्भगृहस्य प्रतिमापेक्षयोपर्युन्नतिमाह— **गृहान्तरिति** ।। गर्भगृहान्तः तत्रापि **मध्यतो** मध्यभागे प्रतिमापेक्षयोपरीति शेषः । **प्रतिमासममुच्चं** प्रतिमाप्रमाणेनोच्चमित्यर्थः । **मध्यतः** मध्यप्रदेशापेक्षया **पर्यक्** परितः उच्चत्वं क्रमात् स्मृतमित्यर्थः ।।

इदानीं प्रतिमोर्ध्वभागे गृहाद्बहिरुन्नतिपरिमाणमाह— **तावदिति** ।। **बहिः** गर्भगृहादुपरि यदि **एकशिखरं** अङ्गुलिव्यवधानेन विना शिखरं साक्षाद्विमानसम्बद्धं भवेत्, तर्हि शिखराधारभूतं **तावदुच्चं** प्रतिमासमोच्चमथवा प्रतिमार्धोच्चं स्यादित्यर्थः । ननु यथा बहिर्विकल्पः तथा गृहान्तः प्रतिमोपरि प्रतिमामानं वैकल्पिकं किं नेत्याह— **अधस्तादिति** ।। शिखरादधस्तात् गृहान्तः प्रतिमोपरीति यावत् । प्रतिमासदृशोन्नतमेवेति योज्यम् । तेन 'गृहान्तः प्रतिमासमम्' (तं.सा.३-६१) इत्यनेनेदं पुनरुक्तमिति चोद्यं निरस्तम् । शिखराधारपरिमाणे पक्षद्वयमुक्तम् । पुनरपि पक्षद्वयमाह— **तत इति** ।। प्रतिमात इत्यर्थः ।। ६१-६३ ।।

**मङ्गाली–** पिण्डिकादैर्घ्यमाह– **उन्नतिरिति** ।। **पिण्डिकायाः** अधःशिलायाः **उन्नतिरुच्चता** **चतुरङ्गुलमानतः** चतुरङ्गुलपरिमाणा त्र्यङ्गुलं वा द्व्यंगुलं वा उन्नतिर्ज्ञेयेत्यर्थः । गृहान्तःप्रतिमोपरि विवरदैर्घ्यपरिमाणमाह– **गृहान्तरिति** ।। **ग्रहान्तः** गर्भगृहमध्ये प्रतिमोपरि विवरं **मध्यतः** मध्यभाग एव **प्रतिमासमं** प्रतिमापरिमाणमुच्चं दीर्घम् । मध्यभागादधः **पर्यक्** चतुर्दिक्षु वर्तुलाकारविवरस्य **क्रमशः** क्रमात् प्रतिमापरिमाणापेक्षया क्रमेण किञ्चिन्न्यूनमुच्चत्वं स्मृतं इत्यर्थः ।

बहिर्विमानोपरि यदि शिखरं **एकमेव** गलरहितं स्यात् तर्हि तच्छिखरं तावत् प्रतिमासममुच्चम् । पक्षान्तरमाह– **अर्धोच्चमिति** ।। अथावा **अर्धोच्चं** प्रतिमाया अर्धमपि दीर्घं स्यादित्यर्थः । गृहान्तर्यत आरभ्य विमानस्य वर्तुलताऽस्ति तदधोभागपरिमाणमाह– **अधस्तादिति** ।। गर्भगृहान्तः **अधस्तात्** वर्त्तुलाकार-विमानादधोभागे चतसृष्वपि दिक्षु भूमिपर्यन्तं भित्यवच्छिन्नं विवरं **प्रतिमोन्नतं** प्रतिमासमदीर्घम् । **ततः** प्रतिमायाः द्विगुणमानं वा उच्चं **सार्धप्रतिमं** सार्धप्रतिमानं वोच्चमित्यर्थः ।। ६१-६३ ।।

गलपरिमाणकथनम्, गलसाहित्यपक्षे शिखरपरिमाणकथनम्,
विकल्पेन विमानाकारकथनम् च

**त.सा.** **शिखरान्तरे तु प्रतिमामानं तद्गल उच्यते ।**
**तत्त्रिपादं तदर्धं वा तदध्यर्धमथापि वा ।। ६४ ।।**

**वर्तुलं पद्मसदृसं हस्तिपृष्ठसमं तथा ।**
**चतुरस्रं चाष्टकोणं विमानं परिकीर्तितम् ।। ६५ ।।**

**प्रतिमाया दशगुणं विंशद्गुणमथापि वा ।**
**वर्तुलं शिखरन्त्वेकं किरीटाकृतिमद्भवेत् ।। ६६ ।।**

**त.क.–** प्रकृतमनुसरन्नाह— **शिखरान्तरे त्विति** ।। शिखरस्यान्तरे व्यवधाने गलेन कियमाणे तु तद्गलं प्रतिमापरिमितमुच्यते । अथवा प्रतिमात्रिभागपरिमाणम् । अथवाऽपि **तदध्यर्धं** प्रतिमाध्यर्धं परिमाणमिति सम्वन्धः । गलशब्दः नपुंसकोऽप्यस्ति । अत्र शिखरविभागयोः गलो व्यवधायको नेति पक्षे तावदुच्चमित्यादिना प्राक् शिखरपरिमाणमुक्तम् । इदानीं तु गलस्य व्यवधायकत्वेऽपि विमानस्य प्रतिमामानत्वमेवाङ्गीकृत्य गलपरिमाणमुच्यत इति विवेक्तव्यम् । उपरि विमाननिर्माणप्रकारमाह— **वर्तुलमिति** ।। पद्माकारं वा गजपृष्ठाकारं वा वर्तुलं विमानं कार्यमित्यर्थः । पक्षान्तरमाह— **चतुरस्रमिति** ।। अष्टककोणयुक्तं चतुरस्रं वा विमानं कर्तव्यं परिकीर्तितमित्यर्थः ।।

पक्षान्तरमाश्रित्य विमानदैर्घ्यमाह— **प्रतिमाया इति** ।। प्रतिमाप्रमाणापेक्षया दशगुणम्, अथवा विंशद्गुणं विमानं कुर्यादित्यर्थः। अनेकशिखरपक्षे मध्यमशिखरस्याऽकृतिमाह— **वर्तुलमिति** ।। किरीटाकृतिशदृशाऽकृति मध्यं शिखरं भवेत् ।। ६४-६६ ।।

**अ.सं.**– इदानीं गलसाहित्यपक्षे शिखरस्य दैर्घ्यं वक्तुं शिखरादधः विमानोपरि विद्यमानगलाख्याकारस्य दैर्घ्यपरिमाणमाह– **शिखरान्तरेति** ।। **शिखरान्तरे तु** शिखरस्य अन्तरे व्यवधाने गलेन क्रियमाणे त्वित्यर्थः। विमानशिखरमध्ये विद्यमानमिति भावः। **तत् गलं** कण्ठसदृशाकारः प्रतिमामानमुच्यते। गलपक्षे शिखरपरिमाणमाह– **तत्त्रिपादमिति** ।। शिखरमित्यनुवर्त्तते । तच्छब्देन प्रतिमा परामृश्यते । तथाच शिखरं **तत्त्रिपादं** तस्याः प्रतिमायाः त्रिपादं भागत्रयपरिमितं वा **तदर्धं** प्रतिमार्धपरिमितं वा । **तदर्धार्धं** तस्याः प्रतिमायाः अर्धस्यार्धं वा पादपरिमितं वेत्यर्थः । अथवा तस्य प्रतिमार्धस्य अर्धार्धम् अर्धसहितार्धं सार्धपदं वेत्यर्थः। यद्वा 'यद्येकं शिखरं भवेत्' (तं.सा.३-६२) इत्यनेन एकशिखरपक्षे गलाभावात् गलपरिमाणं नोक्तम्। अनेकशिखरपक्षे तु गलस्य सत्वात् तत्परिमाणमाह– **शिखरान्तरे त्विति** ।। विमानोपरि शिखरान्तरे कर्तव्ये **तद्गलं** तस्य अधःस्थितशिखरस्य गलं प्रतिमामानम्। गलपरिमाणे पक्षान्तरमाह– **तत्त्रिपादमिति** ।। पूर्व एवार्थः। अथवा शिखरान्तरस्य परिमाणमाह– **तत्त्रिपादमिति** ।। शिखरान्तरमित्यनुवर्त्तते। पूर्व एवार्थः ।।

इदानी विमानाकारकरणे पक्षान्तराण्याह– **वर्तुलमिति** ।। वर्तुलाकारं वा **पद्मसदृशं** पद्माकारं वा । **हस्तिपृष्ठसमं वा** गजपृष्ठाकारं वा। चतुरस्राकारं वा अष्टकोणं वा विमानं कर्त्तव्यमिति प्रकीर्तितमित्यर्थः। अनेकशिखरपक्षे विमानोच्चतामाह– **प्रतिमाया इति**।। अनेकशिखरं विमानं प्रतिमापरिमाणापेक्षया दशगुणं विंशतिगुणं वोच्चं कुर्यादित्यर्थः । अनेकशिखरेषु मध्ये एकमूर्ध्वं शिखरं **किरीटाकृतिमत्** किरीटाकारं वर्तुलाकारमेव भवेत्। अन्येषां शिखराणामनियम इति भावः। अत्र विमानशिखरगलादिदैर्घ्यपरिमाणेषु विकल्पस्तु विमानानामुत्त-

ममध्यमाधमभेदेनानेकविधत्वाभिप्रायेणोक्तमित्यवधेयम्। तदुक्तम्– 'अधमो मध्यमः श्रेष्ठः प्रासादस्त्रिविधः स्मृतः' इति ।। ६४-६६ ।।

**गु.दी–** एवं शिखरतदाधारयोर्मध्ये गलो व्यवधायको नेति पक्षे शिखराधारपरिमाणमुक्तम् । तयोर्मध्ये गलस्य व्यवधायकत्वेऽपि तस्य तदेव परिमाणमङ्गीकृत्य व्यवधायकगलपरिमाणमाह— **शिखरान्तर इति ।।** शिखरस्यान्तरे व्यवधाने सति शिखराधारत्वेन पूर्वोक्ताद्वस्तुनः शिखरस्य गलेन व्यवधाने सतीति यावत्। **तस्य** शिखरस्य **गलः** गलति सङ्कोचयति प्रासादावयवानिति कण्ठसदेशः प्रदेशः प्रतिमापरिमित उच्यते। अस्मिन् पक्षे गलस्यैवेति साक्षात् शिखराधारत्वम्। पूर्वं साक्षात् शिखराधारत्वेन उक्तस्य तु गलाधारत्वमिति द्रष्टव्यम्। पक्षान्तराण्याह— **तदिति ।। तत् त्रिपादं** तस्याः प्रतिमायाः त्रिपादपरिमाणं पादोनप्रतिमामानमित्यर्थः। **तदर्धं** प्रतिमार्धम्। **तदध्यर्धं** तस्याः अध्यर्धं सार्धप्रतिमामानमित्यर्थः। अर्धेनाधिकमर्धम् **अध्यर्धम्**। **तस्य** प्रतिमार्धस्याध्यर्धं सार्धपादमिति वा ।।

गलोपरिभागे पूर्वादिदिक्षु निर्मातव्यवस्तुद्वयमाह— **वर्तुलमिति ।।** वर्तुलाकारं पत्रसदृशं वस्तु निर्मातव्यम्। तथा **हस्तिपृष्ठसमं** गजपृष्ठाकारं वस्तु निर्मातव्यमित्यर्थः। विमानस्य वर्तुलत्वभ्रान्तिं परिहरन् विस्तृतिमात्रमाह— **चतुरस्रमिति ।। चतुरस्रं** चतुष्कोणमष्टकोणं वा विमानं, गर्भगृहं प्रतिमायाः दशगुणमानमथवा विंशद्गुणमानं प्रकीर्तितम्। अत्र केचित्। वर्तुलाकारं पद्मसदृशं हस्तिपृष्ठसदृशं विमानमिति विमानविशेषणान्येव ।

गवाक्षजालसंयुक्तो विमानश्च प्रकीर्तितः ।
वर्तुलः पद्मकश्चैव विंशद्धस्त उदाहृतः ।
इभराण्मृगराजाख्यौ हस्तद्वादशकौ स्मृतौ ।।

इति हयशीर्षवचनात् इत्याहुः।

प्रासादादिगतानेकशिखरेषु प्रधानशिखरपरिमाणमाह— **वर्तुलमिति ।। एकं** प्रधानं शिखरं किरीटाकृतिमत् वर्तुलं च भवेत्। शिखरे विशेषस्तु शेखरे—

शिखरं कारयेद्धीमान् घण्टाकारसमाकृतिम् ।
शिखरस्याग्रभागे तु सिंहं तत्र च कारयेत् ।।

महावाराहमैन्द्र्यां तु नारसिंहं तु दिक्षणे ।
प्रतीच्यां श्रीधरं चैवमुदीच्यां हयशीर्षकम् ।।

आग्नेय्यां जामदग्न्यं च नैर्ऋते राममेव च ।
वायवीये योगनिद्रामीशे योगासनं भवेत् ।। इति ।। ६४-६६ ।।

**मङ्गाली–** इदानीं गलसाहित्यपक्षे शिखरस्य दैर्घ्यं वक्तुं शिखरादधः विमानोपरिविद्यमानगलाख्याकारस्य दैर्घ्यपरिमाणमाह– **शिखरान्तर इति ।।** शिखरस्य **अन्तरे** व्यवधाने गलेन क्रियमाणे तु इत्यर्थः । **तद्गलम्** कण्ठसदृशाकारं प्रतिमामानमुच्यते । गलपक्षे शिखरपरिमाणमाह– **तत् त्रिपादमिति ।।** शिखरमित्यनुवर्त्तते । तच्छब्देन प्रतिमायाः परामर्शः । तथा च शिखरं **तत्त्रिपादम्** तस्याः प्रतिमायाः त्रिपादं भागत्रयपरिमितं वा । **तदर्धं** प्रतिमार्धपरिमितं वा । **तदध्यार्धं** तस्याः प्रतिमायाः अर्धस्यार्धं वा । पादपरिमितं वेत्यर्थः । यद्वा 'यद्येकशिखरं भवेत्' (तं.सा.३-६२) इत्यनेन एकशिखरपक्षे गलभावात् गलपरिमाणं नोक्तम् । अनेकशिखरपक्षे तु गलस्य सत्वात् तत्परिमाणमाह–**शिखरान्तरे त्विति ।।** विमानोपरिशिखरान्तरे कर्त्तव्ये तद्गलं तस्यार्धः स्थितं शिखरगलं प्रतिमामानम् । गलपरिमाणे पक्षान्तराण्याह– **तत्त्रिपादमिति ।।** पूर्व एवार्थः ।।

इदानीं विमानाकारः कथं कार्य इत्यत आह– **वर्तुलमिति ।।** वर्तुलाकारं वा **पद्मसदृशं** पद्माकारं वा **हस्तिपृष्ठसमं** वा गजपृष्ठाकारं वा । चतुरस्राकारं वा अष्टकोणं वा विमानं कर्तव्यमिति प्रकीर्तितमित्यर्थः ।।

अनेकशिखरपक्षे विमानोच्चतामाह– **प्रतिमाया इति ।।** एकशिखरं प्रतिमापरिमाणापेक्षया दशगुणं विंशतिगुणोच्चं वा कुर्यादित्यर्थः । अनेकशिखरेषु मध्ये एकमूर्ध्वं शिखरं **किरीटाकृतिमद्भवेत्** किरीटाकारं वर्त्तुलाकारमेव भवेत् । अन्येषां शिखराणामनियम इति भावः । अत्र विमानशिखरगलादिदैर्घ्यपरिमाणेषु

विकल्पस्तु विमानानामुत्तममध्यमाधमत्वभेदेन त्रैविध्याभिप्रायेणेत्यवधेयम् । तदुक्तम्– 'अधमो मध्यमः श्रेष्ठः प्रासादस्त्रिविधः स्मृतः' इति ।। ६४-६६ ।।

मण्टपनिर्माणकथनम्, प्राकारनिर्माणकथनं,
सभानां व्यवधानपक्षे व्यवधानपरिमाणकथनं च

**तं.सा.** **सभयाऽपि समेतं वा पृथक्सभमथापि वा ।**
**द्विसभं त्रिसभं वाऽपि सगोपुरमथापि वा ।। ६७ ।।**

**प्राकारवृत्तयुक्तं वा सप्तप्राकारमेव वा ।**
**सम(सद्म)वृत्तं किष्कुमात्रं बहिर्वा चतुरस्रकम् ।। ६८ ।।**

**ततः परं किष्कुमात्रं सभाया अन्तरं यदि ।**
**ततस्तावत्तृतीयायाः सार्धमेव ह्युदाहृतम् ।। ६९ ।।**

**त.क.–** एवं सप्रपञ्चं सविमानं गर्भगृहं निरूप्य गर्भगृहस्य पुरतः मण्टपनिर्माणप्रकारं अनेकपक्षाश्रयणेन सप्रपञ्चमाह— **सभयाऽपीत्यादिना ।।** मण्टप एव सभोच्यते । तया समेतं, संश्लिष्टम् । विमानमिति सर्वत्र विशेष्यमनुवर्तते । पृथक् विश्लिष्टा सभा यस्य तत् । द्वे सभे यस्य तत् । तिस्रः सभा यस्य तत् । गोपुरेण सह वर्तत इति सगोपुरम् । वृत्तेन प्राकारेण युक्तम् । आहिताग्नित्वात् पूर्वनिपातः । सप्त प्राकारा यस्य तत् । गर्भगृहस्य पुरोभागे संश्लिष्ट एको मण्टपः । तत्पुरतः विश्लिष्ट एको मण्टपः । ततो गोपुरम् । ततो वर्तुलाकारप्राकारः । ततोऽपर इत्येवं सप्तप्राकारश्च कर्तव्या इत्यर्थः । तत्र प्रथमप्राकारस्यायामसमाकृतिं च विकल्पेनाऽह— **समवृत्तमिति ।।** आदावन्ते च समं घनं वृत्तं च यस्य यम् । अथवा **चतुरस्रं** चतुष्कोणं इत्याकृतौ विकल्पः । **किष्कुमात्रं** गर्भगृहाद्बहिः किष्कुमात्रायामं प्राकारं कुर्यादित्यर्थः । तदुक्तं पञ्चरात्रे—

परिवारनिवेशार्थं शोभार्थे मण्टपस्य च ।
रक्षणार्थं च परितः प्राकारं परिकल्पयेत् ।।

अन्तर्मण्डलनामानं प्रकारं प्रथमं विदुः ।
अन्तर्हारमतो वप्रं मध्याहारमनन्तरम् ।।

अनन्तरं च मर्यादा महामर्या तु पञ्चमम् ।
पञ्चैते चतुरस्रः स्युः ............।। इत्यादि । तथा,

प्राकारस्य चतुर्दिक्षु गोपुराणि प्रकल्पयेत् । इति ।।

किष्कुर्ह्यरत्निर्हस्तद्वयमित्येके । किष्कुमितायामप्रसङ्गात् प्रथमद्वितीयतृतीय-मण्टपानां विश्लेषपक्षे आयाममाह— **ततः परमित्यादिना ।। ततः** प्रथममण्टपात् **परं** सभाया अन्तरं यद्यभिलषितं स्यात्तदा किष्कुमात्रायामं कुर्यात् । ततः तृतीयायां सभायां मण्टपस्य सार्धं **तावदेव** सार्धकिष्कुपरिमाणमेवोदाहृतम् । पञ्चरात्रादौ अत्र सर्वत्रोत्तमाधममध्यम-कल्पानाश्रित्य देवालयनिर्माणप्रकार उच्यते । अतो बहवः पक्षा उक्ताः । कं पक्षमाश्रयामह इति व्यामोहो न कर्तव्यः । उत्तमाधममध्यमकल्पाश्रय-णेनानेकपक्षाभिधानं शास्त्रे प्रसिद्धमिति हिशब्देनाऽह । यथाऽह पञ्चरात्रे—

प्रभेदमधुना वक्ष्ये विमानानां सलक्षणम् ।
आत्यन्तिक(आनन्त्यात् तत्) प्रभेदानां किञ्चिदेव प्रदर्श्यते ।
विमानानि च भिद्यन्ते तलाधिष्ठानभेदतः ।। इत्यादि । यद्यप्यत्र,

चण्डप्रचण्डौ कर्तव्यौ द्वारगर्भगृहस्य तौ ।
दक्षिणोत्तरपार्श्वस्थौ मुनिवेषौ सहस्त्रियौ ।।

दंष्ट्राकरालवक्त्रौ भीमौ वा दण्डधारिणौ ।
कान्तावियुक्तौ विकटौ करण्डमकुटान्वितौ ।।

अर्धमण्डपकद्वारे शङ्खचक्राङ्किताङ्गिनौ (शङ्खचक्रोत्तमाङ्कितौ) ।
अन्तर्मण्डलसंज्ञस्य सालस्य द्वारपार्श्वयोः ।
जयश्च विजयश्चोभौ कर्तव्यौ तस्य गोपुरे ।। इत्यादि, तथा—

विकल्पस्तु विमानानामुत्तममध्यमाधमत्वभेदेन त्रैविध्याभिप्रायेणेत्यवधेयम्। तदुक्तम्– 'अधमो मध्यमः श्रेष्ठः प्रासादस्त्रिविधः स्मृतः' इति ।। ६४-६६ ।।

मण्टपनिर्माणकथनम्, प्राकारनिर्माणकथनं,
सभानां व्यवधानपक्षे व्यवधानपरिमाणकथनं च

**तं.सा. सभयाऽपि समेतं वा पृथक्सभमथापि वा ।**
**द्विसभं त्रिसभं वाऽपि सगोपुरमथापि वा ।। ६७ ।।**

**प्राकारवृत्तयुक्तं वा सप्तप्राकारमेव वा ।**
**सम(सद्म)वृत्तं किष्कुमात्रं बहिर्वा चतुरस्रकम् ।। ६८ ।।**

**ततः परं किष्कुमात्रं सभाया अन्तरं यदि ।**
**ततस्तावत्तृतीयायाः सार्धमेव ह्युदाहृतम् ।। ६९ ।।**

**त.क.–** एवं सप्रपञ्चं सविमानं गर्भगृहं निरूप्य गर्भगृहस्य पुरतः मण्टपनिर्माणप्रकारं अनेकपक्षाश्रयणेन सप्रपञ्चमाह— **सभयाऽपीत्यादिना ।।** मण्टप एव सभोच्यते। तया समेतं, संश्लिष्टम्। विमानमिति सर्वत्र विशेष्यमनुवर्तते। पृथक् विश्लिष्टा सभा यस्य तत्। द्वे सभे यस्य तत्। तिस्रः सभा यस्य तत्। गोपुरेण सह वर्तत इति सगोपुरम्। वृत्तेन प्राकारेण युक्तम्। आहिताग्नित्वात् पूर्वनिपातः। सप्त प्राकारा यस्य तत्। गर्भगृहस्य पुरोभागे संश्लिष्ट एको मण्टपः। तत्पुरतः विश्लिष्ट एको मण्टपः। ततो गोपुरम्। ततो वर्तुलाकारप्राकारः। ततोऽपर इत्येवं सप्तप्राकारश्च कर्तव्या इत्यर्थः। तत्र प्रथमप्राकारस्यायामसमाकृतिं च विकल्पेनाऽह— **समवृत्तमिति ।।** आदावन्ते च समं घनं वृत्तं च यस्य यम्। अथवा **चतुरस्रं** चतुष्कोणं इत्याकृतौ विकल्पः। **किष्कुमात्रं** गर्भगृहाद्बहिः किष्कुमात्रायामं प्राकारं कुर्यादित्यर्थः। तदुक्तं पञ्चरात्रे—

परिवारनिवेशार्थं शोभार्थे मण्टपस्य च ।
रक्षणार्थं च परितः प्राकारं परिकल्पयेत् ।।

अन्तर्मण्डलनामानं प्रकारं प्रथमं विदुः ।
अन्तर्हारमतो वप्रं मध्याहारमनन्तरम् ।।

अनन्तरं च मर्यादा महामर्या तु पञ्चमम् ।
पञ्चैते चतुरस्रः स्युः ............।। इत्यादि । तथा,

प्राकारस्य चतुर्दिक्षु गोपुराणि प्रकल्पयेत् । इति ।।

किष्कुर्ह्यरत्निर्हस्तद्वयमित्येके । किष्कुमितायामप्रसङ्गात् प्रथमद्वितीयतृतीय-मण्टपानां विश्लेषपक्षे आयाममाह— **ततः परमित्यादिना ।। ततः** प्रथममण्टपात् **परं** सभाया अन्तरं यद्यभिलषितं स्यात्तदा किष्कुमात्रायामं कुर्यात् । ततः तृतीयायां सभायां मण्टपस्य सार्धं **तावदेव** सार्धकिष्कुपरिमाणमेवोदाहृतम् । पञ्चरात्रादौ अत्र सर्वत्रोत्तमाधममध्यम-कल्पानाश्रित्य देवालयनिर्माणप्रकार उच्यते । अतो बहवः पक्षा उक्ताः । कं पक्षमाश्रयामह इति व्यामोहो न कर्तव्यः । उत्तमाधममध्यमकल्पाश्रय-णेनानेकपक्षाभिधानं शास्त्रे प्रसिद्धमिति हिशब्देनाऽह । यथाऽह पञ्चरात्रे—

प्रभेदमधुना वक्ष्ये विमानानां सलक्षणम् ।
आत्यन्तिक(आनन्त्यात् तत्) प्रभेदानां किञ्चिदेव प्रदर्श्यते ।
विमानानि च भिद्यन्ते तलाधिष्ठानभेदतः ।। इत्यादि । यद्यप्यत्र,

चण्डप्रचण्डौ कर्तव्यौ द्वारगर्भगृहस्य तौ ।
दक्षिणोत्तरपार्श्वस्थौ मुनिवेषौ सहस्त्रियौ ।।

दंष्ट्राकरालवक्त्रौ भीमौ वा दण्डधारिणौ ।
कान्तावियुक्तौ विकटौ करण्डमकुटान्वितौ ।।

अर्धमण्डपकद्वारे शङ्खचक्राङ्किताङ्गिनौ (शङ्खचक्रोत्तमाङ्कितौ) ।
अन्तर्मण्डलसंज्ञस्य सालस्य द्वारपार्श्वयोः ।
जयश्च विजयश्चोभौ कर्तव्यौ तस्य गोपुरे ।। इत्यादि, तथा—

चतुर्थावरणे कुर्यात् पाकस्थानं विचक्षणः ।
प्रथमावरणे वाऽपि द्वितीयावरणेऽपि वा ।।

तृतीयावरणे वाऽपि यथादेशानुकूलतः ।
इन्द्राग्निमध्ये चाग्नेये तस्य स्थानं विधीयते ।।

मध्येऽग्नियमयोः कुण्डं नित्यहोमाय कल्पते ।
अपूपपचनस्थानं मध्ये नैर्ऋत्तयाम्ययोः ।।

फलानि निक्षिपेन्मध्ये निर्ऋतेर्वरुणस्य च ।
द्वारं प्रकल्पयेत् प्रत्यङ् मध्ये वायुजलेशयोः ।। इत्यादि, तथा—

वारुणे भावयेत् सौम्ये कूपं शार्वे तथा भवेत् ।
यत्र वा वारिणस्सन्ति तत्र कूपं प्रकल्पयेत् ।। तथा—

प्राकारणां तु सर्वेषां बहिष्ठा दीर्घिका भवेत् ।
शास्त्रश्रवणशक्तानां वेदाध्ययनशालिनाम् ।।

यतीनामितरेषां च मठः कार्यो बहिर्भवेत् ।
सदनानि च कार्याणि देवमाश्रित्य तिष्ठताम् ।।

इत्यादिवचनात् तान्यपि वक्तव्यानि । तथापि विस्तरभयात् नोच्यत इति भावः । यथाह— 'अस्य संक्षेपशास्त्रत्वात्' (तं.सा.३-४७) इति ।। ६७-६९ ।।

**अ.सं–** एवं विमाननिर्माणप्रकारमभिधाय विमानपुरोभागे कर्त्तव्यमण्टपमाह– **सभयेति ।।** विमानं स्वपुरोभागे सभया मण्टपेन **समेतं** सम्बद्धं भवेत् । गर्भगृहपुरोभागे व्यवधानरहितं मण्डपं कुर्यादित भावः । **पृथक्सभं वा** पृथक् विमानासंबद्धा सभा यस्य तत्तथोक्तम् । व्यवधानेन वा मण्टपं कुर्यादिति भावः । शक्त्यनुसारेण सभाद्वयं वा सभात्रयं वा कुर्यादित्याह– **द्विसभमिति ।।** द्वे सभे यस्य तत्तथोक्तम् । तिस्रः सभा यस्य तत्तथोक्तम् । एतादृशं विमानं कुर्यादित्यर्थः। एतास्तु सभाः विमानात् पुरतः एका, तत्पुरतो द्वितीया, तत्पुरतस्तृतीयेति क्रमेण कार्येति ज्ञेयम् । विमानपुरोभागमण्टपविस्तार उक्तो हयशीर्षे–

विस्तारं मण्टपस्याग्रे गर्भसूत्रद्वयेन तु ।
दैर्घ्यात्पादाधिकं कुर्यात् मध्ये स्तम्भैर्विभूषितम् ॥
प्रासादगर्भमानं वा कुर्वीत मुखमण्टपम् ॥ इति ।

बहिर्द्वारमाह– **सगोपुरमिति ।** गोपुरेण बहिर्द्वारेण सहितम् । **अथ वेति** विकल्पस्तु गोपुररहितविमानस्यापि विद्यमानत्वात् । देवालयस्य प्राकारमाह– **प्राकारेति ॥** प्राकाररूपं यद्वृत्तं तेन युक्तं वा वर्तुलैकप्राकारयुक्तं वेत्यर्थः । सप्तप्राकारयुक्तं वा । एवकारः अनेकशिखरविमानपक्षे सप्तप्राकारत्वस्य नियममाह । प्राकारवृत्तपरिमाणपूर्वकमाकारविशेषमाह– **समेति ॥ बहिर्विमानात्** परितः प्राकारं **किष्कुमात्रं** हस्तद्वयपरिमितम् । 'किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः' इत्युक्तेः । **समवृत्तम्** समतया वृत्तं वर्तुलं वा चतुरस्रं वा कुर्यादित्यर्थः । सप्तप्राकारपक्षेऽन्तः षट्प्राकाराः वर्तुलाः बहिः सप्तमः चतुरस्र इति वा । केचित्तु विमानाद्बहिः समवृत्तं वा चतुरस्रं वा किष्कुमात्रविस्तृतं मण्डपं कुर्यादित्यर्थ इत्याहुः । 'सद्म वृत्तं' इति पाठे विमानाद्बहिः वृत्तं वा चतुरस्रं वा किष्कुमात्रं सद्म कुर्यादित्यर्थः ॥

विमानात् सभानां व्यवधानपक्षे व्यवधानपरिमाणमाह– **तत इति ॥** यदि विमानात्सभायां सभायाः **अन्तरं** व्यवधानमभिलषितं तर्हि **ततः परं** विमानाद्बहिः **किष्कुमात्रं** हस्तद्वयपरिमाणमेव व्यवधानं कार्यमित्यर्थः । **ततः** प्रथमसभायाः सकाशात् द्वितीयसभाया इति शेषः । **तावत्** किष्कुमात्रमेव व्यवधानम् । तृतीयायास्तु द्वितीयापेक्षया सार्धकिष्कुप्रमाणं व्यवधानमुदाहृतम् ॥ ६७-६९ ॥

**गु.दी.**– विमानस्य पुरतः सभा कार्या । सा चैका वा द्विसङ्ख्याका वा त्रिसङ्ख्याका वा । तत्राद्या सभा विमानसम्बद्धा वा कार्येत्याह— **सभयेति ॥** विमानमित्यनुवर्तते । यत्रावस्थिताः सन्तो लोकाः प्रतिमामवलोकयन्ते सा सभा अत्रोच्यते । तया **समेतं** संयुक्तम् । पृथक् असम्बद्धा सभा यस्य तत्**पृथक्सभम् ।** मन्दिरासम्बद्धसभोपेतमित्यर्थः । त्रिसभमित्येतत् एकस्या अग्रे अन्या तदग्रतोऽपरेति ज्ञेयम् । गोपुरेण सहितं **सगोपुरम् । अथाऽपि वेति**

निपातसमुदायोऽनुक्तपक्षान्तरार्थः। गोपुररहितं वेति। केचित् सभयाऽभिसमेतं नैवेद्यमण्टपयुतम्। **पृथक्सभं** नैवेद्यसभातिरिक्तसभा पुरुषसूक्तमण्टपस्तद्युक्तम्। तत्पुरतो द्विसभं गरुडमण्टपः। त्रिसभं वाहनमण्टपः। तत्पुरतः प्राकारयुक्तं सप्तप्राकारयुक्तं वेत्यर्थ इति व्याचक्षते ॥

प्राकारमाह— **प्राकारेति** ॥ वृत्तेति पूर्वं योज्यम्। परनिपातश्छान्दसः। कडारादिगणस्थत्वाद्वा। वृत्तो वर्तुलो यः प्राकारस्तेन युक्तम्। वाशब्दाच्चतुरस्रप्राकारम्। सप्तप्राकारमेव वा। उत्तमे सप्तप्राकारयुक्तमेव। वाशब्देन प्राकारत्रयपक्षादेः सङ्ग्रहः ॥ **समेति** ॥ **बहिः** विमानात् परितः **किष्कुमात्रं** हस्तमात्रं द्विचत्वारिंशदङ्गुलपरिमितं वा समवृत्तं वा। चतुरस्रकं वा कार्यमित्यर्थः। 'किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः' इत्यादित्यपुराणात्। 'सद्मवृत्तम्' इति पाठे सद्मभिर्युक्तं वृत्तं चेत्यर्थः ॥

देवमन्दिरस्य सभायाश्च व्यवधानाभावपक्षे किष्कुमात्रमित्युक्तम्। पृथक्सभमित्युक्तव्यवधानपक्षे त्वाह– **ततः परमिति** ॥ सभायाः विमानस्यान्तरं **यदि** तर्हि **ततः** किष्कुमात्रप्रदेशात् **परं** परतः किष्कुमात्रं कार्यम्। व्यवधानपक्षे किष्कुद्वयं कार्यमित्यर्थः। आद्यसभायाः विमानाद्व्यवधानपक्षे द्वितीयतृतीययोः स्वस्वपूर्वापेक्षया व्यवधानं कार्यम्। तत्र द्वितीयायाः प्रथमापेक्षया तृतीयायाः द्वितीयापेक्षया कियद्व्यवधानमित्यपेक्षायामाह— **ततस्तावदिति** ॥ **ततः** तदनन्तरसभायाः द्वितीयाया इति यावत्। **तावत्** किष्कुद्वयव्यवधानं कार्यमित्यर्थः। **तृतीयायाः** सभायाः स्वपूर्वापेक्षया सार्धं **तावदेव** किष्कुद्वयमेव व्यवधानमुदाहृतम्। किष्कुत्रयव्यवधानं कार्यमिति भावः। अन्ये तु– **ततः** देवमन्दिरात् परं प्रथमसभायाः किष्कुमात्रमन्तरं भवति। **ततः** प्रथमतः द्वितीयायाः **तावत्** किष्कुमात्रम्। तृतीयायाः **सार्धमेव** किष्कुप्रमाणमन्तरमुदाहृतमित्यर्थ इत्याहुः ॥ ६७-६९ ॥

**मङ्गाली**— एवं विमाननिर्माणप्रकारमभिधाय विमानपुरोभागे कर्तव्यमण्टपमाह– **सभयेति** ॥ विमानं स्वपुरोभागे **सभया** मण्डपेन **समेतं** सम्बन्धं भवेत्। गर्भगृहपुरोभागे व्यवधानरहितं मण्डपं कुर्यादिति भावः।

**पृथक्सभं** पृथक्विमानसम्वद्धा सभा यस्य तत्तथोक्तम् । व्यवधानेन वा मण्डपं कुर्यादिति भावः । शक्त्यनुसारेण द्वे सभे यस्य, तिस्रो वा सभा यस्य तत्तथोक्तम् । तादृशं वा कुर्यादिति भावः । सभाया अनेकत्वपक्षे विमानात्पुरतः एकसभा तत्पुरुतो द्वितीयेत्यादि ज्ञेयम् । बहिर्द्वारमाह– **सगोपुरमिति ।।** गोपुरेण बहिर्द्वारेण सहितम् । **अथ वेति** विकल्पः गोपुररहितविमानस्य प्रकारमाह । प्राकाररूपं यद्वृत्तं तेन युक्तं वा । वर्तुलैकप्राकारयुक्तं वेत्यर्थः । सप्तप्राकारयुक्तं वा । एवकार अनेकशिखरविमानपक्षे सप्तप्राकारत्वस्य नियममाह । प्राकारवृत्तपरिमाणपूर्वकं आकारवृत्तपरिमाणपूर्वकं आकारविशेषमाह– **समेति ।।** बहिर्विमानात् । परितः प्राकारं **किष्कुमात्रं** हस्तद्वयपरिमितम् । 'किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलः' इत्युक्तेः । **समवृत्तं** समतया वृत्तं वर्त्तुलं वा चतुरस्रं वा कुर्यादित्यर्थः । सप्तप्राकारपक्षे अन्तः षट् प्राकाराः वर्त्तुलाद्बहिः सप्तमः चतुरस्र इति वा । केचित्तु विमानाद्बहिस्समवृत्तं वा चतुरस्रं वा किष्कुमात्रविस्तृतं मण्टपं कुर्यादित्यर्थ इत्याहुः । 'सद्मवृत्तं' इति पाठे विमानाद्बहिः वृत्तं वा चतुरस्रं वा किष्कुमात्रं सद्म कुर्यादित्यर्थः ।।

विमानात्सभानां व्यवधानपक्षे व्यवधानपरिमाणमाह– **तत इति ।।** यदि विमानात् सभायां सभायाः **अन्तरं** व्यवधानमभिलषितं तर्हि **ततः परं** विमानाद्बहिः **किष्कुमात्रं** हस्तद्वयपरिमाणं व्यवधानं कार्यमित्यर्थः । **ततः** प्रथमसभायाः सकाशात् । द्वितीयसभाया इति शेषः । **तावत्** किष्कुमात्रमेव व्यवधानं, तृतीयायास्तु द्वितीयापेक्षया सार्धकिष्कुप्रमाणव्यवधानमुदाहृतम् ।। ६७-६९ ।।

इन्द्राद्यालयस्थानतत्परिमाणाभिधानम्, प्रतिष्ठाङ्गमण्टपनिर्माणकथनं च

**तं.सा.** **किष्कुत्रयं च शक्रादेः स्थानं तद्वृत्ततः स्मृतम् ।**
**ततस्तु मण्टपं कुर्यात् प्रतिष्ठायाः सुलक्षणम् ।। ७० ।।**

**त.क.–** द्वारे चण्डं प्रचण्डं च क्षेत्रपालं खगेश्वरम् ।
इन्द्रादिलोकपालांश्चेत्यासु दिक्षु प्रकल्पयेत् ।।

क्षेत्रेशमीशकोणेषु गणेशं नैर्ऋते यजेत् ।
अशरीरगतान् देवान् स्थण्डिले पूजयेद् बुधः ।।

इत्यादिवचनानुसारात् इन्द्रादीनामपि पूज्यत्वावगमात् तेषां पूजाप्रकारादिकम् उपदिश्य देवालयप्रसङ्गात् तदालयपरिमाणमाह— **किष्कुत्रयमिति ।।** शक्रादेः स्थानं किष्कुत्रयं कार्यम्। तद्वृत्ततः स्मृतमित्याकृतिरुच्यते। तच्छक्रादिस्थानं वृत्तं प्रमितमित्यर्थः। स्वार्थे तसिः। ल्यब्लोपमित्तपञ्चम्यन्ताद्वा तसिः। प्राकारवृत्तमपेक्ष्य किष्कुत्रयायामं कुर्यात्। प्रकारस्य विस्तृतिमपेक्ष्य इदमुच्यते। किष्कुत्रयादधिकायामत्वे बहूनां देवानामालयनिर्माणानुपपत्तेः किष्कुत्रयायाममेव कुर्यादिति भावः। **तद्वृत्ततः** गर्भगृहस्य यत् वृत्तं वर्तुलं तस्मात् बहिरन्तर्मण्डल-नामके प्रथमप्राकारे कुर्यादिति शेषपूरणेन वा योज्यम्। तदुक्तम्—

अन्तर्मण्डलके कुर्यात् परिवारालयं बुधः । इति ।

प्रासादस्याग्रतः कुर्यादधिवासनमण्टपम् ।
प्रथमावरणे कुर्याद् द्वितीयावरणेऽपि वा ।।

तृतीयावरणे वाऽपि देशे योग्यावकाशके ।
आशास्वष्टस्वभिमते देशे मण्टपकल्पनम् ।।

विस्तीर्णं दशभिर्हस्तैस्तावद्भिश्चायततं करैः ।
चतुर्दिक्षु चतुर्द्वारं मण्टपं परिकल्पयेत् ।।

इति वचनात् प्रतिष्ठामण्टपस्य आवश्यकत्वात् तन्निर्माणं संक्षेपतो दर्शयति— **ततस्त्विति ।।** त्रलर्थे तसिः। 'प्रासादस्याग्रतः' इत्युक्तप्रदेशः तच्छब्देन परामृश्यते। प्रतिष्ठाया मण्टपमधिवासनमण्टपमिति च एकोऽर्थः। 'सुलक्षणम्' इत्यनेन 'विस्तीर्णं दशभिर्हस्तैः' इत्यादिनोक्तलक्षणसंग्रहः। तुशब्देन मण्टपान्तः वेदिकाकुण्डादिकार्यविशेषं सूचयति । तच्चोक्तम्—

तन्मध्ये पञ्चहस्ता स्याद्वेदिर्हस्तसमुच्छ्रया ।
चतुरश्रेष्टकचिता कुण्डानि परितस्ततः ।।

वेदिकायास्त्रिताले तु समानि विषमाणि वा ।
चतुरस्रं चतुर्विंशत्यंगुलं भूतलं खनेत् ।।

विस्तारायामसदृशं परितः खातभूतलम् ।
व्यंगुलं तद्बहिः कल्प्यं मेखलात्रयमैष्टकम् ।।

तालोत्सेधमितात्पूर्वा मध्यमाऽष्टांगुलोन्नता ।
तदर्धेनोच्छ्रिता चांत्या विस्तारश्चतुरंगुलः ।।

सर्वासां सात्त्विका चाद्या मध्यमा राजसी मता ।
अन्त्या च तामसी ज्ञेया योनिः पञ्चदशांगुला ।।

आयता मूलमारभ्य विस्तीर्णा क्रमशो भवेत् ।
अंगुलैर्दशभिः षड्भिश्चतुर्भिर्व्यंगुलेन च (वा) ।।

एकेन चाग्रे कल्प्यैवं मेखलोपरि शोभना ।
योनिवत् सन्निवेशेन पिप्पलाच्छाद(च्छद्म)वद्भवेत् ।।

क्रमेण निम्ना प्रत्यक्स्था कुण्डाग्रे विनिवेशिता ।
अग्रे च योनिनालं स्याच्चतुरंगुलमायतम् ।।

त्र्यंगुलं नहने(नं) मूले मुखे चैव षडंगुलम् ।
काहलाकारवत्कार्यं यमस्य दिशि वा भवेत् ।।

योनिर्होता यदि भवेदुदीचीनमुखः स्वयम् ।
स्नानमण्टपमीशान्यां दिशि तत्र प्रकल्पयेत् ।।

स्नानवेदिश्च तत्र स्यात् प्राग्भागे हस्तसम्मिता ।
स्रुक्स्रुवं लक्षणोपेतं होमार्थं परिकल्पयेत् ।।

पालाशं खदिरां वाऽपि स्रुवं यद्वाऽन्यवृक्षगाम् ।
याज्ञिकां कल्पयेच्छिल्पाद्बाहुदण्डसमायताम् ।
स्वर्णादिलोहजां वाऽपि दारुजां वाऽपि भूषिताम् ।। इत्यादि ।

विवरिष्यते च प्रतिष्ठामण्टपनिर्माणप्रकारः 'सप्तपर्णमयम्'(तं.सा.३-८०) इत्यादिना ।। ७० ।।

क्षेत्रेशमीशकोणेषु गणेशं नैर्ऋते यजेत् ।
अशरीरगतान् देवान् स्थण्डिले पूजयेद् बुधः ।।

इत्यादिवचनानुसारात् इन्द्रादीनामपि पूज्यत्वावगमात् तेषां पूजाप्रकारादिकम् उपदिश्य देवालयप्रसङ्गात् तदालयपरिमाणमाह— **किष्कुत्रयमिति ।।** शक्रादेः स्थानं किष्कुत्रयं कार्यम्। तद्वृत्ततः स्मृतमित्याकृतिरुच्यते। तच्छक्रादिस्थानं वृत्तं प्रमितमित्यर्थः। स्वार्थे तसिः। ल्यब्लोपमित्तपञ्चम्यन्ताद्वा तसिः। प्राकारवृत्तमपेक्ष्य किष्कुत्रयायामं कुर्यात्। प्रकारस्य विस्तृतिमपेक्ष्य इदमुच्यते। किष्कुत्रयादधिकायामत्वे बहूनां देवानामालयनिर्माणानुपपत्तेः किष्कुत्रयायाममेव कुर्यादिति भावः। **तद्वृत्ततः** गर्भगृहस्य यत् वृत्तं वर्तुलं तस्मात् बहिरन्तर्मण्डल-नामके प्रथमप्राकारे कुर्यादिति शेषपूरणेन वा योज्यम्। तदुक्तम्—

अन्तर्मण्डलके कुर्यात् परिवारालयं बुधः । इति ।

प्रासादस्याग्रतः कुर्यादधिवासनमण्टपम् ।
प्रथमावरणे कुर्याद् द्वितीयावरणेऽपि वा ।।

तृतीयावरणे वाऽपि देशे योग्यावकाशके ।
आशास्वष्टस्वभिमते देशे मण्टपकल्पनम् ।।

विस्तीर्णं दशभिर्हस्तैस्तावद्भिश्चायततं करैः ।
चतुर्दिक्षु चतुर्द्वारं मण्टपं परिकल्पयेत् ।।

इति वचनात् प्रतिष्ठामण्टपस्य आवश्यकत्वात् तन्निर्माणं संक्षेपतो दर्शयति— **ततस्त्विति ।।** त्रलर्थे तसिः। 'प्रासादस्याग्रतः' इत्युक्तप्रदेशः तच्छब्देन परामृश्यते। प्रतिष्ठाया मण्टपमधिवासनमण्टपमिति च एकोऽर्थः। 'सुलक्षणम्' इत्यनेन 'विस्तीर्णं दशभिर्हस्तैः' इत्यादिनोक्तलक्षणसंग्रहः। तुशब्देन मण्टपान्तः वेदिकाकुण्डादिकार्यविशेषं सूचयति । तच्चोक्तम्—

तन्मध्ये पञ्चहस्ता स्याद्वेदिर्हस्तसमुच्छ्रया ।
चतुरश्रेष्टकचिता कुण्डानि परितस्ततः ।।

वेदिकायास्त्रिताले तु समानि विष्माणि वा ।
चतुरस्रं चतुर्विंशत्यंगुलं भूतलं खनेत् ।।

विस्तारायामसदृशं परितः खातभूतलम् ।
त्र्यंगुलं तद्बहिः कल्प्यं मेखलात्रयमैष्टकम् ।।

तालोत्सेधमितात्पूर्वा मध्यमाऽष्टांगुलोन्नता ।
तदर्धेनोच्छ्रिता चांत्या विस्तारश्चतुरंगुलः ।।

सर्वासां सात्विका चाद्या मध्यमा राजसी मता ।
अन्त्या च तामसी ज्ञेया योनिः पञ्चदशांगुला ।।

आयता मूलमारभ्य विस्तीर्णा क्रमशो भवेत् ।
अंगुलैर्दशभिः षड्भिश्चतुर्भिर्व्यंगुलेन च (वा) ।।

एकेन चाग्रे कल्प्यैवं मेखलोपरि शोभना ।
योनिवत् सन्निवेशेन पिप्पलाच्छाद(च्छद्म)वद्भावेत् ।।

क्रमेण निम्ना प्रत्यक्स्था कुण्डाग्रे विनिवेशिता ।
अग्रे च योनिनालं स्याच्चतुरंगुलमायतम् ।।

त्र्यंगुलं नहने(नं) मूले मुखे चैव षडंगुलम् ।
काहलाकारवत्कार्यं यमस्य दिशि वा भवेत् ।।

योनिर्होता यदि भवेदुदीचीनमुखः स्वयम् ।
स्नानमण्टपमीशान्यां दिशि तत्र प्रकल्पयेत् ।।

स्नानवेदिश्च तत्र स्यात् प्राग्भागे हस्तसम्मिता ।
स्रुक्स्रुवं लक्षणोपेतं होमार्थं परिकल्पयेत् ।।

पालाशं खदिरां वाऽपि स्रुवं यद्वाऽन्यवृक्षगाम् ।
याज्ञिकां कल्पयेच्छिल्पाद्बाहुदण्डसमायताम् ।
स्वर्णादिलोहजां वाऽपि दारुजां वाऽपि भूषिताम् ।। इत्यादि ।

विवरिष्यते च प्रतिष्ठामण्टपनिर्माणप्रकारः 'सप्तपर्णमयम्'(तं.सा.३-८०) इत्यादिना ।। ७० ।।

**अ.सं.–** विमानापेक्षया पूर्वादिदिक्षु इन्द्राद्यालयः कार्यः । तत्स्थानं तत्परिमाणं चाह– **किष्कुत्रयमिति ।। तद्वृत्ततः** तस्मिन् वृत्ततः वृत्तवहिः प्राकारे पूर्वादिदिक्षु, **किष्कुत्रयं** हस्तत्रयपरिमितं शक्रादेः स्थानं प्रत्येकं स्मृतम् । तच्चोक्तं शेखरे–

अन्तर्मण्डलके कुर्यात् परिवारं न पण्डितः ।
प्रतिष्ठाप्यास्तथा देवाः लोकपालाः स्वदिग्गताः ।। इति ।

एवं देवालयनिर्माणप्रकारमभिधाय प्रतिमायाः प्राणप्रतिष्ठाप्रकारमभिधातुं प्रतिष्ठोपयुक्तं मण्टपविशेषं कुर्यादित्याह– **तत इति ।। ततः** देवालयनिर्माणानन्तरं प्रतिमायाः प्रतिष्ठां कर्त्तुं सुलक्षणं मण्टपं कुर्यादित्यर्थः ।। ७० ।।

**गु.दी.–** विमानापेक्षया पूर्वादिदिक्षु शक्राद्यालयः कार्यः । तत्परिमाणमाह— **किष्कुत्रयमिति ।।** शक्रादेस्तत्स्थानं **वृत्ततो** वृत्तं किष्कुत्रयं च स्मृतमित्यर्थः । एवं देवालयनिर्माणप्रकारं समभिधाय प्रतिष्ठाप्रकारमभिधातुं प्रतिष्ठामण्डपनिर्माणमाह— **तत इति ।।** ७० ।।

**मङ्गाली–** विमानापेक्षया पूर्वादिदिक्षु इन्द्राद्यालयः कार्यः । तत्स्थानं तत्परिमाणं चाह– **किष्कुत्रयमिति ।। तद्वृत्ततः** तस्मिन् वृत्ततः वृत्तवहिः प्राकारे पूर्वादिदिक्षु **किष्कुत्रयं** हस्तत्रयपरिमितं शक्रादेः स्थानं प्रत्येकं स्मृतम् । तच्चोक्तं शेखरे–

अन्तर्मण्डलके कुर्यात्परिवारं न पण्डितः ।
प्रतिष्ठाप्यास्तथा देवाः लोकपालाः स्वदिग्गताः ।। इति ।

एवं देवालयनिर्माणप्रकारमभिधाय प्रतिमायाः प्राणप्रतिष्ठाप्रकारमभिधातुं प्रतिष्ठोपयुक्तं मण्टपविशेषं कुर्यादित्याह– **तत इति ।। ततो** देवालयनिर्माणानन्तरं प्रतिमायाः प्रतिष्ठां कर्तुं सुलक्षणं मण्डपं कुर्यादित्यर्थः ।। ७० ।।

### वास्तुस्वरूप-वास्तुपूजाप्रकारभिधानम्

**त.सा. पूजयेद्वास्तुपुरुषस्योपरिष्ठांस्तु सर्वदा ।**
**देवान् ब्रह्मादिकान् वास्तुर्वराहस्य हरेः सुतः ।। ७१ ।।**

**पातितो दैवतैर्भूमौ चतुरस्राकृतिः स्थितः ।**
**कृत्वाऽष्टकाष्टकोष्ठानि मध्ये ब्रह्मा चतुष्टये ।। ७२ ।।**

**पूज्यो द्वये द्वये शक्रो यमो वरुण एव च ।**
**सोमश्च पूज्यः कोणेषु वह्न्याद्याः कोणदेवताः ।। ७३ ।।**

**त.क–** ननु मण्टपनिर्माणादौ 'श्रेयांसि बहुविघ्नानि' इति न्यायेन विघ्नानां सम्भावितत्वात् कथं तदुपशमो भविष्यतीत्याशङ्क्य—

.........स देवान् वास्तुसंस्थितान् ।
तेनासौ वर्तते नो चेदुत्तिष्ठेन्माधवाज्ञया ।।

ततश्च तेषां ये पूजाविमुखास्तैः कृतानि तु ।
सुकृतानि समादद्युर्दुष्कृतानि च कुर्वते ।।

ततस्तेषामर्चनं तु प्रत्यब्दं कुर्वतां सताम् ।
शुभान्येवाशु जायन्ते नैवाशुभकथानि च ।।

इत्यादिवचनद्वारा वास्तुपूजा अशेषविघ्नवारिणी इत्यभिप्रेत्य सप्रपञ्चं वास्तुपूजाप्रकारः प्रपञ्च्यते– **पूजयेद्वास्तुपुरुषस्येत्यादिना प्रगपि पूजयेदित्यन्तेन ।।** यद्यप्ययं वास्तुपूजाप्रकारः 'हरिं तत्रापि संपूज्य बलिं दत्वाऽपि पूर्ववत्'(३-५६) इत्यतः प्रागेव वक्तव्यः। तथापि नेयं वास्तुपूजा देवालयनिर्माणार्था। किन्तु अग्रहारकूपारामादिनिर्माणेऽपि। अत एवाह 'दिक्ष्वष्टसु यथायोगमेवं ग्रामादि कल्पयेत्' इति । तथा च सर्वशुभकर्माङ्गत्वविक्षस्यै क्रमभेद आश्रितः। अ एवाह– **सर्वदेति ।।** वास्तुपुरुषस्योपरि स्थितान् ब्रह्मादिकान् देवान् पूजयेत् इत्युक्त्या वास्तुपुरुषस्यैवेयं पूजा इति सूचयति। तमिमं विशेषं तुशब्दो दर्शयति। को वास्तुः किमाकृतिरित्यतः तत्सर्वं लेशतः दर्शयति– **वास्तुरिति ।।** 'वराहस्य सुतो दैवतैः भूमौ निपातितः' इत्यनेन स्वरूपमसारमिति दर्शितः। देवपदायोग्यत्वात् देवपदमाकाङ्क्षमाणं देवाः भूमौ न्यपातयन् । स च देवैः पातितः अधोमुखः प्रविसरन् चतुरस्राकृतिः पपातेति इतिहाससूचनात्। यथाऽह–

वास्तुर्नामा चतुर्वक्त्रो भगवत्स्वेदसम्भवः ।
अभ्यद्रवत् सुरान् हन्तुमात्मनो बलदर्पितः ।।

स देवैस्त्रासितस्तूर्णमपतद्भुवि विह्वलः ।।
विस्रस्ताङ्गस्य च प्राणान् धारयेदिह वास्तुकः ।

अधोमुखं प्राक्शिरसं विन्यसेद्वास्तुपूरुषम् ।
प्रसार्य पाणिपदौ द्वौ कोणभूमिप्रकल्पितौ ।।

तमर्चयेत् प्रयत्नेत् कर्म दैवं यथा भवेत् ।
अनर्चिते वास्तुदेवे कृतं कर्माऽसुरं भवेत् ।।

मण्टपे दक्षिणे पार्श्वे वास्तुदेवं लिखेद्भुवि ।
सप्तदर्भकृतं कूर्चं कृत्वा तत्र विनिक्षिपेत् ।
तत्रार्चयेद्वस्तुनाथं गन्धपुष्पादिभिः क्रमात् ।। इति । तथा—

अधोमुखं प्राक्शिरसं विन्यसेद्वास्तुपुरुषम् ।
प्रसार्य पाणिपादौ द्वौ भूकोणेषु प्रकल्पितौ ।
एवं ध्यात्वा समभ्यर्च्य पुरुषं वास्तुकल्पितम् ।। इति ।

न तैवमसुरस्य पूजाविधानमयुक्तमिति वाच्यम् ।
भूताः पिशाचा नागाश्च असुरा राक्षसा ग्रहाः ।
सर्वे तु व्यवगच्छन्तु बलितुष्टा यथायथम् ।।

भूतानां च पिशाचानां रक्षसां दितिजन्मनाम् ।
ग्रहाणामपि नागानां अन्येषां च बलिं क्षिपेत् ।।

इत्यादिना बलिदानादिक्रमेण पूज्यत्वसम्भवात्। अत एव तुशब्देनैव तत्पूजामह, न साक्षादिति ध्येयम् ।

वास्तुपुरुषस्योपरि ब्रह्मादिदेवानां कथमवस्थितिरित्यतस्तत्प्रकारं सङ्क्षेपतो दर्शयन् तत्पूजाप्रकारं निरूपयति ।। **कृत्वेति ।।** कोष्ठशब्देन रेखाविशेष-चिह्नितप्रदेश उच्यते । अष्टौ च तानि कोष्ठानि च अष्टकोष्ठानि । अष्टकोष्ठानाम्

अष्टकम् अष्टकाष्टकोष्ठानि । वाऽहिताग्न्यादित्वात् परनिपातः । यद्वा अष्टानां समूहः अष्टकम् । अष्टकानाम् अष्टौ अष्टकाष्टौ । ततः कर्मधारयः । चतुःषष्ठिप्रदेशान् सम्पाद्येत्यर्थः । चतुःषष्ठिमन्दिराणां मध्ये स्थितमन्दिरचतुष्टये चतुर्मुखः पूज्यः । ततः पूर्वभागस्थितमन्दिरद्वये शक्रः । दक्षिणतः स्थिते मन्दिरद्वये यमः । ततः पश्चिमतः स्थिते मन्दिरद्वये वरुणः । ततः उत्तरस्थिते मन्दिरद्वये सोमश्च पूज्यः । आद्यश्चशब्दो पूज्यशब्दस्य द्विरनुवृत्तिं सूचयति । एवशब्देन पूजावश्यकतां सूचयति । आग्नेयादिकोणेषु वह्न्याद्याः अग्निनिर्ऋतिवाय्वीशाना कोणदेवताः पूज्याः इति संबन्धः ।।७०-७३।।

**अ.सं.**– मण्टपकरणाङ्गभूतवास्तुपूजामाह– **पूजयेदिति** ।। वास्तुपुरुषस्योपरिस्थान् ब्रह्मादिकान् देवान् पूजयेत् । तुशब्दात् वास्तुपुरुषमपि । **सर्वदे**त्युक्त्या न प्रतिमाप्रतिष्ठायामेवेदम् । किन्तु नूतनगृहप्रवेशे कूपतटाकादिप्रतिष्ठायामपि वास्तुदेवतापूजनं कार्यमिति सूचयति । तदुक्तं कापिलेये–

सर्वान् देवांस्तु कार्येषु पूजयेद्वास्तुसंस्थितान् ।
तेनासौ वर्तते नो चेत् उत्तिष्ठेन्माधवाज्ञया ।।

ततश्च तेषां ये पूजाविमुखास्तैः कृतानि तु ।
सुकृतानि समाद्युः दुष्कृतानि च कुर्वते ।।

ततस्तेषामर्चनं तु प्रत्यब्दं कुर्वतां सताम् ।
शुभान्येवाशु जायन्ते नैवाशुभकथाऽपि वा ।। इति ।

कार्येषु नूतनप्रतिमगृहकूपतटाकादिप्रतिष्ठाकार्येष्विति प्रमाणगतकार्यपदार्थः ।

वास्तुस्वरूपमाह– **वास्तुरिति** ।। वराहनाम्नो हरेः सुतः वास्तुः तन्नामा । दैवतैः पातितः सन् भूमौ **चतुरस्राकृतिः** चतुष्कोणाकारः स्थितः । न तु वृत्ताकारः त्रिकोणाकारो वा । उक्तं च कापिलेये– 'देवैः स वास्तुपुरुषः स्थापितश्चतुरस्रकः' इति ।

वास्तुपूजाप्रकारमाह– **कृत्वेति** ।। अष्टानां वर्गः अष्टकम् । अष्टकेन युक्तानि च

तानि अष्टकानि चेति तथोक्तानि । चतुःषष्टिकोष्ठानीत्यर्थः । अयमर्थः । आदौ समचतुरस्रं वास्तुनामकं पीठं कृत्वा तदुपरि गोपीचन्दनगैरिकादिना आदौ नवसङ्ख्याकाः दीर्घाः रेखाः कृत्वा नवसङ्ख्याकासु रेखास्वेव पुनर्नवसङ्ख्यकाः तिर्यक् रेखाः कृताश्चेत् अष्टाष्टकोष्टवत्यः अष्टपङ्क्त्यो भवन्ति । अष्टपङ्क्तिगतकोष्ठानि मिलितानि चतुःषष्टिकोष्ठानि भवन्तीति । अत्र कोष्ठशब्देन रेखान्तर्गता गृहा उच्यन्ते । तथा च वास्तुनामके चतुरस्रपीठे चतुःषष्टिमन्दिराणि कृत्वा तेषु देवान् पूजयेदिति सम्बन्धः । तदुक्तं हयशीर्षे– 'चतुःषष्टिपदं वास्तु प्रासादेषु प्रशस्यते' इति । प्रासादेषु नूतनविमानादिकार्येष्वित्यर्थः । तथा–

पीठनामपदं कुर्यात् चतुरस्राष्टसंमितम् ।
ब्रह्माद्या लोकपालाश्च मध्ये प्रागादिकोष्ठगाः ।। इति ।

चतुःषष्टिकोष्ठेषु पूज्यदेवानाह– **मध्य इत्यादिना।। मध्ये** चतुःषष्टिकोष्ठमध्यस्थे कोष्टचतुष्टये ब्रह्मा पूज्यः । सर्वमध्यगतकोष्ठचतुष्टयापेक्षया बहिःपङ्क्तौ पूज्यानाह– **द्वये द्वये इति ।।** पूर्वादिचतुर्दिक्षु **द्वये द्वये** कोष्ठद्वये । कोष्ठद्वये इन्द्राद्याः चत्वारः पूज्या इत्यर्थः । अयं भावः । पूर्वस्यां दिशि कोष्ठद्वये इन्द्रः पूज्यः । दक्षिणस्यां दिशि कोष्ठद्वये यमः । पश्चिमायां कोष्टद्वये वरुणः । उत्तरस्यां दिशि कोष्टद्वये सोमः पूज्य इति । **कोणेषु** आग्नेयादिचतुष्कोणेषु **कोणदेवताः** आग्नेयादिकोणाभिमानिनः वह्न्याद्याश्चत्वारो देवाः पूज्याः । अयमर्थः । आग्नेयकोणे वह्निः । नैर्ऋत्यकोणे निर्ऋतिः वायवीयकोणे वायुः । ऐशान्यकोणे ईशानः पूज्या इति भावः ।। ७१-७३ ।।

**गु.दी.–** प्रतिष्ठाया अर्थे प्रतिष्ठामण्टपान्तर्वास्तुपुरुषोपरि देवतापूजामाह– **पूजयेदिति ।।** मण्टपाधः वास्तुपुरुषः । तस्योपरिस्थान् **ब्रह्मादिकान् देवान्** ब्रह्माणमारभ्य बुधान्तान् वक्ष्यमाणान् एकोनपञ्चाशद्देवान् वक्ष्यमाणचतुष्षष्टिस्थानेषु पूजयेत् । तुशब्दाद्वास्तुपुरुषमपि । सर्वदेत्युक्त्या न प्रतिष्ठाकाल एव, अपि तु भूपरिग्रहवास्तुकरणगृहप्रवेशमण्टपकूपतटाकग्राम-प्रतिष्ठादावपि पूजयेदिति सूचयति । तदुक्तं मात्स्ये—

प्रासादभवनोद्यानप्रारम्भे गेहवेशने ।
द्वाराभिवर्तने तद्वत् प्रासादपरिवर्तने ।।

पुरवेश्मप्रवेशे च सर्वदोषोपशान्तये ।
वास्तूपशमनं कृत्वा ततः सूत्रेण वेष्टयेत् ।। इति ।

तस्य स्वरूपमाह— **वास्तुरिति** ।। **वास्तुः** वास्तुनामको देवो **हरेः** वराहस्य सुतो दैवतैः पातितो भूमौ चतुरस्राकृतिः स्थितः । वराहस्य सुत इत्यनेन—

कश्यपस्य गृहिणी नु सिंहिका राहुवास्तुतनयावजीजनत् ।
पूर्वजो हरिनिकृन्तकन्धरो, दैवतैरवरजो निपातितः ।।

इति पदार्थादर्शादिग्रन्थान्तरोक्ता, 'शक्रक्रोधात् समुत्पन्नो वास्तुर्यज्ञापहारकः' इति शैवागमे चोक्तोत्पत्तिर्नेति सूचयति । अस्य विस्तृतिवर्णादयः पञ्चरात्रे–

पूर्वमासीन्महानुग्रः सर्वभूतभयङ्करः ।
स देवैर्निहितो भूमौ स वास्तुपुरुषः स्मृतः ।।

यावद्भूमिः स्थिरा लोके तावद्वास्त्वसुरः स्मृतः ।
संहारे तु लयं याति देवैः सर्वग्रहादिभिः ।।

विस्तारोऽस्य समन्ताच्च शतकोटिसुयोजनः ।
संस्थितोऽसौ धरां व्याप्य प्रोन्नतः कृष्णवर्णकः ।। इति ।।

वास्तुपुरुषस्योपरि ब्रह्मादिकान् पूजयेदित्युक्तम् । तत्प्रकारं विवरितुं चतुष्षष्ठिस्थानयुक्तं वास्तुमण्डलस्थलमाह– **कृत्वेति** ।। अष्टानां समूहः **अष्टकम्** । अष्टकेन युक्तानि अष्टकोष्ठानि चतुष्षष्ठिमन्दिराणीति यावत् । तत्र मध्ये प्रथमावरणे कोष्ठचतुष्टयम् । द्वितीयावरणे पूर्वादिदिक्षु द्वे द्वे कोणेष्वेकमेकमिति कोष्ठद्वादशकम् । तृतीयावरणे चतुर्दिक्षु त्रीणि त्रीणि कोष्ठानि कोणेष्वेकैकमिति षोडश कोष्ठानि । चतुर्थावरणे एकैकस्यां दिशि कोणस्थेन सहाष्टसङ्ख्याकानि कोष्ठानि वर्तन्ते एवं चतुर्दिक्षु मिलित्वा द्वात्रिंशत्कोष्ठानीति चतुष्षष्ठिकोष्ठान्यभिप्रेत्य तेषु देवता आह— **मध्य इति** ।। मध्ये कोष्ठचतुष्टये

ब्रह्मा पूज्यः। बहिर्दिक्ष्विति वक्ष्यमाणपदद्वयमत्र सर्वत्राऽकृष्यते। तथा चेयं योजना– तद्बहिः पूर्वादिदिक्षु द्वये द्वये शक्राद्याः चत्वारः पूज्याः। शक्रो द्वये यमो द्वये वरुणो द्वये सोमश्च द्वय इति। **वह्न्याद्याः** वह्निनिर्ऋतिवाय्वीशानाः कोणदेवताः कोणेषु पूज्याः। पुनर्वह्निस्तृतीयावरणे पूर्वादिदिक्षु त्रये त्रये कोष्ठे कामादीन् पूजयेत्। कोणचतुष्टये सूर्यादिचतुरः पूजयेत्। **बहिः** तृतीयावरणाद्बहिः चतुर्थावरणे **दिक्षु** पूर्वादिदिक्षु वक्ष्यमाणान् प्रत्येकं पूजयेत् ।। ७१-७३ ।।

**मङ्गली–** मण्डपकरणाङ्गभूतां वास्तुपूजामाह– **पूजयेदिति** ।। वास्तुपुरुषस्योपरिस्थान् ब्रह्मादिकान् देवान्पूजयेत्। तुशब्दाद्वास्तुपुरुषमपि। 'सर्वदा' इत्युक्त्या न प्रतिमाप्रतिष्ठायामेवेदं किं तु नूतनगृहप्रवेशकूपतटाकादिप्रतिष्ठायामपि वास्तुदेवतापूजनमभिप्रेति । तदुक्तं कापिलेये–

सर्वान्देवांस्तु कार्येषु पूजयेद्वास्तुसंस्थितान् ।
तेनासौ वर्तते नो चेत् उत्तिष्ठेन्माधवाज्ञया ।।

ततश्च तेषां ये पूजाविमुखास्तैः कृतानि तु ।
सुकृतानि समादद्युः दुष्कृतानि च कुर्वते ।।

ततस्तेषामर्चनं तु प्रत्यब्दं कुर्वतां सताम् ।
शुभान्येवाशु जायन्ते नैवाशुभकथापि वा ।। इति ।

वास्तुस्वरूपमाह– **वास्तुरिति** ।। वराहनाम्नो हरेः सुतो वास्तुः तन्नामादेवतैः पातितः सन् भूमौ **चतुरस्राकृतिः** चतुष्कोणाकारः स्थितः। वास्तुपूजाप्रकारमाह– **कृत्वेति** ।। **अष्टकाष्टकोष्ठानि** अष्टैव अष्टकानि अष्ट च तानि च कोष्ठानि च अष्टकोष्ठानि। अष्टकानि च तानि अष्टकोष्ठानि चेति तथोक्तानि चतुष्षष्ठिकोष्ठानि इत्यर्थः। अन्ये तु अष्टानां वर्गः अष्टकं, अष्टकेन युक्तानि च तानि अष्टकोष्ठानि चेति तथोक्तानीत्याहुः। कोष्ठशब्देन रेखान्तर्गता गृहा उच्यन्ते। गोपीचन्दनादिना नवसङ्ख्यादीर्घरेखाः कृत्वा तत्रैव पुनर्नवसङ्ख्याकाः तिर्यक् अर्वाचीनारेखाः क्रियंते चेत् अष्टाष्टकोष्ठवत्योऽष्टपङ्क्यो भवंति। अष्टपङ्क्तिगतकोष्ठानि चतुःषष्ठिसङ्ख्याकानि भवन्तीति भावः । तथा च

वास्तुनामके चतुरस्रपीठे चतुःषष्टिमन्दिराणि कृत्वा तेषु देवान्पूजयेदिति सम्वन्धः। चतुःषष्टिकोष्टेषु पूज्यदेवानाह– **मध्य इत्यादिना ॥ मध्ये** चतुःषष्ठिकोष्ठमध्यस्थे कोष्ठचतुष्टये ब्रह्मा पूज्यः। सर्वमध्यगतकोष्ठचतुष्टयापेक्षया बहिः पङ्क्तौ पूज्यानाह– **द्वये द्वय इति ॥** पूर्वादिचतुर्दिक्षु क्रमेण द्वये द्वये कोष्ठद्वये इन्द्राद्याश्चत्वारः पूज्या इत्यर्थः। तत्रावशिष्टेषु चतुष्कोणकोष्ठेषु पूज्यानाह– **कोणेष्विति ॥ कोणेषु** आग्नेयादिचतुष्कोणेषु **कोणदेवताः** अग्नेयादिकोणाभिमानिनो वह्न्याद्याश्चत्वारो देवाः क्रमेण पूज्याः। आद्यपदेन निऋतिवाय्वीशानाः ग्राह्याः ॥ ७१-७३ ॥

**तं.सा.** **पुनस्त्रये त्रये कामं धातारं सविधातृकम् ।**
**स्कन्दश्च पूजयेत् कोणे सूर्यं चैव विनायकम् ॥ ७४ ॥**

**कालं कुबेरं च बहिः प्रत्येकं दिक्षु पूजयेत् ।**
**हारं हरिं गभीरं च गाहनं गे(ग)हनं गुहम्(शुभम्) ॥ ७५ ॥**

**भात(नु,त्रात)मङ्गारकश्चैव पूर्वस्यां दिशि पूजयेत् ।**
**दारुणं विदिरं(विदरं) दूतं प्रद्येतं द्योतनिं दिरम् ॥ ७६ ॥**

**मृत्युं शनैश्चरं चैव दिक्षणस्यां प्रपूजयेत् ।**
**पुष्करं क्षरणं क्षारं(रिं) विक्षणं क्षोभणं क्षरम् ॥ ७७ ॥**

**चार्वङ्गं भार्गवं चैव पश्चिमायां प्रपूजयेत् ।**
**चारं विचारं प्रचरं सञ्चारं चरणं चरम् ॥ ७८ ॥**

**बृहस्पतिं बुधं चैवाप्युत्तरस्यां प्रपूजयेत् ।**
**एवमेव विमानस्य कृतेः प्रागपि पूजयेत् ॥ ७९ ॥**

**त.क.–** एवं षोडशानां मन्दिराणां व्यये ततोऽवशिष्टानां पंक्त्यन्तरस्थितानां ग्रहाणां पूजास्थानत्वं दर्शयन् पूज्यदेवता दर्शयति ॥ **पुनरिति॥** शक्रादिपंक्तेरुपरि स्थितायां पंक्तौ विद्यमानानां गृहाणां त्रये त्रये एकैकं कामं, धातारं, विधातारं,

स्कन्दं च पूजयेदिति संबन्धः। शक्रस्थानादुपरि प्राग्भागे स्थितानामीशानाद्याग्नेयान्तानां षण्णां मन्दिराणां मध्ये ईशानकोणे कुबेरः। तत एकं मन्दिरं विहाय मन्दिरत्रये कामः । तत आग्नेयकोणे सूर्यः । ततो दक्षिणतः स्थितायां तस्यामेव श्रेण्यामवस्थितानां पञ्चानां मदिराणां मध्ये एकं मन्दिरं विहाय मन्दिरत्रये धाता । नैर्ऋतकोणे विनायकः । ततः पश्चिमस्थायां पंक्तौ स्थितानां पञ्चानां मन्दिराणां मध्ये मन्दिरत्रये विधाता । तत एकं मन्दिरं विहाय वायव्यकोणे कालः । तत उत्तरभागस्थितपंक्तौ स्थितानां विंशतिगृहाणां मध्ये षोडशगृहाणामेवं विनियोगो द्रष्टव्यः। तृतीयश्रेणी-स्थितानामष्टाविंशतिगृहाधिष्ठानत्वं वदन् तत्र पूज्यदेवता वक्तुमाह ।। **बहिः प्रत्येकमिति ।।** द्वितीयश्रेण्या बहिः तृतीयश्रेणीस्थितगृहेषु प्राच्यादिदिक्षु प्रत्येकं वक्ष्यमाणमेव पूजयेदिति संबन्धः। तत्र प्राचीं दिशमनुक्रम्य देवताः निर्दिशति ।। **हरिमित्यादिना ।।** हरिमारभ्य अङ्गारकान्तान् अष्टौ देवान् पूर्वस्यां दिशि पूजयेत्। तत्रायं क्रमः । ईशान्यकोणे हरिः। तदनन्तरं हारः । ततो गभीरा । ततो गाहनः। ततो गेहनः। ततो गुहः। ततो भातः, आग्नेयकोणे अङ्गारक इत्येवं पूर्वदिक्स्थितानां गृहाणां विनियोगमुक्त्वा दक्षिणदिक्स्थितानां सप्तानां गृहाणां पश्चिमदिक्स्थितैकगृहेण सह विनियोगमाह ।। **दारुणमित्यादिना ।।** तत्र दक्षिणदिग्भागस्थितप्रथमे गृहे दारुणः । ततो विदिरः । ततो दूतः । ततः प्रद्योतः । ततो द्योतनिः । ततो दिरः । नैर्ऋतकोणे मृत्युः । ततः पश्चिमदिक्स्थिताद्यगृहे शनैश्चर इति क्रमः। ततः पश्चिमदिशि स्थितं द्वितीयमन्दिरमारभ्योत्तर-दिक्स्थितद्वितीयमन्दिरपर्यन्तानां विनियोगमाह ।। **पुष्करमित्यादिना ।।** तत्र पश्चिमदिक्स्थितद्वितीयगृहे पुष्करः । ततः क्षरणः । ततः क्षारः । ततो विक्षणः । ततः क्षोभणः। ततः क्षरः। ततः चार्वङ्गः। ततो भार्गव इति क्रमः। इदानीमुत्तरदिक्स्थितानां चतुर्णां गृहाणां विनियोगमाह ।। **चारमित्यादिना ।।** तत्रोत्तरभागस्थिततृतीयगृहे चारः । ततो विचारः । ततः प्रचरः । ततोऽन्तिमगृहे सञ्चारः। ततो द्वितीयश्रेणीस्थप्राग्दिस्थितद्वितीयगृहे चरणः । ततो द्वितीयश्रेणीस्थ-दक्षिणदिग्भागे प्रथमगृहे चरः। ततो द्वितीयश्रेणीस्थपश्चिमदिग्भागे चतुर्थगृहे

बृहस्पतिः । द्वितीयश्रेणीस्थोत्तरदिग्भागे चतुर्थगृहे बुध इति क्रमः । प्रपूजये-दित्यनेन तत्तद्देवताध्यानपूर्वकतोच्यते । तत्प्रकारः चतुर्थे तत्तन्मन्त्रोद्धारावसरे वक्ष्यते । यद्यपि पञ्चरात्रे पाद्मे तन्त्रे—

वास्तुदेवस्य शिरसि पूजयेदंशुमालिनम् ।
ऋषभध्वजं बाहुमूले कुमारं कूपरे तथा ।।

हस्ते विनायकं पादयुग्मले चाश्विदेवते ।
मध्ये चन्द्रं तथा पार्ष्ण्योर्दुर्गां मातृंश्च कूर्परे ।।

बाहुमूले तथा स्थाणुं हृदये मामवस्थितम् ।
ब्रह्माणं नाभिदेशे च दिक्पालान् स्वासु दिक्षु च ।
क्षेत्रेशमुत्तरे पार्श्वे वास्तुनाथस्य पूजयेत् ।

इति ब्रह्मादिदेवानां वास्तुशरीरोपरि पूजाप्रकारः प्रकारान्तरेणाभिहितः । तथापि देवालयनिर्माणाङ्गवास्तुपूजायामयं विधिः, कालान्तरे वास्तुपूजायामन्यो विधिरित्यदोषः । अत एव वास्तुपूजायाः सर्वशुभकर्माङ्गत्वं श्रूयते । अत एव 'एवमेव विमानस्य कृतेः प्रागपि पूजयेत्'(३-७९) इत्यतिदेशवाक्ये एवशब्देन पक्षान्तरनिरासः । अत्र चतुःषष्ठिमन्दिराणि कृत्वेति वक्तव्ये यत् अष्टकाष्ट-कोष्ठानि कृत्वा इत्याह तच्चतुःषष्ठिमन्दिरकरणे प्रागायतान्यष्टौ सूत्राणि विधाय उदगग्राणां चाष्टानां सूत्राणां विधाने चतुःषष्ठिकोष्ठानि जायन्त इति प्रदर्शनार्थ-मिति ध्येयम् ।

ननु प्रतिष्ठामण्टपोपक्रमे वास्तुपूजाविधानाद्देवालयोपक्रमे न कर्तव्या स्यात् । न चैवं तदिष्टम् । पञ्चरात्रादौ अग्रहारकूपारामदेवालयोपक्रमादावावश्यक-कर्तव्यतोक्तेरित्यतः वास्तुपूजामन्यत्राप्यतिदिशति ।। **एवमेवेति** ।। विमानं देवालयः । नन्विदं तत्रैव कुतो नोक्तमिति चेत् । कोऽत्र विशेषः स्यात् । अतिदेशक्लेशो न भवेदिति चेत् । प्रतिष्ठामण्डपनिर्माणेऽप्यस्य आवश्यकत्वद्योत-नार्थत्वाददोषः । एवशब्देन—

आचार्यो यजमानेन सहितो वास्तुसीमनि ।
नृत्यैर्वाद्यैश्च तूर्यैश्च तथा मङ्गलपाठकैः ।।

पूर्णकुम्भैस्तथा दीपैः ध्वजच्छत्रसमन्वितैः ।
ब्राह्मणैर्ज्ञानसम्पन्नैरधीयानैर्बहुश्रुतैः ।।

प्रदक्षिणं परिक्रम्य मन्त्रैः स्वस्त्ययनैरपि ।
विदिक्षु दिक्षु पूर्वादिबलिं कुर्यात् समन्ततः ।।

भूतानां च पिशाचानां रक्षसां दितिजन्मनाम् ।
ग्रहाणामपि नागानामन्येषां च बलिं क्षिपेत् ।।

ब्रह्मस्थानान्तमन्नेन पायसेन महीसुरः ।
बलिं प्रक्षिप्य तदनु मन्त्रमेतदुदीरयेत् ।।

भूताः पिशाचा नागाश्च असुरा राक्षसा ग्रहाः ।
सर्वेऽप्येतेऽपगच्छन्तु बलितुष्टा यथायथम् ।।

देवानां च द्विजानां च स्थानं सम्यक् करोम्यहम् ।
वासुदेवस्य देवस्य सर्वभूतात्मकस्य च ।।

अस्त्रमन्त्रेण सञ्जप्तान् सिद्धार्थान् सततं क्षिपेत् ।
तस्य दक्षिणपार्श्वे तु वास्तुहोमं प्रकल्पयेत् ।।

स्थण्डिले दीपयित्वाऽग्निं पञ्चोपनिषदा घृतम् ।
सहस्रं वा शतं वाऽपि जुहुयाद्वास्तुशान्तये ।।

अपामार्गश्च शम्यश्च खदिरश्च यथाक्रमम् ।
यक्षरक्षःपिशाचानां समिधो जुहुयात् स्वयम् ।।

हुत्वा तु मूलमन्त्राभ्यां पृथगष्टोत्तरं शतम् ।
वास्तुनाथस्य मन्त्रेण चरूणा जुहुयाच्छतम् ।
पूर्णाहुतिं ततो हुत्वा इन्द्रादीनां बलिं क्षिपेत् ।।

इत्यादिना पञ्चरात्रोक्तस्य वास्तुपूजायामितिकर्तव्यताविशेषस्य नियमं सूचयति ।। ७४-७९ ।।

**अ.सं.–** इन्द्रादिकोष्ठापेक्षेया वहिःपङ्क्तिस्थकोष्ठेषु पूज्यदेवानाह– **पुनरिति ।। बहिः** इन्द्रादिपङ्क्तेः बहिःपङ्क्तौ **कोणेषु** आग्नेयादिचतुष्कोणेषु **त्रये त्रये** कोष्ठत्रये कोष्ठत्रये क्रमेण कामादीन् पूजयेत् । **दिक्षु** पूर्वादिदिक्षु कोष्ठद्वये कोष्ठद्वये प्रत्येकं कोष्ठद्वयक्रमेण सूर्यादीन् पूजयेदिति ।

अयमर्थः । इन्द्रादिपङ्क्त्यपेक्षया बहिःपङ्क्तौ आग्नेयकोणे कोणपृष्ठभागस्थकोष्ठे कामम् । कोणे धातारम् । कोणपुरोभागकोष्ठे सविधातारं स्कन्दं पूजयेत् । एवं निर्ऋतिवाय्वीशानकोणेष्वपि कोणपृष्ठकोष्ठकोणकोष्ठकोणपुरकोष्ठेष्विति कोष्ठत्रये कोष्ठत्रये कामादीन् क्रमेण पूजयेत् । पूर्वदिशि कोष्ठद्वये सूर्यम् । दक्षिणदिशि कोष्ठद्वये विनायकम् । पश्चिमदिशि कालम् । उत्तरदिशि कुवेरमिति क्रमेण पूजयेदिति ।

यद्वा कामादिपङ्क्तौ पूर्वभागे ऐशान्यदिग्गतकोष्ठापेक्षया अव्यवहितदक्षिण-भागस्थकोष्ठं परित्यज्य ततोऽपि दक्षिणभागस्थकोष्ठत्रये कामं धातारं विधातारं च पूजयेत् । एवं दक्षिणभागेऽप्याग्नेयकोणगतकोष्ठापेक्षया अव्यवहितपश्चिमकोष्ठं परित्यज्य ततोऽपि पश्चिमतःस्थितकोष्ठत्रये कामं धातारं विधातारं च पूजयेत् । तथा पश्चिमभागेऽपि निर्ऋतिकोणगतकोष्ठापेक्षया अव्यवहितोत्तरतःस्थितकोष्ठं परित्यज्य ततोऽप्युत्तरतः स्थितकोष्ठत्रये कामं धातारं विधातारं पूजयेत् । एवमेवोत्तरदिग्भागेऽपि वायवीयकोणगतकोष्ठापेक्षया अव्यवहितपूर्वभागकोष्ठं परित्यज्य ततोऽपि पूर्वभागस्थितकोष्ठत्रये कामं धातारं विधातारं च पूजयेत् । सर्वत्र कोणसमीपगतकोष्ठपरित्याग इत्येतत् उत्तरत्रावशिष्टकोष्ठविषये वहिःशब्दप्रयोगात् ज्ञायते ।

कोणेषु पूज्यमाह– **स्कन्दमिति ।।** कोणचतुष्टयेऽपि स्कन्दमेकमेव पूजयेदित्यर्थः । कामादिकोष्ठापेक्षया पृष्ठभागे चतुर्दिक्ष्वपि कोष्ठचतुष्टयमवशिष्टं वर्तते । तत्र पूज्यानाह– **सूर्यमिति ।। दिक्षु** पूर्वादिचतुर्दिक्षु प्रत्येकं **बहिः**

कामादिकोष्ठापेक्षया पृष्ठभागे सूर्यादींश्चतुरः क्रमेण पूजयेदित्यर्थः। कामादिकोष्ठापेक्षया बहिःपङ्क्तौ परितः अवशिष्टकोणेषु पूज्यान् पूर्वादिक्रमेणाह– **हरिमित्यादिभिश्चतुर्भिश्लोकैः ॥** अत्र कोणगतकोष्ठानि द्वेधा कार्याणि। तथाच आग्नेयकोणकोष्ठमेव पूर्वपङ्क्त्यन्तिमकोष्ठम्। दक्षिणपङ्क्तेरादिमकोष्ठमपि भवति। अतः पूर्वदिग्गतकोष्ठपूज्येष्वन्तिमः दक्षिणदिग्गतकोष्ठपूज्येषु प्रथमश्च इत्येतौ द्वावपि आग्नेयकोणगतकोष्ठपूज्यौ। एवं नैर्ऋतकोणकोष्ठमेव दक्षिणपङ्क्त्यन्तिमकोष्ठम् पश्चिमपङ्क्तेरादिमकोष्ठं च। अतः दक्षिणदिग्गतकोष्ठपूज्येष्वन्तिमः पश्चिमदिग्गतकोष्ठपूज्येषु प्रथमश्चेत्येतौ द्वावपि नैर्ऋतकोणपूज्यौ। तथा वायवीयकोणकोष्ठमेव पश्चिमपङ्क्त्यन्तिमकोष्ठम्। उत्तरदिग्गतपङ्क्तेरादिमकोष्ठमपि। अतः पश्चिमदिग्गतकोष्ठपूज्येष्वन्तिमः उत्तरदिग्गतकोष्ठपूज्येषु प्रथमश्चैतौ द्वावपि वायवीयकोणगतकोष्ठपूज्यौ। एवमेव ऐशान्यकोणकोष्ठमेव उत्तरभागपङ्क्त्यन्तिमकोष्ठं पूर्वभागपङ्क्तेरादिमकोष्ठमपि। अतः उत्तरदिग्गतकोष्ठपूज्येष्वन्तिमः पूर्वदिग्गतकोष्ठपूज्येषु प्रथमश्चैतौ द्वावपि ऐशान्यकोणगतकोष्ठपूज्यौ इति बोध्यम्। एतेन द्वात्रिंशन्तां देवतानामष्टाविंशद्गृहेषु कथं पूज्यत्वमिति चोद्यं निरस्तं वेदितव्यम्। पूर्वोक्तप्रकारेण कोष्ठानां द्वात्रिंशत्वस्य सिद्धत्वादिति। अथवा पुनस्त्रये त्रये इत्यस्यायमर्थः। इन्द्रादिकोष्ठापेक्षया बहिःपङ्क्तौ दिक्षु चतुर्दिक्षु पूर्वस्यां दिशि त्रये कामं पूजयेत्। दक्षिणस्यां त्रये धातारम्। उत्तरत्रयेऽपि स्कन्दं च पूजयेत्। तत्कोणपूज्यानाह– **कोण इति ॥** आग्नेयादिकोणचतुष्टयेऽपि क्रमेण सूर्यादीन् पूजयेदित्यर्थः। अत्र कोष्ठचतुष्टयमवशिष्टं वर्तते। तस्योपयोगो वक्ष्यामः।

कामादिपङ्क्त्यपेक्षया बहिःपङ्क्तौ परितः कोष्ठपूज्यान् पूर्वादिक्रमेणाह– **हरिमित्यादिचतुर्भिः ॥** अत्र पूर्वदिशि अष्टकोष्ठकानि भवन्ति। दक्षिणदिशि एकं कोष्ठं न्यूनम्। पश्चिमदिश्यपि एकं कोष्ठं न्यूनम्। उत्तरस्यां दिशि कोष्ठद्वयं न्यूनम्। एवं चत्वारि कोष्ठानि न्यूनानि। अन्तः अन्तस्थपङ्क्तौ पूर्वादिकोष्ठेष्ववशिष्टानि पञ्चमानि चत्वारि कोष्ठानि। एकैकशः तत्कोष्ठापेक्षया

बहिःपङ्क्तौ पूर्वादिक्रमेण तत्तत्कोष्ठेषु षष्ठत्वेन ग्राह्याणि। तथा च सर्वापेक्षयाऽन्तिमपङ्क्तौ परितः पूर्वादिदिक्षु अष्ठकोष्ठानि भवन्ति। अतो नानुपपत्तिरिति ध्येयमिति। मण्टपादावुक्तवास्तुपूजामन्यत्राप्यतिदिशति– **एवमेवेति** ।। विमानस्य विशेषेण सामान्यमुपलक्ष्यते देवालयस्येत्यर्थः । **कृतेः** करणात् **प्रागपि** पूर्वमपि **एवमेव** पूर्वोक्ताकारेणैव न तु आगमान्तरानुसारेण । शोधितभूप्रदेशे चतुरस्रं पीठं कृत्वा तत्र चतुःषष्ठिकोष्ठानि कृत्वा तेषु कोष्ठेषु ब्रह्मादीन् देवान् पूजयेदित्यर्थः। ब्रह्मादिदेवानां ध्यानमुक्तं तन्त्रे–

ब्रह्मा चतुर्भुजो रक्तो लम्बकूर्चश्चतुर्मुखः ।
अक्षमालां स्रुवं दक्षे वामे दण्डकमण्डलूः ।।

दधानमष्टपालानां यजेन्मध्येऽम्बुजासनम् ।
सर्वे चतुर्भुजा देवाः वास्तुदेहे व्यवस्थिताः ।।

स्वस्वस्थानस्थितास्सर्वे कृताञ्जलिपुटास्तथा ।
ब्रह्माणं सन्निरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ।। इति ।

वास्तुपूजाकाले कलशस्थापनादि कार्यम् । तदुक्तम्–

पीठे वास्तोस्तु कलशं स्थापयित्वाऽर्चयेत्सुरान् ।
हुत्वा दत्वा बलिं स्याप्य यजमानं द्विजान् यजेत् ।। इति ।

।। ७४-७९ ।।

**गु.दी–** पुनर्वह्निस्तृतीयावरणे पूर्वादिदिक्षु त्रये त्रये कोष्ठे कामादीन् पूजयेत् । कोणचतुष्टये सूर्यादिचतुरः पूजयेत्। **बहिः** तृतीयावरणाद्बहिः चतुर्थावरणे **दिक्षु** पूर्वादिदिक्षु वक्ष्यमाणान् प्रत्येकं पूजयेत् ।।

एकैकस्यां दिशि सप्तकोणेष्वेकैकमित्यष्टकोष्ठान्यभिप्रेत्याष्ट देवता आह— **हरिमिति** ।। हर्यादीन्सप्त दिक्स्थेषु सप्तकोणेषु अष्टमानङ्गारादीन् कोणगताष्टमकोणेषु पूजयेदिति विवेकः। वास्तुदेहस्थितानां देवानां ध्यानं तन्त्रे–

सर्वे चतुर्भुजा देवा वास्तुदेहे व्यवस्थिताः ।
कृताञ्जलिपुटाः सर्वे खड्गखेटकपाणयः ।
ब्रह्माणं संनिरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ।। इति ।।

इदानीं मण्टपादावुक्तं वास्तुपूजनमन्यत्राप्यतिदिशति— **एवमिति ।। विमानं** देवमन्दिरं रथो वा तत्करणात् **प्रागपि** पूर्वं पश्चाच्च **एवमेव** शोधितभूप्रदेशे चतुःषष्टिमन्दिराणि कृत्वा ब्रह्मादीन् पूजयेन्न त्वन्यागमोक्तप्रकारेणेत्यर्थः ।।७४-७९।।

**मङ्गली–** इन्द्रादिकोष्ठापेक्षया परितो बहिर्गतकोष्ठेषु पूज्यानाह– **पुनरित्यादिना ।।** ऐशान्यादिदिग्गतकोष्ठापेक्षयाऽव्यवहितदक्षिणभागस्थकोष्ठं परित्यज्य ततोऽपि दक्षिणभागस्थितकोष्ठत्रये कामं धातारं च पूजयेत् । एवं दक्षिणादिश्रेणीष्वपि । आग्नेयादिकोणसमीपगतकोष्ठपरित्यागेन त्रये त्रये कामं धातारं च पूजयेदित्यर्थः । सर्वत्र कोणसमीपगतकोष्ठपरित्यागे इत्येतदुत्तरत्र एतदावरणगतावशिष्टकोष्ठविषये बहिःशब्दप्रयोगाद्गम्यते । कोणेषु पूज्यमाह– **स्कन्दं च पूजयेत्कोण इति ।।** कोणचतुष्टयेऽपि स्कन्दमेकमेव पूजयेदित्यर्थः । कामादिकोष्ठापेक्षया पृष्टभागे चतुर्दिक्ष्वपि कोष्ठचतुष्टयमवशिष्टं वर्तते । तत्र पूजानाह– **सूर्यमिति ।। दिक्षु** पूर्वादिदिक्षु प्रत्येकं बहिः कामादिकोष्ठापेक्षया पृष्ठभागे सूर्यादीन् चतुःक्रमेण पूजयेदित्यर्थः । कामादिकोष्ठापेक्षया बहिःपंक्तौ परितः अवशिष्टकोणेषु पूज्यान् पूर्वादिक्रमेणाह– **हरिमित्यादिभिश्चतुर्भिः श्लोकैः।।** अत्र आग्नेयकोणकोष्ठमेव पूर्वश्रेण्यन्तिमकोष्ठम् । दक्षिणश्रेण्यादि-कोष्ठमपि, अतः पूर्वं दिग्गतकोष्ठपूज्येष्वन्तिमः । दक्षिणादिग्गतकोष्ठपूज्येषु प्रथमश्चेतौ द्वावप्याग्नेयकोणगतकोष्ठे पूज्यौ । एवमवशिष्टकोणत्रयगतकोष्ठत्रयेऽपि द्वौ द्वौ पूज्याविति ज्ञेयम् । यद्वा 'पुनस्त्रये त्रये' इति शक्रादिकोष्ठापेक्षया बहिःपङ्क्तौ परितश्चतुर्दिक्षु पूर्वस्यां दिशि त्रये कामं दक्षिणस्यां त्रये धातारं पश्चिमे त्रये विधातारं उत्तरे त्रये स्कन्दं च पूजयेदित्यर्थः । कोणपूज्यानाह– **कोणे सूर्यं चैवेति ।।** अत्र पूर्वोक्तानि चत्वारि कोष्ठान्यवशिष्टानि भवन्ति । तेषामुपयोगं वक्ष्यामः। कामादिकोष्ठापेक्षया बहिःपङ्क्तौ परितः पूज्यादेवताः पूर्वादिक्रमेणाह–

**बहिरिति** ।। उक्तमेव विवृणोति– **हरिमिन्यादिना** ।। अत्र दक्षिणदिश्येकं कोष्ठं न्यूनम् । पश्चिमदिश्यप्येकं न्यूनम् । उत्तरस्यां दिशि तु कोष्ठद्वयं न्यूनम् । एवं चत्वारि कोष्ठानि न्यूनानि । अतोऽन्तः चत्वारि कोष्ठानि क्रमेण तत्र ग्राह्याणि । पूर्वपङ्क्तौ अष्टौ देवाः अष्टसु कोष्ठेषु प्रादक्षिण्येन क्रमेण योज्याः । दक्षिणपङ्क्तौ द्वितीयकोष्ठमाद्यं कृत्वा द्वितीयकोष्ठत्वेनान्तःपङ्क्तिगताग्नेयकोष्ठसमीपगतमवशिष्टकोष्ठं ग्राह्यम् । पश्चिमपङ्क्तौ अपि द्वितीयकोष्ठं प्रथमं कृत्वा द्वितीयकोष्ठत्वेनान्तःपङ्क्तिगतनिर्ऋतिकोणसमीपस्थमवशिष्टं कोष्ठं ग्राह्यम् । उत्तरपङ्क्तौ अपि द्वितीयकोष्ठमादिं कृत्वा द्वितीयकोष्ठत्वेनान्तःपङ्क्तिगतवायवीयकोणसमीपगतमवशिष्टं कोष्ठं ग्राह्यम् । अष्टमकोष्ठत्वेनान्तः पङ्क्तिगतैशानकोणसमीपगतमवशिष्टं कोष्ठं ग्राह्यम् । अत्र द्वितीययोजनायां 'त्रये त्रये कामं' इत्यादेः ऐशानकोणाव्यवहितकोष्ठत्रये कामं, आग्नेयकोणाव्यवहितकोष्ठत्रये धातारं, निर्ऋतिकोणाव्यवहितकोष्ठत्रये विधातारं, वायुकोणाव्यवहितकोष्ठत्रये स्कन्दं पूजयेदित्यर्थमभिधायात्र पङ्क्तौ पूर्वादिदिक्षु अवशिष्टानि पञ्चमानि चत्वारि कोष्ठानि एकैकशः तत्तत्कोष्ठापेक्षया बहिःपङ्क्तौ पूर्वादिक्रमेण तत्तत्कोष्ठेषु षष्ठत्वेन ग्राह्याणि । तथा च सर्वापेक्षयाऽन्तिमपङ्क्तौ पूर्वादिदिगु स्वस्वगतानि सप्तकोष्ठानि अन्तःपङ्क्तिगतमेकं कोष्ठं च मिलित्वा अष्टाष्टकोष्ठानि भवन्तीति अन्ये पक्षान्तरमाहुः । मण्टपादावुक्तवास्तुपूजामन्यत्राप्यतिदिशति– **एवमेवेति** ।। **विमानस्य** गर्भगृहस्य विशेषेण सामान्यमुपलक्ष्यते । देवालयस्येत्यर्थः । **कृतेः** करणात् **प्रागपि** पूर्वमपि **एवमेव** पूर्वोक्तप्रकारेणैव न तु आगमान्तरानुसारेण । शोधितभूप्रदेशे चतुरस्रं पीठं कृत्वा तत्र चतुःषष्ठिकोष्ठनि कृत्वा तेषु कोष्ठेषु ब्रह्मादीन् देवान् पूजयेदित्यर्थः । ब्रह्मादिदेवानां ध्यानमुक्तं तन्त्रे–

ब्रह्मा चतुर्भुजो रक्तो लम्बकूर्चश्चतुर्भुजः ।
अक्षमालां स्रुवं दक्षे वामे दण्डकमण्डलम् ।।

दधानमष्टपालानां यजेन्मध्येऽम्बुजासनम् ।
सर्वे चतुर्भुजा देवाः वास्तुदेहे व्यवस्थिताः ।।

स्वस्वस्थानस्थितास्सर्वे कृताञ्जलिपुटास्तथा ।
ब्रह्माणं सन्निरीक्षंतः तद्वक्त्राभिमुखाश्च ते ।। इति ।

वास्तुपूजाकाले कलशस्थापनादि कार्यम् । तदुक्तम्–

पीठे वास्तोस्तु कलशं स्थापयित्वाऽर्चयेत्सुरान् ।
हुत्वा दत्वा बलिं स्थाप्य यजमानं द्विजान् यजेत् ।। इति ।।

मण्टपकरणप्रकाराभिधानम्

**त. सा. सप्तपर्णमयं साधु कारयेन्मण्टपं (मण्टपं कारयेत्) ततः ।**
**सप्तहस्तं द्विषट्हस्तमथवा द्विगुणं ततः ।। ८० ।।**

**चतुर्गुणं वा सम्यक् च चतुरस्रं सहा(सभा)जिरम् ।**
**अन्यं च मण्टपं दीर्घं पञ्चहस्तं तु कारयेत् ।। ८१ ।।**

**त.क.**– 'ततस्तु मण्टपं कुर्यात् प्रतिमायाः सुलक्षणम्' (३-७०) इति संक्षेपेणोक्तं मण्टपनिर्माणप्रकारं विवृणोति– **सप्तपर्णमयमित्यादिना ।।** अथवा प्रतिष्ठामण्टपनिर्माणप्रकारमभिधाय होमाद्यर्थमधिवासननिर्माणप्रकारमाह– **सप्तपर्णमयमिति ।। ततः** प्रतिष्ठामण्टपनिर्माणानन्तरं होममण्टपं रथकारादिभिः कारयेत् । सप्तपर्णमयमित्यनेन शिलामयत्वं व्यावर्तयति । सप्तपर्णाख्यो वृक्षविशेषः । तदीयकाष्ठेन मण्डपं कुर्यादित्युक्तं विवृणोति– **सप्तहस्तमिति ।।** सप्तहस्तपरिमितम् । द्विषट्हस्तपरिमितमिति द्वादशहस्तपरिमितत्वमुच्यते । अथवेति पक्षान्तरापेक्षया । 'द्विगुणं ततः' इत्यनेन चतुर्विंशतिहस्तपरिमितत्वम् । 'चतुर्गुणं वे'त्यनेन अष्टचत्वारिंशद्धस्तपरिमितत्वम् । 'चतुरस्र'मित्यनेन वर्तुलत्वं व्यावर्तयति । सम्यगित्यनेन दृढस्तम्भादिमित्त्वम् । अजिरं चत्वरादि । 'सभाजिरं' इति पाठे भाजिरं वेदिका । अत्र कलशस्थापने उत्तमाधममध्यमकल्पानां वक्ष्यमाणत्वात् तदनुसारेणापि पक्षान्तरेणाऽयामः कथितो ज्ञातव्यः । तुशब्देन चतुर्दिक्षु चत्वारि द्वाराणि तत्र त्रयोदशकुण्डानि कुर्यादिति सूचयति । मण्टपनिर्माणप्रसङ्गादंकुरार्पणार्थं मण्टपान्तरं निर्मातव्यमित्याह– **अन्यं चेति ।।**

होममण्टपाद्बहिरित्यर्थः। दीर्घमित्यनेन चतुरस्रत्वं वर्तुलत्वं च व्यावर्तयति। तुशब्देन पलहस्तत्वं पालिकादिपरिमाणानुसारेणैव। तेषां परिमाणाधिक्येऽपि मण्टपस्यापि परिमाणान्तरमिति सूचयति ॥ ८०-८१ ॥

**अ.सं.**– एवं मध्ये वक्तव्यमुक्त्वा प्रकृतमण्टपकरणप्रकारमाह– **सप्तपर्णमयमिति ॥ ततः** वास्तुपूजानन्तरं **सप्तपर्णः** तन्नामको वृक्षविशेषः तन्मयं तत्काष्ठप्रचुरम्। भूर्जवृक्षमित्यप्याहुः। मण्टपपरिमाणे पक्षान्तराण्याह– **सप्तहस्तमिति ॥ द्विषद्धस्तं** द्वादशहस्तमित्यर्थः। **ततः** द्वादशहस्तपरिमाणापेक्षया **द्विगुणम्** चतुर्विंशतिहस्तमित्यर्थः। द्वादशहस्तापेक्षयैव चतुर्गुणं वा। अष्टचत्वारिंशद्धस्तमित्यर्थः। अयं सप्तहस्तादिपरिमाणविकल्पः एककलशपञ्चविंशतिपञ्चाशतादिकलशपक्षभेदेनेति ज्ञातव्यम्। उक्तं च पञ्चरात्रे–

अल्पेषु चाल्पास्ते योज्याः मध्यमेषु च मध्यमाः।
उत्तमेषूत्तमाः कार्याः मण्टपा सर्वकर्मसु ॥ इति।

सम्यक् **चतुरस्रं** समचतुष्कोणम्। **सहाजिरं** अजिरं मण्टपाद्बहिरङ्गणम्। तेन सहितम्। 'सभाजिरं' इति क्वचित्पाठः। तत्र मण्टपान्तः किष्कुपरिमितोन्नतप्रदेशः वेदिकाविशेषः सभाजिरशब्देनोच्यत इत्याह। अङ्कुरार्पणं वदन् तदुपयुक्तं मण्टपमाह– **अन्यमिति ॥** एवं तन्मण्टपस्य देश उक्तो योगदीपकायाम्–

वायुसोमेशशक्राणां दिक्ष्वासामुत्तरेऽपि वा।
मण्टपस्याविदूरे तु कुर्यादङ्कुरमण्टपम् ॥ इति। (६.१३)।

**पञ्चहस्तं** पञ्चहस्तपरिमितविस्तारं दैर्घ्यन्तु सार्धं ज्ञेयम् ॥ ८०-८१ ॥

**गु.दी.**– मण्टपकरणप्रकारमाह— **सप्तपर्णमयमिति ॥ ततः** वास्तुपूजानन्तरं 'सप्तपर्णो विशालत्वक् षारदो विषमच्छदः' इत्यभिधानात् कदलीवृक्षस्तम्भप्रचुरम्। भूर्जवृक्षमयं वा। **ततः** वास्तूपरि। **सप्तपर्णमयं** यष्टिकसप्तकमयं मण्टपमिति केचित्। **सप्तपर्णो** वृक्षविशेषः। तत्काष्ठप्रचुरमिति अन्ये। तत्परिमाणमाह— **सप्तहस्तमिति ॥ द्विगुणं** चतुर्विंशतिहस्तम्। **चतुर्गुणं** अष्टचत्वारिंशद्धस्तम्। अजिरेण बहिर्भूम्या सहितं **सहाजिरम्।** अथ अङ्कुरार्पणं

विवक्षुः आदौ तदुपयुक्तं मण्टपान्तरमाह— **अन्यच्चेति ।। दीर्घं पञ्चहस्तं च** पञ्चहस्तदीर्घहस्तं चेत्यर्थः ।। ८०,८१ ।।

**मङ्गाली—** एवं मध्ये वक्तव्यमुक्त्वा प्रकृतमण्टपकरणप्रकारमाह– **सप्तपर्णमयमिति ।। ततः** वास्तुपूजानन्तरं सप्तपर्णः तन्नामको वृक्षविशेषः । तन्मयं तत्काष्टप्रचुरं । भूर्जवृक्षमयमित्यप्याहुः । तत्र परिमाणमाह– **सप्तहस्त-मिति ।। द्विषट्हस्तं** द्वादशहस्तमित्यर्थः । **ततः** द्वादशहस्तपरिमाणापेक्षया **द्विगुणम्** चतुर्विंशतिहस्तमित्यर्थः । द्वादशहस्तापेक्षयैव **चतुर्गुणं** वा अष्टचत्वारिंशद्धस्तमित्यर्थः । अयं च विकल्पः एककलशादिभेदेन । उक्तं च पञ्चरात्रे–

अल्पेषु चाल्पास्ते योज्याः मध्यमेषु च मध्यमाः ।
उत्तमेषूत्तमाः कार्याः मण्डपाः सर्वकर्मसु ।। इति ।

**सम्यक्** चतुरस्रं समचतुष्कोणं **सहाजिरं** अजिरं मण्डपाद्बहिरङ्गणं तेन सहितम् । 'सभाजिरं' इति पाठे मण्टपान्तः परितः उपवेशनार्थं क्रियमाणः किष्कुपरिमित उन्नतप्रदेशो भाजिरशब्देनोच्यते । अङ्कुरार्पणं वदन् तदुपयुक्तमन्यमण्डपमाह– **अन्यमिति ।। पञ्चहस्तं** पञ्चहस्तपरिमितविस्तारं दैर्घ्यं सार्धं ज्ञेयम् ।। ८०,८१ ।।

अङ्कुरार्पणमण्टपनिर्माणप्रकाराभिधानम्

**तं.सा. त्रिचतुष्कोणकं(कोष्ठकं) तत्र मध्ये प्रागायतं शुभम् ।**
**कारयेन्मण्डलं साधु हस्तमात्रं तु विस्तृतम् ।। ८२ ।।**

**त.क.– त्रिचतुष्कोणमिति ।।** त्रिकोणं चतुष्कोणमिति (पक्ष)द्वयम् । द्वादश-कोणोपेतमिति वा । एतत्तु मण्डलविशेषणम् । **तत्र** मध्ये पञ्चहस्त-परिमितमण्टपस्य मध्ये । **प्रागायतं** प्राक्प्रवणम् ।

मण्डलं वेदिकां साधु रङ्गवल्ल्यादिभूषितम् ।
अङ्कुरावापनस्थानं मण्डलं परिकल्पयेत् ।।

शुभे विविक्तेऽभिमते देशे वैदेशिकोत्तमः ।
चतुर्दिक्षु चतुर्द्वारं चतुर्वदनमालिकम् ।।

दर्भमालापरिक्षिप्तं मुक्तादामविराजितम् ।
विततक्षौमविस्तारं गोमयालिप्तभूतलम् ।।

प्रदीपमालाविदितमक्षतैश्चापि सर्वशः ।
साधुचूर्णैः सुधवलैश्चित्रिताभ्यन्तरस्थलम् ।।

इत्यादिनोक्तलक्षणयुक्तमित्यर्थः । हस्तमात्रमित्यायामपरिमाणमुच्यते । दैर्घ्यं तु विस्तृतमित्यर्थः । अत्र 'त्रिचतुष्कोष्ठकं तत्र' इति पाठः । तत्र कोष्ठं मन्दिरमुच्यते। तत्र द्वादशपात्राणां वक्ष्यमाणत्वात् द्वादशकोष्ठसहितमित्यर्थः ।। ८२ ।।

**अ.सं.– तत्र मध्ये** मण्टपमध्ये **प्रागायतं** पूर्वपश्चिमदीर्घम् । **त्रिचतुष्कोष्ठकं** त्रिगुणितचतुष्कोष्ठं द्वादशकोष्ठोपेतमित्यर्थः । 'त्रिचतुष्कोणकं' इति क्वचित्पाठः । तत्र द्वादशकोणोपेतमित्यर्थः ।

'मध्ये वीथ्या च युतं शुभम् ।
श्वेतपीतारुणासितैः चूर्णैः रङ्गैः प्रपूरितम्' ।

**साधु** वक्रादिदोषरहितं चतुरस्रत्वेन विस्तृतम् मण्डपं कारयेदित्यर्थः । एकैककोष्ठपरिमाणमाह– **हस्तमात्रमिति ।।** एकैकं कोष्ठं **हस्तमात्रं** हस्तमात्रपरिमाणम् । **सुविस्तृतं** चतुरस्रत्वेन विस्तृतम् । मण्डलोद्धारप्रकारस्तूक्तस्तिलके–

मण्टपस्योत्तरे भागे शालां पूर्वापरायताम् ।
गूढां कुर्यात् यथा शोभां सर्वदृष्टिमनोरमाम् ।।

पञ्चहस्तप्रमाणानि पञ्चसूत्राणि पातयेत् ।
पूर्वापरायतान्येषामन्तरम् द्वादशाङ्गुलम् ।।

दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत् ।
पङ्क्त्या वीथ्यश्चतस्रोऽन्तः चतुष्कोभयपार्श्वयोः ।।

वीथ्यौ द्वे च चतुष्कोष्ठत्रयमत्रावशिष्यते ।

पदानि रञ्जयेत्तानि श्वेतपीतारुणासितैः ।। इति *(२.२९-३३)* ।

अस्यार्थः । प्रतिष्ठामण्टपस्योत्तरादिग्भागे पूर्वपश्चिमदीर्घां शालां अङ्कुरार्पणमण्टपं कृत्वा तस्मिन् मण्डपे पञ्चहस्तपरिमितानि पञ्चसूत्राणि पूर्वपश्चिमदीर्घाणि स्थापयेत् । एषां सूत्राणामन्तरं द्वादशाङ्गुलपरिमाणम् । तद्वदेव तेषु पञ्चसूत्रेषु दक्षिणोत्तरसूत्राणि दक्षिणोत्तरदीर्घाणि दशसूत्राणि स्थापयेत् । एवं कृते सति अन्तः मध्ये चतस्रो वीथ्यो भवन्ति । कोष्ठचतुष्कोभयपार्श्वयोः द्वे वीथ्यौ भवतः । मध्ये चतुष्कोष्ठत्रयं द्वादशकोष्ठानीति यावत् । अवशिष्यते अवशिष्टं भवति । तानि पदानि कोष्ठानि एकैकं कोष्ठचतुष्टये क्रमेण श्वेतपीतारुणसितैः चूर्णैः रञ्जयेदिति ।। ८२ ।।

**गु.दी.– तत्र मध्ये** तन्मध्ये प्रागायतं पूर्वपश्चिमविस्तीर्णम् । **त्रिचतुष्कोष्ठकं** त्रिषु स्थानेषु चतुष्कोष्ठकानि यस्मिन् । एवं द्वादशकोष्ठम् । मध्ये वीथ्या च युतम् । **शुभं** रङ्गैः पूरितम् । **साधु** वक्रत्वादिदोषशून्यं मण्डलं कारयेत् । तत्र कोष्ठानां परिमाणमाह— **हस्तेति ।। हस्तमात्रं** हस्तप्रमाणम् । **सुविस्तृतं** चतुरस्रत्वेन विस्तृतम् ।। ८२ ।।

**मङ्गली– तत्र मध्ये** मण्टपमध्ये प्रागायतं पूर्वपश्चिमदीर्घं **त्रिचतुष्कोष्ठकं** त्रिगुणितचतुष्कोष्ठकं द्वादशकोष्ठपेतमित्यर्थः । 'त्रिचतुष्कोणकं' इति पाठे द्वादशकोणोपेतमित्यर्थः । एकैककोष्ठपरिमाणमाह– **हस्तमात्रमिति ।।** एकैकं कोष्ठम् **हस्तमात्रं** हस्तप्रमाणं **सुविस्तृतं** चतुरस्रत्वेन विस्तृतमित्यर्थः ।। ८२ ।।

मण्टपे पालिकादिद्वादशपात्रस्थापनाभिधानम् पालिकादीनां परिमाणाभिधानं च

**तं.सा. तत्र द्वादशपात्राणि स्थापयेत्(कारयेत्) पालिकादिकम् ।**

**पालिकास्तु चतुर्विंशत्यंगुलोच्छ्रयसंयुताः ।। ८३ ।।**

**अष्टादशांगुलाश्चैव तथा पञ्चमुखा इति (अपि) ।**

**द्वादशांगुलकाश्चैव शरावा पश्चिमानुगाः ।। ८४ ।।**

**त.क.–** एवमंकुरार्पणमण्टपनिर्माणपुरस्वाऽङ्कुरपात्रनिर्माणप्रकारं परिमाणपूर्वकमाह– **तत्रेति ।।** पालिकादिकमित्येतत् वचनव्यत्ययेन पात्रविशेषणम् । पालिकाश्चतस्रः। पञ्चमुखाश्चतस्रः । शरावाश्चतस्रः । आहत्य पालिकादीनि पात्राणि द्वादश कारयेदित्यन्वयः । यद्यपि अष्टोत्तरशतं पात्राणि श्रूयन्ते । तथा हि- पालिकाः षट्त्रिंशत् । पञ्चमुखशब्दिता घटिकाश्च षट्त्रिंशत् । शरावाश्च षट्त्रिंशत् । तथाप्युत्तममध्यमाधमकल्पभेदेन पक्षान्तरस्योक्तिर्न विरुध्यते । तथा चोक्तम्—

षट्त्रिंशत्पालिकाश्चैव षट्त्रिंशद्घटिकास्तथा ।
शरावाश्चापि षट्त्रिंशदेवमष्टोत्तरं शतम् ।।

उत्तमा क्लृप्तिरुदिता जघन्या क्लृप्तिरुच्यते ।
प्रत्येकं षोडश ग्राह्या भवेयुर्द्वादशापि वा ।।

अष्टौ वा स्युश्चतस्रो वा शरावा घटपालिकाः ।
सर्वार्था पालिका यद्वा............ ।। इत्यादि ।

तत्र पालिकाः चतुर्विंशत्यंगुलोच्छ्रिताः कर्तव्याः । पञ्चमुखा अष्टादशांगुलाः । शरावाऽस्तु द्वादशांगुलाः ।

'हेमादिलोहजाः सर्वाः मृन्मया वा यथाबलम्' इत्युक्तप्रकृतिद्रव्यं तुशब्देनाऽह । 'पश्चिमानुगाः' इत्यनेन पूर्वभागे पालिकाः स्थापनीयाः । तत्पश्चिमतः पञ्चमुखाः । ततः पश्चिमतः शरावा इति क्रमोऽभिमतः । इतिशब्देन पञ्चरात्राद्युक्तकालविशेषमितिकर्तव्यताविशेषं च परामृशति । एवशब्देन अंकुरार्पणस्य आवश्यकतां दर्शयति । तथा चोक्तम्—

प्रतिष्ठाकर्मणः पूर्वमंकुरारोपणं भवेत् ।
न कर्म फलदं ब्रह्मन् अंकुरारोपणं विना ।।

तस्मादारभ्यमाणेषु कर्षणादिषु कर्मसु ।
प्रागेव वापयेद्बीजानंकुरार्थं यथाविधि ।।

द्वादशाहे दशाहे वा सप्ताहे पञ्चमेऽहनि ।
तृतीयेऽहनि वा कुर्यात्कर्मारम्भदिनं प्रति ।।

मण्डलं कल्पयित्वैवं गृह्णीयात्तत्र मृत्तिकाम् ।
खनित्रं क्षालयित्वाऽद्भिः आच्छाद्य नववाससा ।।

शुचौ देशे मृदं शुद्धां खनित्रेण समुद्धरेत् ।
अस्त्रमन्त्रेण धरणिं संप्रोक्ष्य प्रथमं गुरुः ।।

महीसूक्तेन संस्पृश्य ध्यायन्नेकाग्रचेतसा ।
मूर्तिं देवस्य वाराहमभ्यर्च्य कुसुमैर्महीम् ।।

खनित्रेण खनेद्भूमिं प्राङ्मुखो क्रोडविद्यया ।
गृहीत्वा मूलमन्त्रेण वेष्टयित्वा च वाससा ।।

प्रत्यग्रेण तथा नद्याः वालुकां गोमयं तथा ।
गोलकात् पूर्ववत् पात्रे गृहीत्वाऽऽच्छाद्य चांशुकैः ।।

गत्वा प्रदक्षिणं ग्रामं प्रविशेन्मण्टपं ततः ।
प्रक्षाल्य विष्णुगायत्र्या शरावघटपालिकाः ।।

सहदेवी च दूर्वा च सार्धमश्वत्थपल्लवैः ।
कण्ठेषु पालिकादीनां वन्धनीयाश्चतुर्मुख ।।

कुशकाशतृणैस्तेषां विलमूलानि पूरयेत् ।
विलानि प्रथमं मृद्भिः वालुकाभिरनन्तरम् ।
करीषचूर्णैरुपरि समृद्धं पूरयेद्बिलम् ।। इत्यादि ।।८३-८४ ।।

**अ.सं.–** मण्टपे द्वादशकोष्ठनिर्माणानन्तरकार्यमाह– **तत्रेति ।।** तत्र मण्डलगतद्वादशकोष्ठेषु द्वादशपात्राणि **स्थापयेत्** निधापयेत् । 'कारयेत्' इति पाठे स्थापयेच्चेति शेषः । द्वादशसङ्ख्याऽशक्तविषया । अशक्तविषया अन्यापि ज्ञेया । 'कुर्यादङ्कुरपात्राणि द्वादश त्रिः द्विरेव वा' इति दीपिकोक्तेः । तानि कानि

पात्राणीत्यत आह– **पालिकादिकमिति** ।। वचनविपरिणामेन पालिकादिकानीत्यर्थः । **आदि**शब्देन पञ्चमुखनामकशरावनामकपात्रग्रहणम् । पालिकाश्चत्वारः, पञ्चमुखाश्चत्वारः इत्येवं द्वादशपात्राणीति ज्ञेयम् । त्रिविधानां पात्राणां परिमाणमाह– **पालिकास्त्वित्यादिना** ।। **अष्टादशाङ्गुलः** अष्टादशाङ्गुलोच्छ्रयाः । **द्वादशाङ्गुलकाः** द्वादशाङ्गुलोच्छ्रयाः । सर्वकर्मणां प्रागुत्तरसंस्थत्वात्पालिकादिपात्रस्थापनस्यापि प्रागुत्तरसंस्थत्वभ्रान्तिं वारयितुं **पश्चिमानुगाः** इत्युक्तम् । पश्चिमे पश्चिमदिशि अनु पश्चात् । अन्ते इति यावत् । गच्छन्तीति तथोक्ताः । तेनादौ पूर्वचतुष्के पालिकास्थापनम् । मध्यचतुष्के पञ्चमुखानां ततः शरावाणां पश्चिमचतुष्के स्थापनमिति पालिकादिपात्रस्थापनकर्मणः पश्चिमे समाप्तिरिति ज्ञेयम् ।। ८३-८४ ।।

**गु.दी.– तत्र** द्वादशकोष्ठेषु मण्टपे वा **पालिकादिकं** पालिकादिकानि द्वादश पात्राणि स्थापयेत् । आदिपदेन पञ्चमुखनामकं शरावपात्रग्रहणम् । यद्वा हस्तमात्रमित्यादि मण्डलस्यैव विशेषणम् । **तत्र** मन्डले । 'कारयेत्पालिकादिकम्' इति पाठे त्वयमर्थः । द्वादशपात्राणि स्थापनीयानीति शेषः । तानि पात्राणि प्रागेव कारयेदिति । तेषां नामकथनपूर्वकमाह— **कारयेदिति** ।। पालिकैवादिः पञ्चमुखादेर्यस्य स पालिकादिस्तं प्रागेव कारयेदित्यर्थः । यद्वा कारयेदित्यतः पूर्वं स्थापितानीति शेषः । ऋत्विग्भिः स्थापयेदिति यावत् । स्वार्थिको वा णिच् ।।

द्वादशपात्रपरिमाणमाह— **पालिका इति** ।। विस्तृतमुखाः सप्तधान्याङ्कुरार्थं पात्रविशेषाः **पालिकाः** । ताश्चतस्र इति द्रष्टव्यम् । चतुर्विंशत्यङ्गुलोच्छ्रिताः पञ्चमुखाः कुम्भाः । अष्टादशाङ्गुलोच्छ्रयाः तेऽपि चत्वारः । शरावाश्चत्वारो द्वादशाङ्गुलोच्छ्रया इत्यर्थः । **पश्चिमानुगाः** इति पश्चिमपार्श्वस्थपृष्ठभागा इत्यर्थः । पृष्ठभागे किञ्चित् त्रिकोणोपेता इति केचित् । अयं भावः । पालिकाचतुष्टयं पञ्चमुखचतुष्टयं शरावचतुष्टयं चेति द्वादशपात्राणि द्वादशकोष्ठेषु निक्षिपेदिति ।। ८३,८४ ।।

**मङ्गाली–** मण्डले द्वादशकोष्ठनिर्माणानन्तरकार्यमाह– **तत्रेति ।। तत्र**

मण्डलगतद्वादशकोष्ठेषु द्वादशपात्राणि **स्थापयेन्निधापयेत्**। 'कारयेत्' इति पाठे स्थापयेच्चेति शेषः। 'कुर्यादङ्कुरपात्राणि द्वादशत्रिद्विरेव वा' इति दीपिकोक्त्या मुख्य एवायं कल्पः। तानि पात्राणि कानीत्यत आह– **पालिकादिकमिति**॥ वचनपरिणामेन पालिकादीनीत्यर्थः। आदिशब्देन पञ्चमुखशरावपात्रयोर्ग्रहणम्। पालिकाश्चत्वारः। पञ्चमुखाश्चत्वारः। शरावाश्चत्वार इत्येवं द्वादशपात्राणि। त्रिविधानां पात्राणां परिमाणमाह– **पालिकास्त्वित्यादिना**॥ पञ्चमुखा इति ख्याताः **अष्टादशाङ्गुलाः** अष्टादशाङ्गुलोच्छ्रयाः **द्वादशाङ्गुलाः** द्वादशाङ्गुलोच्छ्रयाः। सर्वकर्मणां प्रागुत्तरसंस्थत्वात् पालिकादिपात्रस्थापनस्य तथात्वभ्रान्तिं वारयितुं **पश्चिमानुगाः** इत्युक्तम्। पश्चिमे पश्चिमदिशि। अनु पश्चात्। अन्त इति यावत्। गच्छन्तीति तथोक्ताः। तेनादौ पूर्वचतुष्के पालिकास्थापनम्। मध्यचतुष्के पञ्चमुखानां, ततः शरावाणां पश्चिमचतुष्क इति पात्रस्थापनकर्मणः पश्चिमे समाप्तिरिति ज्ञेयम्॥ ८३,८४॥

पालिकादिषु अनिरुद्धादिचतूरूपपूजाकथनं अङ्कुरार्पणकथनं च

**तं.सा.** **तत्र विष्णुं चतुर्मूर्तिं पूजयेद्भक्तितस्त्रिशः।**
**सप्तधान्यानि तेष्वेव पूरयेदंकुरार्थतः** ॥ ८५॥

**त.क.–** यदा पश्चिमानुगाः पालिका उक्तप्रकारेण मृद्भिः पूरिता मण्डलेऽवस्थापितास्तदैव इतिकर्तव्यतान्तरं वदन् आवापनीयबीजानि दर्शयति– **तत्रेति**॥ **तत्र** प्रतिष्ठादिनमपेक्ष्य तृतीये पञ्चमे दशमे द्वादशे वा पूर्वदिने वासुदेवसङ्कर्षणानिरुद्धप्रद्युम्नाख्यमूर्तिचतुष्टयवन्तं विष्णुं भक्तितस्त्रिवारं पूजयेत्। पालिकादीनां देवाश्च पूज्याः। तदुक्तं—

ध्यात्वा च पालिकादीनामधिदैवाननुक्रमात्।
घटिकानां विधातारं पालिकानां जनार्दनम्।
ईशाना च शरावाणां समभ्यर्च्य यथाविधि॥ इत्यादि।

पालिकादिषु मृद्भिः पूरितेषु सप्तधान्यान्यंकुरोत्पत्त्यर्थं तेष्वेव पूरयेदित्यर्थः।

नीवाराः शालयो मुद्गाः श्यामाकाश्च प्रियङ्गवः ।
यवास्तिलाश्च गोधूमा ये चान्ये याज्ञिका मताः ।।

इत्यादिना बहूनि धान्यानि यद्यप्युक्तानि। तथापि मध्यमकल्पाश्रयणेन धान्यानां सप्तत्वमुक्तम् ।। ८५ ।।

**अ.सं.– तत्र** त्रिविधेषु पात्रेषु **चतुर्मूर्तिं** अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाख्य-चतूरूपिणं हरिं **त्रिशः** त्रिवारं पूजयेत्। पालिकाचतुष्टये एकवारम्। पञ्चमुखचतुष्टये एकवारं शरावचतुष्टयेऽपि एकवारमिति त्रिवारमनिरुद्धादिचतुर्मूर्तिं पूजयेदित्यर्थः। तेन द्वादशपात्रेषु द्वादशमूर्तयो भवन्ति । **तेष्वेव** अनिरुद्धादिपूजार्थं कृतेष्वेव द्वादशपात्रेषु **अङ्कुरार्थतः** अङ्कुरोत्पादनार्थम्। मुद्गादिसप्तधान्यानि। उपलक्षणमेतत् । संभवे सति अन्यान्यपि धान्यानि पूरयेत् । तदुक्तं शेखरे–

मुद्गाढायवानिष्पावसर्षपान् माषकङ्गुकान् ।
तिलशालिश्यामराजमाषान् सल्वांश्च साधयेत् ।।

बीजानां देवता ह्येताः विष्णुश्रीब्रह्मवायवः ।
ईशेन्द्रस्कन्दधर्मार्काश्चन्द्रवारीशवह्नयः ।। इति ।

पात्रेषु बीजपूरणमन्त्र उक्तः तत्रैव–

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ।।

इति मन्त्रेण बीजानि पूर्वोक्तक्रमयोगतः ।
आवपयेत्पालिकाद्येषु कर्त्तारं च हरिं स्मरन् ।। इति ।

बीजावापनं च रात्रावेव कार्यम् ।

बीजानां दैवतं सोमः स रात्रौ कान्तिमान् यतः ।
तस्मादाहृत्य बीजानि निशायामेव वापयेत् ।। इति ।। ८५ ।।

**गु.दी.– तत्र** तेषु पात्रेषु द्वादशकोष्ठे मण्डले च **चतुर्मूर्तिमनिरुद्धप्रद्युम्न-**सङ्कर्षणवासुदेवरूपिणं विष्णुं **त्रिशो** वारत्रयं पूजयेत्। तेन द्वादशमूर्तयो

भवन्ति । **तेष्वेव** विष्णुपूजार्थं कृतेष्वेव पात्रेषु **सप्तधान्यानि** मुद्गाढकयवनिष्पावाः सर्षपमाषप्रियङ्गुका इति सप्तधान्यानि ।

यवाश्च व्रीहयश्चैव निष्पावाश्च प्रियङ्गवः ।
तिलाश्च माषाश्च तथा नीवारा शालयस्तथा ।।

इति पाद्मसंहितोक्तानि सप्तधान्यानि वा । अङ्कुरार्पणस्य कालविशेषमाह पराशरः–

उत्तरायणकाले तु शुक्लपक्षे विधीयते ।
स्थापनं देवदेवस्य स्वगृहालययोरपि ।।

प्रतिष्ठादिवसात्पूर्वं पञ्चमे सप्तमेऽपि वा ।
स्वसूत्रोक्तविधानेन कारयेदङ्कुरार्पणम् ।
पूर्वमेव प्रतिष्ठायां सायाह्ने नियतः शुचिः ।। इति ।। ८५ ।।

**मङ्गाली–** **तत्र** त्रिविधेषु पात्रेषु **चतुर्मूर्तिं** अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाख्यचतूरूपिणं हरिं **त्रिशः** त्रिवारं पूजयेत् । **तेष्वेव** अनिरुद्धादिपूजनार्थं कृतेष्वेव द्वादशपात्रेषु **अङ्कुरार्थतः** अङ्कुरोत्पादनार्थं मुद्गादि सप्तधान्यानि पूरयेत् ।

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्यऽनमस्तेऽस्तु महापुरुषपूर्वज ।।

इति मन्त्रेण बीजानि पूर्वोक्तक्रमयोगतः ।
वापयेत्पालिकाद्येषु कर्तारं च हरिं स्मरन् ।।

बीजानां दैवतं सोमः स रात्रौ कान्तिमान् यतः ।
तस्मादाहृत्य बीजानि निशायामेव वापयेत् ।।

इति शेखरोक्तप्रकारेण बीजावापनं कार्यम् ।। ८५ ।।

बलिद्रव्यकथनपुरस्सरं प्रतिष्ठादिनपर्यन्तं बलिदानकथनम्

**तं.सा.** **तत्र नित्यं बलिं दद्याद्विष्णवे दशरात्रकम् ।**
**ब्रह्मशङ्करगीर्वाणपितृगन्धर्वयक्षकैः** **।। ८६ ।।**

**भूतैश्च पायसेनैव तथा पद्माक्षतेन वा (च) ।**

**अन्नापूपेन पुष्पान्नैरन्नलाजाक्षतैरपि ॥ ८७ ॥**

**सक्तुभिश्च क्रमेणैव देवान्तान्(देवान्तं) पायसेन वा ।**

**त.क.**– ततः प्रतिष्ठादिनपर्यन्तं किं कार्यमित्यत आह— **तत्रेति ॥ नित्यं** सायं प्रातश्चेत्यर्थः। ब्रह्मादिभूतान्तैः सहिताय विष्णवे दशरात्रकं पायसादिभिः बलिं दद्यादिति सम्बन्धः। दशरात्रकं इत्युपलक्षणम्।

द्वादशाहे दशाहे वा सप्ताहे पञ्चमेऽहनि ।
तृतीयेऽहनि वा कुर्यात् कर्मारम्भदिनं प्रति ॥ इत्युक्तेः । यद्यपि—

............ दद्याद्दिक्षु बलिं ततः ।
रक्षिभ्यः कुमुदादिभ्यो बलिं दद्याद्दिवानिशम् ॥

यजेत सोमं तत्कुम्भे पायसेन दिवानिशम् ।
दीपांश्चारोपितान् रक्षेदनिर्वाणान् यथा तथा ॥

द्विजेन्द्रांस्तोषयेदिष्टैस्ताम्बूलसुमनःफलैः ।
गुरूंश्च तोषयेद्वित्तैर्यजमानः प्रयत्नवान् ।
हरिद्रावारिभिस्सिञ्चेदंकुराद्यभिवृद्धये ॥

इत्याद्येवोच्यते। तथापि 'रक्षिभ्यः कुमुदादिभ्यः' इत्यादिशब्देन भूतादिब्रह्मान्तानां ग्रहणमिष्यते। वक्ष्यमाणकेवलब्रह्मादीनां बलिदानस्य निषिद्धत्वात् ब्रह्माद्यन्तर्गतविष्णवे बलिदानं तत्र उच्यत इति व्याख्यानार्थं **'विष्णवे'** इत्युक्तम्। अत एव ब्रह्मादिभूतान्तैः सह विष्णवे बलिं दद्यादिति योज्यम्।

यद्वा, ग्रन्थान्तरे विष्णवे ब्रह्मादिभ्यश्च बलिदानं स्पष्टमुक्तमिति तदनुसारेण इदमुक्तम्।

हव्यवाहोऽनिलः सोमो यममर्यमणं तथा ।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ॥

एते पितृगणाः प्रोक्ताः सप्त ते लोकपूजिताः ।
क्रतुर्दक्षः कालकाम्यः वसुस्सप्तशुची रुचिः ॥

पुरूरवा ध्रुवश्चैव विश्वेदेवा इमे च ते ।
नासत्यदस्रावुभयमश्विनौ परिकीर्तितौ ॥

अन्योन्यसदृशौ देवौ पीयूषकलशावहौ ।
रविसोमाङ्गारबुधगुरुशुक्रशनैश्चराः ॥

राहुकेतू तथा त्वेतौ कीर्तिताश्च नवग्रहाः ।
शक्राग्नियमरक्षांसि वरुणो वायुरेव च ॥

सोम ईशान इत्यष्टौ लोकपालाः प्रकीर्तिताः ।
ब्रह्मा मरीचिरत्रिश्च विवस्वान् पृथिवीवरः ॥

चित्रश्चैवापवत्सश्च सन्धिता च सवित्रकः ।
रुद्रो रुद्रजयश्चैव इन्द्र इन्द्रजयस्तथा ॥

ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः ।
आवहो विवहश्चैव उद्वहस्संवहस्तथा ॥

निवहोऽनुवहश्चैव सुवहश्च तथैव च ।
सप्तैते मरुतः प्रोक्ताः सप्तसप्त विभेदिताः ॥

कालो रविश्च रुद्रश्च अग्निरापस्तथैव च ।
पञ्चैते तु समाख्याता गणाः साध्यसमाह्वयाः ॥

इत्यादिनोक्तेषु ब्रह्मशंकरादीन् विहायेतरे सर्वे **गीर्वाण**शब्देन गृह्यन्ते। तथाच विष्णवे पायसेन, ब्रह्मणे पद्मसहिताक्षतेन, शङ्कराय अन्नसहितापूपेन, गीर्वाणेभ्यः पुष्पसहितान्नैः, पितृभ्यः केवलान्नेन, गन्धर्वेभ्यः लाजैः, यक्षेभ्यः अक्षतैः, भूतेभ्यः सक्तुभिरिति क्रमेण बलिं दद्यादित्यर्थः। अत्र **चापि**शब्दाः होमानां परस्पर-समुच्चायकाः। एवशब्दौ बलिं दद्यादेव इति, क्रमेणैव इति च सम्बद्ध्येते।

पक्षान्तरमाह– **देवानां पायसेन वेति**। विष्णुब्रह्मशङ्करगीर्वाणेभ्यः पायसेन। पितृभ्यः पञ्चाक्षतेन अन्नापूपेन च। गन्धर्वेभ्यः पुष्पान्नैः। यक्षेभ्योऽन्नलाजैः। भूतेभ्यः सक्तुभिरिति योज्यम्। ननु

रजोनिष्ठास्तमोनिष्ठा द्विविधाऽ(द्विधा)र्वाक्स्रोतसः स्मृताः।
असुराद्यास्तमोनिष्ठा राजसास्तु रजोऽधिकाः ॥(भा.ता.३-११-२५)

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ (भ.गी.१७-४)

इति वचनेन यक्षादिपूजाया निन्दितत्वात् कथं तत्पूजा अत्र विधीयत इति चेदुच्यते। असुराद्या यक्षभूताश्च द्विविधाः। असुरादिजातौ उत्पन्ना अपि नृत्तगानादिकर्तृत्वात् देवसेवका एव। अत एव ऊर्ध्वस्रोतसः। सर्वज्ञा आन्तरभक्ताश्च। अत एव देवैः सह पूज्याश्च केचित्। विपरीताश्च केचित्। विपरीतानां पूजानिषेधेऽपि तदन्येषां तदभावेन पूजाविधानमुपपन्नमेव। तदुक्तम्—

प्रोक्ता अष्टविधा देवा विबुधाः सर्व एव तु।
पितृणां शतमेवात्र असुरास्त्रिंशदेव च ॥

गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम्।
सप्ततिर्यक्षरक्षस्तु विंशच्चारणजातिषु।
शतं सिद्धास्तथाऽन्यासु सप्ततिः सर्व(सर्प)जातिषु ॥

ऊर्ध्वस्रोतस एवैतेऽन्येऽर्वाक्स्रोतसः स्मृताः।
वैकारिकेषु देवेष्वेते वै मुग्धभोगिनः ॥

अभोगिनस्तदन्ये तु देवा एते ततस्स्मृताः।
सर्वज्ञास्तैस्सहाराध्या भक्तास्तेष्वन्तरेव च ॥

नृत्तगानादिकर्तारो वाहनादिकृतस्तथा।
सिद्धसिद्धेति वक्तारश्चाराश्चैषां क्वचित् क्वचित्।
सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः ॥ इत्यादि ॥ ८६-८७ ॥

(भा.ता.३-११-२८)

**अ.सं.–** इदानीं बलिदानमाह– **तत्रेति ।।** **तत्र** पालिकदिपात्रसमीपे ब्रह्मशङ्करगीर्वाणपितृगन्धर्वयक्षकैः । भूतैश्च सहितायेति शेषः । विष्णवे दशरात्रकं नित्यं बलिं दद्यात् । गीर्वाणादिपञ्चशब्दैः तत्तत्समुदायो ग्राह्यः । बलिद्रव्यमाह– **पायसेनेत्यादिना ।।** अत्रायं विवेकः । विष्णवे पायसेनैव । ब्रह्मणे पद्माक्षतेनैव । **वा**शब्दो एवार्थे । पद्मसहिताक्षतेनैवेत्यर्थः । शङ्कराय **अन्नापूपेनैव** अन्नसहितापूपेन । देवेभ्यः **पुष्पान्नैः** पुष्पसहितान्नैः । पितृभ्योऽन्नैः । गन्धर्वेभ्यो लाजैः । यक्षेभ्योऽक्षतैः । भूतेभ्यः सक्तुभिरिति । **क्रमेण** देवताक्रमेण द्रव्यक्रमेण चेति । पक्षान्तरमाह– **देवान्तमिति ।।** देवाः अन्ते येषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः । तेन विष्णुब्रह्मशङ्करेभ्यः पायसेन । अन्येषां पञ्चानां यथाक्रमं पञ्चद्रव्यैः । अत्रान्नलाजाक्षतैरित्यनेन एकमेव द्रव्यं ज्ञेयम् । विस्तारेण कर्त्तुमशक्तौ संक्षेपेणाङ्कुरार्पणविधिरुक्तः शेखरे–

काले तु त्वरिते प्राप्ते कुर्यात्सद्योऽङ्कुरार्पणम् ।
पालिकदिषु पात्रेषु नारिकेलप्रसूनकम् ।।

दूर्वाक्षततिलैर्युक्तं पूरयेन्मूलमन्त्रतः ।
पूजां बल्यादिकं सर्वं सद्य एव समाचरेत् ।। इति ।। ८६-८७ ।।

**गु.दी–** इदानीं बलिमाह— **तत्रेति ।।** पालिकादिपात्राणां समीपे । ब्रह्मशङ्करगीर्वाणपितृगन्धर्वयक्षकैः भूतैश्चेति तृतीया चतुर्थ्यर्था । तेभ्यश्च दशरात्रकं नित्यं बलिं दद्यात् । गीर्वाणशब्देन देवसमुदायो गृह्यते । तत्र द्रव्यमाह— **पायसेनेति ।।** पायसेनैव विष्णवे । ब्रह्मशङ्करगीर्वाणेभ्यः **पद्माक्षतेन** पद्मसहितेनाक्षतेन । **अन्नापूपेन** अन्नसहितेनापूपेन पितृभ्यः । **पुष्पान्नैः** पुष्पसहितान्नैः गन्धर्वेभ्यः । **अन्नलाजाक्षतैः** अन्नैर्लाजैरक्षतैश्च यक्षेभ्यः । सक्तुभिः भूतेभ्य इति क्रमेण विष्ण्वादीनां बलिं दद्यादित्यर्थः । पक्षान्तरमाह— **देवान्तमिति ।।** विष्णुब्रह्मरुद्रदेवेभ्यः पायसेन, पित्रादिभ्यः द्रव्यैरिति ।।८६-८७।।

**मङ्गली–** इदानीं बलिदानमाह– **तत्रेति ।। तत्र** पालिकादिपात्रसमीपे । भूतैश्च सहितायेति शेषः । विष्णवे दशरात्रकं नित्यं बलिं दद्यात् । बलिद्रव्यमाह–

**पायसेनेति** ।। पद्माक्षतेन वा। वाशब्द एवार्थे। पद्मसहिताक्षतेनैवेत्यर्थः। **अन्नापूपेन** अन्नसहितापूपेन **पुष्पान्नैः** पुष्पसहितान्नैः **क्रमेण** देवता क्रमेण द्रव्यक्रमेण चेत्यर्थः। निर्दिष्टेभ्यो विष्ण्वादिभ्यः यथाक्रमं पायसादिना वलिं दद्यादित्यर्थः। पक्षान्तरमाह– **देवान्तमिति** ।। देवा अन्ते एषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन विष्णुब्रह्मशङ्करेभ्यः पायसेन अन्येषां पञ्चानां यथाक्रमं पञ्चद्रव्यैः। अत्रान्नलाजाक्षतैरित्यनेनैकमेव द्रव्यमुक्तमिति ज्ञेयम्।

काले तु त्वरिते प्राप्ते कुर्यात्सद्योऽङ्कुरार्पणम्।
पालिकादिषु पात्रेषु नारिकेलप्रसूनकम् ।।

दूर्वाक्षततिलैर्युक्तं पूरयेन्मूलमन्त्रतः।
पूजां बल्यादिकं सर्वं सद्य एव समाचरेत् ।। इति पक्षान्तरमुक्तं शेखरे ।।

।। ८६,८७ ।।

प्रतिमायाः आधिवासनकथनम्, स्थलविशेषकथनपुरस्सरं
प्रतिष्ठाङ्गपारायणकथनं च

**त.सा.** **तदैव(तत्रैव) प्रतिमायाश्च कारयेदधिवासनम्** ।। ८८ ।।

**पञ्चगव्ये सप्त(पञ्च)रात्रं क्षिप्त्वा पुरुषसूक्ततः।**
**वेदांश्च चतुरः सम्यक् पारयेयुर्द्विजोत्तमाः** ।। ८९ ।।

**प्राच्यादिद्वारगौ द्वौ द्वावेकैकं तु दशावराः।**
**यथालब्धं यथावित्तमथवा विष्णुतत्पराः** ।। ९० ।।

**त.क–** एवमियता प्रवन्धेन प्रसक्तानुप्रसक्त्या शिलाद्यानयनमण्टपादि-निर्माणादिकमुक्तम्। अथेदानीं यदर्थोऽयमारम्भः तत्प्रतिष्ठाविधानं च वक्तुमाह– **तदैवेति** ।। अत्र, 'वेदमङ्गलघोषेण वाद्यैश्च प्रतिमां हरेत्' (३-५१) इत्यर्धमा-दावुपस्कर्तव्यम्। रथकारादिहस्ते प्रतिमानिर्माणार्थं शिलादिदानानन्तरमेव

देवालयनिर्माणस्यारम्भः। यावता कालेन देवालयप्राकारगोपुरादिनिर्माणं, सौधादिनाऽलङ्करणं, गोमयाद्यनुलेपनगन्धोदकप्रक्षेपाद्यंकुरार्पणान्तं क्रियते तावत् षण्णवत्यंगुलोक्तप्रतिमानिर्माणं समाप्यते। तदैव काले वेदमंगलवाद्यघोषैश्च प्रतिमां देवालयं प्रति नयेदित्यर्थः। तस्मिन्नेव काले पूर्वनिर्मितेऽधिवासनमण्टपे आनीतायाः प्रतिमाया अधिवासनं कारयेदित्यर्थः।

शिल्पिभिर्निर्मिते बिम्बे शास्त्रदृष्टेन वर्त्मना।
कर्मार्चापीठिकायां च रत्नादिन्यसने(तः) कृते॥

उद्घाटिते च नयने यथार्थ(र्हे) सर्वशान्तिदे।
स्थूलसूक्ष्मेषु चान्येषु प्रतिमाङ्गेषु सर्वशः॥

सुकृतेषु यथाशास्त्रं कर्मान्ते देशिकोत्तमः।
रथकारेण विदुषा सु(स)निरूप्यनिरूपकः॥

धनैश्च कर्मानुगुणं स्थपतिं परितोष्य च।
रथकारेण विभवैर्मनःप्रीतिविवर्धनैः॥

गतेषु शिल्पिषु तथा रथकारे च निर्गते।
अन्तर्बहिश्च सदने शोधिते मार्जनादिना॥

प्राकारे मण्टपे(मण्डले) धाम्नि गोपुरे मार्जनादिना।
शुद्धीकृते तथा गव्यैः पञ्चभिः प्रोक्षिते सति॥

इत्यादिना निर्दिष्टकालविशेषः अत्र तदैवेति शब्देन परामृश्यते।

अयनश्चोत्तरं मुख्यं जघन्यं दक्षिणायनम्।
माघे भाद्रपदे चैव प्रतिष्ठां मासि वर्जयेत्॥

राज्ञो राष्ट्रस्य चान्यस्य ग्रामस्य च गुरोस्तथा।
यजमानस्यधिष्ठस्य शुभेष्वनुगुणेषु च॥

प्रथमा च द्वितीया च पञ्चमी च त्रयोदशी।
तृतीया सप्तमी षष्ठी दशम्येकादशीति च॥

द्वादशी पौर्णमासी च शुक्लपक्ष(क्षै)शुभान्विताः ।
कृष्णे तु पञ्चमीं यावत्तिथयः सम्प्रकीर्तिताः ।।

त्रिषूत्तरेषु रेवत्यामश्विन्यां रोहिणीषु च ।
तिष्ये पुनर्वसौ वाऽपि हस्ते च श्रवणे तथा ।
देवस्य स्थापनं कुर्यात् विष्णोरभ्युदयावहम् ।।

इत्यादिनोक्ततिथिवारनक्षत्रादीनां वा परामर्शः ।।

अत्र पुरुषसूक्तं पठित्वा कटाहादिस्थितपञ्चगव्ये प्रतिमां सप्तरात्रं क्षिप्त्वा जलाधिवासनं कारयेदिति संबन्धः। सप्तरात्रमित्येतत् त्रिरात्रादेरप्युपलक्षणम्। अत्रास्ति पक्षद्वयम्। जलाधिवासनात् पूर्वं, तदनन्तरं च मूलमन्त्रादिना होमः। स एव शान्तिहोम इत्युच्यते। स चावश्यकः।

ततोऽपराह्णसमये शान्तिहोमं समाचरेत् ।
मानोन्मानप्रमाणादौ हानिर्वा वृद्धिरेव वा ।।

दुर्विज्ञेयं तदखिलं होमाच्छाम्यति निश्चितम् ।
शमीपल्लवसंयुक्तानक्षतान् देशिकः स्वयम् ।
सप्तव्याहृतिभिश्चैव प्रत्येकं जुहुयात् स्वयम् ।। इत्यादेः।

तथा च प्रतिमासन्निधावेव पुरुषसूक्तादिना हुत्वा, पूर्णाहुतिं च दत्त्वा, प्रतिमायां सन्निधानार्थं विष्णुं विज्ञाप्य, मूलमन्त्रेण प्रतिमामाच्छाद्यार्घ्यपाद्यादिना पूजयित्वा, मूलमन्त्रेण दक्षिणहस्ते कौतुकं सूत्रं बद्ध्वा, रक्षोहणेति मन्त्रेण रक्षां कृत्वा, नयनोन्मीलनं च कारयित्वा, सर्पिरादिनाऽभ्यज्य, चूर्णैश्चोद्वास्य, वारिणा प्रक्षाल्य, उपवीतोत्तरीयादि दत्त्वा, ततो रथादिके याने आरोप्य, रथन्तरादिसामगानादिपूर्वं जलाभ्याशं नीत्वा, जलाभ्याशे मूर्तिमवरोप्य, पूर्वकल्पितसप्तपर्णमयमण्टपे सिद्धविष्टरे प्राङ्मुखमुदङ्मुखं वा समवस्थाप्य, नदीदीर्घिकानिर्झरादौ प्रवासयिष्यन्, नद्यां चतुरस्रं महापीठं संस्थाप्य, तत्र संहारक्रममाचार्यः स्मृत्वा, उदकस्थपीठे संस्थाप्य, स्वयमुदङ्मुखः प्राङ्मुखं प्रतिमां

शाययेत्। ततश्चक्रमुद्रां प्रदर्श्य, तीरे वाद्यादिघोषपूर्वकं तत्रैव निवसेदित्यादीतिकर्तव्यताप्रपञ्चं **च**शब्देन सूचयति।

जलाधिवासानन्तरं कर्तव्यमाह– **वेदानिति**॥ विष्णुतत्पराः द्विजोत्तमाः दश अवरा येषां ते **दशावराः** दशसङ्ख्यातः अन्यूनसङ्ख्याः ऋगादींश्चतुरो वेदान् **पारयेयुः** वेदपारायणं कुर्युरिति सम्बन्धः। दशानां ब्राह्मणानां पारायणे स्थानविशेषं दर्शयन् विनियोगप्रकारं दर्शयति– **प्राच्यादीति**॥ प्राच्यादिचतुर्षु द्वारेषु द्वौ द्वावुपविश्य एकैकं वेदं पारयेयुः। **तु**शब्दात् द्वौ ईशान्याम्, आग्नेय्यां च वक्ष्यमाणरीत्या सन्निधानजपं कुर्याताम्। प्राचीद्वारे द्वौ ब्राह्मणौ ऋग्वेदं पारयेताम्। दक्षिणद्वारे द्वौ यजुर्वेदं पारयेताम्। पश्चिमद्वारे द्वौ सामवेदम्। उत्तरद्वारे द्वावथर्वणवेदम्। ईशान्यमेकः विष्णोर्नुकमित्यादिना सन्निधानमन्त्रान् जपेत्। अन्यस्त्वाग्नेय्याम् अष्टाक्षरमन्त्रान् जपेत्। दशावराः इत्युक्तस्यापवादमाह– **यथालब्धमिति**॥ अथवा पक्षान्तरमुच्यते। ब्राह्मणसमाजानुसारेण स्ववित्तानुसारेण च द्विजैः पारायणं कारयेदिति॥ ८८-९०॥

**अ.सं.–** अथ 'अधिवासं विना न स्यात् प्रतिष्ठा सार्वदेशिका' इति वचनात् प्रतिमाया अधिवासनमाह– **तदैवेति**॥ **तदैव** अङ्कुरार्पणकाल एव। पञ्चगव्य इत्युपलक्षणम्। जलादिष्वपीत्यर्थः। **सप्तरात्रं** पृथक् पृथक् सप्ताहमित्यर्थः। अत्यन्तसंयोगे द्वितीया। प्रतिमाया अधिवासनं कारयेत्। **पञ्चगव्ये** इत्येकवचनेन मिलितेष्वित्युक्तं भवति। तदुक्तं पञ्चरात्रे–

धातुमयीं च सप्ताहं प्रतिमां वासयेज्जले।
सप्ताहं मृत्तिकायां च धान्ये सप्ताहमेव तु॥

एकत्र पञ्चगव्येषु निक्षिप्य दिनसप्तकम्।
पञ्चामृतेषु च पृथक् निक्षिपेद्दिनसप्तकम्॥ इति।

एकत्र मिलितेष्वित्यर्थः। अधिवासने इतिकर्तव्यतामाह– **क्षिप्त्वेति**॥ पुरुषसूक्तेन पञ्चगव्यादौ **क्षिप्त्वा** निधायेत्यर्थः। मुखतः पञ्चगव्याधिवासकथनन्तु धान्याधिवासाभावेऽपि एतावन्मात्रेणापि चरितार्थतेति ज्ञापनाय।

यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ।
तावत्समस्तं कथितमस्मिंस्तन्त्रे यथाविधि ।। - (३.१६०)

इत्येतदध्यायान्ते कथनादिति ज्ञातव्यम् । सप्तरात्राधिवासासम्भवे पक्षान्तरमप्युक्तम् ग्रन्थान्तरे–

इत्येवं सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ।
एकरात्रिं च सद्यो वा कुर्यादेवाधिवासनाम् ।। इति ।।

अत्र वेदपारायणं कारयेदित्याह– **वेदांश्चेति ।।** द्विजोत्तमाः चतुरः पृथक् ऋग्यजुःसामाथर्वसंज्ञान् वेदान् सम्यक् **पारयेयुः** पठनेन पारं समाप्तिं प्रापयेयुः । पारायणस्थलमाह– **प्राच्यादीति ।।** प्राच्यादीत्यनेन पूर्वादिचतुर्द्वारेषु एकैकस्मिन् द्वारि द्वौ द्वौ ब्राह्मणौ स्थित्वा एकैकं वेदं पारयेयुरित्युक्तं भवति । तत्र पूर्वद्वारे बह्वृचौ द्वौ । दक्षिणे यजुर्वेदिनौ । पश्चिमे सामवेदिनौ । उत्तरे चाथर्वणवेदिनाविति विवेको ज्ञेयः ।

पूर्वतो बह्वृचौ पृथक् दक्षिणे तु यजुर्विदौ ।
गायेतां सामगौ राजन् पश्चिमद्वारमाश्रितौ ।
आथर्वणौ चोत्तरतः...........।। इत्युक्तेः ।

द्वयोर्द्वयोरभावे एकैकं वेदपारायणे नियोजयेदित्याह– **एकैकं त्विति ।।** एकैकं वेत्यर्थः । ब्राह्मणैः मन्त्रसूक्तजपं पारयेदिति ग्राह्यम् । वेदतन्मन्त्रसूक्तजप्यब्राह्मणसंख्यामाह– **दशेति ।।** दशावराः येषां ते **दशावाराः** दशभ्यो अन्यूना इति यावत् । दशभिः पारायणमवरपक्ष इति भावः । दशपक्षे दक्षिणभागे एकः, मण्टपान्त एक इति ज्ञातव्यम् । 'दक्षिणे मन्त्रजापकम् । एकं पुरुषसूक्तस्य जापकम् मण्टपान्तरं' इत्युक्तेः । पक्षान्तरमाह– **यथालब्धमिति ।।** अथवा यथालब्धमिति सम्बन्धः । लब्धिमनतिक्रम्येत्यर्थः । यावन्त एव लब्धाः तावन्त एव कार्या इति भावः । ननु बहूनां लाभे दक्षिणानवकाशे कथमित्यत आह– **यथावित्तमिति ।।** वित्तानुसारेण कार्या इति भावः । वेदपारायणकर्त्तारः ब्राह्मणाः सर्वेऽपि विष्णुभक्ता एव भवेयुरित्याह– **विष्णुतत्परा इति ।।**

जपेयुश्चतुरो वेदान् चतुर्द्वारेषु वैष्णवाः ।

तथैव वैष्णवान् सूक्तान् जपेत्तत्र विशेषतः ।। इत्युक्तेः ।। ८८-९० ।।

**गु.दी.**– अथ प्रतिमाधिवासमाह— **तत्रैवेति** ।। यदा पालिकादिस्थापनमङ्कुरार्पणं च तस्मिन् समय एव बलिदानानन्तरमेव वा पञ्चगव्ये प्रतिमां पुरुषसूक्ततः क्षिप्त्वा प्रतिमायाः सप्तरात्रं पञ्चगव्येऽधिवासनं कारयेदित्यर्थः । अत्र मृज्जलधान्याधिवासनं च ग्राह्यम् । तथा हि पञ्चरात्रे—

अर्चां संस्थाप्य मृद्धान्यसलिलेष्वधिवासयेत् ।। इति ।।

तेषु सप्तदिनेषु ऋगादिवेदजापकानाह— **वेदेति** ।। द्विजोत्तमाश्चतुरो वेदान् सम्यक् **पारयेयुः** पारायणं कुर्युः । पारायणकर्तारः कति? कुत्र च परायणं कार्यमित्यपेक्षायामाह— **प्राच्यादीति** ।। प्राच्यादिद्वारगौ द्वौ द्वौ जापकौ एकैकं पारयेयुरित्यर्थः । एवमष्टौ जापकाः षोडश ऋत्विजः आचार्यश्चेति पञ्चविंशतिद्विजोत्तमाः मुख्यकल्पे भवेयुरिति द्रष्टव्यम् ।। **दशेति** ।। अवरपक्षे दशकात् न्यूनत्वं न सम्पाद्यमिति भावः । 'विष्णुपराः' इति वक्ष्यमाणमत्राकृष्यते । विष्णुपरा दशावरा द्विजोत्तमा इत्यर्थः । दशकपक्षे चत्वारो वेदपाठकाश्चत्वारो होत्रादयः ऋत्विजः ऐशान्यां मण्टपमध्ये पुरुषसूक्तजापी एकः, आग्नेय्यां मन्त्रजापी चैकः इति दश भवेयुरिति द्रष्टव्यम् । तदुक्तं पञ्चरात्रे–

आचार्यः स्थापयेद्विद्वान् मन्त्रज्ञांस्तत्र मण्टपे ।

चतुरो ब्राह्मणान् होतॄन् ऋत्विजो जापकांस्तथा ।

रक्षकांश्च चतुर्द्वारि आग्नेय्यां मन्त्रजापिनम् ।

ऐशान्यां पुरुषसूक्तस्य जापकं मण्टपान्तरे ।। इति ।

ननु ब्राह्मणदशकस्याप्यलाभे कथमित्यत आह— **यथालब्धमिति** ।। अथवा यथालब्धमिति सम्बन्धः । ननु बहूनां लाभे दक्षिणावकाशे कथमित्यत आह— **यथावित्तमिति** ।। विष्णुपरा इति द्विजोत्तमा भवेयुरित्यनुवर्तते । बहव इति शेषः । अयं भावः । दशकपक्षे एकैकस्मिन् द्वारि एकैक इति नियमः । बहुब्राह्मणलाभे वित्ते च सति एकैकद्वारि बहवो द्विजोत्तमा कार्या भवेयुरिति ।

कृत्वा वेदिं च तन्मध्ये नवहस्तप्रमाणतः ।
अष्टहस्तेन वा कुर्यात् सप्तहस्तेन वा पुनः ।
द्विहस्ताध्यर्धहस्ता वा वेदिका ह्यतिशोभना ।। इति ।।८८-९०।।

**मङ्गाली–** प्रतिमाया अधिवासनमाह– **तदैवेति ।। तदैव** अङ्कुरार्पणकाल एव । अधिवासने इतिकर्तव्यतामाह– **क्षिप्त्वेति ।।** पञ्चगव्ये इत्येतत्

धातुमयीं च सप्ताहं प्रतिमां वासयेज्जले ।
सप्ताहं मृत्तिकायां धान्ये सप्ताहमेव तु ।।

इति पञ्चरात्रोक्तजलादेरुपलक्षणम् । 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्नविद्यते' (३-१६०) इति वक्ष्यमाणप्रकारेण जलाद्यधिवासाभावेऽपि एतन्मात्रेण चरितार्थतेति ज्ञापनाय पञ्चगव्यं कण्ठत उपात्तम् ।

इत्येवं सप्तरात्रं च पञ्चरात्रं त्रिरात्रकम् ।
एकरात्रं वा सद्यो वा कुर्यादेवाधिवासनम् ।।

इति ग्रन्थान्तरोक्तं पक्षान्तरमपि ज्ञेयम् ।।

अत्र वेदपारायणं कारयेदित्याह– **वेदांश्चेति ।।** द्विजोत्तमाः **चतुरः** पृथक् ऋग्यजुःसामाथर्वसंज्ञान् वेदान् सम्यक् **पारयेयुः** पठनेन पारं समाप्तिं प्रापयेयुः । पारायणस्थानमाह– **प्राच्यादीति ।।** प्राच्यादीत्यनेन पूर्वादिचतुर्द्वारेषु एकैकस्मिन्द्वारे द्वौ द्वौ ब्राह्मणौ स्थित्वा एकैकं वेदं पारयेयुरित्युक्तं भवति ।

पूर्वतो बह्वृचौ पृथग्दक्षिणे च यजुर्विदौ ।
गायेतां सामगौ राजन् पश्चिमद्वारमाश्रितौ ।
अथर्वणौ चोत्तरतः................।।

इत्युक्तप्रकारेण तत्तद्वेदपारायणे दिङ्नियमो ज्ञेयः । द्वयोर्द्वयोरभावे एकैकं पारायणे विनियोजयेदित्याह– **एकैकं त्विति ।।** एकैकं वेत्यर्थः । ब्राह्मणैर्मन्त्र-सूक्तजपं च कारयेदिति ग्राह्यम् । अधमपक्षे द्वारे वेदमन्त्रसूक्तजपृब्राह्मणसङ्ख्या-माह– **दशेति ।।** दश अवरा येषु ते **दशावराः** दशभ्योऽन्यूना इति यावत् ।

जपेयुश्चतुरो वेदान् चतुर्द्वारेषु वैष्णवाः ।
तथैव वैष्णवान् सूक्तान् जपेत्तत्र विशेषतः ।। इत्युक्तेः ।। ८८-९० ।।

**गु.दी.**– अथ प्रतिमाधिवासमाह— **तत्रैवेति** ।। यदा पालिकादिस्थापनमङ्कुरार्पणं च तस्मिन् समय एव बलिदानानन्तरमेव वा पञ्चगव्ये प्रतिमां पुरुषसूक्ततः क्षिप्त्वा प्रतिमायाः सप्तरात्रं पञ्चगव्येऽधिवासनं कारयेदित्यर्थः । अत्र मृज्जलधान्याधिवासनं च ग्राह्यम् । तथा हि पञ्चरात्रे—

अर्चां संस्थाप्य मृद्धान्यसलिलेष्वधिवासयेत् ।। इति ।।

तेषु सप्तदिनेषु ऋगादिवेदजापकानाह— **वेदेति** ।। द्विजोत्तमाश्चतुरो वेदान् सम्यक् **पारयेयुः** पारायणं कुर्युः । पारायणकर्तारः कति? कुत्र च परायणं कार्यमित्यपेक्षायामाह— **प्राच्यादीति** ।। प्राच्यादिद्वारगौ द्वौ द्वौ जापकौ एकैकं पारयेयुरित्यर्थः । एवमष्टौ जापकाः षोडश ऋत्विजः आचार्यश्चेति पञ्चविंशतिद्विजोत्तमाः मुख्यकल्पे भवेयुरिति द्रष्टव्यम् ।। **दशेति** ।। अवरपक्षे दशकात् न्यूनत्वं न सम्पाद्यमिति भावः । 'विष्णुपराः' इति वक्ष्यमाणमत्राकृष्यते । विष्णुपरा दशावरा द्विजोत्तमा इत्यर्थः । दशकपक्षे चत्वारो वेदपाठकाश्चत्वारो होत्रादयः ऋत्विजः ऐशान्यां मण्टपमध्ये पुरुषसूक्तजापी एकः, आग्नेय्यां मन्त्रजापी चैकः इति दश भवेयुरिति द्रष्टव्यम् । तदुक्तं पञ्चरात्रे–

आचार्यः स्थापयेद्विद्वान् मन्त्रज्ञांस्तत्र मण्टपे ।
चतुरो ब्राह्मणान् होतॄन् ऋत्विजो जापकांस्तथा ।
रक्षकांश्च चतुर्द्वारि आग्नेय्यां मन्त्रजापिनम् ।
ऐशान्यां पुरुषसूक्तस्य जापकं मण्टपान्तरे ।। इति ।

ननु ब्राह्मणदशकस्याप्यलाभे कथमित्यत आह— **यथालब्धमिति** ।। अथवा यथालब्धमिति सम्बन्धः । ननु बहूनां लाभे दक्षिणावकाशे कथमित्यत आह— **यथावित्तमिति** ।। विष्णुपरा इति द्विजोत्तमा भवेयुरित्यनुवर्तते । बहव इति शेषः । अयं भावः । दशकपक्षे एकैकस्मिन् द्वारि एकैक इति नियमः । बहुब्राह्मणलाभे वित्ते च सति एकैकद्वारि बहवो द्विजोत्तमा कार्या भवेयुरिति ।

कृत्वा वेदिं च तन्मध्ये नवहस्तप्रमाणतः ।
अष्टहस्तेन वा कुर्यात् सप्तहस्तेन वा पुनः ।
द्विहस्ताध्यर्धहस्ता वा वेदिका ह्यतिशोभना ।। इति ।।८८-९०।।

**मङ्गाली–** प्रतिमाया अधिवासनमाह– **तदैवेति ।। तदैव** अङ्कुरार्पणकाल एव । अधिवासने इतिकर्तव्यतामाह– **क्षिप्त्वेति ।।** पञ्चगव्ये इत्येतत्

धातुमयीं च सप्ताहं प्रतिमां वासयेज्जले ।
सप्ताहं मृत्तिकायां धान्ये सप्ताहमेव तु ।।

इति पञ्चरात्रोक्तजलादेरुपलक्षणम् । 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्नविद्यते' (३-१६०) इति वक्ष्यमाणप्रकारेण जलाद्यधिवासाभावेऽपि एतन्मात्रेण चरितार्थतेति ज्ञापनाय पञ्चगव्यं कण्ठत उपात्तम् ।

इत्येवं सप्तरात्रं च पञ्चरात्रं त्रिरात्रकम् ।
एकरात्रं वा सद्यो वा कुर्यादेवाधिवासनम् ।।

इति ग्रन्थान्तरोक्तं पक्षान्तरमपि ज्ञेयम् ।।

अत्र वेदपारायणं कारयेदित्याह– **वेदांश्चेति ।।** द्विजोत्तमाः **चतुरः** पृथक् ऋग्यजुःसामाथर्वसंज्ञान् वेदान् सम्यक् **पारयेयुः** पठनेन पारं समाप्तिं प्रापयेयुः । पारायणस्थानमाह– **प्राच्यादीति ।।** प्राच्यादीत्यनेन पूर्वादिचतुर्द्वारेषु एकैकस्मिन्द्वारे द्वौ द्वौ ब्राह्मणौ स्थित्वा एकैकं वेदं पारयेयुरित्युक्तं भवति ।

पूर्वतो बह्वृचौ पृथग्दक्षिणे च यजुर्विदौ ।
गायेतां सामगौ राजन् पश्चिमद्वारमाश्रितौ ।
अथर्वणौ चोत्तरतः................।।

इत्युक्तप्रकारेण तत्तद्वेदपारायणे दिङ्नियमो ज्ञेयः । द्वयोर्द्वयोरभावे एकैकं पारायणे विनियोजयेदित्याह– **एकैकं त्विति ।।** एकैकं वेत्यर्थः । ब्राह्मणैर्मन्त्र-सूक्तजपं च कारयेदिति ग्राह्यम् । अधमपक्षे द्वारे वेदमन्त्रसूक्तजपतृब्राह्मणसङ्ख्या-माह– **दशेति ।।** दश अवरा येषु ते **दशावराः** दशभ्योऽन्यूना इति यावत् ।

दशभिः पारायणमवरपक्ष इति भावः । चत्वारो वेदपाठकाः । चत्वारो द्वारसूक्तजापकाः । दशपक्षे दक्षिणभागे एकः, मण्टपान्तरेक इति ज्ञातव्यम् । 'दक्षिणे मन्त्रजापकम् । एकं पुरुषसूक्तस्य जापकं मण्डपान्तरे' इत्युक्तेः । पक्षान्तरमाह– **यथालब्धमिति ।।** अथवा यथालब्धमिति सम्बन्धः । यावन्त एव लब्धास्तावन्त एव कार्या इति भावः । ननु बहूनां लाभे दक्षिणानवकाशे कथमित्यत आह– **यथावित्तमिति ।।** वित्तानुसारेण कार्या इति भावः । वेदपारायणकर्तारो ब्राह्मणास्सर्वेऽपि विष्णुभक्ता भवेयुरित्याह– **विष्णुतत्परा इति** ।। ८८-९० ।।

प्रतिष्ठाङ्गहोमार्थं कुण्डनिर्माणाभिधानम्

त. सा. **त्रयोदशात्र कुण्डानि परितः कारयेद्बुधः ।**
**उक्तलक्षणयुक्तानि प्रधानन्त्वग्निकोणके** ।। ९१ ।।

**साक्षात्तु कोणगाद्धस्तमात्रमन्तरतः सुधीः ।**

**त.क.–** शान्तिहोमं वक्तुं कुण्डनिर्माणप्रकारं विशदयति– **त्रयोदशेति ।। अत्र** अधिवासनमण्टपे वेदिकायाः परितः त्रिमेखलत्वादिनोक्तलक्षणानि त्रयोदशकुण्डानि पूर्वादिदिक्षु विदिक्षु च कारयेदिति सम्बन्धः । तत्रायं क्रमः । पूर्वस्यां दिशि द्वे कुण्डे । दक्षिणस्यां दिशि द्वे । पश्चिमायां द्वे । उत्तरस्यां द्वे । आग्नेयकोणे एकम् । वायव्ये एकम् । नैरृतकोणे एकम् । ऐशान्ये त्वेकम् । एवं द्वादशकुंडानि । अवशिष्टस्यैकस्य नामधेयं स्थलं चाह– **प्रधानन्त्विति ।। तुशब्देन** तत्र होमबाहुल्यं सूचयति ।।

नन्वाग्नेयकोणः द्वादशेषु एकेन कुण्डेनाऽक्रान्तः । तत् कथं प्रधानं तत्र वर्ततामित्यतो व्यवस्थां दर्शयति– **साक्षादिति ।।** वेदिकायाः साक्षादाग्नेयकोणे यत् कुण्डमभिहितं तस्माद्धस्तमात्रमन्तरतः अग्निकोणे प्रधानं कारयेदिति सम्बन्धः ।। ९१ ।।

**अ.सं.–** एवं पञ्चगव्याधिवासवेदपारायणप्रकारमभिधाय प्रतिष्ठाङ्गहोमं कर्तुं

कुण्डकरणप्रकारमाह– **त्रयोदशेति** ।। **अत्र** मण्टपे वेद्याः परितः दिक्षु द्वे द्वे। विदिक्षु चैकैकं प्रधानं चेति त्रयोदशकुण्डानि। **उक्तलक्षणयुक्तानि** 'कृत्वा त्रिमेखलं कुण्डं' (तं.सा.२-१५) इत्यादिना द्वितीयाध्यायोक्तलक्षणयुक्तानि कारयेदित्यर्थः। कस्मिन् कोणे प्रधानकुण्डं कुर्यादित्यत आह– **प्रधानं त्विति** ।। प्राधान्यं तु बहुहोमाधिकरणत्वेनेति ज्ञेयम् ।।

ननु अग्निकोणे एकस्य कुण्डस्य विद्यमानत्वात् कथं तत्र प्रधानकुण्डं तत्र कार्यमित्यत आह– **साक्षादिति** ।। अग्निकोणगात् कुण्डात् हस्तमात्रमन्तरतः व्यवधाने अग्निकोण एव **साक्षात्** मुख्यं प्रधानकुण्डं कारयेदित्यर्थः। 'साक्षात् प्रत्यक्षमुख्ययोः' इत्यभिधानम् ।। ९१ ।।

**गु.दी–** प्रमाणान्तरे वेदिकायास्तत्प्रमाणस्य च सिद्धत्वादथ मण्टपे कुण्डनिवेशमाह— **त्रयोदशेति** ।। **अत्र** मण्डपे परित इति दिक्षु द्वे द्वे विदिक्षु चैकैकं प्रधानं चेति त्रयोदश कुण्डानि कारयेत्। **उक्तलक्षणयुक्तानि** द्वितीयेऽध्याये उक्तमेखलाकण्ठनाभ्यादियुक्तानि।

अष्टस्वाशासु कुण्डानि चतुरस्रानि कारयेत् ।
हस्तमात्राणि सर्वाणि दीक्षासु स्थापनादिषु ।। इति ।।

प्रमाणान्तरोक्तचतुरस्रत्वहस्तपरिमितत्वादिलक्षणयुक्तानि वा। प्रधानकुण्डस्य ग्रन्थान्तरेऽन्यथोक्तत्वात् प्रधानं कुत्र कार्यमित्यत आह— **प्रधानमिति** ।। **अग्निकोणके** पूर्वदक्षिणयोरन्तराले प्रधानकुण्डं भवति। प्राधान्यं तु वहुहोमाधिकरणत्वेनेति ज्ञातव्यम्। ननु कोणके एकं कुण्डमस्ति। इदं प्रधानं च। तत्र कथं कार्यमित्यत आह— **साक्षादिति** ।। **साक्षात्** अग्निकोणगात्कुण्डाद्धस्तमात्रव्यवधानतोऽग्निकोण एव प्रधानं कारयेदित्यर्थः। यद्वा प्रधानकुण्डादितरकुण्डानामन्तरमाह— **साक्षादिति** ।। 'साक्षात्प्रत्यक्षमुख्ययोः' इत्यभिधानात् साक्षात् प्रधानकुण्डात्प्राच्यादिकुण्डानां हस्तमात्रमन्तरं यथा भवति तथा कारयेदिति ।। ९१ ।।

**मङ्गली–** प्रतिष्ठाङ्गं होमं कर्तुं कुण्डकरणप्रकारमाह– **त्रयोदशेति** ।। **अत्र**

मण्टपे वेद्याः परितः दिक्षु द्वे द्वे, विदिक्षु एकैकं प्रधानं चेति त्रयोदशकुण्डानि । यद्वा पूर्वादिचतुर्दिक्षु एकैकं कुण्डं कोणे चैकं प्रधानकुण्डं पञ्च कुण्डेभ्यो बहिः परितः अष्टदिक्षु एकैकं कुण्डं एवं त्रयोदश कुण्डानि । **उक्तलक्षणयुक्तानि** 'कृत्वा त्रिमेखलं'(२-१५) इत्याद्युक्तलक्षणयुक्तानि राकरयेदित्यर्थः । कस्मिन्कोणे प्रधानकुण्डं कुर्यादित्यत आह– **प्रधानं त्विति** ।। प्राधान्यं बहुहोमाधिकरणत्वेन ज्ञेयम् । नन्वग्निकोणे एकस्य कुण्डस्य विद्यमानत्वात्कथं प्रधानं तत्र कार्यमित्यत आह– **साक्षादिति** ।। अग्निकोणगतात्कुण्डाद्धस्तमात्रमन्तरतः व्यवधानेन अग्निकोण एव **साक्षात्** मुख्यम् । 'साक्षात्प्रत्यक्षमुख्ययोः' इत्यभिधानात् । प्रधानकुण्टं कारये-दित्यर्थः ।। ९० ।।

द्रव्य-सांख्याकथनपुरस्सरं होमाभिधानम्

**तं. सा. आज्याहुतिं तेषु कुर्यात् प्रत्येकं लक्षसङ्ख्यकाम्(मात्रकम्)।। ९२ ।।**

**प्रत्येकमयुतं वाऽपि प्रधाने लक्षसङ्ख्यकम् ।**
**अर्धं तदर्धमथवा मूलमन्त्रेण मन्त्रवित् ।। ९३ ।।**

**पञ्चविंशतितत्त्वार्थे प्रधाने जुहुयात् पुरा(रः)(नः) ।**

**त.क.–** यदर्थं कुण्डनिर्माणप्रकारोऽभिहितः, विवृतस्तमेव होमं द्रव्यसङ्ख्यादिनाऽभिधत्ते– **आज्याहुतिमिति** ।। तेषु त्रयोदशेष्वपि कुण्डेषु प्रत्येकमेकैकस्मिन् कुण्डे लक्षसङ्ख्ययाऽऽज्याहुतिं जुहुयादिति सम्बन्धः ।।

पक्षान्तरमाह– **प्रत्येकमिति** ।। **वाऽपीति** पक्षान्तरे निपातौ । द्वादशकुण्डेषु प्रत्येकमेकैकस्मिन् कुण्डे आज्येनायुताहुतिं कुर्यादित्यर्थः, प्रधानकुण्डे पूर्वसङ्ख्यैवेत्याह– **प्रधान इति** ।। पूर्वकल्पे त्रयोदशस्वपि सङ्ख्यासाम्यम् । अस्मिंस्तु कल्पे प्रधाने सङ्ख्याधिक्यम् । द्वितीयकल्पे प्रधाने सङ्ख्यायां विकल्पेन पक्षद्वयमाह– **अर्धमिति** ।। प्रधान इत्यनुवर्तते । सन्निधानात् लक्षसङ्ख्याया अर्धं पञ्चाशत् सहस्रं जुहुयात् । अथवा **तदर्धम्** पञ्चविंशतिसहस्रमित्यर्थः । इतरेषु कुण्डेष्वयुतत्वं व्यवस्थितमेव। सर्वत्र होमे मन्त्रं विधत्ते– **मूलमन्त्रेणेति** ।।

अष्टाक्षरं मूलमुच्यते । मन्त्रविदित्यनेन मन्त्रार्थभगवदनुस्मरणमप्यङ्गमुच्यते । तच्च प्रागुपपादितम् ॥

ननु त्रयोदशकुण्डेषु युगपदेकेन होमस्य कर्तव्यत्वासम्भवात् पौर्वापर्यं तावत्सिद्धम्। तदा कस्मिन्नादौ होमः कर्तव्य इति जिज्ञासां शमयन् विशेषं च कल्पभेदेन विधत्ते– **पञ्चविंशतीति** ॥ प्रधानकुण्डे **पुरा** पूर्वं जुहुयादित्यर्थः। तादर्थ्ये सप्तमी। पञ्चविंशतितत्त्वानां शरीरस्थानां शुद्ध्यर्थमिति शाकपार्थिवत्वात्समासः। यद्यपि तत्त्वानि षट्त्रिंशत् सङ्ख्याकानि वक्ष्यन्ते। तथापि 'पञ्चभिः पञ्चभिर्ब्रह्म' इत्यादिवचनानुसारेणेतरेषां तत्त्वानां तत्र (भाग.३-२६-११) अन्तर्भावविवक्षया वा पञ्चविंशतितत्त्वोक्तिः। पञ्चविंशतितत्त्वार्थ इत्यनेनैव तत्त्वमन्त्राणामेव होमसाधनत्वं सूचयति ॥ ९२,९३ ॥

**अ.सं–** कुण्डेषु कर्तव्यं होममाह– **आज्याहुतीरिति** । **तेषु** त्रयोदशकुण्डेषु । 'प्रत्येकमयुतं वाऽपि' इत्यस्यापवादमाह– **प्रधाने लक्षसङ्ख्यकमिति** ॥ प्रधानहोमविषये पक्षान्तरमाह– **अर्धमिति** ॥ अथवा अर्धम् अथवा तदर्धमिति सम्बन्धः। **अर्धं** पञ्चाशत्सहस्राणि **तदर्धं** पञ्चविंशतिसहस्राणि। होममन्त्रमाह– **मूलमन्त्रेणेति** ॥ आज्याहुतीस्तेषु कार्या इति सम्बन्धः। **मन्त्रवित्** इति अधिकारिविशेषणकथनेन मन्त्रन्यासं कृत्वा ध्यात्वा ऋष्यादि स्मृत्वा **मूलमन्त्रेण** नारायणाष्टाक्षरमन्त्रेण होमः कार्य इत्युक्तं भवति ॥

प्रधानकुण्डे मूलमन्त्रेण होमापेक्षया पूर्वभाविहोमविशेषमाह– **पञ्चविंशतीति** ॥ **पुरः** पुरा मूलमन्त्रेण होमापेक्षया पूर्वमिति यावत्। **प्रधाने** प्रधानकुण्डे **पञ्चविंशतितत्त्वार्थे** पञ्चविंशतिसङ्ख्याकतत्त्वदेवताप्रीत्यर्थे जुहुयात्। 'पुनः' इति पाठे पूर्वकृतप्रधानकुण्डहोमापेक्षया पुनरिति। ततश्च मूलमन्त्रेण होमानन्तरं तत्त्वाभिमानिदेवता उद्दिश्य तत्तन्मन्त्रेण प्रधानकुण्ड एव जुहुयादित्यर्थः। तत्त्वदेवतास्तु–

पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ।
दशेन्द्रियाणि शब्दाद्याः भूतेताः पञ्चविंशतिः ॥ इति (३.१४६) वक्ष्यति ॥ ९२,९३ ॥

**गु.दी.–** कुण्डकथनप्रसङ्गाद्धोममाह— **आज्याहुतिमिति ।।** **तेषु** त्रयोदश-कुण्डेषु **मूलमन्त्रेणेति** वक्ष्यमाणं अत्र सम्बध्यते। आज्याहुतिं प्रत्येकं लक्षसङ्ख्यकमयुतं वा कुर्यादिति वदता 'परमान्नतिलव्रीहिसमिद्भिस्तु यथाक्रमम्' इति स्मृत्यन्तरोक्तं समिधन्नादिकं नेत्युक्तं भवति। यदाऽन्यकुण्डेऽयुतहोमकरणं तदा लक्षमेव प्रधानकुण्डे जुहुयादित्याह— **प्रधाने इति ।।** लक्षसङ्ख्यकमिति क्रियाविशेषणम् । प्रधानकुण्डे होमे पक्षान्तरमाह— **अर्धमिति ।।** **अर्धं** लक्षार्धं पञ्चाशत्सहस्राणि। **तदर्धं** पञ्चविंशत्सहस्राणि। मूलमन्त्रेणाज्याहुतिं कुर्यात्। मन्त्रविदित्यधिकारिविशेषणेन ऋष्यादिज्ञानपूर्वकं होमः कार्य इति सूचयति। 'यो ह वा' इत्यारभ्य 'तस्मादेतानि मन्त्रे विन्यात्' इति श्रुतेः। प्रधाने मुख्यकुण्डे **पञ्चविंशतितत्त्वार्थे,**

> पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ।
> दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ।। (तं.सा.३-१४६)

इति वक्ष्यमाणपञ्चविंशतितत्त्वदेवताप्रीत्यर्थं जुहुयात्। **पुरः** पुरतः इतरकुण्डेषु तत्त्वमन्त्रहोमात् पुरत इति भावः। 'पुनः' इति पाठे प्रधानहोमापेक्षया पुनरिति ।।८२।।

**मङ्गली–** कुण्डेषु कर्तव्यं होममाह– **आज्याहुतिमिति ।।** **तेषु** त्रयोदश कुण्डेषु प्रत्येकमेकैकस्मिन्कुण्डे। प्रत्येकमयुतं वापीत्यस्यापवादमाह– **प्रधान इति ।।** प्रधानहोमविषय एव पक्षान्तरे आह– **अर्धमिति ।।** अथवा अर्धं अथवा तदर्धमिति सम्बन्धः। होममन्त्रमाह– **मूलमन्त्रेणेति ।।** आज्याहुतिं तेषु कुर्यादिति सम्बन्धः। मन्त्रविदित्युक्त्या मन्त्रन्यासध्यानऋष्यादिस्मरणपूर्वकं होमं कुर्यादित्युक्तं भवति। प्रधाने मूलमन्त्रेण होमापेक्षया पूर्वभाविहोमविशेषमाह– **पञ्चविंशतीति ।।** **पुरः** पुरा मूलमन्त्रेण होमापेक्षया पूर्वमिति यावत्। **प्रधाने** प्रधानकुण्डे । पञ्चविंशतितत्वार्थे पञ्चविंशतिसङ्ख्याक तत्वदेवताप्रीत्यर्थे जुहुयात्। 'पुनः' इति पाठे पूर्वकृतप्रधानकुण्डहोमापेक्षया पुनरिति। ततश्च मूलमन्त्रेण होमानन्तरं तत्त्वाभिमानिदेवता उद्दिश्य तत्तन्मन्त्रेण प्रधानकुण्ड एव पुनर्जुहुयादित्यर्थः। तत्त्वदेवतास्तु–

पुरुषो व्यक्तं च महानहंकारो मनसस्तथा ।
दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ।। इति वक्ष्यति ।। (३-१४६)
।। ९२,९३ ।।

तत्त्वमन्त्रणां मतभेदेन होमसंख्याभिधानम्

तं.शा. **प्रत्येकं तु सहस्रं वा प्रत्येकं शतमेव वा ।। ९४ ।।**
**शतं पुरुषसूक्तेन गायत्र्या च सहस्रकम् ।**
**कृत्वा जलाधिवासं च पूर्वं वा पञ्चगव्यतः ।। ९५ ।।**

**त.क.–** तत्र सङ्ख्यां मतभेदेन विधत्ते– **सहस्रं वा शतं वेति ।।** तर्हि मिलितानां तत्त्वमन्त्राणां सहस्रवारं शतवारं वा आवृत्तिः प्राप्नोति । तन्निवारयति उभयत्र **'प्रत्येकं'** इति वचनेन । एकैकेन तत्त्वमन्त्रेणापि सहस्रवारं वा शतवारं वा प्रधानकुण्डे जुहुयादित्यर्थः ।।

'तत्रैव होमान्तरं सङ्ख्यामन्त्राभ्यां विधते– **शतं पुरुषसूक्तेनेति ।।** पुरुषसूक्तेनेति वचनात् समग्रसूक्तोच्चारणानन्तरमेकैको होमः कर्तव्य इति ज्ञायते । प्रधानकुण्ड एव मन्त्रसङ्ख्याभ्यां होमान्तरं विधत्ते– **गायत्र्या च सहस्रकमिति ।।** विष्णुपर्व एवेति वक्तव्यम् । विष्णुगायत्र्या प्रधानकुण्डे सहस्रं जुहुयादित्यर्थः । तथा च प्रधानकुण्डे तत्त्वमन्त्रैराज्येन शतं सहस्रं वा हुत्वा, ततः पुरुषसूक्तेन शतं गायत्र्या च सहस्रं हुत्वा, ततो नारायणाष्टाक्षरमन्त्रेण लक्षसङ्ख्यया लक्षार्धतदर्धसङ्ख्यया वा हुत्वा, तत अष्टाक्षरेणैव पूर्वभागस्थितकुण्डद्वये प्रत्येकं लक्षादिसङ्ख्यया हुत्वा दक्षिणस्यां स्थिते कुण्डद्वये जुहुयात् । एवमुदीचीपर्यन्तं हुत्वा तत आग्नेयादिकोणमारभ्येशानपर्यन्तं स्थितेषु कुण्डेषु लक्षादिसङ्ख्यया जुहुयादिति समुदायार्थः ।

एवं शान्तिहोममभिधाय जलाधिवासानन्तरमेव कर्तव्यताप्रतीतिं निवारयन् तस्य कालं विकल्पेनाऽह– **कृत्वेति ।। पञ्चगव्यतः** पञ्चगव्ये क्षिप्त्वा जलाधिवासं कृत्वा जुहुयादित्येकः पक्षः । जलाधिवासतः पूर्वं हुत्वा ततो जलाधिवासः कर्तव्य

इत्यन्यः पक्षः। अत्र जलाधिवासानन्तरं होमपक्षे सायाह्ने जलसमीपं गत्वा पूर्वोक्तरीत्या जलान्तः प्रतिमां शाययित्वा तत्तटे पूर्वनिर्मितचतुर्द्वारयुक्त-सप्तपर्णमयमण्डपे पूर्वोक्तरीत्या तत्त्वमन्त्रादिभिर्हुत्वा रात्रौ तत्रैव जागरणं कुर्यात्। नद्याद्यभावे तु जलद्रोणीकटाहादौ उदकं सम्पूर्य एकरात्रे सद्यो वा अधिवासयेदिति च ग्राह्यम्। तदुक्तम्—

पठद्भिः शाकुनं सूक्तं ब्राह्मणैः सह मूर्तिपैः ।
आदाय प्रतिमां पश्चादाशाया(पश्चादाचार्य)स्तीरदेशतः ।।

संहारक्रममाचार्यः स्तुत्वा तोये प्रवेशयेत् ।
दर्शयेच्चक्रमुद्रां च रक्षामुद्रं च दर्शयेत् ।।

तीरे चतुर्विधं वाद्यं वादयेत्सर्वतो दिशम् ।
ऋचो यजूंषि सामानि पुराणानि च भूसुराः ।।

आमनेयुरनिर्वाणान् प्रदीपानपि कारयेत् ।
स्नानपानादिकं सर्वं तदा प्रभृति नाचरेत् ।।

एकरात्रं त्रिरात्रं वा जलमध्येऽधिवासयेत् ।
जलाधिवासने चैव तथानयनमोक्षणे ।।

शयने वेदिकायां च न कालः कमलासन ।
प्रदोषेष्वधिवासस्स्याच्छयनं च महानिशि ।।

प्रतिष्ठां च दिवा कुर्यात् मुहूर्ते शास्त्रचोदिते ।
नद्याद्यभावे विम्बस्य जलाधिवासनं भवेत् ।।

जलद्रोण्यां कटाहे वा समुद्धृत्य महाजलम् ।
यथासम्भवमन्यस्मिन् मृन्मयादौ तदिष्यते ।
सद्यो वा तोयवासस्स्यात्पुरस्तादधिवासनात् ।। इत्यादि ।

तत्र परेद्युः प्रभाते गोमयलेपनादिना प्रतिष्ठामण्टपशुद्धिं कृत्वा, रङ्गवल्ल्यक्षतादि-भिर्मण्डयित्वा, अस्त्रमन्त्राभिमन्त्रितान् सिद्धार्थान् दिक्षु विकीर्य, वस्त्रपताकादिभिः

मुक्तादामभिः पुष्पैः फलैः पल्लवैश्चालंकृत्य, दीपैस्सांकुरैः पालिकादिभिश्च भूषयित्वा, चन्दनागरुकर्पूरादिभिः सर्वतः परिमलीकृत्य, जलेऽधिवासितं बिम्बमुत्थाप्य, अधिवासनमण्टपे विष्टरे प्राङ्मुखं समवस्थाप्य वारिभिः प्रक्षालयेत्। लोहजं चेद्बिम्बं तिन्त्रिणीफलरसादिना उद्वर्त्य, पुनर्वारिणा प्रक्षाल्य, वस्त्राभरणपुष्पाद्यैरलंकृत्य, तद्बिम्बं यानमारोप्य, यागमण्टपमानीय, तत्र उत्तरभागे विष्टरे सन्निवेशयेत्। ततोऽष्टांगुलिमितां स्वर्णमयीं राजतीं वा शलाकामानीय, अष्टधान्यानि परितः पात्रेषु संस्थाप्य, भूषणैः भूषिता गाः कन्यकाश्च आनीय ब्रह्मघोषैरारोप्य मध्वक्तया स्वर्णमय्या शलाकया दक्षिणनेत्रं प्रोल्लिखेत्। सर्पिषाक्तया राजत्या शलाकया वामनेत्रमुल्लिखेत्। ततः 'तच्चक्षुः'(७-६६-१६) इति मन्त्रं पठेत्। ततश्चाच्छादनपटं व्यपोह्य मधुसर्पिषी, अष्टधान्यानि, गाः, कन्याश्च पुरतः आनीय प्रदर्शयेत्। ततो गुरवे दक्षिणां दद्यात् इत्यन्तं 'पूर्वं वा पञ्चगव्यतः' इत्यनन्तरमध्याहार्यम् ।। ९४,९५ ।।

**अ.सं–** तत्त्वमन्त्रेण होमसङ्ख्यामाह– **प्रत्येकमिति ।।** **प्रत्येकमेकैकं** तत्त्वदेवतामुद्दिश्य तत्तन्मन्त्रेण सहस्रं शतं वा । **एवकारेण** शतादूनपक्षं निषेधति । पुरुषसूक्तगायत्रीमन्त्राभ्यामपि प्रधानकुण्ड एव होममाह– **शतमिति।।** पुरुषसूक्तेन शतं **गायत्र्या तु** गायत्र्याऽपि सहस्रकं प्रधानेन जुहुयादिति सम्बन्धः । पुरुषसूक्तेन **शतं** शतावृत्येत्यर्थः। स च होमः पर्यृचं कार्यः। मालामन्त्रे वेदमन्त्रे च प्रत्येकमपि मन्त्रस्य समाप्तत्वात्। पुरुषसूक्तस्य च मालामन्त्रत्वात् वेदमन्त्रत्वाच्च। ऋचां प्रत्येकं मन्त्रत्वात् 'मन्त्रान्ते कर्म कर्तव्यम् सर्वत्र करणत्वतः' इत्युक्तेः। यद्वा पुरुषसूक्तेनेति तृतीयया सूक्तस्यैव करणत्वम्। सम्पूर्णसूक्तेनैको होम इत्यर्थः। एवं शतवारं होमः उभयपक्षेऽपि शतावृत्तिः कार्येति। एतावद्धोमकरणाशक्तौ पक्षान्तरमुक्तं हयशीर्षे–

मूलमन्त्रेण जुहुयुः स्वाहान्तेन सुरेश्वर ।
अष्टोत्तरसहस्रं तु कुण्डे कुण्डे यथाविधि ।
घृतहोममिदं प्रोक्तम्................ ।। इति ।

होमकालमाह– **कृत्वेति ।।** प्रतिमायाः **पञ्चगव्यतः** पञ्चगव्याधिवासात् पूर्वं **वा**शब्दात् पश्चाद्वा । जलाधिवासं **कृत्वा** कारयित्वा आज्याहुतिं तेषु कुर्यादित्यन्वयः । अधिवासानन्तरं होमं कृत्वा उपवासादि कार्येत्युक्तं वासिष्ठे–

होमं कृत्वा विधानेन रात्रौ जागरणं चरेत् ।
कर्ता चोपवसेत्सम्यक् तथा भार्या च ऋत्विजः ।।

तथा रजन्यां व्युष्टायां कृत्यं कृत्वा यथाविधि ।
पीठे निवेश्य देवेशमभिषेकं समाचरेत् ।। इति ।। ९४,९५ ।।

**गु.दी–** एकैकत्र होमसङ्ख्यामाह— **प्रत्येकमिति ।। प्रत्येकं** एकैकमन्त्रेण सहस्रं वा शतं वा । **एव**कारेण शतादूनपक्षं निषेधति । शतमित्यत्र गायत्र्या चेत्यत्र प्रत्येकमित्यनुवर्तते । तथा च पुरुषसूक्तेन प्रत्येकं शतं गायत्र्या च प्रत्येकं सहस्रकं जुहुयात् । होमसमये निष्कास्याः प्रोक्ताः हयशीर्षे—

पाषण्डान् नास्तिकान् सर्वान् देवब्राह्मणदूषकान् ।
दीक्षाबहिष्कृतान् सर्वान् हेतुवादरतांस्तथा ।
निष्कास्य प्रारभेत् कर्म वैष्णवैर्दीक्षितैः सह ।। इति ।

**।। कृत्वेति ।।** होमानन्तरं पञ्चगव्ये स्थितप्रतिमामादाय तस्याः जलेऽधिवासं कृत्वा चक्राब्जादिकं लिखेदिति पूर्वशेषेण योजना **।। पूर्वं वेति ।। पञ्चगव्यतो** पञ्चगव्याधिवासनात् पूर्वं जलाधिवासं कृत्वा अनन्तरं पञ्चगव्याधिवासं च कृत्वा चक्राब्जादिकं लिखेदिति भावः ।। ९४, ९५ ।।

**मङ्गाली–** तत्त्वमन्त्रेण होमसङ्ख्यामाह– **प्रत्येकमिति ।। प्रत्येकं** एकैकं तत्त्वदेवतामुद्दिश्य तत्तन्मन्त्रेण सहस्रं वा शतं वा । **एव**कारेण शतादूनपक्षं निषेधति । पुरुषसूक्तगायत्रीमन्त्राभ्यामपि प्रधानकुण्ड एव होममाह– **शतमिति ।।** पुरुषसूक्तेन शतं **गायत्र्या तु** गायत्र्यापि सहस्रकम् । प्रधाने जुहुयादिति सम्बन्धः । पुरुषसूक्तेन **शतं** शतावृत्तेत्यर्थः । स च होमः प्रत्यृचं कार्यः । मालामन्त्रे वेदमन्त्रे च प्रत्येकमपि मन्त्रस्य समाप्तत्वात् । पुरुषसूक्तस्य च मालामन्त्रत्वात् वेदमन्त्रत्वाच्च । ऋचां प्रत्येकं मन्त्रत्वात् । 'मन्त्रान्ते कर्म

कर्त्तव्यं सर्वत्र करणत्वतः' इत्युक्तेः। 'यद्वा पुरुषसूक्तेनेति तृतीयया सूक्तस्यैव करणत्वम्। संपूर्णसूक्तेनैव होम इत्यर्थः। एवं शतवारं होमः उभयपक्षेऽपि शतावृत्तिः कार्येति।

मूलमन्त्रेण जुहुयुः स्वाहान्तेन सुरेश्वर।
अष्टोत्तरसहस्रं तु कुण्डे कुण्डे यथाविधि।
घृतहोममिदं प्रोक्तम्..........॥ इति हयशीर्षे पक्षान्तरमुक्तम्।

होमकालमाह– **कृत्वेति** ॥ प्रतिमायाः **पञ्चगव्यतः** पञ्चगव्याधिवासात्पूर्वं वा। **वाशब्दात्** पश्चाद्वा जलाधिवासं **कृत्वा** कारयित्वा। आज्याहुतिं तेषु कुर्यादित्यन्वयः। अधिवासानन्तरं होमं कृत्वा उपवासादिकार्यमित्युक्तं वासिष्ठे–

होमं कृत्वा विधानेन रात्रौ जागरणं चरेत्।
कर्त्ता चोपवासेत्सम्यक् तथा भार्या च ऋत्विजः॥

तथा रजन्यां व्युष्टायां कृत्यं कत्वा यथाविधि।
पीठे निवेश्य देवेशं अभिषेकं समाचरेत्॥ इति॥ ९४,९५॥

चक्राब्ज-भद्रकमण्डलयोः लक्षणाभिधानम्

**तं.सा.** **चक्राब्जं भद्रकं वाऽपि मण्टपे मण्डलं शुभम्।**
**पद्मं वृत्तत्रयं चक्रं राशयो वीथिका लताः (तथा)॥ ९६॥**

**शोभोपशोभिकाश्चापि(श्चैव) चक्राब्जस्य तु लक्षणम्।**
**चतुरस्रं विना चक्रं विशेषो भद्रके स्मृतः॥ ९७॥**

**त.क.–** ततः प्रतिष्ठाङ्गमभिषेकं वक्तुं चक्रब्जादिकमण्डलविधानं विधत्ते– **चक्राब्जमिति** ॥ प्रतिष्ठामण्टपे शुभलक्षणसंयुक्तं चक्राब्जमण्डलं भद्रकं वा मण्डलं कुर्यादिति शेषः। तत्र प्रथमोद्दिष्टस्य चक्राब्जमण्डलस्य लक्षणमाह– **पद्ममिति** ॥ प्रथमतः पद्मम्। ततो वृत्तत्रयं परितो वर्तुलाकाररेखात्रयं, तद्बहिश्चक्रं तद्बहिः मेषादिद्वादशराशयश्च लेखनीयाः। ततो बहिर्वीथिकाश्च लेखनीयाः। तथाशब्दः समुच्चये। शोभासहिता उपशोभिकाश्च लेखनीयाः। शोभोपशोभिकारेखाविशेषः

पञ्चरात्रे प्रसिद्धः। पद्मादिरेखाविशेषवत्त्वं चक्राब्जस्य लक्षणमित्यर्थः। तुशब्दादभिषेकादिकार्यविशेषादन्यत्र लक्षणान्तरमस्तीति सूचितम्। भद्रकस्य मण्डलस्य लक्षणमाह– **चतुरस्रमिति ।।** भावप्रधानो निर्देशः। चक्ररहितत्वे सति चतुरस्रत्वं भद्रके विशेषः, भद्रकस्य लक्षणमित्यर्थः ।। ९६, ९७ ।।

**अ.सं.–** अथाभिषेकार्थं कलशस्थापनं वक्तुं तत्रेतिकर्तव्यतामाह– **चक्राब्जमिति ।। मण्टपे** प्रतिष्ठामण्टपे। **अपि**पदात् वेद्यां **चक्राब्जं** तन्नामकं **भद्रकं** वा तन्नामकं **शुभं** दृष्टिप्रियं मण्डलं कुर्यादिति शेषः। मण्डलोद्धारप्रकारमाह– **पद्ममिति ।।** मध्ये पद्मं लिखेत्। तद्बहिः परितः **वृत्तत्रयं** वर्तुलरेखात्रयम्। तद्बहिः चक्रम्। तद्बहिः परितः मेषादिराशयः। तद्बहिः **वीथिका** वीथ्यः। तद्बहिः शोभोपशोभिकाः। चकारात् द्वाराणि पादपीठानि चेत्येतत् **चक्राब्जस्य** चक्राब्जमण्डलस्य लक्षणं भवति। भद्रकलक्षणमाह– **चतुरस्रमिति ।।** चक्रं विना **चतुरस्रत्वं** चतुष्कोणत्वं भद्रके मण्डले विशेषः स्मृत इति सम्बन्धः। आदौ पद्मं लिखित्वा परितः वृत्तत्रयस्थाने चतुरस्ररेखात्रयमालिख्य चक्रं परित्यज्य राश्यादिकं लिखेदिति भावः ।। ९६, ९७ ।।

**गु.दी.–** अभिषेकार्थं कलशस्थापनं वक्तुं मण्डलमाह— **चक्राब्जमिति ।। मण्टपे** प्रतिष्ठामण्टपे तत्रस्थवेद्यामिति द्रष्टव्यम्। चक्राब्जं **भद्रकं** सर्वतोभद्रनामकं वा **शुभं** दृष्टिप्रियं मण्डलं लिखेदिति शेषः। चक्राब्जमण्डललक्षणमाह— **पद्ममिति ।।** मध्ये पद्मम्। तद्बहिर्वृत्तत्रयम्। तद्बहिश्चक्रम्। तद्बही राशयस्तद्बहिर्वीथिका। तद्बहिः शोभोपशोभिका इति चक्राब्जस्य लक्षणम्। चक्राब्जे लेख्याः प्रतिमास्त्वन्यत्रोक्ताः। मात्स्ये—

घटी नृमिथुनं सगदं च वीणाचापी नरोऽश्वजघनो मकरो मृगास्यः।
तौली ससस्यदहनः प्लवगा च कन्या शेषाः स्वनामसदृशाः खचराश्च सर्वे ।। इति।

सर्वतोभद्रं लक्षयति— **चतुरस्रमिति ।।** चक्रं विना चतुरस्रत्वं भद्रके विशेष इत्यर्थः। पद्मं लिखित्वा तत्परितः वृत्तत्रयस्थाने चतुरस्ररेखात्रयं लिखित्वा चक्रं परित्यज्य राश्यादिकं लिखेदिति भावः ।। ९६,९७ ।।

**मङ्गाली–** अभिषेकार्थं कलशस्थापनं वक्तुं तत्रेतिकर्त्तव्यतामाह– **चक्राब्जमिति ।। मण्टपे** प्रतिष्ठामण्डपे । **अपि**पदात् वेद्यां चक्राब्जं तन्नामकं भद्रं वा । **शुभं** दृष्टिप्रियं मण्डलं कुर्यादिति शेषः । मण्डलोद्धारप्रकारमाह– **पद्ममिति ।।** मध्ये पद्मं लिखेत् । तद्बहिः परितः **वृत्तत्रयं** वर्त्तुलरेखात्रयम् । तद्बहिः परितः मेषादिराशयः, तद्बहिः **वीथिकाः** वीथ्यः, तद्बहिः शोभोपशोभिकाः, चकारात् द्वाराणि पादपीठानि चेत्येतत् **चक्राब्जस्य** चक्राब्जमण्डलस्य लक्षणं भवति । भद्रकलक्षणमाह– **चतुरस्रमिति ।।** चक्रं विना **चतुरस्रत्वं** चतुष्कोणत्वं भद्रके मण्डले विशेषः । **स्मृत** इति सम्बन्धः । आदौ पद्मं लिखित्वा तत्परितः वृत्तरेखात्रयस्थाने चतुरस्ररेखात्रयं आलिख्य चक्रं परित्यज्य राश्यादिकं लिखेदिति भावः ।। ९६,९७ ।।

संख्यापूर्वं कलशस्थापनाभिधानम्

**तं.सा. सहस्रमर्धं पादं वा कलशांस्तत्र पूजयेत् ।**
**शतं तदर्धं पादं वा वित्ताभावे निगद्यते ।। ९८ ।।**

**त.क.–** यदर्थं चक्रं भद्रकं च निरूपितं तदेव कलशस्थापनं सङ्ख्यापूर्वं विधत्ते– **सहस्रमिति ।।** क्रियाविशेषणमेतत् । **तत्र** चक्राब्जादिकमण्डले सहस्रकलशान्, पञ्चशतकलशान्, पञ्चाशदधिकद्विशतकलशान् वा संस्थाप्य पूजयेदित्यर्थः । उत्तममध्यमाधमकल्पभेदेन वित्तवतः पक्षत्रयम् । वित्तशून्यस्यापि पक्षत्रयमाह– **शतमिति ।।** वित्ताभावे सति उत्तमकल्पेन शतकलशान्, मध्यमकल्पेन पञ्चाशत्कलशात्, अधमकल्पेन पञ्चविंशतिकलशान् पूजयेदिति शास्त्रेषु निगद्यत इत्यर्थः । अनेन क्वचित् सहस्रं क्वचित् शतमित्यादि तत्र तत्र शास्त्रे विधानात् परस्परविरोध इति शङ्कापरिहारः सूचितः ।। ९८ ।।

**अ.सं.–** तत्र स्थापनाय कलशसङ्ख्यामाह– **सहस्रमिति ।। तत्र** चक्राब्जादिमण्डले । **अर्धं** पञ्चशतानि । **पादं** पञ्चाशदधिकशतद्वयम् । **तदर्धं** शतार्धं पञ्चाशत् । **पादं वा** पञ्चविंशतिः । एतेषां पक्षाणां व्यवस्थामाह– **वित्ताभाव इति ।।** यो नीचः पक्षः स वित्ताभावे सति निगद्यते । उक्तं च शेखरे–

पञ्चरात्रे प्रसिद्धः। पद्मादिरेखाविशेषवत्त्वं चक्राब्जस्य लक्षणमित्यर्थः। तुशब्दादभिषेकादिकार्यविशेषादन्यत्र लक्षणान्तरमस्तीति सूचितम्। भद्रकस्य मण्डलस्य लक्षणमाह– **चतुरस्रमिति ॥** भावप्रधानो निर्देशः। चक्ररहितत्वे सति चतुरस्रत्वं भद्रके विशेषः, भद्रकस्य लक्षणमित्यर्थः ॥ ९६, ९७ ॥

**अ.सं.–** अथाभिषेकार्थं कलशस्थापनं वक्तुं तत्रेतिकर्तव्यतामाह– **चक्राब्जमिति ॥ मण्टपे** प्रतिष्ठामण्टपे। **अपि**पदात् वेद्यां **चक्राब्जं** तन्नामकं **भद्रकं** वा तन्नामकं **शुभं** दृष्टिप्रियं मण्डलं कुर्यादिति शेषः। मण्डलोद्धारप्रकारमाह– **पद्ममिति ॥** मध्ये पद्मं लिखेत्। तद्बहिः परितः **वृत्तत्रयं** वर्तुलरेखात्रयम्। तद्बहिः चक्रम्। तद्बहिः परितः मेषादिराशयः। तद्बहिः **वीथिका** वीथ्यः। तद्बहिः शोभोपशोभिकाः। **च**कारात् द्वाराणि पादपीठानि चेत्येतत् **चक्राब्जस्य** चक्राब्जमण्डलस्य लक्षणं भवति। भद्रकलक्षणमाह– **चतुरस्रमिति ॥** चक्रं विना **चतुरस्रत्वं** चतुष्कोणत्वं भद्रके मण्डले विशेषः स्मृत इति सम्बन्धः। आदौ पद्मं लिखित्वा परितः वृत्तत्रयस्थाने चतुरस्ररेखात्रयमालिख्य चक्रं परित्यज्य राश्यादिकं लिखेदिति भावः ॥ ९६, ९७ ॥

**गु.दी.–** अभिषेकार्थं कलशस्थापनं वक्तुं मण्डलमाह— **चक्राब्जमिति ॥ मण्टपे** प्रतिष्ठामण्टपे तत्रस्थवेद्यामिति द्रष्टव्यम्। चक्राब्जं **भद्रकं** सर्वतोभद्रनामकं वा **शुभं** दृष्टिप्रियं मण्डलं लिखेदिति शेषः। चक्राब्जमण्डललक्षणमाह— **पद्ममिति ॥** मध्ये पद्मम्। तद्बहिर्वृत्तत्रयम्। तद्बहिश्चक्रम्। तद्बही राशयस्तद्बहिर्वीथिका। तद्बहिः शोभोपशोभिका इति चक्राब्जस्य लक्षणम्। चक्राब्जे लेख्याः प्रतिमास्त्वन्यत्रोक्ताः। मात्स्ये—

घटी नृमिथुनं सगदं च वीणाचापी नरोऽश्वजघनो मकरो मृगास्यः।
तौली ससस्यदहनः प्लवगा च कन्या शेषाः स्वनामसदृशाः खचराश्च सर्वे ॥ इति।

सर्वतोभद्रं लक्षयति— **चतुरस्रमिति ॥** चक्रं विना चतुरस्रत्वं भद्रके विशेष इत्यर्थः। पद्मं लिखित्वा तत्परितः वृत्तत्रयस्थाने चतुरस्ररेखात्रयं लिखित्वा चक्रं परित्यज्य राश्यादिकं लिखेदिति भावः ॥ ९६,९७ ॥

**मङ्गाली–** अभिषेकार्थं कलशस्थापनं वक्तुं तत्रेतिकर्त्तव्यतामाह– **चक्राब्जमिति ।। मण्टपे** प्रतिष्ठामण्डपे । **अपिपदात्** वेद्यां चक्राब्जं तन्नामकं भद्रं वा । **शुभं** दृष्टिप्रियं मण्डलं कुर्यादिति शेषः । मण्डलोद्धारप्रकारमाह– **पद्ममिति ।।** मध्ये पद्मं लिखेत् । तद्बहिः परितः **वृत्तत्रयं** वर्त्तुलरेखात्रयम् । तद्बहिः परितः मेषादिराशयः, तद्बहिः **वीथिकाः** वीथ्यः, तद्बहिः शेभोपशोभिकाः, चकारात् द्वाराणि पादपीठानि चेत्येतत् **चक्राब्जस्य** चक्राब्जमण्डलस्य लक्षणं भवति । भद्रकलक्षणमाह– **चतुरस्रमिति ।।** चक्रं विना **चतुरस्रत्वं** चतुष्कोणत्वं भद्रके मण्डले विशेषः । **स्मृत** इति सम्बन्धः । आदौ पद्मं लिखित्वा तत्परितः वृत्तरेखात्रयस्थाने चतुरस्ररेखात्रयं आलिख्य चक्रं परित्यज्य राश्यादिकं लिखेदिति भावः ।। ९६,९७ ।।

संख्यापूर्वं कलशस्थापनाभिधानम्

**तं.सा. सहस्रमर्धं पादं वा कलशांस्तत्र पूजयेत् ।**
**शतं तदर्धं पादं वा वित्ताभावे निगद्यते ।। ९८ ।।**

**त.क.–** यदर्थं चक्रं भद्रकं च निरूपितं तदेव कलशस्थापनं सङ्ख्यापूर्वं विधत्ते– **सहस्रमिति ।।** क्रियाविशेषणमेतत् । **तत्र** चक्राब्जादिकमण्डले सहस्रकलशान्, पञ्चशतकलशान्, पञ्चाशदधिकद्विशतकलशान् वा संस्थाप्य पूजयेदित्यर्थः । उत्तममध्यमाधमकल्पभेदेन वित्तवतः पक्षत्रयम् । वित्तशून्यस्यापि पक्षत्रयमाह– **शतमिति ।।** वित्ताभावे सति उत्तमकल्पेन शतकलशान्, मध्यमकल्पेन पञ्चाशत्कलशात्, अधमकल्पेन पञ्चविंशतिकलशान् पूजयेदिति शास्त्रेषु निगद्यत इत्यर्थः । अनेन क्वचित् सहस्रं क्वचित् शतमित्यादि तत्र तत्र शास्त्रे विधानात् परस्परविरोध इति शङ्कापरिहारः सूचितः ।। ९८ ।।

**अ.सं.–** तत्र स्थापनाय कलशसङ्ख्यामाह– **सहस्रमिति ।। तत्र** चक्राब्जादिमण्डले । **अर्धं** पञ्चशतानि । **पादं** पञ्चाशदधिकशतद्वयम् । **तदर्धं** शतार्धं पञ्चाशत् । **पादं वा** पञ्चविंशतिः । एतेषां पक्षाणां व्यवस्थामाह– **वित्ताभाव इति ।।** यो नीचः पक्षः स वित्ताभावे सति निगद्यते । उक्तं च शेखरे–

कलशानां सहस्रेण तदर्धेन तदर्धतः ।
शतेन वा तदर्धेन देवं संस्थापयेद्गुरुः ।
चतुर्भिरथवा कुर्यात् घटानामल्पवित्तवान् ।। इति ।। ९८ ।।

**गु.दी.**– कलशसङ्ख्यामाह— **सहस्रमिति ।।** तत्र चक्राब्जादिमण्डले सहस्रं कलशम् । **अर्धं** पञ्चशतं **पादं** सार्धशतद्वयं पूजयेत् । सहस्रमिति मुख्यम् । वित्ताभावेऽन्तिमपक्षद्वयं ज्ञेयम् । तावतोऽपि वित्तस्याभावे कथमित्यत आह— **शतमिति ।। वित्ताभावे** पञ्चाशदधिकशतद्वयकलशोपयुक्तवित्ताभावे । शतं **तदर्धं** पञ्चाशत् । **पादं** पञ्चविंशतिं वा पूजयेत् ।। ९८ ।।

**मङ्गाली**– तत्र स्थापनाय कलशसङ्ख्यामाह– **सहस्रमिति ।।** तत्र चक्राब्जादिमण्डले । **अर्धं** पञ्चशतानि **पादं** पञ्चाशदधिकशतद्वयं **तदर्थं** शतार्धं पञ्चाशत् । **पादं वा** पंचविंशति । एतेषां पक्षाणां व्यवस्थामाह– **वित्ताभावे इति ।।** यो नीचः पक्षः स वित्ताभावे निगद्यते ।। ९८ ।।

कलशेषु पूरणीयद्रव्यकथनम् पञ्चविंशतिकलशपक्षे स्थापनाप्रकारश्च

**तं.सा.** **क्वाथेन क्षीरवृक्षाणां तथा पञ्चामृतैरपि ।**
**पञ्चगव्येन शुद्धेन जलेन च पृथक् पृथक्** ।। ९९ ।।

**पूरयेत् कलशान् मध्यं शुद्धोदेनैव पूरयेत् ।**
**ब्राह्मस्यैव चतुर्दिक्षु गन्धोदानां(गन्धादीनां) चतुष्टयम्** ।। १०० ।।

**चतुर्दले सिते पद्मचतुष्के मण्डले स्थिते ।**
**(चतुर्दलश्वेतपद्मचतुष्के मण्डलस्थिते)**
**पूर्वादिक्रमयोगेन रसक्वाथशुभोदकान्** ।। १०१ ।।

**गन्धांश्च स्थापयेत्पञ्चगव्यं शुद्धान्तरे न्यसेत् ।**
**पृथक् चतुर्दलं पद्मं रक्तं कृत्वाऽल्पकं सुधीः** ।। १०२ ।।

**त.क.**– पञ्चविंशत्यादिकल्पभेदेन कलशस्थापनप्रकारं तत्तद्घटेषु पूरणीयद्रव्याणि च 'ब्राह्मस्यैव चतुर्दिक्षु गन्धोदानां चतुष्टयम्' इत्यादिना दर्शयिष्यन् वक्ष्यमाणाभिषेकस्यानुगुण्येन पञ्च विशेषकलशान् तत्र पूरणीयद्रव्यविशेषांश्च सूचयन्नाह– **क्वाथेनेति ।।** क्वाथं वृक्षत्वङ्गिश्रितोदकम् । क्षीरवृक्षा जम्बूप्लक्षादयः । पञ्चामृतानि क्षीरदधिघृतमधुशर्करादीनि । वहुवचन-मविवक्षितम् । मिलितैः पञ्चभिरपि द्रव्यैः एकः कलशः पूरणीयः । तदेतदाह– **अपीति ।।** यद्वा अपीत्येतत् पञ्चगव्येनेत्यनेन सम्बध्यते । स च सम्भावनायां वर्तमानः पञ्चगव्यादिग्रहणप्रकारं पञ्चरात्राद्युक्तं सूचयति । तथाहि—

पञ्चगव्यानि गृह्णीयात् मृत्पात्रे नूतने शुभे ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तु पञ्चमम् ।।

कपिलाया जराया वा पञ्चगव्यं प्रशस्यते ।
तयोरभावे त्वन्यासां गवां गव्यं विधीयते ।।

नाऽर्ताया न च गर्भिण्या न वृद्धायाः कदाचन ।
नावत्साया उपादेयं धेनोर्मूत्रशकृद्वयम् ।।

भूमिस्थगोमयं ग्राह्यं श्रेष्ठं क्रिम्याद्यदूषितम् ।
निपीड्य सम्यक् गृह्णीयाद्गोमयस्य रसं पुनः ।।

सद्यस्तप्तं घृतं शुद्धं अहोरात्रोषितं दधि ।
क्षीरं ग्राह्यमतप्तं च दशाहाज्जन्मनः परम् ।।

गोमूत्रं विष्णुगायत्र्या गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।।

घृतं शुक्रमसीत्येवं गव्यानि सह योजयेत् ।
दध्नो द्विगुणमाघारं पीयूषं त्रिगुणं ततः ।।

षड्गुणं मूत्रमेतस्याः शकृद्वारि चतुर्गुणम् ।
स्नपने कथितं मानं प्रोक्षणे पञ्चकं समम् ।।

गोमयेन समं मूत्रं दधि स्याद्विगुणं ततः ।
ततश्चतुर्गुणं सर्पिस्ततोऽप्यष्टगुणं पयः ।
प्राशने पञ्चगव्यानां प्रमाणमिदमीरितम् ।। इत्यादि ।

शुद्धजलं 'महातीर्थमुद्भाव'(३-१०८) इति स्वयमेव वक्ष्यति । अत्र तृतीयान्तानां पृथक् कलशान् पूरयेदिति सम्बन्धः । अत्र निर्देशक्रमेणैव मण्डलाद्बहिर्भागे पूर्वस्यां दिशि क्वाथेन पूर्णः कलश एकः । दक्षिणस्यां दिशि पञ्चामृतपूर्णः कलश एकः । पश्चिमस्यां दिशि पञ्चगव्यपूर्णः कलश एकः । उत्तरस्यां दिशि शुद्धजलेन पूर्णः कलश एक इति स्थापनप्रकारोऽपि सूचितः । एवं चतुर्णां कलशानां स्थापनाप्रकारेऽभिहितेऽवशिष्टकलशस्यैकस्य प्रदेशविशेषं पूरणीयद्रव्यं चाऽह– **मध्यं शुद्धोदेनैवेति ।। एव**शब्देन चतुर्थकलशपूरणीयत्वेन सन्निहितजलजातीयमेव ग्राह्यं, न तत्र द्रव्यान्तरगवेषणप्रयासोऽस्तीति सूचयति । वक्ष्यमाणेषु मध्यकलशेषु सर्वत्र द्रव्यं शुद्धोदकमेवेति सूचयितुं योगविभागः ।

एवं मण्डलाद्बहिः पञ्चकलशस्थापनमभिधाय यदुक्तं सहस्रमर्धं पादं वा शतं तदर्धं पादं वेति पक्षषट्कं तदेव व्युत्क्रमेणोपपादयन् अन्त्यपक्षे स्थापनीयद्रव्याणि प्रदेशांश्चाह– **ब्राह्मस्यैवेति ।।** मध्यस्येति वक्तव्ये ब्राह्मस्येति वचनं सर्वत्र मध्यकलशस्य चतुर्मुखोऽभिमानीति सूचयितुम् । अत एवानुवादबलात् 'पद्मं वृत्तत्रयं चक्रं'(३-९६) इत्यादिनोक्तलक्षणचक्राब्जमण्डलमध्यस्थपद्ममध्ये एकः कलशः स्थापनीय इति लभ्यते । तत्कलशमपेक्ष्य पूर्वादिचतुर्दिक्षु कलशानां चतुष्टयं स्थापयेदिति शेषः । चतुर्दलेति वक्ष्यमाणमत्रापि सम्बध्यते । विशेषणसमासोऽयम् । न द्विगुः । एकवचनं छान्दसम् । मध्यस्थपद्मस्य दलचतुष्टये कलशानां चतुष्टयं स्थापयेदित्यर्थः । गन्धोदानामित्येतदध्याहृतस्य कलशानामित्यस्य विशेषणम् । गन्धसहितं येषामुदकमिति मध्यमपदलोपगर्भबहुव्रीहिः । तेन कलशचतुष्टये पूरणीयद्रव्यं गन्धोदकमेवेति सिद्ध्यति । मध्यमकलशे तु मध्यं शुद्धोदेनैव पूरयेदिति सर्वत्र सम्बध्यते । तदेवं शुद्धोदकपूरितो घटः पद्ममध्ये स्थापनीयः । तस्य पूर्वदिक्स्थितदले गन्धोदपूरितो घट एकः । तद्दक्षिणदले

गन्धोदपूरितो घटोऽन्यः। तत्पश्चिमदले गन्धोदपूरितो घटोऽपरः। तदुत्तरदले गन्धोदपूरितं घटान्तरमिति ॥

पञ्चानां कलशानां विनियोगे सिद्धेऽवशिष्टानां विंशतिकलशानां पूरणीयद्रव्यनिरूपणेन प्रदेशांश्चाह– **चतुर्दल इति ॥** अनुवादवलेनैव चक्राब्जमण्डलवीथिकायां पूर्वादिदिक्षु चतुर्दलं सितरङ्गवल्ल्यादिना पद्मचतुष्टयं लिखेदिति प्रागुपस्कर्तव्यम्। **पूर्वादिक्रमयोगेनेति ॥** पूर्वादिदिशां क्रममनुसृत्येर्थः। तेन वक्ष्यमाणद्रव्याणां तत्तत्कलशसम्वन्धोऽपि क्रमेणैवेति सूचितम्। कलशानिति शेषः। रसक्वाथशुभोदकानि येष्विति बहुव्रीहिः। गन्धानिति अर्श आद्यजन्तम्। 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति मतुबन्तं वा। बहुवचनं तु प्रकृत्यपेक्षया। उक्तस्यापवादमाह– **पञ्चगव्यमिति ॥ सुधीः** पञ्चरात्राभिज्ञः पश्चिमदिक्स्थे चतुर्दलसितपद्ममध्ये स्थापितशुद्धोदकलशस्य तदन्तर्मध्येऽल्पकं रक्तकं पद्मं चतुर्दलं पृथक् लिखित्वा तत्र पञ्चगव्यम्, अर्श आद्यन्तं, पञ्चगव्यपूरितं कलशं न्यसेदिति सम्बन्धः। अत्र सर्वत्र मध्यं शुद्धोदेनैव पूरयेदिति संबध्यते। तस्याप्ययमपवादो विज्ञायते। तथाच चक्राब्जमण्डलस्थितपूर्वदिक्स्थवीथिकायां चतुर्दलं सितं पद्ममेकं लिखित्वा तत्पद्ममध्ये एकं कलशं संस्थाप्य शुद्धोदेनैव पूरयेत्। पूर्वदिक्स्थपद्मदलेऽन्यं घटं संस्थाप्य रसेन क्षीरदधिघृतमधुशर्करादिमिश्रितेन पञ्चामृतेन पूरयेत्। एवं तद्दक्षिणदलेऽपरं करीरं संस्थाप्य तं क्वाथजलेन पूरयेत्। एवं पश्चिमदिक्स्थदले करकान्तरं संस्थाप्य तं शुद्धोदकेन महातीर्थसमुद्भवोदकेन, एवमुत्तरदिक्स्थदलेऽपरं पात्रं संस्थाप्य तं गन्धोदकेन इत्येवं पूर्वदिक्स्थपद्मे पञ्चकलशन्यासः। एवमेव चक्राब्जे दक्षिणदिक्स्थवेदिकायां स्थितस्य सितचतुर्दलपद्मस्य मध्ये ब्राह्मः कलशः। तं च शुद्धोदेनैव पूरयेत्। तत्पूर्वदलेऽन्यः कलशः। तं पञ्चामृतेन। दक्षिणदले त्वन्यः। तं क्वाथेन। पश्चिमदले त्वपरः। तं शुद्धोदकेन। उत्तरदले चान्यः। तं गन्धोदकेन, इत्येवं दक्षिणदिक्स्थपद्मे कलशपञ्चकन्यासः। एवं पश्चिमदिक्स्थवीथिकायां स्थितस्य चतुर्दलपद्मस्य मध्ये कर्णिकास्थाने लिखिते चतुर्दलेऽल्पकोरके पद्मे एकः कलशः। तं पञ्चगव्येन पूरयेत्, न शुद्धोदेनेति।

अयमत्र विशेषः। यद्वा तमपि शुद्धोदेनैव पूरयेत्। तत्पूर्वभागे वीथिकान्तः मध्यपद्माद्बहिर्लिखितचतुर्दलरक्तपद्मे तु एकः कलशः पञ्चगव्येन। न पञ्चामृतेन इत्ययमत्र विशेषः। तद्दक्षिणदलेऽन्यः कलशः। तं काथेन। पश्चिमदलेऽप्यन्यः तं शुभोदकेन, उत्तरदलेऽप्यपरः तं गन्धोदकेन इत्येवं पश्चिमदिक्स्थपद्मे कलशपञ्चकम्। एवं तद्वीथीस्थोत्तरदिक्स्थितचतुर्दलसितपद्मस्य मध्ये एको ब्राह्मकलशः। तं शुद्धोदकेनैव पूरयेत्। तत्पूर्वभागस्थितदले तु अन्यः कलशः। तं पञ्चामृतेन। दक्षिणदले त्वपरः। तं काथेन। पश्चिमभागे त्वपरः। तं शुद्धोदकेन। उत्तरदले चान्यः। तं गन्धोदकेन, इत्येवमुत्तरवीथीस्थपद्मे कलशपञ्चकन्यासः। आहत्य मध्यपद्मेन सह पद्मपञ्चके प्रत्येकं कलशपञ्चकन्यासेन पञ्चविंशतिः सम्पद्यते ॥ ९९-१०२ ॥

**अ.सं.**— कलशेषु प्रक्षेप्यद्रव्यमाह— **काथेनेति** ॥ **क्षीरिवृक्षाणां** वटजम्बूप्लक्षाश्वत्थादीनां **काथेन** चूर्णीकृतवृक्षत्वङ्मिश्रितोदकेन एकं कलशम्। **पञ्चामृतैः** पयोदधिघृतमधुशर्करादिभिर्मिलिताभिः द्वितीयम्। **पञ्चगव्यं** पयोदधिघृतगोमूत्रगोमयैर्मिलितैस्तृतीयम्। शुद्धजलेन चतुर्थम्। एवं पृथक् पृथक् कलशान् पूरयेत्। **मध्यं** कलशमध्यस्थं कलशं **शुद्धोदेनैव** शुद्धोदकेनैव पूरयेदित्यर्थः। एवं कलशेषु प्रक्षेप्यद्रव्यमुक्त्वा पञ्चविंशतिकलशपक्षे कलशस्थापनप्रकारमाह— **ब्राह्मस्येति** ॥ ब्रह्माभिमन्यमानत्वात्। मध्यकलशः ब्राह्मशब्दवाच्यः। तस्य परितः चतुर्दिक्षु पूर्वादिचतुर्दिक्षु गन्धोदानां गन्धोदकपूर्णानां कलशानां चतुष्टयं **स्थापयेत्** आसादयेत्। गन्धोदानामित्यनुवादेन शुद्धोदकपूर्णब्राह्मनामकमध्यकलशस्य परितः स्थापितकलशचतुष्टयं गन्धोदकेन पूरयेदित्युक्तं भवति। 'गन्धादीनां' इति पाठे आदिशब्देन रसकाथशुभोदककलशाः ग्राह्याः। एवं कलशपञ्चकस्थापनाप्रकारमभिधाय तदितरकलशस्थापनाप्रकारमाह— **चतुर्दल इत्यादिना** ॥ **मण्डले** चक्राब्जादिकमण्डले **स्थिते** विद्यमाने, **चतुर्दले** चत्वारि दलानि यस्य तच्चतुर्दलम्। तस्मिन् स्थिते धवले **पद्मचतुष्के** पदानां चतुष्टये। **पूर्वादिक्रमयोगेन** पूर्वदक्षिणपश्चिमोत्तरक्रमलक्षणोपायेन **रसकाथशुभोदकान्** रसः

पञ्चामृतम् । क्वाथः क्षीरवृक्षत्वक्चूर्णमिश्रोदकम् । शुभोदकश्च एतैः पूर्णान् कलशान् **गन्धान्** गन्धोदकपूर्णान् कलशान् स्थापयेदित्यर्थः ।

अयं भावः। पञ्चविंशतिकलशपक्षे आदौ चक्राब्जादिकमण्डलं लिखित्वा तन्मण्डलस्योपरि मध्ये शुद्धोदकपूर्णं ब्राह्मनामकं कलशं स्थापयित्वा तस्य पूर्वादिचतुर्दिक्षु गन्धोदकपूर्णकलशचतुष्टयं स्थापनीयम्। तत्परितः चतुर्दिक्षु चक्राब्जादिकमण्डलगतवीथिषु शुभ्ररङ्गवल्या चतुर्दलपद्मचतुष्टयं लिखित्वा पूर्वभागस्थपद्ममध्ये एकं कलशं, चतुर्दलेषु एकैकं, एवं पञ्चामृतपूर्णकलशपञ्चकं स्थापयेत्। दक्षिणभागस्थेपद्मे पूर्वोक्तप्रकारेणैव क्वाथोदपूर्णकलशपञ्चकं स्थापयेत्। बश्चिमभागस्थे पद्मे पूर्ववदेव शुद्धोदकपूर्णकलशपञ्चकम् एवमेवोत्तर भागस्थपद्मेऽपि गन्धोदकपूर्णकलशपञ्चकमित्येवं क्रमेण पञ्चविंशतिकलशान् स्थापयेदिति ।

पश्चिमे भागे शुद्धोदकपूर्णपञ्चकलशान् स्थापयेदित्युक्तम्। तस्यापवादमाह– **पञ्चगव्यमिति ।।** अयमर्थः। पश्चिमभागे चतुःसङ्ख्याकानेव शुद्धोदककलशान् पद्मचतुर्दलेषु स्थापयित्वा, **शुद्धान्तरे** शुद्धानां शुद्धोदकपूर्णकलशानां चतुर्णां मध्ये **पृथक्** अपरं **अल्पं** सूक्ष्माकारं **रक्तं** लोहितं वर्णं पद्मं **कृत्वा** लिखित्वा तत्र **पञ्चगव्यं** पञ्चगव्यपूर्णकलशं **न्यसेत्** स्थापयेदिति। यद्वा सुधीः **शुद्धान्तरे** ब्रह्मशुद्धोदककलशमध्ये पृथक् चतुर्दलमल्पं रक्तं पद्मं कृत्वा तत्र पञ्चगव्यपूर्णकलशं स्थापयेत्। अस्मिन् पक्षे पञ्चविंशत्यादिसर्वपक्षेऽपि 'कुशोदकं'(३-१०६) इत्यादिना वक्ष्यमाणविशेषकलशवदयमपि पञ्चगव्यकलशः पञ्चविंशत्याद्यपेक्षया अधिकः विशेषकलश इति ज्ञेयम् ।। ९९-१०२।।

**गु.दी.–** इदानीं पञ्चविंशतिकलशपक्षे कलशेषु प्रक्षेप्यद्रव्याण्याह– **क्वाथेनेति ।। क्षीरवृक्षाणाम्** अश्वत्थोदुम्बरप्लक्षादीनां **क्वाथेन** कषायरसेन पञ्चामृतेन **पञ्चगव्येन** गोमूत्रादिना शुद्धजलेन च पृथक् पृथक् पञ्चकलशान् पूरयेत्। **मध्ये** मध्यस्थकलशेष्वपि मध्यं कलशं शुद्धोदेनैव पूरयेदित्यर्थः। अन्ये तु क्षीरवृक्षाणां क्वाथेन त्वचा। अयं भावः। त्वचं पिष्टां कृत्वा जले प्रक्षिप्य तज्जलं कलशेषु प्रक्षिपेदित्याहुः। मध्यकलशस्य परितः स्थितकलशेषु प्रक्षेप्यद्रव्यमाह—

**ब्राह्मस्येति ।।** मध्यकलशस्यैव ब्रह्मदेवताकत्वात्ब्राह्मत्वमिति ज्ञेयम् । **गन्धोदानां** तद्युक्तकलशानाम् । पञ्चविंशतिकलशपक्षे कलशस्थापनप्रकारमाह— **चतुर्दल इत्यादिना।।** चत्वारि दलानि यस्य तच्चतुर्दलम् । चक्राब्जादिमण्डलस्थिते चतुर्दले श्वेतपद्मचतुष्टये पूर्वदक्षिणपश्चिमोत्तरक्रमयोगेन क्वाथादिपूर्णकलशान् स्थापयेत् । 'चतुर्दिक्ष्वाश्रितः' इति क्वचित्पाठः ।।

पूर्वोक्तपञ्चकलशस्य स्थानं वदन् पञ्चगव्यकलशाधः पद्मान्तरमाह— **पञ्चगव्यमिति ।।** रक्तवर्णमल्पं पद्मं कृत्वा । **शुद्धान्तरे** शुद्धोदपूर्णकलशचतुष्टयानामन्तरे मध्ये पञ्चगव्यपूर्णं कलशं **स्थापयेत्** न्यसेदित्यर्थः ।

अयं भावः । पञ्चविंशतिकलशपक्षे चक्राब्जं भद्रकं वा लिखित्वा एकैकस्मिन् पद्मदले एकैकं पद्ममध्ये त्वेकमिति क्रमेण पञ्चकं पञ्चकं न्यसेत् । मण्डलमध्ये च पञ्चकं न्यसेत् । एवं पञ्चविंशतिकलशान् प्रस्थाप्य पूर्वदिगवस्थितेषु कलशेषु पञ्चसु पञ्चामृतानि क्षीरादीनि एकैकत्रैकैकमिति क्रमेण प्रक्षिपेत् । दक्षिणदिगवस्थितेषु पञ्चसु कलशेषु क्वाथजलानि प्रक्षिपेत् । पश्चिमदिगवस्थितानां पञ्चकलशानां मध्ये मध्यस्थकलशं विहाय परितः स्थितेषु चतुर्षु शुद्धोदकं प्रक्षिपेत् । मध्यकलशे पञ्चगव्यं प्रक्षिपेत् । पश्चिमदिगवस्थितपद्ममध्ये रक्तद्रव्येणाल्पं चतुर्दलं पद्मं कृत्वा, तदुपरि पञ्चगव्यकलशं निक्षिपेत् । उत्तरदिगवस्थितेषु गन्धोदकं स्थापयेत् । मध्यस्थितपञ्चानां मध्ये मध्यं विहाय चतुर्षु गन्धोदकमेव प्रक्षिपेत् । मध्ये तु शुद्धोदकमेव प्रक्षिपेदिति ।। ९९-१०२ ।।

**मङ्गली–** कलशेषु प्रक्षेप्यद्रव्यमाह– **क्वाथेनेति ।। क्षीरिवृक्षाणां** वटजम्बूप्लक्षाश्वत्थादीनां **क्वाथेन** चूर्णीकृतवृक्षत्वाङ्मिश्रितोदकेन एकं कलशम् । **पञ्चामृतैः** पयोदधिघृतमधुशर्करादिभिर्मिलिताभिर्द्वितीयं, **पञ्चगव्येन** पयोदधिघृतगोमूत्रगोमयैर्मिलितैस्तृतीयं, शुद्धजलेन चतुर्थं, एवं पृथक् पृथक् कलशान् पूरयेत् । **मध्यं** कलशमध्यस्थं कलशं **शुद्धोदेनैव** शुद्धोदकेनैव पूरयेदित्यर्थः ।।

एवं कलशेषु प्रक्षेप्यद्रव्यमुक्त्वा पञ्चविंशतिकलशपक्षे कलशस्थापनप्रकारमाह–

**ब्राह्मस्येति ॥** ब्रह्माभिमन्यमानत्वात् मध्यकलशः ब्राह्मशब्दवाच्यः । तस्य परितः **चतुर्दिक्षु** पूर्वादिचतुर्दिक्षु **गन्धोदानां** गन्धोदकपूर्णानां कलशानां चतुष्टयं **स्थापयेत्** आसादयेत्। 'गन्धोदानां' इत्यनुवादेन शुद्धोदकपूर्णब्राह्मनामककलशस्य परितः स्थापितकलशचतुष्टयं गन्धोदकेन पूरयेदित्युक्तं भवति । 'गन्धादीनां' इति पाठे **आदिशब्देन** रसक्वाथशुभोदकलशाः ग्राह्याः । एवं कलशपञ्चकस्थापनप्रकारमभिधाय तदितरकलशस्थापनप्रकारमाह– **चतुर्दल इत्यादिना ॥** मण्डले चक्राब्जादिकमण्डले **स्थिते** विद्यमाने **चतुर्दले** चत्वारि दलानि यस्य तच्चतुर्दलं तस्मिन् । **सिते** धवले **पद्मचतुष्के** पद्मानां चतुष्टये **पूर्वादिक्रमयोगेन** पूर्वदक्षिणपश्चिमोत्तरक्रमलक्षणोपायेन रसक्वाथशुभोदकान् । रसः पञ्चामृतं, क्वाथः क्षीरिवृक्षत्वक्चूर्णमिश्रोदकं, शुभोदकं च एतैः पूर्णान् कलशान् । **गन्धान्** गन्धोदकपूर्णान् कलशान् स्थापयेदित्यर्थः ।

अयं भावः । पञ्चविंशतिकलशपक्षे आदौ चक्राब्जादिकं मण्डलं लिखित्वा तन्मण्डलस्योपरि मध्ये शुद्धोदकपूर्णं ब्राह्मनामकं कलशं स्थापयित्वा तस्य पूर्वादिचतुर्दिक्षु गन्धोदकपूर्णकलशचतुष्टयं स्थापनीयम् । तत्परितः चतुर्दिक्षु चक्राब्जादिकमण्डलगतवीथीषु शुभ्ररङ्गवल्या चतुर्दलपद्मचतुष्टयं लिखित्वा पूर्वभागस्थपद्ममध्ये एकं कलशं, चतुर्दलेषु एकैकं एवं पञ्चामृतपूर्णकलशपञ्चकं स्थापयेत् । दक्षिणभागस्थपद्मे पूर्वोक्तप्रकारेणैव क्वाथोदकपूर्णकलशपञ्चकं स्थापयेत् । पश्चिमभागस्थपद्मे पूर्ववदेव शुद्धोदकपूर्णकलशपञ्चकम् । एवमेवोत्तरभागस्थपद्मेऽपि गन्धोदकपूर्णकलशपञ्चकमित्येवं क्रमेण पञ्चविंशतिकलशान् स्थापयेदिति ।

पश्चिमभागे शुद्धोदकपूर्णपञ्चकलशान् स्थापयेदित्युक्तम् । तस्यापवादमाह– **पञ्चगव्यमिति ॥** अयमर्थः । पश्चिमभागे चतुस्सङ्ख्याकानेव शुद्धोदककलशान् पद्मचतुर्दलेषु स्थापयित्वा **शुद्धान्तरे** शुद्धानां शुद्धोदकपूर्णकलशानां चतुर्णां मध्ये **पृथगपरं अल्पं** सूक्ष्माकारं **रक्तं** लोहितवर्णपद्मं **कृत्वा** लिखित्वा तत्र **पञ्चगव्यं** पञ्चगव्यपूर्णकलशं **न्यसेत्** स्थापयेदिति । यद्वा सुधीः शुद्धान्तरे ब्राह्मशुद्धोककलशं मध्ये पृथक् चतुर्दलं अल्पं रक्तं पद्मं कृत्वा तत्र पञ्चगव्यपूर्णकलशं स्थापयेत् ।

अस्मिन्पक्षे पञ्चविंशत्यादिसर्वपक्षेऽपि 'कुशोदकं'(३-१०६) इत्यादिना वक्ष्यमाण-विशेषकलशवत् अयमपि पञ्चगव्यकलशः पञ्चविंशत्याद्यपेक्षया अधिको विशेषकलश इति ज्ञेयम् ।। ९९-१०२ ।।

पञ्चाशत् कलशपक्षे कलशस्थापनाप्रकाराभिधानम् अङ्कुरपात्रासादनाभिधानं च

**तं.सा.** **पञ्चाशत्त्वे तु गन्धोदं सर्वमध्ये निधापयेत् ।**
**ब्राह्मस्य पुरतस्त्वेकं शा(सा)र्वं संस्थापयेद्बृहत्** ।। १०३ ।।

**अष्टदिक्ष्वष्टपद्मेषु पञ्चकं पञ्चकं न्यसेत् ।**
**अनेन क्रमयोगेन कलशा अखिला अपि** ।। २०४ ।।

**तत्तद्द्रव्यमयास्तत्र तत्र स्थाप्यास्तु बाह्यतः ।**
**तदैवाङ्कुरपात्राणि परितस्तत्र विन्यसेत्** ।। १०५ ।।

**त.क.–** एवं षष्ठं पक्षमवलम्ब्य कलशस्थापनप्रकारमभिधाय पञ्चमपक्षमवलम्ब्य तमाह— **पञ्चाशत्त्वे त्विति ।।** कलशानामिति शेषः । सर्वेषां वक्ष्यमाणानां च चत्वारिंशत्कलशानां मध्येऽन्तः सर्वमध्यस्थितपद्मे परितोऽष्टदिक्षु गन्धोदम्, अर्श आद्यजन्तम् । एकवचनमतन्त्रम्, अष्टौ गन्धोदकलशान् निधापयेत् स्थापयेदिति शेषेण योज्यम् । सर्वमध्ये इत्येतदावर्तनीयम् । ब्राह्ममित्यध्याहरणीयम् । सर्वेषामेषां स्थापितानां मध्ये ब्राह्मं निधापयेदित्यन्वयः । मध्ये स्थापितस्य ब्राह्मस्य पुरतः पूर्वभागे शर्वाभिमन्यमानकलशान्तरं स्थापयेदित्यर्थः ।

मध्ये स्थितपद्मे दशानां कलशानां स्थापनमभिधाय तद्बहिः पूर्वादिक्रमयोगे-नाष्टदिक्षु स्थितेषु अष्टसु पद्मेषु न्यसनीयान् कलशान् सङ्ख्यापूर्वमाह— **अष्टदिक्ष्विति ।।** अत्र पूरणीयद्रव्यनिरूपणाय 'पूर्वादिक्रमयोगेन'(३-१०१) इत्ययं सार्धश्लोकः अष्टदिक्ष्वित्यर्धशेषत्वेनापि व्याख्येयः । तथाच पञ्चाशत्कलशस्थापनपक्षे चक्राब्जमण्डलमध्येऽष्टदलमेकं पद्मं लिखित्वा तत्पद्ममध्ये ब्राह्मकलशः एकः । पूरणीयद्रव्यं मध्यकलशे शुद्धोदकमेव सर्वत्र। तत्पूर्वभागे शार्वः कलशोऽन्यः। शुद्धोदकमेव द्रव्यम् । मध्यत्वाविशेषेण 'मध्यं शुद्धोदकेनैव

पूरयेत्' इति न्यायस्य तत्रापि प्रवृत्तेः। ततः तत्परितः पूर्वादिक्रमयोगेन पूर्वादिस्थितपद्मदले एकः कलशः। आग्नेयकोणस्थदले त्वन्यः। दक्षिणदले त्वपरः। नैर्ऋतकोणस्थदले चान्यः। पश्चिमस्थदलेऽप्यपरः। वायवीयस्थ-दलेऽप्यन्यः। उत्तरदलेऽप्यपरः। ईशानदले त्वन्य इत्यष्टौ कलशाः। एषु कलशेषु पूरणीयद्रव्यं गन्धोदकमेव। पञ्चविंशतिपक्षे गन्धोदानां चतुष्टयम्। पञ्चाशत्त्वपक्षे तु गन्धोदानामष्टकमिति विशेषः। तद्बहिः पूर्वदिक्स्थितचतुर्दलपद्मस्य मध्ये एको ब्राह्मकलशः। तत्पूर्वदले पञ्चामृतकलशः एकः। दक्षिणदले क्वाथकलशः। पश्चिमदले शुभोदककलशः। उत्तरदले गन्धोदककलश इति पञ्चकलशाः। आग्नेयकोणस्थचतुर्दलपद्मस्य मध्ये ब्राह्मकलशः। तत्परितः चतुर्दलेषु क्रमेण घटाश्चत्वारः। एवं कोणेऽपि पञ्चकलशाः। एवं दक्षिणादिदिक्स्थितपद्मेष्वपि शुद्धोदकेन सह रसादिपूर्णपञ्चपञ्चघटा द्रष्टव्याः।

यद्वा, पूर्वदिशि पञ्चामृतपूर्णाश्चत्वारो घटाः परितः स्थापनीयाः। तन्मध्यगतघटोऽपि पञ्चामृतेनैव पूरणीयः। 'मध्यं शुद्धोदकेनैव पूरयेत्' इत्येत-न्मध्यस्थितपद्ममध्यस्थघटमात्रविषयं न तु सर्वपद्ममध्यस्थघटविषयम्। एवमग्रे-ऽपि। तत एव दक्षिणस्यां क्वाथपूर्णाः पञ्चापि। पश्चिमे शुभोदकपूर्णाश्चत्वारः। यद्वा, 'पञ्चगव्यं। शुद्धान्तरे न्यसेत्'(३-१०२) इत्येतत् पश्चिमदिक्स्थपद्मदलेषु सर्वेष्वपि शुद्धोदकपूर्णाः पञ्च घटाः, तद्बहिरेकं पद्मान्तरं विलिख्य पञ्चविंशतिसङ्ख्यातो बहिर्भूत एव पञ्चगव्यकलशः स्थापनीय इत्येवंपरम्। न तु एष्वेवापवादकम्। एवं 'अष्टदिक्ष्वष्टपद्मेषु' इत्येतदपि प्राच्यामाग्नेये च रसपूर्णा दश घटाः। एवं क्वाथपूर्णा दश घटाः याम्यनैर्ऋतयोः स्थापनीया इति व्याख्येयम्। चतुर्थादिपक्षेष्वपि कलशस्थापनप्रकारमधिकांशोहसूचनेनातिदिशति—

**अनेनेति ।। अखिलाः कलशाः** शतमारभ्य सहस्रपर्यन्तास्तत्तद्द्रव्यमयाः, तत्र **तत्रेति** वीप्सयां सहस्रपर्यन्तानां कलशानां स्थानानि परामृशति। अत एव बाह्यतः इत्येतत् वीप्सितम्, पञ्चामृतादिद्रव्यपूर्णाः शतादिसहस्रपर्यन्ताः कलशाः पूर्वोक्तस्थानोहेन पूर्वपूर्वकलशेभ्यो बहिर्बहिः तत्र तत्र पूर्वादिदिक्स्थपद्मेषु स्थाप्या इत्यर्थः।

तथाहि– स्थानाद्यूहप्रकारः। शतकलशपक्षे मध्ये ब्राह्मकलशौ द्वौ। तत्पूर्वभागे शार्वकलशौ द्वौ। तत्परितः गन्धोदककलशाः षोडश। आहत्य मध्ये विंशतिकलशाः। तद्बाह्यवीथिकायां पूर्वादिक्रमयोगेन एकैकस्यां दिशि, एकैकस्मिन् कोणे च द्वे द्वे पद्मे। एवं षोडशसु पद्मेषु एकैकस्मिन् पद्मे पञ्चामृतादितत्तद्रव्यपूर्णाः पञ्च पञ्च कलशाः स्थाप्याः। एवमशीतिकलशाः सम्पन्नाः। पूर्ववदेव पश्चिमदिक्स्थपद्मचतुष्टयस्य मध्यस्थरक्तपद्मेषु पञ्चगव्यपूर्णाः चत्वारोऽपवादकलशाः। एवं सार्धद्विशतपक्षेऽपि मध्ये ब्राह्मकलशाः पञ्च। शार्वकलशा अपि पञ्च। एवं दश कलशाः। तत्परितः गन्धोदकपूर्णाः कलशाः चत्वारिंशत्। एते मध्यस्थितपद्मेषु न्यसनीयाः पञ्चाशत्। ततः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि पञ्च पञ्च पद्मानि। आहत्य पद्मानि चत्वारिंशत्। तेष्वेकैकस्मिन् पञ्च पञ्च कलशाः पञ्चामृतपूर्णाः स्थापनीयाः। आहत्य द्विशतं कलशाः। पूर्ववदेव शुद्धोदकपूर्णानां चत्वारिंशत्कलशानां पश्चिमदिक्स्थदशपद्मेषु स्थापितकलशानां मध्ये स्थापिताः कलशा दश पञ्चगव्यापादकाः। एवं पञ्चशतकलशपक्षेऽपि मध्यपद्मे ब्राह्मा दश। शार्वा दश। गन्धोदककलशा अशीति। पूर्वाद्यष्टदिक्षु ब्राह्मक्रमेणैककस्यां दिशि दशपद्मानि कृत्वा तस्मिंश्चैकैकस्मिन् पद्मे पञ्चैव कलशाः स्थापनीयाः। एवं सहस्रकलशपक्षेऽपि मध्यपद्मे ब्रह्मकलशा विंशतिः। शार्वा अपि विंशतिः। तत्परितो गन्धोदककलशाः षष्ट्युत्तरशतम्। तद्बहिः पूर्वाद्यष्टदिक्ष्वैककस्यां दिशि विंशतिपद्मानि कृत्वा एकैकस्मिन् पद्मे पञ्चामृतपूर्णाः प्रत्येकं पञ्च पञ्च कलशाः स्थापनीयाः। तथा च कलशाः सहस्रं भवन्तीति विवेक्तव्यम्।

यत्तु 'क्वाथेन क्षीरवृक्षाणाम्'(३-९९) इत्यारभ्य 'ब्राह्मस्यैव चतुर्दिक्षु'(३-१००) इत्यतः प्राक्तनं मण्डलाद्बहिः पृथक् कलशपञ्चकस्थापनपरं न, किन्तु वक्ष्यमाणकलशेषु स्थापनीयद्रव्यनिरूपणपरम्। 'ब्राह्मस्यैव चतुर्दिक्षु' इत्यारभ्यैव कलशस्थापन-प्रकारो निरूप्यत इति व्याख्यानं तत्तु 'रसक्वाथशुभोदकान्। गन्धांश्च'(३-१०१) इत्यस्य पुनरुक्तेः, तत्र पञ्चगव्यस्योक्तेः अत्र गन्धस्योक्तेः प्रतिज्ञाभङ्गात्, वक्ष्यमाणाभिषेकत्रयानानुगुण्याच्च चिन्त्यम्। न च 'क्वाथेन

क्षीरवृक्षाणाम्'(३-९९) इत्यादिनिरूपितानां पञ्चानां कलशानामावाह्यमूर्त्यनुक्तिदोषः। 'कुशोदकं च कार्पूरम्'(३-१०६) इत्यादिना निरूपितत्रयोदशकलशानामिव विशेषकलशत्वोपपत्तेः सर्वत्र पूजायां मूलमूर्तेरावाह्य पूज्यत्वमुत्सर्गतः प्राप्तमिति यद्युच्यते तर्हि इहापि सममिति स्वयमेव विभावनीयम्। एवं सप्रभेदं कलशासादनप्रकारमभिधाय पालिकापञ्चमुखशरावाख्यानां द्वादशपात्राणामासादनप्रकारं कालदेशपूर्वमाह– **तदैवेति**॥ कलशस्थापनाव्यवहितकाल एवेत्यर्थः। **तत्र** दिक्षु विदिक्षु चेत्यर्थः। दिक्षु द्वे द्वे। विदिक्षु च एकैकमिति विवेकः॥ १०३-१०५॥

**अ.सं.–** पञ्चाशत्कलशपक्षे स्थापनाप्रकाराह– **पञ्चाशत्वेति**॥ कलशानामिति शेषः। 'मध्यं शुद्धोदेनैव पूरयेत्'(तं.सा३-१००) इत्यनेनैव ब्राह्मकलशस्य मध्यस्थानस्य कथितत्वात् तत्परितः स्थाप्यान् कलशोनाह– **गन्धोदिमति**॥ **सर्वमध्ये** सर्वेषां वक्ष्यमाणचत्वारिंशत्कलशानां मध्ये **गन्धोदं** समुदायैकवचनम्। गन्धोदकपूर्णकलशाष्टकं स्थापयेत्। अत्र योग्यतया गन्धोदककलशानामष्टकत्वं लभ्यते। गन्धोदककलशाष्टकस्य मध्ये स्थितस्य ब्राह्मकलशस्य **पुरतः** पूर्वभागे एकं **शार्वं** शर्वाभिमन्यमानं कलशं स्थापयेत्। 'सार्वं' इति पाठे सर्वदेवताभिमन्यमानमिति तस्यार्थः। एवञ्च मध्ये ब्राह्मकलशः शार्वकलश इति द्वौ कलशौ। तत्परितः गन्धोदककलशा अष्टौ एवं दशकलशा भवन्तीति ज्ञेयम्॥

अवशिष्टानां चत्वारिंशत्कलशानां स्थापनाप्रकारमाह– **अष्टेति**॥ अष्टदिक्षु स्थितेषु अष्टपद्मेषु एकैकस्यां दिशि एकैकं चतुर्दलं सितं पद्मं कृत्वेति यावत्। तत्र तत्र एकैकस्मिन् पद्मे **पञ्चकं पञ्चकं** पञ्च पञ्च कलशान् रसक्वाथशुभोदकगन्धोदकपूर्णान् स्थापयेदिति भावः। तत्र पूर्वदिक्स्थपद्मे आग्नेयपद्मे च पञ्चामृतकलशाः स्थापनीयाः। तत्र पश्चिमदिशि तु शुद्धोदककलशाः अष्टावेव। तन्मध्ये रक्तपद्मे पञ्चगव्यकलशद्वयं पूर्ववत् स्थापनीयमिति द्रष्टव्यम्। उक्तञ्च कलशस्थापनाप्रकारं शतकलशादिपक्षेष्वप्यतिदिशति– **अनेनेति**॥ **अनेन क्रमयोगेन** पूर्वोक्तक्रमलक्षणोपायेन **अखिला अपि** शतादिसहस्रांता अपि

कलशाः **तत्तद्रव्यमयाः** पञ्चामृतादिद्रव्यपूर्णा **बाह्यतः** पूर्वपूर्वकलशेभ्यो बहिर्बहिः **तत्र तत्र** पूर्वादिदिक्षु पद्मेषु च स्थाप्या इत्यर्थः ।

अयं भावः। शतकलशमध्ये ब्राह्मकलशौ द्वौ। तत्पूर्वतः शार्वकलशौ द्वौ। तत्परितः षोडशगन्धोदककलशाः। तत्परितः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यक्रमेण द्वे द्वे पद्मे कृत्वा तत्र तत्र एकैकस्मिन् पद्मे पञ्चामृतादितत्तद्रव्यमयाः पञ्च पञ्च कलशाः स्थाप्याः। तत्र पश्चिमे शुद्धोदकषोडशकलशमध्ये रक्तपद्मे पञ्चगव्यकलशचतुष्टयं स्थाप्यमिति ज्ञेयम्। सार्धद्विशतकलशपक्षे तु– मध्ये ब्राह्मकलशाः पञ्च। तत्परितः गन्धोदककलशाः चत्वारिंशत्। तत्परीतः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यक्रमेण पञ्च पञ्च पद्मानि कृत्वा एकैकस्मिन् पद्मे तत्तद्रव्यमयाः पञ्च पञ्च कलशाः स्थापनीयाः। पश्चिमे तु शुद्धोदांश्चत्वारिंशदेव कलशान् स्थापयित्वा तदन्तरे रक्तपद्मे पञ्चगव्यकलशाः दश स्थाप्याः। अनेन क्रमेण एतस्मात् द्विगुणाश्चेत् पञ्चाशत्कलशाः भवन्ति। पुनस्तद्विगुणाश्चेत् सहस्रकलशाः भवन्ति इति ज्ञेयम्।

अङ्कुरार्पणपात्रस्थापनाप्रकारमाह– **तदैवेति ।। तदैव** कलशस्थापनकाल एव **तत्र** मण्डले कलशानां परितः दिक्षु द्वे द्वे विदिक्षु चैकमिति द्वादश **अङ्कुरपात्राणि** अङ्कुरार्पणपात्राणि पालिकापञ्चमुखशरावाख्यानि स्थापयेदित्यर्थः ।। १०३-१०५ ।।

**गु.दी.–** पञ्चाशत्कलशपक्षे कलशस्थापनप्रकारमाह— **पञ्चाशत्व इति ।।** कलशानामिति शेषः। **गन्धोदं** गन्धोदपूर्णम्। **सर्वं** कलशनवकम्। **मध्ये** मण्डलमध्ये **निधापयेत्** स्थापयेत् ।। **ब्राह्मस्येति ।। ब्राह्मस्य** मध्यकलशस्य पुरोभागे **शार्वं** शर्वदेवताकं बृहत्कलशं संस्थापयेदित्यर्थः। पञ्चाशत्कलशपक्षे गन्धोदयुक्ताः दश कलशाः मध्ये स्थाप्या इति भावः। अवशिष्टचत्वारिंशत्क-लशस्थापनप्रकारमाह— **अष्टदिक्ष्विति ।।** मण्डलादिन्द्राग्न्याद्यष्टदिक्षु लिखितेषु चतुर्दलाष्टपद्मेषु कलशानां पञ्चकं पञ्चकं **न्यसेत्** स्थापयेदित्यर्थः। अष्टपद्मानां चतुश्चतुर्दलानि मध्यं चेति स्थानपञ्चके पञ्च पञ्च कलशान् स्थापयेदिति भावः ।।

शतकलशादिस्थापनायामुक्तप्रकारमतिदिशति— **अनेनेति ।।** शतकलशपक्षेऽपि

**अनेन क्रमयोगेन** पुनरपि दशकलशा. गन्धोदयुक्ता एव मध्ये स्थाप्या इत्यनेन क्रमोपायेन **अखिलाः** अवशिष्टचत्वारिंशत्कलशाः क्काथादितत्तद्द्रव्यप्रचुराः **बाह्यतः** पूर्वपद्मेभ्यो बहिः पूर्वाद्यष्टदिक्षु चतुर्दलपद्माष्टकं लिखित्वा तत्र स्थाप्या इत्यर्थः। इतोऽधिककलशपक्षेऽप्येवमिति द्रष्टव्यम् ।। **तदैवेति ।। तत्र** मण्डले **परितः** मण्डलं परितः दिक्षु चैकैकमिति द्वादशाङ्कुरपात्राणि विन्यसेदित्यर्थः ।।९१।।

**मङ्काली–** पञ्चाशत्कलशपक्षे स्थापनप्रकारमाह– **पञ्चाशत्वे त्विति ।।** कलशानामिति शेषः। 'मध्यं शुद्धोदेनैव पूरयेत्'(३-१००) इत्यनेनैव ब्राह्मकलशस्य मध्यस्थापनस्य कथितत्वात् तत्परितः स्थाप्यान् कलशानाह– **गन्धोदमिति ।। सर्वमध्ये** सर्वेषां वक्ष्यमाणचत्वारिंशत्कलशानां मध्ये। गन्धोदसमुदायैकवचनम्। गन्धोदकपूर्णकलशाष्टकं स्थापयेत्। अत्र योग्यतया गन्धोदककलशानामष्टत्वं लभ्यते। गन्धोदककलशाष्टकस्य मध्ये स्थितस्य ब्राह्मकलशस्य **पुरतः** पूर्वभागे एकं **शार्वं** शर्वाभिमन्यमानं कलशं स्थापयेत्। 'सार्वम्' इति पाठे सर्वदेवताभिमन्यमानं कलशं स्थापयेत्। 'सार्वम्' इति पाठे सर्वदेवताभिमन्यमानमिति तस्यार्थः। एवं च मध्ये ब्राह्मकलशः शार्वकलश इति द्वौ कलशौ। तत्परितः गन्धोदककलशा अष्टौ एवं दश कलशा भवन्तीति ज्ञेयम् ।।

अवशिष्टानां चत्वारिंशत्कलशानां स्थापनप्रकारमाह– **अष्टेति ।।** अष्टदिक्षु स्थितेषु अष्टपद्मेषु एकैकस्यां दिशि एकैकं चतुर्दलं सितं पद्मं कृत्वेति यावत्। तत्र तत्र एकैकस्मिन् पद्मे **पञ्चकं पञ्चकं** पञ्च पञ्चकलशान् रसक्काथशुभोदकपूर्णान् स्थापयेदिति भावः। तत्र पूर्वदिक्स्थपद्मे आग्नेयपद्मे च पञ्चामृतकलशाः स्थापनीयाः। दक्षिणपद्मे नैऋते च क्काथकलशाः, पश्चिमे वायवीये च शुद्धोदककलशाः, उत्तरे ऐशान्ये च गन्धोदककलशाः स्थापनीयाः। तत्र पश्चिमदिशि तु शुद्धोदककलशा अष्टावेव। तन्मध्ये रक्तपद्मे पञ्चगव्यकलशद्वयं पूर्ववत् स्थापनीयमिति द्रष्टव्यम्। उक्तं कलशस्थापनाप्रकारं शतकलशादिपक्षेष्वप्यतिदिशति– **अनेनेति ।। अनेन क्रमयोगेन** पूर्वोक्तक्रमलक्षणोपायेन **अखिला अपि** शतादिसहस्रान्ता अपि कलशाः **तत्तद्द्रव्यमयाः** पञ्चामृतादिद्रव्यपूर्णाः **बाह्यतः** पूर्वपूर्वकलशेभ्यो बहिः **तत्र तत्र** पूर्वादिदिक्षु पद्मेषु च स्थाप्या इत्यर्थः।

कलशाः **तत्तद्द्रव्यमयाः** पञ्चामृतादिद्रव्यपूर्णा **बाह्यतः** पूर्वपूर्वकलशेभ्यो बहिर्बहिः **तत्र तत्र** पूर्वादिदिक्षु पद्मेषु च स्थाप्या इत्यर्थः ।

अयं भावः । शतकलशमध्ये ब्राह्मकलशौ द्वौ । तत्पूर्वतः शार्वकलशौ द्वौ । तत्परितः षोडशगन्धोदककलशाः । तत्परितः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यक्रमेण द्वे द्वे पद्मे कृत्वा तत्र तत्र एकैकस्मिन् पद्मे पञ्चामृतादितत्तद्द्रव्यमयाः पञ्च पञ्च कलशाः स्थाप्याः । तत्र पश्चिमे शुद्धोदकषोडशकलशमध्ये रक्तपद्मे पञ्चगव्यकलशचतुष्टयं स्थाप्यमिति ज्ञेयम् । सार्धद्विशतकलशपक्षे तु– मध्ये ब्राह्मकलशाः पञ्च । तत्परितः गन्धोदककलशाः चत्वारिंशत् । तत्परीतः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यक्रमेण पञ्च पञ्च पद्मानि कृत्वा एकैकस्मिन् पद्मे तत्तद्द्रव्यमयाः पञ्च पञ्च कलशाः स्थापनीयाः । पश्चिमे तु शुद्धोदांश्चत्वारिंशदेव कलशान् स्थापयित्वा तदन्तरे रक्तपद्मे पञ्चगव्यकलशाः दश स्थाप्याः । अनेन क्रमेण एतस्मात् द्विगुणाश्चेत् पञ्चाशत्कलशाः भवन्ति । पुनस्तद्द्विगुणाश्चेत् सहस्रकलशाः भवन्ति इति ज्ञेयम् ।

अङ्कुरार्पणपात्रस्थापनाप्रकारमाह– **तदैवेति ।। तदैव** कलशस्थापनकाल एव **तत्र** मण्डले कलशानां परितः दिक्षु द्वे द्वे विदिक्षु चैकमिति द्वादश **अङ्कुरपात्राणि** अङ्कुरार्पणपात्राणि पालिकापञ्चमुखशरावाख्यानि स्थापयेदित्यर्थः ।। १०३-१०५ ।।

**गु.दी.–** पञ्चाशत्कलशपक्षे कलशस्थापनप्रकारमाह— **पञ्चाशत्व इति ।।** कलशानामिति शेषः । **गन्धोदं** गन्धोदपूर्णम् । **सर्वं** कलशनवकम् । **मध्ये** मण्डलमध्ये **निधापयेत्** स्थापयेत् ।। **ब्राह्मस्येति ।। ब्राह्मस्य** मध्यकलशस्य पुरोभागे **शार्वं** शर्वदेवताकं बृहत्कलशं संस्थापयेदित्यर्थः । पञ्चाशत्कलशपक्षे गन्धोदयुक्ताः दश कलशाः मध्ये स्थाप्या इति भावः । अवशिष्टचत्वारिंशत्कलशस्थापनप्रकारमाह— **अष्टदिक्ष्विति ।।** मण्डलादिन्द्राग्न्याद्यष्टदिक्षु लिखितेषु चतुर्दलाष्टपद्मेषु कलशानां पञ्चकं पञ्चकं **न्यसेत्** स्थापयेदित्यर्थः । अष्टपद्मानां चतुश्चतुर्दलानि मध्यं चेति स्थानपञ्चके पञ्च पञ्च कलशान् स्थापयेदिति भावः ।।

शतकलशादिस्थापनायामुक्तप्रकारमतिदिशति— **अनेनेति ।।** शतकलशपक्षेऽपि

**अनेन क्रमयोगेन** पुनरपि दशकलशाः गन्धोदयुक्ता एव मध्ये स्थाप्या इत्यनेन क्रमोपायेन **अखिलाः** अवशिष्टचत्वारिंशत्कलशाः काथादितत्तद्रव्यप्रचुराः **बाह्यतः** पूर्वपद्मेभ्यो बहिः पूर्वाद्यष्टदिक्षु चतुर्दलपद्माष्टकं लिखित्वा तत्र स्थाप्या इत्यर्थः । इतोऽधिककलशपक्षेऽप्येवमिति द्रष्टव्यम् ।। **तदैवेति ।। तत्र** मण्डले **परितः** मण्डलं परितः दिक्षु चैकैकमिति द्वादशाङ्कुरपात्राणि विन्यसेदित्यर्थः ।।९१।।

**मङ्गाली–** पञ्चाशत्कलशपक्षे स्थापनप्रकारमाह– **पञ्चाशत्वे त्विति ।।** कलशानामिति शेषः । 'मध्यं शुद्धोदेनैव पूरयेत्'(३-१००) इत्यनेनैव ब्राह्मकलशस्य मध्यस्थापनस्य कथितत्वात् तत्परितः स्थाप्यान् कलशानाह– **गन्धोदमिति ।। सर्वमध्ये** सर्वेषां वक्ष्यमाणचत्वारिंशत्कलशानां मध्ये । गन्धोदसमुदायैकवचनम्। गन्धोदकपूर्णकलशाष्टकं स्थापयेत् । अत्र योग्यतया गन्धोदककलशानामष्टत्वं लभ्यते । गन्धोदककलशाष्टकस्य मध्ये स्थितस्य ब्राह्मकलशस्य **पुरतः** पूर्वभागे एकं **शार्वं** शर्वाभिमन्यमानं कलशं स्थापयेत् । 'सार्वम्' इति पाठे सर्वदेवताभिमन्यमानं कलशं स्थापयेत् । 'सार्वम्' इति पाठे सर्वदेवताभिमन्यमानमिति तस्यार्थः । एवं च मध्ये ब्राह्मकलशः शार्वकलश इति द्वौ कलशौ । तत्परितः गन्धोदककलशा अष्टौ एवं दश कलशा भवन्तीति ज्ञेयम् ।।

अवशिष्टानां चत्वारिंशत्कलशानां स्थापनप्रकारमाह– **अष्टेति ।।** अष्टदिक्षु स्थितेषु अष्टपद्मेषु एकैकस्यां दिशि एकैकं चतुर्दलं सितं पद्मं कृत्वेति यावत् । तत्र तत्र एकैकस्मिन् पद्मे **पञ्चकं पञ्चकं** पञ्च पञ्चकलशान् रसक्वाथशुभोदकपूर्णान् स्थापयेदिति भावः । तत्र पूर्वदिक्स्थपद्मे आग्नेयपद्मे च पञ्चामृतकलशाः स्थापनीयाः । दक्षिणपद्मे नैऋते च क्वाथकलशाः, पश्चिमे वायवीये च शुद्धोदककलशाः, उत्तरे ऐशान्ये च गन्धोदककलशाः स्थापनीयाः । तत्र पश्चिमदिशि तु शुद्धोदककलशा अष्टावेव । तन्मध्ये रक्तपद्मे पञ्चगव्यकलशद्वयं पूर्ववत् स्थापनीयमिति द्रष्टव्यम् । उक्तं कलशस्थापनाप्रकारं शतकलशादिपक्षेष्वप्यतिदिशति– **अनेनेति ।। अनेन क्रमयोगेन** पूर्वोक्तक्रमलक्षणोपायेन **अखिला अपि** शतादिसहस्रान्ता अपि कलशाः **तत्तद्रव्यमयाः** पञ्चामृतादिद्रव्यपूर्णाः **बाह्यतः** पूर्वपूर्वकलशेभ्यो बहिः **तत्र तत्र** पूर्वादिदिक्षु पद्मेषु च स्थाप्या इत्यर्थः ।

अयं भावः । शतकलशपक्षे मध्ये ब्राह्मकलशौ द्वौ । तत्पूर्वतः शार्वकलशौ द्वौ । तत्परितः षोडश गन्धोदककलशाः । तत्परितः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यक्रमेण द्वे द्वे पद्मे कृत्वा तत्र तत्र एकैकस्मिन् पद्मे पञ्चामृतादितत्तद्रव्यमयाः पंच पञ्च कलशाः स्थाप्याः । तत्र पश्चिमे शुद्धोदकषोडशकलशमध्ये रक्तपद्मे पञ्चगव्यकलशचतुष्टयं स्थाप्यमिति ज्ञातव्यम् ।

सार्धद्विशतकलशपक्षे तु मध्ये ब्राह्मकलशाः पञ्च । शार्वाः पञ्च, तत्परितः गन्धोदककलशाः चत्वारिंशत्, तत्परितः पूर्वाद्यष्टदिक्षु एकैकस्यां दिशि बाह्यः क्रमेण पञ्च पञ्च पद्मानि कृत्वा एकैकस्मिन् पद्मे तत्तद्रव्यमयाः पञ्च पञ्च कलशाः स्थापनीयाः । पश्चिमे तु शुद्धोदाश्चत्वारिंशदेव कलशान् स्थापयित्वा तदन्तरे रक्तपद्मे पञ्चगव्यकलशाः स्थाप्याः । अनेन क्रमेण एतस्मात् द्विगुणाश्चेत् पञ्चशतकलशा भवन्ति । पुनस्तद्द्विगुणाश्चेत् सहस्रकलशा भवन्तीति ज्ञेयम् । अङ्कुरार्पणपात्रस्थापनाप्रकारमाह– **तदैवेति** ।। **तदैव** कलशस्थापनकाले । एवं **तत्र** मण्डले कलशानां परितः दिक्षु द्वे द्वे विदिक्षु चैककमिति द्वादश **अङ्कुरपात्राणि** अङ्कुरार्पणपात्राणि पालिकापञ्चमुखशरावाख्यानि स्थापयेदित्यर्थः ।। १०२-१०५।।

पञ्चविंशत्यादिकलशस्थापनापक्षे मण्डलाद्बहिः अवश्यस्थापनीयकलशाभिधानम्

**तं. शा.** **कुशोदकं च कार्पूरं कौङ्कुमं चान्दनं(चाम्पकं) तथा ।**
**तुहिनोदं हरिद्रोदमौशीरं कोष्ठसार्षपम् (सार्वके, सारके, कं)**
**।। १०६ ।।**

**नदीसङ्गमजं(गं) चैव ताटाकं कौप्यमेव च(वा) ।**
**निर्झरोदमिति प्रोक्ता विशेषकलशा इमे ।। १०७ ।।**

**शुद्धोदद्वयमप्येतन्महातीर्थसमुद्भवम् ।**

**त.क.**– मण्डलाद्बहिः पञ्चकलशस्थापनमिव त्रयोदशकलशस्थापनमत्यावश्यकमित्यभिप्रयन् पूरणीयद्रव्यविशिष्टतया कलशानभिधत्ते— **कुशोदकमित्यादिना** ।। अत्रोदकशब्दो बुद्ध्या विविक्तो नपुंसकान्तैर्दशभिः शब्दैः सम्बध्यते ।

कुशमिश्रमुदकमिति मध्यमपदलोपी कर्मधारयः। **कार्पूरमिति** कर्पूरमिश्रितमित्यर्थः। एवं **कौङ्कुममित्यादावपि**। अत्र **'कोष्ठसार्षपं कोष्ठसार्वके कोष्ठसारके'** इति त्रेधाऽपि पठ्यते। तत्र आद्येऽप्यर्थः प्राग्वत्। कोष्ठशब्देन अर्श आद्यजन्तेन द्वन्द्वसमासः, एकवद्भावश्च। कोष्ठोदकं सार्षपोदकं चेत्यर्थः। द्वितीये कोष्ठं प्रसिद्धम्। सार्वकशब्देन कृष्णागरुरुच्यते। पदद्वयमपि अर्श आद्यजन्तम्। द्वन्द्वश्च समासः। तृतीये सारकशब्देन चम्पककुड्मलमुच्यते। विग्रहः पूर्ववत्। **नदीसङ्गमजमित्यत्र** नद्याः सागरेण यः सङ्गमः, यश्च नदीनां परस्परसङ्गमः तद्गतमुदकमुच्यते। **कौप्यमिति** सम्बन्धे ष्यङ्। अत्र **चतथाशब्दास्समुच्चये**। आद्य एवशब्दः प्रकारान्तरं निवारयति। द्वितीयस्तु प्रोक्ता इत्यनेन सम्बध्यते। तेन आवश्यकतामाचष्टे। **प्रोक्ताः** इत्येतदर्थवशात् नपुंसकमिहाप्यनुकृष्यते। इमे इत्येतदपि नपुंसकान्तमत्राप्यनुकृष्यते। इतीमान्युदकानि अभिषेकार्थे प्रोक्तान्येवावश्यकान्येवेत्यर्थः। इतिशब्द आवर्ततीयः। **इति** तस्मात् त्रयोदशविधोदकाश्रया इमे विशेषकलशाः मण्डलाद्बहिः पूज्यतया प्रोक्ता इत्यर्थः। **विशेषशब्देन** पञ्चविंशत्यादिष्वन्तर्भावं वारयति ॥

अभिषेकोपयुक्तोदककथनप्रसङ्गात् पूर्वोक्तशुद्धोदकं कुम्भस्थोदकं विशिनष्टि— **शुद्धोदेति ॥ एतद्द्वयमित्यनेन** चक्राब्जादिमण्डलस्थितपद्ममध्ये स्थितकलशे पूरणीयोदकं तत्पश्चिमभागे बहिर्लिखितपद्ममध्ये स्थापितकलशे पूरणीयोदकं च सर्वत्र ब्राह्मकलशे स्थापनीयोदकं वा राशीकृत्य गृह्यते। **महातीर्थसमुद्भवं** भागीरथ्यादितीर्थादानीतमित्यर्थः। ननु कलशांस्तत्र पूजयेदित्ययुक्तम्। कलशनां द्रव्याणां वा अचेतनत्वात्। 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्व-विपर्ययाभ्याम्' इति साङ्कर्षणे सूत्रे तत्पूजाया निषिद्धत्वादिति चेन्न। तत्रापि देवताया एव पूज्यत्वाङ्गीकारात्। १०६-१०७ ॥

**अ.सं.**– इदानीं सर्वपक्षेऽप्यावश्यकं विशेषकलशानाह– **कुशोदकमिति ॥** कुशयुक्तं कर्पूरमिश्रितं कुङ्कुमकुसुमोदकं, चन्दनोदकं। 'चाम्पकं' इति क्वचित्। तुहिनोदं, हरिद्रोदं 'हैरिवेरं' इति क्वचित्पाठः। तत्र हीरवेरमित्यस्य

मुडिवालेत्यपभ्रष्टभाषा। उशीरवासितं, कोष्ठसर्षपमिलितमेकं, कोष्ठसर्षपयुतोदिमत्यर्थः। अस्मिन् पक्षे द्वादशकलशाः। 'कोष्ठसार्वकं' इति क्वचित्पाठः। तत्र कोष्ठं प्रसिद्धम्। सार्वकशब्देन कृष्णागरुरुच्यते। 'सारकः' इति क्वचित्। तत्र सारकपदेन चम्पककुड्मलमुच्यते। द्विवचनेन कलशद्वयं ग्राह्यम्। एवञ्च त्रयोदशकलशा इत्युक्तं भवति ॥

**नदीसङ्गमगं** परस्परनदीसङ्गमोदकं वा नदीसागरसङ्गमोदकं वेत्यर्थः। तटाकसम्बन्धि। कूपोदकं। **निर्झरोदकं** प्रवाहोदकमितीमे विशेषकलशाः प्रोक्ताः। एते पालिकाद्यन्तः पालिकादिक्रमेण स्थाप्या इति ज्ञेयम्। शुद्धोदकलशेषु पूरणीयं जलं किंरूपमित्यत आह– **शुद्धोदकद्वयमिति ॥ एतत्** ब्राह्मं शार्वं चेति शुद्धोदकद्वयं वा ब्राह्मं पश्चिमे स्थाप्य कलशसमूहं चेति शुद्धोदद्वयं वा महातीर्थसमुद्भवं, ज्ञेयमिति शेषः ॥ १०६,१०७ ॥

**गु.दी.–** मण्डलादन्यत्र स्थाप्यकलशान् द्रव्यविशिष्टत्वेनाह— **कुशोदकमित्यादिना ॥** कुशोदकपूर्णम्। **तुहिनोदकं** शीतलजलपूर्णम्। **हीरबेरं** हीवेरम्। हीवेरस्य मुडिवालेत्यपभ्रष्टभाषा। 'हैरबेरम्' इति क्वचित्पाठः। **कोष्ठसार्षपं** कोष्ठौषधजलपूर्णं सर्षपोदकभृतं च। **ताटाकं** तटाकोदकपूर्णम्। **निर्झरोदं** निर्झरजलपूर्णम्। **इतीत्यनन्तरं** द्रव्याश्रया इति शेषः। **इति** द्रव्याश्रयास्त्रयोदश कलशाः विशेषकलशाः प्रोक्ता इति सम्बन्धः। अयं भावः। पञ्चविंशत्यादिसर्वपक्षेष्वपि एते उक्तद्रव्यपूर्णा अन्यत्र स्थाप्या इति।

पश्चिमदिगवस्थितानां मध्ये परितः स्थितेषु चतुर्षु ब्राह्मकलशे च शुद्धोदं स्थाप्यमित्युक्तम्। एतच्छुद्धोदद्वयं किंरूपमित्यपेक्षायामाह— **शुद्धोदेति ॥ एतत्** पूर्वोक्तं शुद्धोदद्वयम्। **अपिपदेन** ब्राह्मे मृत्तिकां च क्षिपेदिति अनुजानाति। यथोक्तं पञ्चसंस्कारसङ्ग्रहे रङ्गपतितीर्थैः—

क्षेत्रतीर्थोदकं शैलतुलसीगजमृत्तिकाः।
चतुष्पथा च वल्मीका न्यसेत् ता मध्यमे घटे ॥ इति ॥ १०६,१०७ ॥

**मङ्गाली–** इदानीं सर्वपक्षेऽपि आवश्यकान् विशेषकलशानाह–

**कुशोदकमिति।।** कुशयुक्तं कर्पूरमिश्रितं कुङ्कुमकुसुमोदकं चन्दनोदकम् । 'चांपकम्' इति क्वचित्पाठः । **तुहिनोदं** तुषारोदं **हरिद्रोदं** हरिद्राचूर्णमिति । 'श्रोदं तुहिनोदं हैरबेरम्' इति क्वचित्पाठः । तत्र हिरवेरमित्यस्य मुडिवालेत्यपभ्रष्टभाषा । उशीरवासितं च कोष्ठसार्षपमिति मिलितमेकं कोष्ठसर्षपयुतोदमित्यर्थः । अस्मिन्पक्षे द्वादशकलशाः । 'कोष्ठसार्वके' इति क्वचित्पाठः । तत्र कोष्ठं प्रसिद्धम् । सार्वकशब्देन कृष्णागरुरुच्यते । 'सारकः' इति क्वचित् । तत्र सारकपदेन चंपककुड्मलमुच्यते । द्विवचनेन कलशद्वयं ग्राह्यम् । एवं त्रयोदशकलशा इत्युक्तं भवति ।।

**नदीसंमगं** परस्परं नदीसङ्गमोदकं वा नदीसागरसङ्गमोदकं वेत्यर्थः । तटाकसम्बन्धि कूपोदकं निर्झरोदकं प्रवाहोदकं इतीमे विशेषकलशाः प्रोक्ताः । पालिकाद्यन्तः पालिकादिक्रमेण स्थाप्या इति ज्ञेयम् । शुद्धोदकलशेषु पूरणीयं जलं किं रूपमित्यत आह– **शुद्धोदकद्वयमिति ।।** एतत् ब्राह्मं शार्वं चेति **शुद्धोदद्वयं** वा ब्राह्मं पश्चिमे स्थाप्यकलशसमूहश्चेति शुद्धोदद्वयं वा महातीर्थसमुद्भवं ज्ञेयमिति शेषः ।। १०६,१०७ ।।

पञ्चविंशत्यादिसर्वपक्षे कलशेषु आवाह्यरूपाणां कथनम्

**त. सा. चतुर्विंशत्तु(ति) मूर्तीनां वर्णमूर्तीस्तथाऽपराः ।। १०८ ।।**
**आवाहयेच्छतत्वे तु क्रमव्युत्क्रमतस्तु ताः ।**
**वर्णमूर्तीः पुनश्चैव द्विचतुर्वारमेव वा (च) ।। १०९ ।।**

**सहस्रकलशादित्वे जपेन्मन्त्रांश्च शक्तितः ।**

**त.क.–** कास्ता देवता इत्यतः पञ्चविंशतिकलशपक्षे देवतास्तावदाह– **चतुर्विंशत्त्विति ।।** तुशब्द आवाहयेदित्यस्यानुकर्षणार्थः । चतुर्विंशच्छब्दः सङ्ख्यावाची छान्दसः । इकारलोपः द्वितीयान्तश्च । **मूर्तीनां** केशवादिकृष्णान्तानां चतुर्विंशतिं च, चतुर्विंशतिमूर्तीरिति यावत्, पञ्चविंशतिकलशेषु आवाहयेत् पूजयच्चेति शेषः । मध्ये कलशे आवाह्यस्य केशवस्य पञ्चगव्यकलशेऽप्यावाह्यत्वान्न विरोधः । यद्वक्ष्यति- 'आवाहनं च स्नपनं पञ्चगव्येन मध्यवत्' (३-१२०) इति ।

'चतुर्विंशतिमूर्तीनां' इति पाठे केशवादिचतुर्विंशतिमूर्तीनां मध्ये एकैकां मूर्तिं एकैकस्मिन् कलशे आवाहयेदित्यर्थः। चतुर्विंशतिमूर्तीनां पूजा प्रोक्तेति वाऽर्थः। विभक्तिविपरिणामेन द्वितीयान्तमेवेदं आवाहयेदित्यनेन सम्बध्यत इति केचित्। पञ्चाशत्कलशपक्षे मूर्तीराह— **वर्णमूर्तीरिति ॥** पञ्चाशत् **वर्णमूर्ती** अजादिका लालुकान्ताः पञ्चाशत्कलशेषु आवाहयेत्। पूजयेदिति शेषः। यद्यपि क्षकारेण सहैकपञ्चाशद्वर्णमूर्तयः सनृसिंहा न तावत्यः। तथापि क्षकारस्य वर्णसंयोगनिमित्तत्त्वात्तद्विवक्षाभावः। अत एव 'पञ्चाशद्वर्णवाच्याः' (तं.सा.१-५) इत्युक्तं प्रथमे। शतकलशपक्षे देवता आह— **तथाऽपरा इति ॥ तथाशब्दः** चतुर्विंशतिमूर्तीनां वर्णमूर्तीरित्यनुक्तस्यानुकर्षणार्थः। **तु**शब्दश्चार्थः। अपरा इत्यनेन संबध्यते। कलशानां शतत्वे केशवादिकृष्णान्ताः चतुर्विंशतिमूर्तीः, क्षकारेण सह एकपञ्चाशद्वर्णमूर्तीः अजादिनृसिंहान्ताः, **अपराः** आत्माद्याश्चतस्रः, वासुदेवाद्याश्चतस्रः, विश्वाद्याश्चतस्रः, मत्स्याद्याः शिशुंमारान्तास्त्रयोदशमूर्तीः प्रत्येकं शतकलशेष्वावाहयेत्।

एवं कल्पत्रयेण आवाहनमभिधायावशिष्टेषु त्रिषु कल्पेषु सहस्रमर्धं पादं वेति निर्दिष्टेषु देवता आवाहनप्रकारं चाऽह— **क्रमविक्रमतस्तु ताः इत्यादिना जपेदित्यतः प्राक्तनेन ग्रन्थेन ॥ सहस्रकलशादित्वे** सहस्रकलशत्वे, पञ्चशतकलशत्वे, सार्धद्विशतकलशत्वे, च **वर्णमूर्तीः** अजादिनृसिंहान्ता एकपञ्चाशतः **ताश्च** केशवादिशिंशुमारान्ता एकोनपञ्चाशन्मूर्तीरावाहयेत्। ता इत्यनेनैव वा शतानां ग्रहणम्। न पुनर्मूर्त्यन्तरावापः कार्य इत्येवशब्देनाऽचष्टे। नन्विदमसम्भवि। सहस्रकलशेषु शतमूर्तीनामावाहनायोग्यत्वादित्यतः पक्षत्रयेऽप्यावाहनप्रकारं दर्शयति— **द्विचतुर्वारमिति ॥** सङ्ख्याया व्याप्यव्यापकभावविवक्षया, अल्पाच्तरत्वाच्च द्विशब्दस्य पूर्वनिपातः। सहस्रकलशेषु चतुर्वारमावृत्त्या एता एव शतमूर्तीरावाहयेत्। पञ्चशतकलशेषु द्विवारमावृत्त्येत्यर्थः। नन्वथापि द्विचतुर्वारावृत्तौ कः क्रमः इत्याकांक्षायामाह— **क्रमव्युत्क्रमत इति ॥** नन्वथापि सङ्ख्यासामान्यं नास्तीत्याशङ्क्य वर्णमूर्तीः पुनरित्यावृत्त्या योज्यम्। तथाच अजादिशिंशुमारान्तानां मूर्तीनां क्रमेण

शतकलशेष्वाहनम् । ततः शिंशुमाराश्वजान्तानां शतान्तरावाहनम् । ततः पुनः पञ्चाशद्वर्णमूर्तीनां अजादिलालुकान्तानां पञ्चाशत्कलशेष्वावाहनम् । एवं च सार्धद्विशतकलशेषु क्रमव्युत्क्रमतः पुनर्वर्णमूर्तीनामावृत्त्या च सार्धद्विशतमूर्तित्वं सेत्स्यति । ततः पुनरनेन प्रकारेण द्विवारमावृत्तौ पञ्चशतत्वं चतुर्वारमावृत्तौ सहस्रत्वमिति विवेक्तव्यम् । अत एव 'सहस्रकलशादित्वे' इति प्रथमनिर्दिष्टस्य पक्षस्यान्ते विवरणं नायुक्तम् । एवमावाहनानन्तरं तत्र सन्निधानसिद्ध्यर्थं नारायणाक्षारादिमन्त्रान् द्वादशवारं जपेदित्याह— **जपेदिति** ।। चशब्द आह्वानेन समुच्चयार्थः ।। १०८,१०९ ।।

**अ.सं.**— इदानीं कलशेषु आवाह्यमूर्तीर्वदन्नादौ पञ्चविंशतिकलशपक्षे आवाह्यमूर्तीराह— **चतुर्विंशतिमूर्तीनामिति** ।। द्वितीयार्थे षष्ठी । केशवादिचतुर्विंशतिमूर्तीरित्यर्थः । पञ्चविंशतिपक्षे पञ्चविंशतिकलशेष्विति शेषः । 'चतुर्विंशत्तु' इति पाठे मूर्तीनां केशवादीनां **चतुर्विंशत्** चतुर्विंशतिमित्यर्थः । आवाहयेत् । अत्र ब्राह्मकलशदेवताया एव पञ्चगव्यकलशेऽप्यावाहनं ज्ञेयम् । 'आवाहनं च स्नपनं पञ्चगव्येन मध्यतः' (तं.सा.३-१२०) इत्यत्र वक्ष्यमाणत्वात् । तेन एकस्या एव द्विवारमावाहनात् मूर्तीनां पञ्चविंशतित्वं युज्यत इत्याहुः । प्रतिष्ठेयमूर्त्या वा मूलमूर्त्या वा सह पञ्चविंशतित्वं ज्ञेयमित्यप्याहुः ।

अयं भावः । ब्राह्मकलशपञ्चगव्यकलशयोरेकदेवतात्वपक्षे ब्राह्मकलशमारभ्य तदितरकलशचतुष्टये तत्परितः पूर्वपञ्चकमारभ्य प्रतिपञ्चकं पूर्वमारभ्यैवोत्तर-पर्यन्तत्वेनोत्तरपञ्चकपर्यन्तं क्रमेण केशवादिचतुर्मूर्तीरावाह्यान्ते पञ्चगव्येऽपि केशवमेवावाहयेदिति । मूलमूर्त्या सह पञ्चविंशतित्वपक्षे पञ्चगव्ये मूलमूर्तिम् आवाहयेदिति वा । ब्राह्मकलशे मूलमूर्तिमावाह्य तदितरकलशेषु चतुर्विंशतिषु पूर्वादिक्रमेण केशवादिमूर्तीरावाहयेदिति वेति ।

पञ्चाशत्कलशपक्षे आवाह्यमूर्तीराह—**वर्णमूर्तीरिति** ।। अकारादिपञ्चाशद्वर्णमूर्तीः अजाद्याः पञ्चाशत्कलशेष्विति शेषः । आवाहयेदिति सम्बन्धः । शतकलशपक्षे आवाह्यमूर्तीराह— **तथाऽपरा इति** ।। पूर्वोक्तमनुवर्त्तते । तथाच शतत्वे तु कलशानामिति शेषः । शतकलशपक्षे तु क्षकारवाच्यनृसिंहमूर्त्या सह

एकपंचाशद्वर्णमूर्तीः अजाद्यास्तथा केशवादिचतुर्विंशतिमूर्तीः। तथा **अपराः** पूर्वमूर्तिभ्योऽन्याः आत्माद्याः चतस्रः वासुदेवाद्या चतस्रः विश्वाद्याः चतस्रः एवं द्वादश। मत्स्याद्याः त्रयोदश इत्येवं शतमूर्तीरावाहयेदित्यर्थः। सार्धशतद्वयपक्षेऽपि अजाद्याः शिशुंमारान्ताः शतमूर्तीरवाहयेत्। अत्रावाहनप्रकारमाह– **क्रमेति ॥** अयमर्थः। **तास्तु** ता एव। अजादिशिंशुमारान्ताः शतमूर्तीः **क्रमेण** अजादिक्रमेण ब्राह्मादिशतकलशेषु आवाहयेत्। अनन्तरशतके व्युत्क्रमेण पूर्वक्रमवैपरीत्येन शिशुंमाराद्यजान्ताः शतमूर्तीरावाहयेत्। पुनरनन्तरं पञ्चाशत्कलशेषु वर्णमूर्तीरिव पञ्चाशद्वर्णदेवताः अजादिक्रमेणावाहयेदिति। पञ्चशतकलशपक्षे सहस्रकलशपक्षेऽपि अजादिशतमूर्तीरिवावाहयेत्। तत्रावाहनप्रकारमाह– **द्विचतुर्वारमेव वेति ॥** सहस्रकलशादित्वे **आदि**शब्देन पञ्चशतकलशत्व इति ग्राह्यम्। पञ्चशतकलशपक्षे सार्धशतद्वयोक्तरीत्यैव द्विवारमावाहयेत्। सहसकलशपक्षेऽपि सार्धशतद्वयोक्त-रित्यैव चतुर्वारमावाहयेदिति विवेकः।

अयं भावः। पञ्चशत कलशपक्षे प्रथमशतके क्रमेण, द्वितीयशतके व्युत्क्रमेण, अनन्तरं पञ्चाशत्कलशेषु क्रमेणावाहनम्। एवमेव तदनन्तरकलशेषु पुनरप्येकवारमिति। द्विवारमिति। एवं सहस्रकलशपक्षे चतुर्वारमावाहनं ज्ञेयमिति। यद्वा पञ्चविंशतिकलशेषु मूर्तीनां चतुर्विंशत्केशवादिचतुर्विंशन्मूर्तीः पञ्चाशत्कलशपक्षे तेषु **अपराः** केशवादिभ्योऽन्याः **वर्णमूर्तीः** क्षकारं विना पञ्चाशदक्षरदेवताः अजाद्याः आवाहयेत्। शतत्वे तु **तास्तु** ता एव **वर्णमूर्तीः** पञ्चाशदजाद्याः देवताः **क्रमव्युत्क्रमतः** पूर्वं क्रमेण अनन्तरं व्युत्क्रमेण आवाहयेत्। सार्धशतद्वयादिपक्षेषु वर्णमूतीरेव क्रमव्युत्कमतः **पुनश्च** पुनरपि द्विचतुर्वारं चावाहयेत्। **द्विचतुर्वारमिति** सङ्ख्यायामनास्था। यावदावृत्या पूर्येत् तावदावृत्या आवाहनं कार्यम्। तथाच सार्धशतद्वयपक्षे पूर्वं क्रमेण पश्चात् व्युत्क्रमेणेति द्विवारं, पुनः क्रमेण एकवारं, पञ्चशतपक्षे पूर्ववत् क्रमव्युत्क्रमतः आवाहनं पञ्चवारम्। सहस्रपक्षे क्रमव्युत्क्रमतः आवाहनं दशवारं भवतीति ज्ञेयम्। एवं कलशेषु देवता आवाह्य तान् कलशान् हस्तेन स्पृष्ट्वा जपेदित्याह– **जपेदिति ॥** **मन्त्रान्** मातृकामन्त्रान्। प्रणवादिमन्त्रानित्यप्याहुः ॥ १०८, १०९ ॥

**गु.दी.–** पञ्चविंशत्यादिकलशपक्षेषु आवाह्यमूर्तिविशेषानाह— **चतुर्विंशतीत्यादिना ।।** तत्रादौ पञ्चविंशतिकलशपक्षे आवाह्यरूपविशेषानाह— **चतुर्विंशतिमूर्तीनामिति ।।** आवाहनं कार्यमिति शेषः ।

अयं भावः । पञ्चगव्यकलशं विहायेतरेषु ब्राह्मकलशे केशवं तत्पूर्वकलशे नारायणमित्यादिक्रमेण चतुर्विंशतिमूर्तीरावाहयेत् । पञ्चगव्यकलशे केशवमेवावाहयेत् । 'आवाहनं च स्नपनं पञ्चगव्येन मध्यवत्' (तं.सा.३-१२०) इति वक्ष्यमाणत्वात् । पञ्चगव्यकलशे अन्ते आवाहनं कार्यमिति ।

पञ्चाशत्कलशपक्षे रूपविशेषानाह— **वर्णमूर्तीरिति ।। पञ्चाशद्वर्णमूर्तीः** अजाद्याः आवाहयेदित्यनुकृष्यते । शतकलशपक्षे रूपविशेषानाह— **तथाऽपराः आवाहयेच्छतत्वे त्विति ।।** कलशानामिति शेषः । **अपराः** आत्माद्याः वासुदेवाद्या विश्वाद्या मत्स्याद्याश्च । **तथा**शब्देन चतुर्विंशतिमूर्तीनां वर्णमूर्तीनां च परामर्शः ।

अयं भावः । शतकलशपक्षे केशवादिचतुर्विंशतिमूर्तीः पञ्चगव्ये पुनः केशवमिति पञ्चविंशतिमूर्तीः अजादिपञ्चाशद्वर्णमूर्तीरात्माद्याश्चतस्रो वासुदेवाद्याश्चतस्रो विश्वाद्याश्चतस्रो मत्स्याद्यास्त्रयोदशेति पञ्चविंशतिमूर्तीश्चावाहयेदिति ।

पञ्चाशदधकशतद्वयपक्षे आवाहनप्रकारमाह— **क्रमव्युत्क्रमतस्तथा वर्णमूर्तीः पुनश्चैवेति ।।** अयमर्थः । केशवादिशिंशुमारान्तं शतकं केशवादिक्रमेणैव ब्राह्मकलशादिक्रमेणावाहयेत् । अनन्तरभाविपञ्चाशत्कलशेषु पुनश्च वर्णमूर्तीरजादिक्रमेणावाहयेदिति । पञ्चाशत्कलशपक्षे सहस्रकलशपक्षेऽपि आवाहनप्रकारमाह— **द्विचतुर्वारमेव च सहस्रकलशादित्व इति ।। आदि**शब्देन पञ्चशतकलशपक्षो ग्राह्यः । तत्र पञ्चशतकलशपक्षे द्विवारमावाहनं कार्यम् । सहस्रकलशपक्षे चतुर्वारमिति ग्राह्यम् ।

अयं भावः । पञ्चशतकलशपक्षे पञ्चाशदिधकशतद्वयपक्षोक्तरीत्या एकवारमावहनं कार्यम्, पुनरप्येकवारमिति द्विवारमावाहनम् । सहस्रकलशपक्षे पञ्चाशदिधकशतद्वयपक्षोक्तरीत्या चतुर्वारमावाहनं कार्यमिति ।। **जपेदिति ।।** कलशान् स्पृष्ट्वेति शेषः । **मन्त्रान्** प्रणवादीन् ।। १०८,१०९ ।।

**मङ्गाली–** इदानीं कलशेषु आवाह्यमूर्तीर्वदन् आदौ पञ्चविंशतिकलशपक्षे आवाह्यमूर्तीराह– **चतुर्विंशतीति ।।** मूर्तीनामिति द्वितीयार्थे षष्ठी । केशवादिचतुर्विंशतिमूर्तीरित्यर्थः । पञ्चविंशतिपक्षे पञ्चविंशतिकलशेष्विति शेषः । 'चतुर्विंशत्तु' इति पाठे मूर्तीनां केशवादीनां **चतुर्विंशत्** चतुर्विंशतिमित्यर्थः । आवाहयेत् । अत्र ब्राह्मकलशदेवताया एव पञ्चगव्यकलशेऽप्यावाहनं ज्ञेयम् । **'आवाहनं च स्नपनं पञ्चगव्येन मध्यवत्'**(तं.सा.३-१२०) इत्यत्र वक्ष्यमाणत्वात् । तेनैकस्या एव द्विवारमावाहनात् मूर्तीनां पञ्चविंशतित्वं युज्यत इत्याहुः । प्रतिष्ठेयमूर्त्या वा मूलमूर्त्या वा सह पञ्चविंशतित्वं ज्ञेयमित्यप्याहुः ।

अयं भावः । ब्राह्मकलशपञ्चगव्यकलशयोरेकदेवताकत्वपक्षे ब्राह्मकलशमारभ्य तत्पूर्वादिकलशचतुष्टये तत्परितः पूर्वं पञ्चकमारभ्य प्रतिपञ्चकं पूर्वमारभ्यैव उत्तरपर्यन्तत्वेन उत्तरपञ्चकपर्यन्तं क्रमेण केशवादिचतुर्विंशतिमूर्तीरावाह्य अन्ते पञ्चगव्येऽपि केशवमेवावाहयेत् । मूलमूर्त्या सह पञ्चविंशतित्वपक्षे मूलमूर्तिमावाहयेदिति वा । ब्राह्मकलशे मूलमूर्तिमावाह्य तदितरकलशेषु चतुर्विंशतिषु पूर्वादिक्रमेण केशवादिमूर्तीरावाहयेदिति वेति ।

पञ्चाशत्कलशपक्षे आवाह्यमूर्तीराह– **वर्णमूर्तीरिति ।।** अकारादिपञ्चाशद्वर्ण-मूर्तीरजाद्याः । पञ्चाशत्कलशेष्विति शेषः । आवाहयेदिति सम्बन्धः । शतकलशपक्षे आवाह्यमूर्तीराह– **तथाऽपरा इति ।।** पूर्वोक्तमनुवर्तते । तथा च शतत्वे तु कलशानामिति शेषः । शतकलशपक्षे क्षकारवाच्यनृसिंहमूर्त्या सह एकपञ्चाशद्वर्णमूर्तीरजाद्याः, तथा केशवादिचतुर्विंशतिमूर्तीः, तथा **अपराः** पूर्वमूर्तिभ्योऽन्याः आत्माद्याश्चतस्रः वासुदेवाद्याश्चतस्रः विश्वाद्याश्चतस्रः एवं द्वादश मत्स्याद्याः त्रयोदश इत्येवं शतमूर्तीरावाहयेदित्यर्थः । सार्धशतद्वयपक्षेऽपि अजाद्याः शिंशुमारान्ताः शतमूर्तीरेवावाहयेत् । अत्रावाहनप्रकारमाह– **क्रमेति ।।** अयमर्थः । **तास्तु** ता एव अजादिशिंशुमारान्ताः शतमूर्तीः **क्रमेण** अजादिक्रमेण ब्राह्मादिशतकलशेषु आवाहयेत् । अनन्तरशतके **व्युत्क्रमेण** पूर्वक्रमवैपरीत्येन

शिंशुमाराद्यजान्ताः शतमूर्तीरावाहयेत् । पुनरन्तरं पञ्चाशत्कलशेषु **वर्णमूर्तीरिव** पञ्चाशद्वर्णदेवताः अजादिक्रमेण आवाहयेदिति । पञ्चशतकलशपक्षे सहस्रकलशपक्षेऽपि अजादिशतमूर्तीरेवावाहयेत् । तत्रावाहनप्रकारमाह– **द्विचतुर्वारमेव वेति ॥** सहस्रकलशादित्वे **आदि**पदेन पञ्चशतकलशत्वे इति ग्राह्यम् । पञ्चशतकलशपक्षे सार्धशतद्वयोक्तरीत्यैव द्विवारं सहस्रकलशपक्षे चतुर्वारमावाहयेदिति विवेकः । अयं भावः । पञ्चशतकलशपक्षे प्रथमशतके क्रमेण, द्वितीयशतके व्युत्क्रमेण, अनन्तरं पञ्चाशत्कलशेषु क्रमेणावाहनम् । एवमेव तदनन्तरकलशेषु पुनरप्येकवारमिति । द्विवारमिति । एवं सहस्रकलशपक्षे चतुर्वारमावाहनं ज्ञेयमिति । एवं कलशेषु देवता आवाह्य तान्कलशान् हस्तेन स्पृष्ट्वा जपेदित्याह– **जपेदिति ॥ मन्त्रान्** मातृकामन्त्रान् । प्रणवादिमन्त्रानित्यप्याहुः ॥ १०६,१०७ ॥

स्थापितकलशस्थोदकादिना प्रतिमाया अभिषेकाभिधानम्

**त.सा.** **ततस्तु पञ्चघोषैश्च वेदघोषैस्तथाऽऽदरात् ॥ ११० ॥**

**आनीय प्रतिमां स्नानं कारयेत् प्रणवेन तु ।**
**मन्त्रैः पुरुषसूक्तान्तैर्विश्वतश्चक्षुषा तथा ॥ १११ ॥**

**पुनश्चाष्टाक्षरेणैव प्रणवेनैव भक्तितः ।**
**स्नापयित्वा गन्धजलैर्गन्धपुष्पादिभिः पुनः ॥ ११२ ॥**

**अलङ्कृत्य स्थापयेत्तु प्रतिमां प्रणवेन तु ।**

**त.क.–** तदनन्तरकृत्यमाह— **ततस्त्विति ॥** प्रतिष्ठामण्टपतः स्नानमण्डपं प्रति प्रतिमामानीय चक्राब्जमण्डलाद्बहिः स्थापितैः 'क्वाथेन क्षीरवृक्षाणां तथा पञ्चामृतैरपि' (३-९९) इत्यादिना निरूपितैः पञ्चभिः कलशैः स्नानं कारयेदिति शेषः । तत्र मन्त्रानाह– **प्रणवेनेति ॥ तु**शब्द आद्यर्थः । एकवचनं बहुवचनार्थे । 'वाचकः प्रणवो मम' (तं.सा.१-३) इत्यादिना 'तद्भेदः पौरुषं सूक्तं' (तं.सा.१-१५)

इत्यन्तेनोद्धृतैः प्रणवमातृकाष्टाक्षरव्याहृतिद्वादशार्णगायत्रीपुरुषसूक्तेत्येतैः प्रणवादिभिः पुरुषसूक्तान्तैर्मन्त्रैरित्यर्थः । 'विश्वतश्चक्षुरुत' इति ऋचा च स्नानं कारयेदिति पूर्वेणान्वयः । गन्धपुष्पादिभिरलंकुर्यादिति वक्ष्यमाणमेतच्छेषतयाऽपि योज्यम् ।।

एवं पञ्चभिः कलशैरभिषेकमभिधाय, 'कुशोदकं च कार्पूरम्' (तं.सा.३-१०६) इत्यादिना निरूपितैः चक्रब्जादिमण्डलाद्बहिस्थैरपरैस्त्रयोदशकलशैः पुनरभिषेकं विधत्ते– **पुनश्चेति** ।। गन्धजलैरित्येतच्छत्रिन्यायेन कुशोदकादीनप्युपलक्षयति । स्नानं कारयेदित्यत्राप्यनुवर्तिष्यते । 'अष्टाक्षरेण प्रणवेन' इति मन्त्रोक्तिः । चशब्दात् पुरुषसूक्तान्ता विश्वतश्चक्षुरिति मन्त्रश्च गृह्यते । अवधारणं त्वष्टाक्षरस्य प्रधानत्वाभिप्रायेण । ततो गन्धपुष्पदिभिरलंकुर्यादिति शेषः ।। ११२ ।।

अथ चक्राब्जमण्डले 'ब्राह्मस्यैव चतुर्दिक्षु' (३-१००) इत्यादिना निरूपितैः कलशैरभिषेकं वक्तुं गर्भगृहे पीठिकायां प्रतिमास्थापनमुक्तत्वाऽनुवादेन विधत्ते– **अलङ्कृत्येति** ।। भक्तितोऽलङ्कृत्येति संबन्धः । तुशब्देन पञ्चरात्राद्युक्तमष्टबन्धनादिप्रकारं सूचयति ।। तथाहि पञ्चरात्रे—

.................प्रविशेद्गर्भमन्दिरम् ।
तन्मध्ये चतुरस्रां वा वृत्तां वाऽथ शिलां क्षिपेत् ।।

हस्तमात्रायतां शुद्धां तावद्विस्तारसंयुताम् ।
चतुरावरणां निम्नां गायत्र्या विष्णुपूर्वया ।।

तथैव वास्तुहोमाग्नौ चरुसर्पिस्समिच्छतैः ।
जुहुयाद्रत्नविन्याससिद्ध्यर्थं दैशिकोत्तमः ।।

प्रथमावरणे बीजान्यष्टौ गर्तेषु निक्षिपेत् ।
यवाश्च व्रीहयश्चैव निष्पावाश्च प्रियङ्गवः ।।

तिलाश्च माषाश्च तथा नीवारा शालयस्तथा ।
वज्रादीनि च रत्नानि द्वितीयावरणे तथा ।।

वज्रश्च मौक्तिकश्चैव वैडूर्यं जलजं तथा ।
स्फटिकं पुष्परागं च चन्द्रकान्तं तथा परम् ।।

इन्द्रनीलं च पूर्वादिदिक्ष्वष्टसु निवेशयेत् ।
धातूंस्तृतीयावरणे तथैव विनिवेशयेत् ।।

लोहांश्चतुर्थावरणे तथैव विनिवेशयेत् ।
निम्नेषु निक्षिपेत् स्वर्णं रूप्यं ताम्रं तथैव च ।।

अयश्च त्रपुकं चैव कूर्मं कनकनिर्मितम् ।
शङ्खं चक्रं च सौवर्णं लोहन्यासोऽयमीरितः ।।

पुण्याहं वाचयेत् पश्चात् वैष्णवैर्मन्त्रवित्तमैः ।
स्त्रीशिलापद्ममध्ये तु प्रणवन्यसनं भवेत् ।।

कर्णिकायां स्वरन्यासः व्यजनं न्यसनं दले ।
दलेषु शक्तयश्चाष्टौ नवमी कर्णिका भुवि ।।

विमलोत्कर्षिणी ज्ञानक्रियायोगेति शक्तयः ।
प्रह्वी सत्या तथेशानानुग्रहा नवमी स्मृता ।।

पिण्डिकां पूजयेत् पश्चात् गन्धपुष्पादिभिः क्रमात् ।
अक्षतैश्चैव वासोभिर्लक्ष्मीरूपां च पिण्डिकाम् ।।

प्रच्छाद्य द्वारिकास्तस्य न्यासं कृत्वा वहिर्गुरुः ।
अर्घ्यपाद्यादिभिर्देवमर्चयेद्वादिदेशिकः ।।

अन्तः प्रवेशयेद्देवं पिण्डिकां च प्रदक्षिणम् ।
गत्वाऽहार्षमित्येतत् सूक्तं च सहमूर्तिपाः ।।

ध्रुवा द्यौरिति मन्त्रेण वदेयुर्गुर्वनुज्ञया ।
आचार्यः पुरतः स्थित्वा सर्वेण स्थापयेद्धरिम् ।।

पीठमध्यगते गर्ते बिम्बशंकुं निवेशयेत् ।
ऊर्ध्वलम्बितसूत्रेण पश्येच्च समतां स्थितेः ।।

पिण्डिकानालरन्ध्रं चाष्टबन्धेन पूरयेत् ।
लाक्षासज्जरसं चैव कुरविन्दं च गुग्गुलम् ।
तैलेन पाचितं सार्धं अष्टबन्धनमिष्यते ।। इत्यादि ।। ११०-११२ ।।

**अ.सं.–** इदानीं एतैः कलशैः प्रतिमाया अभिषेकं वक्तुं तत्पूर्वभावीतिकर्तव्यतामाह– **ततस्त्विति ।। ततस्तु** कलशपूजानन्तरं **सवेदघोषैः** वेदघोषेण सहितैः **पञ्चघोषैः** पञ्चवाद्यघोषैः । पञ्चवाद्यानि तूक्तानि । प्रतिमां **आदरात्** भक्त्या आनीय । स्नानमण्टपमिति शेषः । **प्रणवेन** प्रणवमन्त्रेण **पुरुषसूक्तान्तैः** 'तत्र त्वाहार्षसूक्तं च' (३-११६) इत्यादिना वक्ष्यमाणैर्मन्त्रैरपीत्यर्थः । तथा 'विश्वतश्चक्षुरुत विश्वतोमुखः' इति मन्त्रेण प्रतिमायाः स्नानं पञ्चगव्योदकेन स्नापनं कारयेत् । **पुनश्च** पुनरपि **अष्टाक्षरेण** नारायणाष्टाक्षरेण पुनः प्रणवेन मन्त्रेण **गन्धजलैः** 'कुशोदकं च कार्पूरं' (३-१०६) इत्यादिनोक्तविशेषकलशस्थितगन्धजलैरित्यर्थः । भक्तितः स्नापयित्वा गन्धपुष्पादिभिरलङ्कृत्य प्रतिमां प्रणवेन स्थापयेत् । गर्भगृहस्थपिण्डिकायामिति शेषः। उक्तं च हयशीर्षे–

पञ्चगव्येन तां स्नाप्य क्षाल्य गन्धोदकेन तु ।
पूजयेत्सङ्कलीकृत्य साङ्गं सावरणं हरिम् ।। इति ।। ११०-११२ ।।

**गु.दी.–** इदानीं कलशाभिषेकमाह— **तत इत्यादिना ।।** पञ्चवाद्यादिघोषैः प्रतिमामानीय प्रतिष्ठामण्टपमिति शेषः । **प्रणवेन** मन्त्रेण । **पुरुषसूक्तान्तैस्तु** 'तत्राऽत्वाहार्षसूक्तं च घर्मसूक्तं च वैष्णवम्' (तं.सा.३.११६) इति पुरुषसूक्तान्तैः सूक्तैश्च स्नानं कारयेत् । 'कुशोदकं च कार्पूरमित्याद्युक्त (तं.सा.३.१०६) त्रयोदशकलशानां जलैरिति शेषः । **विश्वतश्चक्षुषा तथा** 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' (ऋ.सं.१०-८१-३) इति सूक्तेन च । **पुनश्च** गन्धजलैः स्नापयित्वेति सम्बन्धः । गन्धपुष्पतुलसीभिरलङ्कृत्य पुनः **प्रणवेन** तदुच्चारणपूर्वकं स्थापयेत् । **प्रतिमां** गर्भगृहस्थपीठ इति शेषः । इदं देवालयविषयमिति द्रष्टव्यम् ।। ११०-११२ ।।

**मङ्गाली–** इदानीमेतैः कलशैः प्रतिमाया अभिषेकं वक्तुं तत्पूर्वभावीतिकर्त्तव्यतामाह– **ततस्त्विति** ।। **ततस्तु** कलशपूजानन्तरं **सवेदघोषैः** वेदघोषेण सहितैः **पञ्चघोषैः** पञ्चवाद्यघोषैः । पञ्चवाद्यानि तूक्तानि । **प्रतिमामादरात्** भक्त्या आनीय । स्नानमण्टपमिति शेषः । **प्रणवेन** प्रणवमन्त्रेण पुरुषसूक्तान्तैः 'तत्रात्वा हार्षसूक्तं च' (३-११६) इत्यादिना वक्ष्यमाणैर्मन्त्रैरपीत्यर्थः । तथा 'विश्वतश्चक्षुरुत विश्वतोमुखः' इति मन्त्रेण प्रतिमायाः **स्नानं** पञ्चगव्योदकेन स्नापनं कारयेत् । **पुनश्च** पुनरपि अष्टाक्षरेण पुनः प्रणवेन मन्त्रेण **गन्धजलैः** 'कुशोदकं च कार्पूरं' (३-१०६) इत्यादिनोक्तविशेषकलशस्थितगन्धजलैरित्यर्थः । भक्तितः स्नापयित्वा गन्धपुष्पादिभिरलङ्कृत्य प्रतिमां प्रणवेन स्थापयेत् । गर्भगृहस्थपिण्डिकायामिति शेषः ।। ११०-११२ ।।

जप्यमन्त्रकथनपुरस्सरं प्रतिमायां वायुलक्ष्म्यन्तर्गतया विष्णोः
आवाहनाभिधानम् कलशैरभिषेककथनं च

त.सा. **जपेदष्टाक्षरं मन्त्रं तत्तन्मूर्तिमनुं तथा ।। ११३ ।।**

**अष्टोत्तरशतं मन्त्री ध्यायेत्तेजोमयीं पुनः ।**
**प्रतिमां प्रतिमान्तस्थां तन्मध्ये परमं वपुः ।। ११४ ।।**

**चिदानन्दरसं सर्वगुणसम्पूर्णमुत्तमम्(पूर्णमनुत्तमम्) ।**
**पञ्चविंशतितत्त्वानां देवतास्तदनन्तरम् ।। ११५ ।।**

**स्थापयेत्प्रतिमामध्ये परितः केशवस्य तु ।**
**तत्रात्वाहार्षसूक्तं च घर्मसूक्तं च वैष्णवम् ।। ११६ ।।**

**सूक्तं च विश्वकर्मीयं पौरुषं सूक्तमेव च ।**
**जप्त्वा चैव निजं मन्त्रं पुनरष्टाक्षरं(पुनरष्टोत्तरं) सुधीः ।। ११७ ।।**

**प्रणवं च जपेद्विष्णुं ध्यायेदु(ध्यायन्नु)त्तमरूपिणम् ।**
**ततस्तु कलशैर्बाह्यक्रमेणैव जनार्दनम् ।। ११८ ।।**

**स्नापयेदुक्तमन्त्रैस्तु मध्यमं प्रणवेन तु ।**
**अष्टार्णेन निजेनापि तथा पुरुषसूक्ततः ।। ११९ ।।**

**त.क.–** पिण्डिकायां प्रतिमास्थापनानन्तरं कर्तव्यमाह— **जपेदित्यादिना तत इत्यतः प्राक्तनेन ।।** अत्र चिदानन्दरसं सर्वगुणसम्पूर्णमुत्तमं श्रीजनार्दनं प्रतिमामध्ये **स्थापयेदा**वाहयेदित्यन्वयः । **तु**शब्देन कुम्भस्थं परमात्मानमिति शेषं सूचयति । प्रतिमामध्ये इत्युक्तस्य साक्षादेवेति प्रतीतिं वारयन् इतिकर्तव्यतां चाऽऽह— **ध्यायेदिति ।।** शिलादिप्रतिमान्तस्थां तेजोमयीं वायोर्लक्ष्म्या वा प्रतिमां ध्यायेत् । तन्मध्ये चिदानन्दरसं सर्वगुणसम्पूर्णमुत्तमं परमं वपुर्ध्यायेदित्यादि योज्यम् । परया मया सहितं परममित्यर्थः । तत्र **तु**शब्देन,

आनन्दं सर्वगं नित्यं व्योमातीतं परात्परम् ।
मरीचिचक्रमध्यस्थं वासुदेवमजं विभुम् ।।
ब्रह्मरन्ध्रेण बिम्बान्तः प्रविष्टं प्रविचिन्तयेत् ।

इत्युक्तं ध्याने विशेषं सूचयति । प्रतिमामध्ये भगवन्तमावाह्य केशवस्य परितः पञ्चविंशतितत्त्वानां देवतास्तदनन्तरमावाहयेत् । ततस्तत्प्रतिमाहृदयं स्पृष्ट्वा अष्टोत्तरशतमष्टाक्षरं मन्त्रं जपेत् । तत्तन्मूर्तिमनुं च रमादिमन्त्रं चाष्टोत्तरशतं जपेत् । **मन्त्रमित्यनेन** देवसान्निध्यापादकं 'विष्णोर्नुक'मित्यादिमन्त्रजातं गृह्यते । यथोक्तं 'याचेत देवसान्निध्यम्' इति । **तत्तन्मूर्तिमनुं** पञ्चविंशतितत्त्वदेवतामनुं जपेदिति केचित् । **मन्त्री** मन्त्रसिद्धिमान् ।

प्रकृतमभिषेकमितिकर्तव्यतापूर्वं विधत्ते— **तत्रेत्यादिना ।।** सूक्तं जपेदेवेति सम्बन्धः । चशब्दादष्टोत्तरशतमित्यनुकृष्यते । तदनुवादेन मन्त्रान्तरजपं विधत्ते— **जप्त्वेति ।।** आ त्वाहार्षसूक्तादिपञ्चसूक्तानि जप्त्वा **निजं मन्त्रं** कृष्णादिमन्त्रं अष्टाक्षरं प्रणवं च जपेदिति संबन्धः । **एव**शब्देन जपस्य आवश्यकतामाचष्टे । **च**शब्देन ध्यायेदित्यनुकर्षः । उत्तमरूपिणं श्रीहरिं ध्यायेदिति संबन्धः । ततः उत्तमरूपिणं ध्यायन् सर्वतो बाह्यक्रमेणैव न त्वन्तर्लिखितपद्मस्थक्रमेणेत्यर्थः ।। **कलशैरिति ।।** सहस्रैः, पञ्चशतैः, सार्ध-

द्विशतैः, शतैः, पञ्चाशद्भिः, पञ्चविंशतिभिश्च जनार्दनं स्नापयेत् इति संबन्धः। तत्र मन्त्रमाह— **उक्तमन्त्रैरिति** ।। आ त्वाहार्षसूक्तादिपुरुषसूक्तान्तैः पञ्चभिः निजमन्त्राष्टाक्षरप्रणवैश्चेत्यर्थः। ननु सहस्रकलशैराभिषेके कथमष्टौ मन्त्रा अभिधीयन्ते? इतरेषाममन्त्रत्वं वा स्यादित्याशङ्क्य द्विचतुर्वारमेवेत्युक्तद्विचतुः पञ्चाशदावृत्तिलक्षणोपायं **तु**शब्देनाह। ननु पक्षषट्केऽपि मध्यमकलशे यावत्या आवृत्त्या यो मन्त्रः प्राप्यते तेन मन्त्रेण मध्यमकलशाभिषेकः कर्तव्य इत्यादिनियमप्राप्तौ पक्षभेदेन नियममाह— **मध्यममिति** ।। द्वितीया तृतीयार्थे। **तु** वार्थे। प्रणवेन वा अष्टाक्षरेण वा तत्तन्मूर्तिमन्त्रेण वा पुरुषसूक्तेन वा मध्यमकलशेन स्नापयेदिति सम्बन्धः। प्रणवादिना मध्यमकलशमभिमन्त्र्य तेन स्नापयेदिति वाऽर्थः ।। ११३-११९ ।।

**अ.सं.–** प्रतिमां स्पृष्ट्वा मन्त्रजपमाह– **जपेदिति ।। तत्तन्मूर्तिमनुं** तत्तद्देवतामन्त्रमित्यर्थः। **मन्त्री** मन्त्रार्थज्ञानवान् मन्त्रसिद्धिमांश्च पुरुष इत्यर्थः। प्रतिमायां हीरध्यानप्रकारमाह– **ध्यायेदिति ।। पुनः** जपानन्तरम्। **प्रतिमांतस्थां** परिदृश्यमानप्रतिमामध्यस्थां, तेजोमयीं प्रतिमां ध्यायेदित्यन्वयः। तेजोमयी प्रतिमागततेजोभूतभागरूपेत्याहुः। मुख्यवायुप्रतिमेत्यप्याहुः। तदुक्तम्–

प्रतिमां प्रतिमान्तःस्थां वायोस्तेजोमयीं सुधीः।
विष्णोर्वपुश्च तन्मध्ये ध्यायेदानन्दचिद्घनम्।

विना प्रतीकं प्राणस्य स्मरन्निरयभाक् भवेत्।
वायुं विना न गृह्णमि यत् किञ्चित् वस्तु मे प्रियम्।
तस्माद्वायुमुखैर्देवैर्वायुहस्तेन दापयेत् ।। इति।

'प्रतिमाऽधिकसादृश्यान्मुख्या विष्णोः सदा **रमा**'(भृ.भा.६-१) इत्युक्तेः तेजोमयीप्रतिमा लक्ष्मीरूपप्रतिमा चेति सम्प्रदायविदः। प्रतिमामध्ये ध्येयरूपमाह– **तन्मध्य इति** ।। परिदृश्यमानप्रतिमान्तःस्थतेजोमयप्रतिमामध्य इत्यर्थः। चिदानन्दात्मकं **परमं** उत्तमम्। अत्यन्तं उत्तमं निरतिशयोत्तममित्यर्थः। **वपुः** विष्णो रूपं ध्यायेदित्यन्वयः ।।

इदानीं प्रतिमायां तत्त्वदेवतावाहनप्रकारमाह– **पञ्चविंशतीति** ।। **तदनन्तरं** परमात्मध्यानानन्तरं प्रतिमामध्ये केशवस्य परितः पञ्चविंशतितत्त्वानां देवताः **स्थापयेत्** आवाहयेत् । उपलक्षणमेतत् । पुनरेकादशतत्त्वानां चेति ग्राह्यम् । एवं षड्विंशतितत्त्वानां देवताः **स्थापयेत्** आवाहयेत् । तत्त्वदेवताश्च 'पुरुषोऽव्यक्तं च'(३-१४६) इदिना वक्ष्यति ।

.....................तस्मिन्काले ।
सान्निध्यकरणार्थाय हृदयं स्पृश्य दैशिकः ।
पौरुषन्तु जपेत्सूक्तं ध्यायन् देवं सुरेश्वरम् ।।

इत्युक्तेः प्रतिमासंस्पर्शकाले जप्यसूक्तमन्त्रानाह– **तत्रेति** । **तत्र** तस्यां प्रतिमायाम् । **आत्वाहार्षसूक्तं** 'आत्वाहार्षमन्तरेधि' इति, **घर्मसूक्तं** 'घर्मा समन्तात् त्रिवृतं' इति, **वैष्णवं सूक्तं** 'विष्णोर्नुकं वीर्याणि' इति, **विश्वकर्मीयं** 'विश्वतश्चक्षुरुत' इति । **पौरुषं सूक्तमिति** ।। सहस्रशीर्षेति पुरुषसूक्तम् । एवमात्वाहार्षादि पुरुषसूक्तान्तं जप्त्वा **निजमन्त्रं** मूर्तिमन्त्रं **अष्टाक्षरं** नारायणाष्टाक्षरं प्रणवमन्त्रं उत्तमरूपिणं विष्णुं ध्यायन् जपेदित्यर्थः ।।

इदानीं कलशाभिषेकमाह– **ततस्त्विति** ।। पीठे देवनिवेशनानन्तरं जपानन्तरं वा । कलशैः **बाह्यक्रमेण** आदौ बाह्यपङ्क्तिस्थकलशैः **ततः** तदन्तः स्थकलशैः इत्येवं क्रमेण **उक्तैर्मन्त्रैः** आत्वाहार्षादिप्रणवान्तैर्मन्त्रैः **जनार्दनं** विष्णुप्रतिमां **स्नापयेत्** अभिषेचयेत् । तदुक्तं वासिष्ठे–

पीठे निवेश्य देवेशमभिषेकं समाचरेत् ।
पूजितैः कलशैः पुण्यैः पावमानैश्च वैष्णवैः ।। इति ।

मध्यमकलशे विशेषमाह– **मध्यममिति** । **मध्यमं** मध्यमेन ब्राह्मकलशेन प्रणवेन मन्त्रेण **अष्टार्णेन** अष्टाक्षरेण च **निजेनापि** मूर्तिमन्त्रेणापि **तथा** पुरुषसूक्ततश्च एतैरेव मन्त्रैः, न तु आत्वाहार्षादिभिरिति भावः । स्नापयेदिति सम्बन्धः । **मध्यमपदेन** पञ्चकपञ्चकमध्यस्थाः सर्वे कलशाः ग्राह्या इत्यप्याहुः ।। ११३-११९ ।।

**गु.दी.– तत्तन्मूर्तिमनुं** प्रतिष्ठाप्यवराहादिमूर्तिमन्त्रम् । **मन्त्री** मन्त्रसिद्धिमान् प्रतिमायां विष्णुमूर्तिध्यानेऽवश्यमनुसन्धेयमीषद्रहस्यमाह— **ध्यायेत्तेजोमयी-मिति ।। पुनः** मन्त्रजपानन्तरं **प्रतिमान्तस्स्थां तेजोमयीं प्रतिमां** प्रतिमागततेजोभागरूपां **वायोः प्रतिमां** ध्यायेदित्यर्थः । **तन्मध्ये** तेजोमयप्रतिमामध्ये । चिदानन्दादिपूर्णं परमं वपुर्विष्णोरिरिति शेषः । तदुक्तं–

प्रतिमां प्रतिमान्तस्स्थां वायोस्तेजोमयीं सुधीः ।
विष्णोर्वपुश्च तन्मध्ये ध्यायेदानन्दचिद्घनम् ।।

विना प्रतीकं प्राणस्य स्वयं निरयभाग्भवेत् ।
वायुं विना न गृह्णामि यत्किञ्चिद्वस्तु मे प्रियम् ।।
तस्माद्वायुमुखैर्देवैः वायुहस्तेन दापयेत् ।। इति ।

तस्मादादित्यसंस्थे वा शरीरस्थेऽपि वाऽनिले ।
बलज्ञानात्मके दिव्याकृतिमत्युज्वलात्मनि ।
सर्वदेवोत्तमं विष्णुमुपासीत ततोऽधिकम् ।। (छा.भा.१-२-७)

इति छान्दोग्यभाष्ये च । अत्रादित्यशरीरपदाभ्यां प्रतिमासामान्योपलक्षणम् । तेजोमयी प्रतिमा लक्ष्मीः प्रतिमेति केचित् सम्प्रदायविदः ।।

प्रतिमायां तत्त्वदेवताध्यानमाह— **पञ्चविंशतीति ।। तदनन्तरं** विष्णुध्यानानन्तरम् । **तत्र** तस्मिन् समये । **आ त्वा हार्षसूक्तं** 'आ त्वा हारिषमन्तरे अधि ध्रुवस्तिष्ठा विचाचलिः' इत्यादि (ऋ.सं.१०-१७३-१) । **घर्मसूक्तं** 'घर्मा समन्ता' इत्यादि (ऋ.सं.१०-११४-१) । **वैष्णवं** 'अतो देवा' इत्यादि (ऋ.सं.१-२२-१६) । **विश्वकर्मीयं** 'विश्वकर्मा विमना' इत्यादि (ऋ.सं.१०-८२-२) । 'य इमा विश्वा भुवनानि' इत्यादि वा (ऋ.सं.१०-८१-१) । **पौरुषं सूक्तं** 'सहस्रशीर्षा' इत्यादि (ऋ.सं.१०-९०-१) । **निजं मन्त्रं** तत्तन्मूर्तिमन्त्रं जप्त्वा । **कलशैः** सहस्रकलशैः **।। बाह्यक्रमेणेति ।।** आदौ बाह्यपङ्क्तिस्थकलशपञ्चकैस्त-तस्तदन्तःस्थकलशैस्ततस्तदन्तःस्थैरिति क्रमेणेत्यर्थः । **उक्तमन्त्रैः**

आत्वाहार्षादिमन्त्रैः । मध्यमे विशेषमाह— **मध्यमं प्रणवेन तु अष्टार्णेन निजेनापि तथा पुरुषसूक्तत इति** ।। ११३-११९ ।।

**मङ्गाली—** प्रतिमां स्पृष्ट्वा मन्त्रजपमाह— **जपेदिति** ।। **तत्तन्मूर्तीमनुं** तत्तदेवतामन्त्रमित्यर्थः । **मन्त्री** मन्त्रार्थज्ञानवान् मन्त्रसिद्धिमांश्च पुरुष इत्यर्थः । प्रतिमायां हरिध्यानप्रकारमाह— **ध्यायेदिति** ।। **पुनः** जपानन्तरं । **प्रतिमान्तस्थां** परिदृश्यमानप्रतिमामध्यस्थां तेजोमयीं प्रतिमां ध्यायेदित्यन्वयः । तेजोमयी-प्रतिमा च प्रतिमागततेजोभूतभागरूपेत्याहुः । मुख्यवायुप्रतिमेत्यप्याहुः । तदुक्तं—

प्रतिमां प्रतिमान्तस्थां वायोस्तेजोमयीं सुधीः ।
विष्णोर्वपुश्च तन्मध्ये ध्यायेदानन्दचिद्घनम् ।।

विना प्रतीकं प्राणस्य स्मरन्निरयभाग्भवेत् ।
वायुं विना न गृह्णामि यत्किञ्चिद्वस्तुमे प्रियम् ।
तस्माद्वायुमुखैर्देवैर्वायुहस्तेन दापयेत् ।। इति ।

'प्रतिमाऽधिकसादृश्या मुख्या विष्णोः सदा रमा'(भृ.भा.६-१) इत्युक्तेः तेजोमयी प्रतिमा लक्ष्मीरूपप्रतिमा चेति संप्रदायविदः । प्रतिमामध्ये ध्येयरूपमाह— **तन्मध्य इति** ।। परिदृश्यमानप्रतिमां तत्स्थतेजोमयप्रतिमामध्य इत्यर्थः' । चिदानन्दात्मकं **परममुत्तममत्यन्तमुत्तमं** निरतिशयोत्तममित्यर्थः । **वपुः** विष्णोः रूपं ध्यायेदित्यन्वयः ।।

इदानीं प्रतिमायां तत्त्वदेवतावाहनप्रकारमाह— **पञ्चविंशतीति** ।। **तदनन्तरं** परमात्मध्यानानन्तरं प्रतिमामध्ये केशवस्य परितः पञ्चविंशतितत्त्वानां देवताः **स्थापयेत्** आवाहयेत् । उपलक्षणमेतत् । पुनरेकादशतत्त्वानां चेति ग्राह्यम् । एवं षट्त्रिंशत्तत्वानां देवताः स्थापयेत् । ता देवताश्च 'पुरुषो व्यक्तं च'(३-१४६) इत्यादिना वक्ष्यति ।।

..........................तस्मिन्काले ।
सान्निध्यकरणार्थाय हृदयं स्पृश्य देशिकः ।
पौरुषं तु जपेत्सूक्तं ध्यायन् देवं सुरेश्वरम् ।।

इत्युक्तेः प्रतिमासंस्पर्शकाले जप्यसूक्तमन्त्रानाह– **तत्रेति** ।। तत्र तस्यां प्रतिमायां **आत्वाहार्षसूक्तं** 'आत्वाहार्षमन्तरेधि' इति, **धर्मसूक्तम्** 'घर्मा समन्तात्' इति, **वैष्णवसूक्तं** 'विष्णोर्नुकं' इति, **विश्वकर्मीयम्** 'विश्वतश्चक्षुः' इति **पौरुषसूक्तं** 'सहस्रशीर्षा' इति पुरुषसूक्तं जप्त्वा **निजं मन्त्रं** मूर्तिमन्त्रं **अष्टाक्षरं** नारायणाष्टाक्षरं प्रणवं च मन्त्रमुत्तमरूपिणं विष्णुं ध्यायन्जपेदित्यर्थः ।।

इदानीं कलशाभिषेकमाह– **ततस्त्विति** ।। पीठे देवनिवेशानन्तरं जपानन्तरं वा कलशैः **बाह्यक्रमेण** आदौ बाह्यपङ्क्तिस्थकलशैः, ततः तदन्तस्थकलशैः ततस्तदन्तस्थैरित्येवं **क्रमेणोक्तैर्मन्त्रैः** आत्वाहार्षादिप्रणवान्तैर्मन्त्रैः **जनार्दनं** विष्णुप्रतिमां **स्नापयेत्** अभिषेचयेत् । मध्यमे कलशे विशेषमाह– **मध्यममिति** ।। **मध्यमं** मध्यमेन ब्राह्मकलशेन प्रणवेन मन्त्रेण **अष्टार्णेन** अष्टाक्षरेण च **निजेनापि** मूर्तिमन्त्रेणापि तथा पुरुषसूक्तश्च एतैरेव मन्त्रैः । न त्वात्वाहार्षादिभिरिति भावः । स्नापयेदिति सम्बन्धः । मध्यमपदेन पञ्चकपञ्चकमध्यस्थाः सर्वे कलशा ग्राह्या इत्यप्याहुः ।। ११३-११९ ।।

पञ्चगव्यकलशे मध्यकलशवत् आवाहनादिकथनं, कलशग्रहणक्रमकथनं च

**तं.सा.** **आवाहनं च स्नपनं पञ्चगव्येन(स्य) मध्यवत् ।**
**पूर्वाद्युत्तरपर्यन्तः(न्तं) कलशक्रम उच्यते ।। १२० ।।**

**त.क.–** एवमेव पञ्चगव्यकलशेऽप्यनियमप्रसक्तौ आवाहनदेवतासु न्यूनतां च परिहरन्नतिदिशति— **आवाहनं चेति** ।। तृतीयान्ताद्वतिः । मध्यमकलशेन स्नपनं यद्वत् यादृङ्मन्त्रविशिष्टं तद्वत् पञ्चगव्येन, सप्तम्यर्थे तृतीया, मध्यस्थे कलशे आवाहनमिव पञ्चगव्यकलशेऽपीत्यर्थः। ब्राह्मक्रमेणेत्यपर्यवसितमुक्तम् । किमुपज्ञं किमवसानमिति न ज्ञायते । अत आह— **पूर्वादिति** ।। उच्यते शास्त्रेषु । अतः स एवानुसर्तव्य इति शेषः ।। १२० ।।

**अ.सं.–** मध्यमकलशोक्तमन्त्रानेव पञ्चगव्यकलशेऽप्यतिदिशन् प्रसङ्गात् मध्यमकलशदेवतावाहनं पञ्चगव्यकलशेऽप्यतिदिशति– **आवाहनं चेति** ।।

पञ्चगव्यकलशे देवतावाहनं पञ्चगव्यकलशेन स्नापनं च **मध्यवत्** मध्यमकलशवत् ज्ञेयम् ।

अयं भावः । मध्यकलशे यस्य रूपस्यावाहनमुक्तं पञ्चगव्यकलशेऽपि तस्यैव रूपस्यावाहनं कार्यम् । मध्यकलशेन यैर्मन्त्रैः स्नापनमुक्तं तैरेव प्रणवादिमन्त्रैः पञ्चगव्यकलशेनापि स्नापनं कार्यमिति । एतेन पञ्चविंशतिकलशपक्षे चतुर्विंशतिमूर्तय एवोक्ताः एका मूर्तिरनुक्ताऽभूत् सा इदानीमुक्ता भवति । ब्राह्मपञ्चगव्यकलशयोरुभयोरपि एकस्या एव देवताया आवाहनकथनादिति ।

एके तु– **मध्यमं** मध्यमकलशेन **प्रणवेन तु** प्रणवेनैव स्नापयेत् । अष्टार्णेन निजेनापि पुरुषसूक्तेन च प्रतिमायाः आवाहनं कार्यम् । आवाहनं तु अभिषेकात् पुरा वा पश्चाद्वेति ज्ञेयम् । पुराऽभिषेकात् पश्चाद्वेति ज्ञेयम् । 'पुराऽभिषेकात् पश्चाद्वा कुर्यादावाहनं हरेः' इति भविष्योक्तेः । **पञ्चगव्येन** पञ्चगव्यकलशेन स्नापनम् । **मध्यवत्** मध्यकलशमन्त्रेण प्रणवेनैव कार्यमित्याहुः ।

कलशैरभिषेके कलशपञ्चकग्रहणे पञ्चकस्थकलशग्रहणे च क्रममाह– **पूर्वेति** ।। पूर्वः पूर्वदिक्स्थः कलशः आदिः प्रथमः ग्रहणे यस्य सः पूर्वादिः, उत्तरः उत्तरदिक्कलशः पर्यन्तः अन्तिमो यस्य सः उत्तरपर्यन्तः, **कलशक्रमः** कलशग्रहणक्रमः । पूर्वभागस्थपञ्चकमारभ्य प्रतिपञ्चकं पूर्वभागस्थकलशमारभ्य प्रादक्षिण्येन उत्तरदिक्कलशावसानान् कलशान् क्रमेण गृहीत्वा एकैकेनाभिषेकः कार्यः इति भावः ।। १२० ।।

**गु.दी.–** ननु पञ्चविंशतिकलशपक्षे चतुर्विंशतिमूर्तीरावाहयेदित्युक्तम् । एतदस्तु । एकः शिष्टो वर्तते । स कः? तत्र किं रूपमावाहयेदित्यपेक्षायामाह– **आवाहनं चेति ।। मध्यवत्** मध्यकलशवत् । ब्राह्मकलशे यथा केशवस्यावाहनं तथा पञ्चगव्यकलशेऽपि तत्रोक्तः प्रणवादिरेवात्रापि स्नापने मन्त्र इति भावः ।। **पूर्वादीति** ।। उक्तकलशानां प्रथमग्रहणे पूर्वादिः क्रमसमाप्तौ उत्तरान्तः क्रम उच्यत इत्यर्थः । कलशग्रहणे पूर्वस्मिन् आरम्भ उत्तरे कलशे समाप्तिरिति भावः ।।१२०।।

**मङ्गली–** मध्यमकलशोक्तमन्त्रानेव पञ्चगव्यकलशेऽप्यतिदिशति– **आवाहनं**

**चेति** ।। पञ्चगव्यकलशे देवतावाहनं पञ्चगव्यकलशेन स्नापनं च **मध्यवत्** मध्यकलशवदेव ज्ञेयम् ।

अयं भावः । मध्यकलशे यस्य रूपस्यावाहनमुक्तं पञ्चगव्यकलशेऽपि तस्यैव रूपस्यावाहनं कार्यम् । मध्यकलशेन यैर्मन्त्रैः स्नापनमुक्तं तैरेव प्रणवादिमन्त्रैः पञ्चगव्यकलशेनापि स्नापनं कार्यमिति । एतेन पञ्चविंशतिकलशपक्षे चतुर्विंशतिमूर्त्तय एवोक्ताः एका मूर्तिरनुक्ताऽभूत् । सेदानीमुक्ता भवति । ब्राह्मपञ्चगव्यकलशयोरुभयोरपि एकस्या एव देवताया आवाहनकथनादिति ।

कलशैरभिषेके कलशपञ्चकग्रहणे पञ्चकस्थकलशग्रहणे च क्रममाह– **पूर्वेति** ।। पूर्वः पूर्वदिक्स्थः कलश आदिः प्रथमः ग्रहणे यस्य स पूर्वादिः । उत्तरः उत्तरदिक्कलशः पर्यन्तः अन्तिमः यस्य सः उत्तरपर्यन्तः । **कलशक्रमः** कलशग्रहणक्रमः । पूर्वभागस्थपञ्चकमारभ्य प्रतिपञ्चकं पूर्वभागस्थकलशमारभ्य प्रादक्षिण्येन उत्तरदिक्कलशावसानान् कलशान् क्रमेण गृहीत्वा एकैकेनाभिषेकः कार्य इति भावः ।। १२० ।।

अभिषेकानन्तरं पूजाकथनं द्वारपति-लोकपतिभ्यः बलिदानाभिधानम्

**तं. सा.** **जप्त्वा पुनश्च तन्मन्त्रान् पूजयेच्च विधानतः ।**
**द्वारलोकपतिभ्यश्च बलिं दत्त्वा यथाक्रमम्** ।। १२१ ।।

**त.क.**– अभिषेकानन्तरं कृत्यमाह— **जप्त्वेति** ।। **तन्मन्त्रान्**, कर्मधारयः, आ त्वाहार्षादिमन्त्रान् । पुनर्जपेदिति शेषः । चशब्देन भगवत्सान्निध्यसिद्धि-प्रयोजनं सूचयति । एवं जप्त्वा पूजयेत् । हरिमिति शेषः । 'समाराध्य ततो देवं पायसान्नं निवेदयेत्' इत्युक्तविधानं **'विधानतः'** इत्यनेनोच्यते । चशब्देन—

प्रच्छाद्य नूतनैर्वस्त्रैः प्रतिमां कम्बलेन वा ।
त्रियहं बन्धयेद् द्वारं कवाटेन सुसंवृतम् ।।

देवर्षिपितरः सिद्धाः तथाऽन्ये देवयोनयः ।
अर्चन्ति देवं त्रियहं त्रिरात्रान्ते च मानवाः ।।

इत्युक्तं त्रिरात्रकवाटबन्धनादिकं सूचयति। तदनन्तरकृत्यमाह— **द्वारेति ।।** द्वारलोकपतीन् स्थापयेदिति वाक्यमादावुपस्कर्तव्यम्। 'याचेत देवसान्निध्यं परिवारांश्च कल्पयेत्' इति वचनात्। यथाक्रममित्येतत् तेन सम्वध्यते। **क्रमो** विधिः। तेन द्वारपालकादिगर्भगृहेषु पूर्वनिर्मितेषु पिण्डिकास्थापनं, पिण्डिकविले बिम्वशंकुसंयोजनं, पिण्डिकारन्ध्रेषु अष्टबन्धनस्थापनं, तत्तन्मन्त्रेण तत्तत्प्रतिमाहृदयस्पर्शपूर्वकं जपः, तत आह्वानम्, अभिषेक इत्यादिविधिर्गृह्यते। द्वारपतिभ्यो लोकपतिभ्यश्च यथाविधि बलिं दत्त्वा पूजयेदिति पूर्वेण संबन्धः ।। १२१ ।।

**अ.सं.**— अभिषेकानन्तरकार्यमाह— **जप्त्वेति ।। तन्मन्त्रान्** ते च ते मन्त्राश्च तन्मन्त्राः तान्, आत्वाहार्षादिपूर्वोक्तमन्त्रान् **पुनश्च** पुनरपि **जप्त्वा** पठित्वा **विधानतः** प्रथमाध्यायोक्तपूजाविधानेन प्रतिमां पूजयेत्। ततः **द्वारलोकपतिभ्यः** द्वारपतिभ्यः द्वारपालकेभ्यः जयविजयादिभ्यः लोकपतिभ्यः इन्द्रादिलोकपालेभ्यश्च **यथाक्रमं** पूर्वादिक्रममनुसृत्य बलिदानोक्तमन्त्रेण बलिं दद्यात्। तदुक्तं हयशीर्षे—

कृत्वाऽष्टाङ्गनमस्कारं प्रणम्याञ्जलिमुद्रया ।
सान्निध्यकरणार्थाय सम्पूज्य विधिवद्गुरुः ।।

स्तूयादुपनिषन्मन्त्रैर्जपेदष्टाक्षरं ततः ।
विष्णुपार्षददेवेभ्यः सर्वेभ्यो बलिमाहरेत् ।। इति ।। १२१ ।।

**गु.दी— तन्मन्त्रान्** उक्तमन्त्रान्। **विधानतः** प्रथमाध्यायोक्तविधानेन पूजयेत्। **द्वारपतिभ्यो** जयादिभ्यः **लोकपतिभ्य** इन्द्रादिभ्यश्च। **यथाक्रमं** बलिदानोक्तक्रमेण ।। १२१ ।।

**मङ्गली— अभिषेकानन्तरकार्यमाह— जप्त्वेति ।। तन्मन्त्रान्** ते च ते मन्त्राश्च तन्मन्त्राः तान्, आत्वाहार्णदिपूर्वोक्तमन्त्रान्। **पुनश्च** पुनरपि **जप्त्वा** पठित्वा। **विधानतः** प्रथमाध्यायोक्तपूजाविधानेन प्रतिमां पूजयेत्। ततः **द्वारलोकपतिभ्यः** द्वारपतिभ्यः द्वारपालकेभ्यः जयविजयादिभ्यः, लोकपतिभ्यः इन्द्रादिलोकपालेभ्यश्च **यथाक्रमं** पूर्वादिक्रममनुसृत्य बलिदानोक्तमन्त्रेण बलिं दद्यात् ।। १२१ ।।

प्रतिमायाः वस्त्राद्यैरलङ्काराभिधानं गुर्वादिभ्यः दक्षिणादानाभिधानं च

**तं.सा. वस्त्ररत्नहिरण्याद्यैरलंकृत्य विभूतितः(षितः) (विधानतः) ।**
**गुरवे दक्षिणां दद्यात् कोटिं लक्षं सहस्रकम् ।। १२२ ।।**

**शतमर्धं तदर्धं वा निःस्वो भक्त्या क्षमापयेत (समापयेत्) ।**
**तदर्धमृत्विजां चैव तदर्धं पारणाकृताम् ।। १२३ ।।**

**त.क.–**

आचार्यं पूजयेत्तस्मिन् प्रतिष्ठादिवसे प्रभुः ।
सौवर्णैः कुसुमैर्वस्त्रैर्नूतनैरंगुलीयकैः ।।

केयूरहारवलयैरुपवीतोत्तरीयकैः ।
क्षेत्रारामगृहैर्वित्तैः धनैर्जीवधनैस्तथा ।।

दासीदासेन च तथा हस्त्यश्वशिबिकादिभिः ।
एवं प्रकारैरन्यैश्च तोषयेद्गुरुमात्मवान् ।।

आत्मानं पुत्रदारांश्च देवे तद्वन्निवेदयेत् ।
मातृत्वेन पितृत्वेन भावयेच्च गुरूत्तमम् ।।

सखात्मत्वेन सम्भाव्य प्रणम्य च पुनः पुनः ।
सहस्रं धेनवो देयाः दक्षिणा गुरवे तदा ।।

सहस्रनिष्कमथवा दक्षिणा चोत्तमा मता ।
तदर्धा मध्यमा ज्ञेया तदर्धा चाधमा मता ।।

अथवा दक्षिणा देया शतं हेम्नामनुत्तमम् ।
दशनिष्कमशक्तस्तु तदर्धं पादमेव वा ।।

यथावित्तानुसारेण दक्षिणा परिकीर्तिता ।
कर्मणां कर्षणादीनामङ्गत्वेन यदाहृतम् ।।

तदिष्टशिष्टं सकलं गुरोरेव धनं भवेत् ।
ऋत्विजामपि सर्वेषां तथाऽऽम्नायेष्वधीतिनाम् ।।

ब्राह्मणानां च विदुषां भक्तानां पुरुषोत्तमे ।
तथैकायननिष्ठानां द्विषट् नियतात्मनाम् ।।

वासुदेवैकनिष्ठानां निषन्मार्गविदामपि ।
यतीनां ब्रह्मचारीणां वनस्थाश्रमवासिनाम् ।।

अन्येषां विष्णुभक्तानामस्मिन्नर्थेऽनुयायिनाम् ।
विष्णुकर्मरतानां च सदस्यानां च दक्षिणा ।।

देया गोभूसुवर्णादिरूपा वित्तानुसारतः ।
कालज्ञानां तथा गीतनृत्तवाद्यादि कुर्वताम् ।
यथार्हं वित्तवासोभिः कुर्यात्तृप्तिं यथेप्सितम् ।।

इत्यादिवचनाद्दक्षिणाप्रदानस्यावश्यकत्वात् गुरुदक्षिणाप्रदानप्रकारं संगृह्णाति– **वस्त्रेति** ।।

**आद्यशब्देन** वचनोक्तमंगुलीयादिकं गह्यते। गुरुमिति शेषः। तस्मै गुरवे दक्षिणां दद्यादिति संम्बन्धः। कोटिं लक्षं सहस्रकमित्युत्तममध्यमाधमकल्पोक्तिः। तेन वचनमधमकल्पानुसारीत्युक्तं भवति। 'शतमर्धं तदर्धं वा' इत्यधमाधमकल्पे पक्षत्रयोक्तिः। अत्र सर्वत्र द्वितीयान्तात् पूर्वं गवामिति वा निष्कानामिति वा पूरणीयम्। 'निःस्वो भक्त्या क्षमापयेत्' इति वचनान्तरसंग्रहः। **तदर्धम् ऋत्विजामिति** ।। ऋत्विजामपि सर्वेषां तथाऽऽम्नायेष्वधीतिनामिति संमुग्धोक्तेः व्याख्यानम्– **पारणाकृतामिति** ।। पारायणकृतामित्यर्थः। तदर्धं कोट्यर्धं, लक्षार्धं, सहस्रार्धं, शतार्धं, पञ्चाशदर्धं, पञ्चविंशत्यर्धं वा ऋत्विग्भ्यो दद्यात्। तदर्धं कोट्यर्धार्धं, लक्षार्धार्धं, सहस्रार्धार्धं, शतार्धार्धं, पञ्चाशदर्धार्धं, पञ्चविंशत्यर्धार्धं वा वेदपारायणकृद्भ्यो दद्यादित्यर्थः। चशब्दात् 'ब्राह्मणानां च विदुषां' इत्याद्युक्तसंग्रहः ।। १२२, १२३ ।।

**अ.सं.**– एवं बलिं दत्वा इदानीं आचार्याय दक्षिणां दद्यादित्याह– **वस्त्रेति** ।। वस्त्ररत्नहिरण्याद्यैरलङ्कृत्य **गुरवे** आचार्याय **विभूतितः** ऐश्वर्यानुसारेण दक्षिणां दद्यात् । 'विभूषितः' इति क्वचित्पाठः । तां विकल्पेनाह– **कोटिमित्यादिना** ।। कोटिमित्यादौ निष्काणामिति शेषः । **अर्धं** पञ्चाशत् । **तदर्धं** पञ्चविंशति वेत्यर्थः । निर्धनेन किं कार्यमित्यत आह– **निःस्व इति** ।। **निःस्वः** निर्धनश्चेत् भक्त्या गुरुं क्षमापयेत् । इदानीं ऋत्विगादीनां दक्षिणामाह– **तदर्धमिति** ।। **तदर्धम्** आचार्यदक्षिणार्धम् ऋत्विजां सर्वेषाम् । **तदर्धम्** ऋत्विक्दक्षिणार्धं **पारणाकृतां** वेदपारायणकर्तृणां सूक्तमन्त्रजापकानां च ।। १२२,१२३ ।।

**गु.दी.**– **अलङ्कृत्य** प्रतिमामिति शेषः । पूजयेदित्यन्वयः । **विभूषितः** स्वयमिति शेषः । 'विभूतितः' इति क्वचित्पाठः । **निःस्वो** दरिद्रः भक्त्या क्षमापयेत् । गुरुमिति शेषः । 'समापयेत्' इति क्वचित्पाठः । ऋत्विगादेर्दक्षिणामाह— **तदर्धमिति** ।। आचार्यार्धमित्यर्थः । **पारणाकृतां** वेदसूक्तमन्त्रपाठकानामिति यावत् । **तदर्धम्** ऋत्विगर्धम् ।।१२२,१२३।।

**मङ्गली**– तदनन्तरं आचार्याय दक्षिणां दद्यादित्याह– **वस्त्रेति** ।। वस्त्ररत्नहिरण्याद्यैः अलंकृत्य **गुरवे** आचार्याय **विभूतितः** ऐश्वर्यानुसारेण दक्षिणां दद्यात् । 'विभूषितः' इति क्वचित्पाठः । तां विकल्पेनाह– **कोटिमित्यादिना** ।। कोटिमित्यादौ निष्काणामिति शेषः । **अर्धं** पञ्चाशत् । **तदर्धं** पञ्चविंशति वेत्यर्थः । निर्धनेन किं कार्यमित्यत आह– **निस्स्व इति** ।। **निस्स्वो** निर्धनश्चेत् भक्त्या गुरुं क्षमापयेत् । इदानीं ऋत्विगादीनां दक्षिणामाह– **तदर्धमिति** ।। आचार्यदक्षिणार्धं ऋत्विजां सर्वेषां, **तदर्धं** ऋत्विग्दक्षिणार्धं **पारणाकृतां** वेदपारायणकर्तृणां सूक्तमन्त्रजापकानां च ।। १२२,१२३ ।।

उत्सवादिषु अन्नदानकथनम् प्रतिष्ठायां उत्सवकालकथनं च

**तं.सा.** **आ श्वभ्य आ श्वपाकेभ्यो दद्यादन्नं समस्तशः ।**
**पुरस्तात्परतश्चैव सप्तरात्रं निरन्तरम्** ।। १२४ ।।

**सुवर्णवस्त्ररत्नाद्यैरागताभ्यागतानपि ।**
**पूजयेच्छक्तितो भक्त्या प्रीयतां भगवानिति ॥ १२५ ॥**

**त.क.**– 'ब्राह्मणांस्तोषयेद्वित्तैर्भोजनैश्च गवादिभिः' इति वचनं विवृण्वन् संगृह्णाति— **आ श्वभ्य इति ॥ समस्तशः** समस्तेभ्यः। सुवर्णवस्त्रेत्यादि 'वित्तैस्तोषयेत्' इत्यस्य विवरणम्। 'प्रीयतां भगवान्' इति सर्वत्रेतिकर्तव्यता कर्तव्या। **पुरस्तात्परतश्चैवेति** वचनान्तरसंग्रहः ॥ १२४,१२५ ॥

**अ.सं.**– उत्सवदिनेषु सर्वजातिभ्योऽन्नं दद्यादित्याह– **आश्वभ्य इति ॥ आश्वभ्यः** शुनकपर्यन्तम् । **आ श्वपाकेभ्यः** चण्डालपर्यन्तम् । एवं **समस्तशः** समस्तभूतेभ्यः अन्नं दद्यात् । ब्राह्मणभोजनानन्तरं बहिरुच्छिष्टप्रक्षेपे सति तद्भोजनेन यथा शुनकचण्डालाद्यास्तृप्येरन् तथा ब्राह्मणेभ्यः परिवेषयेदिति भावमाहुः । गुरुदक्षिणादिप्रकारश्चोक्तः शेखरे–

निष्कैः षट्त्रिंशतामाद्या मध्या पञ्चाशता तथा ।
एकाशीत्युत्तमा प्रोक्ता दक्षिणा त्रिविधा गुरोः ॥

तत्रैकां दक्षिणां दद्यात् कर्ताऽऽचार्याय शक्तितः ।
वित्तशाठ्यं विना भूमिं धनं धान्यं गृहं गजम् ॥

गोवस्त्राभरणादीनि दद्याच्छक्त्या विचक्षणः ।
ऋत्विजेभ्यो गुरोरर्धं तदर्धं द्वारजापिषु ॥

शास्त्रजापिषु दैवज्ञे तत्समा शिल्पिने मता ।
वेदाध्ययनकारिभ्यस्तत्समा वा तदर्धतः ॥

दीनांधकृपणादिभ्यो भूरिदानं यथोचितम् ।
प्रतिष्ठा दक्षिणाहीना यजमानं हिनस्ति हि ॥ इति ।

प्रतिष्ठायामुत्सवकालावधिमाह– **पुरस्तादिति ॥ पुरस्तात्** प्रतिष्ठापेक्षया पूर्वं सप्तरात्रकं दिनसप्तकम् । **परतः** पश्चात् प्रतिष्ठानन्तरं च दिनसप्तकम् । यद्वा पुरस्तात् परतश्च मिलित्वा सप्तरात्रम् । अथवा **पश्चात्** प्रतिष्ठानन्तरं **पुरस्तात्**

पूर्वमुत्तरदिनसप्तकोत्सवापेक्षया आदाविति यावत् । सप्तरात्रं **निरन्तरं** अविच्छेदेन **आगताभ्यागतान्** यदृच्छया समये आगतान् अभ्यागतान् अभि उत्सवमुद्दिश्यैव आगतान् अतिथीन् अभ्यागतांश्च । कदाप्यदृष्टः अतिथिः । पूर्वं दृष्टः अभ्यागत इति विवेकः । **शक्तितः** वित्तशाठ्यमकृत्वा सुवर्णरत्नादिभिः **भगवान्** विष्णुः मह्यं प्रीयताम् इति भक्त्या पूजयेत् ।। १२४,१२५ ।।

**गु.दी.– आश्वभ्य** इति ब्राह्मणभोजनानन्तरं बहिरुच्छिष्टप्रक्षेपे तद्भोजनेन यथा श्वचण्डालाद्यास्तृप्येरन् तथा ब्राह्मणेभ्यस्तथा परिवेषयेदिति भावः । दक्षिणाविशेष-स्तद्राहित्ये प्रत्यवायश्च हयशीर्षे—

आचार्यदक्षिणां दद्यात् नगरं ग्राममेव वा ।
मन्त्रहीनो गुरुं हन्याद्राष्ट्रं मन्त्रेण वर्जितः ।
धर्मं च यजमानं च हन्याद्दक्षिणया विना ।। इति ।।

उत्सवकालावधिमाह—**पुरस्तादिति** ।। प्रतिष्ठातः पुरस्तात् परतश्चेति निरन्तरं सप्तरात्रमित्यर्थः । पुरतः सप्तरात्रं **परतः** प्रतिष्ठानन्तरं सप्तरात्रमिति वा । **आगतानभ्यागतानपि** यदृच्छयाऽऽगताः आगताः । उत्सवमुद्दिश्यागताः अभ्यागताः तानपि ।। १२४,१२५ ।।

**मङ्गाली–** उत्सवदिनेषु सर्वजातिभ्योऽन्नं दद्यादित्याह– **आश्वभ्य इति ।। आश्वभ्यः** शुनकपर्यन्तं **आश्वपाकेभ्यः** चण्डालपर्यन्तं । एवं **समस्तशः** समस्तभूतेभ्योऽन्नं दद्यात् । ब्राह्मणभोजनानन्तरं बहिरुच्छिष्टप्रक्षेपे सति तद्भोजनेन यथा शुनकचण्डालाद्यास्तृप्येरन् तथा ब्राह्मणेभ्यः परिवेषयेदिति भावः । प्रतिष्ठायामुत्सवकालावधिमाह– **पुरस्तादिति ।। पुरस्तात्** प्रतिष्ठापेक्षया पूर्वं **सप्तरात्रं** दिनसप्तकं **परतः** पश्चात् प्रतिष्ठानन्तरं च दिनसप्तकं **निरन्तरमविच्छेदेन आगताभ्यागतान्** यदृच्छया समये आगतान्, अभ्यागतान् अभि उत्सवमुद्दिश्यैवागतान् । यद्वा आगतानतिथीन् अभ्यागतांश्च । कदाप्यदृष्टः अतिथिः, पूर्वदृष्ट अभ्यागत इति विवेकः । **शक्तितः** वित्तशाठ्यमकृत्वा सुवर्णरत्नादिभिः **भगवान्** विष्णुः मह्यं प्रीयतामिति भक्त्या पूजयेत् ।। १२४,१२५ ।।

दिनसप्तकं गीताद्यैः महोत्सवप्रकारः अवभृतस्नानकथनम् च

**तं. सा. गीतनृत्तैश्च वाद्यैश्च पुराणैरितिहासकैः ।**
**सूक्तै(स्तोत्रै)र्मङ्गलघोषैश्च वैदिकैर्दिनसप्तकम् ॥ १२६ ॥**

**नयेत्ततो महाराजविभूत्याऽवभृथं सुधीः ।**
**कारयेद्देवदेवस्य स्वाध्यायैर्गीतनृत्तकैः(नर्तनैः) ॥ १२७ ॥**

**त.क.–** तत्रैवेतिकर्तव्यतान्तरमाह— **गीतेति ॥** बहुवचनान्तद्वन्द्वः । वैदिकैः सूक्तैरिति सम्बन्धः । चशब्देन चतुर्थेऽहनि मानुषैः पूजाप्रकारः 'चतुर्थेऽहनि सम्प्राप्ते स्नपनं प्रातरिष्यते' इत्यादिवचनोक्तः संगृहीतः । नयेदित्यतः परं 'एवं कर्मार्चादीनपि स्थापयेत्' इत्यध्याहरणीयम् ।

आवाहनं मूलबेरात् कर्माद्यर्चासु कल्पयेत् ।
कर्मार्चां स्थापयेद् ब्राह्मे याम्ये तु मुखकौतुकौ ॥

तीर्थस्नपनबिम्बे च उत्तरे स्थापयेद्गुरुः ।
शयनोत्थानबिम्बं च बलिबिम्बं च दक्षिणे ।
लौकिकं लोहजं बिम्बं स्थापयेदिष्टभूमिषु ।

इत्युक्तेः । **मूलबेरः** मूलमूर्तिः । **कर्मार्चा** कर्मकरणमूर्तिः । **मुखकौतुकौ** यागमूर्तिः उत्सवमूर्तिश्च । **तीर्थबिम्बं** स्नपनबिम्बं चेत्यादि योज्यम् ।

पश्चिमे रात्रिभागे तु तीर्थबिम्बाधिवासनम् ।
बद्ध्वा प्रतिसरं तीर्थबिम्बाभावे चतुर्मुख ॥

नित्योत्सवप्रतिकृतेरभावे त्वधिवासनम् ।
स्नानार्चायां भवेद्यद्वा बिम्बस्योत्सवकारिणः ॥

उत्सवं प्रातरारभ्य कुर्यात् पूर्वोदितक्रमात् ।
उत्थाप्य शायितं बिम्बं निवेश्य मुखमण्टपे ॥

आदाय स्थापितान् कुम्भान् यागमण्टपभूमिषु ।
नीत्वा प्रदक्षिणं धाम तीर्थबिम्बस्य सन्निधौ ॥

स्थापयित्वा धान्यराशौ तीर्थबिम्बं यथाविधि ।
वस्त्रान्तमर्चयित्वाऽन्ते मुहूर्ते शोभने गुरुः ।।

एकबेरे मूलबेरमन्यथा तीर्थकौतुकम् ।
कुम्भैरभ्युद्धृतैर्देवं मूलमन्त्रेण मन्त्रवित् ।।

पूर्वादिमध्यकुम्भान्तमभिषिञ्चेद्यथाविधि ।
स्नानादिदीपपर्यन्तं प्रतिकुम्भं समर्चयेत् ।।

पठत्सु विप्रवर्येषु दिक्षु स्वाध्यायमुच्चकैः ।
घोषयत्सु च वाद्येषु मन्त्रैरब्दैर्वतैर्गुरुः ।।

नववस्त्रोत्तरीयाद्यैर्दीपान्तैरर्चिते हरौ ।
अवहन्यान्निशाचूर्णं निक्षिप्तं तदुलूखले ।।

आदाय कुम्भचूर्णैस्तैः श्रीसूक्तेनाभिषेचयेत् ।
ऋत्विजो देशिकेन्द्रश्च देवं गत्वा प्रदक्षिणम् ।।

अष्टाङ्गप्रणिपातेन प्रणिपत्य विकीर्य च ।
पुष्पाण्यञ्जलिभिर्देवं स्तुत्वा स्तोत्रैरनेकधा ।।

अलंकृतैर्भगवतैश्छत्रचामरधारिभिः ।
तैरेव सर्वैर्बहुभिर्भाव्यं देवसमीपगैः ।।

आरोप्य देवं हस्त्यादौ तीर्थबिम्बमलंकृतम् ।
पश्चादुत्सवबिम्बेन नीयमानेन पूर्ववत् ।।

भद्रं कर्णेति मन्त्रेण यानमारोपयेत्ततः ।
सपुष्पहेमप्रभया युक्तं पुष्पैरलंकृतम् ।।

याने तत्र समासीनमभ्यर्च्य न्यासपूर्वकम् ।
एवं निवेदयेत्तस्मै भक्ष्यं चापूपकादिकम् ।।

परः सहस्रैः सर्वत्र दीपयेच्च शतावरैः ।
द्विजेन्द्रमुख्यैर्बहुभिर्भूषितैर्धवलाम्बरैः ।।

दिनसप्तकं गीताद्यैः महोत्सवप्रकारः अवभृतस्नानकथनम् च

**तं. सा. गीतनृत्तैश्च वाद्यैश्च पुराणैरितिहासकैः ।**
**सूक्तै(स्तोत्रै)र्मङ्गलघोषैश्च वैदिकैर्दिनसप्तकम् ।। १२६ ।।**

**नयेत्ततो महाराजविभूत्याऽवभृथं सुधीः ।**
**कारयेद्देवदेवस्य स्वाध्यायैर्गीतनृत्तकैः(नर्तनैः) ।। १२७ ।।**

**त.क.–** तत्रैवेतिकर्तव्यतान्तरमाह— **गीतेति ।।** बहुवचनान्तद्वन्द्वः । वैदिकैः सूक्तैरिति सम्बन्धः । चशब्देन चतुर्थेऽहनि मानुषैः पूजाप्रकारः 'चतुर्थेऽहनि सम्प्राप्ते स्नपनं प्रातरिष्यते' इत्यादिवचनोक्तः संगृहीतः । नयेदित्यतः परं 'एवं कर्मार्चादीनपि स्थापयेत्' इत्यध्याहरणीयम् ।

आवाहनं मूलबेरात् कर्माद्यर्चासु कल्पयेत् ।
कर्मार्चां स्थापयेद् ब्राह्मे याम्ये तु मुखकौतुकौ ।।

तीर्थस्नपनबिम्बे च उत्तरे स्थापयेद्गुरुः ।
शयनोत्थानबिम्बं च बलिबिम्बं च दक्षिणे ।
लौकिकं लोहजं बिम्बं स्थापयेदिष्टभूमिषु ।

इत्युक्तेः । **मूलबेरः** मूलमूर्तिः । **कर्मार्चा** कर्मकरणमूर्तिः । **मुखकौतुकौ** यागमूर्तिः उत्सवमूर्तिश्च । **तीर्थबिम्बं** स्नपनबिम्बं चेत्यादि योज्यम् ।

पश्चिमे रात्रिभागे तु तीर्थबिम्बाधिवासनम् ।
बद्ध्वा प्रतिसरं तीर्थबिम्बाभावे चतुर्मुख ।।

नित्योत्सवप्रतिकृतेरभावे त्वधिवासनम् ।
स्नानार्चायां भवेद्यद्वा बिम्बस्योत्सवकारिणः ।।

उत्सवं प्रातरारभ्य कुर्यात् पूर्वोदितक्रमात् ।
उत्थाप्य शायितं बिम्बं निवेश्य मुखमण्टपे ।।

आदाय स्थापितान् कुम्भान् यागमण्टपभूमिषु ।
नीत्वा प्रदक्षिणं धाम तीर्थबिम्बस्य सन्निधौ ।।

स्थापयित्वा धान्यराशौ तीर्थबिम्बं यथाविधि ।
वस्त्रान्तमर्चयित्वाऽन्ते मुहूर्ते शोभने गुरुः ॥

एकबेरे मूलबेरमन्यथा तीर्थकौतुकम् ।
कुम्भैरभ्युद्धृतैर्देवं मूलमन्त्रेण मन्त्रवित् ॥

पूर्वादिमध्यकुम्भान्तमभिषिञ्चेद्यथाविधि ।
स्नानादिदीपपर्यन्तं प्रतिकुम्भं समर्चयेत् ॥

पठत्सु विप्रवर्येषु दिक्षु स्वाध्यायमुच्चकैः ।
घोषयत्सु च वाद्येषु मन्त्रैरब्दैर्वतैर्गुरुः ॥

नववस्त्रोत्तरीयाद्यैर्दीपान्तैरर्चिते हरौ ।
अवहन्यान्निशाचूर्णं निक्षिप्तं तदुलूखले ॥

आदाय कुम्भचूर्णैस्तैः श्रीसूक्तेनाभिषेचयेत् ।
ऋत्विजो देशिकेन्द्रश्च देवं गत्वा प्रदक्षिणम् ॥

अष्टाङ्गप्रणिपातेन प्रणिपत्य विकीर्य च ।
पुष्पाण्यञ्जलिभिर्देवं स्तुत्वा स्तोत्रैरनेकधा ॥

अलंकृतैर्भगवतैश्छत्रचामरधारिभिः ।
तैरेव सर्वैर्बहुभिर्भाव्यं देवसमीपगैः ॥

आरोप्य देवं हस्त्यादौ तीर्थबिम्बमलंकृतम् ।
पश्चादुत्सवबिम्बेन नीयमानेन पूर्ववत् ॥

भद्रं कर्णेति मन्त्रेण यानमारोपयेत्ततः ।
सपुष्पहेमप्रभया युक्तं पुष्पैरलंकृतम् ॥

याने तत्र समासीनमभ्यर्च्य न्यासपूर्वकम् ।
एवं निवेदयेत्तस्मै भक्ष्यं चापूपकादिकम् ॥

परः सहस्रैः सर्वत्र दीपयेच्च शतावरैः ।
द्विजेन्द्रमुख्यैर्बहुभिर्भूषितैर्धवलाम्बरैः ॥

कञ्चुकोष्णीषसहितैर्बालव्यजनपाणिभिः ।
तालव्यजनहस्तैश्च बर्हिबर्हकरैस्तथा ॥

मुक्तातपत्रहस्तैश्च मेघस्तम्भादिधारिभिः ।
बिभ्राणैर्धूपपात्राणि गन्धोद्गारीणि विश्वतः ॥

यानारूढेन पुरतो रचिताञ्जलिकर्मणा ।
मत्स्यध्वजाधिरूढेन तथा तार्क्ष्येण पद्मज ॥

पृष्ठतश्च प्रणमता शिबिकाङ्कनकोज्ज्वलाम् ।
आरूढेन विरिञ्चादीन् समुत्सारयता बहिः ॥

विष्वक्सेनेन देवेन वेत्रहस्तेन सेवितः ।
उपानहौ पादुके च पात्रे कनकनिर्मिते ॥

समारोप्य पुरो विप्रैर्धारयद्भिरलंकृतैः ।
राजचिह्नानि चान्यानि यातव्यमविलम्बितम् ॥

विप्रैस्त्रयीमधीयानैर्जपस्तुतिपरायणैः ।
नृत्यता गायता चापि गाणिक्येनानुसेवितः ॥

वीणादिवादनपरैर्वन्दिभिश्च तथाऽपरैः ।
षड्जादिगीतनिपुणैर्वाद्यवादनकोविदैः ॥

गद्यं पद्यं तथा मिश्रं पठद्भिः स्तोत्रमुज्ज्वलम् ।
भाषाश्च बहुधा भिन्ना भाषमाणैरितस्ततः ॥

वैतण्डिकैस्तथा जल्पनिपुणैर्वादशिल्पितैः ।
तथा तत्त्वकथानिष्ठैः पदार्थज्ञैश्च तार्किकैः ॥

मीमांसकैर्याज्ञिकैश्च छान्दसैः साङ्ख्यकोविदैः ।
योगज्ञैश्च पुराणज्ञैः शाब्दिकैस्तत्त्ववेदिभिः ॥

मौहूर्तिकैश्च गणशः परस्परजिगीषुभिः ।
ततश्चात्रोक्तमार्गेण प्रमेयं बहुधा स्थितम् ॥

उच्चैर्ब्रुवाणैर्विद्वद्भिः पञ्चरात्रपरायणैः ।
वासुदेवस्य माहात्म्यं कथयद्भिश्च तात्त्विकैः ।।

संस्कृतं प्राकृतं मिश्रमीरयद्भिरितस्ततः ।
देवदेवस्य पुरतः पृष्ठे पार्श्वे स्थितैर्जनैः ।।

सहितं सरितस्तीर्थं नीत्वा यद्वा सरित्तटम् ।
दर्शे च पौर्णमास्यां च अर्वाक् चेद्योजनाविधौ ।।

समुद्रतीरमथवा मण्टपे तत्र कल्पिते ।
अवरोप्यासने यानं विशिष्टे तीर्थकौतुके ।।

कलशानग्रतः पञ्चविंशति दश सप्त च ।
यद्वा यद्वा नव न्यस्य यथाविधि यथापुरम् ।।

कलशैरभिषिञ्च्याथ चक्रं शिष्टैश्च वारिभिः ।
सरिदादौ च तीर्थे तु तीर्थान्यावाह्य नामभिः ।।

निमज्जयेत्तत्र बिम्बं चक्रं मन्त्रैर्यथाविधि ।
तीर्थार्थमौत्सवे बिम्बे समानीते तु वारिभिः ।।

प्रोक्ष्य कूर्चाग्रपतितैः बिम्बचक्रं निमज्जयेत् ।
चक्राभावे तु तत्कूर्चं केवलं देवसन्निधौ ।।

देवेन सह तत्काले निमज्जन्ति च ये जनाः ।
ते निर्धूयाऽशुभं सर्वं महापातकमप्यथ ।।

यान्ति ध्रुवं सुदुष्प्राप्यं स्थानमाचन्द्रतारकम् ।
मण्टपे देवमानीय पूजयित्वा यथा पुरा ।।

महाहविर्निवेद्याथ ब्राह्मणान् भोजयेत्ततः ।
आलयाभ्यन्तरं यानमारोप्य प्रापयेत्ततः ।
तद्रात्रौ मण्टपे देवं नीत्वाऽभ्यर्च्य यथाविधि ।।

इत्यादिना अवभृथस्नानप्रकारः सविस्तरं पञ्चरात्रेषु निरूपितः । तं संगृह्णाति—

**तत इत्यादिना शतप्रस्थादित्यतः प्राक्तनेन ।।** उक्तरीत्या महाराजविभूत्या स्वाध्यायैर्गीतनर्तनैश्च सह तीर्थमूर्तिं बहिर्नीत्वा देवदेवस्य अवभृथस्थानं कारयेदित्यर्थः ।। १२६,१२७ ।।

**अ.सं.–** तदनन्तरदिनसप्तके वा तस्मिन्नेव वा दिनसप्तके रात्रौ गीताद्यैर्महोत्सवं कुर्यादित्याह– **गीतनृत्यैश्चेति ।।** पुराणैरित्यादौ पुराणादिपाठः तत्कथावचनं च ज्ञेयम् । वैदिकैः मङ्गलघोषैरित्यन्वयः । दिनसप्तकं **नयेत्** उत्सवयुक्तं कुर्यात् । यात्रादाविति शेषः । तदुक्तं भविष्ये–

रात्रौ महोत्सवं कुर्यात् शङ्खभेर्यादिनिस्वनैः ।
एकरात्रं त्रिरात्रं वा सप्तरात्रमथापि वा ।। इति ।

इदानीमवभृथस्नानमाह– **तत इति ।। ततः** सप्तदिनानन्तरम् । **महाराज-विभूत्या** छत्रचामरादिराजोपचारैः गीतादिमहोत्सवैश्च गत्वा महानदीसङ्गमे अतिप्रशस्तके तीर्थे च **सुधीः** ज्ञानी **देवदेवस्य** देवानां स्तुत्यस्य विष्णोः **स्वाध्यायैः** वेदैः, वेदं पठन्नित्यर्थः । अवभृथस्नानं कारयेत् ।।१२६,१२७।।

**गु.दी.–** अवभृथस्नानमाह—**तत इत्यादिना ।। ततः** सप्तदिनानन्तरम् । **स्वाध्यायैः** वेदैः ।। १२६,१२७ ।।

**मङ्गली–** तदनन्तरदिनसप्तके वा तस्मिन्नेव वा दिनसप्तके रात्रौ गीताद्यैर्महोत्सवं कुर्यादित्याह– **गीतनृत्यैश्चेति ।।** पुराणैरित्यादौ पुराणादिपाठः तत्कथावचनं च ज्ञेयम् । वैदिकैर्मङ्गलघोषैरित्यन्वयः । दिनसप्तकं **नयेत्** उत्सवयुक्तं कुर्यात् । रात्राविति शेषः । तदुक्तं भविष्ये–

रात्रौ महोत्सवं कुर्यात् शङ्खभेर्यादिनिस्वनैः ।
एकरात्रं त्रिरात्रं वा सप्तरात्रं अथापि वा ।। इति ।

इदानीमवभृतस्नानमाह– **तत इति ।। ततः** सप्तदिनानन्तरं **महाराजविभूत्या** च्छत्रचामरादिराजोपचारैः गीतादिमहोत्सवैश्च गत्वा महानदीसंगमेऽतिप्रशस्तके च तीर्थे च **सुधीः** ज्ञानी **देवदेवस्य** देवानां स्तुत्यस्य विष्णोः **स्वाध्यायैर्वेदैः**, वेदं पठन्नित्यर्थः । अवभृतस्नानं कारयेत् ।। १२६,१२७ ।।

**तं.सा.** **महानदीसङ्गमे(षु) तु तीर्थे चा(वा)तिप्रशस्तके ।**
**स्नापयेत्पूर्ववन्मत्रैः(पूर्वमन्त्रैश्च) पुंसूक्तान्तैः स्मरन् हरिम् ॥१२८॥**

**ततः पूर्ववदागत्य प्रवेश्य पुरुषोत्तमम् ।**
**पूजयित्वा विधानेन दत्त्वा दानानि शक्तितः ॥ १२९ ॥**

**गुरुं च भक्त्या सम्पूज्य स्वीकुर्यादाशिषस्ततः ।**
**शतप्रस्थादनूनं तु नैवेद्यं पायसोत्तरम् ॥ १३० ॥**

**दिनेष्वेतेषु दातव्यं सघृतं ससितादि(तोद)कम्**
**(ससितं सघृतादिकम्) ।**
**पश्चादपि यथाशक्ति पूजा कार्या हरेः सदा ॥ १३१ ॥**

**त.क.**– तदेव स्थलविशेषनिर्देशपूर्वकं विवृणोति— **महानदीति** ॥ महानद्याः समुद्रेण सङ्गमे, परस्परसङ्गमे वा अतिप्रशस्ततीर्थे, समीपकाधिकरणे सप्तमी, तत्तीरे इत्यर्थः। तुशब्दान्महानद्यादितीरे परिकल्पितमण्टपेऽवस्थापनं सूचयति। 'पूर्ववत्' इत्यनेन पञ्चविंशत्यादिकलशस्थापनं तत्पूजादिकं चाभिप्रैति। **पुंसूक्तान्तैः** आ त्वाहार्षाद्यैरिति शेषः। पूर्ववदर्चितैः कलशैः स्नापयेदिति शेषः। हरिं स्मरन्निति सर्वत्र सम्बध्यते । तीर्थमूर्तेश्चक्रस्य त्रिर्निमज्जनम् । ततः सर्वेषां स्नानं तुशब्देनाऽऽचष्टे। पूर्ववदागत्येत्यनेन महाराजविभूत्यादिसाहित्यमुच्यते। चशब्देन ब्राह्मणादीनामपि पूजा सूच्यते । **ततो** गुरुब्राह्मणादित्यर्थः। निवेद्यद्रव्ये सङ्ख्याया बहुविधोक्तेः प्रसङ्गात्स्वयं निष्कृष्य दर्शयति– **शतप्रस्थादिना सदेत्यन्तेन**॥ 'सप्तदिनेष्वेतेषु' इत्यनेन नित्यपूजायां नेयं सङ्ख्येति सूचयति। निवेद्यस्येदमित्यण् । **पायसोत्तरमिति** ॥ सङ्ख्यातं पायसमधिकं कुर्यादित्यर्थः। **सघृत**मित्यनेन अभिघारणं विना नैवेद्यं निषेधति। **ससितादिक**मित्यनेन सितशर्करा, **आदि**शब्देन मधु, तेन सहितं नैवेद्यं प्रशस्तमित्युच्यते। सप्तदिनेषु शतप्रस्थादनूनं चेन्नित्यपूजायां किं मानमित्यत आह— **पश्चादपीति** ॥

सप्तरात्रादनन्तरमपि हरेः **सदा** नित्यपूजा यथाशक्ति नैवेद्यप्रदानेन कार्येत्यर्थः ।। १२८-१३१ ।।

**अ.सं.–** अवभृतस्नानप्रकारमेव विवृणोति– **स्नापयेदिति ।। पुंसूक्तान्तैः** पूर्वोक्तैः आत्वाहार्षादिभिः पुरुषसूक्तान्तैः मन्त्रैः **पूर्ववत्** प्रतिष्ठाकाल इव । स्नानं कलशस्थापनपूर्वकं पूजितैः कलशैः हरिं स्मरन् **स्नापयेत्** अभिषेचयेत् । उक्तं च हयशीर्षे–

अतः परं प्रवक्ष्यामि देवस्यावभृथं तव ।
शोधयेद्गोमयैर्भूमिमण्डले कलशान् न्यसेत् ।।

कलशे विन्यसेत्पञ्चगव्यं मन्त्रैर्विशेषतः ।
मन्त्रतो विन्यसेन्मध्ये नवकानां सुरोत्तम ।।

नदीनदतटाकोत्थैः शेषांस्तोयैः प्रपूरयेत् ।
गायत्रीं वैष्णवीं जप्त्वा मूलमन्त्रं शतं जपेत् ।
जप्त्वा ध्यायन् हरिं मन्त्रैः कलशैरभिषेचयेत् ।। इति ।

यद्वा अवभृथं सर्वैर्जनैः सह जले निमज्जनं देवदेवस्य कारयेत् । तदनन्तरं पूर्ववत् मन्त्रैः स्नापयेदित्यर्थः ।।

अवभृथस्नानानन्तरकृत्यमाह– **तत इति ।। ततः** अवभृथस्नानानन्तरं **पूर्ववत्** अवभृथस्नानं प्रति गमनकाले इव महाराजविभूत्यादिमहोत्सवैः आगत्य, गृहमिति शेषः। **पुरुषोत्तमं** हरिं गर्भगहमध्ये **प्रवेश्य** प्रवेशयित्वा प्रतिष्ठाप्येति यावत्। **विधानेन** प्रथमाध्यायोक्तषोडशोपचारविधिना पूजयित्वा शक्तितो **दानानि** सुवर्णादिदानानि **दत्त्वा** कृत्वा भक्त्या गुरुं च शक्तितः तदभीष्टदानेन संतोष्य ततः गुरोः **आशिषः** आशीर्वचनानि स्वीकुर्यात् । तदुक्तं हयशीर्षे–

प्रविश्य भवनं भूयः सर्वमावश्यकं चरेत् ।
वैष्णवान् पूज्य शक्त्या तु ब्राह्मणेभ्यश्च दक्षिणाम् ।।
आचार्यं तोष्य रत्नेन सन्ध्यायां बलिमाहरेत् ।। इति ।

तथा श्रेयोदानं चोक्तम्–

प्राङ्मुखं यजमानं तु स्नापयित्वा यथाविधि ।
फलं समर्पयेत्तस्मै परितुष्टमना गुरुः ।। इति ।

एतेषूत्सवदिनेषु देवस्य दीयमाननैवेद्यपरिमाणमाह– **शतेति** ।। प्रस्थं नाम एकपुरुषाहाररूपपरिमाणविशेषः । **शतप्रस्थादनूनं** शतप्रस्थपरिमितम् । शतभोजनपर्याप्तमित्यर्थः । **ससितादिकं** सितं शर्करा, **आदिशब्देन** मधु । शर्करादिसहितमित्यर्थः । 'ससितोदकं' इति पाठे शर्करोदकसहितं पानकसहितमिति यावत् । **पायसोत्तरं** पायसमेव उत्तरमुत्कृष्टं यस्मिन् तत्तथोक्तं नैवेद्यम् । **एतेषु दिनेषु** उत्सवदिनेषु **दातव्यं** देवस्य समर्पणीयमित्यर्थः । **पश्चात्** उत्सवसमाप्त्यनन्तरमपि **सदा** यावज्जीवं यथाशक्ति हरेः पूजा कार्या ।। १२३,१३१।।

**गु.दी.– नदाः** शोणाभद्रादयः । **तीर्थैः** जलैः । 'महानदीसङ्गमेषु तीर्थे चातिप्रशस्तके' इत्यपि कोशेषु पाठः । **पूर्ववत्** नृत्तगीतादिकैः । पूर्ववद्विधानेनेति सम्बन्धः । **पुरुषोत्तमं** तदधिष्ठितप्रतिमाम् । **प्रवेश्य** देवालयमिति शेषः । **ततः** गुरोः । **शतप्रस्थादनूनं** प्रसृतित्रितयम् । 'मानं प्रस्थचतुष्टयं' इत्यभिधानोक्तप्रस्थशतपरिमितम् । पायसमेवोत्तरमुत्कृष्टं यस्मिन् तत् **पायसोत्तरम् । ससितादिकं** सशर्करादिकम् । **आदिपदेन** मधु । 'ससितोदकं' इति क्वचित्पाठः । **पश्चादपि सदा** यावज्जीवम् । अत्र प्रतिमायाः पीठे स्थिरीकरणम् । स्थिरीकृतायाश्चलने शान्तिश्च मात्स्ये—

स्थितं न चालयेद्देवमन्यथा पापभाग्भवेत् ।
पूरयेत्सितकाभिश्च सुदृढं सर्वतो यथा ।।

लोकपालस्यादिभागे यस्य सञ्चलते विभुः ।
तस्य लोकपतेः शान्त्यै देयाश्चेमास्तु दक्षिणाः ।।

इन्द्राय वारणं दद्यात् काञ्चनं वाऽल्पवित्तवान् ।
अग्नेः सुवर्णं मेषं तु यमस्य महिषं तथा ।।

अजां सकाञ्चनीं दद्यात् निर्ऋतिं राक्षसं प्रति ।
वरुणं प्रति मुक्तानि शुक्तिकानि प्रदापयेत् ।।

रीतिकां वायवे दद्यात् वस्त्रयुग्मेन संयुताम् ।
सोमाय धेनुर्दातव्या राजतस्तु वृषः शिवे ।।

चलने तु भवेद्घोरं भयं कुलविनाशनम् ।
यस्यां यस्यां तु चलनं शान्तिः स्यात् तत्र तत्र तु ।। इति ।।

।।१२८-१३१।।

**मङ्गाली–** अवभृतस्नानप्रकारमेव विवृणोति– **स्नापयेदिति ।। पुंसूक्तांतैः** पूर्वोक्तैरात्वाहार्षादि पुंसूक्तान्तैर्मन्त्रैः **पूर्ववत्** प्रतिष्ठाकाल इव कलशस्थापनपूजितैः कलशैः हरिं स्मरन् **स्नापयेत्** अभिषेचयेत् । यद्वा अवभृथं सर्वैर्जनैस्सह जले निमज्जनं देवदेवस्य कारयेत् । तदनन्तरं पूर्ववन्मन्त्रैः स्नपयेदित्यर्थः ।।

अवभृथस्नानानन्तरकृत्यमाह– **तत इति ।। ततः** अवभृथस्नानानन्तरं **पूर्ववत्** अवभृथस्नानार्थं गमनकाल इव महाराजविभूत्यादिमहोत्सवैरागत्य । गृहमिति शेषः । **पुरुषोत्तमं** हरिं गर्भगृहमध्ये **प्रवेश्य** प्रवेशयित्वा, प्रतिष्ठाप्येति यावत् । **विधानेन** प्रथमाध्यायोक्तषोडशोपचारपूजाविधिना पूजयित्वा शक्तितो **दानानि** सुवर्णादिदानानि **दत्वा** कृत्वा भक्त्या गुरुं च संपूज्य शक्तितः तदभीष्टदानेन सन्तोष्य ततः गुरोः **आशिषः** आशीर्वचनानि स्वीकुर्यात् । एतेषु उत्सवदिनेषु देवस्य दीयमाननैवेद्यपरिमाणमाह– **शतेति ।।** प्रस्थं नाम एकपुरुषाहाररूप-परिमाणविशेषः । शतप्रस्थादनूनं ऊनं चेत् शतप्रस्थपरिमितं शतभोजनपर्याप्त-मित्यर्थः । **ससितादिकं** सितं शर्करा, **आदि**शब्देन मधुशर्करादिसहितमित्यर्थः । 'ससितोदकं' इति पाठे शर्करोदकसहितं पानकसहितमिति यावत् । **पायसोत्तरं** पायसमेव उत्तरमुत्कृष्टं यस्मिन् तथोक्तं नैवेद्यम् । **एतेषु दिनेषु** उत्सवदिनेषु **दातव्यं** देवस्य समर्पणीयमित्यर्थः । **पश्चात्** उत्सवसमाप्त्यनन्तरमपि **सदा** यावज्जीवं यथाशक्ति हरेः पूजा कार्या ।। १२८-१३१ ।।

**तं.सा. जीर्णालयोद्धृतौ चैव तत्त्वमन्त्रान् स्वकं तथा ।**
**प्रातिलोम्येन(प्रतिलोमेन) जप्त्वैव मूर्तौ संकोचयेद्धरिम्**
**॥ १३२ ॥**

**त.क.**— अत्र नदीप्रवाहादिना कालतो वा प्रतिमादेवालयप्रासादादौ भग्ने तत्सर्वं विहाय पुनः स्थलान्तरे उक्तप्रकारेण प्रतिष्ठादिकं कार्यमुत तेषामेव समाधानेन सङ्ग्राह्यतेति जिज्ञासायां-

स्वायम्भुवार्षदिव्येषु मानुषेषु चतुर्ष्वपि ।
अङ्गहानौ लोहजेषु तप्तजाम्बूनदैः पुनः ॥

समाधातव्यमेवाङ्गं न त्याज्यं शैलजेष्वपि ।
तद्वदेव समाधानं दारुजादिषु पश्चसु ॥

हीनाङ्गानि तु बिम्बानि हित्वा तानि पुनः सृजेत् ।
अङ्गमात्रसमाधाने सृष्टौ सर्वात्मनाऽपि च ॥

कुम्भे शक्तिं समावाह्य निर्माय च यथा पुरा ।
अधिवासादिकं सर्वं प्रतिष्ठायामिवाचरेत् ॥

प्रभापद्मासनादीनां वैकल्ये चलनेऽपि वा ।
आयुधेऽपि च चक्रादौ यष्टव्यो नासमाहितः ॥

उद्वास्य प्रतिमाशक्तिं मूलबेरे घटेऽपि वा ।
चक्रादेश्च समाधानं कार्यं तस्मिन् समाहिते ॥

सम्प्रोक्ष्य पूजयेच्छक्तिमावाह्य प्रतिमासु ताम् ।
प्रासादे वाऽपि शिथिले पूजयेद्बालवेश्मनि ॥

उपेतं परिवारैः स्वैर्देवं मूले यथा तथा ।
अजीर्णे ध्रुवबेरे तु जीर्णे धामनि तान् स्थितान् ॥

देवान् देवपरीवारान् मूलबेरे निवेशयेत् ।
अजीर्णधामनिष्ठानां जीर्णे तु ध्रुवकौतुके ॥

नोद्वासोऽन्यत्र कर्तव्यो देवादीनां चतुर्मुख ।
अमानुषं च विम्बादि पूर्वलक्षणवर्जितम् ।।

जीर्णोद्धारेऽपि कर्तव्यं तथैव न तदन्यथा ।
शयनं वासनं स्थानं यानं वा तद्यथापुरम् ।।

विम्बस्य पुनरुद्धारस्तथैव स्यादमानुषे ।
मानुषेषु स्थितादीनां बिम्बानामिच्छया भवेत् ।।

पुनः सृष्टिर्न दोषाय तथा सति चतुर्मुख ।
दिव्यं विमानं यद्वस्तु यन्मानं यादृशं पुरा ।।

तादृगेव पुनः सृष्टौ नान्यथा तच्च कल्पयेत् ।
अन्यथा कल्पने दोषो राज्ञो राष्ट्रस्य च ध्रुवम् ।।

सालगोपुरपीठादौ चलिते जीर्ण एव वा ।
दृढं शिलादिभिः कुर्यात् विस्तीर्णमथवाऽन्यथा ।।

नद्यादिजलवेगेन चलिते नष्ट एव वा ।
प्रासादादौ पुनः स्थाने निर्बाधेऽन्यत्र कल्पयेत् ।।

या मूर्तिर्येन मन्त्रेण यादृशेनाधिकारिणा ।
प्रथमे कल्पने सैव द्वितीये कल्पने भवेत् ।।

मूर्तिस्तदेव तन्त्रं च स एव स्थापकः पुनः ।
तन्त्राधिकारिमूर्तीनां व्यत्यये कल्पने पुनः ।।

नृणां नरपतेश्चापि राष्ट्रस्यापि भवेत् क्षयः ।
बहुवेरप्रतिष्ठायां जीर्णोद्धारे यथा पुरा ।।

कूर्मार्चां स्थापयेद्देव्यां शाययेच्चापि मण्टपे ।
नाधिवासो जले कार्यो न नेत्रोन्मीलनं तथा ।।

न तत्त्वसंहरोत्पादौ सर्वं कर्मान्यथा चरेत् ।
शक्तिं कुम्भे समावाह्य कुम्भं धान्यस्थितं पुनः ।।

अभ्यर्च्य समये प्राप्ते मूलबेरे गुरुस्स्वयम् ।
शक्तिं निवेशयेच्छास्त्रदृष्टेन विधिना हरौ ।।

कुम्भतोयावशेषेण परिवारप्रकल्पनम् ।
उत्सवं कारयेदन्ते सर्वशान्तिकरी हि सः ।।

इत्यादिना सप्रभेदं जीर्णालयाद्युद्धारः प्रपञ्चितः पञ्चरात्रे । तं स्वयं संगृह्णाति— **जीर्णालयेत्यादिना ।।** गर्भगृहव्यतिरिक्तस्य जीर्णस्य आलयस्योद्धृतौ सत्यां कर्तव्यायां स्वकं मन्त्रं मन्मूर्तिमन्त्रं तत्त्वमन्त्रांश्च **प्रातिलोम्येन** उपसंहारक्रमेण यथाशक्ति जप्त्वा गर्भगृहस्थमूर्तौ वहिर्जीर्णमण्डटपव्याप्तं हरिं सङ्कोचयेत् । मण्टपादिषु व्याप्तं हरिमाकृष्य गर्भगृहान्तःस्थप्रतिमायां स्थापयेदिति यावत् । एवं गर्भगृहस्यापि जीर्णत्वेन तदुद्धृतौ कर्तव्यायां सत्यां प्रातिलोम्येन तत्त्वमन्त्रादीन् जप्त्वा मूलबेरस्थितं हरिमाकृष्य उत्सवादिमूर्तौ स्थापयेदित्यर्थः । एकबेरविधाने तु मूर्तिराश्रयकुम्भः । तस्मिन् सङ्कोचयेदित्यर्थः ।। १३२ ।।

**अ.सं.–** एवं प्रतिमाप्रतिष्ठाप्रकारमभिधाय

प्राकारे पतिते हर्म्ये गोपुरे मण्टपादिके ।
तदाकारं च तद्द्रव्यं तन्मानं तत्र कारयेत् ।।

इति वचनाज्जीर्णदेवालयोद्धारप्रकारमाह– **जर्णेति ।। जीर्णालयोद्धृतौ** जीर्णालयस्य जीर्णदेवालयस्य **उद्धृतौ** उद्धारे कर्त्तव्यायां सत्यामिति शेषः ।

संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः ।
सहस्रं नारसिंहेन दुत्वा तामुद्धरेत्पुनः ।। इत्युक्तेः ।

**तत्त्वमन्त्रान्** तत्त्वदेवतामन्त्रान् । तथा **स्वकं** तत्तन्मूर्तिमन्त्रं **प्रातिलोम्येन** व्युत्क्रमेण जप्त्वा **मूर्त्तौ** प्रतिमायां हरिं संकोचयेत् । अयं भावः । प्रतिमायां तथा

नोद्वासोऽन्यत्र कर्तव्यो देवादीनां चतुर्मुख ।
अमानुषं च बिम्बादि पूर्वलक्षणवर्जितम् ॥

जीर्णोद्धारेऽपि कर्तव्यं तथैव न तदन्यथा ।
शयनं वासनं स्थानं यानं वा तद्यथापुरम् ॥

बिम्बस्य पुनरुद्धारस्तथैव स्यादमानुषे ।
मानुषेषु स्थितादीनां बिम्बानामिच्छया भवेत् ॥

पुनः सृष्टिर्न दोषाय तथा सति चतुर्मुख ।
दिव्यं विमानं यद्वस्तु यन्मानं यादृशं पुरा ॥

तादृगेव पुनः सृष्टौ नान्यथा तच्च कल्पयेत् ।
अन्यथा कल्पने दोषो राज्ञो राष्ट्रस्य च ध्रुवम् ॥

सालगोपुरपीठादौ चलिते जीर्ण एव वा ।
दृढं शिलादिभिः कुर्यात् विस्तीर्णमथवाऽन्यथा ॥

नद्यादिजलवेगेन चलिते नष्ट एव वा ।
प्रासादादौ पुनः स्थाने निर्बाधेऽन्यत्र कल्पयेत् ॥

या मूर्तिर्येन मन्त्रेण यादृशेनाधिकारिणा ।
प्रथमे कल्पने सैव द्वितीये कल्पने भवेत् ॥

मूर्तिस्तदेव तन्त्रं च स एव स्थापकः पुनः ।
तन्त्राधिकारिमूर्तीनां व्यत्यये कल्पने पुनः ॥

नृणां नरपतेश्चापि राष्ट्रस्यापि भवेत् क्षयः ।
बहुबेरप्रतिष्ठायां जीर्णोद्धारे यथा पुरा ॥

कूर्मार्चां स्थापयेद्वेद्यां शाययेच्चापि मण्टपे ।
नाधिवासो जले कार्यो न नेत्रोन्मीलनं तथा ॥

न तत्त्वसंहरोत्पादौ सर्वं कर्मान्यथा चरेत् ।
शक्तिं कुम्भे समावाह्य कुम्भं धान्यस्थितं पुनः ॥

अभ्यर्च्य समये प्राप्ते मूलवेरे गुरुस्स्वयम् ।
शक्तिं निवेशयेच्छास्त्रदृष्टेन विधिना हरौ ॥

कुम्भतोयावशेषेण परिवारप्रकल्पनम् ।
उत्सवं कारयेदन्ते सर्वशान्तिकरी हि सः ॥

इत्यादिना सप्रभेदं जीर्णालयाद्युद्धारः प्रपञ्चितः पञ्चरात्रे। तं स्वयं संगृह्णाति— **जीर्णालयेत्यादिना ॥** गर्भगृहव्यतिरिक्तस्य जीर्णस्य आलयस्योद्धृतौ सत्यां कर्तव्यायां स्वकं मन्त्रं मन्मूर्तिमन्त्रं तत्त्वमन्त्रांश्च **प्रातिलोम्येन** उपसंहारक्रमेण यथाशक्ति जप्त्वा गर्भगृहस्थमूर्तौ वहिर्जीर्णमण्डटपव्याप्तं हरिं सङ्कोचयेत्। मण्टपादिषु व्याप्तं हरिमाकृष्य गर्भगृहान्तःस्थप्रतिमायां स्थापयेदिति यावत्। एवं गर्भगृहस्यापि जीर्णत्वेन तदुद्धृतौ कर्तव्यायां सत्यां प्रातिलोम्येन तत्त्वमन्त्रादीन् जप्त्वा मूलबेरस्थितं हरिमाकृष्य उत्सवादिमूर्तौ स्थापयेदित्यर्थः। एकबेरविधाने तु मूर्तिराश्रयकुम्भः। तस्मिन् सङ्कोचयेदित्यर्थः ॥ १३२ ॥

**अ.सं.**– एवं प्रतिमाप्रतिष्ठाप्रकारमभिधाय

प्राकारे पतिते हर्म्ये गोपुरे मण्टपादिके ।
तदाकारं च तद्द्रव्यं तन्मानं तत्र कारयेत् ॥

इति वचनाज्जीर्णदेवालयोद्धारप्रकारमाह– **जर्णेति ॥ जीर्णालयोद्धृतौ** जीर्णालयस्य जीर्णदेवालयस्य **उद्धृतौ** उद्धारे कर्त्तव्यायां सत्यामिति शेषः ।

संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः ।
सहस्रं नारसिंहेन दुत्वा तामुद्धरेत्पुनः ॥ इत्युक्तेः ।

**तत्त्वमन्त्रान्** तत्त्वदेवतामन्त्रान् । तथा **स्वकं** तत्तन्मूर्तिमन्त्रं **प्रातिलोम्येन** व्युत्क्रमेण जप्त्वा **मूर्त्तौ** प्रतिमायां हरिं संकोचयेत् । अयं भावः । प्रतिमायां तथा

बहिः गर्भगृहपुरोमण्टपादिषु सर्वत्र सन्निधानेन व्याप्य स्थितं भगवन्तं मन्त्रजपेन प्रार्थनया प्रतिमामात्रान्तर्गतं कुर्यात् । देवसन्निहितस्थले शूद्रसंचारायोगात् शूद्रसंचारार्थमिति ।। १३२ ।।

**गु.दी.–** जीर्णदेवालयोद्धारप्रकारमाह— **जीर्णेत्यादिना ।। जीर्णालयोद्धृतौ** कर्तव्यायामिति शेषः । **स्वकं** तत्तन्मूर्तिमनुम् । **प्रातिलोम्येन** व्युत्क्रमेण । मूर्तौ सङ्कोचयेदिति । अयं भावः । प्रतिमास्थो भगवान् गर्भगेहे विशेषाकारेण व्याप्तो वर्तते । अतस्तत्र शूद्रसञ्चारो न सम्भवति । तदर्थं व्याप्तं भगवन्तं मन्त्रजपेन मूर्तिनिष्ठमेव कुर्यादिति ।। १३२ ।।

**मङ्गाली–** एवं प्रतिमाप्रतिष्ठाप्रकारमभिधाय

प्राकारे पतिते हर्म्ये गोपुरे मण्डपादिके ।
तदाकारं च तद्द्रव्यं तन्मानं तत्र कारयेत् ।।

इति वचनात् जीर्णदेवालयोद्धारप्रकारमाह– **जीर्णेति ।। जीर्णालयोधृतौ** जीर्णालयस्य जीर्णदेवालयस्योद्धृतौ उद्धारे कर्त्तव्यायां सत्यामिति शेषः ।

संहारविधाना तत्र तत्त्वान् संहृत्य देशिकः ।
सहस्रं नारसिंहेन हुत्वा तामुद्धरेत्पुनः ।।

इत्युक्तेः, **तत्त्वमन्त्रान्** तत्त्वदेवतामन्त्रान् । तथा **स्वकं** तत्तन्मूर्तिमन्त्रं **प्रातिलोम्येन** व्युत्क्रमेण जप्त्वा **मूर्तौ** प्रतिमायां हरिं सङ्कोचयेत् । अयं भावः । प्रतिमायां तथा बहिः गर्भगृहपुरोमण्डटपादिषु सर्वत्र सन्निधानेन व्यवस्थितं भगवन्तं मन्त्रजपेन प्रार्थनया प्रतिमामात्रान्तर्गतं कुर्यात् । देवसन्निधानस्थले शूद्रसञ्चारायोगात् । शूद्रसञ्चारार्थमिति ।। १३२ ।।

जीर्णदेवालोद्धारपर्यन्तं देवस्य अन्यत्र पूजा कार्या

**तं.सा. उक्तेनैव विधानेन (तथैव) तदर्धैर्विभवैः सुधीः ।**
**पादमात्रैरपि हरिं स्नापयित्वा यथोदितम् ।। १३३ ।।**

**त.क.–** उत्सवमूर्तौ मूलबेरस्थहरेः सङ्कोचपक्षे तदनन्तरकर्तव्यमाह— **उक्तेनैवेति ।।** अवभृथस्नानादावुक्तेन बहिर्निर्गमनविधानेन दोलिकादौ आरोपणेन तदर्धैः पादमात्रैर्वा विभवैः **सुधीर्गुरुः हरिमुत्सवादिमूर्तिं** निर्गमयेत् । प्रागेव क्लृप्ते अन्यत्र मण्टपे स्थापयेच्च । तत्र 'सहस्रमर्धं पादं वा' (३-९८) इत्यादिना यथोदितं कलशान् स्थापयित्वा हरिं स्नापयेत् आ त्वाहार्षादिमन्त्रैः । ततः स्नापयित्वा यावज्जीर्णमण्टपोद्धारः तावत्पर्यन्तं तत्रैव नित्यं पूजयेत् । ततः पूर्वोक्तविधानेन वास्तुपूजादिना बलिदानादिना च तत्रैवान्यत्र देवालयं कुर्याच्चेति शेषः ।। १३३ ।।

**अ.सं.–** तदनन्तरं सुधीः **उक्तेन** 'चक्राब्जं भद्रकं वाऽपि' (३.९६) इत्यादिना **पूर्वोक्तेन विधानेन** कलशस्थापनमूर्त्यावाहनपूजाभिषेकमन्त्रादिविधिना । **तदर्धैः** पुनःस्थापनकाले क्रियमाणापेक्षयाऽर्धैः **विभवैः** उपचारैः **पादमात्रैरपि** पादमात्रैर्वा उपचारैः **यथोदितं** 'आनीय प्रतिमां स्नानं कारयेत् प्रणवेन तु' (३.१११) इत्यादिनोक्तम् अनुसृत्य हरिं स्नापयित्वा **उद्धृत्य** गर्भगृहाद्बहिरानीय देवालयनिर्माणपर्यन्तं स्थलान्तरे स्थापयेदिति शेषः ।। १३३ ।।

**गु.दी–** **उक्तेनेति** ।। 'चक्राब्जं भद्रकं वापि' (तं.सा.३-९६) इत्यादिनोक्तेनेत्यर्थः । **विधानेन** कलशस्थापनादिविधानेन । **तदर्धैः** पूर्वं स्थापनाकाले कृतापेक्षायाऽर्धैर्विभवैः । 'तथैव विभवैः' इति क्वचित्पाठः । **पादमात्रैः** उक्तचतुर्थभागैर्वा । **यथोदितं** 'स्नानं कारयेत्प्रणवेन तु' (तं.सा.३-१११) इत्याद्युक्तमनतिक्रम्य ।। १३३ ।।

**मङ्गाली–** तदनन्तरं सुधीः **उक्तेन** 'चक्राब्जं भद्रकं वापि' (तं.सा.३-९६) इत्यादिना पूर्वोक्तेन विधानेन **कलशस्थापनमूर्त्यावाहनपूजाभिषेकमन्त्रादि** विधाना । **तदर्धैः** पुनस्थापनाकाले क्रियमाणापेक्षयाऽर्धै**र्विभवै**रुपचारैः **पादमात्रैरपि** पादमात्रैर्वा उपचारैर्यथोदितं 'आनीय प्रतिमां स्नानं कारयेत्प्रणवेन तु' (३-१११) इत्यादिनोक्तमनुसृत्य हरिं स्नापयित्वा उद्धृत्य गर्भगृहात् बहिरानीय देवालयनिर्माणपर्यन्तं स्थानान्तरे स्थापयेदिति शेषः ।। १३३ ।।

देवालयोद्धरणानन्तरं पुनः प्रतिष्ठाभिधानम्

**तं.सा. एतेनैव विधानेन कृत्वा देवालयं पुनः ।**
**स्थापयेत्पुण्डरीकाक्षं द्विगुणेन प्रवाहना(णा)त् ॥ १३४ ॥**

**त.क.**– ततः किं कार्यमित्यत उक्तानुवादेन पुनस्तत्र स्थापनप्रकारमाह— **एतेनैवेति** ॥ **प्रवाहनात्** निर्गमनकाले प्रकृताद्विभवाद् द्विगुणेन विभवेन द्वारस्थमण्टपात् पुण्डरीकाक्षमानीय पुनस्तत्र स्थापयेदित्यर्थः ॥ १३४ ॥

**अ.सं.**– तदनन्तरकृत्यमाह– **एतेनैवेति** ॥ **एतेनैव विधानेन** 'किष्कुद्वादशतोऽनूनम्' (३-५४) 'मृद्दारुशैलैर्लोहैर्वा' (३-५७) इत्यादिना पूर्वोक्तेन प्रकारेण देवालयं कृत्वा तत्र **पुण्डरीकाक्षं** हरिं स्थापयेत् । तदनन्तरं **प्रवाहणात्** उद्धरणकालकृतोत्सवात् द्विगुणेन विभवेन ॥ १३४ ॥

**गु.दी.**– **एतेनैव विधानेन** 'किष्कुद्वादशतोऽन्यूनम्' (तं.सा.३-४९) इत्याद्युक्तविधानेन **प्रवाहणात्** सङ्कोचनार्थे स्नापनात् । **द्विगुणेन** विभवेन ॥१३४॥

**मङ्गाली**– तदनन्तरकृत्यमाह– **एतेनैवेति** ॥ **एतेनैव विधानेन** 'किष्कुद्वादशतोऽनूनम्' (३-५६) 'मृद्दारुशैलैर्लोहैर्वा' (३-५७) इत्यादिना पूर्वोक्तेन प्रकारेण देवालयं कृत्वा तत्र **पुण्डरीकाक्षं** हरिं ध्यायेत् । तदनन्तरं **प्रवाहणात्** उद्धरणकालकृतोत्सवात् द्विगुणेन विभवेन ॥ १३४ ॥

पुनः प्रतिष्ठाकाले तत्त्वमन्त्रदीनां जपविधानम्

**तं.शा. विभवेनानुलोमे(म्ये)न जप(पे)न्मन्त्रान् पुनस्तथा ।**
**आराधयेज्जगन्नाथं ध्यायन् भक्त्या यथोदितम् ॥ १३५ ॥**

**त.क.**– ततः कार्यमाह— **विभवेनानुलोमेनेति** ॥ अत्र—

गृहार्चास्थापनं वक्ष्ये यथावत्कमलासन ।
सौवर्णी राजती वाऽपि...... ॥ इत्याद्युपक्रम्य

हस्तमानमितार्चा स्याद्भवने पूर्वजन्मनः ।
अंगुलेरेकविंशत्या प्रतिमां वसुधापतेः ।

इति विंशत्येकविंशत्यादिकं दारुमय्प्रतिमायाः मानमभिधाय, 'नाधिका हस्तमानाच्च न न्यूना द्वादशांगुलात्' इति न्यूनाधिकययोरवधिं चोक्त्वा,

द्वादशांगुलमानार्चा लोहजा पूर्वजन्मनः ।
नवांगुला क्षत्रियस्य विशां सप्तांगुला मतम् ।।

पञ्चांगुला चतुर्थस्य प्रतिमा भवने भवेत् ।
प्रतिमा यन्मयी क्लृप्ता प्रभापीठादि तन्मयम् ।।

यद्वा सौवर्णबिम्बस्य राजतं ताम्रमेव वा ।
लोहेन चेदुत्तमेन प्रतिमा निर्मिता भवेत् ।।

तदनन्तरलोहेन प्रभापीठादि कल्पयेत् ।
त्रिलोहजायामर्चायां सौवर्णं च प्रभादिकम् ।।

रत्नस्फटिकजानां तु प्रतिमानां प्रभादिकम् ।
लोहजं स्मर्यते ब्रह्मन् रहस्यमिदमीरितम् ।।

गृहे संहार(संवाद)शयनं नार्चयीत कदाचन ।
भगवन्मूर्तयस्त्वन्याः सर्वाः पूज्या यथायथम् ।।

श्रीभूमिसहितं देवं श्रिया केवलयाऽपि वा ।
सहितं पूजयेद्भु(भ)क्तिमुक्तिकामो निकेतने ।।

पूजास्थानं गृहे चोक्तं नैऋत्यां दिशि नान्यथा ।
अर्चयेद्भवनेष्वर्चां यजमानो यथोदितम् ।।

तत्प्रतिष्ठार्थमाचार्यमभ्यर्थ्य गमयेद् गृहम् ।
अङ्गणे वा नदीतीरे क्षेत्रे यद्वा सुपूजिते ।।

वेदिकां परितः क्लृप्ते होमकुण्डचतुष्टये ।
एकस्मिन् वा गुणः कुर्यात् प्रतिष्ठाकर्म पूर्ववत् ।।

अंकुरानर्पयित्वाऽग्रे जलाधिवसनान्ततः ।
नयनोन्मीलनं चापि कृत्वा पूर्वोक्तवर्त्मना ।।

पाद्यमर्घ्यं तथाऽऽचामं पञ्चगव्यं घृतं दधि ।
पयो मधु कषायं च उष्णाम्भः फलवारि च ॥

मार्जनाम्भोऽक्षताम्भश्च रत्नाम्भो लोहवारि च ।
गन्धाम्भश्च यवाम्भश्च क्रमेणानेन पद्मज ॥

स्नापयेच्च नृसूक्तेन तथेदं विष्णुरित्यृचा ।
स्नापनं कारयेद्विद्वान् मन्त्रैः प्रागुक्तवर्त्मना ॥

शयनादिकमन्यच्च क्रियाजातं यथापुरम् ।
महाप्रतिष्ठाविधिवत् कर्म कुर्याद्गुरुः स्वयम् ॥

प्रतिमास्थापनस्थाने रत्नन्यसनपूर्वकम् ।
प्राप्ते मुहूर्ते प्रतिमा स्थावरा चेदभीप्सिता ॥

स्थाने तां स्थापयित्वैव कुर्यादावाहनादिकम् ।
जङ्गमा चेदभिप्रेता वेद्यामावाहनादिकम् ॥

कुर्यात्तदनु तां स्थाने स्थापयेद्विधिपूर्वकम् ।
आचार्यचोदितो भूमौ दण्डवत्पतितः स्वयम् ॥

यजमानः प्रार्थयीत मनीषितमशेषतः ।
दासोऽस्मि तव देवेश सपुत्रगणबान्धवः ॥

सन्निधत्स्व गृहे यावदन्वयोऽयं ममाच्युत ।
पूजां मया यथाशक्ति विहितां विमलामपि ॥

गृह्णीष्व भगवन् भक्तजनानुग्रहकाम्यया ।
याचयित्वाऽथदेवेशमित्थमाचार्यसन्निधौ ॥

गुरवे दक्षिणां दद्यात् यथाविभवविस्तरम् ।
यथा च तृप्तिस्तस्य स्यात् ऋत्विजामपि पूर्ववत् ॥

ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ।
स्थापयित्वार्चयेद्देवं भक्तिमान् भक्तवत्सलम् ॥

भुक्त्वा भोगान् सुविस्तीर्णान् प्रेत्य नैवाभिजायते ।
भवने स्थापितो विष्णुः पुष्णाति कुलमात्मनः ।
मन्दिरे तु जगत्सर्वं पुष्णाति स्थापितो हरिः ।।

इत्यादिना गृहार्चाप्रतिष्ठाप्रकारं तत्पूजाप्रकारं चाभिधाय,

सालग्रामशिला श्वेता सोम्य सर्वफलप्रदा ।
श्रीकरी पीतवर्णा च रक्ता कामप्रदा सदा ।।

कृष्णा पुष्टिप्रदा नित्यं पिङ्गला रोगदा सदा ।
शिलाश्चक्रसरिज्जाताः सर्वा मोक्षफलप्रदाः ।।

मूर्तिभिर्गर्भिताः शुद्धाः सर्वाश्चक्रसरिद्भवाः ।
प्रादुर्भावैश्च मानाद्यैस्तथा दिव्यायुधैरपि ।।

लाञ्छिताः कौस्तुभाद्यैश्च भूषणैः कमलासन ।
अङ्किताः पूजनीयाः स्युर्भक्तिमुक्तिफलार्थिभिः ।।

सर्वाः स्वायम्भवा ज्ञेयाः शिलाश्चक्रसरिद्भवाः ।
नित्यं सन्निधिरेतासु परस्य परमात्मनः ।।

न प्रतिष्ठा विधातव्या न चैवावाहनादिकम् ।
सालग्रामशिला यत्र पूज्यते भगवन्मयैः ।।

तद्देशे योजनादर्वाग्र मृतो निर्वाणमश्नुते ।
द्वारावत्याः शिलाश्चापि सालग्रामशिलासमाः ।।

इत्यादिना सालग्रामशिलायाः द्वारावतीशिलायाश्च सप्रपञ्चं पूजनमभिहितं पञ्चरात्रेषु। तत्सूचनया संग्रहीष्यति— **सम्यगुक्तविधानत इति ।।** पञ्चरात्रोक्तविधानतः सम्यक् गृहेऽप्यर्चां प्रतिष्ठाप्य तत्पूजनं सालग्रामादिपूजनं च सम्यक् प्रतिदिनं कर्तव्यमिति शेषः। एवं गृहे वा देवालये वा सृष्टिक्रमेणैव स्वस्वमन्त्रांश्च पुनः सन्निधानसिद्धये जपेत्। ततो यथोचितं यथाशक्ति पूर्ववत् चक्राब्जादिकमण्डलं लिखित्वा तत्राभिषेकपात्राणि स्थापयित्वा पूर्ववत् सम्पूज्य जगन्नाथं भक्त्या ध्यायन् आराधयेदभिषिञ्चेदित्यध्याहारेण योज्यम् ।।१३५।।

पाद्यमर्घ्यं तथाऽऽचामं पञ्चगव्यं घृतं दधि ।
पयो मधु कषायं च उष्णाम्भः फलवारि च ॥

मार्जनाम्भोऽक्षताम्भश्च रत्नाम्भो लोहवारि च ।
गन्धाम्भश्च यवाम्भश्च क्रमेणानेन पद्मज ॥

स्नापयेच्च नृसूक्तेन तथेदं विष्णुरित्यृचा ।
स्नापनं कारयेद्विद्वान् मन्त्रैः प्रागुक्तवर्त्मना ॥

शयनादिकमन्यच्च क्रियाजातं यथापुरम् ।
महाप्रतिष्ठाविधिवत् कर्म कुर्याद्गुरुः स्वयम् ॥

प्रतिमास्थापनस्थाने रत्नन्यसनपूर्वकम् ।
प्राप्ते मुहूर्ते प्रतिमा स्थावरा चेदभीप्सिता ॥

स्थाने तां स्थापयित्वैव कुर्यादावाहनादिकम् ।
जङ्गमा चेदभिप्रेता वेद्यामावाहनादिकम् ॥

कुर्यात्तदनु तां स्थाने स्थापयेद्विधिपूर्वकम् ।
आचार्यचोदितो भूमौ दण्डवत्पतितः स्वयम् ॥

यजमानः प्रार्थयीत मनीषितमशेषतः ।
दासोऽस्मि तव देवेश सपुत्रगणबान्धवः ॥

सन्निधत्स्व गृहे यावदन्वयोऽयं ममाच्युत ।
पूजां मया यथाशक्ति विहितां विमलामपि ॥

गृह्णीष्व भगवन् भक्तजनानुग्रहकाम्यया ।
याचयित्वाऽथदेवेशमित्थमाचार्यसन्निधौ ॥

गुरवे दक्षिणां दद्यात् यथाविभवविस्तरम् ।
यथा च तृप्तिस्तस्य स्यात् ऋत्विजामपि पूर्ववत् ॥

ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् ।
स्थापयित्वार्चयेद्देवं भक्तिमान् भक्तवत्सलम् ॥

भुक्त्वा भोगान् सुविस्तीर्णान् प्रेत्य नैवाभिजायते ।
भवने स्थापितो विष्णुः पुष्णाति कुलमात्मनः ।
मन्दिरे तु जगत्सर्वं पुष्णाति स्थापितो हरिः ।।

इत्यादिना गृहार्चाप्रतिष्ठाप्रकारं तत्पूजाप्रकारं चाभिधाय,

सालग्रामशिला श्वेता सोम्य सर्वफलप्रदा ।
श्रीकरी पीतवर्णा च रक्ता कामप्रदा सदा ।।

कृष्णा पुष्टिप्रदा नित्यं पिङ्गला रोगदा सदा ।
शिलाश्चक्रसरिज्जाताः सर्वा मोक्षफलप्रदाः ।।

मूर्तिभिर्गर्भिताः शुद्धाः सर्वाश्चक्रसरिद्भवाः ।
प्रादुर्भावैश्च मानाद्यैस्तथा दिव्यायुधैरपि ।।

लाञ्छिताः कौस्तुभाद्यैश्च भूषणैः कमलासन ।
अङ्किताः पूजनीयाः स्युर्भक्तिमुक्तिफलार्थिभिः ।।

सर्वाः स्वायम्भवा ज्ञेयाः शिलाश्चक्रसरिद्भवाः ।
नित्यं सन्निधिरेतासु परस्य परमात्मनः ।।

न प्रतिष्ठा विधातव्या न चैवावाहनादिकम् ।
सालग्रामशिला यत्र पूज्यते भगवन्मयैः ।।

तद्देशे योजनादर्वाग्र मृतो निर्वाणमश्नुते ।
द्वारावत्याः शिलाश्चापि सालग्रामशिलासमाः ।।

इत्यादिना सालग्रामशिलायाः द्वारावतीशिलायाश्च सप्रपञ्चं पूजनमभिहितं पञ्चरात्रेषु। तत्सूचनया संग्रहीष्यति— **सम्यगुक्तविधानत इति ।।** पञ्चरात्रोक्तविधानतः सम्यक् गृहेऽप्यर्चां प्रतिष्ठाप्य तत्पूजनं सालग्रामादिपूजनं च सम्यक् प्रतिदिनं कर्तव्यमिति शेषः। एवं गृहे वा देवालये वा सृष्टिक्रमेणैव स्वस्वमन्त्रांश्च पुनः सन्निधानसिद्धये जपेत्। ततो यथोचितं यथाशक्ति पूर्ववत् चक्राब्जादिकमण्डलं लिखित्वा तत्राभिषेकपात्राणि स्थापयित्वा पूर्ववत् सम्पूज्य जगन्नाथं भक्त्या ध्यायन् आराधयेदभिषिञ्चेदित्यध्याहारेण योज्यम् ।।१३५।।

**अ.सं.– तथा** पुनः **मन्त्रान्** तत्त्वमन्त्रान् तत्तन्मूर्तिमन्त्रं च **अनुलोमेन** क्रमेण 'जपन् भक्त्या यथोदितं' 'ध्यायेत्तेजोमयीं पुनः'(३-१३५) 'प्रतिमां प्रतिमांतस्थां । तन्मध्ये परमं वपुः'(३-११४) इत्यादिनोदितमनुसृत्य जगन्नाथं ध्यायन् **आराधयेत्** पूजयेत् ।। १३१, १३५ ।।

**गु.दी.– मन्त्रान्** तत्त्वमन्त्रादीन् । **अनुलोमेन** क्रमेण । **यथोदितं** 'मम स्वामी हरिर्नित्यम्' (अनु.व्या.४-१-४) इत्याद्यन्यत्रोक्तप्रकारमनतिक्रम्य जगन्नाथं ध्यायन् ।। १३५ ।।

**मङ्काली– तथा पुनर्मन्त्रान्** तत्वमन्त्रान् तत्तन्मूर्तिमन्त्रं च **अनुलोमेन** क्रमेण जपन् भक्त्या **यथोदितं** 'ध्यायेत् तेजोमयीं पुनः । प्रतिमां प्रतिमांतस्थां तन्मध्ये परमं वपुः'(३-११४) इत्यादिनोदितमनुसृत्य जगन्नाथं ध्यायन्नाराधयेत् ।। १३५ ।।

पुनः प्रतिष्ठाकाले अवभृतार्थं यात्राकथनम्, प्रत्युत्सवेषु कलशाभिषेकयात्राबलिदानविधानम्

**तं.सा.** **यात्राऽपि पूर्ववत्तत्राप्युत्सवेषु च सर्वशः ।**
**कलशोक्तविधानेन पूजा बलिहृतिस्तथा ।। १३६ ।।**

**उत्सवेषु सदा कार्या कलशश्चोत्सवादनु ।**
**यात्रा स्नानं(स्थानं) च कर्तव्यं सम्यगुक्तविधानतः।।१३७।।**

**त.क.–** तदनन्तरकृत्यमाह— **यात्राऽपि पूर्ववत्तत्रापीति ।।** कार्येति च वक्ष्यमाणमत्रापि सम्बध्यते । जीर्णालयाद्युद्धारेऽपि महाराजविभूत्यादिनोक्तप्रकारेण अवभृथस्नानार्थं यात्राऽपि कार्येत्यर्थः । अत्र साक्षादुक्त्या तन्मात्रप्रतीतिविषयत्वं वारयन् यात्रामन्यत्राप्यतिदिशति । सर्वेष्वप्युत्सवेषु यात्रा पूर्ववत् कार्येति वक्ष्यमाणमावृत्त्या योज्यम् । अतिदेशप्रसङ्गात् कलशाभिषेकं बलिहरणं च नोक्तमप्यत्रातिदिशाति— **कलशोक्तेति ।।** उत्सवेषूपक्रम्यमाणेषु सर्वत्र वहिर्निर्गमनात् प्राक् कलशोक्तविधानेन प्रतिष्ठाप्रस्तावोक्तेन विधानेन भगवतः प्रतिमापूजा 'द्वारपतिभ्यश्च'(३-१२१) इत्यादिनोक्तबलिहृतिश्च कार्या । **उत्सवादनु**

उत्सवादनन्तरं च **कलशः** कलशाभिषेकः, यात्रा, स्नानमवभृथस्नानं, चशब्दात् पूर्ववदागत्येत्यादिनोक्तं गुरुपूजान्तं कार्यमिति संबन्धः ।। १३६,१३७ ।।

**अ.सं.–** अत्रापि अवभृथस्नानमाह– **यात्राऽपीति ।। तत्रापि** जीर्णदेवालयोद्धृतावपि **पूर्ववत्** 'स्वाध्यायैर्गीतनृत्यकैः'(३-१२७) इति पूर्वोक्तप्रकारेण यात्राऽपि अवभृथस्नानार्थं कार्येति शेषः । प्रसङ्गात् यात्रां रथोत्सवादिषु अतिदिशति– **उत्सवेष्विति ।।** सर्वेषु उत्सवेषु यात्रा कार्येति सम्बन्धः । उत्सवेषु कार्यान्तरं वदन्नुक्तमेव विवृणोति– **कलशेति ।। सदा उत्सवेषु** प्रत्युत्सवं **कलशोक्तविधानेन** कलशे उक्तेन विधानेन कलशस्थापनपूर्वकमभिषेकविधिनेत्यर्थः । पूजा कार्या । तथा **बलिहृतिः** बलिदानं च कार्यम् । **उत्सवादनु** उत्सवानन्तरं 'सम्यगुक्तविधानतः' (३-१३७) 'नयेत्ततो महाराजभूत्या' (३-१२७) इदिनोक्तप्रकारेण । यात्रा अवभृथस्नानार्थं तीर्थविशेषं प्रतिगमनम् तथा **स्नानम्** अवभृथस्नानं च प्रतिमायाः **कर्त्तव्यं** कारयितव्यम् । तथा अवभृथस्नानानन्तरमुक्तविधानतः स्नापयेत् । पूर्ववन्मन्त्रैरित्याद्युक्तकारेण **कलशश्च** कलशाभिषेकश्च कार्य इत्यर्थः ।। १३६, १३७ ।।

**गु.दी.– तत्रापि** जीर्णदेवालयोद्धृतावपि । **पूर्ववत्** 'स्वाध्यायैः गीतनर्तनैः' इति (तं.सा.३-१२७) पूर्वोक्तप्रकारेणावभृथस्नानार्थं यात्रापि कर्तव्येति शेषः । **सर्वशः** सर्वेषु **उत्सवेषु** । रथोत्सवादिषु च यात्रा कर्तव्येति सम्वन्धः ।।

एतदेव विवृणोति— **कलशेत्यादिना विधानत इत्यन्तेन ।।** कलशेषूक्तं यद्विधानं मण्डलकरणादि विधानं तेनेत्यर्थः । **तथा बलिहृतिः** बलिदानं च **।। कलशश्चोत्सवादन्विति ।।** अयं भावः । प्रतिष्ठादिस्थले पूर्वं, कलशार्चनादि उत्सवे त्वनन्तरमिति ।। **यात्रास्थानं** देवयात्रार्थं स्थानमुपवनादि । आगमोक्तविधानतः सम्यक्कर्तव्यमित्यर्थः । 'यात्रास्नानं' इति पाठे द्वन्द्वैकवद्भावः । **यात्रा** वनयात्राऽवभृथस्नानं चेत्यर्थः । जीर्णोद्धारादिफलं मोक्षधर्मे—

जीर्णस्फुटितसन्धानं यः करोति हरेर्गृहे ।
आरामावसथाद्येषु लभ्यते मौक्तिकं फलम् ।।

**अ.सं.– तथा** पुनः **मन्त्रान्** तत्त्वमन्त्रान् तत्तन्मूर्तिमन्त्रं च **अनुलोमेन** क्रमेण 'जपन् भक्त्या यथोदितं' 'ध्यायेत्तेजोमयीं पुनः'(३-१३५) 'प्रतिमां प्रतिमांतस्थां । तन्मध्ये परमं वपुः'(३-११४) इत्यादिनोदितमनुसृत्य जगन्नाथं ध्यायन् **आराधयेत्** पूजयेत् ।। १३१, १३५ ।।

**गु.दी.– मन्त्रान्** तत्त्वमन्त्रादीन् । **अनुलोमेन** क्रमेण । **यथोदितं** 'मम स्वामी हरिर्नित्यम्' (अनु.व्या.४-१-४) इत्याद्यन्यत्रोक्तप्रकारमनतिक्रम्य जगन्नाथं ध्यायन् ।। १३५ ।।

**मङ्गाली– तथा पुनर्मन्त्रान्** तत्वमन्त्रान् तत्तन्मूर्तिमन्त्रं च **अनुलोमेन** क्रमेण जपन् भक्त्या **यथोदितं** 'ध्यायेत् तेजोमयीं पुनः । प्रतिमां प्रतिमांतस्थां तन्मध्ये परमं वपुः'(३-११४) इत्यादिनोदितमनुसृत्य जगन्नाथं ध्यायन्नाराधयेत् ।। १३५ ।।

पुनः प्रतिष्ठाकाले अवभृतार्थं यात्राकथनम्, प्रत्युत्सवेषु कलशाभिषेकयात्राबलिदानविधानम्

**तं.सा. यात्राऽपि पूर्ववत्तत्राप्युत्सवेषु च सर्वशः ।**
**कलशोक्तविधानेन पूजा बलिहृतिस्तथा ।। १३६ ।।**

**उत्सवेषु सदा कार्या कलशश्चोत्सवादनु ।**
**यात्रा स्नानं(स्थानं) च कर्तव्यं सम्यगुक्तविधानतः।।१३७।।**

**त.क.–** तदनन्तरकृत्यमाह— **यात्राऽपि पूर्ववत्तत्रापीति ।।** कार्येति च वक्ष्यमाणमत्रापि सम्बध्यते । जीर्णालयाद्युद्धारेऽपि महाराजविभूत्यादिनोक्तप्रकारेण अवभृथस्नानार्थं यात्राऽपि कार्येत्यर्थः । अत्र साक्षादुक्त्या तन्मात्रप्रतीतिविषयत्वं वारयन् यात्रामन्यत्राप्यतिदिशति । सर्वेष्वप्युत्सवेषु यात्रा पूर्ववत् कार्येति वक्ष्यमाणमावृत्त्या योज्यम् । अतिदेशप्रसङ्गात् कलशाभिषेकं बलिहरणं च नोक्तमप्यत्रातिदिशाति— **कलशोक्तेति ।।** उत्सवेषूपक्रम्यमाणेषु सर्वत्र वहिर्निर्गमनात् प्राक् कलशोक्तविधानेन प्रतिष्ठाप्रस्तावोक्तेन विधानेन भगवतः प्रतिमापूजा 'द्वारपतिभ्यश्च'(३-१२१) इत्यादिनोक्तबलिहृतिश्च कार्या । **उत्सवादनु**

उत्सवादनन्तरं च **कलशः** कलशाभिषेकः, यात्रा, स्नानमवभृथस्नानं, चशब्दात् पूर्ववदागत्येत्यादिनोक्तं गुरुपूजान्तं कार्यमिति संबन्धः ।। १३६,१३७ ।।

**अ.सं.–** अत्रापि अवभृथस्नानमाह– **यात्राऽपीति ।। तत्रापि** जीर्णदेवालयोद्धृतावपि **पूर्ववत्** 'स्वाध्यायैर्गीतनृत्यकैः'(३-१२७) इति पूर्वोक्तप्रकारेण यात्राऽपि अवभृथस्नानार्थं कार्येति शेषः । प्रसङ्गात् यात्रां रथोत्सवादिषु अतिदिशति– **उत्सवेष्विति ।।** सर्वेषु उत्सवेषु यात्रा कार्येति सम्बन्धः । उत्सवेषु कार्यान्तरं वदन्नुक्तमेव विवृणोति– **कलशेति ।। सदा उत्सवेषु** प्रत्युत्सवं **कलशोक्तविधानेन** कलशे उक्तेन विधानेन कलशस्थापनपूर्वकमभिषेकविधिनेत्यर्थः । पूजा कार्या । तथा **बलिहृतिः** बलिदानं च कार्यम् । **उत्सवादनु** उत्सवानन्तरं 'सम्यगुक्तविधानतः' (३-१३७) 'नयेत्ततो महाराजभूत्या' (३-१२७) इदिनोक्तप्रकारेण । यात्रा अवभृथस्नानार्थं तीर्थविशेषं प्रतिगमनम् तथा **स्नानम्** अवभृथस्नानं च प्रतिमायाः **कर्त्तव्यं** कारयितव्यम् । तथा अवभृथस्नानानन्तरमुक्तविधानतः स्नापयेत् । पूर्ववन्मन्त्रैरित्याद्युक्तकारेण **कलशश्च** कलशाभिषेकश्च कार्य इत्यर्थः ।। १३६, १३७ ।।

**गु.दी.– तत्रापि** जीर्णदेवालयोद्धृतावपि । **पूर्ववत्** 'स्वाध्यायैः गीतनर्तनैः' इति (तं.सा.३-१२७) पूर्वोक्तप्रकारेणावभृथस्नानार्थं यात्रापि कर्तव्येति शेषः । **सर्वशः** सर्वेषु **उत्सवेषु** । रथोत्सवादिषु च यात्रा कर्तव्येति सम्वन्धः ।।

एतदेव विवृणोति— **कलशेत्यादिना विधानत इत्यन्तेन ।।** कलशेषूक्तं यद्विधानं मण्डलकरणादि विधानं तेनेत्यर्थः । **तथा बलिहृतिः** बलिदानं च **।। कलशश्चोत्सवादन्विति ।।** अयं भावः । प्रतिष्ठादिस्थले पूर्वं, कलशार्चनादि उत्सवे त्वनन्तरमिति ।। **यात्रास्थानं** देवयात्रार्थं स्थानमुपवनादि । आगमोक्तविधानतः सम्यक्कर्तव्यमित्यर्थः । 'यात्रास्नानं' इति पाठे द्वन्द्वैकवद्भावः । **यात्रा** वनयात्राऽवभृथस्नानं चेत्यर्थः । जीर्णोद्धारादिफलं मोक्षधर्मे—

जीर्णस्फुटितसन्धानं यः करोति हरेर्गृहे ।
आरामावसथाद्येषु लभ्यते मौक्तिकं फलम् ।।

**अ.सं.– तथा** पुनः **मन्त्रान्** तत्त्वमन्त्रान् तत्तन्मूर्तिमन्त्रं च **अनुलोमेन** क्रमेण 'जपन् भक्त्या यथोदितं' 'ध्यायेत्तेजोमयीं पुनः'(३-१३५) 'प्रतिमां प्रतिमांतस्थां। तन्मध्ये परमं वपुः'(३-११४) इत्यादिनोदितमनुसृत्य जगन्नाथं ध्यायन् **आराधयेत्** पूजयेत् ।। १३१, १३५ ।।

**गु.दी.– मन्त्रान्** तत्त्वमन्त्रादीन्। **अनुलोमेन** क्रमेण । **यथोदितं** 'मम स्वामी हरिर्नित्यम्' (अनु.व्या.४-१-४) इत्याद्यन्यत्रोक्तप्रकारमनतिक्रम्य जगन्नाथं ध्यायन् ।। १३५ ।।

**मङ्गाली– तथा पुनर्मन्त्रान्** तत्वमन्त्रान् तत्तन्मूर्तिमन्त्रं च **अनुलोमेन** क्रमेण जपन् भक्त्या **यथोदितं** 'ध्यायेत् तेजोमयीं पुनः । प्रतिमां प्रतिमांतस्थां तन्मध्ये परमं वपुः'(३-११४) इत्यादिनोदितमनुसृत्य जगन्नाथं ध्यायन्नाराधयेत् ।। १३५ ।।

पुनः प्रतिष्ठाकाले अवभृतार्थं यात्राकथनम्, प्रत्युत्सवेषु कलशाभिषेकयात्राबलिदानविधानम्

**तं.सा.** **यात्राऽपि पूर्ववत्तत्राप्युत्सवेषु च सर्वशः ।**
**कलशोक्तविधानेन पूजा बलिहृतिस्तथा ।। १३६ ।।**

**उत्सवेषु सदा कार्या कलशश्चोत्सवादनु ।**
**यात्रा स्नानं(स्थानं) च कर्तव्यं सम्यगुक्तविधानतः।।१३७।।**

**त.क.–** तदनन्तरकृत्यमाह— **यात्राऽपि पूर्ववत्तत्रापीति ।।** कार्येति च वक्ष्यमाणमत्रापि सम्बध्यते। जीर्णालयाद्युद्धारेऽपि महाराजविभूत्यादिनोक्तप्रकारेण अवभृथस्नानार्थं यात्राऽपि कार्येत्यर्थः। अत्र साक्षादुक्त्या तन्मात्रप्रतीतिविषयत्वं वारयन् यात्रामन्यत्राप्यतिदिशति। सर्वेष्वप्युत्सवेषु यात्रा पूर्ववत् कार्येति वक्ष्यमाणमावृत्त्या योज्यम्। अतिदेशप्रसङ्गात् कलशाभिषेकं बलिहरणं च नोक्तमप्यत्रातिदिशाति— **कलशोक्तेति ।।** उत्सवेषूपक्रम्यमाणेषु सर्वत्र बहिर्निर्गमनात् प्राक् कलशोक्तविधानेन प्रतिष्ठाप्रस्तावोक्तेन विधानेन भगवतः प्रतिमापूजा 'द्वारपतिभ्यश्च'(३-१२१) इत्यादिनोक्तबलिहृतिश्च कार्या। **उत्सवादनु**

उत्सवादनन्तरं च **कलशः** कलशाभिषेकः, यात्रा, स्नानमवभृथस्नानं, चशब्दात् पूर्ववदागत्येत्यादिनोक्तं गुरुपूजान्तं कार्यमिति संबन्धः ।। १३६,१३७ ।।

**अ.सं.–** अत्रापि अवभृथस्नानमाह– **यात्राऽपीति ।। तत्रापि** जीर्णदेवालयोद्धृतावपि **पूर्ववत्** 'स्वाध्यायैर्गीतनृत्यकैः'(३-१२७) इति पूर्वोक्तप्रकारेण यात्राऽपि अवभृथस्नानार्थं कार्येति शेषः । प्रसङ्गात् यात्रां रथोत्सवादिषु अतिदिशति– **उत्सवेष्विति ।।** सर्वेषु उत्सवेषु यात्रा कार्येति सम्वन्धः । उत्सवेषु कार्यान्तरं वदन्नुक्तमेव विवृणोति– **कलशेति ।। सदा उत्सवेषु** प्रत्युत्सवं **कलशोक्तविधानेन** कलशे उक्तेन विधानेन कलशस्थापनपूर्वकमभिषेकविधिनेत्यर्थः । पूजा कार्या । तथा **बलिहृतिः** बलिदानं च कार्यम् । **उत्सवादनु** उत्सवानन्तरं 'सम्यगुक्तविधानतः' (३-१३७) 'नयेत्ततो महाराजभूत्या' (३-१२७) इदिनोक्तप्रकारेण । यात्रा अवभृथस्नानार्थं तीर्थविशेषं प्रतिगमनम् तथा **स्नानम्** अवभृथस्नानं च प्रतिमायाः **कर्त्तव्यं** कारयितव्यम् । तथा अवभृथस्नानानन्तरमुक्तविधानतः स्नापयेत् । पूर्ववन्मन्त्रैरित्याद्युक्तकारेण **कलशश्च** कलशाभिषेकश्च कार्य इत्यर्थः ।। १३६, १३७ ।।

**गु.दी.– तत्रापि** जीर्णदेवालयोद्धृतावपि । **पूर्ववत्** 'स्वाध्यायैः गीतनर्तनैः' इति (तं.सा.३-१२७) पूर्वोक्तप्रकारेणावभृथस्नानार्थं यात्रापि कर्तव्येति शेषः । **सर्वशः सर्वेषु उत्सवेषु** । रथोत्सवादिषु च यात्रा कर्तव्येति सम्वन्धः ।।

एतदेव विवृणोति— **कलशेत्यादिना विधानत इत्यन्तेन ।।** कलशेषूक्तं यद्विधानं मण्डलकरणादि विधानं तेनेत्यर्थः । **तथा बलिहृतिः** बलिदानं च **।। कलशश्चोत्सवादन्विति ।।** अयं भावः । प्रतिष्ठादिस्थले पूर्वं, कलशार्चनादि उत्सवे त्वनन्तरमिति ।। **यात्रास्थानं** देवयात्रार्थं स्थानमुपवनादि । आगमोक्तविधानतः सम्यक्कर्तव्यमित्यर्थः । 'यात्रास्नानं' इति पाठे द्वन्द्वैकवद्भावः । **यात्रा** वनयात्राऽवभृथस्नानं चेत्यर्थः । जीर्णोद्धारादिफलं मोक्षधर्मे—

जीर्णस्फुटितसन्धानं यः करोति हरेर्गृहे ।
आरामावसथाद्येषु लभ्यते मौक्तिकं फलम् ।।

प्रत्यब्दं यः प्रकुर्वीत विष्णोरायतनं नवम् ।
यावद्वर्षसहस्राणि सवितुर्लोकमेष्यति ।। इति ।।१३६,१३७ ।।

**मङ्गाली–** अत्रापि अवभृथस्नानमाह– **यात्रापीति** ।। **तत्रापि** जीर्णदेवालयोधृतावपि **पूर्ववत्** 'स्वाध्यायैर्गीतनर्तनैः'(३-१२७)इति पूर्वोक्तप्रकारेण यात्रापि अवभृथस्नानार्थं कार्येति शेषः । प्रसङ्गात् यात्रां रथोत्सवादिष्वतिदिशति– **उत्सवेष्विति** ।। सर्वेषु उत्सवेषु च यात्रा कार्येति सम्बन्धः । उत्सवेषु कार्यान्तरं वदन् उक्तमेव विवृणोति– **कलशेति** ।। **सदा** **उत्सवेषु** प्रत्युत्सवं **कलशोक्तविधानेन** कलशे उक्तेन विधानेन कलशस्थापनपूर्वकं अभिषेकविधानेत्यर्थः । पूजा कार्या । तथा **बलिहृतिः** बलिदानं च कार्यं **उत्सवादनु** उत्सवानन्तरं **सम्यगुक्तविधानतः** 'नयेत्ततो महाराजविभूत्या' (३-१२७) इत्यादिनोक्तप्रकारेण **यात्रा** वभृथस्नानार्थं तीर्थविशेषं प्रतिगमनं, तथा **स्नानं** अवभृथस्नानं च प्रतिमायाः **कर्तव्यं** कारयितव्यम् । तथाऽवभृथस्नानानन्तरं उक्तविधानतः स्नापयेत् । पूर्ववन्मन्त्रैरित्याद्युक्तप्रकारेण कलशश्च कलशाभिषेकश्च कार्य इत्यर्थः ।। १३६,१३७ ।।

सम्प्रोक्षणनिमित्तकथनपुरस्सरं सम्प्रोक्षणाभिधानम्

**तं.सा.** **चोरचा(च)ण्डालपतितश्वोदक्यादिप्रवेशने ।**
**शवाद्युपहतौ चैव पूजाविच्छेदने तथा ।। १३८ ।।**
**स्ना(स्था, स्न)पनोक्तेन मार्गेण प्रायश्चित्तकृतिः(विधः)स्मृता।**
**सर्वत्र विष्णुगायत्र्या होमः स्यादयुतावरः (अयुतोत्तरः)**
**।। १३९ ।।**

**त.क.–** एवं बहुकालं पूजायां क्रियमाणायां कैश्चिदुपसर्गैरभिहतायां का प्रायश्चितिरित्यपेक्षायां—

प्रासादे चाङ्गभङ्गादिसन्धाने नूतने कृते ।
प्रतिमायां च पीठे च प्रभायां चायुधेऽपि च ।।

आराधने च विच्छिन्ने मासादौ कमलासन ।
स्पर्शने प्रतिलोमाद्यैर्नित्याशौचविगर्हितैः ॥

उदक्यादिभिरन्यैश्च शिल्पिभिः स्पर्शदूषिते ।
विण्मूत्ररुधिरापेयस्पर्शदोषे च मन्दिरे ॥

जनने मरणे चैव श्वसृगालशवादिभिः ।
स्पृष्टे च बिम्बे तन्त्राणां सङ्करे समुपस्थिते ॥

एवमादिषु चान्येषु संप्रोक्षणविधिर्भवेत् ।
धामाधिकमसंप्रोक्ष्य प्रतिमादिकमप्यथ ॥

अर्चने राष्ट्रमधिपः प्रजाश्च सदनं हरेः ।
शून्यं स्यादिरिणप्रायमुपद्रवसमाकुलम् ॥

दुर्भिक्षव्याधिकलहमृतप्रायाः स्युरीतयः ।
तस्मात्सम्प्रोक्षणं कार्यं धामादीनां यथाविधि ॥

विष्णोर्नुकमिति स्वच्छैर्जलैः प्रोक्षणमिष्यते ।
अब्लिङ्गैरितरैर्मन्त्रैराचार्यो ब्राह्मणैः सह ॥

ध्रुवबेरादिबिम्बानां शोधने क्षालने कृते ।
इदं विष्णुरितिप्रायैर्मन्त्रैः परमपावनैः ॥

स्नपनं तु यथाशक्ति कुर्यात् पुण्याहपूर्वकम् ।
कुण्डे वा स्थण्डिले वाऽपि जुहुयात्समिधादिभिः ।
प्रत्येकमष्टोत्तरशतं शान्तिहोमो यथापुरम् ॥

इत्यादिना पञ्चरात्रे संप्रोक्षणविधिरुक्तः । तं संगृह्णाति— **चोरेति** ॥ वचने **आदि**शब्देन संग्रहीताश्चोरादयो दर्शिताः। प्रथमेनादिशब्देन वचनोक्तानां सृगालादीनां ग्रहणम् । द्वितीयेन शिल्प्यादयः। **तथा**शब्देन मासादिकालविच्छेदो गृह्यते। **स्नापनोक्तेन** प्रतिष्ठाविधावुक्तेन। 'स्नपनोक्तेन' इति पाठे स्नपना प्रायश्चित्तकृतिश्चेति संबन्धः। वचने होममन्त्रानुक्तेः मन्त्राद्युक्तिपूर्वं होमं

विधत्ते— **विष्णुगायत्र्येति** ।। समिच्चर्वाज्यादिभिः प्रत्येकमष्टोत्तरशतहोमैरयुतत्वं सिद्ध्यतीति न विरोधः। एतमपि होममन्यास्वतिदिशति— **सर्वत्रेति** ।। प्रतिष्ठादिषु कार्येषु अयुतावरविष्णुगायत्र्या होमः कार्यः। न केवलं संप्रोक्षणमेवेत्यावृत्त्या योज्यम् ।। १३८, १३९ ।।

**अ.सं.**– इदानीं प्रतिमायाः सम्प्रोक्षणविधिं वक्तुं तन्निमित्तमाह– **चोरेति** ।। **पतितः** ब्रह्महत्यादिमहापातकेन अपगतजातिः । **उदकी** रजस्वला । **आदि**शब्देन गर्दभादिग्रहणम् । शवादीत्यादिशब्देन प्रसवादिग्राह्यम् । तदुक्तं हारीते–

> प्रसवे मरणे वाऽपि श्वसृगालशवाहते ।
> रजस्वलाप्रवेशे च सेके वर्षजलैरपि ।।
>
> पूजायाश्चैव विच्छेदे गर्दभादिप्रवेशने ।
> भूमौ खाते तथोच्छिष्टस्पर्शनेऽप्यङ्गनाहते ।।
> पुनः सम्प्रोक्षयेद्देवं ततः पूजां समाचरेत् ।। इति ।

अन्यच्च निमित्तमुक्तं पञ्चरात्रे–

> विण्मूत्रश्लेष्मसम्पर्के सम्प्रोक्ष्य च समर्चयेत् ।
> अन्यथा निष्कला पूजा महान् दोषश्च जायते ।।
>
> सम्प्रोक्षणविधानस्य न कालनियमः स्मृतः ।
> निमित्ते समनुप्राप्ते सद्यः कृत्वा समर्चयेत् ।। इति ।

एवं निमित्ते सति प्रतिमायाः सम्प्रोक्षणमेव कार्यम्। न पुनःप्रतिष्ठा कार्येत्युक्तम्। तत्रैव–

> पूर्वस्थापितबिम्बस्य न पुनःस्थापनं स्मृतम् ।
> स्थाप्यते चेन्महादोषस्तस्य सम्प्रोक्षणं स्मृतम् ।।
> जलाधिवासरहितं नेत्रोन्मीलनवर्जितम् ।। इति ।।

इदानीं सम्प्रोक्षणविधिमाह– **स्नापनेति** ।। प्रतिमाप्रतिष्ठाविधौ उक्तेन **मार्गेण** कलशस्थापनादिपूर्वकेण प्रकारेण स्नापना प्रतिमाया अभिषेकः । **प्रायश्चित्तकृतिः** प्रायश्चितस्य सम्प्रोक्षणरूपस्य कृतिः करणं स्मृतेत्यर्थः । 'स्थापनोक्तेन' इति पाठे

स्थापनायां प्रतिमाप्रतिष्ठाविधौ उक्तेनेत्यर्थः । तत्र स्थापने विशेषो ज्ञेयः । अत्र स्नानमात्रकथनेन पञ्चगव्याद्यधिवासाङ्कुरार्पणादिकं नास्तीति सूचितम् । 'तस्य सम्प्रोक्षणं स्मृतम् । जलाधिवासरहितं नेत्रोन्मीलनवर्जितं' इत्युक्तेः । अत्र कर्तव्यविशेषं वदन् तं सिंहावलोकनन्यायेन प्रतिष्ठादिष्वप्यतिदिशति– **सर्वत्रेति ।। सर्वत्र** प्रतिष्ठाजीर्णदेवालयोद्धरणसम्प्रोक्षणेषु विष्णुगायत्र्या मन्त्रेण **अयुतावरः** अयुतं दशसहस्रमवरं यस्मिन् होमे स तथोक्तः । अयुतात् अधिक एव होमः कार्यः न्यूनश्चेत् अयुतं होमः कार्य इति भावः ।। १३८,१३९ ।।

**गु.दी.**– इदानीं निमित्तपुरस्कारेण सम्प्रोक्षणविधानमाह— **चोरेति ।। पतितः** ब्राह्मणादिरेव महापातकेनापगतजातिः । वर्णबाह्य इत्यन्ये । **उदकी** रजस्वला । **उदक्या** रजस्वलेति अन्ये । **आदि**पदेन म्लेञ्छगर्दभादीनां ग्रहणम् । चोरादीनां देवमन्दिरान्तःप्रवेशे शवादीनामत्यशुचीनाम् **उपहतौ** स्पर्शे सति । शवादीत्यादिपदेन प्रसवादिग्रहणम् । पूजायाः मध्ये उच्छेदे जाते । तदुक्तं हारीतस्मृतौ—

.............प्रसवे मरणेऽपि वा ।
रजस्वलाप्रवेशे च सेके वर्षजलैरपि ।।

पूजायाश्चैव विच्छेदे गर्दभादिप्रवेशने ।
यवनादेस्तथोच्छिष्टस्पर्शनेऽप्यङ्गदाहने ।
पुनः सम्प्रोक्षयेद्बिम्बं न प्रतिष्ठां समाचरेत् ।। इति ।

**स्नापनोक्तेन मार्गेण** प्रतिष्ठादिकाले क्रियमाणं स्नापनम् अभिषेकस्तदुक्तेन मार्गेण । समन्त्रं होममाह— **सर्वत्रेति ।** प्रतिष्ठाजीर्णालयोद्धारोत्सवसम्प्रोक्षणेष्वित्यर्थः । **अयुतावरः** अवरपक्षे दशसहस्रसङ्ख्याको होमः । स्यात्कार्य इति शेषः । 'अयुतोत्तरः' इति क्वचित्पाठः । सम्प्रोक्षणे जलाधिवासादिकं नेति द्रष्टव्यम् ।

पूर्वस्थापितबिम्बस्य न पुनः स्थापनं स्मृतम् ।
स्थाप्यते चेन्महादोषस्तस्य सम्प्रोक्षणं स्मृतम् ।।

जलाधिवासरहितं नेत्रोन्मीलनवर्जितम् ।
विण्मूत्रश्लेष्मसम्पर्के सम्प्रोक्ष्यैव समर्चयेत् ।।

सम्प्रोक्षणविधानस्य न कालनियमः स्मृतः ।
निमित्ते समनुप्राप्ते सद्यः कृत्वा समर्चयेत् ।।

इति पञ्चरात्रवचनात् ।। १३८,१३९ ।।

**मङ्गाली–** इदानीं प्रतिमायाः संप्रोक्षणविधिं वक्तुं तन्निमित्तमाह– **चोरेति ।। पतितः** ब्रह्महत्यादिमहापातकेन अपगतजातिः, **उदकी** रजस्वा । **आदिशब्देन** गर्दभादिग्रहणम् । शवादीत्यादिशब्देन प्रसवादिग्राह्यम् । तदुक्तं हारीते–

प्रसवे मरणे वापि श्वसृगालशवाहते ।
रजस्वलाप्रवेशे च सेके वर्षजलैरपि ।।

पूजायाश्चैव विच्छेदे गर्दभादिप्रवेशने ।
भूमौ खाते तथोच्छिष्टस्पर्शनेऽप्यङ्गनाहते ।
पुनः संप्रोक्षयेद्बिम्वं ततः पूजां समाचरेत् ।। इति ।

अन्यच्च निमित्तमुक्तं पञ्चरात्रे–

विण्मूत्रश्लेष्मसंपर्के संप्रोक्ष्य च समर्चयेत् ।
अन्यथा निष्कला पूजा महान्दोषश्च जायते ।।

संप्रोक्षणविधानस्य न कालनियमः स्मृतः ।
निमित्ते समनुप्राप्ते सद्यः कृत्वा समर्चयेत् ।। इति ।

एवं निमित्ते सति प्रतिमायाः संप्रोक्षणमेव कार्यम् । न पुनः प्रतिष्ठा कार्येत्युक्तम् तत्रैव ।

पूर्वस्थापितबिम्वस्य न पुनःस्थापनं स्मृतम् ।
स्थाप्यते चेन्महादोषः तस्मात्संप्रोक्षणं स्मृतम् ।
जलाधिवासरहितं नेत्रोन्मीलनवर्जितम् ।। इति ।।

इदानीं संप्रोक्षणविधिमाह– **स्नापनेति ।।** प्रतिमाप्रतिष्ठाविधौ **उक्तेन मार्गेण** कलशस्थापनादि पूर्वकेण प्रकारेण । **स्नापना** प्रतिमायाः अभिषेकः

**प्रायश्चित्तकृतिः** प्रायश्चित्तस्य संप्रोक्षणरूपस्य कृतिः करणं स्मृतेत्यर्थः । 'स्थापनोक्तेन' इति पाठे स्थापनायां प्रतिमां प्रतिष्ठाविधौ उक्तेनेत्यर्थः । तत्र स्नापनेति शेषो ज्ञेयः । अत्र स्नापनमात्रकथनेन पञ्चगव्याधिवासांकुरार्पणादिकं नास्तीति सूचितम् । अत्र कर्तव्यविशेषं वदन् सिंहावलोकनन्यायेन प्रतिष्ठादिष्वप्यतिदिशति— **सर्वत्रेति ।। सर्वत्र** प्रतिष्ठाजीर्णदेवालयोद्धारण-संप्रोक्षणेषु विष्णुगायत्र्या मन्त्रेण **अयुतावरः** अयुतं दशसहस्रं अवरं यस्मिन्होमे स तथोक्तः । अयुताधिक एव होमः कार्यः न्यूनश्चेदयुतं होम इति भावः ।। १३८,१३९ ।।

विष्णुगायत्रीमन्त्रोद्धारः

**तं.सा. नावाव्याद्यभिधानानि(नु) विद्महे धीमहि तथा ।**
**प्रचोदयात्तृतीयाधस्तन्नो गायत्रिनामिका ।। १४० ।।**

**त.क.–** काऽसौ विष्णुगायत्री या सर्वहोमाङ्गतां धत्ते इत्याकांक्षायां चतुर्थे सङ्गतमपि विष्णुगायत्रीमन्त्रोद्धारं करोति— **नावेति ।।** नाश्च वाश्च विश्च नावावयः । स्वं रूपं शब्दस्येति न्यायेनैते तत्तच्छब्दपराः । नावावयः आदयः येषां तानि नावाव्यादीनि । तानि च तान्यभिधानानि च नारायणवासुदेवविष्ण्विति पदानि नावाव्याद्यभिधानानि । तेषामुच्चारणमनु उच्चारणानन्तरम् विद्महेति पदं, रहस्यत्वाद्व्यत्ययेनोक्तिः, प्रचोदयादिति पदं च **यथाक्रमं** नारायणशब्दानन्तरं विद्महे इति पदं, वासुदेवशब्दानन्तरं धीमहीति, विष्णुशब्दोत्तरं प्रचोदयादिति पदमेवं पदत्रयं प्रयोज्यमित्यर्थः । तृतीयपादे विशेषं चाह— **तृतीयाध इति ।।** विष्णुशब्दोत्तरं प्रयुक्तस्य 'प्रचोदयात्' इति तृतीयस्य पदस्य अधस्तात् 'तन्नः' इति पदं प्रयोक्तव्यम् । तथाशब्दान्नारायणशब्दोत्तरं चतुर्थी, विष्णुशब्दोत्तरं प्रथमेति च लक्ष्यते । एवमुद्धृता वर्णसन्ततिः गायत्रिनामिका विष्णुगायत्रिनामिका इति शेषः ।।

अत्र यद्यपि मात्स्यादिदशमूर्तीनां प्रतिष्ठाप्रकारः, तत्र मन्त्रविशेषाः, उपस्थान-विशेषाश्च पञ्चरात्रे–

मीनादिदशमूर्तीनामधुना स्थापनं प्रति ।
विशेषः कथ्यते ब्रह्मन् उपस्थानादिलक्षणः, ।। इत्युपक्रम्य

साम्ना च वारुणेनैव सूक्तेन पुरुषात्मना ।
स्थापयेद्देवदेवेशं वेदरक्षाभिधायिनम् ।।

प्रलयार्णवदुर्वारवारिपूरविहारिणे ।
वारुणेनैव सूक्तेन तथाऽष्टाक्षरविद्यया ।।

स्थापयित्वा महाकुम्भं तस्मिन्नावाहयेद्धरिम् ।
उपतिष्ठेत कर्मान्ते गाथया(विद्यया) वक्ष्यमाणया ।।

तुभ्यं नमस्क्रियां कुर्मः कूर्मरूपाय वेधसे ।
धारिणे मन्दरस्याद्रेर्विबुधानन्ददायिने ।।

स्थापयित्वा च वाराहीं मूर्तिमावाहयेद्धरिम् ।
क्रोडात्मने नमस्तुभ्यं यज्ञदेहाय वेधसे ।।

दंष्ट्राग्रविधृताशेषधारिणे धरणीधर ।
नृसिंहरूपिणं देवं स्थापयेद्देशिकोत्तम ।।

इत्यादिना सविस्तरं कथितः। तथापि स्थापनोपस्थानादावेव विशेषो न प्रतिष्ठादाविति तस्यासंग्रहो न दोषायेति ध्येयम्। शयानस्थितोत्थितयानारूढादिप्रतिमानां वेणुगोपालकालीमर्दनकृष्णादिप्रतिमानां निर्माणप्रकारः, तत्स्थापनप्रकारश्च शास्त्रे द्रष्टव्यः। विस्तरभयान्नेह विवृत इति भावः ।। १४० ।।

**अ.सं.–** विष्णुगायत्र्या होम उक्तः। विष्णुगायत्री केत्यतो मन्त्राणां गोप्यत्वात् सङ्केतेन विष्णुगायत्रीमन्त्रमुद्धरति– **नावाव्यादीति** ।। ना वा वि इत्येते वर्णाः एवंप्रकारेणैव आदौ येषां विद्यन्ते तानि नावाव्यादीनि । तानि च तानि अभिधानानि च नारायण वासुदेव विष्णुरिति त्रीणि नामानि च तानि तथोक्तानि । अत्राद्यद्वितीयनाम्नोः चतुर्थ्यन्तत्वम्, तृतीयस्य तु प्रथमान्तत्वमभिप्रेतमनुक्तसमुच्चायकेन **तथा**शब्देन । तेषां नाम्नाम**नु** अनन्तरं क्रमेण विद्महे धीमहे प्रचोदयादिति त्रयः शब्दाः प्रयोज्याः । धीमहीत्यस्य प्रतिपदं

धीमहे इति । **तृतीयाधः** तृतीयस्य विष्णुरिति तृतीयनाम्नः अधः पूर्वं तन्नो इतिशब्दो ज्ञेयः । **अयमत्राविवेकः** । पूर्वं नारायणायेति चतुर्थ्यन्तं पदं प्रयोज्यम् । ततः विद्महे इति पदम् । ततस्तु चतुर्थ्यन्तं वासुदेवायेति पदम् । ततः धमिहीति पदम् । ततः तन्नो इति पदम् । ततः प्रथमान्तं विष्णुरिति पदम् । अन्ते प्रचोदयादिति पदं प्रयोक्तव्यमिति । तथा चेत्थं मन्त्रोद्धारः । **नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्** इति । इयं गायत्रिनामिका विष्णुगायत्रीत्युच्यते इति ।। १४० ।।

**गु.दी.–** विष्णुगायत्र्या होम इति प्रसक्तत्वात् विष्णुगायत्रीमुद्धरति— **नावाव्याद्याभिधनेति ।।** ना च वा च वि च एते आद्या येषामभिधानानां तदनुक्रमेण विद्महे इति योज्यम् । **तृतीयाधः** तृतीयस्य विष्णुरित्यस्याधः पश्चात् पृष्ठभागे पूर्वमिति यावत् । तन्न इति पदं योज्यम् । तथा हि– ना इति गृहीतनारायणायेति चतुर्थ्यन्तपदादधः विद्महे इति योज्यम् । वासुदेवायेत्यभिधानानन्तरं धीमहीति, ततस्तन्नो विष्णुः प्रचोदयादिति । तथा च **'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्'** इति मन्त्राकारः । **गायत्रिनामिका** विष्णुगायत्रीनामिका ।।१४०।।

**मङ्गाली–** सा विष्णुगायत्री केत्यतो मन्त्राणां गोप्यत्वात्सङ्केतेन विष्णुगायत्री मन्त्रमुद्धरति– **नावाव्यादीति ।।** ना,वा,वि इत्येते वर्णाः । एवं प्रकारेणैवादौ येषां विद्यन्ते तानि नावाव्यादीनि । तानि च तानि अभिधानानि च । नारायणवासुदेवविष्णु इति त्रीणि नामानि च । तानि तथोक्तानि । अत्राद्यद्वितीयनाम्नोः चतुर्थ्यन्तत्वं तृतीयस्य तु प्रथमांतत्वमभिप्रेतम् । अनुक्तज्ञापकेन **तथा**शब्देन तेषां नाम्नामनन्तरं क्रमेण विद्महे धीमहि प्रचोदयादिति त्रयः शब्दाः प्रयोज्याः । धीमहीत्यस्य प्रतिपदं धीमहे इति । **तृतीयाधः** तृतीयस्य विष्णुरिति तृतीयनाम्नः अधः पूर्वं तन्नो इति शब्दो ज्ञेयः । अयमत्र विवेकः । पूर्वं नारायणायेति चतुर्थ्यन्तं पदं प्रयोज्यम् । ततः विद्महे इति पदम् । तदनु चतुर्थ्यन्तं वासुदेवायेति पदं, ततः धीमहीति पदं, ततः प्रथमान्तं

विष्णुरिति पदं, अन्ते प्रचोदयादिति पदं प्रयोक्तव्यमिति । तथाचेत्थं मन्त्रोधारः **'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्'** इति । इयं **गायत्रिनामिका** विष्णुगायत्रीत्युच्यत इति ।। १४० ।।

दुर्गादिपरिवरदेवताप्रतिमाप्रतिष्ठाविधानम्

**तं.सा.** **दुर्गाशिवस्कन्दसूर्यविनायकमुखानपि ।**
**स्थापयेदुक्तमार्गेण तत्तन्मन्त्रैः स्मरन् हरिम्** ।। १४१ ।।

**त.क.–** अत्र गरुडादिप्रतिमानां निर्माणप्रकारः पञ्चरात्रे—

गरुडं कनकप्रख्यं नीलनासाग्रसंयुतम् ।
दक्षिणेतरविस्तीर्णं विचित्रपृथुपक्षकम् ।।

दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ।
करंडिकामुकुटिनं सर्वाभरणभूषितम् ।।

विचित्रकञ्चुकधरं भुजगेन्द्रैरलंकृतम् ।
हृदि पुष्पाञ्जलिधरं स्थितमासीनमेव वा ।।

दक्षिणोत्तरयोरेकः पादयोः कुञ्चितो भवेत् ।
पृष्टतोऽन्यो यथायोगं यद्वा पद्मासनं भवेत् ।।

मार्ताण्डं द्विभुजं रक्तं रक्तांबरधरं स्थितम् ।
पृष्टभागे शिरश्चक्रं स्थाने विपुलमण्डलम् ।।

विभ्राणं कमलद्वन्द्वं हस्ताभ्यां च किरीटिनम् ।
उरःप्रदेशे विमलं श्यमन्तकमहामणिम् ।।

आसीनं वा सुखं विम्बे पद्मेऽष्टदलसंयुते ।
पूर्वादिवारिजदले मेषप्रभृतिराशिभिः ।।

सेवितं कल्पयेद्देवां दुर्गां कुमुदधारिणीम् ।
कल्पयेच्छामलां कन्यां चतुर्भिर्बाहुभिः क्रमात् ।।

गदाधरामभयदां शङ्खचक्रवरायुधाम् ।
हारकेयूरमुकुटनूपुरादिविभूषिताम् ।।

अथवाऽष्टभुजां दुर्गां दक्षिणे दोश्चतुष्टये ।
अभीतिशरनिस्त्रिंशचक्रमण्डलमण्डिताम् ।।

वामे गदाधनुःखड्गशङ्खायुधधरां वराम् ।
अथवा द्वादशभुजां विशेषः समुदीर्यते ।।

दक्षिणे परशुं शूलं वामे पाशांकुशौ तथा ।
घण्टेति पञ्चपूर्णानि यद्वा षोडशबाहुकाम् ।।

अनुक्तमायुधं कल्प्यं भुजेऽन्यस्मिंश्चतुष्टये ।
द्वात्रिंशदथवा हस्ताः शस्त्रमूह्यं तु चोदितम् ।।

कामं रक्तनिभं रक्तप्रसवाम्वरधारिणम् ।
हस्ताभ्यामैक्षवं चापं बिभ्राणं सुमनःशरान् ।।

चतुर्भुजं चतुर्वक्त्रं जटामकुटधारिणम् ।
वराभयप्रदं मुख्यहस्ताभ्यामन्यहस्तयोः ।।

कुण्डिकामक्षसूत्रं च बिभ्राणं च सुखासने ।
गजाननं चतुर्बाहुं लम्बकुक्षिं सितप्रभम् ।।

करंडिकामकुटिनं लम्बयज्ञोपवीतिनम् ।
वामहस्तेन मुख्येन संगृहीतमहाफलम् ।।

इतरेण तु हस्तेन भग्नदन्तपरिग्रहम् ।
अपराभ्यां च हस्ताभ्यां पाशांकुशधरं प्रभुं ।।

षण्मुखं च चतुर्बाहुं दाडमीकुसुमप्रभम् ।
वराभयप्रदौ मुख्यौ जघन्यौ शक्तितोमरौ ।।

रुद्रं त्रिणेत्रमरुणं जटामकुटधारिणम् ।
चतुर्भुजं नीलकण्ठमिन्दुलेखाविभूषितम् ।।

कराभ्यामपि मुख्यभ्यां वरदाभयदं स्थितम् ।
अपराभ्यां च हस्ताभ्यां बिभ्राणं परशुं मृगम् ।।

क्षेत्रपालं चतुर्बाहुं करण्डिमकुटोज्ज्वलम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ।।

वामे करे दण्डधरं मुख्ये वामेतरे करे ।
दधानं तर्जनीमुद्रां पाशांकुशममुख्ययोः ।।

विष्वक्सेनं चतुर्बाहुं श्यामवर्णं किरीटिनम् ।
लम्बोदरममुख्येन करेणाभयदायिनम् ।।

दक्षिणेन प्रसव्येन समालम्ब्य कटिं स्थितम् ।
आसीनमपराभ्यां च हस्ताभ्यां शङ्खचक्रिणम् ।।

अथवा पूर्वकरयोर्गदामेकत्र कल्पयेत् ।
अन्यत्र तर्जनीमुद्रां यद्वा दक्षिणहस्तयोः ।।

मुख्येऽभीतिरमुख्ये तु चक्रमन्यत्र हस्तयोः ।
गदां मुख्ये जघन्ये तु शङ्खं च परिकल्पयेत् ।।

शङ्खचक्रधरं यद्वा स्थितं मुख्ये करद्वये ।
बिभ्राणं गुरिकां वेत्रं कृताञ्जलिपुटं स्थितम् ।।

देवीं च विष्वक्सेनस्य वामभागे प्रतिष्ठिताम् ।
नाम्ना पुष्पधरां कुर्यात् कमलामिव लक्षिताम् ।।

श्यामः किरीटी द्विभुजो वासवो वज्रदक्षिणः ।
वामावलम्बितकटिः सर्वाकल्पपरिष्कृतः ।।

ज्वालामण्डलमध्यस्थो ज्वलनो द्विभुजो भवेत् ।
वरदः शक्तिहस्तश्च करण्डिमुकुटोज्ज्वलः ।।

वैवस्वतश्च द्विभुजः किरीटी मेचकच्छविः ।
दक्षिणाभयदो दण्डी निर्ऋतिर्भीमदर्शनः ।।

दंष्ट्राकरालवदनो भ्रुकुटीकुटिलेक्षणः ।
दक्षिणोऽभीतिरुत्खङ्गो: करण्डिमुकुटोज्ज्वलः ॥

वरुणः शामलः पाशहस्तो वामेऽभयप्रदः ।
करण्डिमुकुटश्चैव वायुपुत्रो द्विहस्तकः ॥

अंकुशो दक्षिणे हस्ते वामः पाशेन लम्बितः ।
मरुतो वायुना तुल्याः सोमः सोमवदिष्यते ॥

ईशानो रुद्रवत् कल्प्यस्तेषां वाहनमुच्यते ।
हंसो विधातृ रुद्रस्य वृषः सूर्यस्य घोटकः ॥

मकरः शूर्पकाराते: शक्तिपाणेश्च बर्हिणः ।
दुर्गायाः केसरी प्रोक्तो विघ्नराजस्य मूषिकः ॥

नरो यक्षाधिराजस्य शुनासीरस्य कुंजरः ।
अग्नेर्मेषः कृतांतस्य लुलायो वाहनं मतम् ॥

पिशाचो निर्ऋतेः प्रोक्तो मकरो वरुणस्य तु ।
प्राणस्य हरिणः प्रोक्तः स एव मरुतामपि ॥

उच्छ्रायं मूलबेरस्य चतुर्धा विभजेत्ततः ।
त्रिष्वेकभागमुच्छ्रायं परिवारेषु कल्पयेत् ॥

मानांगुलेन वा यद्वा देहलब्धांगुलेन वा ।
अष्टांगुलसमुच्छ्रायं द्वादशांगुलमेव वा ॥

द्विगुणं वा यथायोगमुच्छ्रायं परिकल्पयेत् ।
स्थाने मूलप्रतिकृतेः परिवाराश्च ते स्थिताः ॥

आसीनाश्चासने तस्य शय्यायां शयनं विना ।
आसीना वा स्थिता वाऽपि कामचाराश्चतुर्मुख ॥

इत्यादिना स्पष्टमुक्तः । तं संगृह्णन् तत्स्थापने इतिकर्तव्यतां वदन्नुक्तन्याय-मतिदिशति— **दुर्गेति ॥ मुखशब्दः** प्रभृतिवचनो वचनोक्तानां कामादीना-

मुपलक्षकः। **उक्तमार्गेण** कलशप्रतिष्ठाप्रस्तावोक्तमार्गेण। तत्तन्मन्त्रैश्चतुर्थे उद्धरिष्यमाणैरिति शेषः। स्मरन् हरिमितीतिकर्तव्यतोक्तिः ।। १४१ ।।

**अ.सं.–** विष्णुप्रतिमोक्तप्रतिष्ठाविधिमन्यदेवताप्रतिमाप्रतिष्ठायामप्यतिदिशति– **दुर्गेति ।। उक्तमार्गेण** पूर्वोक्तेन विष्णुप्रतिमाप्रतिष्ठाविधिना । मुखशब्देन इन्द्रशेषगरुडादयो ग्राह्याः । **तत्तन्मन्त्रैः** तेषां तेषां देवानां मन्त्रैः अन्यदेवेषु हरिं स्मरन् **स्थापयेत्** पृथक् पृथक् तत्तद्देवालयेषु वा विष्णुदेवालये एव वा आवरणत्वेन प्रतिष्ठापयेदित्यर्थः ।। १४१ ।।

**गु.दी.–** अथान्यदेवताप्रतिमाप्रतिष्ठापनविधिमाह— **दुर्गेति ।। विनायकमुखान्** गरुडशेषरुद्रादीन्। **उक्तमार्गेण** कलशस्थापनाद्युक्तविधिना। तत्र विशेषमाह— **तत्तदिति ।।** तेषां तेषां मन्त्रैस्तेषु हरिं संस्मरन् स्थापयेदिति सम्बन्धः ।। १४१ ।।

**मङ्गली–** विष्णुप्रतिमोक्तप्रतिष्ठाविधिं अन्यदेवताप्रतिमाप्रतिष्ठायामप्यतिदिशति– **दुर्गेति ।। उक्तमार्गेण** पूर्वोक्तेन विष्णुप्रतिमाप्रतिष्ठाविधिना । **मुख**शब्देनेन्द्रशेषगरुडादयो ग्राह्याः। **तत्तन्मन्त्रैः** तेषां तेषां देवानां मन्त्रैः अन्यदेवेषु हरिं स्मरन् **स्थापयेत्** पृथक् पृथक् तत्तदेवालयेषु वा विष्ण्वालय एव वा आवरणत्वेन प्रतिष्ठापयेदित्यर्थः ।। १४१ ।।

अन्यदेवताप्रतिष्ठापनायां विष्णोः गोलकत्रयं चिन्तनीयम्

**त.सा. गोलकद्वितयं विष्णोस्त्रितयं वा प्रकीर्तितम् ।**
**अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम् ।। १४२ ।।**

**त.क.–** ननु 'ध्यायेत्तेजोमयीं पुनः। प्रतिमां प्रतिमान्तस्थां तन्मध्ये परमं वपुः'(तं.सा.३-११४) इत्यादिना विष्णुप्रतिमासु गोलकद्वितयमुक्तम्। तदयुक्तम्। तथाहि— तेजोमयीति किं लक्ष्मीरूपमुच्यते किं वा वायुरूपमथवा द्वयमपि। नाद्यः। सर्वत्र विशिष्टप्रतिमा वायुरेवेति वचनविरोधात्। न द्वितीयः। लक्ष्म्याः साक्षादधिष्ठानत्वोक्तिविरोधात्। न तृतीयः। तेजोमयीमित्येकवचनादित्याशङ्कां परिहरन् अन्यदेवताप्रतिष्ठासु उक्तन्यायमेव विकल्पेनातिदिशति— **गोलकेति ।।**

विष्णोः प्रतिमासु गोलकद्वितयं त्रितयं वा शास्त्रे कीर्तितं विवक्षाभेदेन । अतो न विरोध इति शेषः ।

इदमत्राकूतम्— प्रतिमायां वायुस्तेजोमयः प्रतिमाकारेण वर्तते । तत्रापि लक्ष्मीः प्रतिमाकारेण वर्तते । एवं प्रतिमा वायुर्लक्ष्मीश्चेति प्रतिमात्रयम् । प्रतिमाया अविवक्षायां तु गोलकद्वयम् । एकवचनं तु तेजोमयत्वसाम्येन उभयोरेकत्वविवक्षया । एवमन्येषां देवानां दुर्गाशिवादीनां प्रतिमास्वपि तेजोमयत्वेन वायुलक्ष्मीरूपगोलकयोरैक्यविवक्षायां तु गोलकत्रयम् । अत्र पक्षद्वयेऽपि प्रतिमाया विवक्षाभावः सम एव । एवं विवक्षाभेदेन न विरोध इति भावः । हरिं स्मरन् दुर्गादिदेवतास्तत्तन्मन्त्रैः तत्तत्प्रतिमासु स्थापयित्वा पूजयेदित्युक्तमयुक्तम् । 'पूजयेन्नान्यदेवताः' इत्यादिना निषेधादित्यत आह— **तदन्तश्चिन्तयेद्धरिमिति ॥** प्रतिमायामावाहितदेवतां तदन्तर्हरिं चिन्तयेत् । पूजयेच्चेत्यर्थः । स्मरेदिति वक्तव्ये यच्चिन्तयेदित्याह, तेन फलदाता स एव इत्यनुसन्धानमावश्यकमिति सूचयति ॥ १४२ ॥

**अ.सं.–** विष्णुदेवालये दुर्गादिसर्वदेवानामावरणत्वेन स्थापनाशक्तौ आह– **गोलकेति ॥** विष्णोः देवालय इति शेषः । अन्यदेवताप्रतिष्ठास्वावरणत्वेन कर्तव्यासु सतीषु । अशक्तौ **गोलकद्वितयं** लक्ष्मीगरुडयोः प्रतिमाद्वयम् । **अपि वा** अथवा । **त्रितयं** लक्ष्मीगरुडविष्वक्सेनानां प्रतिमात्रयं स्थाप्यत्वेन कीर्तितमित्यर्थः । यद्वा अन्यदेवप्रतिष्ठायां हरिं स्मरन् स्थापयेदित्युक्तम् । तत्र स्मरणे प्रकारमाह– **गोलकेति ॥** अत्र **वा**शब्दः उपमानार्थः । तथा च यथा विष्णोः प्रतिमाप्रतिष्ठायां **गोलकद्वितयं** दृश्यमानमेकमेकं गोलकं प्रतिमा । तदन्तस्तेजोमयं द्वितीयमित्येवं विष्णुतिमाप्रतिष्ठायां प्रतिमाद्वयं ध्येयत्वेन **कीर्तितम्** 'ध्यायेत्तेजोमयीं पुनः । प्रतिमां प्रतिमान्तस्थां'(३-११४) इत्यत्र, तथा **अन्यदेवप्रतिष्ठासु** अन्यदेवताप्रतिमाप्रतिष्ठासु **त्रितयं** गोलकत्रयम्, दृश्यमानमेकं तदन्तः अन्यदेवतारूपद्वितीयं तदन्तस्तेजोमयं तृतीयम्, एवं विष्णोः प्रतिमात्रयं ध्येयत्वेन कीर्तितम् । तथा चान्यदेवताप्रतिष्ठासु विष्णोः प्रतिमात्रयं ध्यात्वा **तदन्तः** प्रतिमान्तः हरिं चिंतयेदित्यर्थः । तेजोमयी प्रतिमा च वायुप्रतिमा

लक्ष्मीप्रतिमा चेत्युपपादितं 'ध्यायेत्तेजोमयीं पुनः' इत्यत्र । यद्वा अत्र **वाशब्दो** व्यवस्थितविकल्पार्थः । विष्णुप्रतिमायामन्यदेवताप्रतिमासु मध्ये लक्ष्मीप्रतिमायां वयुप्रतिमायामपि परिदृश्यमानप्रतिमामविविक्षितत्वात्तदन्तः विष्णोः गोलकद्वितयं तेजोमयं प्रतिमाद्वयं कीर्तितम् । एवमेव तदन्यत्र विष्णोर्गोलकत्रितयं कीर्तितम् ।

अयं भावः । विष्णुप्रतिमायां वायुप्रतिमा तदन्तः लक्ष्मीप्रतिमा । तदन्तः हरिः । लक्ष्मीप्रतिमायामपि वायुप्रतिमा लक्ष्मीप्रतिमा तदन्तः हरिः । एवं हनुमदादिवायुप्रतिमायां वायुः तदन्तः श्रीः तदन्तः विष्णुरिति विष्णोर्गोलकद्वितयमिति । लक्ष्मीवायुव्यतिरिक्तशिवाद्यन्यदेवताप्रतिमास्वपि दृश्यमानप्रतिमामविविक्षितत्वाद्दृश्यप्रतिमान्तः अन्यदेवताशरीरम् । तदन्तः वायुः, तदन्तः श्रीः, तदन्तः हरिरिति विष्णोर्गोलकत्रयं प्रकीर्तितामिति । दृश्यमानप्रतिमाविवक्षायां तु सा दृश्यप्रतिमा । तदन्तः लक्ष्मीवायुप्रतिमयोस्तेजोमयत्वेन ऐक्यविवक्षया तेजोमयीप्रतिमा चैकेत्येवं विष्णुलक्ष्मीवायुप्रतिमासु विष्णोर्गोलकद्वितयम् । शिवादिप्रतिमायां तु दृश्यमानमेकम् । तदन्तः अन्यदेवतारूपम् । तदन्तः पूर्ववत् ऐक्यविवक्षया तेजोमयं चेति विष्णोर्गोलकत्रयं ज्ञेयमिति ।

केचित्तु– तेजोमयी प्रतिमा तेजोभूतभागविशेष इत्याहुः । तत्र विष्णुप्रतिमायां दृश्यप्रतिमा तदन्तः तेजःप्रतिमा । तदन्तः विष्णुरिति गोलकद्वयम् । अन्यदेवताप्रतिमासु परिदृश्यमानमेकम् । तेजोभूतमयमेकम् । तदन्तः अन्यदेवता तत्र हरिरिति गोलकत्रितयं ज्ञेयमिति ।। १४२ ।।

**गु.दी.–** प्रतिष्ठाप्यविष्णुप्रतिमायामन्यदेवताप्रतिमायां च विशेषमाह— **गोलकेति** ।। विष्णुप्रतिमायां प्रतिष्ठाप्यदृश्यप्रतिमा, तदन्तस्तेजोमयीति गोलकद्वितयम् । अस्मिन् पक्षेऽन्तस्थवायुप्रतिमायाः लक्ष्मीस्वरूपप्रतिमायाश्चैकत्वविवक्षा द्रष्टव्या । शिवाद्यन्यदेवताप्रतिमासु दृश्यप्रतिमा तदन्तश्शिवादिदेवताशरीरं, तदन्तः उक्तैकत्वविवक्षया तेजोमयशरीरं चेति गोलकत्रितयं कीर्तितम् । **तदन्तः** तेजोमयशरीरान्तः ।। १४२ ।।

**मङ्गाली–** विष्णवालये दुर्गादिसर्वदेवानामवरणत्वेन स्थापनाऽशक्तावाह–

**गोलकेति ।।** विष्णोरालय इति शेषः । अन्यदेवप्रतिष्ठासु अवरणत्वेन कर्त्तव्यासु सतीषु अशक्तौ **गोलकद्वितीयं** लक्ष्मीगरुडयोः प्रतिमाद्वयम् । **अपिवा** अथवा **त्रितयं** लक्ष्मीगरुडविष्वक्सेनानां प्रतिमात्रयं स्थाप्यत्वेन कीर्तितमित्यर्थः । यद्वा अन्यदेवप्रतिष्ठायां हरिं स्मरन् स्थापयेदित्युक्तम् । तत्र स्मरणे प्रकारमाह– **गोलकेति ।।** अत्र **वा**शब्दः उपमार्थः । तथा च यथा विष्णोः प्रतिमा प्रतिष्ठायां **गोलकद्वितयं** दृश्यमानं एकं गोलकं प्रतिमा, तदन्तः तेजोमयं द्वितीयं इत्येवं विष्णुप्रतिमाप्रतिष्ठायां प्रतिमाद्वयं ध्येयत्वेन **कीर्तितम्** 'ध्यायेत्तेजोमयीं पुनः । प्रतिमां प्रतिमान्तस्थां'(३-११४) इत्यत्र, तथा **अन्यदेवप्रतिष्ठासु** अन्यदेवता-प्रतिमाप्रतिष्ठासु **त्रितयं** गोलकत्रयं दृश्यमानमेकं, तदन्तः अन्यदेवतारूपं द्वितीयं, तदन्तः तेजोमयं तृतीयम् । एवं विष्णोः प्रतिमात्रयं ध्येयत्वेन कीर्तितम् । तथा चान्यदेवताप्रतिष्ठासु विष्णोः प्रतिमात्रयं ध्यात्वा **तदन्तः** प्रतिमान्तः हरिं चिन्तयेदित्यर्थः । यद्वा, अत्र **वा**शब्दो व्यवस्थितविकल्पार्थः। विष्णुप्रतिमायां अन्यदेवताप्रतिमासु मध्ये लक्ष्मीप्रतिमायां वायुप्रतिमायामपि परिदृश्य-मानप्रतिमामविविक्षित्वा तदन्तः विष्णोः गोलकद्वितयं तेजोमयं प्रतिमाद्वयं कीर्तितम् । एवमेव तदन्यत्र विष्णोः गोलकत्रितयं कीर्तितं ।

अयं भावः । विष्णुप्रतिमायां वायुप्रतिमा, तदन्तः लक्ष्मीप्रतिमा, तदन्तः हरिः । लक्ष्मीप्रतिमायामपि वायुप्रतिमा, तदन्तः लक्ष्मीप्रतिमा तदन्तः हरिः । हनुमदादिवायुप्रतिमायामपि वायुः तदन्तश्रीः तदन्तर्विष्णुरिति । विष्णो-र्गोलकद्वितयं लक्ष्मीवायुव्यतिरिक्तशिवाद्यन्यदेवताप्रतिमास्वपि दृश्यमानप्रतिमां अविविक्षित्वा दृश्यप्रतिमान्तः अन्यदेवताशरीरं तदन्तर्वायुः तदन्तःश्रीः तदन्तर्हरिरिति । विष्णोर्गोलकत्रितयं कीर्तितमिति दृश्यमानप्रतिमाविवक्षायां तु सा दृश्यप्रतिमा एका, तदन्तः लक्ष्मीवायुप्रतिमयोः तेजोमयत्वेनैक्यविवक्षया तेजोमयी प्रतिमा चैकेत्येवं विष्णुलक्ष्मीवायुप्रतिमासु विष्णोर्गोलकद्वितयम् । शिवादिप्रतिमायां तु दृश्यमानमेकं तदन्तः अन्यदेवतारूपं एकं तदन्तः पूर्ववदैक्यविवक्षया तेजोमयं चेति विष्णोर्गोलकत्रयं ज्ञेयमिति ।

केचित्तु तेजोमयीप्रतिमा तेजोभूतभागविशेष इत्याहुः । तत्र विष्णुप्रतिमायां दृश्यमानप्रतिमैका । तदन्तः तेजःप्रतिमाऽपरा । तदन्तर्विष्णुरिति गोलकद्वयम् । अन्यदेवताप्रतिमासु परिदृश्यमानमेकं तेजोभूतमयमपरं तदन्तरन्यदेवता तत्र हरिरिति गोलकत्रितयं ज्ञेयमिति ।। १४२ ।।

अन्यदेवतासु विष्णुध्यानरहितपूजायाः आसुरीत्वकथनं

**तं.सा.** **विष्णुस्मृतिविहीना तु पूजा स्यादासुरी सदा ।**
**गृह्णन्ति(गृह्णीयुः) देवता नैतां ततः स्याद्देशविप्लवः ।। १४३ ।।**

**व्याधिचोरादिभिस्तस्मादन्तर्ध्येयो हरिः सदा ।**
**विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ।। १४४ ।।**

**भक्तस्याप्यन्यदेवेषु तस्माद्ध्येयो हरिः सदा ।**
**संस्मृतो भगवान् विष्णुः सर्वमङ्गलमङ्गलः ।। १४५ ।।**

**समस्ताभीष्टदायी स्यात्तेन ध्येयोऽखिलैर्जनैः ।**

**त.क.–** यथा विष्णुप्रतिमायामवाहितो विष्णुरेव स्मरणीयश्चिन्तनीयः, पूजनीयश्च तथा शिवादिप्रतिमास्वपि शिवादय एव तथा सन्तु किं विष्णोः स्मर्तव्यत्वने कल्पनयेत्याशङ्क्याफलत्वानर्थफलत्वाभ्यामुक्तं द्रढयति– **विष्णुस्मृतीत्यादिना जनैरित्यन्तेन ।।** अत्र स्मृतिशब्दो ध्यानावाहनादेरप्युपलक्षकः । 'दीनत्वाद्देवनामानः' (गी.त.१०-६)इत्युक्तरीत्या शिवादिनामवद्भिर्नमुच्याद्यसुरैर्भोग्या आसुरीत्युच्यते । तैरपि भुज्यताम् । शिवादिभिरप्युपभुक्तत्वात् फलं भविष्यतीत्यत आह– **गृह्णन्तीति ।।** असुराः फलदानेऽसमर्थाः । देवास्तु यद्यपि नैवं तथाऽपि पूजाग्रहणेन सन्तुष्टाः फलं प्रयच्छन्तीति पूजायाश्च तैरगृहीतत्वात् कथं दास्यन्तीति भावः । **विष्णुस्मृतिविहीना** इति पूजाया आसुरत्वे दैवत्वाभावे च हेतूक्तिः । न केवलं फलाभावः । ततः पूजान्तः व्याध्यादिभिर्देशनाशश्च स्यादित्यर्थः । एवमैहिकफलाभावमनर्थं चोक्त्वा उपसंहरति— **तस्मादन्तर्ध्येय इति ।।** अत्र तथेत्यनेनानुक्तसमुच्चायकेन देवालय एव शिवादिप्रतिमाप्रतिष्ठा, न

तु गृहार्चने । परिवारतयैव गृहार्चने पूज्याः । न प्रतिमास्थापनपूर्वकमित्यादिप्रमेयं—

चतुर्मुखादिदेवानां परिवारतयाऽर्चनम् ।
न स्वातन्त्र्येण यष्टव्यं वैष्णवेन गृहार्चने ।।

इत्यादिवचनोक्तं सूचयति । आमुष्मिकफलाभावादिनाऽपि तत्साधयति— **विष्णुभक्तिरिति ।।** ध्यानस्मरणादेरप्युपलक्षणमेतत् । **शुभा गतिः** स्वर्गादिप्राप्तिः । 'अन्यदेवेषु भक्तस्यापि' इत्यनेन देवानामस्मिन् प्रीतिर्नास्तीति सूचयति । अमुष्मिकफलाभावेनोक्तं प्रमेयमुपसंहरति— **तस्मादिति ।।** प्रकरणद्वयेन व्यतिरेकमुक्त्वाऽन्वयमाह— **संस्मृत इति ।।** 'सर्वमङ्गलानां मङ्गलप्रदः' इति समस्ताभीष्टदायित्वे हेतूक्तिः ।

एतत्प्रकरणार्थमुपसंहरति— **तेनेति ।।** यद्वा, विष्णुभक्तिविहीनेत्यतः प्राक्तनं ग्रन्थान्तरस्थं वचनम् । 'संस्मृतः' इत्यतः प्राक्तनं च ग्रन्थातरस्थं संगृह्णता तु यथावचनाकारं संग्राह्यमिति द्योतयितुं तस्मादित्यादित्रिरुपसंहार इति बोध्यम् ।। १४३-१४५ ।।

**अ.सं.–** 'तदन्तश्चिन्तयेद्धरिं' (३-१४२) इति अन्यदेवताप्रतिमायां प्रतिमान्तःस्थित्वेन विष्णुध्यानमुक्तम् । तदकरणे बाधकमाह– **विष्ण्विति ।। पूजा** अन्यदेवतापूजा **आसुरी** तु सुरप्रीत्यजनिकैव **सदा** सर्वथा स्यात् । कुतः? देवताः एतां विष्णुध्यानहीनपूजां **न गृह्णन्ति** न स्वीकुर्वन्ति । तथा **ततः** तादृश्याः पूजायाः सकाशात् व्याधिचोरादिभिः **आदि**शब्देन अनावृष्ट्यादिकं ग्राह्यम् । **उपप्लवः** उपद्रवः स्यात् । अत इत्यन्वयः । उपसंहरति– **तस्मादिति ।। तस्मात्** ध्यानाकरणे ऐहिकानिष्टस्य जायमानत्वात् **अन्तः** अन्यदेवतान्तः सदा हरिर्ध्येयः । ध्यानाकरणे पारलौकिकमप्यनिष्टमाह– **विष्णुभक्तीति ।। अन्यदेवेषु भक्तस्यापि** विष्णुभक्तिविहीनस्य पुरुषस्य **शुभा** स्वर्गादिगतिः **क्वचित्** सर्वथा न स्यात् प्रत्युत **नशुभा** । नसमासोऽयम् । अशुभानि नरकाद्यनर्थगतिश्च स्यादिति । न शुभेत्यस्यावृत्या योजना । उपसंहरति– **तस्मादिति ।।** पारलौकिकस्याप्यनिष्टस्य

जायमानत्वात् हरिर्ध्येय इति । एवं ध्यानाकरणेऽनिष्टप्राप्तिमुक्त्वेदानीं ध्यानकरणे फलमाह– **संस्मृत इति॥ समस्ताभीष्टदायी** ऐहिकामुष्मिकसमस्तपुरुषार्थदाता । उपसंहरति– **तेनेति ॥ तेन** समस्तपुरुषार्थप्राप्तेर्जायमानत्वेन कारणेन ध्यानकरणे अत्यादरं सूचयितुं **तस्मादन्तर्ध्येय** इति, **तस्माद्ध्येयः** इति **तेन ध्येय** इति त्रिवारमुपसंहारः ॥ १४३-१४५ ॥

**गु.दी.–** अन्यथा दोषमाह— **विष्ण्विति ॥** न केवलमासुरी स्यात् एतां देवताः न गृह्णन्ति । **ततः** विष्णुस्मृतिहीनपूजातः भगन्धरादिव्याधिचोराना-वृष्ट्यादिभिर्देशविप्लवः स्यादित्यर्थः । **अन्तः** अन्यदेवतान्तः । अन्यदेवता-भक्तिमतोऽपि भगवद्भक्तिरहितस्य शुभा गतिर्न स्यादित्याह— **विष्णुभक्तीति** ॥ १४३-१४५ ॥

**मङ्गाली–** **'तदन्तश्चिन्तयेद्धरिम्'**(३-४२) इत्यन्यदेवताप्रतिमासु प्रतिमान्तः स्थितत्वेन विष्णुध्यानमुक्तम् । तदकरणे बाधकमाह– **विष्ण्विति ॥ पूजा** अन्यदेवता पूजा **आसुरी तु** सुरप्रीत्यजनिकैव **सदा** सर्वथा स्यात् । कुतः? देवताः **एतां** विष्णुध्यानहीनां पूजां **न गृह्णन्ति** न स्वीकुर्वन्ति । तथा च **ततः** तादृश्याः पूजायाः सकाशात् । व्याधिचोरादिभिः, **आदि**शब्देनानावृष्ट्यादिकं ग्राह्यम् । **उपप्लवः** उपद्रवः स्यात् । अत इत्यन्वयः । उपसंहरति– **तस्मादिति ॥ तस्मात्** ध्यानाकरणे ऐहिकानिष्टस्य जायमानत्वात् । **अन्तः** अन्यदेवतान्तः सदा हरिर्ध्येयः ॥

ध्यानाकरणे पारलौकिकमप्यनिष्टमाह– **विष्णुभक्तीति ॥ अन्यदेवेषु भक्तस्यापि** विष्णुभक्तिविहीनस्य **शुभा** स्वर्गादिगतिः **क्वचित्** सर्वथा न स्यात् । प्रत्युत **नशुभा** अशुभा नसमासोयम् । अशुभा नरकाद्यनर्थगतिश्च स्यादिति । न शुभेत्यस्यावृत्या योजना । उपसंहरति– **तस्मादिति ॥** पारलौकिकस्याप्यनिष्टस्य जायमानत्वाद्धरिर्ध्येय इति ॥

**मङ्गाली–** एवं ध्यानाकरणेऽनिष्टप्राप्तिमुक्त्वा इदानीं ध्यानकरणे फलमाह– **संस्मृत इति ॥ समस्ताभीष्टदायी** ऐहिकामुष्मिकसमस्तपुरुषार्थदाता ।

उपसंहरति– **तेनेति** ।। **तेन** समस्तपुरुषार्थप्राप्तेर्जायमानत्वेन कारणेन । ध्यानकरणेत्यादरं सूचयितुं **'तस्मादन्तर्ध्येयः'** **'तस्माद्ध्येयः'** **'तेन ध्येयः'** इति त्रिवारं उपसंहारः कृतः ।। १४३-१४५ ।।

तत्त्वानां तेद्वतानां च कथनम्

तं. सा. **पुरुषोऽव्यक्तश्च महानहङ्कारो मनस्तथा ।। १४६ ।।**

**दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ।**
**तत्त्वाख्या(ख्याः) कालमाये च नियतिर्मतिरेव च ।। १४७ ।।**

**विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्त्वसंग्रहः ।**
**स्मृतिः संवित् प्रतिष्ठा च शक्तिरित्यपराणि तु(च)।।१४८।।**

**महालक्ष्मीस्वरूपाणि ह्येकादश विदो विदुः ।**
**विष्णोरपि स्वरूपाणि तन्नाम्नैकादशैव तु ।। १४९ ।।**

**त.क.–** अथ पूर्वोक्तानां मन्त्राणां चतुर्थे उद्धरिष्यमाणानां च मन्त्राणां जपे कर्तव्यं सति,

तत्त्वन्यासोऽयमचिरात् कृष्णसान्निध्यकारकः ।
यः कुर्यात्तत्त्वविन्यासं सम्भृतो भवति ध्रुवम् ।।

इत्यादिवचनात् मातृकान्यसवत्तत्त्वन्यासस्याप्यावश्यकत्वात् जपाङ्गभूतं तत्त्वन्यासं, तत्त्वान्युद्दिश्य तद्देवतास्तन्न्यासस्थानानि, तत्तन्मन्त्रोद्धारप्रकारम्, ऋषिछन्दोदैवतानि, 'पञ्चविंशतितत्त्वानां देवताः स्थापयेत्', (३-११५) 'तत्त्वमन्त्रान्स्वकं तथा' (३-१३२) इत्यादौ पूर्वप्रस्तुतत्वादिहैव प्रपञ्चयति— **पुरुषोऽव्यक्तमित्यादिना तन्त्रमार्ग इत्यतः प्राक्तनेन ग्रन्थेन** ।। **पुरुष** इति जीवतत्त्वमुच्यते । यद्यपि 'महानहम् । बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च' (त.सं.९) इत्यादौ पुरुषो नोक्तः, अव्यक्तं च । तथाप्यन्यत्रोक्तत्वान्न दोषः । महानहमित्यादौ तद्ग्रहणाभावः स्वसंसृष्टत्वाभावादेव । एवमव्यक्तमपि

प्रमाणान्तरोक्तमिति तत्संग्रहोऽपि युक्त एव। बुद्धितत्त्वस्यासंग्रहणन्तु मनस्तत्वेऽन्तर्भावविवक्षया। **दशेन्द्रियाणि** श्रोत्रत्वक्चक्षूरसनघ्राणात्मकानि ज्ञानसाधनानि, वाक्पाणिपादपायूपस्थाख्यानि क्रियासाधनानि च ग्राह्याणि। शब्दस्पर्शरूपरसगन्धा आकाशवायुतेजो-जलपृथिवीभिस्सहिता दश तत्त्वाख्याः। आहत्य पञ्चविंशतिः सम्पद्यत इति संबन्धः। द्वात्रिंशत्त्वं प्रसिद्धम्। सप्ततत्त्वान्युद्दिशति— **कालमाये चेति** ॥ द्वन्द्वश्च समासः। **कालः** क्षणलवादिरूपः। सोऽपि पाञ्चभौतिके देहे संश्लिष्ट एवास्ति। **माया** इच्छा। **नियतिर**ङ्गसंबन्धनियमः। **मतिर्**ज्ञानमात्रम्। **विद्या** निश्चयः। **कला** प्राणादिः। **प्रवृत्तिर्**इच्छा। एवं द्वात्रिंशत्तत्त्वानां संग्रहो ग्रन्थे बोध्य इति शेषः। क्वचित् कालादीनामेकादशानां प्रसिद्धेस्तदनुरोधेनाऽह— **स्फूर्तिरिति** ॥ इत्यपराणि शास्त्रे संगृहीतानीति शेषः। **स्फूर्तिः** प्रतिभा। **संवित्** अतिदृढनिश्चयः। **प्रतिष्ठा** अवस्थानम्। **शक्तिः** अवष्टम्भादिः। एवं पुरुषदेहानुबन्धीनि षट्त्रिंशत्तत्वानि ज्ञातव्यानीति चार्थः। अत्र 'शक्तिः प्रतिष्ठा संवित् स्फूर्ति प्रवृत्तिः कला विद्या मतिर्नियतिर्माया कालः' इति वाक्यं 'पुरुषोऽव्यक्तं' इत्यतः प्रागध्याहरणीयम्।

अत्र तत्त्वन्यासो ह्यनेकविधः। प्रतिमायां सान्निध्यसिद्ध्यर्थं क्रियमाण एकः शास्त्रे प्रसिद्धः। तत्प्रकारश्च वक्ष्यते। पुरुषदेहे जपाङ्गतया क्रियमाणोऽन्यः। तत्रापि 'सृष्टिस्थितिलयन्यासाः प्रतिलोम्यानुलोम्यतः' (४-१३१) इति वक्ष्यमाणदिशा उभयविधोऽपि न्यासः सृष्टिन्यासस्थितिन्यासलयन्यासभेदेन त्रिविधः। तत्रापि सृष्टिन्यासः शक्त्यादिपृथिव्यन्तः। लयन्यासस्तु शक्त्यादिकालान्तान्येकादशतत्त्वानि हृदये विन्यस्य ततः पृथिव्यादीनि पुरुषान्तानि वामपादांगुष्ठादि हृदयान्तं विन्यसेत्। यद्वा शक्त्यादीनि स्फूर्त्यन्तानि चत्वारि तत्त्वानि विन्यस्य प्रवृत्त्यादीनि पुरुषान्तानि, पुरुषादीनि प्रवृत्त्यन्तानि विन्यासेदिति व्यवस्थासूचनाय पञ्चविंशति द्वात्रिंशत् षट्त्रिंशदिति त्रैविध्येन सङ्ख्योक्तिः। अन्यथा शक्त्यादिपृथिव्यन्तानां षट्त्रिंशत्तत्त्वसंग्रह इत्येव ब्रूयात्। ततश्चात्र सृष्टिस्थितिलयन्यासानामयं क्रमसंग्रहः।

शक्तिः प्रतिष्ठा संविच्च स्फूर्तिः स्यात्तदनन्तरम् ।
प्रवृत्तिश्च कला विद्या मतिर्नियतिरेव च ।।

माया कलाश्च तत्त्वानीमान्येकादशैव तत् ।
पुरुषोऽव्यक्तं च महानहङ्कारो मतस्तथा ।।

श्रोत्रत्वङ्नेत्ररसनघ्राणानीमानि पञ्च च ।
वाग्घस्तचरणाः पायुरुपस्थमिति पञ्चकन् ।।

शब्दस्पर्शौ रूपरसौ गन्धश्चेति च पञ्चकम् ।
आकाशवायुतेजांसि जलं भूरिति पञ्चकम् ।।

इति सृष्टिक्रमे न्यासे षट्त्रिंशत्तत्त्वसंग्रहः ।
पृथिवीजलतेजांसि वायुराकाश एव च ।।

गन्धो रसस्तथा रूपं स्पर्शशब्दौ च पञ्चकम् ।
उपस्थः पायुचरणौ हस्तो वाक् चेति पञ्चकम् ।।

घ्राणं रसननेत्रे च त्वक् श्रोत्रं चेति पञ्चकम् ।
मनस्तत्त्वमहङ्कारो महानव्यक्तमेव च ।।

पुरुषः कालमाये च नियतिर्मतिरेव च ।
विद्या कला प्रवृत्तिश्च स्पूर्तिः संवित् तथा परा ।।

प्रतिष्ठा शक्तिरेतानि तन्नाम्नैकादशानि तु ।
हरिलक्ष्मीस्वरूपाणि लये न्यासे क्रमस्त्वयम् ।।

शक्तिः प्रतिष्ठा संविच्च स्फूर्तिः स्यात्तदनन्तरम् ।
प्रवृत्तिश्च कला विद्या मतिर्नियतिरेव च ।।

माया कालश्च तत्त्वानि हृदये सन्यसेत्क्रमात् ।
पृथिवीजलतेजांसि वायुराकाशमेव च ।।

गन्धो रसस्तथा रूपं स्पर्शशब्दौ च पञ्चकम् ।
उपस्थपायुचरणा हस्तौ वाक् चेति पञ्चकम् ।।

घ्राणं रसननेत्रे च त्वक् श्रोत्रं चेति पञ्चकम् ।
मनस्तत्त्वमहङ्कारो महानव्यक्तमेव च ।
पुरुषश्चेति तत्त्वानि स्थितिन्यासे क्रमस्त्वयम् ।। ।।

एवं तत्त्वान्युद्दिश्य बुद्धिसन्निधानात् कालादिशक्त्यन्तानामेकादशतत्त्वानां देवता वक्तुमाह— **महालक्ष्मीति** ।। लक्ष्म्यात्मकानि विष्णोः स्वरूपाणि सन्तीति शेषः। तत्र ज्ञानिप्रत्यक्षं प्रमाणयति– **विदो विदुरिति** ।। अमुख्य-सरस्वत्यादिव्यावृत्त्यर्थं **महेति**। मुख्येत्यर्थः। ततः प्रकृते किमित्यत आह— **तन्नाम्नेति** ।। कालाद्येकादशनाम्ना विष्णुलक्ष्मीरूपाणि चैकादशरूपाणि सन्तीति शेषः। **तु**शब्दो वाच्यत्वे विशेषद्योतकः ।। १४६-१४९ ।।

**अ.सं.–** प्रतिमाप्रतिष्ठायां पञ्चविंशतितत्त्वानां देवताः स्थापयेदित्युक्तम्। जीर्णदेवालयोद्धारे च 'तत्त्वमन्त्रान् स्वकं तथा' (३-१३२) इत्युक्तम्। तत्र कानि तत्त्वानि ? काश्च तत्त्वदेवताः ? के च तत्त्वमन्त्राः ? इत्यतः परिसङ्ख्यानपूर्वकं तत्त्वानि तावदुद्दिशति– **पुरुष इति** ।। **दशेन्द्रियाणि** श्रोत्रत्वक्चक्षुर्जिह्वा-घ्राणाख्यानि पञ्च ज्ञोनेन्द्रियाणि। वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि। एवं दशेन्द्रियाणीत्यर्थः। शब्दाद्याः पञ्च। **आदि**शब्देन स्पर्शरसरूपगन्धाश्चत्वारः तन्मात्राः ग्राह्याः। **भूतेताः** आकाशवायुवह्निजल-पृथिव्याख्यपञ्चमहाभूतैर्युक्ता इत्यर्थः। 'पञ्चविंशतितत्त्वानां देवताः' (३-११५) इत्यत्र पञ्चविंशतितत्त्वानामित्येतत् उपलक्षणमिति भावेन पञ्चविंशतितत्त्वान्युक्त्वा पुनः तत्त्वान्तराण्यप्युद्दिशति– **कालेत्यादिना** ।। कालेत्यादीनि सप्त तत्त्वानि। एतत्सहितानां पूर्वोक्तानां तत्त्वानां गणने द्वात्रिंशत्तत्त्वसङ्ग्रहो भवति । पुनः स्फूर्त्यादीनि अपराणि च चत्वारि तत्त्वानि ज्ञेयानि। एवं च सर्वाणि तत्त्वानि मिलितानि षट्त्रिंशत्सङ्ख्याकानि भवन्तीति ज्ञेयम्। एकादशतत्त्वानामुत्त-मत्वविवक्षया पृथगुक्तिः। अत एव तेषां कालमायेत्यादीनामेकादशानां तत्त्वानां प्रथमं देवता आह– **महालक्ष्मीति** ।। महालक्ष्मीस्वरूपाणि **एकादश** कालमायेत्येकादश तत्त्वशब्दवाच्यानि । एकादशतत्त्वनियामकत्वेन देवताश्चेति

**विदो** ज्ञानिनो विदुः । तथा विष्णोः एकादशरूपाण्यपि । **तुशब्दो** विशेषार्थः । तेन एवशब्दसम्बन्धः । **विशेषत** एवेति **तन्नाम्ना** कालेत्यादि तत्त्वनाम्ना वाच्यानि तत्त्वनियामकानि चेति ज्ञेयम् ।। १४६-१४९ ।।

**गु.दी.–** **'पञ्चविंशतितत्त्वार्थे'** इत्युक्तम् (तं.सा.३-९४) । **'पञ्चविंशतितत्त्वानां देवता'** इति च (तं.सा.३-११५) । **'तत्त्वमन्त्रान्'** इति च (तं.सा.३-१३२) । तत्र कानि पञ्चविंशतितत्त्वानि ? देवताश्च काः ? किंच पञ्चविंशतीत्युक्त्या तत्त्वेषु विवक्षान्तरेण सङ्ख्यान्तरं नास्तीति प्रमीयते । अत आह— **पुरुष इत्यादिना** ।। **पुरुषो** जीवतत्त्वम् । पुरुषादिमनोन्तानि पञ्च तत्त्वानि । **दशेन्द्रियाणि** ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्चेति दशेन्द्रियाणि । **शब्दाद्याः** आद्यशब्देन स्पर्शगन्धरसरूपाणि गृह्यन्ते । **भूतेताः** पृथिव्यादिपञ्चभूतयुक्ताः इति पञ्चविंशतितत्त्वाख्याः । 'तत्त्वाख्याः' इति बहुवचनान्तपाठे प्रवृत्तिश्चेत्येते तत्त्वाख्या इति सम्बन्धः । कालादिसप्तसाहित्येन द्वात्रिंशत्तत्त्वसङ्ग्रहः । स्फूर्त्यादिचत्वारि अपराणि तत्त्वानि सन्ति । एवं सम्भूय षट्त्रिंशत्तत्त्वानि । तत्र कालादिशक्त्यन्तानि एकादश तत्त्वानि विष्णोः महालक्ष्म्याश्च रूपाणीत्याह— **महालक्ष्मीत्यादिना** ।। **तन्नाम्नैव** कालादिनाम्नैव । **एकादश** स्वरूपाणि ।। १४६-१४९ ।।

**मङ्गाली–** प्रतिमाप्रतिष्ठायां पञ्चविशतितत्त्वानां देवताः स्थापयेदित्युक्तम् । जीर्णदेवालयोद्धारे च 'तत्वमन्त्रान् स्वकं तथा' (३-१३२) इत्युक्तम् । तत्र कानि तत्वानि ? काश्च तत्वदेवताः ? के च तत्त्वमन्त्राः ? इत्यतः परिसङ्ख्यानपूर्वकं तत्त्वानि तावदुद्दिश्यति– **पुरुष इति** ।। **दशेन्द्रियाणि** श्रोत्रत्वक्चक्षुर्जिह्वा-घ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि एवं दशेन्द्रियाणीत्यर्थः । शब्दाद्याः पञ्च । **आद्यशब्देन** स्पर्शरूपरसगन्धादिचत्वार तन्मात्रा ग्राह्याः । **भूतेताः** आकाशवायुवह्निजलपृथिव्याख्यपञ्चमहाभूतैर्युक्ता इत्यर्थः । 'पञ्चविंशतितत्त्वानां देवताः' (३-११५) इत्यत्र पञ्चविंशतितत्त्वानामित्ये-तदुपलक्षणमिति भावेन पञ्चविंशतितत्त्वान्युक्त्वा पुनस्तत्त्वान्तराण्यपि उद्दिशति– **कालेत्यादिना** ।। कालेत्यादीनि सप्त तत्त्वानि एतत्सहितानां पूर्वोक्तानां तत्त्वानां

गणने द्वात्रिंशत्तत्त्वसङ्ग्रहो भवति । पुनः स्फूर्त्यादीनि अपराणि चत्वारि तत्त्वानि ज्ञेयानि । एवं च सर्वाणि तत्त्वानि मिलितानि षट्त्रिंशत्सङ्ख्याकानि भवन्तीति ज्ञेयम् । एकादशतत्त्वानामुत्तमत्त्वविवक्षया पृथगुक्तिः । अत एव तेषां कालमयेत्यादीनामेकादशानां प्रथमं देवता आह– **महालक्ष्मीति ।।** महालक्ष्मी-रूपाणि **एकादश** कालमायेत्येकादश तत्त्वशब्दवाच्यानि एकादशतत्त्वनियामकत्वेन देवताश्चेति **विदो** ज्ञानिनो विदुः । तथा विष्णोः एकादशरूपाण्यपि । **तुशब्दो** विशेषार्थः । तेन एव शब्दसम्बन्धः विशेषत एवेति । **तन्नाम्ना** कालेत्यादितत्त्वनाम्ना वाच्यानि तत्त्वनियामकानि वेति ज्ञेयम् ।। १४६-१४९ ।।

ध्यानार्थं तत्त्वदेवानां लक्षणकथनम्

**तं.सा.** **प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः ।**
**कृताञ्जलिपुटान्येव प्रधानं तं(प्रधानस्थं) हरिं प्रति ।।१५०।।**
**सर्वाण्येतानि तत्त्वानि...............।**

**त.क.–** उक्तवक्ष्यमाणानां तत्त्वदेवतानामवस्थितिप्रकारं ध्यानार्थं बुभुत्सातिशयादत्रैव दर्शयति— **प्रधानेति ।।** प्रधानः प्रणवप्रतिपाद्यो हरिः । तत्सदृशवर्णानि 'उद्यद्भास्वत्समाभासः' (तं.सा.१-१८) इति श्लोकोक्तवर्णानीत्यर्थः । **तं प्रसिद्धं** हरिं प्रत्येवेति संबन्धः । ननु कृताञ्जलिपुटत्वमेकादशानामेव रूपाणां वक्ष्यमाणानामेव वा रूपाणां व्यवस्थाऽस्ति किम्? नेत्याह— **अशेषत इति ।।** तस्य विवरणं **सर्वाण्येतानि तत्त्वानीति ।** अथवा अशेषतो द्विभुजानीति संवन्धः । उक्तशङ्कानिरासस्तु सर्वाण्येतानीत्यनेनेत्यनुसन्धेयम् । ननु लक्ष्मीरूपाणां भगवन्तं प्रति कृताञ्जलिपुटत्वं युक्तम् । भगवद्रूपाणां तु कथमित्यतो वेदमुदितम्— **सर्वाणीति ।।** कालादिशक्त्यन्तान्येकादश भगवद्रूपाण्यपि तत्त्वान्येव । प्रधानं तु रूपं हृदयमध्यस्थमन्यदेव । अतस्तत्प्रति कृतावञ्जलिपुटत्वं युक्तम् । 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः' (ब्र.सू.भा.१-१-१५)इत्यादिस्मृतेरिति भावः ।। १५० ।।

**अ.सं.–** ध्यानार्थं तत्त्वदेवतालक्षणमाह– **प्रधानेति ।।** सर्वाणि एतानि

पूर्वोक्तानि तत्त्वानि **अशेषतः** एकमपि अविहायेति यावत् । **प्रधानोपमवर्णानि** प्रधानः सर्वोत्तमो मूलनारायणः तदुपमवर्णानि उद्यदादित्यसदृशकान्तिमन्तीति भावः । द्विभुजानि च **प्रधानं** सर्वोत्तमं **हरिं प्रति** हरेरभिमुखम् । कृताञ्जलिपुटानि चेति सम्बन्धः ।। १५० ।।

**गु.दी.–** तत्त्वानां स्थितिप्रकारं ध्यानार्थमाह— **प्रधानेति** ।। प्रधानः सर्वोत्तमो नारायणः । **तदुपमवर्णानि** उद्यदादित्यवर्णानीत्यर्थः । यद्वा प्रधानम् अव्यक्तं तस्य गुणत्रयात्मकत्वेन शुक्लकृष्णरक्तवर्णवत्वात्, **तदुपमवर्णानि** एतानि सर्वाणि तत्त्वानीति । प्रधानस्थं हरिं प्रति कृताञ्जलिपुटानि । 'प्रधानं तं हरिं प्रति' इत्यपि क्वचित् पाठः ।। १५० ।।

**मङ्गाली–** ध्यानार्थं तत्त्वदेवतालक्षणमाह– **प्रधानेति** । सर्वाण्येतानि पूर्वोक्तानि तत्त्वानि **अशेषतः** एकमप्यविहायेति यावत् । **प्रधानोपमवर्णानि** प्रधानः सर्वोत्तमो मूलरूपी नारायणः, तदुपमवर्णानि उद्यदादित्यसदृशकान्तिमन्तीति भावः । द्विभुजानि च **प्रधानं** सर्वोत्तमं **हरिं प्रति** हरेरभिमुखं कृतांजलिपुटानि चेति सम्बन्धः ।। १४६ ।।

पुरुषमारभ्य पृथिवीपर्यन्तानां तत्त्वानां देवताभिधानम्

**तं.सा.** **..................ब्रह्मा तु पुरुषः स्मृतः ।**
**महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता ।। १५१ ।।**

**एवं वायुरपि ज्ञेयो भारती चैव(भाति चैव तु) तत्त्रयम् ।**
**रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते ।। १५२ ।।**

**अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ ।**
**दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि ।। १५३ ।।**

**वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा ।**
**इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः ।। १५४ ।।**

**अन्ये तु(ऽपि) सूनवो वायो रुद्रस्यापि प्रकीर्तिताः ।**
**एतेषु भगवान् विष्णुः प्रधानतनुरेव तु ॥ १५५ ॥**

**त.क.–** एवमेकादशतत्त्वानां देवता अभिधाय पुरुषादिपृथिव्यन्तानां यथोद्देशं देवता आह— **ब्रह्मेति ॥** पुरुषः पुरुषनामा, महान् महन्नामा च ब्रह्मा स्मृत इत्यनेन जीवतत्त्वमहत्तत्त्वयोश्चतुर्मुखोऽभिमानी देवतेति सिद्ध्यति । अभिमान्यभिमन्यमानत्वं विनैकशब्दानुपपत्तेरिति भावः । उद्देशानुसारेण तत्त्वदेवता उक्ताः । यद्यपि महद्देवता वक्तव्या । तथाप्युक्तिसौकर्याय क्रमोल्लङ्घनम् । 'सर्वाण्येतानि तत्त्वानि' इत्येतद् 'ब्रह्मा तु पुरुषः स्मृतः' इत्येतच्छेषो वा, एतानि वक्ष्यमाणानि तत्त्वदैवतानि सर्वाण्यप्यनुक्रम्योच्यन्त इति तस्यार्थः । वायुर्भारती च पुरुषमहदव्यक्ताख्यं त्रयं व्याप्य वर्तत इति शेषः । अहङ्कार इति सम्मतः । नियामकतयेति शेषः । **मनः स्कन्देन्द्रौ** स्कन्देन्द्राभिमन्यमानम् । उच्यत इति शेषः । मनसि स्कन्देन्द्रौ स्त इति शास्त्रे उच्यत इति वा । **अहङ्कारः** अहङ्काराभिमानिनौ । सप्तम्यर्थे प्रथमा वा । **अपि**शब्दो रुद्रेण समुच्चयार्थः । अहङ्कारस्य शेषरुद्रगरुडास्त्रयोऽपि देवा इति भावः । इन्द्रियाख्याः क्रमाच्छ्रोत्राद्युपस्थान्तशब्दवाच्याः । अत्रापि पूर्ववदेकपदत्वनिर्वाहाय देवतात्वे पर्यवसानम् । दिगभिमानिनः श्रोत्रस्य । मुख्यप्राणपुत्रः प्राणाख्यः त्वचः । सूर्यश्चक्षुषः । वरुणो रसनायाः । घ्राणस्याश्विनौ । अग्निर्वाचः । दक्षप्रजेशः पाण्योः । इन्द्रसूनुर्जयन्तः पादयोः । मित्रः पायोः । स्वायम्भुवो मनु रुपस्थस्य देवतेति ध्येयम् ।

शब्दादीनां गन्धान्तानां देवता आह— **शब्दनामेति ॥** बृहस्पतिः शब्दनामवान् शास्त्रे उदहृतः । पूर्ववत्तात्पर्यम् । वायोस्सूनवश्चत्वारः अपानादिसमानान्ता अन्ये शब्दशब्दादन्यस्पर्शशब्दादिगन्धशब्दान्तनामान इत्यर्थः । अन्येषां गन्धान्तानां शब्दानां वाच्या इति वा । **तु**शब्दो वक्ष्यमाण-विशेषद्योतकः । तमेव दर्शयति— **रुद्रस्यापीति ॥** रुद्रस्य सूनुर्विनायकः, **अपि**शब्दाद्भूतवायुः, अग्निः, पृथिवी, वरुणश्चेत्येते शब्दादीनां देवता इति पूर्वेण

संबन्धः। आकाशादिपृथिव्यन्तानां देवता आह– **रुद्रस्येति ।। रुद्रस्य सूनवो** विनायकादयः। **अपि**शब्दादाकाशादेरिति ग्राह्यम् ।

विनायकस्तथाऽऽकाशो निरावृत्या प्रकाशनात् ।
प्रधानवायुजो भूतवायुनामा मरीचिकः ।
अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम् ।। (गी.ता.१३-२७)

इत्याद्यागमेषु विनायकाद्या आकाशाद्यभिमानित्वेन प्रकीर्तिता इति संबन्धः। कालादिशक्त्यन्तेषु तत्त्वेषु ईश्वररूपाणि ध्येयानि, पुरुषादिषु चतुर्मुखादिरूपाणि ध्येयानीति प्राप्त्या विष्णुस्मृतिविहीनेत्यादिपूर्वोक्तिविरोध इत्यत आह– **एतेष्विति ।। तु**शब्दोऽप्यर्थः। एतेष्वपि भगवान् विष्णुर्ध्येय एवेति संबन्धः। **एतेषु** पुरुषादितत्त्वेषु तेऽपि ध्येया इति विशेषार्थो वा **तु**शब्दः ।। १५१-१५५ ।।

**अ.सं.–** इदानीं पुरुषादिपञ्चविंशतितत्त्वानां देवता आह– **ब्रह्मेति ।। पुरुषः** जीवतत्त्वम् **महांश्च** महत्तत्त्वम् इत्युभयोः ब्रह्मा देवतात्वेन स्मृत इत्यर्थः । **ब्रह्माणी** सरस्वती **अव्यक्तनाम्नी** अव्यक्तशब्दवाच्या अव्यक्ततत्त्वाभिमानिनी चेति ज्ञेयम् ।।

**तत्त्रयं** पुरुषमहदव्यक्तानां त्रयम् । विभक्तिविपरिणामेन एतेषां त्रयाणाम् **एवं** ब्रह्मसरस्वतीवत् वायुर्भारती च देवता । तत्रापि द्वयोर्वायुः । अव्यक्ततत्त्वस्य भारतीति विवेकः। रुद्रः अहङ्कारतत्त्वस्य देवता। **स्कन्देन्द्रौ** कामपुरन्दरौ **मनः** मनसः अभिमानिनौ **उच्यते** उच्येते। अत्र सर्वत्र यथायोग्यं विभक्त्यादि-विपरिणामेन पदानि योज्यानि नियामकशब्दापरपर्यायं देवतापदं चाध्याहार्यम् ।।

अहङ्कारस्य देवतान्तरमाह– **अहङ्कार इति ।।** वीन्द्रः गरुडः । तथा चाहङ्कारस्य गरुडशेषरुद्रास्त्रयोऽभिमानिन इत्युक्तं भवति । दशेन्द्रियदेवता आह– **दिगिति ।।** दिक्शब्देन दिग्देवता उच्यन्ते। **वायुसूनुः** प्राणः। **इन्द्रसूनुः** जयन्तः। **मनुः** स्वायम्भुवः। दिगादयो दशदेवा इन्द्रियशब्दवाच्याः क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थनामकानां दशानामिन्द्रियाणां देवताश्चेत्यर्थः। शब्दादिपञ्चतन्मात्रादेवता आह– **शब्देति ।।** बृहस्पतिः **शब्दनामा**

**अन्ये तु(ऽपि) सूनवो वायो रुद्रस्यापि प्रकीर्तिताः ।**
**एतेषु भगवान् विष्णुः प्रधानतनुरेव तु ॥ १५५ ॥**

**त.क.**– एवमेकादशतत्त्वानां देवता अभिधाय पुरुषादिपृथिव्यन्तानां यथोद्देशं देवता आह— **ब्रह्मेति** ॥ पुरुषः पुरुषनामा, महान् महन्नामा च ब्रह्मा स्मृत इत्यनेन जीवतत्त्वमहत्तत्त्वयोश्चतुर्मुखोऽभिमानी देवतेति सिद्ध्यति । अभिमान्यभिमन्यमानत्वं विनैकशब्दानुपपत्तेरिति भावः । उद्देशानुसारेण तत्त्वदेवता उक्ताः । यद्यपि महद्देवता वक्तव्या । तथाप्युक्तिसौकर्याय क्रमोल्लङ्घनम् । 'सर्वाण्येतानि तत्त्वानि' इत्येतद् 'ब्रह्मा तु पुरुषः स्मृतः' इत्येतच्छेषो वा, एतानि वक्ष्यमाणानि तत्त्वदैवतानि सर्वाण्यप्यनुक्रम्योच्यन्त इति तस्यार्थः । वायुर्भारती च पुरुषमहदव्यक्ताख्यं त्रयं व्याप्य वर्तत इति शेषः । अहङ्कार इति सम्मतः । नियामकतयेति शेषः । **मनः स्कन्देन्द्रौ** स्कन्देन्द्राभिमन्यमानम् । उच्यत इति शेषः । मनसि स्कन्देन्द्रौ स्त इति शास्त्रे उच्यत इति वा । **अहङ्कारः** अहङ्काराभिमानिनौ । सप्तम्यर्थे प्रथमा वा । **अपि**शब्दो रुद्रेण समुच्चयार्थः । अहङ्कारस्य शेषरुद्रगरुडास्त्रयोऽपि देवा इति भावः । इन्द्रियाख्याः क्रमाच्छ्रोत्राद्युपस्थान्तशब्दवाच्याः । अत्रापि पूर्ववदेकपदत्वनिर्वाहाय देवतात्वे पर्यवसानम् । दिगभिमानिनः श्रोत्रस्य । मुख्यप्राणपुत्रः प्राणाख्यः त्वचः । सूर्यश्चक्षुषः । वरुणो रसनायाः । घ्राणस्याश्विनौ । अग्निर्वाचः । दक्षप्रजेशः पाण्योः । इन्द्रसूनुर्जयन्तः पादयोः । मित्रः पायोः । स्वायम्भुवो मनु रुपस्थस्य देवतेति ध्येयम् ।

शब्दादीनां गन्धान्तानां देवता आह— **शब्दनामेति** ॥ बृहस्पतिः शब्दनामवान् शास्त्रे उदहृतः । पूर्ववत्तात्पर्यम् । वायोस्सूनवश्चत्वारः अपानादिसमानान्ता अन्ये शब्दशब्दादन्यस्पर्शशब्दादिगन्धशब्दान्तनामान इत्यर्थः । अन्येषां गन्धान्तानां शब्दानां वाच्या इति वा । **तु**शब्दो वक्ष्यमाण-विशेषद्योतकः । तमेव दर्शयति— **रुद्रस्यापीति** ॥ रुद्रस्य सूनुर्विनायकः, **अपि**शब्दाद्भूतवायुः, अग्निः, पृथिवी, वरुणश्चेत्येते शब्दादीनां देवता इति पूर्वेण

संबन्धः । आकाशादिपृथिव्यन्तानां देवता आह– **रुद्रस्येति ।। रुद्रस्य सूनवो** विनायकादयः । **अपि**शब्दादाकाशादेरिति ग्राह्यम् ।

विनायकस्तथाऽऽकाशो निरावृत्या प्रकाशनात् ।
प्रधानवायुजो भूतवायुनामा मरीचिकः ।
अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम् ।। (गी.ता.१३-२७)

इत्याद्यागमेषु विनायकाद्या आकाशाद्यभिमानित्वेन प्रकीर्तिता इति संबन्धः । कालादिशक्त्यन्तेषु तत्त्वेषु ईश्वररूपाणि ध्येयानि, पुरुषादिषु चतुर्मुखादिरूपाणि ध्येयानीति प्राप्त्या विष्णुस्मृतिविहीनेत्यादिपूर्वोक्तिविरोध इत्यत आह– **एतेष्विति ।। तु**शब्दोऽप्यर्थः । एतेष्वपि भगवान् विष्णुर्ध्येय एवेति संबन्धः । **एतेषु** पुरुषादितत्त्वेषु तेऽपि ध्येया इति विशेषार्थो वा **तु**शब्दः ।। १५१-१५५ ।।

**अ.सं.–** इदानीं पुरुषादिपञ्चविंशतितत्त्वानां देवता आह– **ब्रह्मेति ।। पुरुषः** जीवतत्त्वम् **महांश्च** महत्तत्त्वम् इत्युभयोः ब्रह्मा देवतात्वेन स्मृत इत्यर्थः । **ब्रह्माणी** सरस्वती **अव्यक्तनाम्नी** अव्यक्तशब्दवाच्या अव्यक्ततत्त्वाभिमानिनी चेति ज्ञेयम् ।।

**तत्त्रयं** पुरुषमहदव्यक्तानां त्रयम् । विभक्तिविपरिणामेन एतेषां त्रयाणाम् **एवं** ब्रह्मसरस्वतीवत् वायुर्भारती च देवता । तत्रापि द्वयोर्वायुः । अव्यक्ततत्त्वस्य भारतीति विवेकः । रुद्रः अहङ्कारतत्त्वस्य देवता । **स्कन्देद्रौ** कामपुरन्दरौ **मनः** मनसः अभिमानिनौ **उच्यते** उच्येते । अत्र सर्वत्र यथायोग्यं विभक्त्यादि-विपरिणामेन पदानि योज्यानि नियामकशब्दापरपर्यायं देवतापदं चाध्याहार्यम् ।।

अहङ्कारस्य देवतान्तरमाह– **अहङ्कार इति ।।** वीन्द्रः गरुडः । तथा चाहङ्कारस्य गरुडशेषरुद्रास्त्रयोऽभिमानिन इत्युक्तं भवति । दशेन्द्रियदेवता आह– **दिगिति ।।** दिक्शब्देन दिग्देवता उच्यन्ते । **वायुसूनुः** प्राणः । **इन्द्रसूनुः** जयन्तः । **मनुः** स्वायम्भुवः । दिगादयो दशदेवा इन्द्रियशब्दवाच्याः क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थनामकानां दशानामिन्द्रियाणां देवताश्चेत्यर्थः । शब्दादिपञ्चतन्मात्रादेवता आह– **शब्देति ।।** बृहस्पतिः **शब्दनामा**

शब्दतत्त्वाभिमानी चोदाहृता । **अन्ये तु** अन्येषां तु स्पर्शरूपरसगन्धाख्यानां चतुर्णां तत्त्वानाम् । अन्ये प्राणस्य त्वगिन्द्रियाभिमानित्वस्योक्तत्वात् प्राणव्यतिरिक्ता अपानव्यानोदानसमानाख्याश्चत्वारः **वायोः** प्रधानवायोः **सूनवः** पुत्राः अभिमानिनः प्रकीर्तिता इत्यर्थः । शब्दादिपञ्चतन्मात्राणां देवतान्तरमाह– **रुद्रस्येति ।।** सूनव इत्यनुवर्त्तते । रुद्रस्य सूनवोऽपि प्राणाद्याः पञ्च । शब्दादीनां पञ्चानामभिमानिनः कीर्तिताः । तदुक्तं गीतातात्पर्ये– ( १३.२७)

शब्दाद्याः पञ्च शिवजाः शब्दनात्पर्शनादपि ।
रूपणात् रसनाच्चैव गन्धनाच्च तथाऽभिधाः ।। इति ।

शिवजाः रुद्रपुत्राः शब्दाद्याः शब्दस्पर्शरूपरसगन्धाभिमानिनः प्राणापानव्यानोदान-समाननामानः पञ्च शब्दनादिनिमित्तेन **तथाऽभिधाः** शब्दस्पर्शादिनामान इति प्रमाणार्थः । तथा च बृहस्पतिः रुद्रपुत्रः प्राणश्चेत्युभौ शब्दस्याभिमानिनौ । स्पर्शादीनां चतुर्णां वायुपुत्राः अपानादयश्चत्वारः । रुद्रपुत्रा अपि अपानादयश्चत्वारः इत्यष्टौ देवता इत्युक्तं भवति । तत्र स्पर्शस्य अपानौ द्वौ । रूपस्य व्यानौ द्वौ । रसस्योदानौ द्वौ । गन्धस्य समानौ द्वौ अभिमानिनाविति विवेको ज्ञेयः । आकाशवायुवह्निजलपृथ्वीनामकपञ्चमहाभूतदेवतानां गणेशमरीचनामकभूतवायु-वह्निवरुणपृथ्वीनामकानां प्रसिद्धत्वादत्रानुक्तिरिति ज्ञेयम् । देवता आह– **रुद्रस्येति ।।** अन्ये तु सूनव इत्येतदनुवर्त्तते । **सूनवः** इति बहुवचनम् आद्यर्थे । तथा च **अन्ये तु** अन्येषां तु । सर्वेषु तत्त्वेषु उक्तेषु सत्सु अवशिष्टानामित्यर्थः । आकाशादिपञ्चमहाभूतानां रुद्रसूनवः रुद्रसूनुः गणेशः तदादयः पूर्वप्रमाणोक्ताः पञ्च **देवा** अभिमानिनः कीर्तिताः इत्यर्थो ज्ञेयः । अत्र सर्वत्र तत्तन्नियामकत्वेन तत्तच्छब्दवाच्यत्वं ज्ञेयम् । तत्त्वानां ध्याने विशेषमाह– **एतेष्विति ।। एतेषु तु** पुरुषादितत्त्वेष्वपि **प्रधानतनुः** सर्वोत्तमस्वरूपः भगवान् विष्णुर्ध्येय एवेत्यर्थः ।। ।। १५१-१५५ ।।

**गु.दी.–** इदानीं पुरुषादितत्त्वाभिमानिन आह— **ब्रह्मेत्यादिना ।। ब्रह्मा** विरिञ्चः **पुरुषो महांश्च** जीवाभिमानी महत्तत्त्वाभिमानी च **स्मृतः** 'जीवमान्युत्तमो

**ब्रह्मा'** 'सर्वजीवाभिमानी स परः पुरुष उच्यते' (भा.ता.११-२४-१९) इत्येकादशतात्पर्ये उदाहृतप्रमाणेषु प्रसिद्धः। **ब्रह्माणी** सरस्वती **अव्यक्तनाम्नी** स्थूलाव्यक्तनाम्नी । मूलसूक्ष्माव्यक्तस्य लक्ष्म्याऽभिमन्यमानत्वात्। 'प्रकृतिर्नाम तत्पत्नी प्रकृतेरभिमानिनी' (भा.ता.११-२४-१९) इति एकादशतात्पर्यो-दाहृतप्रमाणात्। **वायुः एवं** पुरुषः महांश्च। **भारती चैवम्** अव्यक्तनाम्नी। तत्रायं पुरुषो महानव्यक्तमिति त्रयं तत्त्वेन ज्ञेयम्। **रुद्रोऽहङ्कारः** स्थूलाहङ्कारः। **स्कन्देन्द्रौ** षण्मुखसुरेन्द्रौ **मनः** **उच्यते** उच्येते। शेषवीन्द्रावपि सूक्ष्माहङ्काराभिमानिनौ। दिगादयो मन्वन्ता दश **इन्द्रियाख्याः** इन्द्रियेति नामवन्तः। तदभिमानिनश्च। दिक्शब्देन दिग्देवता उच्यन्ते। ताश्च

मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः ।

श्रोत्राभिमानिनः सर्वे' (ऐ.भा.प्रघट्टक१-खण्ड ५)

इत्यैतरेयभाष्योक्ताः श्रोत्राभिमानिन्यः। **वायुसूनुः** प्राणनामा त्वगभिमानी। **सूर्यश्चक्षुरभिमानी।** **वरुणो** जिह्वाभिमानी। **अश्विनौ** घ्राणस्य। **वह्निर्वागिन्द्रियस्य।** **दक्षः** पाण्योः। **इन्द्रसूनुर्जयन्तः** पादयोः। **मित्रः** पायोः। **मनुः** स्वायुम्भुवः उपस्थायाः। **बृहस्पतिः** शब्दनामा तदभिमानी चोदाहृतः। एवं शब्दस्य बृहस्पतिमुक्त्वा पुनः शब्दस्य तदतिरिक्तानां स्पर्शादीनां चतुर्णां चाभिमानिन आह — **अन्ये त्विति ॥** शब्दादीनां पञ्चतन्मात्राणामभिमानिनः **अन्ये तु** प्राणापान-व्यानोदानसमानाः पञ्च वायोः रुद्रस्यापि सूनवः प्रकीर्तिताः। यथोक्तं गीतातात्पर्ये—

शब्दाद्याः पञ्च शिवजाः शब्दनात् स्पर्शनादपि ।

रूपणात् रसनाच्चैव गन्धनाच्च तथाभिधाः ॥

(गी.ता.उदाहृतम् १३-२७) इति।

केचित्तु- बृहस्पतेः शब्दाभिमानित्वेनोक्तत्वात् **अन्ये तु** स्पर्शाद्यभिमानिनस्तु अपानव्यानोदानसमानाश्चत्वार इत्यर्थः। आकाशादिपञ्चमहाभूतदेवानां गणपत्या-दीनां-

विनायकस्तथाऽऽकाशो निरावृत्त्या प्रकाशनात् ।
प्रधानवायुजो भूतवायुर्नाम्ना मरीचकः ।।
अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम् ।
अदनात् प्रथनाज्जन्मलयहेतोस्तथाभिधाः ।। (गी.ता.उदाहृतम् १३-२७)

इति प्रमाणप्रसिद्धत्वादनुक्तिरिति वर्णयन्ति ।

वस्तुतस्तु, **अन्ये च** मात्राभिमानिनः भूताभिमानिनश्च वायोः सूनवो रुद्रस्य सूनवोऽपीति योजना। तत्र वायोः सूनवः शब्दादिमात्राभिमानिनः । रुद्रस्य सूनवो विनायकाद्याश्चाकाशादिभूताभिमानिन इति बोद्धव्यम्। **एतेषु** पुरुषादितत्त्वेषु प्रधानतनुरेव विष्णुर्ध्येयः इति सम्बन्धः। अत्र सर्वत्र तत्तन्नियामकत्वेन तत्तच्छब्दवाच्यत्वं द्रष्टव्यम् ।। १५१-१५५ ।।

**मङ्गाली–** इदानीं पञ्चविंशतितत्त्वानां देवता आह– **ब्रह्मेति ।। पुरुषः** जीवतत्वं **महांश्च** महत्तत्त्वमित्युभयोः ब्रह्मा देवतात्वेन स्मृतः इत्यर्थः । **ब्रह्माणी** सरस्वती **अव्यक्तनाम्नी** अव्यक्तशब्दवाच्या अव्यक्ततत्त्वाभिमानिनी चेति ज्ञेयम्।।

**तत्त्रयं** पुरुषमहदव्यक्ताख्यं त्रयम् । विभक्तिविपरिणामेन एतेषां त्रयाणां एवं ब्रह्मसरस्वतीवत् वायुर्भारती च देवता । तत्रापि द्वयोः वायुः अव्यक्ततत्त्वस्य भारतीति विवेकः । यद्वा पुरुषो महान् अव्यक्तं चेति यत्त्रयं तत् **एवं** ब्रह्मसरस्वतीवत् वायुर्ज्ञेयो भारती च ज्ञेया । तत्र पुरुषमहान्तौ वायुरव्यक्तं भारतीति विवेकः । रुद्रः **अहङ्कारः** अहङ्कारतत्त्वस्य देवता । **स्कन्देन्द्रौ** कामपुरंदरौ **मनः** मनसः अभिमानिनौ उच्यते । अत्र सर्वत्र यथायोग्यं विभक्त्यादिविपरिणामेन पदानि योज्यानि । नियामकशब्दापरपर्यायं पदं त्वध्याहार्यम् ।।

अहङ्कारस्य देवतान्तरमाह– **अहङ्कार इति ।। वीन्द्रो** गरुडः । तथा च अहङ्कारस्य गरुडशेषरुद्राः त्रयो अभिमानिन इत्युक्तं भवति। दशेन्द्रियदेवता आह– **दिगिति ।।** दिक्शब्देन दिक्देवता उच्यन्ते । **वायुसूनुः** प्राणः **इन्द्रसूनुर्जयन्तः** । **मनुः** स्वायंभुवः । दिगादयो दश देवताः **इन्द्रियाख्याः** इन्द्रियशब्दवाच्याः ।

क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थनामकानां दशानां इन्द्रियाणां देवताश्चेत्यर्थः । शब्दादिपश्चतन्मात्रदेवता आह– **शब्देति ।।** बृहस्पतिः **शब्दनामा** शब्दतत्त्वाभिमानिनी चोदाहृतः । **अन्ये तु** अन्येषां तु स्पर्शरूपरसगन्धाख्यानां चतुर्णां तत्त्वानां अन्येप्राणस्य त्वगिन्द्रियाभि-मानित्वस्योक्तत्वात् प्राणव्यतिरिक्ता अपानव्यानोदानसमानाख्याश्चत्वारो **वायोः** प्रधानवायोः **सूनवः** पुत्राः अभिमानिनः प्रकीर्तिता इत्यर्थः । शब्दादिपश्चतन्मात्राणां देवतान्तरमाह– **रुद्रस्येति ।।** सूनव इत्यनुवर्त्तते । रुद्रस्य सूनवोऽपि प्राणाद्याः पश्चशब्दादीनां पश्चानामभिमानिनः प्रकीर्तिताः । तदुक्तं गीतातात्पर्ये–

शब्दाद्याः पश्च शिवजाः शब्दानात्पर्शनादपि ।
रूपणाद्रसनाच्चैव गन्धनाच्च तथाभिधाः ।। इति । (गी.ता.१३-२७)

तथा च बृहस्पतिः रुद्रस्य पुत्रः प्राणश्चेत्युभौ शब्दाभिमानिनौ । स्पर्शादीनां चतुर्णां वायुपुत्रापानादयश्चत्वारः रुद्रस्य पुत्रा अपि अपानादयश्चत्वार इत्यष्टौ देवता इत्युक्तं भवति । आकाशवायुवह्निजलपृथिवीनामकानां पश्चमहाभूतानां गणेशमरीचिनामकभूतवायुवह्निवरुणपृथिवीनामकानां प्रसिद्धत्वादत्रानुक्तिरिति ज्ञेयम् । तदुक्तम्–

विनायकस्तथाऽकाशो निरावृत्या प्रकाशनात् ।
प्रधानवायुजो भूतवायुर्नामा मरीचिकः ।।
अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम् ।
अदनात्प्रथनाज्जन्म लयहेतोस्तथाभिधाः ।। इति । (गी.ता.१३-२७)

यद्वा अवशिष्टानामाकाशादिपश्चमहाभूतानां देवता आह– **रुद्रस्येति ।।** अन्ये तु सूनव इत्येतदनुवर्तते । सूनव इति बहुवचनं आद्यर्थे । तथा च **अन्ये तु** अन्येषां तु सर्वेषु तत्त्वेषु उक्तेषु सत्सु अवशिष्टानामित्यर्थः । आकाशादिपश्चमहातानां **रुद्रसूनवः** रुद्रसुनुर्गणेशः तदादयः पूर्वप्रमाणोक्ताः पश्च देवा अभिमानिनः प्रकीर्तिता इत्यर्थो ज्ञेयः । अत्र सर्वत्र तत्तन्नियामकत्वेन तत्तच्छब्दवाच्यत्वं ज्ञेयम् । तत्त्वानां ध्याने विशेषमाह– **एतेषु इति ।। एतेषु** पुरुषादितत्त्वेष्वपि

**प्रधानतनुः** सर्वोत्तमरूपः भगवान् विष्णुर्ध्येय एवेत्यर्थः ।। १५१-१५५ ।।

तत्त्वमन्त्रोद्धारः

**त.सं. ध्येयः परात्मनोर्मध्ये तत्त्वनाम(मा)तदर्थयोः ।**
**जपे न्यासे नमोऽन्तश्च स्वाहान्तो होमकर्मणि ।। १५६ ।।**

**त.क.–** तत्त्वमन्त्रानुद्धरति— **परात्मनोरिति ।।** परात्मशब्दौ शब्दपरौ । प्रकृतो विष्णुस्तदिति परामृश्यते । स विष्णुरर्थे ययोस्तौ तदर्थौ । परात्मनोर्विशेषणमेतत् । विष्णुवाचकयोः परशब्दात्मशब्दयोर्मध्ये तत्त्वनाम ध्येयम् । पुरुषादिपदिमति यावत्। 'अतदर्थयोः' इति पाठे अतच्छब्देन तत्त्वभिन्नविष्णुरेवोच्यत इत्ययमेवार्थः । प्रथमतः परशब्दः, ततः पुरुषशब्दः, तत आत्मशब्द उच्चार्यः । ततश्चायं पुरुषतत्त्वमन्त्र एको निष्पद्यत इति शेषः । ननु प्रकृतिमात्रस्योच्चारणानर्हत्वात् कया विभक्त्या परात्मशब्दावुच्चार्याविति शङ्कां, नैतच्छब्दत्रयात्मक एवैको मन्त्रः किन्तु वैकल्पिकं शब्दान्तरमपि व्यवस्थया ग्राह्यमिति वदन् परिहरति— **जप इति ।।** तत्त्वमन्त्रैर्जपे न्यासे च कर्तव्ये नमोऽन्त उच्चारणीयः । होमाख्ये कर्मणि कर्तव्ये स्वाहाशब्दान्तः । तथा च पक्षद्वयेऽपि 'नमः स्वस्तिस्वाहा' (पा.सू.२-३-१६) इति वचनात् परात्मशब्दौ चतुर्थ्यन्तावेवेति भावः । तथा च 'पराय पुरुषात्मने नमः' इति जपादौ मन्त्रः । 'पराय पुरुषात्मने स्वाहा' इति होमे मन्त्रः ।

नमः परायेति पूर्वमात्मने नम इत्यनु ।
नाम जीवादितत्त्वानां न्यसेत्तत्तत्पदैः क्रमात् ।।

इत्यत्र प्रमाणमनुसन्धेयम् । 'पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः' इत्यादिमन्त्राकारस्तु सम्प्रदायपरम्पराप्राप्तः । पुरुषात्मने इत्यस्यैव व्याख्यानं ब्रह्मवायुभ्यामिति । तेन न वचनव्यत्ययचोद्यावकाशः । एवं पञ्चत्रिशंन्मन्त्रेष्वपि द्रष्टव्यम् ।। १५६ ।।

**अ.सं.–** इदानीं तत्त्वमन्त्रोद्धारप्रकारमाह– **परेति ।। तदर्थयोः** सः विष्णुः अर्थः ययोः तयोः **परात्मनोः** परशब्दात्मशब्दयोर्मध्ये **तत्त्वनाम** तत्त्ववाचकं

पुरुषादिपदं प्रयोक्तव्यम् । 'तत्त्वनामा तदर्थयोः' इति पाठे अतदर्थयोरिति पदच्छेदः । तानि तत्त्वानि अर्था न भवन्तीत्यतदर्थौ । तयोः अर्थात् विष्णवर्थयोरित्यर्थः सिध्यति । तदर्थयोरित्येव पदच्छेदे तु **तदर्थयोः** परात्मशब्दवाच्ययोर्भगवद्रूयोर्मध्ये **तत्त्वनामा** पुरुषादितत्त्वनामभिर्वाच्यो भगवान् वक्तव्यः इत्यर्थो ज्ञेयः । एवं शब्दत्रयस्वरूपतत्त्वमन्त्रः जपन्यासहोमेषु कथं प्रयोक्तव्यः इत्यत आह– **जप इति ॥ नमोऽन्तः** नमःशब्दान्तः **स्वाहान्तः** स्वाहाशब्दात् तत्त्वमन्त्रः प्रयोक्तव्य इति शेषः । नमःस्वाहाशब्दसम्बन्धात् आत्मशब्दस्य चतुर्थ्यन्तत्त्वं ज्ञातव्यम् । **'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च'** (पा.सू.२-३-१६) इति सूत्रात् । परपदस्यापि आत्मशब्दविशेषणत्वात् । उक्तं च हयशीर्षे–

नमः परायेति पूर्वमात्मने नम इत्यनु ।
नामजीवादितत्त्वानां न्यसेत् तत्तत्पदे क्रमात् ॥ इति ।

तथा चेत्थं तत्त्वमन्त्रोद्धारः । 'पराय शक्त्यात्मने नमः' इत्यादि । 'पराय शक्त्यात्मने स्वाहा' इत्यादीति । सर्वोत्कृष्टाय शक्त्यादितत्त्वनियामकायेति मन्त्रार्थः । 'पराय शक्त्यात्मने लक्ष्मीनारायणाभ्यां नमः । पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः' इत्यादि प्रकारेण सम्प्रदायप्राप्तस्य मन्त्रप्रयोगस्य तु पराय शक्त्यात्मने इत्याद्येव मन्त्रस्वरूपम् । लक्ष्मीनारायणाभ्यामित्यादि तु मन्त्रप्रतिपाद्यदेवतानुस्मरणार्थमुच्चार्यते । न तु मन्त्रान्तर्गतमित्यभिप्रायो ज्ञेयः । तेन पराय पुरुषात्मने इति एकवचनान्तपदस्य ब्रह्माणीभारतीभ्याम् इति द्विवचनान्तपदेन कथं विशेषणविशेष्यभावेनान्वय इति चोद्यं निरस्तं भवति । जपे न्यासे नमोऽन्तस्त्वित्यादि प्रयोगप्रकारः न केवलं तत्त्वमन्त्रेष्वेव किन्तु सर्वमन्त्रेष्वपीत्यप्याहुः ॥ १५६ ॥

**गु.दी.**– तत्त्वमन्त्राण्युद्धरति— **परात्मनोरिति ॥** तदर्थयोः परमात्मनोरिति सम्बन्धः । स प्रधानतनुर्विष्णुरर्थो ययोस्तादृशयोः परात्मशब्दयोर्मध्ये तत्त्वनाम उच्चार्यमिति शेषः । **तदर्थयोः** तत्त्वनामार्थयोरिति वा । अयं मनुर्नमोन्त इति द्रष्टव्यम् । अनेन मूलेन सम्प्रदायेन च 'पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः' इत्यादिमन्त्रस्वरूपं लब्धमिति ज्ञेयम् । तथा चोक्तं हयशीर्षे—

नमः परायेति पूर्वमात्मने नम इत्यनु ।
नामजीवादितत्त्वानां न्यसेत्तत्तत्पदे क्रमात् ।। इति ।

न चैतेषु मन्त्रेष्वनन्वयः, पुरुषात्मने पराय नमः, ब्रह्मवायुभ्यां च नम इति चशब्दाध्याहारः कार्य इति तात्त्विकानां सम्प्रदायात्। मन्त्रस्य नमोन्तत्वे विशेषमाह— 'जपे न्यासे नमोन्तस्तु स्वाहान्तो होमकर्मणि' इति ।

अत्र केचन सम्प्रदायविदः तत्त्वमन्त्रस्यैव होमे नमःशब्दस्थाने स्वाहाशब्दो द्रष्टव्यो न तु मन्त्रान्तरस्येति वदिन्त। अन्ये तु होमसमये सर्वमन्त्राणामपि नमश्शब्दस्थाने स्वाहाशब्दं वदन्ति ।। १५६ ।।

**मङ्गाली–** इदानीं तत्त्वमन्त्रोद्धारप्रकारमाह– **परेति ।। तदर्थयोः** स विष्णुरित्यर्थः ययोस्तयोः **परमात्मनोः** परशब्दात्मशब्दयोर्मध्ये **तत्वनाम** तत्त्ववाचकं पुरुषादिपदं प्रयोक्तव्यम्। 'तत्त्वनामा तदर्थयोः' इति पाठे अतदर्थयोरिति पदच्छेदः। तानि तत्त्वानि अर्थाः न भवन्तीत्यतदर्थौ। तयोरर्थाद्विष्णवर्थयोरित्यर्थः सिद्ध्यति । तदर्थयोरित्येव पदच्छेदे तु **तदर्थयोः** परात्मशब्दवाच्ययोर्भगवद्रूपयोर्मध्ये **तत्त्वनामा** पुरुषादितत्त्वनामभिर्वाच्यो भगवान्वक्तव्य इत्यर्थो ज्ञेयः । एवं शब्दत्रयस्वरूपः तत्त्वमन्त्रः जपन्यासहोमेषु कथं प्रयोक्तव्य इत्यत आह– **जप इति ।। नमोन्तः** नमशब्दान्तः । **स्वाहान्तः** स्वाहाशब्दान्तः तत्त्वमन्त्र प्रयोक्तव्य इति शेषः । नमःस्वाहाशब्दसंबन्धात् आत्मशब्दस्य चतुर्थ्यन्तत्वं ज्ञातव्यं **'नमस्स्वस्तिस्वाहा...'**(पा.सू.२-३-१६) इति सूत्रात् । एवं परपदस्यापि आत्मशब्दविशेषणत्वात् । उक्तं च हयशीर्षे–

नमः परायेति पूर्वं आत्मने नम इत्यनु ।
नाम जीवादितत्त्वानां न्यसेत्तत्तपदे क्रमात् ।। इति ।

तथा चेत्थं तत्वमन्त्रोद्धारः– 'पराय शक्त्यात्मने नमः' इत्यादि 'पराय शक्त्यात्मने स्वाहा' इत्यादिति । सर्वोत्कृष्टाय शक्त्यादितत्त्वनियामकायेत्यर्थः । 'पराय शक्त्यात्मने लक्ष्मीनारायणाभ्यां नमः । पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः' इत्यादिप्रकारेण संप्रदायप्राप्तस्य मन्त्रप्रयोगस्य तु पराय शक्त्यात्मने नम

इत्याद्येव मन्त्रस्वरूपं लक्ष्मीनारायणाभ्यामित्यादि तु मन्त्रप्रतिपाद्यदेवतानुस्मरणार्थं उच्चार्यते। न तु मन्त्रान्तर्भूतमित्यभिप्रायो ज्ञातव्यः। तेन पराय पुरुषात्मने इति एकवचनान्तपदस्य लक्ष्मीनारायणाभ्यामित्यादि द्विवचनान्तपदेन कथं विशेषणविशेष्यभावेनान्वय इति चोद्यं निरस्तं भवति। जपे न्यासे नमोन्तस्त्वित्यादि प्रयोगप्रकारः न केवलं तत्त्वमन्त्रेष्वेव किंतु सर्वमन्त्रेष्वपीत्याहुः ।। १५६ ।।

जपहोमादिषु तत्त्वमन्त्रणां आवृत्तिसंख्याभिधानम्,
तत्त्वमन्त्राणां न्याससथानाभिधानं

**तं.सा.** **त्रिचतुष्षड्दशावृत्तिरेतेषां तु हुतादिके ।**
**न्यासोऽङ्गुलीषूरुबाहुमध्येषु व्युत्क्रमे(मात्) स्मृतः ।।१५७।।**
**क्रमे विपर्ययेणात्र शक्त्यादित्वं प्रकीर्तितम् ।**

**त.क.–** एतेषां जपादावावृत्तिसङ्ख्यामाह— **त्रिचतुष्षडिति** ।। हुतेति भावे क्तः। जपस्य प्रस्तुतत्वेऽपि होमादित्वेन ग्रहणं शक्त्यपेक्षयैव त्र्यादिपक्षाः, न तु जपाद्यपेक्षयेति सूचनाय। अशक्तौ त्रिरावृत्तिः। ततः किञ्चिच्छक्तस्य चतुरावृत्तिः। ततः किञ्चिच्छक्तस्य षडावृत्तिः। ततोऽपि शक्तस्य दशावृत्तिरित्यर्थः। अत्यन्तमशक्तस्य तत्त्वमन्त्रैर्न्यासः एकावृत्त्या सृष्टिन्यासं स्थितिन्यासं वाऽवलम्ब्य कर्तव्य इत्यादिग्रन्थान्तरोक्तो विशेषो ग्राह्यः। ननु जपादौ नमोऽन्तः स्वाहान्तश्च मन्त्र उच्चार्य इत्ययं नियमः किमेतेष्वेव मन्त्रेषु उत वक्ष्यमाणेष्वपीति जिज्ञासायां चेदमुच्यते— **जप इति** ।। मन्त्रमात्रेऽपि जपादौ कर्तव्य इत्यर्थः । अन्यत् समानम् ।

एवमतिदिश्य तत्त्वमन्त्राणां न्यासस्थानान्याह— **न्यास इति** ।। मन्त्रोच्चारणपूर्वकं तत्तद्देवतानां तत्तदङ्गेषु ध्यानमेव न्यासो नाम। अंगुलीष्वित्यनेन वामपादकनिष्ठिकामारभ्य तदंगुष्ठेन सह पञ्चांगुलयः, दक्षिणपादकनिष्ठिकामारभ्य तदंगुष्ठेन सह पञ्चांगुलयः, वामहस्तकनिष्ठिकामारभ्य

तदंगुष्ठेन सह पञ्चांगुलयः, दक्षिणहस्तकनिष्ठिकामारभ्य तदंगुष्ठेन सह पञ्चांगुलय इत्येवं विंशतिस्थानानि तु निर्दिष्टानि। ऊरू च बाहू च मध्यं चेति द्वन्द्वः। वामोरुः दक्षिणोरुः वामबाहुः दक्षिणबाहुश्चेति स्थानचतुष्टयम्। एवं चतुर्विंशतिस्थानेषु निर्दिष्टेषु मध्याख्यं हृदयं द्वादशमन्त्रन्यासस्थानमिति विवेक्तव्यम्। ननु सृष्टिस्थितिलयन्यासा इत्यादिवक्ष्यमाणेषु त्रिषु न्यासेषु कतमोऽयं न्यास इत्यपेक्षायामाह— **व्युत्क्रम इति**॥ सृष्टिक्रमे वैपरीत्यमनुसृत्यायं न्यासः स्मृतः। स्मारित इत्यर्थः। लयकाले पृथिव्या अस्तु प्रथमं लीयमानत्वात् पृथिव्यादिक्रमेण वामपादांगुल्यादिन्यासस्थानस्याभिधानात् लयन्यास एवेति भावः। सृष्टिक्रमे विवक्षिते **विपर्ययेण** उक्तविपर्ययेण मध्यबाहूरूदक्षिणहस्ताद्यंगुलिषु न्यासः कार्य इति शेषः।

ननु न्यासस्थानानां निर्देशबलात् क्रमव्युत्क्रमौ ज्ञातुं शक्येते। मन्त्राणां तु तौ कथं ज्ञातव्यौ। यद्यपि, तत्रापि पुरुषोऽव्यक्तमित्यादिनिर्देशानुसारात् पञ्चविंशतितत्त्वानां ताववगन्तुं शक्यौ। तथापि कालाद्येकादशमन्त्राणामवगन्तु-मशक्यावेव। सप्तत्वचतुष्ट्वाभ्यां प्रकरणभेदावगमादित्यत आह— **अत्रेति**॥ सृष्टिक्रमे मन्त्राणां शक्त्यादित्वम्, उपलक्षणमेतत्, पृथिव्यन्तत्वं प्रकीर्तितं शास्त्रेषु। व्युत्क्रमे तु पृथिव्यादिशक्त्यन्तत्वमिति ग्राह्यम्। इदमप्युपलक्षणम्। शक्त्यादिकालान्तैर्मन्त्रैर्हृदये न्यासः। पृथिव्यादिमन्त्रैर्वामपादकनिष्ठिकामारभ्य हृदयपर्यन्तमित्थं स्थितिन्यासे क्रमो ज्ञातव्यः॥ १५७॥

**अ.सं.**– एतैर्मन्त्रैर्होमजपादिकं कतिवारं कार्यमित्यत आह– **त्रीति**॥ एतेषां तत्त्वमन्त्राणां **हुतादिके** हुतं होमः। **आदि**शब्देन जपादि ग्राह्यम्। तस्मिन् त्रिभिः चतुर्भिः षड्भिः दशभिः गणिता आवृत्तिरिति मध्यमपदलोपिसमासेन **त्रिचतुःषट्दशावृत्तिः** इत्येकवचनं युज्यते। भवेदिति शेषः। शक्त्यपेक्षया चत्वारोऽपि पक्षाः विकल्पेन ज्ञेयाः। न तु समुच्चयेन। तथात्वे त्रयोविंशतीत्याद्यवक्ष्यत्। अयमपि विकल्पपक्षः

पञ्चविंशतितत्त्वार्थे प्रधाने जुहुयात् पुनः ।
प्रत्येकन्तु सहस्रं वा प्रत्येकं शतमेव वा । (तं.सा.३-९४)

इत्यादिविशेषोक्त्यभाव एवेति ज्ञेयम् ।

'यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः । वीर्यदः–' (२.१) इत्यनेन मातृकामन्त्रैर्न्यासस्य यदावश्यकत्वमुक्तम् तदुपलक्षणम् ।

तत्त्वन्यासोऽयमचिरात् कृष्णसान्निध्यकारकः ।
यः कुर्यात् तत्त्वविन्यासं स पूतो भवति ध्रुवम् ।।

इति हयशीर्षवचनाच्च तत्त्वमन्त्रैर्न्यासस्याप्यावश्यकत्वं ज्ञेयमित्यभिप्रेत्य तन्मन्त्रोद्धारप्रसङ्गात् तत्त्वमन्त्रैर्न्यासस्य स्थानमाह– **न्यास इति ।।** अङ्गुलीषु पादयोर्हस्तयोः विंशत्यङ्गुलीषु । ऊरू च बाहू च मध्यं हृदयं च तेष्वित्यर्थः । **न्यासः** तत्त्वमन्त्रैः तत्त्वदेवानां स्थापनमित्यर्थः । **व्युत्क्रमे** व्युत्क्रमन्यासे । 'व्युत्क्रमात्' इति क्वचित्पाठः । क्रमे क्रमन्यासे विपर्ययेण एवोक्तस्थानक्रम-व्यत्यासेनेत्यर्थः । अयं भावः । न्यासो द्विविधः । व्युत्क्रमेण क्रमेण चेति । तत्र व्युत्क्रमे वामपादकनिष्ठाङ्गुलिमारभ्य हृदयपर्यन्तस्थानेषु मन्त्रैर्न्यासः स्मृतः । अयं संहार इत्युच्यते । क्रमन्यासे तु हृदयमारभ्य वामपादकनिष्ठाङ्गुलिपर्यन्तं स्थानेषु मन्त्रैर्न्यासः स्मृतः । अयं सृष्टिन्यास इत्युच्यते । एवमुभयन्यासे स्थानक्रममुक्त्वा मन्त्रक्रममाह– **अत्रेति ।। अत्र** क्रमन्यासे मन्त्राणां **शक्त्यादित्वं** शक्तेः आदित्वं कीर्तितम् । अत्र क्रमन्यासे शक्त्यादित्वमिति विशेषोक्त्या परिशेषात् व्युत्क्रमेण न्यासे मन्त्राणां पृथिव्यादित्वमिति ज्ञेयम् ।

उभयन्यासप्रकारस्तु इत्थम् । वामपादकनिष्ठाङ्गुलीमारभ्य तदङ्गुष्ठपर्यन्तं पञ्चाङ्गुलिषु पृथिव्याद्याकाशान्तैः पञ्चभिः तत्त्वमन्त्रैः पृथिव्यादिगणेशान्तदेवपञ्चकं क्रमेण न्यसेत् । तथा दक्षिणपादकनिष्ठामारभ्य पञ्चाङ्गुलीषु गन्धादिशब्दान्त-तत्त्वमन्त्रैः समानादिबृहस्पतिप्राणान्ततत्त्वदेवान् स्थापयेत् । ततः वामहस्तकनिष्ठिकामारभ्य पञ्चाङ्गुलीषु उपस्थादिवागन्तमन्त्रैः मन्वाद्यग्न्यन्तदेवान । तथा दक्षहस्तकनिष्ठामारभ्य घ्राणादिश्रोत्रान्तमन्त्रैः अश्विन्यादिग्देवान्तपञ्चकम् ।

ततः वामोरौ मनस्तत्त्वमन्त्रेण स्कन्देद्रौ। दक्षोरौ तु अहङ्कारतत्त्वमन्त्रेण गरुडशेषरुद्रान्। वामबाहौ महत्तत्त्वमन्त्रेण ब्रह्मवायू। दक्षबाहौ अव्यक्ततत्त्वमन्त्रेण सरस्वतीभारत्यौ न्यसेत्। अनन्तरं हृदय एव पुरुषतत्त्वमन्त्रेण ब्रह्मवायू। कालादिशक्त्यन्तैकादशमन्त्रैः लक्ष्मीनारायणरूपाणि ध्यायेत्। अयं व्युत्क्रमन्यासः।

क्रमन्यासस्तु प्रथमतः शक्त्यादि द्वादशमन्त्रैः तत्तद्देवान् द्वादश हृदये न्यसेत्। अव्यक्तमहत्तत्वाभ्यां तद्देवौ दक्षवामहस्तयोः क्रमेण न्यसेत्। अहङ्कारमनोभ्यां दक्षवामोर्वोः। श्रोत्रादिपञ्चकेन दक्षिणहस्ताङ्गुष्ठादिषु। वागादिपञ्चकेन वामहस्ताङ्गुष्ठादिषु। शब्दादिपञ्चकेन दक्षिणपादाङ्गुष्ठादिषु। आकाशादिपञ्चकेन वामपादाङ्गुष्ठादिषु न्यसेदिति क्रमव्युत्क्रमन्यासयोरधिकारिणौ 'सृष्टिस्थितिलय-न्यासाः' (तं.सा.४-१३१) इत्यादिना चतुर्थे वक्ष्यत्याचार्यः ॥ १५७ ॥

**गु.दी.–** जपादिकं कियद्वारमित्यत आह— **त्रीति ॥ एतेषां** तत्त्वमन्त्राणां **हुतादिके** होमजपन्यासेषु त्रिचतुःषड्दशान्यतमाऽऽवृत्तिः स्वीकार्येति शेषः। 'यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः' (तं.सा.२-१) इत्युक्तमुपलक्षणम्। तत्त्वमन्त्रैर्न्यासोऽपि 'वीर्यदः' इति (तं.सा.२-१) द्रष्टव्यमित्यभिप्रेत्य तत्त्वमन्त्रोद्धारप्रसङ्गात् तन्न्यासस्थानान्याह— **न्यास इति ॥ अङ्गुलीषु** पदोर्हस्तयोश्चाङ्गुलीषु। ऊरू च बाहू च मध्यं च तेष्वित्यर्थः। **न्यासो** व्युत्क्रमात्स्मृतः संहारन्यास इत्यर्थः। 'व्युत्क्रमे' स्मृत इति क्वचित्पाठः।

अयं भावः। वामपादकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तं पृथिव्यादिपञ्चकं न्यसेत्। अनन्तरं दक्षपादकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तं गन्धादिपञ्चकं न्यसेत्। अनन्तरं वामहस्तकनिष्ठिकामारभ्य तदङ्गुष्ठपर्यन्तं प्राणादिपञ्चकं न्यसेत्। अनन्तरं वामोरौ मनः न्यसेत्। अथ दक्षोरावहङ्कारम्। अथ वामबाहौ महान्तं दक्षबाहौ अव्यक्तं न्यसेत्। अनन्तरं हृदय एव पुरुषादि द्वादश विन्यसेदिति।

सृष्टिन्यासे मध्यादित्वमित्याह— **क्रम इति ॥ क्रमे** सृष्टिक्रमे विवक्षिते विपर्ययेण न्यासः स्मृतः। अयं भावः। क्रमे विवक्षिते मध्यबाहूरुषु अङ्गुलीषु

चेति **विपर्ययेण** च **'अङ्गुलीषु'** (तं.सा.३-१५७) इत्युक्तक्रमापेक्षया विपरीतक्रमेण न्यासः स्मृत इति । ननु क्रमे विवक्षिते स्थानेषु एवं क्रमो भवेत् । मन्त्रेषु क्रमो वाऽन्यो वेत्यपेक्षायामाह– **अत्रेति** ।। **अत्र** सृष्टिक्रमे शक्त्यादित्वं प्रकीर्तितम् । अयं भावः । शक्त्यादि द्वादश हृदयमध्ये विन्यसेत् । अव्यक्तमहती दक्षवामहस्तयोः । अहङ्कारमनसी दक्षवामोर्वोः । श्रोत्रादिपञ्चकं दिक्षणहस्ताङ्गुष्ठमारभ्य तत्कनिष्ठिकापर्यन्तं विन्यसेत् । वागादिपञ्चकं वामहस्ताङ्गुलीषूक्तक्रमेण विन्यसेत् । शब्दादिपञ्चकं दाक्षिणपादाङ्गुष्ठादिषु विन्यसेत् । आकाशादिपञ्चकं वामपादाङ्गुष्ठादिषु न्यसेदिति । उपलक्षणमेतत् । स्थितिन्यासोऽपि द्रष्टव्यः । तत्क्रमः संहृतिन्यासेऽधिकारिविशेषश्चतुर्थाध्याये (तं.सा.४-१३१,१३२) वक्ष्यते ।। १५७ ।।

**मङ्गाली–** एतैर्मन्त्रै र्होमजपादिकं कति वारं कार्यमित्यत आह– **त्रीति** ।। **एतेषां** तत्त्वमन्त्राणां **हुतादिके** हुतं होमः **आदि**शब्देन जपादि ग्राह्यम् । तस्मिन् त्रिभिः चतुर्भिः षड्भिः दशभिः गणिता आवृत्तिरिति मध्यमपदलोपिसमासेन **त्रिचतुःषट्दशावृत्तिरिति** एकवचनं युज्यते । भवेदिति शेषः । शक्त्यपेक्षया चत्वारोऽपि पक्षाः विकल्पेन ज्ञेयाः । न तु समुच्चयेन । तथात्वे त्रयोविंशतीत्याद्यवक्षत् । अयं विकल्पपक्षः

पञ्चविंशतितत्त्वार्थे प्रधाने जुहुयात्पुरः ।
प्रत्येकं तु सहस्रं वा प्रत्येकं शतमेव वा ।। (तं.सा.३-९४)

इत्यादिविशेषोक्त्यभाव एवेति ज्ञेयम् ।

'यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः । वीर्यदः'(२-१) इत्यनेन मातृकामन्त्रैर्न्यासस्य यदावश्यकत्वमुक्तं तदुपलक्षणम् ।

तत्त्वन्यासोऽयमचिरात् कृष्णसान्निध्यकारकः ।
यः कुर्यात्तत्त्वविन्यासं स पूतो भवति ध्रुवम् ।।

इति हयशीर्षवचनाच्च तत्त्वमन्त्रैर्न्यासस्याप्यावश्यकत्वं ज्ञेयमित्यभिप्रेत्य तत्त्वमन्त्रोद्धारप्रसङ्गात् तत्त्वमन्त्रैर्न्यासे स्थानमाह– **न्यास इति** ।। **अङ्गुलीषु**

पादयोर्हस्तयोर्विंशत्यङ्गुलीषु। ऊरु च बाहू च मध्यं हृदयं च तेषु इत्यर्थः। **न्यासः** तत्त्वमन्त्रैः तत्त्वदेवानां स्थापनमित्यर्थः। **व्युत्क्रमे** व्युत्क्रमन्यासे। 'व्युत्क्रमात्' इति क्वचित्पाठः। **क्रमे** क्रमन्यासे **विपर्ययेण** स्थानक्रमव्यत्यासेनेत्यर्थः। अयं भावः। न्यासो द्विविधः व्युत्क्रमेण क्रमेण चेति। तत्र व्युत्क्रमे वामपादकनिष्ठाङ्गुलिमारभ्य हृदयपर्यन्तं स्थानेषु मन्त्रैर्न्यासः स्मृतः। अयं सृष्टिन्यास इत्युच्यते। एवमुभयं न्यासे स्थानक्रममुक्त्वा मन्त्रक्रममाह– **अत्रेति ॥ अत्र क्रमन्यासे मन्त्राणां शक्त्यादित्वं** शक्तेरादित्वं कीर्तितम्। **अत्र** क्रमन्यासे शक्त्यादित्वविशेषोक्त्या परिशेषात् व्युत्क्रमेण न्यासे मन्त्राणां पृथिव्यादित्वमिति ज्ञेयम्। क्रमव्युत्क्रमन्यासे अधिकारिणौ 'सृष्टिस्थितिलयन्यासाः'(४-१३१) इत्यादिना चतुर्थे वक्षत्याचार्यः ॥ १५७ ॥

समान्यतः सर्वमन्त्राणां ऋष्यादिकथनम्

**त.सा. ऋषिच्छन्दोदेवताङ्गध्यानानुक्तौ प्रधानवत् ॥ १५८ ॥**

**त.क.–** ऋष्यादिज्ञानस्यावश्यकत्वाद्देवतादिकं तूक्तप्रकारेण ज्ञायते। तथा च क एषामृषिः। किञ्च छन्द इत्यपेक्षायामुक्तिसौकर्यात् सर्वमन्त्रेष्वपि प्रसङ्गादतिदिशति— **ऋषीति ॥ अनुक्तिशब्दः** सर्वत्र सम्बध्यते। **प्रधानवत्** प्रणवमन्त्रस्येव एषामपि मन्त्राणां ऋष्यादयो ज्ञेया इति शेषः ॥ ५८ ॥

**अ.सं.–** तत्त्वमन्त्राणां ऋष्यादिज्ञापनाय सामान्यन्यायमाह– **ऋषीति ॥** मन्त्राणां विशेषतः ऋषिच्छन्दोदेवताङ्गध्यानानुक्तौ सत्यां ते समस्ताः मन्त्राः **प्रधानवत्** ऋष्यादिविषये प्रणवमन्त्रेण समाना इत्यन्वयः। अयं भावः। येषु मन्त्रेषु ऋषिच्छन्दोदेवताङ्गन्यासध्यानानि नोक्तानि तेषु मन्त्रेषु यथा प्रणवमन्त्रस्य 'अन्तर्यामी ऋषिः दैवीगायत्री छन्दः नारायणो देवता भूरादिपञ्चाङ्गन्यासः उद्यदादित्यवर्णत्वादिना ध्यानं च' तद्वत् अन्तर्याम्यादिकमेव ऋष्यादित्वेन ज्ञेयमिति। एतेन तत्त्वमन्त्राणामपि विशेषतः ऋष्यादेरनुक्तत्वादन्तर्याम्यादिकमेव ऋष्यादिकमिति ज्ञापितं भवति ॥ १५८ ॥

**गु.दी.–** तत्त्वमन्त्राणामृष्यादिकमाह— **ऋषीति** ॥ **ध्यानानुक्तौ** ध्यानश्लोकानुक्तौ **प्रधानवत्** प्रणवमन्त्रवत् मूलमन्त्रवद्वा ज्ञेयाः । ऋष्यादय इति शेषः ॥ १५८ ॥

**मङ्गाली–** तत्त्वमन्त्राणां ऋष्यादि ज्ञापनाय सामान्यन्यायमाह– **ऋषीति** ॥ मन्त्राणां विशेषतः ऋषिच्छन्दोदेवतांगध्यानानुक्तौ सत्यां ते समस्ताः मन्त्राः **प्रधानवत्** ऋष्यादिविषये प्रणवमन्त्रेण समाना इत्यन्वयः । अयं भावः । येषु मन्त्रेषु ऋषिछन्दोदेवतांगन्यासध्यानानि नोक्तानि तेषु मन्त्रेषु यथा प्रणवमन्त्रस्य 'अन्तर्यामी ऋषिः । दैवीगायत्री छन्दः, नारायणो देवता । भूरादिपश्चाङ्गन्यासः उद्यदादित्यवर्णः' इत्यादिना ध्यानं च तद्वत् अन्तर्याम्यादिकं ऋष्यादित्वेन ज्ञेयमिति । एतेन तत्त्वमन्त्राणामपि विशेषतो ऋष्यादेरनुक्तत्वादन्तर्याम्यादिकमेव ऋष्यादिकमिति ज्ञापितं भवति ॥ १५८ ॥

**तं.सा.** **ज्ञेया मन्त्राः समस्तास्ते पृथङ् मोक्षादिदायकाः ।**
**तन्त्रमार्गास्तु हरिणा ह्यसङ्ख्याः कीर्तिता अपि ॥ १५९ ॥**

**तेष्वयं सुगमो मार्गः सु(स)फलश्चानुतिष्ठताम् ।**
**यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ॥ १६० ॥**

**तावत्समस्तं कथितमस्मिंस्तन्त्रे यथाविधि ।**
**प्रीयतेऽनेन मार्गेण पूजितो मुक्तिदो भवेत्**
**कामदश्च स्वभक्तानां भगवान् पुरुषोत्तमः ॥ १६२ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसंग्रहे
तृतीयोऽध्यायः समाप्तः ॥

**त.क.–** ननु किमतिक्लेशेन । ऋष्यादयोऽज्ञाता एव किमिति न स्युरित्यत आह— **ज्ञेया मन्त्रा इति** ॥ **समस्ताः** ऋष्यादिज्ञानादिसमस्ताङ्गसहिताः ते उक्तवक्ष्यमाणाश्च मन्त्रा जप्ताश्चेदीश्वरप्रीतिद्वारा पृथक् पृथग्धर्मार्थकाममोक्षाणां साधनभूता नान्यथेति भावः । ननु–

स्वस्तिकासनमाबध्य शयानां प्रतिमामनु ।
आसीत देशिकः सृष्टिसंहारक्रमवित्तमः ।।

अर्चां च तां भूतमयीं संहारक्रममास्थितः ।
पुनः सृष्टिक्रमेणैव सृजेत्तद्ध्यानमास्थितः ।।

प्राच्यकुण्डेन जुहुयात् तत्त्वानि कपिलाघृतैः ।
प्रत्येकमष्टोत्तरशतं तेषामाहुतयः स्मृताः ।।

अष्टोत्तरो विंशतिर्वा यद्वाऽष्टौ शक्त्यपेक्षया ।
जीवादिकस्तत्त्वहोमः स्वाहान्तैस्तैः स्वनामभिः ।।

इत्यादिना प्रतिष्ठाङ्गभूतं प्रतिष्ठादितत्त्वमन्त्रैः प्राच्यकुण्डे होमं विधाय मकारादिककारान्तैर्वर्णैस्सह-

मकारं स्फटिकाभासं जीवं व्यापकमादितः ।
आहुत्यन्ते प्रतिकृतौ विन्यसेत् प्रणवं ततः ।।

जीवोपाधिं भकारं तु सितं न्यस्येद्यथापुरम् ।
बकारं स्फटिकाभासं मतितत्त्वमनन्तरम् ।।

अहङ्कारं पाटलाभं फकारं हृदि विन्यसेत् ।
मनस्तत्त्वं सितनिभं पकारं हृदये तथा ।।

नकारं शब्दतन्मात्रं श्रोत्रे शुक्लनिभं तथा ।
धकारं लोहितं स्पर्शतन्मात्रं च तथा त्वचि ।।

दकारं रूपतन्मात्रं दृशोर्ज्योतिर्मयं तथा ।
थकारं रसतन्मात्रं पाण्डुराभं च तालुनि ।।

तकारं गन्धतन्मात्रं नासिकायां तथा सितम् ।
णकारं पाटलनिभं श्रोत्रात्मानं च कर्णयोः ।।

ढकारं हेमतुल्याभं त्वगात्मानं तथा त्वचि ।
डकारं नेत्रयोः कृष्णं नेत्रात्मानमनन्तरम् ।।

गौरं ठकारं जिह्वायां जिह्वात्मानं चतुर्मुख ।
टकारमसितं घ्राणरूपं घ्राणेन्द्रिये तथा ।।

सितं ञकारं वाग्रूपं वागाधारे निवेशयेत् ।
रक्तं झकारं करयोः करात्मानं चतुर्मुख ।।

रक्तं जकारं पदयोः पदात्मानं निवेशयेत् ।
छकारस्य च रक्तस्य न्यासोऽपाने तदात्मनः ।।

चकारं मेहने हेमवर्णं मोहनरूपिणम् ।
ङकारं पृथिवीतत्त्वं पीताभं चतुरस्रकम् ।।

पादे च जानुपर्यन्ते हुत्वाऽन्ते विनिवेशयेत् ।
घकारमर्धशीतांशुतुल्याकारं जलात्मकम् ।
स्फटिकाभं तदूर्ध्वे तु गुह्यान्ते विनिवेशयेत् ।।

गकारं लोहितं कोणैस्त्रिभिर्युक्तमुषर्बुधम् ।
गुह्यात्प्रभृति नाभ्यन्तं विन्यसेद्देशिकोत्तमः ।।

खकारं वेदिकाकारं धूम्राभं श्वसनात्मकम् ।
नाभेरुपरि घोणान्तं हुत्वान्ते विनिवेशयेत् ।।

निराकारं ककारं तु नभोरूपं शिलानिभम् ।
नासिकोपरि मूर्धान्तमाहुत्यन्ते निवेशयेत् ।।

तत्त्वहोमं च तन्न्यासं कृत्वैवं तदनन्तरम् ।
प्राणादिदशवायूनां न्यसनं स्यादिडादिषु ।।

ब्रह्मादिपरिवारेषु देवीषु कमलादिषु ।
तत्त्वन्यासो यथोक्तेन मार्गेण स्याच्चतुर्मुख ।।

इत्यादिपुरुषाद्याकाशान्तानां पञ्चविंशतितत्त्वानां हृदयादिमूर्धान्तं स्थानं कथितम् । तत्रापि जीवव्यापकशब्दितस्य महदाख्यस्य अहङ्काराख्यस्य मनआख्यस्य च

तत्त्वस्येत्येवं पञ्चानामेव हृदयं स्थानमुक्तम्। अत्र तु शक्त्यादिपुरुषान्तानां द्वादशानां तथा अव्यक्तानां चतुर्णां बाहुद्वयमूरुद्वयं च स्थानमुक्तम्। तथा शब्दादितन्मन्त्राणां स्थानभेदः स्फुट एव। तथा च वचनविरोधोऽस्य ग्रन्थस्य दुष्परिहरः। न चेदं वचनमप्रमाणम्। हरिणा चतुर्मुखाय साक्षादुदितत्वात्। व्यर्थश्चायं ग्रन्थः। पञ्चरात्रादावेतत्प्रमेयस्य सम्यङ् निरूपितत्वादित्यत आह— **तन्त्रमार्गास्त्विति** ।। तन्त्राणां देवताप्रतिष्ठामन्त्रजपन्यासपूजादित्रयाणां मार्गाः प्रकाराः **असङ्ख्याः** बहुविधाः परस्परं विरुद्धवत् प्रतीयमानाश्च यद्यपि शास्त्रे हरिणैव तत्र तत्र कथिताः। तथापि नास्य ग्रन्थस्य तद्विरोधः। अधिकारिभेदादिनाऽसङ्ख्यातमार्गाणामप्युपपत्तेरिति शेषः। वैयर्थ्यमुद्धरति— **तेष्विति** ।। **सुगमः** सुज्ञेय इत्यनेन दुर्विज्ञेयत्वादनेकविधा अपि मार्गाः प्रदर्शिता अपि अप्रदर्शितप्राया इति संक्षिप्य प्रकाशनार्थोऽयं ग्रन्थः सार्थक एवेति सूचयति। **सुफल**श्चेत्यनेन तेषां फलवत्त्वमात्रम्, अयं तु मार्गः शीघ्रफल इति हेत्वन्तरं सूचयति। यद्यपि भगवत्पूजादिप्रधानकर्माणि असङ्ख्यातानि पञ्चरात्रादौ प्रदर्शितानि। केचिदितिकर्तव्यताविशेषाश्च। तथापि पूजादिकमनुतिष्ठता-मधिकारिणां यावत इतिकर्तव्यताविशेषस्याननुष्ठाने पूजादिकर्मणः फलसाधनसामर्थ्यं न जायते तावत इतिकर्तव्यताविशेषस्य तत्रानिरूपणात्, तन्निरूपणार्थत्वादस्य न वैयर्थ्यमिति हेत्वन्तरमाह— **यावत इति** ।। किं बहुना, भगवत्प्रीतिसाधनत्वादिना न वैयर्थ्यमिति हेत्वन्तरमाह— **प्रीयत इति** ।। न केवलं शीघ्रफलदातृत्वं सुफलत्वम्। किन्नाम भगवत्प्रीतिद्वारा सकलाभीष्ट-कारणत्वमिति सुफलत्वमेव विवृणोति— **प्रीयत इति** ।। १५९-१६१ ।।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
लक्ष्मीनारायणतीर्थपूज्यपादानां शिष्येण रघुनाथयतिना विरचितायां
तन्त्रसारसंग्रहव्याख्यायां तत्त्वकणिकायां तृतीयोऽध्यायः समाप्तः ।।

**अ.सं**– तत्त्वमन्त्राणां मालामन्त्रत्वशङ्कां वारयति– **ज्ञेया इति** ।। **समस्ताः ते** तत्त्वमन्त्राः **पृथक्** एकैकशः मोक्षादिदायकाः न तु समुदितत्त्वेनैव इत्येक-

वाक्यतया योजना । मोक्षादीत्यादिपदेन धर्मार्थकामाः त्रयो गृह्यन्ते । यद्वा मोक्षस्यादिभूते कारणभूते भक्तिज्ञाने गृह्येते । शक्त्यादितत्त्वस्वरूपनिरूपणपूर्वकं तत्त्वन्यासफलमुक्तं योगदीपिकायाम्–

शक्तिः स्थितिः संविदाद्याः जीवस्थाश्च मनोगताः ।
तेषां नियन्ता भगवान् श्रीश्च तत्तन्नियामिका ।।

तन्नामकनि रूपाणि हरेश्चैव श्रियोऽपि च ।
स्थापयेत् हृदये भक्त्या मन्त्रसिद्धिमभीप्सता ।।

तत्प्रेरिताश्च शक्त्याद्याः जायन्ते निर्मला हृदि ।
तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च हृदये नरैः ।।

तथा ब्रह्मादिवागाद्याः जीवादीनां नियामकाः ।
तात्विका स्थापिता देहे भक्तिदा ज्ञानदा नृणाम् ।। इति ।।

इदानीं पञ्चरात्राद्यागमेषु बहूनां भगवत्पूजादितन्त्रमार्गाणां हरिणा कथितत्त्वात् व्यर्थमेतद्ग्रन्थे तन्त्रमार्गकथनमित्याशङ्क्य समाधत्ते– **तन्त्रमार्गा इति ।। अपि** यद्यपि आगमेषु हरिणा **असङ्ख्याः** बहवः **तन्त्रमार्गाः** तन्त्राणां भगवत्पूजामन्त्रजपहोमप्रतिमानिर्माणादिकर्मणां मार्गाः अनुष्ठानप्रकाराः कथिताः । **अपि** तथापि तन्त्रमार्गाः बहुविधत्वेन अतिविस्तृतत्त्वेन चाल्पज्ञानशक्त्यादिमद्भिः इदानीन्तनपुरुषैः विवेकेन ज्ञातुमनुष्ठातुं चाशक्याः । तेषु तन्त्रमार्गेषु सारमुद्धृत्य सङ्गृहीतः **अयं** अस्मदुक्तमार्गः तन्त्रमार्गः **सुगमः** अनायासेन ज्ञातुं अनुष्ठातुं च शक्यः विवेकेन निष्कृष्योद्धृतसाररूपत्वात् । एतदुक्तप्रकारेण **अनुतिष्ठतां** कर्माचरतां **सफलश्च** फलदश्च । एवं च मन्दोपकारकत्वेन सार्थक्यान्न वैय्यर्थ्यमस्य ग्रन्थस्येति भावः । ननु संक्षिप्यकथितत्त्वेन समग्रक्रियानुष्ठानाभावात् कथं सफलत्वमित्यत आह– **यावत इति ।।** यावतः कर्मणः **अननुष्ठाने** अकरणे सति **कर्मपूर्तिः** कर्मणः पूर्तिः साफल्यं न विद्यते । **तावत्सकलं** तत्कर्म **अस्मिन्** अस्मदुक्ते **तन्त्रे** तन्त्रप्रतिपादके ग्रन्थे **यथाविधि** आगमोक्तप्रकारमनतिक्रम्य समस्तं सङ्गृहीतं सत् कथितम् । सफलत्वमेव विवृणोति– **प्रीयत इति ।** अनेन

**मार्गेण** अस्मदुदिततन्त्रोक्तप्रकारेण पूजितो भगवान् पुरुषोत्तमः स्वभक्तानां **प्रीयते** प्रसन्नो भवति । ततः प्रसादेन **मुक्तिदो भवति** संसारात् मोक्षप्रदो भवति । तदनन्तरं **कामदश्च** तत्तदभीष्टप्रदो भवेत् । यद्वा मुक्तेः पूर्वमपि कामदश्च भवेदित्यर्थः ।। १५९, १६०, १६१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीमत्तन्त्रसारसङ्ग्रहस्य टीकायां छलारीनृसिंहाचार्यशिष्येण शेषेण कृतायां तृतीयोऽध्यायः ।। ३ ।।

**गु.दी.–** तत्त्वमन्त्राणां मालामन्त्रत्वभ्रममपनयन् फलमप्याह— **मन्त्रा इति ।।** पृथक् मन्त्रा ज्ञेया इति सम्बन्धः । **मोक्षादिदायकाः** मोक्षादिचतुष्टय-प्रदाः । अत्र तत्तदङ्गुष्ठे तत्त्वदेवतामन्त्रेण न्यासे पूततत्तदङ्गो भवतीत्युक्तं हयशीर्षे–

तत्त्वन्यासोऽयमचिरात्कृष्णसान्निध्यकारकः ।
यः कुर्यात् तत्त्वविन्यासं स पूताङ्गो भवेद्ध्रुवम् ।। इति ।।

नन्वध्यायत्रयं निष्प्रयोजनत्वान्नादरणीयम् । न च तन्त्रमार्गज्ञानार्थम् । तस्य मूलतन्त्रसारेणैवोपपत्तेरित्यतस्तस्य दुर्गमत्वेन ज्ञातुमशक्यत्वात् सुगमोऽध्याय-त्रयात्मकस्तन्त्रसारसङ्ग्रहोऽयं कृत इत्याह— **तन्त्रमार्गा इति ।। अयम्** अध्यायत्रयात्मकस्तन्त्रसारसङ्ग्रहाख्यो मार्गः सुगमः सुफलश्चेत्यर्थः ।।

नन्वस्य सङ्क्षेपशास्त्रत्वेन अन्यतन्त्रापेक्षायां तेनैवालम् । किमनेनेत्यत आह— **यावत इति ।।** महामन्त्रजपपूजाहोमादेर्यावतस्तावत् **समस्तम्** अष्टमहामन्त्रा-दिकम् **अस्मिन्** तन्त्रे शास्त्रे **कथितम्** अभिहितमित्यर्थः । क्षिप्रप्रवृत्तये फलमाह— **प्रीयत इति ।।** भगवान् पुरुषोत्तमः **अनेन मार्गेण** अध्यायत्रयोक्तेन मार्गेण पूजितः प्रीयते । प्रीतश्च मुक्तिदो भवेदिति ज्ञातव्यम् ।। १५९-१६१ ।।

आलोच्य पूर्वटीकाश्च स्वगुरूक्तार्थसञ्चयः ।
निरूपितस्तृतीयेऽस्मिन् वेङ्कटेशाख्यसूरिणा ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारसङ्ग्रहस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधारकश्रीमच्छ्रीनिवासाचार्यपूज्यपादानां शिष्येण वेङ्कटपतिना विरचितायां गुर्वर्थदीधितौ तृतीयोऽध्यायः समाप्तः ।।

**मङ्गाली**– तत्त्वमन्त्राणां मालामन्त्रत्वशङ्कां वारयति– **ज्ञेया इति** ।। **समस्तास्ते** तत्त्वमन्त्रा पृथक् ज्ञेयाः । न तु मालामन्त्रत्वेन एकोमन्त्र इति । तत्त्वमन्त्राणां सामर्थ्यमाह– **मोक्षादिदायका इति** । यद्वा **ते** समस्तास्तत्त्वमन्त्राः **पृथक्** एकैकशः मोक्षादिदायकाः न तु समुदितत्वेनैव इत्येकवाक्यतया योजना । मोक्षादित्यादिपदेन धर्मार्थकामास्त्रयो गृह्यन्ते ।।

इदानीं पञ्चरात्राद्यागमेषु बहूनां भगवत्पूजादितन्त्रमार्गाणां हरिणा कथितत्वाद्व्यर्थमेतद्ग्रन्थे तन्त्रमार्गकथनमित्याशङ्क्य समाधत्ते– **तन्त्रमार्गा इति** ।। **अपि** यद्यपि आगमेषु हरिणा **असङ्ख्याः** बहवस्त**न्त्रमार्गाः** तन्त्राणां भगवत्पूजामन्त्रजपहोमप्रतिमानिर्णादिकर्मणां मार्गाः अनुष्ठानप्रकाराः कथिताः । **अपि** तथापि तन्त्रमार्गाणां बहुविधत्वेन अतिविस्तृतत्वेनाल्पज्ञानशक्त्यादिमद्भिः इदानींतनपुरुषैर्विवेकेन ज्ञातुमनुष्ठातुं चाशक्यास्ते**षु** तन्त्रमार्गेषु सारमुद्धृत्य सङ्गृहीतः **अयमस्मदुक्तो** मार्गस्तन्त्रमार्गः **सुगमः** अनायासेन ज्ञातुमनुष्ठातुं च शक्यः । विवेकेन निष्कृष्योद्धृतसाररूपत्वात् । तदुक्तप्रकारेणा**नुतिष्ठतां** कर्माचारतां **सफलश्च** फलप्रदश्च । एवं च मन्दोपकारकत्वेन सार्थक्यात् न वैय्यर्थ्यमस्य ग्रन्थस्येवेति भावः ।।

ननु सङ्क्षिप्यकथितत्वेन समग्रक्रियाऽनुष्ठानाभावात् कथं सफलत्वमित्यत आह– **यवत इति** ।। यावतः कर्मणः **अननुष्ठाने** अकरणे सति **कर्मपूर्तिः** कर्मणः पूर्तिः साफल्यं न विद्यते तावत्सकलं तत्कर्म **अस्मिन्** अस्मदुक्ततन्त्रे तन्त्रप्रतिपादके ग्रन्थे **यथाविधि** आगमोक्तप्रकारमनितिक्रम्य समस्तं सङ्गृहीतं सत् कथितम् । सफलत्वमेव विवृणोति– **प्रीयत इति** ।। **अनेन** मार्गेण अस्मदुक्ततन्त्रमार्गेण पूजितो भगवान् पुरुषोत्तमः स्वभक्तानां **प्रीयते** प्रसन्नो भवति । ततः प्रसादेन मुक्तिदो भवति । संसारान्मोक्षप्रदो भवति । तदनन्तरं **कामदश्च** तत्तदभीष्टप्रदो भवेत् । यद्वा मुक्तेः पूर्वमपि कामदश्च भवेदित्यर्थः ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारस्य तत्तट्टीका-
कारोक्तार्थसङ्ग्रहरूपायां मङ्गलधर्माचार्यरचितायां टीकायां तृतीयोऽध्यायः ।।

**।। श्रीकृष्णार्पणमस्तु ।।**

# ।। अथ चतुर्थोऽध्यायः ।।

चतुर्थाध्यायप्रतिपाद्यकथम्

**तं.सा. अथ विष्णूदिते तन्त्रसारे मन्त्रगणो हि यः ।**
**उदितः संग्रहेणासावुच्यतेऽखिलसाधकः ।। १ ।।**

**त. क.**— पूर्वस्मात् सङ्गतिं सूचयन् उद्धरिष्यमाणानां मन्त्राणां समूलत्वं, तदुद्धारस्य सार्थक्यं च दर्शयति— **अथेति ।।** तत्तन्मन्त्रैः प्रतिमाप्रतिष्ठान-विधानानन्तरमित्यर्थः । तेन तत्तन्मन्त्राकारदिजिज्ञासाया उत्पन्नत्वादिह तन्निरूपणं नासङ्गतमिति भावः । तन्त्रसारे मन्त्रगणो य उदितः सोऽसौ सङ्क्षेपेणात्रोच्यत इत्यनेनोद्धारस्य मूलं सार्थक्यं च दर्शितम् । विक्षिप्योक्तस्य संग्रहाभावे बुद्ध्यनारोहादिति भावः । 'विष्णूदिते' इति तन्मूलकथनम् । अनेन— अत्र ग्रन्थे उद्धरिष्यमाणानां वराहादिमन्त्राणां तद्बीजानां ऋषिच्छन्दसोरङ्गन्यासादेश्च पञ्चरात्रेऽन्यथोपलम्भः । तथाहि—

सूक्ष्मदृग्बिन्दुपर्यन्तषडचामङ्गपद्धतिः ।
बीजमेवं मुनिश्शङ्खश्छन्दो गायत्रमीरितम् ।।

अस्यार्थः—'भल्लायुधो भकारश्च सुभद्रस्सूक्ष्मलोचनः' इति भकारनामसु पाठात् सूक्ष्मदृग्भकारः । 'अनुस्वारो ध्रुवो बिन्दुर्यष्टिश्चन्द्रार्ध उच्यते' इत्युक्तेः बिन्दुरनुस्वारः । अचां मध्ये षट् षष्ठो वर्णः । एवं च भकार ऊकारोऽनुस्वारश्चेति त्रयाणां मेलने 'भूं' इति वराहमन्त्रस्य बीजाक्षरं संपद्यते । शङ्खो नाम कश्चिदृषिरिति ।

वरुणो विष्णुरनलश्चादिदेवश्च भास्करः ।
गोपनः पुरुषात्मा च विष्णुरेते समुद्धृताः ।।
अस्यासाधारणवर्णाः प्रोक्ताः साधारणाः पुरा ।।

इत्येकादशाक्षरो वाराहमन्त्र उद्धृतः । अस्यार्थः— 'वकारो वरुणः कुम्भः

पीयूषात्मा सुधारसः' इत्युक्तेर्वरूणो वकारः पूर्वमुच्चार्यः। ततो विष्णुरकारः 'अकारो विष्णुरुच्यते' इत्युक्तेः। 'रेफोऽनलो महाज्वालः' इत्युक्तेः तत अनलो रेफः। 'आकारो मधुसूदन आदिदेवः' इत्युक्तेस्तत आकारो आदिदेवः। 'द्वादशात्मा इकारस्य दीप्तिमान् भास्करः' इत्युक्तेरनन्तरं भास्करशब्दितो इकारः। 'आदिदेवो गोपनश्च' इत्युक्तेरनन्तरं गोपनशब्दित आकारः। 'यकारः पुरुषात्मा स्यात्' इत्युक्तेस्ततः प्रागुदाहृतः साधारणः वासुदेवादिमन्त्रसाधारणः प्राक् पठनीयः। तथा च 'भूं नमो भगवते वराहाय' इत्येकादशाक्षरो मन्त्रः संपद्यते। नत्यन्तश्च षडक्षर इति प्रकारान्तरमुक्तम्। 'ॐ नमो भगवते' इत्यंशं परित्यज्य वराहयेत्येतदुपरि नम इति शब्दोच्चारणे वराहस्यापरो मन्त्रः षडक्षरो भवतीति तस्यार्थः।

यद्वा पूर्ववदेवाङ्गं बीजं च कमलासन।
एकादशार्णानुद्धृत्य पूर्वोक्तान् व्याहृतित्रयम्॥

उद्धरेत्पतिशब्दं च चतुर्थ्यन्तमनन्तरम्।
भूमेः पतित्वमाशास्यं मे देहि तदनन्तरम्॥

दापयेति ठठान्तः स्याद् द्वात्रिंशद्वर्णसन्ततिः॥
छन्दोऽनुष्टुबृषिः पूर्वो देवता सा चतुर्मुख।
बीजमुक्तं तदङ्गानि भङ्क्त्वा मन्त्रं प्रकल्पयेत्॥

पूर्वोदाहृतं वाराहबीजाक्षरं भूमिति। तत्सहितान् पूर्वोक्तान् एकादशार्णन् 'भूं नमो भगवते वराहाय' इत्यन्तान् उद्धृत्य ततो व्याहृतित्रयं 'भूर्भुवःस्वः' इति पदमुद्धरेत्। ततः चतुर्थ्यन्तं पतिशब्दं, ततो 'भूपतित्वं मे देहि' इति पदं, ततो 'दापय' इति पदं, ततः ठठेति शब्दितं 'स्वाहा' शब्दमुद्धरेत्। एवं च 'ॐ भूं नमो भगवते वराहाय भूर्भुवःस्वः पतये भूपतित्वं मे देहि दादापय स्वाहा' इति द्वात्रिंशदाक्षरो वराहस्यापरो मन्त्रः संपद्यते। एतन्मन्त्रगतपदानि विभज्याङ्गन्यासश्च कर्तव्य इति तस्यार्थः। एवमन्यत्रापि। तथा चात्र वक्ष्यमाणवरामन्त्रस्य पक्षत्रयमप्येतद्वचनविसंवाद्येव। 'याष्टम' इत्यादिना बीजस्यान्यथा कथनात्।

द्वात्रिंशार्णमन्त्रे 'रूपाय' इति शब्दाधिक्यात्। ॐकारहुंकारयोर्मन्त्रानन्तर्भवेऽपि रूवर्णाधिक्यदर्शनात्। ब्रह्मा ऋषिरिति ह्यत्रोच्यते। प्रणवे स्वनाम्ना चेत्यङ्गन्यासस्यान्यथा कथनाच्च। एवं तत्र तत्रापीति कथमेतद्विश्वसनीयमिति चोद्यं निरस्तम्। 'तन्त्रमार्गास्तु हरिणा ह्यसङ्ख्याः कीर्तिता अपि'(तं.सा.३-१५९) इत्यादिना प्रागेव तद्विसंवादस्य अङ्गीकृतत्वात्। न चैतावताऽस्य निर्मूलत्वमवगन्तव्यम्। अधिकार्यादिभेदेन सर्वेषां विकल्पेनोपपत्तेः। न चाविशेषदुक्तवचनानुसरणमेव कुतो न कृतमिति वाच्यम्। तन्त्रसारोक्तानां मन्त्राणामचिरात् सर्वभीष्ट-साधकत्वात्। ननु भगवतैवोद्धृतत्वात्तेषामप्यचिरात् फलसाधकत्वमेष्टव्यम्। अन्यथा तदुद्धरणानुपपत्तेः। न च तेषां वीर्यं तिरोहितं कलाविति वाच्यम्। अविशेषात्तेषामपि तथात्वापातादिति चेन्न। प्रायः कलौ जना दृष्टार्थरुचयः। दृष्टार्थ एव तेषां मन्त्राणां वीर्यतिरोभावः, न त्वदृष्टार्थे। न तेन दृष्टरुचीन् प्रति तदुद्धारो व्यर्थः। 'अखिलसाधकः' इति, 'तत्रापि उद्दीप्तवीर्या हि मन्त्रा अत्र प्रकीर्तिताः'(४.४६) इति वक्ष्यति च। अत्र पृथक् पृथक् शास्त्रत्वात् न मन्त्राणामुद्धारे परस्परसङ्गत्यपेक्षा ॥ १ ॥

**अ.सं.**– पूर्वाध्यायादस्याध्यायस्य भेदं दर्शयितुमेतदध्यायप्रतिपाद्यं दर्शयति– **अथेति ॥ अथ** प्रतिमासम्बन्धिप्रकारकथनानन्तरम्। तन्त्रसारे यः **मन्त्रगणः** विष्णुमन्त्राणां तदन्यदेवतामन्त्राणां च समुदायः **उदितः** कथितः **असौ** मन्त्रगणः अस्मिन्नध्याये **उच्यते** प्रतिपाद्यते। प्रतिमाप्रतिष्ठाकरणे 'तत्तन्मूर्तिमनुं तथा' इति (३.११३) प्रकृतानां वैष्णवमन्त्राणां 'तत्तन्मन्त्रैः स्मरन् हरिं' इति*(३.१४१)* प्रकृतानां दुर्गाद्यन्यदेवतामन्त्राणां च ज्ञानार्थमिति शेषः। तत्प्रसङ्गात्तदुपयुक्तम् ऋष्यादिकमङ्गादिन्यासं ध्यानप्रकारं विजयस्तंभनादिकरणसामर्थ्यं मन्त्रस्य भक्त्यादियमप्राणायामादिकमन्यच्चोच्यत इति ज्ञेयम्। तन्त्रसारोक्तमन्त्रगणस्य प्रामाणिकत्वार्थं मूलं वक्ति– **विष्णूदित इति ॥** तर्हि भगवत्कृतेनैव तन्त्रसारेण मन्त्रस्वरूपज्ञानसम्भवात् किमनेनात्र कथनेनेत्यत आह– **सङ्ग्रहेणेति ॥** विष्णूदिततन्त्रसारस्य युगानुसारेण फलप्रदानां बहूनां मन्त्राणां प्रतिपादकत्वात् तन्मध्ये विवेकेन कलियुगे फलप्रदमन्त्रज्ञानस्य मन्दानामसम्भवत्। तदर्थं

'यावतो ह्यननुष्ठाने'(३-१६०) इत्युक्तप्रकारेणावश्यकमन्त्रसमुदायः संक्षेपेण कथ्यत इति भावः। अधिकारिणः जपाद्यनुष्ठाने प्रवृत्यर्थं मन्त्रगणस्य सामर्थ्यमाह– **अखिलसाधक इति ।।** अखिलस्य ऐहिकामुष्मिकपुरुषार्थस्य जनक इत्यर्थः ।। १ ।।

**गु.दी.—** पूर्वाध्याये प्रतिष्ठायां 'तत्तन्मन्त्रैः स्मरन्हरिम्' (तं.सा.३-१४१) इति मन्त्रा उक्ताः। अवश्यं जप्यानां तेषामुद्धारमतिगोप्यत्वात् सङ्केतेन करोत्यस्मिन्नध्याये। तत्रादौ निर्मलत्वेनाप्रामाण्यशङ्कावारणाय मूलं वदन्नत्र चिकीर्षितं प्रतिजानन् प्रेक्षावत्प्रवृत्तये फलं च वक्ति— **अथेति ।। अथ** प्रतिष्ठादिप्रकारकथनानन्तरम्। **विष्णूदिते** विष्णुना कथिते तन्त्रसारे यो **मन्त्रगणः** मन्त्रसमूहः कथितोऽस्ति **असौ** मन्त्रगण उच्यते। तर्हि मूलतन्त्रसारेणैवालं किमनेनेत्यत उक्तं– **सङ्ग्रहेणेति ।** विक्षिप्योक्तानां मन्त्राणामेकीकृत्य निरूपणाख्यः सङ्ग्रह एवास्य ग्रन्थस्य प्रयोजनमित्याशयः। सङ्ग्रहेणोच्यते तर्हि सङ्कुचितत्वेन समग्रफलको न स्यादित्यत आह— **अखिलसाधक इति ।।** अखिलपुरुषार्थसाधक इत्यर्थः ।।१।।

**मङ्गाली—** पूर्वाध्यायादस्याध्यायस्य भेदं दर्शयितुं एतदध्यायप्रतिपाद्यं दर्शयति— **अथेति ।। अथ** प्रतिमासम्बन्धिप्रकारकथनानन्तरं तन्त्रसारे यो **मन्त्रगणः** विष्णुमन्त्राणां तदन्यदेवतामन्त्राणां च समुदायः **उदितः** कथितः **असौ** मन्त्रगणः अस्मिन्नध्याये **उच्यते** प्रतिपाद्यते। प्रतिमाप्रतिष्ठाप्रकरणे 'तत्तन्मूर्तिमनुं तथा'(३-११३) इति प्रकृतानां वैष्णवमन्त्राणां 'तत्तन्मन्त्रैः स्मरन् हरिं'(३-१४१) इति प्रकृतानां दुर्गाद्यन्यदेवतामन्त्राणां च ज्ञानार्थमिति शेषः। तत्प्रसङ्गात्तदुपयुक्तं ऋष्यादिकमङ्गादिन्यासः ध्यानप्रकारः बिजयस्तम्भनादिकरण-सामर्थ्यं मन्त्रस्य, भक्त्यादि यमनियमप्राणायामादिकं अन्यच्चोच्यत इति ज्ञेयम्। तन्त्रसारोक्तमन्त्रगणस्य प्रामाणिकत्वार्थं मूलं वक्ति– **विष्णूदित इति ।।** तर्हि भगवत्कृतेनैव तन्त्रसारेण मन्त्रस्वरूपज्ञानसम्भवात् किमनेनात्र कथनेनेत्यत आह— **सङ्ग्रहेणेति ।।** विष्णूदिततन्त्रसारस्य युगानुसारेण फलदानां बहूनां मन्त्राणां प्रतिपादकत्वात्तन्मध्ये विवेकेन कलियुगे फलप्रदमन्त्रज्ञानस्य

मन्दानामसम्भवात्। तदर्थं 'यावतो ह्यननुष्ठाने' (३-१६०) इत्युक्तप्रकारेणावश्यकमन्त्रसमुदायः संक्षेपेण कथ्यत इति भावः। अधिकारिणो जपाद्यनुष्ठाने प्रवृत्त्यर्थं मन्त्रगणसामर्थ्यमाह– **अखिलसाधक इति**।। अखिलस्य ऐहिकामुष्मिकपुरुषार्थस्य जनक इत्यर्थः ।। १ ।।

भूवराहमन्त्रः

**तं.सा. याष्टमस्तूयुतोऽन्तेन समेतश्चैव भूभृतः ।**
**बीजं नमश्च भगवान् सोद्देशो(भागवानुद्देश्यो)**
**रूपसंयुतः ।। १ ।।**

**स एव तादृशो लोकत्रयपालो भुवः पतेः ।**
**भावं मे देहि दान्ते तु दापय स्वाहया युतः ।। २ ।।**

**मनुः....................................।**

**त.क.–** बीजशक्त्यङ्गहीना ये मन्त्राः स्युस्ते निरर्थकाः ।
तस्मात् साङ्गं शक्तियुक्तं बीजयुक्तं फलप्रदम् ।।

इति वचनात् वराहमन्त्रस्य बीजमुद्धरति– **याष्टम इति**।। मातृकायां यकारस्याष्टमो वर्णो ह्कारः। स च उ **युतः** उकारेण युक्तः। **अन्तेन** सर्वेषां वर्णनां अन्त एव उच्चार्येणानुस्वरेण समेतः। स चोच्चार्यः। एवमुच्चारितो हुंकारः, भुवं बिभार्तीति भूभृत् वराहस्तस्य बीजं भवतीति शेषः। **तु**शब्दः उद्धृतस्य बीजस्याचिरादभीष्टसाधकत्वरूपं विशेषमाह। मन्त्रमुद्धरति— **नमश्चेति**।। **नम** इति नमशशब्द उच्यते। **भगवानिति** भगवच्छब्दः। उद्देशशब्देन चतुर्थीविभक्तिरूच्यते। **स एवेति** भूभृद्वाचकवरहशब्द उच्यते। स च **रूपसंयुतो** रूपशब्दात् संयुक्तः, **सोद्देशः** चतुर्थीसहितश्चोद्धार्य इति च सम्बोध्यते। तादृशो लोकत्रयपाल इति च सम्बन्धः। **लोकत्रय**शब्देन लोकत्रयवाचकं भूर्भुवःस्वरिति पदत्रयं, **पाल** इत्यनेन पालवाचकपतिपदं गृह्यते। तच्च चतुर्थ्यन्तं कार्यमित्यर्थः। भुवः पतेर्भावः भूपतित्वं, तद्वाचकं भूपतित्वपदं भुवः पतेर्भावमित्यनेनोच्यते।

तदुद्धरेदिति संबन्धः। ततो 'मे देहि' इति पदम्। तुशब्दश्चार्थः। तद्दान्तं च कुर्यादित्यर्थः **दापय स्वाहया** इत्यनेन दापयशब्दोत्तरस्वाहाशब्देन युक्तो वर्णसमुदायो भूभृतो वराहस्य मनुरिति सम्बन्धः। तथाच— **'ॐ हुं नमो भगवते वराहरूपाय भूर्भुवःस्वः पतये भूपतित्वं मे देहिदा दापय स्वाहा'** इति मन्त्रः। 'भूर्भुवःस्वः पतये' इत्यस्य स्थाने 'लोकत्रयपालाय' इति पदं प्रयोक्तव्यमिति केचित्। अयं च द्वात्रिंशद्वर्णः बीजाक्षरस्य मन्त्रबहिर्भाव-विवक्षया। अन्तर्भावविवक्षया तु त्रयस्त्रिंशदर्ण इति केचित् ।। २,३ ।।

**अ.सं.–** वराहावतारस्य प्राथमिकत्वेनास्मिन्नध्याये प्रथमतः त्रयस्त्रिंशदक्षरं भूवराहमन्त्राणामतिगौप्यत्वात्सङ्केतोनोद्धरति– **याष्टम इति ।। तूयुतः** इत्यत्र तु ऊयुत इति पदच्छेदः। **याष्टमः** यकारापेक्षया अष्टमो वर्णः हकारः स तु ऊयुतः ऊकारेण युक्तः अन्त्येन यस्य कस्यापि बिन्दोः अन्त एव विद्यमानत्वात्। अन्ते विद्यमानेन बिन्दुनेत्यर्थः। 'विन्यसेद्वर्णमकैकं बिंद्वन्तं ध्रुववेष्ठितं' इत्यत्र बिन्दुः अन्ते यस्य तं बिद्वन्तम् वर्णमिति बिन्दोर्वर्णान्तत्वोक्तेः। यद्वा अन्त्येन अन्तनामकभगवद्रूपवाचकेन बिन्द्वनुस्वारापरपर्यायेण अम् इत्याख्येन पञ्चदशस्वरेण 'अन्तोऽर्धगर्भः कपिलः' *(१.७)* इत्यत्र अम् इत्यस्य अन्तना-मकभगवद्देवताकत्वोक्तेः। यद्वा उपनिषत्सु वेदशिरस्त्वेन वेदान्तशब्दप्रयोगात् अन्तशब्दः शिरःप्रतिपादकः। ततश्चान्तेन मातृकान्यासे अन्ते शिरसि न्यसनीयेन अम् इति पञ्चदशस्वरेणेति। तेन च समेतः एतादृश हूम् इति वर्णः **भूभृतः** भूवराहस्य **बीजं** बीजाक्षरं ज्ञेयम्। उक्तं च वैहायसे–

> तिथिस्वरयुतं व्योम वामकर्णविभूषितम् ।
> वराहबीजमुदितं सर्वसम्पत्प्रदायकम् ।। इति ।

तिथिरिति पञ्चदशस्य सञ्ज्ञा। एवं च तिथिः पञ्चदशस्वरः अम् इत्याख्यः विन्दुपरपर्यायः अनुस्वार इति यावत्। तेन युतं व्योम आकाशबीजं हकारः। हंसमन्त्रे 'वियत्सः'(४.२२) इत्यत्र व्योमपर्यायवियच्छव्देन हकारस्य ग्रहणात्। वामकर्णविभूषितं वामकर्णेन मातृकान्यासे वामकर्णे न्यसनीयेन ऊकारेणेत्यर्थः। विभूषितं युतं वराहबीजमिति प्रमाणार्थः।

अत्र बीजाक्षरस्य अनुस्वारसमेतत्वकथनेन वक्ष्यमाणसर्वबीजाक्षराणामप्यनुस्वारसमेतत्वं द्रष्टव्यमिति सूचितं भवति । **नमः** बीजादनु नमःशब्दः तदनन्तरं **उद्देशः** चतुर्थीविभक्त्यन्तः **भगवान्** भगवच्छब्दः । एवमुत्तरत्र सर्वत्रापि उद्देशशब्दः चतुर्थीविभक्तिवाचक इति ज्ञेयम् ।।

तदनन्तरं **तादृशः** चतुर्थ्यन्तः **रूपसंयुतः** रूपशब्देन युक्तः । **स एव** वराहशब्द एव ततः तादृश इत्युत्तरत्रापि सम्बध्यते । तथाच **तादृशः** चतुर्थ्यन्तः **लोकत्रयपालः** एतदर्थप्रतिपादकः भुर्भुवःस्वःपतिरिति शब्दः, ततः **भुवः पतेर्भावं** इत्यर्थप्रतिपादके भूपतित्वमिति पदं, ततः **मे देहीति** शब्दः । तदनन्तरं दाकारो ग्राह्यः । दान्त इत्यनुवादात् **दान्ते** दकारस्यान्ते अनन्तरं दापयेति शब्दः । ततः **स्वाहया** स्वाहाशब्देन युतः **मनुः** भूवराहस्य मन्त्र इत्यर्थः । तथा चैवं मन्त्रनिष्पत्तिः **'ॐ हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि दादापय स्वाहा'** इति ।। २,३ ।।

**गु.दी.—** अस्मिन्कल्पे वराहावतारस्य प्राथमिकत्वेन प्रथमतस्त्रयस्त्रिंशदक्षरं भूवराहमन्त्रमाह— **याष्टम इति ।। याष्टमो** यकारादष्टमो हकारः । **तु** ऊयुत इति पदच्छेदः । **ऊयुतः** ऊकारेण युतः **अन्तेन** बिन्दुना समेतः **भूभृतो** वराहस्य बीजं भवति । अत्र बीजस्य बिन्दुसमेतत्वकथनेन वक्ष्यमाणसर्वबीजानामपि बिन्दुसमेतत्वं द्रष्टव्यम् । बीजानन्तरं नमःशब्दस्तदनन्तरं **उद्देश्यः** चतुर्थ्यन्तो **भगवान्** भगवच्छब्दः । एवमुत्तरत्राप्युद्देशशब्दश्चतुर्थीविभक्तिवाचक इति द्रष्टव्यम् । **स एव** वराहो रूपशब्देन युतः **तादृशः** चतुर्थ्यन्तः । **लोकत्रयपालः** लोकत्रयस्य पालक इत्यर्थको 'भूर्भुवःस्वःपतिः' इति शब्दः । **तादृशः** चतुर्थ्यन्त इत्यनुवर्तते । **भुवः पतेर्भावमि**त्यर्थकं भूपतित्वमिति पदम् । तदनन्तरं मे देहीति पदम् । **दान्ते** दकारस्यान्ते **दापयस्वाहया** दापयश्च स्वाहा चेति द्वन्द्वैकवद्भावः । नपुंसकत्वं तु नाश्रितम् । 'दापय' 'स्वाहा' शब्दाभ्यां युत इत्यर्थः । दापयसहिता स्वाहेति वा । दापयशब्देन स्वाहाशब्देन च युतस्त्रयस्त्रिंशदक्षरो **मनुः** वराहमन्त्रः ।

केचित्तु मे देहीत्यनन्तरं दाकार इति ग्राह्यं दान्त इति वक्ष्यमाणत्वात् । **दान्ते** दाकारस्यान्ते **दापयस्वाहया** दापयस्वाहापदेन युतो वाराहो मनुरित्यर्थ इत्याहुः ।

तथा चैवं मन्त्रनिष्पत्तिः— **'हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि दादापय स्वाहा'** इति ।

मन्त्रार्थस्तु— वरानुत्तमानानन्दादिगुणान् कदापि न त्यजतीति वा, वरान् वरणीयान् प्रार्थ्यान् स्वरूपानन्दाविर्भावादीनाहरति ददातीति वा वराहनामकं रूपमवतारो यस्येति वा, वराहवद्रूपं शरीरं यस्येति वा वराहरूपस्तस्मै त्रिलोकपतये नमः । त्वं मे भूपतित्वं देहि । तत्वाभिमानिदेवैः ददापय तान् दातुं प्रेरय । स्वाहा 'स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः' (अनु.व्या.१-४-१) इति ।। २,३ ।।

**मङ्गाली—** वाराहावतारस्य प्राथमिकत्वेनास्मिन्नध्याये प्रथमतः त्रयस्त्रिंशदक्षरभूवराहमन्त्रं मन्त्राणामतिगोप्यत्वात्सङ्केतेनोद्धरति- **याष्टम इति ।।** तूयुत इत्यत्र तु ऊ युत इति पदच्छेदः । **याष्टमः** यकारापेक्षया अष्टमो वर्णः हकारः । स तु ऊयुतः ऊकारेण युतो युक्तः । **अन्तेन च** यस्य कस्यापि वर्णस्य बिदोः अन्त एव विद्यमानत्वात् अन्ते विद्यमानेन बिन्दुनेत्यर्थः । **समेतः** एतादृशः हूं इति वर्णः **भूभृतो** वराहस्य **बीजं** बीजाक्षरं ज्ञेयम् । उक्तं च वैहायसे–

> तिथिस्वरयुतं व्योम वामकर्णविभूषितम् ।
> वराहबीजमुदितं सर्वसंपत्प्रदायकम् ।। इति ।

तिथिरिति पञ्चदशस्य संज्ञा । एवं च तिथिः पञ्चदशस्वरः, अं इत्याख्यः बिन्द्वपरपर्यायोऽनुस्वार इति यावत् । तेन युतं व्योम आकाशबीजं हकरः, हंसमन्त्रे 'वियत्सः' (४-२२) इत्यत्र व्योमपर्यायवियच्छब्देन हकारस्य ग्रहणात् । वामकर्णविभूषितं वामकर्णेन मातृकान्यासे वामकर्णन्यासनीयेन ऊकारेणेत्यर्थः । विभूषितं युतं वराहबीजमुदितमिति प्रमाणार्थः ।

अत्र बीजाक्षरस्यानुस्वारसमवेतत्वकथनेन वक्ष्यमाणसर्वबीजाक्षराणामप्यनुस्वारसमवेतत्वं द्रष्टव्यमिति सूचितं भवति । **नमः** बीजादनु नमःशब्दः तदनन्तरं **सोद्देशः** चतुर्थीविभक्त्यन्तः **भगवान्** भगवच्छब्दः । एवमुत्तरत्र सर्वत्राप्युद्देशशब्दः

चतुर्थीविभक्तिवाचक इति ज्ञेयम्। तदनन्तरं **तादृशः** चतुर्थ्यन्तः **रूपसंयुतः** रूपशब्देन युतः । **स एव** वराहशब्द एव। ततः तादृश इत्युत्तरत्रापि सम्बद्ध्यते। तथा च **तादृशः** चतुर्थ्यन्तः **लोकत्रयपालः** एतदर्थप्रतिपादकः भूर्भुवस्स्वःपतिरिति शब्दः । ततः **भुवःपतेः भावं** इत्यर्थप्रतिपादकं भूपतित्वमिति पदम् । ततः मे देहीति शब्दः । तदनन्तरं दाकारो ग्राह्यः । दान्त इत्यनुवादात् **दान्ते** दाकारस्यान्ते अनन्तरं दापयेति शब्दः । ततः **स्वाहया** स्वाहाशब्देन युतः **मनुः** भूवराहस्य मन्त्र इत्यर्थः । तथा चैवं मन्त्रनिष्पत्तिः– **'हूं नमो भगवते वराहरूपाय भूर्भुवःस्वः पतये भूपतित्वं मे देहि दादापय स्वाहा'** इति ।।२,३।।

सप्ताक्षर–चतुर्दशाक्षरवराहमन्त्रः

**तं.सा.** **.....तस्यापरो नाम(अपरस्तार)बीजोद्देशनमोयुतः ।**
**नमः सोद्देशभगवान् महाशब्दयुतश्च सः ।**
**तादृशः स्वाहया युक्तो वराहस्यापरो मनुः ॥ ४ ॥**

**त.क.**– प्रकारान्तरेण मन्त्रमुद्धरति— **तस्येति** ।। मनुरित्यनुवर्तते । **नाम** वराहपदम्। बीजं हुमिति पदम्। उद्देशश्चतुर्थी। **नमः** नम इति शब्दश्चेत्येतैर्युतस्तस्य वराहस्यापरो **मनुर्**मन्त्र इति सम्बन्धः। अत्रोच्चारणक्रमो न विवक्षितः। चतुर्थ्या बीजेन नमःशब्देन च सम्बन्धायोगात्। तथा च **हुं वराहाय नमः** इति मन्त्रः सम्पद्यते। अयं च बीजान्तर्भावबहिर्भावाभ्यां सप्ताक्षरः षडक्षरश्च गीयते। अत्र मूलेऽनुक्तोऽप्योङ्कारः सर्वादौ प्रयोज्यः। सोऽपि मन्त्रान्तर्गत एव। तथाचायमष्टाक्षर इति संप्रदाय इति केचित्। प्रकारान्तरेण मन्त्रमुद्धरति— **नम इति** ।। चतुर्थ्यन्तो भगवच्छब्दः। **तादृशः** चतुर्थ्यन्त एव महाशब्दसहितो वराहशब्दः स्वाहया युक्तश्च प्रयोक्तव्यः। एवम्भूतः समुदायो वराहस्यापरो मन्त्र इत्यर्थः। **'नमो भगवते महावराहाय स्वाहा** इति निष्पद्यते। अयं च चतुर्दशाक्षरः ।। ४ ।।

**अ.सं.**– अष्टाक्षरं द्वितीयं वराहमन्त्रमाह– **तस्येति** ।। तारबीजोद्देशनमोयुतः

वराहशब्दः **तस्य** वराहस्यापरः द्वितीयो मनुरित्यर्थः। तारः ॐकारः। बीजं हूँमिति बीजाक्षरम्। **उद्देश**श्चतुर्थीविभक्तिः। **नमः** शब्दः। एतैर्युक्त इत्यर्थः। 'नामबीज' इति क्वचित्पाठः। तत्र लिङ्गविपरिणामेन बीजोद्देशनमोयुतं नाम वराहपदमित्यर्थः। आदौ ॐकारयुक्तत्वं च ज्ञेयम्। चतुर्थीविभक्तेः बीजादिशब्दान्तरेणान्वयायोगात्। वराहपदस्यैव सम्बन्ध इत्यपि ज्ञेयम्। तथाच '**ॐ हूं वराहाय नमः**' इति मन्त्रस्वरूपमुक्तं भवति। एतस्य मन्त्रस्यैवं क्रमेणैवाष्टाक्षरत्वमुक्तं वैहायसे–

अष्टाक्षरे तथा मन्त्रे वेदादिः प्रथमाक्षरम्।
द्वितीयं बीजकं तस्माद्वराहाय हृदन्तकः ॥ इति।

**वेदादिः** ॐकारः बीजकं हमित्येतत् हृदन्त इति प्रमाणार्थः। केचित्तु 'हूं नमो वराहाय' इति मन्त्रक्रम इति सम्प्रदाय इति वदन्ति। चतुर्दशाक्षरं तृतीयं वराहमन्त्रमुद्धरति– **नम इति ॥** आदौ नमःशब्दः पश्चात्**सोद्देशभगवान्** चतुर्थ्यन्तभगवच्छब्दः। ततः **महाशब्दयुतः तादृशः** चतुर्थ्यन्तश्च **सः** वराहशब्दः ततः **स्वाहया** स्वाहाशब्देन युक्तः वराहस्या**परो मनुः** तृतीयो मन्त्र इत्यर्थः। अनेन '**ॐ नमो भगवते महावराहाय स्वाहा**' इति मन्त्रः निष्पन्नः ॥ ४ ॥

**गु.दी.**— अष्टाक्षरं द्वितीयं वराहमन्त्रमाह— **तस्येति ॥ तस्य** वराहस्य **अपरो** द्वितीयो मन्त्रः। **तारः** ॐकारः। **बीजं** हूमिति। **उद्देशः** चतुर्थी। **नमः** नमःशब्दः। तैर्युक्तः। तथा चोक्तं पञ्चरात्रे—

अष्टाक्षरे तथा मन्त्रे वेदादिः प्रथमाक्षरे।
द्वितीयं बीजकं तस्माद्वराहाय हृदन्तके ॥ इति।

तथा च '**ओं हूं वराहाय नमः**' इति अष्टाक्षरवराहमन्त्रप्रयोगः। 'नामबीजोद्देशः' इति बहुकोशेषु पाठः। तत्र **नामबीजं** हूमित्यर्थो ज्ञेयः। ॐकारं विहाय सप्ताक्षरो वाराहमन्त्रः पूर्वोक्त एव। अपरे तु— नामभूतवराहशब्देन बीजेन उद्देशेन नमःशब्देन च युक्तः तस्यापरो मन्त्रो वर्तत इत्यर्थ इत्याहुः।

तस्य चतुर्दशाक्षरं तृतीयं मनुमाह– **नम इति ।।** प्रथमं नमःशब्दस्त-तश्चतुर्थ्यन्तो भगवच्छब्दः । **स** वराहः वराहशब्दसहित इति यावत् । महाशब्दयुतः **तादृशः** सोद्देशः **स्वाहया युतः** स्वाहाशब्देन संयुतः वराहस्य **अपरः** तृतीयो मनुः । एवं च **'नमो भगवते महावराहाय स्वाहा'** इति मन्त्रनिष्पत्तिः ।।४।।

**मङ्गाली–** अष्टाक्षरं द्वितीयं वराहमन्त्रमाह– **तस्येति ।।** तारबीजोद्देशनमोयुतः वराहशब्दः वराहस्य **अपरो** द्वितीयो मनुरित्यर्थः । **तारः** ॐकारः । **बीजं** हूं इति बीजाक्षरम् । **उद्देशश्चतुर्थीविभक्तिः** । **नमो** नमःशब्दः एतैयुक्त इत्यर्थः । 'नाम बीज' इति क्वचित्पाठः । तत्र लिङ्गपरिणामेन बीजोद्देशनमोयुतं **नाम** वराहपदमित्यर्थः । आदौ ॐकारयुतत्वं च ज्ञेयम् । चतुर्थ्याः बीजादिशब्दान्तरेणान्वयायोगात् वराहपदस्यैव सबन्ध इत्यपि ज्ञेयम् । लिङ्गविपरिणामं विनैव नामभूतवराहशब्देन बीजेन उद्देशेन नमःशब्देन च युक्तस्तस्यापरो मनुरिति आवृत्तमनुशब्देनान्वयं केचिदाहुः । तथा च– **'ॐ हूं वराहाय नमः'** इति मन्त्रस्वरूपमुक्तं भवति । एतस्य मन्त्रस्यैवं क्रमेणैवाष्टाक्षरत्वमुक्तं वैहायसे–

> अष्टाक्षरे तथा मन्त्रे वेदादिः प्रथमाक्षरम् ।
> द्वितीयं बीजकं तस्मात् वराहाय हृदन्तकम् ।। इति ।

वेदिरोङ्कारः, बीजकं हूमित्येतत् । हृदंतकम् नमःशब्दान्तमिति प्रमाणार्थः । केचित्तु 'ॐ हूं नमो वराहाय' इति मन्त्रक्रम इति संप्रदाय इति वदन्ति ।

चतुर्दशाक्षरं तृतीयं वराहमन्त्रमुद्धरति– **नम इति ।।** आदौ नमःशब्दः । पश्चात्तु **सोद्देशभगवान्** चतुर्थ्यन्तश्च **सः** वराहशब्दः । ततः **स्वाहया** स्वाहाशब्देन युक्तः वराहस्य **अपरो मनुः** तृतीयो मन्त्र इत्यर्थः । अनेन **'नमो भगवते महावराहाय स्वाहा'** इति मन्त्रो निष्पन्नः ।। ४ ।।

वराहमन्त्रत्रयाणं ध्यानकथनम्

**तं.सा.** **श्यामः सुदर्शनदराभयसद्वरेतो**
**भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च ।**

**ध्येयो निजैश्च तनुभिः सकलैरुपेतः**
**कोलो हरिः सकलवाञ्छितसिद्धयेऽजः ॥ ५ ॥**

**त.क.—** एवमुद्धृतानां त्रयाणां मन्त्राणां ध्यानप्रकारमाह—**श्याम इति** ॥ **सुदर्शनं** चक्रम् । **दरः** शङ्खः । **अभयम्** अभयमुद्रा । **वरं** वरदमुद्रा । एतैरुपेत इत्यनेन चतुर्बाहुत्वमुक्तम् । सदिति वरमुद्राविशेषणेन अविनाशीप्सितदातृत्वं सूच्यते । 'भूम्या युतः' इत्यनेन 'लक्ष्मीधराभ्यामाश्लिष्टः' (तं.सा.१-१९) इत्यत्रोक्तलक्ष्मीं परित्यज्य धरया समेत इति लभ्यते । अखिलनिजशब्दितमूल-मन्त्रोक्ता ब्रह्मवायुशिवाहीशविपादिपरिग्रहा भृत्याः । तैश्च युक्त इति सम्बन्धः । स्वरूपभूताभिः स्वकाभिस्तनूभिः स्वमूर्तिगणेत्यत्रोक्ताभिर्विश्वादिभिरुपेत इति सम्बन्धः । सकलवाञ्छितसिद्धये कोलो हरिर्ध्येय इत्यर्थः ॥ ५ ॥

**अ.सं.—** 'ध्यानहीने तु निष्फलं' इत्युक्तेः मन्त्रत्रयेऽपि वराहस्य ध्यानप्रकारमाह— **श्याम इति** ॥ **सुदर्शनदराभयसद्वरेतः** सुदर्शनं चक्रम् । दरः शङ्खः । अभयमभयमुद्रा । सद्वरः समीचीनवरमुद्रा । एतैः इतः सहित इत्यनेन चतुर्भुजत्वमुक्तं भवति । **भूम्या** स्वाङ्कस्थया भूदेव्या युतः । **अखिलनिजोक्तपरिग्रहैश्च** सकलः स्वकीयैरागमोक्तैः परिग्रहैरावरणभूताभिः भार्याभिश्च युत इत्यर्थः । उक्तं च वैहायससंहितायाम्—

कृष्णाङ्गत्वतिनालवत्त्रिनयनं पद्मस्थितं स्वांकग-
क्षोणीशक्तिमुदारबाहुभिरथो शङ्खं गदामम्बुजम् ।
चक्रं बिभ्रतमुग्रकान्तिमनिशं देवं वराहं भजे
भूलक्ष्मीरतिकान्तिभिः परिवृतं चर्मासिसंदीप्तिभिः ॥ इति ।

यद्वा, **भूम्या युतः** स्वदंष्ट्राग्रे धरया युतः । 'स्वदंष्ट्रयोन्नीतधरो वराहः' (भाग.६.८.१५) इति भगवतोक्तेः । **अखिलनिजोक्तपरिग्रहैः** अखिला निजाः उक्ताः आवरणपूजायां वा 'उद्यद्भास्वत्समाभासः' (१.१९) इति ध्यानश्लोके वा आवरणत्वेनाभिहिताः परिग्रहाः लक्ष्मीधरानन्तब्रह्मवाय्वाद्याः तैश्च युत इत्यर्थः । **निजैश्च तनुभिः** कृद्धोल्कादिविश्वरूपान्तैः सकलैः रूपैः **उपेतः** आवृतः । अनेन

सकलावरणभूतदेवतासमेतत्वमुक्तं भवति। इदमप्युक्तं भवति। 'पूर्णं सहावरणशोभिसदैकदंष्ट्रमाद्यं वराहमनिशं प्रभजस्व चित्ते' इति। **कोलः** वराहरूपो **अजः** हरिः **सकलवाञ्छितसिद्धये** सकलाभीष्टसीध्यर्थं ध्येय इत्यर्थः ।। ५ ।।

**गु.दी.**— 'ध्यानहीने तु निष्फलम्' इत्युक्तत्वेन मन्त्रत्रयध्येयस्य वराहस्य ध्यानमाह— **श्याम इति ।।** नीलवर्णः। **सुदर्शनदराभयसद्वरेतः** चक्रशङ्खाभयवरमुद्रायुतबाहुचतुष्टयः **भूम्या** रमावतारया स्वपत्न्या युतः। **अखिलनिजोक्तपरिग्रहैः** स्वशिष्यत्वेन परिग्रहरूपैर्ब्रह्मादिभिः जनैर्युक्तः। यद्वा **अखिलाः** निजाः स्वीयाः प्रागुक्ताः ये **परिग्रहा** लक्ष्मीधरानन्तब्रह्मवाय्वादयस्तैरित्यर्थः। **निजैः** सकलैः **तनुभिः** आवरणभूतैर्देवैरुपेतः। 'पूर्णं सदाऽवरणशोभिसदैकदंष्ट्रमाद्यं वराहमनिशं प्रभजस्व चित्ते' इति वैहायसपञ्चरात्रोक्तेः। अत्र तनुशब्दस्य स्त्रीलिङ्गत्वेऽपि निजैः सकलैरिति लिङ्गव्यत्ययः पुरुषाकारमूर्तिसूचकः। यद्वा **निजैः** अखिलैरावरणरूपैः **तनुभिः** स्वस्वरूपभूतेच्छादिशक्तिभिश्चोपेतः। 'इच्छाद्या मोचिकाद्याश्च अणिमाद्याश्च शक्तयः'(भा.ता.२-९-१६) इति भागवततन्त्रोक्ताः शक्तयो ज्ञेयाः। अथवा **निजैस्तनुभिः** क्रुद्धोल्कादिभिः विश्वरूपान्तैः शक्तिभिश्चोपेतः। एतेन सकलावरणदेवता-समेतत्वमुक्तं भवति। **अजो** जनिरहितः **कोलो** वराहरूपो हरिः **सकलवाञ्छितसिद्धये** सकलाभीष्टप्राप्त्यै **ध्येयः** चिन्त्य इत्यर्थः ।। ५ ।।

**मङ्गाली**— 'ध्यानहीने तु निष्फलं' इत्युक्तेर्मन्त्रत्रयेऽपि वराहस्य ध्यानप्रकारमाह- **श्याम इति ।। सुदर्शनदराभयसद्वरेतः** सुदर्शनं चक्रं, दरः शङ्खः, अभयं अभयमुद्रा, सद्वरः समीचीनवरमुद्रा एतैरितः सहित इत्यनेन चतुर्भुजत्वमुक्तं भवति। **भूम्या** स्वाङ्कस्थया भूदेव्या युतः। **अखिलनिजोक्तपरिग्रहैश्च** सकलैस्स्वकीयैः आगमोक्तैः परिग्रहैः आवरभूताभिर्भार्याभिश्च युत इत्यर्थः। उक्तं च वैहायससंहितायां–

कृष्णाङ्गत्वतिनीलवक्त्रनयनं पद्मस्थितं स्वांकग-
क्षोणीशक्तिमुदारबाहुभिरथो शङ्खं गदामम्बुजम् ।

चक्रं बिभ्रातमुग्रकान्तिमनिशं देवं वराहं भजे
भूलक्ष्मीरतिकान्तिभिः परिवृतं चर्मासिसन्दीप्तिभिः ।। इति ।

यद्वा **भूम्या युतं** स्वदंष्ट्राग्रे धरयायुतम् । 'स्वदंष्ट्रयोन्नीतधरो वराहः' (भा.ग.६-८-१५) इति भागवतोक्तेः । **अखिलनिजोक्तपरिग्रहैः** अखिलाः निजाः उक्ताः आवरणपूजायां वा 'उद्यद्भास्वत्समाभासः इति ध्यानश्लोके वा आवरणत्वेनाभिहिताः परिग्रहाः लक्ष्मीधरानन्तब्रह्मवाय्वाद्याः तैश्चयुत इत्यर्थः । **निजैश्च तनुभिः** कृद्धोल्कादिविश्वरूपान्तैरूपैरुपेतः आवृतश्च । अनेन सकलावरण-भूतदेवतासमेतत्वमुक्तं भवति । इदमप्युक्तं– 'पूर्णं सहावरणशोभिसदैकदंष्ट्रं आद्यं वराहमनिशं प्रभजस्व चित्ते' इति । **कोलः** वराहरूपः **अजो** हरिः **सकलवाञ्छितसिद्धये** सकलाभीष्टसिध्यर्थं ध्येय इत्यर्थः ।। ६ ।।

वैष्णवमन्त्राणां ऋष्यादिकथम्

**तं.सा.** **वैष्णवानां मुनिर्ब्रह्मा मन्त्राणां(मनूनां) वर्णभेदतः ।**
**ज्ञेय छन्दो देवतैक(कं)स्तत्तद्रूपो हरिः परः** ।। ६ ।।

**त.क.—** ऋष्यादिजिज्ञासायामुक्तिसौकर्याय विष्णुप्रतिपादकमन्त्रेषु सर्वेषु तानाह— **वैष्णवानामिति ।। मुनिः** प्रथमप्रतिपत्ता । यद्यपि भगवानेव प्रथमप्रतिपत्ता । ब्रह्मा तु द्वितीयस्तृतीयो वा । तथापि जीवेष्वयं प्रथमप्रतिपत्तेति न दोषः । **वर्णभेदतः** वर्णसङ्ख्याभेदतः । तत्र यान्यष्टाक्षराणि सा गायत्री । यान्येकादशाक्षराणि सा त्रिष्टुम् । यानि द्वादशाक्षराणि सा जगतीत्यादिना मन्त्राणां छन्दो ज्ञेयमिति सम्बन्धः । **तत्तद्रूपः** वराहनृसिंहवेदव्यासरामकृष्णादिरूपस्त-त्तन्मन्त्राणां देवतेत्यर्थः । एक इत्यनेन परस्परं भेदं निवर्तयति ।। ६ ।।

**अ.सं.–** इदानीं ऋष्यादिज्ञानस्यावश्यकत्वात् भूवराहादिसर्ववैष्णवमन्त्रा-णामपि ऋषिच्छन्दोदेवता लाघवात् एकोत्त्यैवाह– **वैष्णवानामिति ।।** विष्णु-देवतानां मन्त्राणां ब्रह्मा **मुनिः** ऋषिः । उपलक्षणमेतत् । अन्यदेवतामन्त्राणा-मपीति ज्ञेयम् । यत्र विशिष्य ऋषिर्नोच्यते तत्र ब्रह्मा ऋषिरिति ज्ञेयः ।

सकलावरणभूतदेवतासमेतत्वमुक्तं भवति। इदमप्युक्तं भवति। 'पूर्णं सहावरणशोभिसदैकदंष्ट्रमाद्यं वराहमनिशं प्रभजस्व चित्ते' इति। **कोलः** वराहरूपो **अजः** हरिः **सकलवाञ्छितसिद्धये** सकलाभीष्टसीध्यर्थं ध्येय इत्यर्थः ॥ ५ ॥

**गु.दी.—** 'ध्यानहीने तु निष्फलम्' इत्युक्तत्वेन मन्त्रत्रयध्येयस्य वराहस्य ध्यानमाह— **श्याम इति ॥** नीलवर्णः। **सुदर्शनदराभयसद्वरेतः** चक्रशङ्खाभयवरमुद्रायुतबाहुचतुष्टयः **भूम्या** रमावतारया स्वपत्न्या युतः। **अखिलनिजोक्तपरिग्रहैः** स्वशिष्यत्वेन परिग्रहरूपैर्ब्रह्मादिभिः जनैर्युक्तः। यद्वा **अखिलाः** निजाः स्वीयाः प्रागुक्ताः ये **परिग्रहा** लक्ष्मीधरानन्तब्रह्मवाय्वादयस्तैरित्यर्थः। **निजैः** सकलैः **तनुभिः** आवरणभूतैर्देवैरुपेतः। 'पूर्णं सदाऽवरणशोभिसदैकदंष्ट्रमाद्यं वराहमनिशं प्रभजस्व चित्ते' इति वैहायसपञ्चरात्रोक्तेः। अत्र तनुशब्दस्य स्त्रीलिङ्गत्वेऽपि निजैः सकलैरिति लिङ्गव्यत्ययः पुरुषाकारमूर्तिसूचकः। यद्वा **निजैः** अखिलैरावरणरूपैः **तनुभिः** स्वस्वरूपभूतेच्छादिशक्तिभिश्चोपेतः। 'इच्छाद्या मोचिकाद्याश्च अणिमाद्याश्च शक्तयः'(भा.ता.२-९-१६) इति भागवततन्त्रोक्ताः शक्तयो ज्ञेयाः। अथवा **निजैस्तनुभिः** क्रुद्धोल्कादिभिः विश्वरूपान्तैः शक्तिभिश्चोपेतः। एतेन सकलावरणदेवता-समेतत्वमुक्तं भवति। **अजो** जनिरहितः **कोलो** वराहरूपो हरिः **सकलवाञ्छितसिद्धये** सकलाभीष्टप्राप्त्यै **ध्येयः** चिन्त्य इत्यर्थः ॥ ५ ॥

**मङ्गाली—** 'ध्यानहीने तु निष्फलं' इत्युक्तेर्मन्त्रत्रयेऽपि वराहस्य ध्यानप्रकारमाह– **श्याम इति ॥ सुदर्शनदराभयसद्वरेतः** सुदर्शनं चक्रं, दरः शङ्खः, अभयं अभयमुद्रा, सद्वरः समीचीनवरमुद्रा एतैरितः सहित इत्यनेन चतुर्भुजत्वमुक्तं भवति। **भूम्या** स्वाङ्कस्थया भूदेव्या युतः। **अखिलनिजोक्तपरिग्रहैश्च** सकलैस्स्वकीयैः आगमोक्तैः परिग्रहैः आवरभूताभिर्भार्याभिश्च युत इत्यर्थः। उक्तं च वैहायससंहितायां–

कृष्णाङ्गत्वतिनीलवक्त्रनयनं पद्मस्थितं स्वांकग-
क्षोणीशक्तिमुदारबाहुभिरथो शङ्खं गदामम्बुजम् ।

चक्रं बिभ्रातमुग्रकान्तिमनिशं देवं वराहं भजे
भूलक्ष्मीरतिकान्तिभिः परिवृतं चर्मासिसन्दीप्तिभिः ।। इति ।

यद्वा **भूम्या युतं** स्वदंष्ट्राग्रे धरयायुतम् । 'स्वदंष्ट्रयोन्नीतधरो वराहः' (भा.ग.६-८-१५) इति भागवतोक्तेः । **अखिलनिजोक्तपरिग्रहैः** अखिलाः निजाः उक्ताः आवरणपूजायां वा 'उद्यद्भास्वत्समाभासः इति ध्यानश्लोके वा आवरणत्वेनाभिहिताः परिग्रहाः लक्ष्मीधरानन्तब्रह्मवाय्वाद्याः तैश्चयुत इत्यर्थः । **निजैश्च तनुभिः** कृद्धोल्कादिविश्वरूपान्तैरूपैरुपेतः आवृतश्च । अनेन सकलावरण-भूतदेवतासमेतत्वमुक्तं भवति । इदमप्युक्तं– 'पूर्णं सहावरणशोभिसदैकदंष्ट्रं आद्यं वराहमनिशं प्रभजस्व चित्ते' इति । **कोलः** वराहरूपः **अजो** हरिः **सकलवाञ्छितसिद्धये** सकलाभीष्टसिध्यर्थं ध्येय इत्यर्थः ।। ६ ।।

वैष्णवमन्त्राणां ऋष्यादिकथम्

**तं.सा. वैष्णवानां मुनिर्ब्रह्मा मन्त्राणां(मनूनां) वर्णभेदतः ।**
**ज्ञेय छन्दो देवतैक(कं)स्तत्तद्रूपो हरिः परः ।। ६ ।।**

**त.क.—** ऋष्यादिजिज्ञासायामुक्तिसौकर्याय विष्णुप्रतिपादकमन्त्रेषु सर्वेषु तानाह— **वैष्णवानामिति ।। मुनिः** प्रथमप्रतिपत्ता । यद्यपि भगवानेव प्रथमप्रतिपत्ता । ब्रह्मा तु द्वितीयस्तृतीयो वा । तथापि जीवेष्वयं प्रथमप्रतिपत्तेति न दोषः । **वर्णभेदतः** वर्णसङ्ख्याभेदतः । तत्र यान्यष्टाक्षराणि सा गायत्री । यान्येकादशाक्षराणि सा त्रिष्टुम् । यानि द्वादशाक्षराणि सा जगतीत्यादिना मन्त्राणां छन्दो ज्ञेयमिति सम्बन्धः । **तत्तद्रूपः** वराहनृसिंहवेदव्यासरामकृष्णादिरूपस्त-त्तन्मन्त्राणां देवतेत्यर्थः । एक इत्यनेन परस्परं भेदं निवर्तयति ।। ६ ।।

**अ.सं.–** इदानीं ऋष्यादिज्ञानस्यावश्यकत्वात् भूवराहादिसर्ववैष्णवमन्त्रा-णामपि ऋषिच्छन्दोदेवता लाघवात् एकोत्त्यैवाह– **वैष्णवानामिति ।।** विष्णु-देवतानां मन्त्राणां ब्रह्मा **मुनिः** ऋषिः । उपलक्षणमेतत् । अन्यदेवतामन्त्राणा-मपीति ज्ञेयम् । यत्र विशिष्य ऋषिर्नोच्यते तत्र ब्रह्मा ऋषिरिति ज्ञेयः ।

'मुनिर्ब्रह्माऽखिलस्य च' इति ऋग्भाष्योक्तेस्तस्य सर्वमन्त्रद्रष्टृत्वादिति भावः। **वर्णभेदतः** वर्णसङ्ख्याभेदतः छन्दो ज्ञेयम् ।

अयं भावः । गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती इति सप्तच्छन्दांसि । तथा 'अतिजगती, शक्वरी, अतिशक्वरी, अष्टी, अत्यष्टी, धृतिः अतिधृतिः' इति सप्त(अति)छन्दांसि । एवं चतुर्दशच्छन्दांसि अनुक्रमणिकाया-मुक्तानि । तेषां लक्षणानि च तत्रैवोक्तानि । 'चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि' इति । अस्यार्थः । चतुर्विंशत्यक्षरा गायत्री । सैव आदिः येषां च्छन्दसां तानि तथोक्तानि तानि च्छन्दांसि । चतुरुत्तराणि पूर्वस्मात् पूर्वस्मात् च्छन्दसः उत्तरोत्तरच्छन्दांसि एकैकशश्चतुश्चतुर्वर्णैरधिकानि पूर्वपूर्वच्छन्दोऽपेक्षया उत्तरोत्तरेषां च्छन्दसां चतुश्चतुरक्षराधिक्यमिति भावः। तथा च गायत्र्याः चतुर्विंशत्यक्षरत्वम् । उष्णिहः अष्टाविंशत्यक्षरत्वम् । अनुष्टुभः द्वात्रिंशदक्षरत्वम् । बृहत्याः षड्विंशदक्षरत्वम् । पङ्क्तेश्चत्वारिंशदक्षरत्वम् । त्रिष्टुभः चतुश्चत्वारिंशदक्षरत्वम् । जगत्याः अष्टचत्वारिंशदक्षरत्वम् इत्येवं क्रमेण उत्तरेषां च्छन्दसां लक्षणानि उक्तानि भवन्तीति ज्ञेयम्। तथा च मन्त्रस्य वर्णानां सङ्ख्यां कृत्वा तत्तल्लक्षणेन तत्तच्छन्दो ज्ञेयमिति । इदं तु सामान्यतः । एकाक्षरमन्त्रादौ तूक्तं गायत्र्यादिकमागमान्तराज्ज्ञेयम् ।

**तत्तद्रूपः** तत्तन्मन्त्रनामा **परः** सर्वोत्तमो हरिरेव देवता तत्तन्मन्त्रस्येत्यर्थः । तथा चास्य वराहमन्त्रत्रयस्यापि वैष्णवत्वात् ब्रह्मा ऋषिः । वराहरूपी हरिर्देवता । आद्यस्य त्रयस्त्रिंशदर्णस्य अनुष्टुप्छन्दः । द्वितीयस्याष्टाक्षरस्य गायत्रीच्छन्दः । तृतीयस्य चतुर्दशाक्षरस्य शक्वरीच्छन्दः । गायत्रीच्छन्द इत्यप्याहुः ।। ६ ।।

**गु.दी.–** ऋष्यादिज्ञानस्यात्यावश्यकत्वादृष्यादिकं लाघवेन वक्ष्यमाणसर्व-वैष्णवमन्त्राणामप्याह— **वैष्णवानामिति ।।** वैष्णवानां मन्त्राणामिति सम्बन्धः । विष्णुदेवताकानां सर्वमन्त्राणां ब्रह्मा ऋषिः । यत्र विशिष्य ऋषिः नोच्यते तत्र ब्रह्मा ऋषिरिति वक्तव्यम् । तस्य सर्वमन्त्रद्रष्टृत्वादिति भावः । **वर्णभेदत इति ।।** वर्णसङ्ख्यातः छन्दो ज्ञेयमित्यर्थः । **तत्तद्रूपः**

तत्तन्मन्त्रप्रतिपाद्यरूपः **परः** उत्तमो हरिरेका एव **देवता** प्रतिपाद्यदेवता । तथा हि छन्दांसि कथितानि ग्रन्थान्तरे—

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठान्यासु पूर्विका ।
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ।।

त्रिष्टुप्च जगती चैव तथाऽतिजगती मता ।
शक्करी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ।।

धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः सङ्कृतिश्चापि प्रोक्ताऽतिकृतिरुत्कृतिः ।।

इत्युक्ता छन्दसां सञ्ज्ञा.......' इत्याद्युक्त्वा

आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्धितैः ।
पृथक् छन्दो भवेत्पादैः यावत् षड्विंशतिं गतम् ।। इति ।।६।।

**मञ्जाली**— इदानीं ऋष्यादिज्ञानस्यावश्यकत्वात् भूवराहादिसर्ववैष्णवमन्त्राणामपि ऋषिछन्दोदेवताः लाघवादेकोक्त्यैवाह– **वैष्णवानामिति।।** विष्णुदेवतानां मन्त्राणां ब्रह्मा **मुनिः** ऋषिः । उपलक्षणमेतत्। अन्यदेवतामन्त्राणामपीति ज्ञेयम् । यत्र विशिष्य ऋषिर्नोच्यते तत्र ब्रह्मा ऋषिर्ज्ञेयः। 'मुनिर्ब्रह्माऽखिलस्य च' इति ऋग्भाष्योक्तेः। तस्य सर्वमन्त्रद्रष्टृत्वादिति भावः । **वर्णभेदतः** वर्णसङ्ख्याभेदतः छन्दो ज्ञेयम् ।

अयं भवः । गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती इति सप्त छन्दांसि । तथा अतिजगती शक्करी अतिशक्करी अष्टी अत्यष्टी धृतिः अतिधृतिरिति सप्त अतिछन्दांसि। एवं चतुर्दश छन्दांसि अनुक्रमणिकायामुक्तानि । तेषां लक्षणानि च तत्रैवोक्तानि 'चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि' इति । अस्यार्थः । चतुर्विंशत्यक्षरा गायत्री सैवादिर्येषां छन्दसां तानि तथोक्तानि । तानि छन्दांसि चतुरुत्तराणि पूर्वस्मात्पूर्वस्माछन्दसः उत्तरोत्तरछन्दांसि एकैकशः चतुश्चतुर्वर्णैरधिकानि पूर्वपूर्वछन्दोपेक्षया उत्तरोउत्तरेषां छन्दसां

चश्चतुरक्षराधिक्यमिति । तथा च गायत्र्याः चतुर्विंशत्यक्षरत्वम् । उष्णिहः अष्टाविंशाक्षरत्वम् । अनुष्टभो द्वात्रिंशदक्षरत्वम् । बृहत्याः षट्त्रिंशदक्षरत्वम् । पङ्क्तेश्चत्वारिंशदक्षरत्वम् । त्रिष्टुभः चतुश्चत्वारिंशदक्षरत्वम् । जगत्या अष्टचत्वारिंशदक्षरत्वं इत्येवं क्रमेणोत्तरोत्तरेषां छन्दसां लक्षणान्युक्तानि भवन्तीति ज्ञेयम् । तथा च मन्त्रस्य वर्णानां सङ्ख्यां कृत्वा तत्तल्लक्षणेन तत्तच्छन्दो ज्ञेयमिति । इदं तु सामान्यतः । एकाक्षरमन्वादौ तु उक्तं गायत्र्यादिकमागमान्तराज्ज्ञेयम् ।

**तत्तद्रूपः** तत्तन्मन्त्रनां **अपरः** सर्वोत्तमः हरिरेव देवता तत्तन्मन्त्रस्येत्यर्थः । तथा चास्य वराहमन्त्रत्रयस्यापि वैष्णवत्वात् ब्रह्मा ऋषिः । वराहरूपी हरिर्देवता । आद्यस्य त्रयस्त्रिंशद्वर्णस्य अनुष्टुप् छन्दः । द्वितीयस्याष्टाक्षरस्य गायत्री छन्दः । तृतीयस्य चतुर्दशाक्षरस्य शक्करीछन्दः । गायत्रीछन्द इत्यप्याहुः । अत्राक्षरन्यूनाधिकत्वं न दोषः । 'न वा एकेनाक्षरेण छन्दांसि वियन्ति' इति श्रुतेः ॥६॥

वैष्णवमन्त्राणां साधारणेन षडङ्गन्यासाभिधानम्

**तं.सा. प्रणवेन स्वनाम्ना च भूधरेण परात्मना ।**
**सर्वज्ञसर्वशक्तिभ्यां षडङ्गानि विदो विदुः ॥ ७ ॥**

**त.क.–** बीजं शक्तिस्तथैवाङ्गं हृदयादि च षड्विधम् ।
ऋषिश्छन्दो देवता च वर्णोद्दीपनमेव च ॥

आप्यायनं मोचनं च संकलीकरणं तथा ।
विकलीकरणं चैव द्वादशैतानि पद्मज ॥

तेषां स्वरूपं वक्ष्यामि क्रमात्तदवधार्यताम् ।
मन्त्रस्य प्रकृतिर्बीजमक्षरं तत्समुद्धृतम् ॥

आत्मा मन्त्रस्य सा शक्तिः यथा मन्त्रः फलप्रदः ।
हृदयादीनि मन्त्रस्य षडङ्गानि पितामह ॥

देवस्येव मुखादीनि एषु मन्त्रः प्रतिष्ठितः ।
ऋषिः फलस्य द्रष्टा स्याच्छन्दस्तदभिधीयते ॥

अक्षराणामियत्ताया देवता वाच्यमुच्यते ।
रूपभेदश्च शुक्लादिवर्णाः कमलसम्भव ॥

सम्पुटीकरणं रेफलकाराभ्यां तु दीपनम् ।
यथोदिताक्षरैस्सर्वैस्संस्कारश्शोषणादिभिः ॥

मन्त्रस्य देववत् प्रोक्तं यत्तदाप्यायनं बुधैः ।
मन्त्रस्य मोचनं नाम प्रयोगः स्तम्भनादिषु ॥

मन्त्राक्षराणां प्रत्येकं सम्पुटीकरणं स्मृतम् ।
सङ्कलीकरणं विद्धि प्रणवेन चतुर्मुख ॥

वौषट्कारवषट्कारहुंकारैः पृथगीरितैः ।
देवतानामभीष्टानां सन्निधिर्यः पदादिषु ॥

प्रोच्यते स चतुर्वक्त्र विकलीकरणाह्वयः ।
एतान्येव प्रयुञ्जीत.................. ॥

इत्यादिना अङ्गन्यासकर्तव्यताश्रवणात् उद्धृतानां त्रयाणां मन्त्राणां तमाह— **प्रणवेनेति** ॥ प्रणवः ॐकारः । स्वनाम वराहशब्दः । भूधरशब्दः, परमात्मशब्दः, सर्वज्ञशब्दः, सर्वशक्तिशब्द इत्येतैः शब्दैर्न्यासे कर्तव्ये हृदय-शिरः-शिखा-कवच-नेत्र-अस्त्राख्यानि षड्विधान्यङ्गानि न्यासस्थानानि ज्ञातव्यानीत्यर्थः । यथोक्तम्–

हृदयं शिरोऽपि तु शिखाकवचास्त्राणि तानि च ।
सोद्देशो नियमः स्वाहा वौषट्हुंफट्पराणि च ॥

षडङ्गानां तु नेत्राभ्यां वषडित्यस्त्रतः पुरा ।
न्यासस्थानानि विज्ञेयान्यङ्गानि हृदयादितः ॥

इति मन्त्राङ्गानां प्रणवादीनां षण्णां हृदयादिशब्दानां चतुर्थ्यन्तत्वम् । नमःस्वाहा-वौषट्हुंफट्पराणि चेत्यादिना क्रमेण नमःशब्दादियोगविधाने 'नमःस्वस्तिस्वाहा-स्वधाऽलंवषड्योगाच्च'(पा.सू.२-३-१६) इति चतुर्थीविधानात् । तथाचायं क्रमः । ॐ इति प्रथमतः अङ्गमन्त्रः । ततो हृदयाख्याङ्गवाचकः हृदयशब्दश्चतुर्थ्यन्तः । ततो

नमःशब्दः। एवं पदत्रयात्मक एको मन्त्रः। तथा वराहशब्दः चतुर्थ्यन्त आदौ प्रयोक्तव्यः। ततो मूर्धवाचकश्चतुर्थ्यन्तः। ततः स्वाहाशब्दः। एवं पदत्रयात्मको द्वितीयो मन्त्रः। 'अङ्गन्यासेऽङ्गमन्त्रेभ्यः परमङ्गानि निर्दिशेत्'(यो.दी.२-६६) इति वचनात्। एवं मन्त्रान्तराण्यपि द्रष्टव्यानि। तथाच 'ॐ हृदयाय नमः। वराहाय शिरसे स्वाहा। भूधराय शिखायै वौषट्। परमात्मने कवचाय हुम्। सर्वज्ञाय नेत्राभ्यां वषट्। सर्वशक्तये अस्त्राय फट्' इति षडङ्गन्यासो द्रष्टव्यः ।। ७ ।।

**अ.सं.—** एवं वैष्णवमन्त्राणां साधारणऋष्यादिकमुक्त्वा तेषामेव साधारणषडङ्गन्यासमन्त्रानप्याह– **प्रणवेनेति ।। प्रणवेन** ॐकारेण **स्वनाम्ना** तत्तद्देवतानाम्ना **भूधरपदेन** परमात्मपदेन **सर्वज्ञपदेन** सर्वशक्तिपदेन इत्येतैः षड्भिः मन्त्रैः सर्वेषां वैष्णवमन्त्राणां षडङ्गानि न्यसनीयानि विदुः। इमानि पदानि चतुर्थ्यन्तानि ज्ञेयानि। 'कृद्धमहावीरद्युसहस्रसहितोल्ककाः। चतुर्थ्यन्ता हृदादीनि' (१.३२) इत्यत्र सर्वेषां मन्त्राणां देवतावाचकपदैरङ्गन्यासे चतुर्थ्यन्तत्वस्य नियमितत्वात्। हृदयशिरआद्यङ्गानामपि चतुर्थ्यन्तत्वं ज्ञेयम्। अङ्गानि तेषां चतुर्थ्यन्तता चोक्ता योगदीपिकायाम्-

अङ्गन्यासेऽङ्गमन्त्रेभ्यः परमङ्गानि निर्दिशेत् ।
हृदयं शिरोऽपि तु शिखा कवचास्त्राणि तानि च ।।

सोद्देशानि नमः स्वाहावौषट्हुंफट्पराणि च ।
षडङ्गानां तु नेत्राभ्यां वषडित्यस्त्रतः पुरा ।।
न्यासस्थानानि विज्ञेयान्यङ्गानां हृदयादितः ।। इति । *(२.६६-६९)*

अङ्गमन्त्रेभ्यः परम् अङ्गमन्त्रोच्चारणानन्तरम् अङ्गानि हृदयादीनि सोद्देशानि चतुर्थ्यन्तानि नमःस्वाहादिपराणि निर्दिशेत् वदेदित्यर्थः। अङ्गन्यासे आदौ अङ्गमन्त्राः चतुर्थ्यन्ताः प्रयोज्याः। ततः हृदयादिशब्दाः चतुर्थ्यन्ताः क्रमेण प्रयोज्याः। ततः नमःस्वाहावौषडित्यादिशब्दाः क्रमेण प्रयोज्याः । तथा च ॐ हृदयाय नमः । वराहाय शिरसे स्वाहा । भूधराय शिखायै वौषट् । परात्मने कवचाय दुम् । सर्वज्ञाय नेत्राभ्यां वषट् । सर्वशक्तये अस्त्राय फट् इति वराहमन्त्रे

षडङ्गन्यासप्रकारो ज्ञेयः । एवं सर्वमन्त्रेषु वराहपदस्थाने तद्देवतापदप्रक्षेपेण एभिरेव प्रणवादिभिः पदैः षडङ्गन्यासो ज्ञेयः ।। ७ ।।

**गु.दी.—** 'न्यासहीने हरेदायुः' इत्युक्तत्वेन वराहमन्त्रत्रयस्य षडङ्गन्यासमन्त्रानाह– **प्रणवेनेति ।।** ॐकारेण **स्वनाम्ना** वराहनाम्ना भूधरपदेन परात्मपदेन सर्वज्ञसर्वशक्तिपदाभ्यां षडङ्गानि ज्ञानिनो विदुः ।। ७ ।।

**मञ्जाली—** एवं वैष्णवमन्त्राणां साधारणऋष्यादिकमुक्त्वा तेषामेव साधारणषडङ्गन्यासमन्त्रानाह– **प्रणवेनेति ।। प्रणवेनोङ्कारेण स्वनाम्ना** तत्तद्देवतानाम्ना भूधरपदेन परमात्मपदेन सर्वज्ञपदेन सर्वशक्तिपदेन इत्येतैः षड्भिर्मन्त्रैः सर्वेषां वैष्णवमन्त्राणां षडङ्गानि न्यसनीयानि ज्ञानिनो विदुः। इमानि पदानि चतुर्थ्यतानि ज्ञेयानि ।

क्रुद्धमहावीरद्युसहस्रसहितोल्ककाः ।
चतुर्थ्यन्ता हृदादि.........।। (तं.सा.१-३२)

इत्यत्र सर्वेषां मन्त्राणां देवतावाचकपदैरङ्गन्यासे चतुर्थ्यंतत्वस्य नियमितत्वात् । हृदयशिरआद्यङ्गानामपि चतुर्थ्यंतत्वं ज्ञेयम् ।

अङ्गन्यासेऽङ्गमन्त्रेभ्यः परमङ्गानि निर्दिशेत् ।
हृदयं शिरोऽपि तु शिखा कवचास्त्राणि तानि च ।।

सोद्देशानि नमः स्वाहा वौषट् हुं फट्पराणि च ।
षडङ्गानां तु नेत्राभ्यां वषडित्यस्त्रतः पुरा ।
न्यासस्थानानि विज्ञेयान्यङ्गानां हृदयादितः ।। (यो.दी.२-६६,६९)

इति योगदीपिकोक्तेः। अङ्गमन्त्रेभ्यः परं अङ्गमन्त्रोच्चारणानन्तरं अङ्गानि हृदयादीनि सोद्देशानि चतुर्थ्यन्तानि नमस्स्वाहादिपराणि निर्दिशेत् वदेदिति तदर्थः। अङ्गन्यासे आदौ अङ्गमन्त्राश्चतुर्थ्यन्ताः प्रयोज्याः । ततो हृदयादिशब्दाश्चतुर्थ्यन्ताः क्रमेण प्रयोज्याः । ततो नमस्वाहावौषडित्यादिशब्दाः क्रमेण प्रयोज्या इति भावः । तथा च 'ॐ हृदयाय नमः । वाराहाय शिरसे स्वाहा । भूधराय शिखायै वौषट् । परमात्मने कवचाय हुम् । सर्वज्ञाय नेत्राभ्यां वषट् । सर्वशक्तये अस्त्राय

फट्' इति वराहमन्त्रे षडङ्गन्यासो ज्ञेयः। एवं सर्वमन्त्रेषु वराहपदस्थाने तत्तद्देवतापदप्रक्षेपेण एभिरेव प्रणवादिमन्त्रैः षडङ्गन्यासो ज्ञेयः ॥ ७ ॥

सर्ववैष्णवमन्त्रणां अङ्गन्यासे पक्षान्तराभिधानम्

**तं.सा. ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव वा (च) ।**
**पूर्णात्ममध्यगैः सर्ववैष्णवाङ्गान्यथो विदुः ॥ ८ ॥**

**त.क.**— सर्वमन्त्रसाधारण्येन पक्षान्तरमाह— **ज्ञानेति** ॥ **पूर्णात्ममध्यगैः** पूर्णात्मशब्दयोः मध्ये उच्चारितैर्ज्ञानादिशक्त्यन्तैः षड्भिः शब्दैः **सर्ववैष्णवाङ्गानि** सर्ववैष्णवमन्त्राणामङ्गन्यासानीति शेषः। उपलक्षणमेतत्, हृदयादिभिः नमःस्वाहान्तादिशब्दितैः षड्भिः शब्दैः ज्ञानादिशब्दानामुपर्युच्चारितैरपि ग्राह्यम्। 'एवं च पूर्णज्ञानात्मने हृदयाय नमः'। 'पूर्णैश्वर्यात्मने शिरसे स्वाहा' इत्यादिक्रमेण षण्णां मन्त्राणां निष्पत्तिप्रकारो बोध्यः। एतेषां वर्णन्यासं त्वग्रे स्वयमेव वक्ष्यति ॥ ८ ॥

**अ.सं.**— एतेषामेव मन्त्राणां विकल्पेन षडङ्गन्यासमन्त्रान्तराण्याह– **ज्ञानेति** ॥ **वा** अथवा। **पूर्णात्ममध्यगैः** पूर्णशब्दात्मशब्दयोर्मध्यगतैः ज्ञानादिशब्दैः **सर्ववैष्णवाङ्गानि** सर्वेषां वैष्णवमन्त्राणां **अङ्गानि** षडङ्गानि न्यसनीयानि विदुः ज्ञानिन इत्यर्थः। यत्र मन्त्रे विशिष्याङ्गन्यासमन्त्रानुक्तिः तत्र एते प्रणवादयो वा पूर्णज्ञानादयो वा शब्दाः षडङ्गन्यासमन्त्राः ज्ञेया इति भावः। अत्रापि पूर्णज्ञानात्मादयः अङ्गमन्त्राः पूर्ववत् चतुर्थ्यन्ता ज्ञेयाः। एवञ्च पूर्णज्ञानात्मने पूर्णैश्वर्यात्मने इत्यादि षडङ्गन्यासमन्त्रोद्धारः। चतुर्थ्यन्तपूर्णज्ञानात्मशब्दाद्यङ्गमन्त्रानन्तरं क्रमेण नमःशब्दादिपराणि हृदयादीति चतुर्थ्यन्तानि पदानि प्रयोज्यानि। तथाचेत्थं न्यासप्रकारः। 'पूर्णज्ञानात्मने हृदयाय नमः। पूर्णैश्वर्यात्मने शिरसे स्वाहा। पूर्णप्रभात्मने शिखायै वौषट्। पूर्णानन्दात्मने कवचाय हुम्। पूर्णतेजआत्मने नेत्राभ्यां वषट्। पूर्णशक्त्यात्मने अस्त्राय फट्' इति।

यद्वा, एवं सर्वमन्त्रसाधारणऋष्यादिकथनेन वराहमन्त्रस्यापि ऋष्यादिकं कथितम्। इदानीं वराहमन्त्रस्यैव षडङ्गन्यासमन्त्रानाह– **प्रणवेनेति ॥** अत्र स्वनाम्ना वराहशब्देनेत्यर्थः। षडङ्गानि वराहमन्त्रस्येति शेषः। अन्यस्य पूर्ववदेवार्थः। अस्यैव मन्त्रस्य विकल्पेन षडङ्गन्यासेऽन्यानपि मन्त्रान् वदन् एत एव मन्त्राः सर्ववैष्णवमन्त्राणामपि षडङ्गन्यासे ज्ञेया इत्याह– **ज्ञानेति ॥** पूर्णात्ममध्यगैर्ज्ञानैश्वर्यादिभिर्वा वराहमन्त्रस्य षडङ्गानि विदुरित्यन्वयः। **अथो**शब्दः अपिशब्दार्थः। तथाच न केवलं ज्ञानादिमन्त्रैर्वराहस्यैवाङ्गानि न्यासनीयानि। किं तु **सर्ववैष्णवाङ्गान्यपि** सर्वेषां वैष्णवमन्त्राणामङ्गान्यपीति विदुरित्यर्थः। यदुक्तं आगमान्तरे–

अनुक्ताङ्गेषु मन्त्रेषु पदशो वर्णशोऽपि वा।
तेनैवाङ्गानि कल्प्यानि मन्त्रेण सकलेन वा ॥ इति।

तत्तु न्यासे विकल्पेन प्रकारान्तरपरं वा अन्यदेवतामन्त्रपरं वेति ज्ञेयम् ॥

॥ ८ ॥

**गु.दी.–** सर्ववैष्णवमन्त्रसाधारणाङ्गन्यासमन्त्रानाह– **ज्ञानेति ॥** अत्र वेति प्रसिद्ध्यर्थः। 'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तम्' (ष.प्र.५-१) इति षट्प्रश्नोपनिषत्प्रयोगात्। पूर्णात्मशब्दयोर्मध्यं गच्छन्तीति पूर्णात्ममध्यगाः। तैर्ज्ञानादिशब्दैः सर्ववैष्णवमन्त्राणां षडङ्गानि न्यसनीयानीति विदुर्ज्ञानिन इत्यर्थः। स्फुटमुक्ताङ्गकेषु नृसिंहमन्त्रादिषु एतेषामयोगादनुक्ताङ्गेष्वेव एतान्यङ्गानीति ध्येयम् ॥ ८ ॥

**मङ्गाली–** एतेषामेव मन्त्राणां विकल्पेन षडङ्गन्यासमन्त्रान्तराण्याह– **ज्ञानेति ॥ वा** अथवा **पूर्णात्ममध्यगैः** पूर्णशब्दात्मशब्दयोर्मध्यगतैः ज्ञानादिशब्दैः **सर्ववैष्णवाङ्गानि** सर्वेषां वैष्णवमन्त्राणां **अङ्गानि** षडङ्गानि न्यसनीयानि विदुर्ज्ञानिन इत्यर्थः। यत्र मन्त्रे विशिष्याङ्गन्यासमन्त्रानुक्तिः तत्रैते प्रणवादयो वा पूर्णज्ञानादयो वा शब्दाः षडङ्गन्यासमन्त्रा ज्ञेया इति भावः। अत्र पूर्णज्ञानात्मादयः अङ्गमन्त्राः पूर्ववत् चतुर्थ्यन्ता ज्ञेयाः। एवं च 'पूर्णज्ञानात्मने

पूर्णैश्वर्यात्मने' इत्यादि षडङ्गन्यासमन्त्रोद्धारः । चतुर्थ्यन्तपूर्णज्ञानात्मशब्दाद्यङ्गमन्त्रानन्तरं क्रमेण नमःशब्दादि पराणि हृदयादीनि चतुर्थ्यन्तानि पदानि प्रयोज्यानि ।

तथा चेत्थं न्यासप्रकारः । पूर्णज्ञानात्मने हृदयाय नमः । पूर्णैश्वर्यात्मने शिरसे स्वाहा । पूर्णप्रभात्मने शिखायै वौषट् । पूर्णानन्दात्मने कवचाय हुम् । पूर्णतेजात्मने नेत्राभ्यां वषट् । पूर्णशक्त्यात्मने अस्त्राय फट् इति ।

यद्वा एवं सर्वमन्त्रसाधारणऋष्यादिकथनेन वराहमन्त्रस्यापि ऋष्यादिकं कथितम् । इदानीं वराहमन्त्रस्यैव षडङ्गन्यासमन्त्रानाह– **प्रणवेनेति ।।** अत्र **स्वनाम्ना** वराहशब्देनेत्यर्थः । षडङ्गानि वराहमन्त्रस्येति शेषः । अन्यस्य पूर्ववदेवार्थः । अस्यैव मन्त्रस्य विकल्पेन षडङ्गन्यासेऽन्यानपि मन्त्रान् वदन् एत एव मन्त्राः सर्ववैष्णवमन्त्राणामपि षडङ्गन्यासे ज्ञेया इत्याह– **ज्ञानेति ।।** पूर्णात्ममध्यगैः ज्ञानैश्वर्यादिभिर्वा वराहमन्त्रस्य षडङ्गानि विदुरित्यन्वयः । **अथो**शब्दः अपिशब्दार्थः । तथा च न केवलं ज्ञानादिमन्त्रैर्वराहमन्त्रस्यैवाङ्गानि न्यसनीयानि किन्तु **सर्ववैष्णवाङ्गान्यपि** सर्वेषां वैष्णवमन्त्राणां अङ्गान्यपि इति विदुरित्यर्थः । यत्तु आगमान्तरे–

अनुक्ताङ्गेषु मन्त्रेषु पदशो वर्णशोऽपि वा ।
तेनैवाङ्गानि कल्प्यानि मन्त्रेण सकलेन वा ।।

इत्युक्तं तत्तु न्यासे विकल्पेन प्रकारान्तरं वा अन्यदेवतामन्त्रपरं वेति ज्ञेयम् ।। ८ ।।

### अष्टाक्षरः श्रीकरमन्त्रः

**तं.सा. तिष्ठोदादिः स्वजायायाः कारणं स्वाहया युतः ।**
**श्रीकरोऽष्टाक्षरो मन्त्रो गरुडारूढसंस्मृतिः ।। ९ ।।**

**त.क.–** श्रीकरं मन्त्रपरमं वक्ष्ये सर्वार्थसाधनम् ।
अष्टाक्षरं चतुर्वक्त्रं रहस्यं परमं शृणु ।।

आदौ समुद्धरेत्तारमुदयं तदनन्तरम् ।
द्विरेकनेत्रमायान्तं क्रोधनं कौस्तुभाक्षरम् ।।

विष्णुशीर्षं ततो लक्ष्मीमनलं तदनन्तरम् ।
महामायायुतं पद्ममप्रमेयमनन्तरम् ।
अग्निमादिं चतुर्वक्त्र ठठेति श्रीकराह्वयम् ।।

इति पञ्चरात्रवचनं स्पष्टयन् श्रीकराष्टाक्षरमन्त्रमुद्धरति— **तिष्ठेति ।।** उच्छब्द आदिर्यस्य स तथा । तिष्ठेत्यनेन तिङन्तशब्द उच्यते । उदादिस्तिष्ठेति शब्दः प्राक् प्रयोक्तव्य इति शेषः । स्वो हरिः । 'परः स्वो हरिरुद्दामः' इति वचनात् । तस्य जाया भार्या श्रीः । तस्याः कारणमित्यनेन तत्कर्तृवाचकशब्दो विवक्षितः । श्रीकर इति शब्द इति यावत् । उत्तिष्ठशब्दानन्तरं स्वाहाशब्देन **युतः** प्रयोक्तव्यः । तदनन्तरं स्वाहाशब्दो वक्तव्य इति यावत् । कारणशब्दविवक्षितश्रीकरशब्दापेक्षया पुल्लिङ्गप्रयोगः । श्रीकरेति मन्त्रसंज्ञाकरणेन सफलत्वं सूचयति । तथाच **'उत्तिष्ठ श्रीकर स्वाहा'** इत्येको मन्त्रः । एतेन, 'आदौ समुद्धरेत्तारम्' इति मन्त्रबहिर्भूतः, 'स्रवत्यनोंकृतं ब्रह्म' इति वचनानुसारात् सर्वसाधारणः प्रणव उक्तो वेदितव्यः । अतो नाष्टाक्षरत्वविरोधः ।

'उदयं तदनन्तरम्' इत्युकारमुद्धरेत् । तत एकनेत्रशब्दितं तकारं द्विरुद्धरेत् द्विवारमुद्धरेत् । तं च मायान्तम्। इकारो मायेत्युच्यते । वर्णत्रयसमुदायोऽयमेको द्वितीयो वर्णः । ततः क्रोधनसंज्ञितं षकारम् । कौस्तुभसंज्ञितमक्षरं ठकारम् । तं च विष्णुशीर्षं विष्णुशब्दिताकारशिरस्कमित्यनेन षकारठकाराकारसमुदायस्तृतीयो वर्णः । ततो लक्ष्मीशब्दितं शकारम् । ततोऽनलशब्दितं रेफम् । तं च महामायाशब्दितेन ईकारेण युतमित्यनेन शकारो रेफ ईकारश्च इत्येतत्त्रयमेकश्चतुर्थो वर्णः । ततः पद्मशब्दितं ककारम् । ततः अप्रमेयशब्दितमकारमित्यनेन ककारो अकारश्चेत्यतद् द्वयमेकः पञ्चमो वर्णः । ततः अग्निशब्दितं रेफम् । ततः वर्णानामादिममकारमित्यनेन रेफोऽकारश्चेत्येतद्द्वयमेकः षष्ठो वर्णः । ततः 'स्वाहाकारो हुतान्तश्च ठठेति परिकीर्तितौ' इति वचनात् ठठशब्दितस्वाहा-

शब्दमुद्धरेत् इति वचनं व्याख्यातं वेदितव्यम्। अत्र यद्यपि 'बीजमस्य प्रवक्ष्यामि' इत्युपक्रम्य, 'दीप्तिमाननलः पञ्चबिन्दुरर्धेन्दुनिष्ठिता।' दीप्तिमान् हकारः। अनलः रेफः। पञ्चबिन्दुरीकारः। अर्धेन्दुरनुस्वार इति हकाररेफेकारानुस्वारसमाहाररूपं 'ह्रीम्' इति बीजमुद्धृतं पञ्चरात्रे। तथापि तन्नातीवावश्यकमिति ज्ञापयन् न सञ्जग्राह। 'यावतो ह्यननुष्ठाने'(तं.सा.३-१६०) इति ह्युक्तम्। एवमग्रेऽपि। वराहमन्त्रादौ क्वचित्तदुक्तिस्तत्कार्यविशेषार्थश्चेति ज्ञातव्यम्। यद्वक्ष्यति 'वाराहैः स्तम्भनम्'(४-१२४) इत्यादि।

गरुडस्य चतुर्बाहोः सर्वालङ्कारधारिणः।
स्कन्धदेशे सुखासीनमष्टबाहुं किरीटिनम्॥

कुन्देन्दुधवलं सौम्यं सर्वाकल्पपरिष्कृतम्।
दिव्यगन्धविलिप्ताङ्गं दिव्यमालाविभूषितम्॥

पीताम्वरधरं नीलकुन्तलैरुपशोभितम्।
चक्रं च मुसलं बाणमंकुशं दधदम्बुजैः॥

चतुर्भिर्दक्षिणैरन्यैः शङ्खं कौमोदकीं तथा।
शार्ङ्गं चापं च कल्याणैः प्रसन्नेन्दुनिभाननम्॥

गरुडोऽपि च हस्ताभ्यामुभाभ्यां पादपङ्कजे।
देवस्य धारयन् कुम्भं पूर्णं पीयूषवारिणा॥

इतराभ्यां च बाहुभ्यां स्पृशन्नास्ते स्थितं तथा।
श्रियं च वामोरुतले कुर्वाणं क्षौमवाससी॥

दिव्यगन्धविलिप्ताङ्गं सर्वाकल्पपरिष्कृतम्।
सुभ्रूललाटमुकुटं कर्णविश्रान्तलोचनम्॥

लावण्यामृततोयेन पद्मिनीमिव सर्वतः।
पाशांकुशधरां लक्ष्मीं कन्दर्पशरपीडिताम्।
ध्यात्वैवं पूजयित्वा तु ध्यात्वा पार्श्वे निधिद्वयम्॥

इत्युक्तं ध्यानप्रकारं संगृह्णाति— **गरुडारूढसंस्मृतिरिति ।।** अस्य मन्त्रस्य जपकाले उक्तरीत्या गरुडारूढस्य लक्ष्मीसमेतस्य हरेः संस्मरणं कर्तव्यमित्यर्थः ।। ९ ।।

**अ.सं.—** श्रीकराष्टाक्षरमन्त्रमाह— **तिष्ठेति ।। उदादिः** उत् उच्छब्दः आदौ यस्य सः उदादिः **तिष्ठ** तिष्ठेति शब्दः । ततः **स्वजायायाः कारणं** स्वो हरिः तस्य जाया भार्या श्रीः तस्याः कारणं तदर्थकः श्रीकर इति शब्दः । ततः **स्वाहया** स्वाहाशब्देन युतः । च्छन्दोज्ञानार्थमक्षरसङ्ख्यामाह— **अष्टाक्षर इति ।।** एवमुत्तरत्राप्यक्षरसंङ्ख्याकथनस्येदमेव प्रयोजनमिति ज्ञेयम् । एतच्छीलमाह— **श्रीकर इति ।।** सम्पत्कर इत्यर्थः । तथा च **'उत्तिष्ठ श्रीकर स्वाहा'** इति मन्त्रोद्धारो ज्ञेयः । तद्ध्यानमाह— **गरुडेति ।।** गरुडारूढस्य देवस्य **संस्मृतिः** ध्यानं कर्तव्येति शेषः । श्रीकरमन्त्रस्य ध्यानविशेष उक्तस्तन्त्रे—

आदित्यचन्द्रावपि चक्रशङ्खौ शङ्खप्रसूनाख्यनिधी दधानः ।
चिन्त्यः कराभ्यां वसुतर्पयन्नः स्वाङ्कस्थलक्ष्मीर्गरुडाससंस्थः ।। इति ।।९।।

**गु.दी.—** उदिति शब्द एवादौ यस्य स **उदादिः, तिष्ठ** तिष्ठशब्दः । **स्वजायायाः कारणं** स्वं हरिस्तस्य जाया श्रीस्तस्याः कारणं श्रीकारणमित्यर्थकश्रीकर इति शब्द इति यावत् । **स्वाहया** स्वाहाशब्देन युतः श्रीकरो मन्त्र इत्यर्थः । तथा च **'उत्तिष्ठ श्रीकर स्वाहा'** इति मन्त्रनिष्पत्तिः । एतन्मन्त्रजपेन किं फलं भवतीत्यत आह— **श्रीकर इति ।।** सोऽयं मन्त्रः सम्पत्कर इत्यर्थः । ध्यानमाह— **गरुडेति ।।** गरुडारूढस्य हरेः संस्मृतिः कर्तव्येति शेषः ।। ९ ।।

**मङ्गाली—** श्रीकराष्टाक्षरमन्त्रमाह— **तिष्ठेति ।। उदादिः** उच्छब्दः आदौ यस्य स उदादिः । **तिष्ठ** तिष्ठेति शब्दः । ततः **स्वजायायाः कारणं** स्वो हरिस्तस्य जाया भार्या श्रीस्तस्याः कारणम् । तदर्थकः श्रीकर इति शब्दः । ततः **स्वाहया** स्वाहाशब्देन युतः । छन्दोज्ञानार्थमक्षरसङ्ख्यामाह— **अष्टाक्षर इति ।।** एवमुत्तरत्रापि अक्षरसङ्ख्याकथनस्येदमेव प्रयोजनमिति ज्ञेयम् । एतच्छीलमाह— **श्रीकर इति ।।**

संपत्कर इत्यर्थः। तथा च **'उत्तिष्ठ श्रीकर स्वाहा'** इति मन्त्रोद्धारो ज्ञेयः। तद्ध्यानमाह– **गरुडेति**॥ गरुडारूढस्य देवस्य **संस्मृतिः** ध्यानं कर्तव्येति शेषः। श्रीकरमन्त्रस्य ध्यानविशेष उक्तस्तन्त्रे–

आदित्यचन्द्रावपि चक्रशङ्खौ शङ्खप्रसूनाख्यनिधी दधानः।
चिन्त्यः कराभ्यां वसुतर्पयन्नः स्वांकस्थलक्ष्मीगरुडांससंस्थः॥ इति
॥९॥

श्रीकरमन्त्रस्य पञ्चाङ्गन्यासाभिधानम्

**तं.सा. द्विर्भीषय त्रासय च प्रमर्दय तथैव च।**
**प्रध्वंसयाथो रक्षेति पञ्चाङ्गश्चेदुदाहृतः ॥ १० ॥**

**त.क.—** अङ्गन्यासमाह— **द्विर्भीषयेति**॥ अत्रान्ते श्रूयमाण इतिशब्दो भीषयेत्यादौ सर्वमन्त्रे संबध्यते। एवं द्विरित्यपि। भीषयेति पदं द्विरुच्चार्यमित्यादिर्योजना। अत्रापि पूर्ववदेव चतुर्थीसहिताः हृदयादिशब्दाः नमःशब्दाद्यन्ताः पञ्चमन्त्रा द्रष्टव्याः। 'ननु अङ्गानि षट् चापि कृद्धोल्कादीनि पूर्ववत्' इति कृद्धोल्कादिमन्त्रैः षडङ्गन्यास उक्तः। तथा—

अङ्गानि विन्यसेन्मन्त्रवर्णैर्मन्त्रैर्यथाविधि।
'पञ्चाङ्गनेत्रजठरपृष्ठेषु क्रमतो न्यसेत्॥

इत्यष्टाङ्गन्यासोऽपि क्वचिदुच्यते। तत् कथं पञ्चाङ्गन्यासः भीषयेत्यादिमन्त्रैश्चोच्यत इत्यत आह– **चेदुदाहृत इति**॥ सत्यम्। अस्य मन्त्रस्य बहुविधोऽपि, न्यासोऽस्ति। पञ्चाङ्गत्वपक्ष आश्रितश्चेदस्मदुक्तपक्षो ज्ञातव्य इत्यर्थः। अस्य संक्षेपशास्त्रत्वान्न विस्तरविरोधितेति ह्युक्तमिति भावः। ऋषिस्तु 'वैष्णवानां मुनिर्ब्रह्मा'(४-६) इत्युक्तमेवेति न पुनरवादीत्॥ यथोक्तं 'ऋषिरस्य प्रजापतिः' इति॥ १०॥

**अ.सं.–** श्रीकरमन्त्रस्य न्यासमाह– **द्विरिति**॥ चेत् यदि मन्त्रः पञ्चाङ्ग **उदाहृतः** अभिमतः तर्हि **द्विः** द्विवारमुच्चारितैः भीषयेत्यादिपञ्चशब्दैः पञ्चागन्यासो

ज्ञेयः । 'भीषय भीषय हृदयाय नमः । त्रासय त्रासय शिरसे स्वाहा' इत्यादिप्रकारः पञ्चाङ्गन्यासः । तदुक्तम् पञ्चरात्रे—

..................अष्टार्णः श्रीकरो मनुः ।
हृद्भीषय युगं वर्म हुमन्तं त्रासय द्वयम् ।।
शिरः शिखा च वर्मान्तं प्रमर्दय युगं मतम् ।
वर्म प्रध्वंसय युगं वर्मान्तं रक्षय द्वयम् ।।
हुमन्तमस्त्रं सम्प्रोक्तं पञ्चाङ्गानि मनोः क्रमात् ।। इति ।

चेच्छब्देन पक्षान्तरं सूच्यते । मन्त्रः षडङ्गश्चेत् 'ज्ञानैश्वर्ये'त्यादिना पूर्वमुक्तः सर्वमन्त्रसाधारणः षडङ्गन्यासो ज्ञेय इति भावः । यद्वा मन्त्रः अष्टाङ्गश्चेत्तर्हि मन्त्रवर्णैरष्टाङ्गन्यासः कार्यः । एतदप्युक्तं तत्रैव—

अङ्गानि विन्यसेन्मन्त्रवर्णैमन्त्री यथाविधि ।
पञ्चाङ्गनेत्रजठरपृष्ठेषु क्रमतो न्यसेत् ।। इति ।।

श्रीकराष्टाक्षरमन्त्रस्य अष्टाङ्गन्यासपक्षे मन्त्रवर्णैः श्रीकरमन्त्रगताष्टाक्षरैः पञ्चाङ्गेषु हृदयादिपञ्चाङ्गेषु नेत्रजठरपृष्ठेषु चेत्येवमष्टसु स्थानेष्वित्यर्थः ।। १० ।।

**गु.दी.**— न्यासमन्त्रमाह— **द्विरिति** ।। **द्विः** द्विवारमुच्चरितः भीषयेति शब्द इत्यर्थः । त्रासयेत्यादावपि द्विरिति सम्बध्यते । इति पञ्चाङ्गः । **चेत्** षडङ्गश्चेत् । ज्ञानैश्वर्येत्यादिना प्रागेवोदाहृत इत्यर्थः । अत्र षडङ्गानुष्ठानं पञ्चाङ्गानुष्ठानं वा कार्यमिति भावः ।।

उक्तमेव ध्यानं पुनरधिकविधानायाह— **आदित्येति** ।। **कराभ्यां** हस्ताभ्यां **आदित्यचन्द्रौ** सूर्यसोमौ दधानः अपराभ्यां कराभ्यां चक्रशङ्खावायुधविशेषौ । पुनः कराभ्यां **शङ्खप्रसूननिधी** शङ्खनिधिं प्रसूननिधिं च दधानः ।

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ।।

इति कोशोक्तनिधिष्वेवान्यतरस्य प्रसूनेति नामान्तरं ग्रन्थान्तरप्रसिद्धम् ।

निध्यन्तरं वेत्यदोषः । पुनरन्याभ्यां कराभ्यां **वसु** धनं **तर्पयन्** प्रीणयन् । 'तृप प्रीणने' इति धातुः (धा.पा.११९६) । ददान इति यावत् । 'वसुतर्पयन्नित्येकं पदम् । कराभ्यां वसुना प्रीणयन्नित्यर्थः' इति अपरे । ततश्चाष्टबाहुर्ध्येय इत्यर्थः । श्रियो लक्ष्म्याः सृष्ट्याद्युन्मुखत्वकरणात् श्रीकरः । ज्ञानमोक्षादिसम्पत्करत्वाद्वा श्रीकरः । उत्तिष्ठ अस्मभ्यं फलं दातुं शयनादासनाच्चोत्थानं कुरु इति मन्त्रार्थः ॥९,१०॥

**मङ्गाली—** श्रीकरमन्त्रस्य न्यासमाह– **द्विरिति ॥ चेत्** यदि, मन्त्रः पञ्चाङ्ग **उदाहृतः** अभिहितः तर्हि द्विवारमुच्चारितैः भीषयेत्यादिपञ्चशब्दैः पञ्चाङ्गन्यासो ज्ञेयः । 'भीषय भीषय हृदयाय नमः । त्रासय त्रासय शिरसे स्वाहा' इत्यादि प्रकारः पञ्चाङ्गन्यासः । चेच्छब्देन पक्षान्तरं सूच्यते । मन्त्रः षडङ्गश्चेत् ज्ञानैश्वर्यादिना पूर्वमुक्तः सर्वमन्त्रसाधारणषडङ्गन्यासो ज्ञेय इति ॥ १० ॥

द्वात्रिंशदक्षरनृसिंहमन्त्रः

**तं.सा.** **क्रूरं वीरं बृहद्विष्णुं दीप्यन्तं विश्वतोमुखम् ।**
**पुंमृगेन्द्रं भयकरं शुभं मृत्योश्च मारकम् ॥ ११ ॥**

**नमामि स्वयमित्येव द्वात्रिंशार्णो मनुर्हरिः ।**

**त.क–** मन्त्रो नृसिंहवपुषो द्वात्रिंशार्णात्मकोऽपरः ।
वक्ष्यते सप्तवर्णानामुद्धारः सम्प्रदृश्यते ॥

छन्दसामादिरुदयो गदी वह्निरचां मुखः ।
यष्टिः कुम्भो महामाया ज्वलना वैष्णवस्तथा ॥

स्पर्शान्तं द्विरचामादि द्वादशात्मा च गोपनः ।
पर्जन्यो बन्धुरुग्रांशुः प्रचण्डश्चोदयस्तथा ॥

मन्दरो जन्महन्ता च पीयूषात्मा च वैष्णवः ।
महेन्द्रो वाङ्कुखो भद्रपाणिर्विजयसंज्ञितः ॥

अर्धचन्द्राकृतिः शुक्लः प्रणवादिर्विभावसुः ।
वरुणश्चाप्रमेयश्च वैराजो ब्रह्मसाधनः ।।

स्पर्शान्तमुदयं पश्चाद् द्वितीयं विष्णुदैवतम् ।
माधविः भद्रपाणिश्च पद्मनाभः कलात्मकः ।।

त्रिविक्रमो ध्रुवः पूषा स्वरादिर्मन्दरस्ततः ।
भल्लायुधो महामाया क्रोधरूपो च वैष्णवः ।।

वनमाली स्वरादिश्च माधविः सूक्ष्मलोचनः ।
अप्रमेयो वैधरश्च ज्वलनोऽकारसंयुतः ।।

द्विर्मन्दरः पद्मनाभः विजयश्च चतुर्गतिः ।
उदयो मन्दिरशिराः पदमेतदनन्तरम् ।
वर्णानि सुसमीकृत्य नमाम्यहमुदीरयेत् ।।

इति वचः स्पष्टयन् सङ्केतेन नृसिंहमन्त्रमुद्धरति– **क्रूरमिति ।।** क्रूरपर्यायमुग्रमिति पदं, ततो वीरमिति पदं, ततो बृहच्छब्दपर्यायं सर्वतोमुखमिति पदं, पुंमृगेन्द्रमित्यस्य पर्यायं नृसिंहमिति पदं, ततो भयङ्करमित्यस्य पर्यायं भीषणमिति पदं, ततः शुभमित्यस्य पर्यायं भद्रमिति पदं, ततो मृत्योर्मारकमित्यस्य पर्यायं मृत्योर्मृत्युमिति पदं, ततो नमामीति पदं, ततः स्वयमित्यस्य पर्यायमहमिति पदं चोदीरयेत्। एवमुदीरणे च हरेः श्रीनृसिंहस्य **द्वात्रिंशार्णो मनुः** द्वात्रिंशाक्षरात्मको मन्त्रः संपद्यत इति शेषः।

तथा च छन्दस्तमादिरोङ्कारः सोऽयमदृष्टार्थमुच्चार्यो न मन्त्रान्तर्गतः। उदय उकारः प्रथमतः प्रयोक्तव्यः। ततो गदी गकारः। ततो वह्नी रेफः। ततोऽर्चां मुख अकारः। यष्टिरनुस्वारः। तेन गदीत्यादिना 'ग्रम्' इति द्वितीयो वर्णः चतुर्वर्णात्मको निर्दिष्टः। कुम्भो वकारः। ततो महामाया ईकारः। अनेन वकार ईकारश्चेति वर्णद्वयात्मकः वीकारः तृतीयो वर्णः। ततो ज्वलनो रेफः। ततो वैष्णवोऽकारः। एभिश्चतुर्थो वर्णः। ततः स्पर्शान्तो मकारः द्विरुच्चार्यः।

अचामादिरकारः। तेन मकारद्वयमकारश्चेति वर्णत्रयात्मकः 'म्म' इति पञ्चमो वर्णः। मकारस्य मकारे परे 'मोऽनुस्वारः'(पू.सू.८-३-२३) इति अनुस्वारविधानात्। ततो द्वादशात्मा हकारः ।। ततो गोपन आकारः। तेन वर्णद्वयात्मको हकारः षष्ठो वर्णः। ततः पर्जन्यो वकारः। 'वकारो वरुणः' इत्यत्र वरुणशब्दस्य पर्जन्यादिपर्यायग्राहकत्वात्। बन्धुरिकारः। तेन वर्णद्वयात्मको विकारः सप्तमो वर्णः। ततः उग्रांशुः षकारः। 'क्रोधरूपी स्यादुग्रात्मा शत्रुसूदनः' इत्यत्र उग्रात्मशब्दस्य तत्पर्यायग्राहकत्वात्। प्रचण्डो णकारः। उदय उकारः। मन्दरो मकारः। तेन चतुर्वर्णात्मकः ष्णुमित्यष्टमो वर्णः। 'मोऽनुस्वारः' (पा.सू.८.३.२३) इत्यनुस्वारविधानात्। ततो जन्महन्ता जकारः। ततः पीयूषात्मा वकारः। ततो वैष्णवोऽकारः। तेन वर्णत्रयात्मको ज्वेति नवमो वर्णः। ततो महेन्द्रो लकारः। ततो वाङ्मुखः वाचां मुख अकारः। ततो भद्रपाणिः नकारः। तेन वर्णत्रयात्मकः 'लन्' इति दशमो वर्णः। ततः विजयसंज्ञितस्तकारः। वाङ्मुखमित्यत्राप्यनुवर्तते। ततोऽर्धचन्द्राकृतिरनुस्वारः। तेन वर्णत्रयात्मकः 'तम्' इत्येकादशो वर्णः। ततः शुक्लः सकारः। प्रणवादिरकारः। तेन वर्णद्वयात्मकः स इति द्वादशो वर्णः। ततः विभावसू रेफः। 'रेफोऽनलो महाज्वालः' इत्यत्रानलशब्दस्य तत्पर्यायग्राहकत्वात्। वरुणो वकारः। ततोऽप्रमेयोऽकारः। तेन वर्णत्रयात्मकः 'र्व' इति त्रयोदशो वर्णः। ततो वैराजस्तकारः। ब्रह्मसाधन ओकारः। तेन वर्णद्वयात्मकः 'तो' इति चतुर्दशो वर्णः। ततः स्पर्शान्तो मकारः। उदय उकारः। तेन वर्णद्वयात्मकः 'मु' इति पञ्चदशो वर्णः। ततो द्वितीयः 'ख'कारः। कादिपञ्चवर्णेषु तस्य द्वितीयाक्षरत्वात्। ततो विष्णुदैवतमकारः। ततो माधविर्मकारः। तेन वर्णत्रयात्मकः 'खम्' इति षोडशो वर्णः। ततः भद्रपाणिर्नकारः। ततः पद्मनाभः ऋकारः। तेन वर्णद्वयात्मको 'नृ' इति सप्तदशो वर्णः। ततः कलात्मकः सकारः। ततस्त्रिविक्रमः इकारः। ततो ध्रुवोऽनुस्वारः। तेन वर्णत्रयात्मकः 'सिं' इति अष्टादशो वर्णः। ततः पूषा हकारः। 'दीप्तिमान् भास्करः स्मृतः' इत्यत्र भास्करशब्दस्य तत्पर्यायग्राह-कत्वात्। स्वरादिरकारः। मन्दरो मकारः। तेन 'हम्' इति वर्णत्रयात्मकः एकोनविंशो वर्णः। ततो भल्लायुधो भकारः। ततो महामाया ईकारः। तेन 'भी'

इति विंशो वर्णः। ततः क्रोधरूपी षकारः । वैष्णवः अकारः। तेन 'ष' इति वर्णद्वयात्मक एकविंशो वर्णः । ततो वनमाली णकारः। स्वरादिरकारः। माधविर्मकारः। तेन 'णम्' इति वर्णत्रयात्मको द्वाविंशो वर्णः। ततः सूक्ष्मलोचनो भकारः। अप्रमेयोऽकारः। तेन 'भ' इति वर्णद्वयात्मकः त्रयोविंशो वर्णः। ततो वैधरो दकारः। ज्वलनो रेफाकारसंयुतः। तेन 'द्र' इति वर्णत्रयात्मकश्चतुर्विंशो वर्णः। ततो द्विर्मन्दरः द्विवारं मकारः। पद्मनाभ ऋकारः। तेन वर्णत्रयात्मकः 'म्मृ' इति पञ्चविंशो वर्णः। ततो विजयस्तकारः। चतुर्गतिर्यकारः। उदय उकारः। मन्दरशिराः मकारशिरस्कः। तेन 'त्युम्' इति वर्णचतुष्टयात्मकः षड्विंशो वर्णः । ततः पदमेतत् मृत्युमिति पदमेव। तेन सप्तविंशाष्टाविंशवर्णौ। ततो नमाम्यहमिति पदद्वयम्। तेन एकोनत्रिंश-त्रिंश-एकत्रिंशद्द्वात्रिंशार्णाश्च संगृहीताः। अत्र वचने द्वितीयान्तानां पदानामुदीरयेदित्यनेन, प्रथमान्तानां च वक्तव्य इत्यध्याहृतेन चान्वयो द्रष्टव्यः। तेन—

> "उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
> नृसिंहं भीषणं भद्रं मृत्युम्मृत्युं नमाम्यहम् ।।"

इत्येवं मन्त्राकारः उक्तवचनात्, संप्रदायाच्च। न तु क्रूरबृहद्दीप्यदादिपदयुक्त इति ध्येयम् । तदेतदाह— **एवेति** ।।

**अ.सं.–** द्वात्रिंशदक्षरनरसिंहमन्त्रमुद्धरति– **क्रूरमिति** ।। आदौ क्रूमित्यर्थकं उग्रमिति पदम्। ततः वीरमिति पदम्। ततो **बृहद्विष्णुं** बृहदित्यर्थकमहाशब्दोपेतविष्णुमिति पदम्। महाविष्णुपदमिति यावत्। ततः **दीप्यन्तं** एतदर्थकं ज्वलन्तमिति पदम्। ततः **विश्वतोमुखं** एतदर्थाभिधायकं सर्वतोमुखमिति पदम्। **पुंमृगेन्द्रं** पुरुषवाचकनृशब्दोपेतमृगेन्द्रवाचकसिंहपदम्। नृसिंहपदमिति यावत् । **भयङ्करं** तदर्थकं भीषणमिति पदम् । **शुभं** तत्पर्यायं भद्रमिति पदम् । **मृत्योश्च मारकम्** एतदर्थप्रतिपादकं मृत्युमृत्युमिति पदम् । ततः नमामीति पदम्। **स्वयं** एतदर्थप्रतिपादकोऽहमिति शब्दः नमामीत्युत्तमपुरुषेण अहमित्यस्मच्छब्दस्यैव नियतत्वादिति भावः। इति एवमुक्तक्रमविशिष्टः **एषः**

एकादशपदसमुदायः **द्वात्रिंशार्णः** द्वात्रिंशद्वर्णात्मकः **हरेः** नृसिंहस्य **मनुः** मन्त्र इत्यर्थः । द्वात्रिंशार्ण इत्युक्त्याऽस्य मन्त्रस्यानुष्टुप्च्छन्द इति सूचितम् । तथाचैवं मन्त्रोद्धारः–

**उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।**
**नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।। इति ।। ११ ।।**

**गु.दी.**— अथ नृसिंहमन्त्रमाह– **क्रूरमिति ।।** क्रूरमित्यर्थकमुग्रमिति पदम् । **वीरं** वीरमिति पदम् । **बृहद्विष्णुं** बृहदित्यर्थकपदोपेतं विष्णुमिति पदम् । महाविष्णुमिति पदिमति यावत् । **दीप्यन्तं** तदर्थकं ज्वलन्तमिति पदम् । **विश्वतोमुखं** सर्वतोमुखमिति पदम् । **पुंमृगेन्द्रं** पुरुषवाचकपदोपेतं मृगेन्द्रवाचकपदं नृसिंहपदिमति यावत् । **भयकरं** भीषणमिति पदम् । **शुभं** तत्पर्यायं भद्रमिति पदम् । **मृत्योश्च** मारकं मृत्युमृत्युमिति पदम् । नमामीति पदम् । स्वयमित्यर्थकोऽहमिति शब्दः । **एष** उक्तपदजातयुक्तो हरेर्नृसिंहस्य मनुरित्यर्थः । तथा च–

**'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।**
**नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्'**

इति द्वात्रिंशदक्षरमन्त्रनिष्पत्तिः । वृत्तोत्फुल्लविशालाक्षत्वविपक्षक्षयदीक्षितत्व-निनादस्फुटितब्रह्माण्डत्वादिना दैत्यानां क्रूरत्वेनोग्रः । नखाग्रशकलीकृत-सर्वावध्यातिबलदितिनन्दनत्वेन वीरः । पदा विष्टब्धपातालत्वमूर्धाविष्टत्रिवि-ष्टपत्वभुजप्रविष्टदिक्त्वैर्महाविष्णुः । सूर्यादीनां जगत्प्रकाशकत्वसामर्थ्यप्रदप्र-काशवत्त्वेन ज्वलन् । सर्वतोव्याप्तवदनत्वेन सर्वतोमुखः । नरवत् सिंहवद्विग्र-हवत्त्वेन सर्वचेतनोत्तमत्वेन वा नरसिंहः । रोगभूतवेतालराक्षसादिविनाशक-विभीषकनामवत्वेन भीषणः । स्वाश्रयेण सर्वस्यापि भद्रकरत्वेन भद्रः । स्वभक्तानां सम्प्राप्तमृत्युशत्रुगणविनाशकत्वेन मृत्युमृत्युः । तं प्रति तनुमनादीनाम-र्पणाख्यनमस्कारं करोमीति द्वात्रिंशदक्षनृसिंहमन्त्रार्थः ।। ११ ।।

**मङ्गाली–** द्वात्रिंशदक्षरनरसिंहमन्त्रमुद्धरति– **क्रूरमिति ।।** आदौ क्रूरमित्यर्थ-कमुग्रमिति पदम् । ततः वीरमिति पदम् । ततो **बृहद्विष्णुं** बृहदर्थकमहाशब्दोपेतं

विष्णुमिति पदम् । महाविष्णुपदमिति यावत् । **दीप्यन्तं** एतदर्थकं ज्वलन्तमिति पदम् । **विश्वतोमुखं** एतदर्थाभिधायकं सर्वतोमुखमिति पदम् । **पुंमृगेन्द्रं** पुरुषवाचकनृशब्दोपेतं मृगेन्द्रवाचकं सिंहमिति पदम् । नृसिंहपदमिति यावत् । **भयङ्करं** तदर्थकं भीषणमिति पदम् । **शुभं** तात्पर्यायं भद्रमिति पदम् । **मृत्योश्च मारकं** एतदर्थप्रतिपादकं मृत्युमृत्युमिति पदम् । ततो नमामीति पदम् । ततः **स्वयं** तदर्थप्रतिपादकोऽहमिति शब्दः । नमामीत्युत्तमपुरुषेणाहमित्यस्मच्छब्दस्यैव नियतत्वादिति भावः । **इति** एवमुक्तक्रमविशिष्टः **एषः** एकादशपदसमुदायः द्वात्रिंशद्वर्णात्मकः **हरेर्नृसिंहस्य मनुर्मन्त्र** इत्यर्थः । 'द्वात्रिंशार्णः' इत्युक्त्याऽस्य मन्त्रस्यानुष्टुप् छन्द इति सूचितम् । तथा चैवं मन्त्रोद्धारः-

**उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।**
**नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ।।** इति ।। ११ ।।

चतुर्विंशाक्षरो नृसिंहमन्त्रः

**द्विर्जयस्योपरि निजं सोद्देशं सर्ववित्तथा ।। १२ ।।**
**महातेजो बलं वीर्यं तादृशं स्वाहया युतम् ।**
**चतुर्विंशाक्षरो मन्त्रो निखिलेष्टप्रदायकः ।। १३ ।।**

**त.क.**— प्रकारान्तरेण नृसिंहमन्त्रमुद्धरति— **द्विरिति** ।। जयशब्दो द्विरुच्चार्यः । जयशब्दोपरि **निजं सोद्देशं** नरसिंहशब्दं चतुर्थ्यन्तमुद्धरेदिति शेषः । तदुपरि **सर्ववित्** सर्वविच्छब्दरपर्यायः सर्वज्ञशब्दः चतुर्थ्यन्तः । तदुपरि महातेजोबलवीर्यं महातेजोबलवीर्यशब्दं तादृशं चतुर्थ्यन्तं **स्वाहया युतं** स्वाहाशब्देन युक्तमुद्धरेदिति यथायोग्यं क्रियाध्याहारादिना योज्यम् ।

तथाच- **'जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा'** इति मन्त्राकारः ।। १२,१३ ।।

**अ.सं.**— तस्यैवापरं मन्त्रमाह- **द्विरिति** ।। **द्विः** द्विवारं उच्चरितस्य **जयस्य** जयशब्दस्य **उपरि** अनन्तरं **सोद्देशं** चतुर्थीयुक्तं **निजं** स्वनामभूतं नरसिंहपदम् ।

ततः **तथा** नरसिंहपदवत् चतुर्थ्यन्तं **सर्ववित्** एतदर्थकं सर्वज्ञपदम् । ततः **तादृशं** पूर्ववत् चतुर्थ्यन्तं महातेजोबलवीर्यमिति पदम् । अन्ते **स्वाहया** स्वाहाशब्देन युतम् इत्येतत्पदसमुदायात्मको मन्त्रः निखिलेष्टप्रदायकः चतुर्विंशाक्षरः । अनेन वर्णसङ्ख्याकथनेन गायत्रीच्छन्द इति सूचयति । तथाचेत्थं मन्त्रः– **'जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा'** इति ।। १२,१३ ।।

**गु.दी.**— नृसिंहस्य द्वितीयमन्त्रमाह— **द्विरिति ।।** द्विवारमुच्चरितस्य जयेति पदस्योपरि **निजं** नरसिंहेति पदं **सोद्देशं** चतुर्थ्यन्तम्। **सर्ववित्** एतदर्थप्रतिपादकं सर्वज्ञपदं च **तथा** चतुर्थ्यन्तम् । महातेजोबलपदं वीर्यपदं च **तादृशं** सोद्देशमन्ते स्वाहापदेन युतम् । तथा च **'जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा'** इति चतुर्विंशत्यक्षरो मन्त्रः । तदर्थस्तु– भक्तानां बाह्यान्तरशत्रु-विजयकारणत्वेन जय उत्कृष्टो वर्तस्व । हे स्वाहेति ।।१२।।

**मङ्गाली**— तस्यैवापरं मन्त्रमाह– **द्विरिति ।। द्विः** द्विवारं उच्चरितस्य **जयस्य** जयशब्दस्य **उपरि** अनन्तरं **सोद्देशं** चतुर्थीयुक्तं **निजं** स्वनामभूतं नरसिंहपदम् । ततः **तथा** नरसिंहपदवत् चतुर्थ्यन्तं **सर्ववित्** एतदर्थकं सर्वज्ञपदम् । ततः **तादृशं** पूर्ववत् चतुर्थ्यन्तं महातेजोबलवीर्यमिति पदम् । अन्ते **स्वाहया** स्वाहाशब्देन युतं इत्येतत्पदसमुदायात्मको मन्त्रः निखिलेष्टप्रदायकः चतुर्विंशाक्षरः । अनेन वर्णसङ्ख्याकथनेन गायत्री छन्द इति सूचयति । तथा चेत्थं मन्त्रः– **'जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा'** इति ।। १२,१३ ।।

नृसिंहगायत्रीमन्त्रः

**तं.सा.** **विद्महेधीमहे(हि)पूर्वं स्वयं चैव महाबलः ।**
**प्रेरयेत्तन्न इत्येतन्मध्येऽनन्तः प्रकीर्तितः** ।। १४ ।।

**त.क.**– चतुर्विंशाक्षरमेव नृसिंहस्य मन्त्रं प्रकारान्तरेणोद्धरति— **विद्मह इति ।।** विद्महे धीमहे इति द्वितयपदाभ्यां पूर्वं प्राक्, स्वयं नरसिंहशब्दः, सोद्देश इति च ग्राह्यं, महाबलशब्दश्च साद्देशः प्रथमद्वितीयपादयोरादौ यथाक्रमं प्रयोक्तव्य

इति शेषः। तथा च प्रथमपादे नरसिंहायेति चतुर्थ्यन्तमादौ प्रयुज्य विद्महे इति पदं प्रयुंज्यात्। द्वितीयपादे महाबलायेत्यादौ प्रयुज्य धीमहीति प्रयुंज्यादिति यावत्। धीमहे इति इकारान्तपदोपलक्षणम्। तृतीयपादोद्धारप्रकारमाह— **प्रेरयेदिति** ॥ एतत्पर्यायः प्रचोदयादिति शब्दः। **प्रेरयेत्तन्न इत्येतन्मध्ये** तन्नः प्रचोदयादित्यनयोः शब्दयोर्मध्ये **अनन्तः** अनन्तशब्दः **प्रकीर्तितः** प्रयोक्तव्यः। सोऽयं नृसिंहगायत्रीत्युच्यते। तथा च मन्त्रः— **'नरसिंहाय विद्महे महाबलाय धीमहि। तन्नोऽनन्तः प्रचोदयात्'** इति। अत्र आद्यस्यानुष्टुप् छन्दः। द्वितीयतृतीययोर्गायत्री। अत एव 'चतुर्विंशाक्षरो मन्त्रः' इति पूर्वेणोत्तरेण च सम्बध्यते ॥ १४ ॥

**अ.सं.**— नृसिंहगायत्रीमन्त्रमुद्धरति– **विद्महे इति** ॥ विद्महे धीमहे इत्येतयोः शब्दयोः पूर्वं क्रमेण **स्वयं** नरसिंहशब्दः चशब्देन सोद्देश इति लभ्यते। तादृश एव **महाबलः** महाबलशब्दश्च ज्ञेयः। विद्महेशब्दात् पूर्वं नरसिंहशब्दः धीमहेशब्दात् पूर्वं महाबलशब्द इति भावः। धीमहीत्यस्य प्रतिपदं धीमहे इति। **प्रेरयेत्** प्रेरणार्थकप्रचोदयादिति शब्दस्य तन्न इति शब्दस्य च मध्ये अनन्तशब्दः प्रकीर्तित इति सम्बन्धः। अनेन **'नरसिंहाय विद्महे महाबलाय धीमहि। तन्नोऽनन्तः प्रचोदयात्'** इति नरसिंहगायत्री उद्धृता भवति ॥ १४ ॥

**गु.दी.**— तृतीयं नरसिंहगायत्रीमन्त्रमाह— **विद्मह इति** ॥ विद्मह इत्यतः पूर्वं **स्वयं** स्वनामभूतो नरसिंहशब्दः। चशब्दाच्चतुर्थ्यन्त इति ग्राह्यम्। धीमहीत्यतः पूर्वं महाबलपदं चतुर्थ्यन्तम्। तन्नःप्रचोदयादिति पदयोर्मध्ये अनन्तशब्दः प्रकीर्तित इत्यर्थः। तथा च **'नरसिंहाय विद्महे महाबलाय धीमहि। तन्नोऽनन्तः प्रचोदयात्'** इति चतुर्विंशत्यक्षरनृसिंहगायत्रीनिष्पत्तिः। तदर्थस्तु– **नरसिंहाय** नरसिंहप्रीत्यर्थं **विद्महे** ज्ञानं सम्पादयामः। **महाबलाय** शत्रुविभीषकसामर्थ्योपेतनृसिंहप्रीत्यर्थं **धीमहि** ध्यानं सम्पादयामः। तत्तु ज्ञानं ध्यानं च **अनन्तः** देशकालगुणतः परिच्छेदशून्यो नृहरिः **नः** अस्मान् **प्रचोदयात्**

प्रेरयेत् । 'लिङर्थे लेट्' (पा.सू.३-४-७) इति सूत्राल्लेटो लिङश्चैकार्थत्वात् ।। १४ ।।

**मञ्जाली**– नरसिंहगायत्रीमन्त्रमुद्धरति– **विद्महे इति** ।। विद्महे धीमहे इत्येतयोः शब्दयोः पूर्वं क्रमेण **स्वयं** नरसिंहशब्दः । चशब्देन सोद्देश इति लभ्यते । तादृश एव **महाबलः** महाबलशब्दश्च ज्ञेयः । विद्महे शब्दात्पूर्वं नरसिंहशब्दः । धीमहे शब्दात्पूर्वं महाबलशब्द इति भावः । धीमहीत्यस्य प्रतिपदं धीमहे इति । **प्रेरयेत्** प्रेरणार्थक प्रचोदयादिति शब्दस्य तन्न इति शब्दस्य च मध्येऽनन्तशब्दः प्रकीर्तित इति इति सम्बन्धः । अनेन '**नरसिंहाय विद्महे महाबलाय धीमहि । तन्नोऽनन्तः प्रचोदयात्**' इति नरसिंहगायत्री उद्धृता भवति ।। १४ ।।

नृसिंहमन्त्रत्रयस्य अङ्गन्यासकथनम्

**त.सा.** **पादैर्व्यस्तैः समस्तैश्च पदैश्चाङ्गं प्रकीर्तितम् ।**
**पूर्वयोस्तत्र पूर्वं तु सर्वज्ञेन षडङ्गकम्** ।। १५ ।।

**तृतीयं तु द्विरावृत्तैः पादैरङ्गसमन्वितम्** ।। १६ ।।

**त.क.**– त्रयाणामङ्गन्यासमाह— **पादैरिति** ।। **व्यस्तैः पादैः** पृथक् पृथक् कृतैश्चतुर्भिः पादैः, समस्तैश्च पदैः । पदैश्च व्यस्तैः समस्तैश्च इत्यनुवर्तते । जय जयेत्यादिपदैः पृथगुच्चारितैः समस्तैश्च । **पूर्वयोः** पूर्वश्चापरश्च पूर्वौ । प्रथमयोरित्यर्थः । यथा तयोः प्रथमद्वितीययोर्द्वात्रिंशार्णचतुर्विंशाक्षरयोर्मन्त्रयोरङ्गं हृदयादिषडङ्गं न्यसनीयं प्रकीर्तनीयमिति सम्बन्धः ।

यद्यपि द्वितीयमन्त्रस्य पञ्चपदानि जय जयेत्यस्यैकपदत्वात् । तथापि ते पञ्चमन्त्राः । तेषामेव समस्तानामुच्चारणे षष्ठो मन्त्रः । हृदयादीनि च पूर्वोक्तरीत्या षडङ्गानीति तैः तेषु न्यासो घटते । आद्यमन्त्रस्य तु व्यस्ताः पादाश्चत्वारो मन्त्राः । समस्तपादः एको मन्त्रः । तथा च पञ्चमन्त्राः पञ्चैव न्यसनीयानि च । अङ्गानि षट् । तत्कथं घटनीयमित्यतस्तत्र मन्त्रान्तरमाह— **तत्र पूर्वन्त्विति** ।।

**सर्वज्ञेनेति ।।** सर्वज्ञशब्देनेत्यर्थः। सोद्देशेनेत्यपि ग्राह्यम्। सर्वज्ञायेत्यनेन मन्त्रेण सह पूर्वोक्तपञ्चमन्त्रेण षडङ्गकं षडङ्गन्यासयुक्तमाद्यमन्त्रं कुर्यादिति शेषः। तृतीयमन्त्रस्याह– **तृतीयन्त्विति ।।** द्विवारमुच्चरितैः पादैरित्यनेन षण्मन्त्राः सम्पन्नाः। तैरङ्गसमन्वितं तृतीयमन्त्रं कुर्यादित्यर्थः। यद्यपि बीजशक्त्यादीन्यपि वक्तव्यानि। उत्तरवचनादेव। तथापि तेषां काम्यमन्त्रविषयत्वेन इह तेषामनुक्तिः। तदेतदुक्तं— 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते'(३-१६०) इति। वक्ष्यते चैतद्याष्टम इत्यादिना। बीजोक्तिस्तु मन्त्रान्तर्गतत्वादेव न त्वङ्गतयेति ध्येयम् ।। १५-१६ ।।

**अ.सं.**— आद्यद्वितीयमन्त्रयोरङ्गन्यासमन्त्रमाह— **पादैरिति ।। पूर्वयोः** तृतीयमन्त्रापेक्षया पूर्वयोः प्रथमद्वितीययोरित्यर्थः। क्रमेणेति शेषः। तत्र उग्रमित्याद्यमन्त्रस्य **व्यस्तैः** पृथक् पृथक् कृतैः **पादैः** चतुर्भिः **समस्तैः** मिलितैः चतुर्भिः पादैः अङ्गं प्रकीतितम्। 'उग्रं वीरं महाविष्णुं हृदयाय नमः। ज्वलन्तं सर्वतोमुखं शिरसे स्वाहा' इत्यादि प्रकारेण पञ्चाङ्गन्यास इति भावः। जय जयेति द्वितीयमन्त्रस्य तु जयेत्यादि षड्भिः पदैः अङ्गं प्रकीर्तितम्। 'जय हृदयाय नमः। जय शिरसे स्वाहा' इत्यादिप्रकारेण षडङ्गन्यासो ज्ञेयः। जयजयेत्यस्य एकपदत्वविवक्षायां तु व्यस्तैः समस्तैश्चेत्यनुवर्तते। तथाच जयजय हृदयाय नमः। नरसिंहाय शिरसे स्वाहा' इत्यादि प्रकारेण व्यस्तैः पञ्चभिः पदैः समस्तेन मन्त्रेण च षडङ्गन्यासो ज्ञेयः। आद्यमन्त्रस्य षडङ्गत्वसिद्ध्यर्थमपरमङ्गमन्त्रमाह– **तत्रेति ।।** तयोर्मध्ये **पूर्वम्** आद्यमन्त्रं **सर्वज्ञेन** चतुर्थ्यन्तसर्वज्ञशब्देन सह षडङ्गकं जानीयात्। नृसिंहगायत्रीमन्त्रस्याङ्गमाह– **तृतीयं त्विति ।।** तृतीयमपि मन्त्रं **द्विरावृत्तैः** द्विवारं उच्चरितैः त्रिभिः पादैः षडङ्गोपेतं जानीयात्। 'नृसिंहाय विद्महे हृदयाय नमः' इत्यादि प्रकारेण षडङ्गन्यासो ज्ञेयः ।। १६ ।।

**गु.दी.**— मन्त्रत्रयस्यापि क्रमेणाङ्गन्यासमन्त्रानाह— **पादैरिति ।। पूर्वयोः** प्रथमद्वितीययोर्मध्ये आद्ये द्वात्रिंशदक्षरे मन्त्रे व्यस्तैः समस्तैश्च पादैः पञ्चाङ्गं, द्वितीये चतुर्विंशत्यक्षरमन्त्रे पदैः षड्भिर्जयेत्यादिपदैः **अङ्गं** षडङ्गं प्रकीर्तितम्।

तयोर्मध्ये पूर्वमन्त्रं **सर्वज्ञेन** सर्वज्ञपदेन षडङ्गं जानीयात्। **तृतीयं** गायत्रीमन्त्रं द्विरावृत्तैः 'नरसिंहाय विद्महे' इत्यादित्रिभिः पादैरेव षडङ्गसमन्वितं जानीयादिति शेषः ।। १६ ।।

**मञ्जाली–** आद्यद्वितीयमन्त्रयोरङ्गन्यासमन्त्रमाह– **पादैरिति ।। पूर्वयोः** तृतीय-मन्त्रापेक्षया पूर्वयोः प्रथमद्वितीययोरित्यर्थः। क्रमेणेति शेषः। तत्र उग्रमित्याद्यमन्त्रस्य **व्यस्तैः** पृथक्कृतैः पादैश्चतुर्भिः **समस्तैर्मिलितैश्चतुर्भिः** पादैः अङ्गं **प्रकीर्तितम्**। 'उग्रं वीरं महाविष्णुं हृदयाय नमः। ज्वलन्तं सर्वतोमुखं शिरसे स्वाहा' इत्यादि प्रकारेण पञ्चाङ्गन्यास इति भावः। 'जय जय' इति द्वितीयमन्त्रस्य तु जयेत्यादि षड्भिः पदैः अङ्गं प्रकीर्तितम्। 'जय हृदयाय नमः। जय सिरसे स्वाहा' इत्यादिप्रकारेण षडङ्गन्यासो ज्ञेयः। जयजयेत्यस्यै-कपदत्वविवक्षायां तु व्यस्तैस्समस्तैश्चेत्यनुवर्तते। तथा च 'जयजय हृदयाय नमः। नरसिंहाय सिरसे स्वाहा' इत्यादि प्रकारेण व्यस्तैः पञ्चभिः पदैः समस्तेन मन्त्रेण च षडङ्गन्यासो ज्ञेयः। अद्यमन्त्रस्य षडङ्गत्वसिद्ध्यर्थमपरमङ्गमन्त्रमाह– **तत्रेति ।।** तयोर्मध्ये **पूर्वं** आद्यमन्त्रं **सर्वज्ञेन** चतुर्थ्यन्तसर्वज्ञपदेन सह षडङ्गकं जानीयात्। नरसिंहगायत्रीमन्त्रस्याङ्गमाह– **तृतीयं त्विति ।।** तृतीयमपि मन्त्रं **द्विरावृत्तैः** द्विवारमुच्चारितैः त्रिभिः पादैः षडङ्गोपेतं जानीयात्। 'नृसिंहाय विद्महे हृदयाय नमः' इत्यादिप्रकारेण षडङ्गन्यासो ज्ञेयः ।। १६ ।।

नृसिंहमन्त्रस्य ध्यानकथनम्

**तं.सा.** **ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं**
**जानुप्रसक्तकरयुग्ममथापराभ्याम् ।**
**चक्रं दरं च दधतं प्रियया समेतं**
**तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम्** ।। १७ ।।

**त.क–** वक्त्रं केसरिणो वक्त्रं वृत्तास्यं दंष्ट्रया युतम् ।
भ्रुकुटीकुटिलं भीमं त्रिणेत्रं मुकुटोज्ज्वलम् ।।

शुद्धस्फटिकसङ्काशं शङ्खचक्रविराजितम् ।

पर्यङ्कबन्धसंयुक्तमासीनं सम्यगासने ।

प्रसार्य जानुनोर्हस्तौ मुख्यौ विस्तारितांगुली ।।

इत्यादिवचनानुसारेण ध्यानप्रकारमाह— **ध्यायेदिति** ।। १७ ।।

**अ.सं.**– नृसिंहध्यानप्रकारमाह– **ध्यायेदिति** ।। उरूणि विशालानि वृत्तानि वर्तुलानि रविवद्दीप्तानि त्रीणि नेत्राणि यस्य तम् । रविमण्डलवत् वृत्तत्रिनेत्रमिति वा । जान्वोः **प्रसक्तं** स्थापितं हस्तयुगलं यस्य तम् । अपराभ्यां कराभ्यां चक्रं **दरं** शङ्खं दधतम् । **प्रियया** लक्ष्म्या समेतम् । **तिग्मांशुकोट्यधिकतेजसं** तिग्मांशूनां तीक्ष्णकिरणसूर्याणां कोटेः कोटिसङ्ख्यातः अधिकं तेजो यस्य तम् । कोटिसूर्याधिककान्तिमन्तमिति यावत् । **अयशक्तिं** पूर्णशक्तिं नृसिंहं ध्यायेदित्यन्वयः ।। १७ ।।

**गु.दी.**– ध्यानमाह— **ध्ययेदिति** ।। उरूणि विशालानि वृत्तानि रविवद्दीप्तानि त्रीणि नेत्राणि यस्य तम् । रविमण्डलवद्वृत्तत्रिनेत्रमिति परनिपातो वा । जान्वोः **प्रसक्तं** संसक्तं **करयुग्मं** करद्वयं यस्य स तथा तम् । **अपराभ्यां** कराभ्यां चक्रं शङ्खं च **दधतं** दधानम् । **प्रियया** रमया **समेतं** सहितम् । **तिग्मांशुकोट्यधिकतेजसं** सूर्यकोटिभिरप्यधिकतेजोरूपम् । **अव्ययशक्तिं** सर्वोत्कृष्टसामर्थ्यं नृसिंहं **ध्यायेत्** चिन्तयेदित्यर्थः ।। १७ ।।

**मङ्गाली**– नृसिंहध्यानप्रकारमाह– **ध्यायेदिति** ।। उरूणि विशालानि वृत्तानि वर्त्तुलानि रविवद्दीप्तानि त्रीणि नेत्राणि यस्येति । रविमण्डलवत् वृत्तत्रिनेत्रमिति वा । जान्वोः **प्रसक्तं** स्थापितं हस्तयुगलं यस्य तं । अपराभ्यां चक्रं **दरं** शङ्खं दधतं **प्रियया** लक्ष्म्या समेतम् । **तिग्मांशुकोट्यधिकतेजसं** तिग्मांशूनां तीक्ष्ण-किरणोपेतानां सूर्याणां कोटेः कोटिसङ्ख्यातः अधिकं तेजो यस्य तम् । कोटिसूर्याधिककान्तिमन्तमिति यावत् । **अव्ययशक्तिं** पूर्णशक्तिं नृसिंहं ध्यायेदित्यन्वयः ।। १७ ।।

स्वगुरूक्तानुसारेण अधिकारिभेदेन सर्वमन्त्रेषु हरेः ध्यानकथनम्

तं.सा. **सर्वेष्वपि हि मन्त्रेषु द्व्याद्यनन्तान्तबाहुकः ।**
**चेतनान्तस्थमारभ्य सर्वगान्तस्थ(न्तःस्व)रूपवान् ।। १८ ।।**

**अनन्तरूपो ध्येयोऽत्र(तः) स्वगुरूक्तानुसारतः ।**
**यथायोग्यं यथाशक्ति तत्तदायुधभूषणः ।। १९ ।।**

त.क.– ननु—

यद्वाऽष्टभुजसंयुक्तं नृसिंहं सम्प्रकल्पयेत् ।
चक्रं खङ्गं च बाणं चाभयं दक्षिणे भुजे ।।

पाञ्चजन्यं गदां शार्ङ्गं वामबाहुषु तु कारयेत् ।
एवं भुजयुगं जानुद्वयस्योपरि निक्षिपेत् ।।

अथवा षोडशभुजो नारसिंहः प्रशस्यते ।
चक्रं खङ्गं च परशुं शूलं बाणं तथांकुशम् ।।

वज्रं च दक्षिणभुजप्रदेशेष्वितरेष्वपि ।
शङ्खं चर्म गदां शक्तिं शार्ङ्गं पाशं च तोमरम् ।।

शिष्टौ करौ यथापूर्वं स्थापयेज्जानुनोर्द्वयोः ।
वामजानूर्ध्वगं कुर्यादधस्तादितरे पुनः ।।

उत्सङ्गे देवदेवस्य हिरण्यकशिपुं रिपुम् ।
नखैर्विदारितोरस्कं स्रवद्रुधिरपङ्किलम् ।।

रुधिरस्तोमसम्भूतं हिरण्यं ग्रामसंकुलम् ।
कुर्याच्च दक्षिणे पार्श्वे विधिमन्यत्र शङ्करम् ।
प्रह्लादं गरुडं वाऽपि पार्श्वयोस्तत्र कारयेत् ।।

इत्यादिना नृसिंहस्याष्टभुजत्वषोडशभुजत्वादेः पाशांकुशाद्यायुधविशेषस्य च कथनात् कथं चतुर्बहुत्वादि ? एवं पूर्वोक्तमन्त्रेष्वपि,

नरवत् कण्ठपर्यन्तं वक्त्रसृष्टिर्वराहवत् ।
चतुर्भुजं शङ्खचक्रधारिणं स्फटिकप्रभम् ।।

उद्धृत्य धरणीं देवीं वामहस्तस्य कूर्परे ।
कटिप्रदेशमालम्ब्य पाणिना दक्षिणेन तु ।
जिघ्रन् देहं तथा देव्याः श्रीवत्साङ्कः किरीटवान् ।।

इत्यादिना लक्षणान्तरस्योक्तेः कथमिदं विश्वसनीयमित्यतः परिहारमाह— **सर्वेष्वपीति** ।। एवं वक्ष्यमाणमन्त्रेष्वपि लक्षणायाः(णया) तस्योक्तेः सर्वेष्वपि ध्येयत्वेनोक्तो भगवान् द्विबाहुत्वमारभ्यानन्तबाहुपर्यन्तं बाहुमानेव। एवं चेतनान्तस्थातिसूक्ष्मरूपमारभ्य सर्वगान्तस्थरूपान्तमनन्तरूपवानेव। एवमासीनशयानाद्यनन्तरूपोऽपि भगवान् सर्वेष्वपि मन्त्रेष्विहोद्धृतेषु ध्येय एव। चतुर्मुखादिभिरिति शेषः। अत एकस्या मूर्तेरनन्तानन्तबाहुत्वानेकरूपत्वादिकं ग्रन्थान्तरेषूक्तमपि नासत्। नापि विरुद्धमिति भावः। ननु वेदोक्तानन्तरूपोपासने योऽन्यान् ऋजून् प्रत्येवेदं सार्थकं, नेतरान् प्रतीत्यत आह— **स्वगुरूक्तानुसारत इति** ।। शिष्याणां योग्यताशक्तिं चाऽलोच्य यथायोग्यं यथाशक्ति चोपदिशतः स्वस्वरूपगुरोरुक्त्यनुसारतस्तत्तदायुधभूषणतत्तद्भुजोपेतस्तत्तदणुत्वमहत्त्वाद्युपेतश्च हरिर्ध्येय इति सम्बन्धः ।। १८, १९ ।।

**अ.सं.**— अत्र सर्वत्रोक्तवक्ष्यमाणमन्त्रेषु ध्येयत्वेनोक्तं द्विचतुर्भुजादिकमुपलक्षणमित्याह– **सर्वेष्विति** ।। द्वौ आदिर्येषां ते द्व्यादयः। अनन्ताः अन्ते येषां ते अनन्तांताः। द्व्यादयः अनन्तान्ताश्च बाहवः भुजा यस्य स तथोक्तः। भुजद्वयमारभ्य चतुर्भुजादिक्रमेण अनन्तसङ्ख्यावसानकभुजवानित्यर्थः। **चेतनान्तस्थं** जीवान्तःस्थं सर्वगान्तःस्थरूपवान्। सर्वगं यदव्याकृताकाशं तदन्तर्गतरूपवानित्यर्थः। 'सर्वगान्तः स्वरूपवान्' इति पाठे सर्वगं व्याप्तं रूपमेव अन्तं चरमं यस्य स्वरूपस्य तत् अस्यास्तीति सर्वगान्तःस्वरूपवानिति व्याख्यानं द्रष्टव्यम्। तथा च जीवान्तर्गतमतिसूक्ष्मरूपमारभ्य ततोऽपि ईषत्स्थूलं रूपं ततोऽपि किञ्चिदधिकमित्यादिक्रमेणाव्याकृताकाशपर्यन्तं विद्यमानानेक-

परिमाणोपेतरूपवत्त्वेन भगवान् ध्येय इति भावः। एवमनन्तरूप इत्यत्रापि एकं रूपमारभ्यानन्तावसानकरूप इति द्रष्टव्यम्। नन्वेतत्सर्वमपि सार्वाधिकारिकं किं नेत्याह– **स्वगुरूक्तेति ॥ यथायोग्यं** योग्यतामनतिक्रम्य योग्यतां ज्ञात्वेति यावत्। **स्वगुरूक्तानुसारतः** स्वगुरूपदिष्टप्रकारेणेत्यर्थः। शिष्यस्य यादृशरूपध्याने योग्यता तादृशयोग्यताभिज्ञेन गुरुणा यादृशं रूपमुपदिष्टं तादृशं रूपं ध्येयमिति भावः। तदुक्तम् एकादशतात्पर्ये–

ध्रुवं तयैव मुच्येत यां मूर्तिं प्रदिशेद्गुरुः।
**शिष्याणां यगेयताभिज्ञः**...............॥ (भा.ता.११.५.३५) इति।

योग्यताभिज्ञगुरुदर्शनाभावकाले कथमित्यत आह– **यथाशक्तीति ॥** शक्तिमनतिक्रम्येत्यर्थः। अयं भावः। योग्यताभिज्ञगुरुदर्शनपर्यन्तं तदन्यगुरूपदिष्टानेकरूपेषु स्वस्य यद्रूपध्याने शक्तिस्तादृशं रूपं ध्येयमिति। पुनः कीदृशो ध्येय इत्यत आह– **तत्तदिति ॥** आयुधानि चक्रादीनि भूषणानि किरीटकुण्डलादीनि तानि तानि तत्तद्रूपयोग्यानि आयुधभूषणानि यस्य स तथोक्तः। यस्मिन् रूपे यत् आयुधं यद्भूषणमागमे उक्तमस्ति तत्तदायुधभूषणत्वेन ध्येय इति भावः ॥ १८, १९ ॥

**गु.दी.**— अत्रोक्तवक्ष्यमाणमन्त्रेषूक्तमेव ध्यानमिति न मन्तव्यं, किन्त्वधिकमप्यस्तीत्याशयेन द्विचतुर्बाहुत्वादिकमुपलक्षणमित्याह– **सर्वेष्वित्यादिना ॥** द्वौ आदी अनन्ता अन्ते येषां ते तथा, तादृशा बाहवो यस्य स तथा। **चेतनान्तःस्थं** जीवान्तर्गतमारभ्य **सर्वगान्तस्वरूपवान्** सर्वेषु अव्याकृताकाशादिषु गं गतं व्याप्तं रूपमेव अन्तं चरमं यस्य स्वरूपस्य तदस्यास्तीति सर्वगान्तस्वरूपवान्। तथा च जीवान्तर्गतमिति सूक्ष्मं स्वरूपमारभ्य ततोऽपि ईषदधिकततोऽपीषदधिकततोऽपीषदधिकेत्यादिक्रमेण यावद्देशव्याप्तरूपपर्यन्तं विद्यमानानेकपरिमाणवत्त्वेन भगवान् ध्येय इति भावः। एतदप्युपलक्षणत्वेनोक्तं बोद्धव्यम्। एवमनन्तरूप इत्यत्राप्येकं रूपमारभ्यानन्तरूप इति द्रष्टव्यम्। नन्वेतत्सर्वमपि सर्वाधिकारिकं किम्? नेत्याह– **यथायोग्यमिति ॥** योग्यतायाः

अधिकविषयत्वेऽपि तत्कालेऽभिव्यक्त्यभावे कथमित्यत आह— **यथाशक्तीति ।।** ननु योग्यतातिक्रमेण ध्यानप्रवृत्तेरेवाभावादिदं न वक्तव्यमिति चेत् न। प्रयत्नसम्भवेन तन्निषेधार्थत्वात्। यद्वा यथायोग्यं स्वगुरूक्तानुसारत इति सम्वन्धः। स्वस्यैतावद्योग्यता वर्तत इति ज्ञानं च कथं भवतीत्यत आह— **स्वगुरूक्तानुसारत इति ।।** स्वगुरूक्तप्रकारेणेत्यर्थः। योग्यगुरुसम्पत्त्यभावे तु कथमित्यत आह— **यथाशक्तीति ।।** योग्यगुरुसम्पत्त्यभावे यावदायुधादियुत-मूर्तिध्यानं स्वप्रयत्नेन सुशकं तावदायुधादिविशिष्टो ध्येयः। तानि तानि तासां तासां मूर्तीनां यान्यागमेषूक्तानि आयुधानि भूषणानि च यस्य स **तत्तदायुधभूषणः** ।। १६, १७ ।।

**मङ्गाली—** अत्र सर्वत्रोक्तवक्ष्यमाणमन्त्रेषु ध्येयत्वेनोक्तं द्विचतुर्भुजादिकं उपलक्षणमित्याह– **सर्वेष्विति ।।** द्वौ आदी एषां ते द्व्यादयः। अनन्ताः अन्ते एषां ते अनन्तान्ताः। द्व्यादयः अनन्तान्ताश्च बाहवो भुजा यस्य स तथोक्तः। भुजद्वयमारभ्य चतुर्भुजादिक्रमेणानन्तसङ्ख्यावसानकभुजवानित्यर्थः। **चेतनान्तस्थं** जीवान्तस्थं **सर्वान्तस्थरूपवान्** सर्वगमव्याकृताकाशं तदर्गतरूपवानित्यर्थः। 'सर्वगान्तस्वरूपवान्' इति पाठे सर्वगं व्याप्तं रूपमेव अन्तं चरमं यस्य स्वरूपस्य तदस्यास्तीति सर्वगान्तस्वरूपवानिति व्याख्यानं द्रष्टव्यम्। तथा च जीवान्तर्गतमतिसूक्ष्मं रूपमारभ्य ततोऽपि ईषत् स्थूलं ततोऽपि किञ्चिदधिकमित्यादिक्रमेणाव्याकृताकाशपर्यन्तं विद्यमानानेकपरिमाणो-पेतरूपवत्वेन भगवान् ध्येय इति भावः। एवमनन्तरूप इत्यत्रापि एकं रूपमारभ्यानन्तावसानकरूप इति द्रष्टव्यम्। नन्वेतत्सर्वमपि सर्वाधिकारिकं किं नेत्याह– **स्वगुरूक्तेति ।। यथायोग्यं** योग्यतामनतिक्रम्य योग्यतां ज्ञात्वेति यावत्। **स्वगुरूक्तानुसारतः** स्वगुरूपदिष्टप्रकारेणेत्यर्थः। शिष्यस्य यादृशरूपध्याने योग्यता तादृशयोग्यताभिज्ञेन गुरूणा यादृशं रूपमुपदिष्टं तादृशरूपं ध्येयमिति भावः। योग्यताभिज्ञगुरुदर्शनाभावकाले कथमित्यत आह– **यथाशक्तीति ।।** शक्तिमनतिक्रम्येत्यर्थः। अयं भावः। योग्यताभिज्ञगुरुदर्शन-पर्यन्तं तदन्यगुरूपदिष्टानेकरूपेषु स्वस्य यद्रूपध्याने शक्तिः तादृशरूपं ध्येयमिति

। पुनः कीदृशो ध्येय इत्यत आह– **तत्तदिति** ।। आयुधानि चक्रादीनि । भूषणानि किरीटकुण्डलादीनि । तानि तानि तत्तद्रूपयोग्यतानि आयुधभूषणानि यस्य स तथोक्तः । यस्मिन् रूपे यदायुधं यद्भूषणमागमैरुक्तमस्ति तदायुधभूषणवत्त्वेन ध्येय इति भावः ।। १८,१९ ।।

हरेः बाहुषु चिन्त्यायुधकथनम्

तं.सा. **शङ्खचक्र(चक्रशङ्ख)गदापद्मखड्गखेटाः सशार्ङ्गकाः ।**
**शरो मुसलवज्रौ च हलः पाशांकुशौ तथा ।। २० ।।**

**शूलं च भिण्डिपालश्च पट्टिशो(सो)ऽग्निर्वराभये ।**
**तर्क(तत्त्व)मुद्राक्षमाला च पुस्तकं च विदारणम् ।। २१ ।।**

**इत्यादीन्यखिलान्येव विष्णोश्चिन्त्यानि बाहुषु ।।**

**त.क.**— 'तत्तदायुधभूषणः' इत्युक्तं विवृणोति— **शङ्खचक्रेति** ।। सान्तानिकादिलोके वाऽस्मिन् लोके वा चतुर्मुखो वा तदन्यो वा शिष्यानुजिघृक्षुरेत्य यथायोग्यं यथाशक्ति द्विबाहुत्वाद्युपदिशति । स तदुपदेशप्रकारेणैव परमात्मानं ध्यायेत् । अत एव ग्रन्थेषु द्विबाहुत्वाद्येवोच्यते । अतो न विरोधः । परोवरीयस्त्वादेरिवोपपत्तेः । नन्विदानीमुक्तगुरोरलाभे तूष्णींभावः स्यादिति चेन्न । 'युगपत् स्वभुजौ यद्वत्' इत्यादिना तत्तद्योग्यतानुसारेण द्वित्वबहुत्वादेरुपास्यत्वोपपत्तेः । एतदर्थं यथायोग्यमित्यादिवाक्यं पृथक् च योजनीयमिति भावः ।। २०,२१ ।।

**अ.सं.**– इदानीमुक्तायुधविवरणपूर्वकं विष्णोबर्हषु ध्येयवस्तून्याह– **शङ्खेति** ।। शङ्खादीनि तु एकैकस्मिन् भुजे एकैकशः ध्येयानि । विदारणं तु हस्तद्वयेनेति ध्येयम् । इत्यादीनीत्यत्रादिपदेन परश्वधशक्तिप्रासामृतवस्त्रादीनां ग्रहणम् । विष्णोर्बाहुषु **इत्यादीनि अखिलानि** आयुधादीनि वस्तूनि **चिन्त्यानि** ध्येयानीत्यर्थः ।। २०,२१ ।।

**गु.दी.**– अथ चतुर्विंशतिबाहुयुक्तनरसिंहस्यायुधान्याह— **शङ्खेति** ।। **खेटः**

चर्म। **भिण्डिपालो** नामायुधविशेषः। **तर्कमुद्रा** ज्ञानमुद्रा। **विदारणं** परशुः। विदारणं तु हस्तद्वय इति सम्प्रदायविदः। ततो नायुधेषु न्यूनताशङ्कावकाशः। यद्वा **आदिपदेन** शक्तेः प्रासस्य वा ग्रहणम्। विष्णोर्बाहुषु **अखिलानि** समस्तानि चिन्त्यानि। आयुधानीति शेषः ।। २०,२१ ।।

**मङ्गली–** इदानीमुक्तायुधविवरणपूर्वकं विष्णोर्बाहुषु तत्तद्योग्यध्येयवस्तून्याह– **शङ्खेति** ।। शङ्खादीनि तु एकैकस्मिन् भुजे एकैकशः ध्येयानि। विदारणं तु हस्तद्वयेनेति ध्येयम्। इत्यादीनीत्यत्रादिपदेन परश्वधशक्तिप्रासामृतवस्त्रादीनां ग्रहणम्। विष्णोर्बाहुषु **इत्यादीनि त्वखिलान्यायुधानि** वस्तूनि **चिन्त्यानि** ध्येयानीत्यर्थः ।। २०,२१ ।।

हंसमन्त्रत्रयकथनम्

तं.सा. **वियत्स इति युग्मार्णो विपरीतश्च स स्मृतः ।। २२ ।।**

**स सर्गहीनो वेतश्च बिन्दुहीनोत्तरस्तथा।**
**त्रय एते महामन्त्राः पुरुषार्थचतुष्टये ।। २३ ।।**

**कल्पवृक्षाः प्रिया विष्णोर्विशेषज्ञानदायकाः।**

**त.क.—** हंसमन्त्रानुद्धरति— **वियदिति** ।। अनेनाकाशबीजं हकार उच्यते। 'बिन्दुहीन' इति वक्ष्यमाणत्वात् बिन्दुसहितो वर्णः। स इति द्वितीयो वर्णः। एवं युग्मार्णः 'हंसः' इति द्व्यक्षरो मन्त्र आद्य इति शेषः। 'सः' इत्ययं वर्णो विपरीतः पूर्वमुच्चरितः हमिति वर्णस्तदनन्तरमुच्चरिते 'सोहम्' इत्याकारको द्वितीयो मन्त्रः स्मृत इति शेषेण योज्यम्। सर्गो विसर्गः। विसर्गहीनः सकारः, **वेत** वकारेण युक्तः सकारवकारसंयोगात्मकः 'स्वा' इत्येको वर्णः। सोहमिति द्वितीये मन्त्रे द्वितीयवर्णस्य विकारमाह— **बिन्दुहीनेति** ।। तथाशब्देनाऽकारसाहित्यमुच्यते। हमित्यत्र बिन्दुं विसृज्य आकारसंयोजने 'हा' इति द्वितीयो वर्णः। आहत्य 'स्वाहा' इति तृतीयो मन्त्रः। मन्त्राणामितरसाधारण्यनिवारणाय सदृष्टान्तेन फलकथनेन इतिकर्तव्यतां चाऽह— **त्रय इत्यादिना** ।। 'हंसः, सोहं, स्वाहा'

इत्येते त्रयो महामन्त्राः पुरुषार्थचतुष्टयसाधने कल्पवृक्षा इव । तत्र हेतुः— **प्रिया विष्णोरिति ॥** ननु मोक्षस्य ज्ञानैकसाध्यत्वात् कथं मन्त्राणां तत्साधनत्वमित्यत आह— **विशेषेति ॥** मोचकं रूपविशेषज्ञानं हंसमन्त्रजपाद्भवतीति भावः ॥ २२,२३ ॥

**अ.सं.**— मालारूपं हंसमन्त्रमुद्धरति– **वियदिति ॥** अत्र **वियत्** आकाशबीजं हकार इत्यर्थः । स च विन्दुसहित इति द्रष्टव्यम् । 'विन्दुहीन' इति वक्ष्यमाणत्वात् । ततः **सः** विसर्गसहितः सकार इत्यर्थः । 'सर्गहीनः' इति वक्ष्यमाणत्वात् । अनेन हंसः इति **युग्मार्णः** द्व्यक्षरः मन्त्रः उक्तो भवति । **सः** हंस इति द्व्यक्षरो मन्त्रः **विपरीतः** व्युत्क्रमेण उच्चरितश्चेत् 'सोऽहं' इत्यपि द्व्यक्षरः द्वितीयो मन्त्रः स्मृतः । हंसः इत्यक्षरयोर्व्युत्क्रमेण उच्चारणे सति 'सः हंसः' इति भवति । तत्र सकारविसर्गस्य स्थानिवद्भावेन सकारत्वात् तस्य 'ससजुषो रुः' इति (पा.सू. ८. २.६६) रुत्वे तस्य च 'हशि च' (पा.सू.६.१.११४) इत्युत्वे च 'सोऽहं' इति भवतीति भावः । सः हम् इत्यत्रैव **सः** सकारः **सर्गहीनः** सर्गेण विसर्गेण हीनः रहितः कर्तव्यः । उपलक्षणमेतत् । अकाररहितश्च कार्यः । **वेतश्च** वाकारेण इतः युक्तश्च कार्यः । ततश्च स्वा इति भवति । अयं च **बिन्दुहीनोत्तरः** बिन्दुना अनुस्वारेण रहितः । उपलक्षणमेतत् । आकारेण सहितश्च उत्तरः स्वानन्तरस्थितः हमिति वर्णः यस्मिन् स तथोक्तः । तथा पूर्ववदेव द्व्यक्षरः 'स्वाहा' इति तृतीयो मन्त्रः स्मृत इत्यर्थः । तथा च **'हंसः सोऽहं स्वाहा'** इति मन्त्रत्रयात्मकः मालारूपः षडक्षरहंसमन्त्रः उद्धृतो भवति ।

एतेषां सामर्थ्यमाह– **त्रय इति ॥** एते **त्रयः** हंसः सोहं स्वाहा इति त्रयः द्व्यक्षराः महामन्त्राः **पुरुषार्थचतुष्टये** धर्मार्थकाममोक्षाणां चतुष्टयदानविषये **कल्पवृक्षाः** कल्पवृक्षवत् शीघ्रमपेक्षिताशेषफलप्रदाः । विष्णोः **प्रियाः** प्रीति-सम्पादकाः **विशेषज्ञानदायकाः** विष्णुविषयकसम्यक्ज्ञानजनकाः ॥ २२,२३ ॥

**गु.दी.**— अथ हंसमन्त्रमाह— **वियदिति ॥** वियत्पदवाच्याकाशबीजत्वात् **वियत्** हकारः बिन्दुयुतः, ततः **सः** सकारः इति **युग्मार्णः** व्यक्षरः । ततश्च **'हंसः'**

इत्याकारक एको मन्त्रः । स एव **विपरीतः** प्रतिलोमेनोक्तः **'सोऽहं'** इत्याकारोऽपि द्व्यक्षरो द्वितीयमन्त्रः स्मृत इत्यर्थः । हंस इत्यक्षरयोः व्युत्क्रमेणोच्चारणे सति 'सःहम्' इति भवति ।

तृतीयमन्त्रमाह— **सः सर्गहीन इति ।। सः** सकारः सर्गेण विसर्गेण रहितः । **वेतः** वाकारेण युतः । **उत्तरः** उपरिस्थितो हकारः बिन्दुहीनो दीर्घयुतश्च । तथा च **'स्वाहा'** इति तृतीयमन्त्रः स्मृत इत्यर्थः ।। महामन्त्रत्वमेव विशदयति— **पुरुषार्थेति ।। पुरुषार्थचतुष्टये** धर्मादिमोक्षान्तचतुर्विधपुरुषार्थे **कल्पवृक्षा इव** कल्पवृक्षाः ।। २२,२३ ।।

**मङ्गाली—** मालारूपं हंसमन्त्रमुद्धरति- **वियदिति ।।** अत्र **वियत्** आकाशवीजं हकार इत्यर्थः । स च बिन्दुसहित इति द्रष्टव्यम् । 'बिन्दुहीन' इति वक्ष्यमाणत्वात् । ततः **सः** विसर्गसहितः सकार इत्यर्थः । 'सर्गहीनः' इति वक्ष्यमाणत्वात् । अनेन 'हंसः' इति युग्मार्णः द्व्यक्षरो मन्त्र उक्तो भवति । **सः** हंस इति द्व्यक्षरो मन्त्रः **विपरीतः** व्युत्क्रमोच्चारितश्चेत् 'सोऽहं' इत्यपि द्व्यक्षरो द्वितीयो मन्त्रः स्मृतः । हंस इत्यक्षरयोर्व्युत्क्रमेणोच्चारणे सति 'सः हं' इति भवति । तत्र सकारविसर्गस्य स्थानिवद्भावेन सकारत्वात् 'ससजुषोः रुः' (पा.सू.८-२-६६) इति रुत्वे तस्य 'हशि च'(पा.सू.६-१-११४) इत्युत्वे च 'सोऽहं' इति भवतीति भावः । सः हं इत्यत्रैव **सः** सकारः **सर्गहीनः** सर्गेण विसर्गेण हीनः रहितः कर्तव्यः । उपलक्षणमेतत् । अकाररहितश्च कार्यः । **वेतश्च** वाकारेण इतो युक्तश्च कार्यः । ततश्च 'स्वा' इति भवति । अयं च **बिन्दुहीनोत्तरः** बिन्दुना अनुस्वारेण रहितः । उपलक्षणमेतत् । आकारेण सहितश्च । उत्तरः स्वानन्तरं स्थितः हं इति वर्णः यस्मिन् स तथोक्तः । तथा पूर्ववदेव द्व्यक्षरः 'स्वाहा' इति तृतीयो मन्त्रः स्मृत इत्यर्थः । तथा च **'हंसः सोऽहं स्वाहा'** इति मन्त्रत्रयात्मकः मालारूपः षडक्षरः हंसमन्त्र उद्धृतो भवति ।

एतेषां सामर्थ्यमाह- **त्रय इति ।।** एते त्रयः 'हंसः' 'सोऽहं' 'स्वाहा' इति त्रयो द्व्यक्षराः महामन्त्राः **पुरुषार्थचतुष्टये** धर्मार्थकाममोक्षाणां चतुष्टयदानविषये

**कल्पवृक्षाः** कल्पवृक्षवत् शीघ्रमपेक्षिताशेषफलदाः। विष्णोः **प्रियाः** प्रीतिसंपादकाः। **विशेषज्ञानदायकाः** विष्णुविषयसम्यग्ज्ञानदायकाः ।। २२,२३ ।।

हंसमन्त्रस्य अङ्गन्यासभिधानम्, मन्त्रस्वरूप-जपसंख्याभिधानम्,
जपारम्भसमाप्तिकालकथनं, मन्त्रसामर्थ्यकथनं च

तं.सा. **तैरेव तु द्विरावृत्तैरङ्गमेषां प्रकीर्तितम्** ।। २४ ।।

**श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः ।**
**एकविंशत्सहस्रात्मा सषट्शतमहर्निशम्** ।। २५ ।।

**अर्पणीयो हरौ नित्यं प्रातर्योगो महानयम् ।**
**अशेषदोषदहनस्तत्त्वज्ञानप्रदायकः** ।। २६ ।।

**अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासताम् ।**

त.क.– मन्त्रान्तराद्वैलक्षण्यान्तरमाह— **श्वासेति** ।। विद्वदज्ञयोरप्येतन्मन्त्रजप एव श्वासरूपः सन् नित्यं प्रवर्तते। ननु विद्वदज्ञसाधारणोऽयं मन्त्रः कथमित्याशङ्क्य विदुषामितिकर्तव्यताविशेषमेकस्मिन् दिने जपसङ्ख्यापूर्वमाह— **एकविंशदिति** ।। षट्शतेन सह एकविंशत्सहस्रात्मकसङ्ख्यावज्जपः अहर्निशं सम्पद्यमानो नित्यं प्रातःकाले विदुषा हरावर्पणीयः। ननु 'प्रातर्युजा विबोधयाश्विनावेह गच्छतम्' इत्यत्र प्रातर्योज्य एवोच्यत इत्यत आह— **प्रातरिति** ।। अयमेव महान् प्रातर्योगस्तत्रोक्त इति भावः। ननु विशेषज्ञानहेतुत्वं पूर्वोक्तमयुक्तम्। अविद्याकामकर्मादिर्बहूनामुपसर्गाणां सद्भावादित्यत उक्तं विवृणोति— **अशेषेति** ।। अशेषदोषाणां हननं यस्मात् स तथा। कस्यचिदैहिकापेक्षायामपि किं तत्साधनत्वमप्यस्तीत्यत आह— **अष्टेति** ।। अष्टैश्वर्यमणिमादि चेत्, तदनुपलम्भबाधितमित्यत आह— **कृतादाविति** ।। 'दृष्टार्थ एव मन्त्राणां फलं कलौ वीर्यं तिरोहितं' (४.४६) इति स्वयमेव वक्ष्यति। यद्यपि 'मासव्रतं सार्धशतश्वासकालैरकल्पयत्' (म.भा.ता.नि. २२-१८) इति निर्णये अह्नैव सषट्छतैकविंशत्सहस्रसङ्ख्या पूर्यत इत्युक्तम्।

तथापि, 'पञ्चदशाहानिः मासाः' इत्यादावहःशब्दस्याहोरात्रात्मकदिवसेऽपि प्रयोगान्निर्णये प्रयुक्तस्याहःशब्दस्य तत्परत्वोपपत्तेर्न विरोधः । अत्र—

मुख्यप्राणेन मद्देहे मन्त्रत्रयजपः सदा ।
अनुग्रहाय मे विष्णुप्रीतये क्रियते हि सः ।।

एकविंशत्सहस्रात्मा सषट्च्छतमहर्निशम् ।
तत्सर्वं विष्णुपूजाऽस्तु प्रीयतां प्राणमापतिः ।।

यत्प्राणाद्यदपानाच्च ताभ्यां परमपूरुषौ ।
उपासे मुख्ययोगेन स हंसः प्रीयतां मम ।।

इति पुनरारम्भप्रकारश्च द्रष्टव्यः । यद्यपि 'तैरेव तु द्विरावृत्तैः' इत्येतत् श्वासरूपो नित्यम् इत्यतः प्राक् पठितम् । तथापि सङ्गतत्वात्र व्याख्यायते । त्रयाणां मन्त्राणां षडङ्गन्यासमाह— **तैरेवेति** ।। एषां त्रयाणां मन्त्राणामङ्गं हृदादिकं **द्विरावृत्तैः** द्विवारमुच्चरितैरेतैरेव मन्त्रैः **न्यसनीयं** प्रकीर्तितमित्यर्थः । अक्षरन्यासस्तस्य वक्ष्यते इति भावः ।।

**अ.सं.–** अङ्गन्यासमाह– **तैरिति** ।। **द्विरावृत्तैः** द्विवारमुच्चरितैरेव त्रिभिः मन्त्रैः **एषां** त्रयाणां **अङ्गं** न्यसनीयं प्रकीर्तितम् । 'हंसः हृदयाय नमः । सोऽहं शिरसे स्वाहा । स्वाहा शिखायै वौषट् । हंसः कवचाय हुम् । सोऽहम् नेत्राभ्यां वषट् । स्वाहा अस्त्राय फट्' इति द्विरावृत्या षडङ्गन्यासप्रकारः । एवं सर्वमन्त्रेष्वपि ज्ञेयम् । जपस्वरूपमाह– **श्वासेति** ।। **विद्वदज्ञयोः** विद्वान् ज्ञानी वायुः अज्ञो जीवः तयोरुभयोरपि **नित्यं** प्रतिदिनं क्रियमाण एषां त्रयाणां मन्त्राणां जपः **श्वासरूपः** श्वासात्मक इत्यर्थः । मन्त्रान्तरे वर्णोच्चारणं जपः । हंसमन्त्रे तु श्वास एव जप इति भावः । प्रतिदिनं क्रियमाणः श्वासरूपो जपः कियत्सङ्ख्याक इत्यत आह– **एकविंशदिति** ।। **अहर्निशं** अत्यन्तसंयोगे द्वितीया । अहोरात्रं क्रियमाणः श्वासरूपो जपः **सषट्शतम् एकविंशत्सहसात्मा** षट्शताधिकैकविंशत्सहस्रसङ्ख्याक इत्यर्थः । अहोरात्रं क्रियमाणस्य श्वासरूपहंसमन्त्रजपस्य समाप्त्यारम्भकालावाह– **अर्पणीय इति** ।। अत्र प्रातर्योगशब्दस्य प्रातः योग इति

पदविभागः। **प्रातर्योग** इत्येकपदत्वं च द्रष्टव्यम्। तथाचायमर्थः। यतः अयं श्वासरूपहंसमन्त्रत्रयजपः **नित्यं** प्रतिदिनं **प्रातः** सूर्योदयकाल एव हरौ **अर्पणीयः** समर्पणीयः। जपः समापनीय इति भावः। तथा तदैव हंसमन्त्रत्रयजपः **योगः** युज्यत इति योगः योज्यः प्रयोज्य इत्यर्थः। आरम्भणीय इति यावत्। अतः **अयं महान्** अतिशयितफलप्रदत्वेन श्रेष्ठः हंसमन्त्रः **प्रातर्योगः** प्रातर्योग इत्युच्यते। एतदभिप्रायेणैव 'प्रातर्योगेन गम्यते' इति ऋग्भाष्यटीकायां जयतीर्थाचार्यैः 'प्रातर्योगेन हंसमन्त्रेण' इति व्याख्यातम्। अनेन हंसमन्त्रजपस्य समास्यारम्भकालः प्रातःकाल एवेत्युक्तं भवति। पूर्वजपसमाप्तिप्रकारस्तु प्रातःकाल एव। 'पूर्वेद्युः प्रातरारभ्य अद्य सूर्योदयपर्यन्तं मद्देहे स्थित्वा मुख्यप्राणेन कृतेन मुख्यप्राणप्रेरितेन मया कृतेन च षट्शताधिकैकविंशत्सहस्रसङ्ख्याकश्वासरूपहंसमन्त्रजपेन मुख्यप्राणपतिः हंसरूपी भगवान् श्रीलक्ष्मीनारायणः प्रीयतां' इति हरौ समर्पयेत्। ततः–

मुख्यप्राणेन मद्देहे मन्त्रत्रयजपः सदा।
अनुग्रहाय मे विष्णुः प्रीतये क्रियते हि सः॥

एकविंशत्सहस्रात्मा सषट्शतमहर्निशम्।
तत्सर्वं विष्णुपूजाऽस्तु प्रीयेतां प्राणमापती॥ इति पठेदिति।

आरम्भप्रकारस्तु 'अद्य प्रातरारभ्य श्वः सूर्योदयपर्यन्तं षट्शताधिकैकविंशत्सहस्रसङ्ख्याकश्वासरूपहंसमन्त्रजपं मुख्यप्राणो मद्देहे स्थित्वा करोति तत्प्रेरितोऽहंश्च करोमि' इत्युत्तरजपसङ्कल्पं कुर्यात्। ततः–

यत्प्राण्याद्यदपान्याच्च ताभ्यां परमपूरुषम्।
उपासे मुख्ययोगेन स हंसः प्रीयतामिति॥ इति पठेत्।

केचित्तु **विद्वदज्ञयोः** ज्ञान्यज्ञानिनोरित्यर्थः। शिष्टं पूर्ववत्। तर्हि उभयोरपि साम्यं किं नेति भावेनाह– **अर्पणीय इति॥** पूर्व एवार्थः। यद्यपि ज्ञान्यज्ञानिनोरुभयोरपि श्वासरूपो जपो वर्तते। तथाऽपि ज्ञानी श्वासरूपजपं हरौ समर्पयति अतः तज्जपफलभाग् भवति। अज्ञानी तु न समर्पयति। अतः फलभाक्

न भवति । अतः विद्वदविदुषोः न साम्यम् । समर्पणभावाभावाभ्यां विशेषादिति भाव इत्याहुः ।।

महाफलप्रदत्वमेव विशदयति– **अशेषेति ।। कृतादौ** कृतयुगादौ । **आदिपदेन** त्रेताद्वापरकलियुगानि ग्राह्याणि । तथा च कृतादौ युगचतुष्टयेऽपि **समुपासतां** श्वासरूपहंसमन्त्रं जपतां 'अशेषदोषदहनः' इत्याद्युक्तं फलं भवति । अन्ये तु– कृतादावित्यत्रादिपदेन त्रेताद्वापरावेव ग्राह्यौ । तथा च समुपासतां पुरुषाणां 'कृतयुगे अणिमाद्यष्टैश्वर्यप्रदः । त्रेतायुगे तत्त्वज्ञानप्रदः । द्वापरे अशेषदोषदहनः । कलियुगे 'पुरुषार्थचतुष्टये'(४-२३) इत्यादिना पूर्वमुक्तं फलमित्याहुः ।

ननु एकैकस्मिन् दिवसे श्वासरूपहंसमन्त्रजपस्य षट्शताधिकैकविंशत्सहस्र-सङ्ख्याकत्वमुक्तम् । तदयुक्तं महाभारततात्पर्यनिर्णयविरोधात् । तथाहि– 'द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया' इति (२२.१७९) एकस्यैवाह्नो द्वादशाराशिषु वृहस्पतिसञ्चारेण द्वादशाब्दत्वमभिधाय 'मासव्रतं सार्धशतश्वासकालैरकल्पयत्' इति (२२.१८) चतुश्चत्वारिंशदधिकशतमासानां व्रतसिद्ध्यर्थं पञ्चाशदधिक-शतकालस्य मासरूपत्वमुक्तम् । तथाच 'श्वासकालैरकल्पयत्' इति 'चतुश्चत्वारिंशदधिकशतमासानां व्रतसिद्ध्यर्थं पञ्चाशदधिकशतकालस्य मासरूपत्वमुक्तम् । तथाच श्वासगणने क्रियमाणे सति एकस्मिन् अह्न्येव सषट्शतैकविंशत्सहससङ्ख्या पूर्णा भवति। एवं चात्राहर्निशमित्यहोरात्रात्मकदिवसे क्रियमाणस्य श्वासरूपजपस्य तावत्सङ्ख्याकत्वोक्तौ तद्विरोधः स्यादेवेति चेन्न । तात्पर्यनिर्णये अहःशब्देन अहोरात्रात्मकदिवसस्यैव गृहीतत्वात् । अहःशब्दस्य अहोरात्रात्मकदिवसपरत्वस्य 'पञ्चदशाहानि मासाः' 'दशाहेन तु कर्कन्धुः' (भा. ३.३१.२) इत्यादि श्रुतिस्मृतिसिद्धत्वादिति ।। २४-२६ ।।

**गु.दी.**— हंसमन्त्रस्याङ्गन्यासमाह— **तैरेवेति** ।। द्विरावृत्तैः तैरेव मन्त्रैः **एषां** हंसमन्त्राणाम् **अङ्गं** षडङ्गं प्रकीर्तितम् ।

एतेषु मन्त्रेष्वपूर्वं कश्चन विशेषमाह— **श्वासेति** ।। ज्ञान्यज्ञानिनोः **उभयोः** अपि **नित्यं** प्रतिदिनं श्वासरूपः एतन्मन्त्रजपो वर्तत इत्यर्थः । प्रतिदिनं क्रियमाणो जपः कियत्सङ्ख्याक इत्यत आह— **एकविंशत्सहस्रात्मेति** ।। अहश्च

पदविभागः। प्रातर्योग इत्येकपदत्वं च द्रष्टव्यम्। तथाचायमर्थः। यतः अयं श्वासरूपहंसमन्त्रत्रयजपः **नित्यं** प्रतिदिनं **प्रातः** सूर्योदयकाल एव हरौ **अर्पणीयः** समर्पणीयः। जपः समापनीय इति भावः। तथा तदैव हंसमन्त्रत्रयजपः **योगः** युज्यत इति योगः योज्यः प्रयोज्य इत्यर्थः। आरम्भणीय इति यावत्। अतः **अयं महान्** अतिशयितफलप्रदत्वेन श्रेष्ठः हंसमन्त्रः **प्रातर्योगः** प्रातर्योग इत्युच्यते। एतदभिप्रायेणैव 'प्रातर्योगेन गम्यते' इति ऋग्भाष्यटीकायां जयतीर्थाचार्यैः 'प्रातर्योगेन हंसमन्त्रेण' इति व्याख्यातम्। अनेन हंसमन्त्रजपस्य समाप्त्यारम्भकालः प्रातःकाल एवेत्युक्तं भवति। पूर्वजपसमाप्तिप्रकारस्तु प्रातःकाल एव। 'पूर्वेद्युः प्रातरारभ्य अद्य सूर्योदयपर्यन्तं मद्देहे स्थित्वा मुख्यप्राणेन कृतेन मुख्यप्राणप्रेरितेन मया कृतेन च षट्शताधिकैकविंशत्सहस्रसङ्ख्याकश्वासरूपहंसमन्त्रजपेन मुख्यप्राणपतिः हंसरूपी भगवान् श्रीलक्ष्मीनारायणः प्रीयतां' इति हरौ समर्पयेत्। ततः–

मुख्यप्राणेन मद्देहे मन्त्रत्रयजपः सदा।
अनुग्रहाय मे विष्णुः प्रीतये क्रियते हि सः॥

एकविंशत्सहस्रात्मा सषट्शतमहर्निशम्।
तत्सर्वं विष्णुपूजाऽस्तु प्रीयेतां प्राणमापती॥ इति पठेदिति।

आरम्भप्रकारस्तु 'अद्य प्रातरारभ्य श्वः सूर्योदयपर्यन्तं षट्शताधिकैकविंशत्सहस्रसङ्ख्याकश्वासरूपहंसमन्त्रजपं मुख्यप्राणो मद्देहे स्थित्वा करोति तत्प्रेरितोऽहंश्च करोमि' इत्युत्तरजपसङ्कल्पं कुर्यात्। ततः–

यत्प्राण्याद्यदपान्याच्च ताभ्यां परमपूरुषम्।
उपासे मुख्ययोगेन स हंसः प्रीयतामिति॥ इति पठेत्।

केचित्तु **विद्वदज्ञयोः** ज्ञान्यज्ञानिनोरित्यर्थः। शिष्टं पूर्ववत्। तर्हि उभयोरपि साम्यं किं नेति भावेनाह– **अर्पणीय इति॥** पूर्व एवार्थः। यद्यपि ज्ञान्यज्ञानिनोरुभयोरपि श्वासरूपो जपो वर्तते। तथाऽपि ज्ञानी श्वासरूपजपं हरौ समर्पयति अतः तज्जपफलभाग् भवति। अज्ञानी तु न समर्पयति। अतः फलभाक्

न भवति । अतः विद्वदविदुषोः न साम्यम् । समर्पणभावाभावाभ्यां विशेषादिति भाव इत्याहुः ।।

महाफलप्रदत्वमेव विशदयति– **अशेषेति ।। कृतादौ** कृतयुगादौ । **आदिपदेन** त्रेताद्वापरकलियुगानि ग्राह्याणि । तथा च कृतादौ युगचतुष्टयेऽपि **समुपासतां** श्वासरूपहंसमन्त्रं जपतां 'अशेषदोषदहनः' इत्याद्युक्तं फलं भवति । अन्ये तु– कृतादावित्यत्रादिपदेन त्रेताद्वापरावेव ग्राह्यौ । तथा च समुपासतां पुरुषाणां 'कृतयुगे अणिमाद्यष्टैश्वर्यप्रदः । त्रेतायुगे तत्त्वज्ञानप्रदः । द्वापरे अशेषदोषदहनः । कलियुगे 'पुरुषार्थचतुष्टये'(४-२३) इत्यादिना पूर्वमुक्तं फलमित्याहुः ।

ननु एकैकस्मिन् दिवसे श्वासरूपहंसमन्त्रजपस्य षट्शताधिकेकविंशत्सहस्र-सङ्ख्याकत्वमुक्तम् । तदयुक्तं महाभारततात्पर्यनिर्णयविरोधात् । तथाहि– 'द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया' इति (२२.१७९) एकस्यैवाह्नो द्वादशाराशिषु बृहस्पतिसञ्चारेण द्वादशाब्दत्वमभिधाय 'मासव्रतं सार्धशतश्वासकालैरकल्पयत्' इति (२२.१८) चतुश्चत्वारिंशदधिकशतमासानां व्रतसिद्ध्यर्थं पञ्चाशदधिक-शतकालस्य मासरूपत्वमुक्तम् । तथाच 'श्वासकालैरकल्पयत्' इति चतुश्चत्वारिंशदधिकशतमासानां व्रतसिद्ध्यर्थं पञ्चाशदधिकशतकालस्य मासरूपत्वमुक्तम् । तथाच श्वासगणने क्रियमाणे सति एकस्मिन् अह्न्येव सषट्शतैकविंशत्सहससङ्ख्या पूर्णा भवति। एवं चात्राहर्निशमित्यहोरात्रात्मकदिवसे क्रियमाणस्य श्वासरूपजपस्य तावत्सङ्ख्याकत्वोक्तौ तद्विरोधः स्यादेवेति चेन्न । तात्पर्यनिर्णये अहःशब्देन अहोरात्रात्मकदिवसस्यैव गृहीतत्वात् । अहःशब्दस्य अहोरात्रात्मकदिवसपरत्वस्य 'पञ्चदशाहानि मासाः' 'दशाहेन तु कर्कन्धुः' (भा. ३.३१.२) इत्यादि श्रुतिस्मृतिसिद्धत्वादिति ।। २४-२६ ।।

**गु.दी.**— हंसमन्त्रस्याङ्गन्यासमाह— **तैरेवेति ।।** द्विरावृत्तैः तैरेव मन्त्रैः **एषां** हंसमन्त्राणाम् **अङ्गं** षडङ्गं प्रकीर्तितम् ।

एतेषु मन्त्रेष्वपूर्वं कश्चन विशेषमाह— **श्वासेति ।।** ज्ञान्यज्ञानिनोः **उभयोः** अपि **नित्यं** प्रतिदिनं श्वासरूपः एतन्मन्त्रजपो वर्तत इत्यर्थः । प्रतिदिनं क्रियमाणो जपः कियत्सङ्ख्याक इत्यत आह— **एकविंशत्सहस्रात्मेति ।।** अहश्च

निशा च अहर्निशम्। एकवद्भावो नपुंसकं च। तत् अहर्निशम्। 'कालाध्वनोरत्यन्तसंयोगे' (पा.सू.२-३-५) इति द्वितीया। गुणक्रियादिभिः कालाध्वनोरत्यन्तसंयोगे द्वितीया स्यादिति तदर्थः। अन्तं विराममतिक्रान्त इति अत्यन्तः। स चासौ संयोगः निरन्तरसन्निकर्षः। स च सामर्थ्यादनयोः कालाध्वनोः गुणादिभिरेव। 'मासमधीते' इत्यत्रेव भवतीति क्रियया अत्यन्तसंयोगः कालस्यास्तीति द्वितीया। अहनि एकविंशत्सहस्रात्मा निशायां चैकविंशत्सहस्रात्मा जपो भवति इति प्रत्येकं योज्यम्। तेन 'मासव्रतं सार्धशतश्वासकालैरकल्पयत्' (म.ता.नि.२२-१७७) इत्यादिना न विरोधः। गणनप्रकारस्तु एकमासस्य सपञ्चाशच्छतसहस्रश्वासत्वे द्वादशमासात्मकसंवत्सरस्य अष्टादशशतसहस्रसङ्ख्याकश्वासा भवन्ति। एकसंवत्सरस्याष्टशतोत्तरसहस्रश्वासत्वे द्वादशसंवत्सरस्य गणने एकविंशत्सहस्रत्वे सति षट्शतसङ्ख्याकश्वासा भवन्ति। 'तदहः केशवाज्ञया' इति (म.ता.नि.२२-१७६) एकस्यैवाह्नो द्वादशाब्दत्वोक्त्या अह्न्येव षट्शतोत्तरेकविंशत्सहस्रश्वासा भवन्ति। रात्रावप्येवमेवेति अहोरात्रं मिलित्वा ४३२०० द्विशतोत्तरत्रिचत्वारिंशत्सहस्रसङ्ख्याकश्वासा भवन्ति। एतावत्सङ्ख्याकश्वासमन्त्रे एतावत्सङ्ख्याकवायुरूपाणि वर्तन्ते। वायुरूपेषु तावत्सङ्ख्याकहंसनामकभगवद्रूपाणि सन्तीति ज्ञेयम्। अस्मिन् पक्षे महाभारततात्पर्यनिर्णयोक्ताहःशब्दो मुख्यार्थो भवतीति ज्ञेयम्॥

अन्ये तु अहर्निशमित्यव्ययम्। प्रतिदिनमित्यर्थः। ननु एकैकस्मिन् दिवसे श्वासरूपहंसमन्त्रजपस्य सषट्शतैकविंशत्सहस्रसङ्ख्याकत्वमुक्तम्। न च तद्युक्तम्। महाभारततात्पर्यनिर्णयविरोधत्। तथा हि–

............एकाहेन बृहस्पतिम्।
स्वाज्ञया चारयामास क्षिप्रं द्वादशराशिषु॥
द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया॥ (म.भा.ता.नि. २२-१७६)

इति एकस्यैवाह्नो द्वादशराशिषु गुरुसञ्चारेण द्वादशाब्दरूपत्वं विधाय 'मासव्रतं सार्धशतश्वासकालैरकल्पयत्' (म.भा.ता.नि.२२-१७७) इति सचतुश्चत्वारिंशच्छत-सङ्ख्यानां मासानां व्रतसिद्ध्यर्थं सपञ्चाशच्छतश्वासकालस्य मासरूपत्वमुक्तम्।

तथा च श्वासगणने क्रियमाणे सति एकस्मिन्नहन्येव सषट्शतैकविंशत्सहस्रसङ्ख्याकश्वासा भवन्ति। एवं चात्र अहर्निशमित्यहोरात्रात्मकदिवसे श्वासरूपजपस्य सषट्शतैकविंशत्सहस्रसङ्ख्याकत्वोक्तौ तद्विरोधः स्यादेवेति चेत् न। स्यादेतदेवं यदि तात्पर्यनिर्णयोक्ताहःशब्दस्याहर्मात्रपरत्वं स्यान्न चैवम्। किं नामाहोरात्रात्मकदिवसपरत्वमेव। न चाहःशब्दस्य दिवसपरत्वमप्रसिद्धमिति वाच्यम्। 'पञ्चदशाहानि मासाः' 'दशाहेन तु कर्कन्धुः' (भा.३-३२-२) इत्यादिश्रुतिस्मृति प्रसिद्धत्वादित्याहुः ॥

'विद्वदज्ञयोः' इत्युक्तम्। तर्ह्युभयोरपि जपप्रयुक्तं फलं भवति किमित्यतो ज्ञानिनामेव तत्फलं भवति नान्येषामित्याशयेन ज्ञानिनां तत्फलप्राप्तावुपायमाह– **अर्पणीय इति ॥ प्रातर्योग** इति हंसमन्त्रस्य सञ्ज्ञा। उक्तं च ऋग्भाष्ये 'प्रातर्योगेन गम्यते' (ऋ.भा.अ२-सू१-मं१)इति। **'प्रातर्योगेन हंसमन्त्रेण'** इति(ऋ.भा.टी.अ२-सू१मं१) तट्टीकोक्तेः। प्रातरेव युज्यते आरभ्यते इति प्रातर्योगः पूर्वदिनकृतं जपं हरौ प्रातः समर्प्य पुनरयं मन्त्रः प्रातरेवारम्भणीय इति। तथा च **महान्** महाफलप्रदो बहुकालीनो वाऽयं **प्रातर्योगः** श्वासरूपहंसमन्त्रजपो **नित्यं** प्रतिदिनं शयनादुत्थितेन परिशुद्धेन पुरुषेण हरावर्पणीय इत्यर्थः। तथा च परमात्मनि समर्पणलक्षणोपाय एव फलप्रापकः। न च सोऽज्ञानिनामस्ति। तथा च ज्ञानिभिरेव तत्फलं प्राप्यते नान्यैरिति भावः। श्वासेत्युपलक्षणम्। उच्चारणरूपजपोऽपि ग्राह्यः। अत्रोक्तं हंसरूपं विष्णोरिव वायोरप्यस्तीति ज्ञातव्यम्। यथोक्तं बृहद्भाष्ये–

तस्माद्विष्णोर्व्रतस्यानु नित्यं प्राणव्रतं चरेत्।
हंसोपास्तिः श्वासरूपे तयोर्व्रतमुदीरितम् ॥
हंसरूपौ हि तौ देवौ श्वासोच्छ्वासप्रवर्तकौ ॥ इति

(बृ.भा. अ१-सप्तान्नब्राह्मणम्) ।

मेघसंस्थं हंसरूपं तं विष्णुं परमेश्वरम्।
विरिञ्चिशिवपूर्वेभ्यो नृसिंहानुष्टुभं पराम् ॥

उच्चारयन्तमर्थांश्च व्याचक्षाणं समन्ततः ।
दद‍ृशुर्मुनयो दिव्यमाचार्यं ब्रह्मशर्वयोः ।
एवं वायुं च दद‍ृशुः तत्र हंसस्वरूपिणम् ।
शिवादिभ्यो व्याहरन्तं तामेवानुष्टभं पराम् ।। इत्यैतरेयभाष्ये च ।
(ऐ.भा.प्रघट्टक२-अध्याय२-खण्ड५)

उभयविधजपानुष्ठातुः फलमाह— **अशेषेति ।। अशेषदोषदहनः** प्रदायक इति स्वार्थे णिच् । नन्वनेन योगेन भगवन्तमुपासतामणिमाद्यैश्वर्यप्राप्तिः सर्वयुगेष्वपि भवति किमित्यतो नेत्याह— **कृतादाविति ।। आदिशब्देन** त्रेताद्वापरयोर्ग्रहणम् । कलियुगे मन्त्रवीर्यतिरस्कारस्य वक्ष्यमाणत्वात् (तं.सा.४-४६) । तथा च **कृतादौ** कृतत्रेताद्वापरयुगेषु **समुपासतां** मन्त्राभ्यासरूपोपासनां कुर्वतां **क्रमादष्टैश्वर्यप्रद** इत्यादि ।। २४-२६ ।।

**मङ्गाली**– अङ्गन्यासमाह– **तैरिति ।। द्विरावृत्तैः** द्विवारमुच्चरितैरेव त्रिभिर्मन्त्रैः एषान्त्रयाणामङ्गं न्यसनीयं प्रकीर्तितम् । 'हंसः हृदयाय नमः । सोऽहं सिरसे स्वाहा । स्वाहा शिखायै वौषट् । हंसः कवचाय हुं । सोऽहं नेत्राभ्यां वषट् । स्वाहा अस्त्राय फट्' इति द्विरावृत्या षडङ्गन्यास प्रकारः । एवं सर्वमन्त्रेष्वपि ज्ञेयम् । जपस्य रूपमाह– **श्वासेति ।। विद्वदज्ञयोः** विद्वान् ज्ञानी वायुः, अज्ञो जीवः तयोरुभयोरपि **नित्यं** प्रतिदिनं क्रियमाणः एषां त्रयाणां जपः **श्वासरूपः** श्वासात्मकः । मन्त्रान्तरे वर्णोच्चारणं जपः हंसमन्त्रेषु श्वास एव जप इति भावः । प्रतिदिनं क्रियमाणः श्वासरूपः कियत्सङ्ख्याक इत्यत आह– **एकविंशादिति ।। अहर्निशं** अत्यन्तसंयोगे द्वितीया । **एकविंशत्सहस्रात्मा** एकोत्तरविंशतिसङ्ख्याकसहस्रपरिमितः । पुनः **सषट्शतं** षट्शतपरिमितः **श्वासरूपः** श्वासरूपजपः भवति । अहोरात्रं क्रियमाणस्य श्वासरूपहंसमन्त्रजपस्य समाप्त्यारम्भकालावाह– **अर्पणीय इति ।।** अत्र प्रातर्योगशब्दस्य प्रातः योग इति पदविभागः । प्रातर्योग इति एकपदत्वं च द्रष्टव्यम् । तथा चायमर्थः । यतः अयं श्वासरूपहंसमन्त्रत्रयजपः **नित्यं** प्रतिदिनं प्रातः सूर्योदयकाल एव **हरावर्पणीयः** समर्पणीयः जपसमापनीयं

इति भावः। तथा तदैव हंसमन्त्रत्रयजपः योगः युज्यत इति योगो योज्यः प्रयोज्य इत्यर्थः। आरम्भणीय इति यावत्। अतः **अयं महान्** अतिशयितफलप्रदत्वेन श्रेष्ठो हंसमन्त्रः **प्रातर्योगः** प्रातर्योग इत्युच्यते। एतदभिप्रायेणैव 'प्रातर्योगेन गम्यते' इत्यृग्भाष्यटीकायां टीकाकारैः 'प्रातर्योगेन हंसमन्त्रेण' इति व्याख्यातम्। अनेन हंसमन्त्रजपस्य प्रातः काल एव समाप्त्यारम्भावित्युक्तं भवति। पूर्वजपसमाप्तिप्रकारस्तु प्रातः काल एव 'पूर्वेद्युः प्रातरारभ्य अद्य सूर्योदयपर्यन्तं मद्देहे स्थित्वा मुख्यप्राणकृतेन मुख्यप्राणप्रेरितेन मया कृतेन च षट्शताधिकैकविंशत्सहस्रसङ्ख्याकश्वासरूपहंसमन्त्रजपेन मुख्यप्राणपतिः हंसरूपी भगवान् श्रीलक्ष्मीनारायणः प्रीयतां' इति हरौ समर्प्य

मुख्यप्राणेन मद्देहे मन्त्रत्रयजपस्सदा ।
अनुग्रहाय मे विष्णुप्रीतये क्रियते हि सः ॥

एकविंशत्सहस्रात्मा सषट्शतमहर्निशम् ।
तत्सर्वं विष्णुपूजास्तु प्रीयतां प्राणमापतिः ॥ इति पठेदिति ।

आरम्भप्रकारस्तु 'अद्य प्रातरारभ्य श्वः सूर्योदयपर्यन्तं षट्शताधिकैकविंशत्सहस्रसङ्ख्याकश्वासरूपहंसमन्त्रजपं मुख्यप्राणो मद्देहे स्थित्वा करोति। तत्प्रेरितोऽहं च करोमि' इति उत्तरमन्त्रजपं सङ्कल्प्य

यत्प्राण्याद्यदपान्याच्च ताभ्यां परमपूरुषम् ।
उपासे मुख्ययोगेन स हंसः प्रीयताम् ॥ इति पठेत् । इति ।

केचित्तु **विद्वदज्ञयोः** ज्ञान्यज्ञानिनोरित्यर्थः। शिष्टं पूर्ववत् । तर्ह्युभयोरपि साम्यं किं नेति भावेनाह– **अर्पणीय इति।** पूर्व एवार्थः। यद्यपि ज्ञान्यज्ञानिनोरुभयोरपि श्वासरूपो जपो वर्तते । तथापि ज्ञानी श्वासरूपं जपं हरौ समर्पयति। अज्ञानी तु नेति समर्पणभावाभावाभ्यां विशेषात् ज्ञान्यज्ञानिनोः फलभवाभावाविति न साम्यमिति भावमाहुः ॥

महाफलप्रदत्वमेव विशदयति– **अशेषेति ॥ कृतादौ** कृतयुगादौ। **आदिपदेन**

त्रेताद्वापरकलियुगानि ग्राह्याणि। तथा च कृतादौ कृतादियुगचतुष्टयेऽपि **समुपासतां** श्वासरूपहंसमन्त्रं जपतां 'अशेषदोषदहनः' इत्याद्युक्तं फलं भवति। अन्ये तु कृतादावित्यत्रादिपदेन त्रेताद्वापरावेव ग्राह्यौ। तथा च समुपासतां पुरुषाणां कृतयुगेऽणिमाद्यष्टैश्वर्यप्रदः। त्रेतायुगे तत्त्वज्ञानप्रदः। द्वापरे अशेष-दोषदहनः। कलियुगे तु 'पुरुषार्थचतुष्टये' इत्यादिना पूर्वमुक्तं फलमित्याहुः।

ननु एकैकस्मिन् दिवसे श्वासरूपहंसमन्त्रजपस्य षट्शताधिकैकविंशत्सहस्र-सङ्ख्याकत्वमुक्तम्। तदयुक्तम्। महाभारततात्पर्यनिर्णयविरोधात्। तथा हि– 'द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया' इति एकस्यैवाह्नो द्वादशराशिषु बृहस्पतिसञ्चारेण द्वादशाब्दत्वमभिधाय 'मासव्रतं सार्धशतश्वासैरकल्पयत्' इति चतुश्चत्वारिंशदधिकशतमासानां व्रतसिद्ध्यर्थं पञ्चाशदधिकशतश्वासकालस्य मासरूपत्वमुक्तम्। तथा च श्वासगणने क्रियमाणे सति एकस्मिन्नन्ह्येव षट्शतैकविंशत्सहस्रसङ्ख्या पूर्णा भवति। एवं चात्राहर्निशमिति अहोरात्रात्म-कदिवसे क्रियमाणस्य श्वासरूपजपस्य तावत्सङ्ख्याकत्वोक्तौ तद्विरोधः स्यादेवेति चेन्न। तात्पर्यनिर्णये अहश्शब्देनाहोरात्रात्मकदिवसस्यैव गृहीतत्वात्। अहश्शब्दस्याहोरात्रात्मकदिवसपरत्वस्य 'पञ्चदशाहानि मासाः' 'दशाहेन कर्कन्धुः' (भाग.३-३२-२) इत्यादिश्रुतिस्मृतिसिद्धत्वादिति ॥ २४-२६ ॥

सप्ताक्षरो हंसमन्त्रः

**त.सा. तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तते ॥ २७ ॥**

चतुर्थमन्त्रमुद्धरति— **तारेति**॥ तारस्य योगः सम्बन्धः यस्मिन् स मन्त्रत्रय-समुदायस्तथा **एवमेव** पूर्वोक्तफलसाधक एव। न सर्वसाधारण इत्याह– **ब्रह्मादावेवेति**॥ '**ॐ हंसः सोहं स्वाहा**' इति चतुर्थस्योद्धारो द्रष्टव्यः॥ २७॥

**अ.सं–** हंसमन्त्रान्तरमाह– **तारयोगोऽपीति**॥ तारेण ॐकारेण योगः सम्बन्धः यस्य उक्तस्य मन्त्रस्य सः **तारयोगः**। अयमपि **एवमेव** पूर्वमन्त्रवत् चतुर्थो हंसमन्त्रः। एवकारेण पूर्वमन्त्रसम्बद्ध एवायं न पृथक्। तेनैते चत्वारः

मालामन्त्रा इत्युक्तं भवति । अनेन **'ओं हंसः सोहं स्वाहा'** इति सप्ताक्षरहंसमन्त्र उद्धृतो भवति। अयं सप्ताक्षरः हंसमन्त्रः न सर्वाधिकारिक इत्याह– **ब्रह्मादाविति ।।** चतुर्मुखादिदेवेष्वेवेत्यर्थः। तेन चतुर्थे सप्ताक्षरे हंसमन्त्रे ब्रह्मादिदेवा एवाधिकारिणो जपादौ नान्ये। अत एवाङ्गन्यासफलयोरनुक्तिः। ज्ञानमात्रे तु सर्वेऽप्यधिकारिण इत्युक्तं भवति। केचित्तु तारयोगोऽपि हंसमन्त्रः **एवमेव** पूर्वोक्ताशेषफलप्रद एवेत्यर्थ इत्याहुः ।। २७ ।।

**गु.दी.–** हंसमन्त्रान्तरमाह— **तारेति ।।** तारेण योगः सम्बन्धः यस्य मन्त्रत्रयस्य स **तारयोगः**। स **एवमेवोक्ताशेषफलक** एव, पृथक् मन्त्र एवेति वा। तेनैते मालामन्त्रा इत्युक्तं भवति। ततश्च **'ओं हंसः सोऽहं स्वाहा'** इति मन्त्रनिष्पत्तिः। अयं चतुर्थो मन्त्रः सर्वाधिकरिको नेत्याह— **ब्रह्मादाविति ।।** तेन त एव जपाधिकारिणोऽन्ये, सर्वे ज्ञानमात्र इत्युक्तं भवति ।। २७ ।।

**मङ्गाली–** हंसमन्त्रान्तरमाह– **तारयोगोऽपीति ।।** तारेणोङ्कारेण योगः सम्बन्धः यस्योक्तमन्त्रत्रयस्य स **तारयोगः**। अयमपि **एवमेव** पूर्वमन्त्रत्रयवत् चतुर्थो मन्त्रः। एवकारेण पूर्वमन्त्रसम्बन्ध एवायं न पृथक्। तेनैते चत्वारो मालामन्त्रा इत्युक्तं भवति । अनेन **'ॐ हंसः सोऽहं स्वाहा'** इति सप्ताक्षरो हंसमन्त्र उद्धृतो भवति। अयं सप्ताक्षरहंसमन्त्रः न सर्वाधिकारिक इत्याह– **ब्रह्मादाविति ।।** चतुर्मुखादिदेवेष्वेवेत्यर्थः। तेन चतुर्थे सप्ताक्षरे हंसमन्त्रे ब्रह्मादिदेवा एवाधिकारिणो जपादौ नान्ये। अत एवाङ्गन्यासफलयोरनुक्तिः। ज्ञानमात्रे तु सर्वेऽप्यधिकराण इत्युक्तं भवति। केचित् तारयोगोऽपि हंसमन्त्रः **एवमेव** पूर्वोक्तहंसमन्त्रवत् पूर्वोक्ताशेषफलप्रद एवेत्यर्थ इत्याहुः ।। २७ ।।

हंसमन्त्रस्य ध्यानकथनम्

**तं.सा.** **ध्यायेद्रवीन्दुकरमिन्दुसहस्रलक्ष-**
**कान्तिं प्रियासहितमास्थितमिन्दुबिम्बे ।**
**शङ्खारिदोर्द्वयमुदर्कमहेन्दुबिम्बात्**
**संसिच्यमानममृतेन रमाधिनाथम्** ।। २८ ।।

**त.क.**– चतुर्णां ध्यानप्रकारमाह— **ध्यायेदिति ।। रवीन्दुकरं** सूर्यश्चन्द्रश्च करद्वये तिष्ठतीत्यर्थः । इन्दुसहस्रलक्षाणां कान्तिरिव कान्तिर्यस्य स तथा । अधिकारिविशेषविवक्षया विचित्रोक्तिः । 'इन्दुबिम्बे आस्थितं' इत्यधिष्ठानोक्तिः । **अरिश्चक्रम्** । शङ्खचक्राभ्यां युक्तं दोर्द्वयं यस्येति विग्रहः । **उदर्कमहेति** इन्दुबिम्बविशेषणम् । ततः स्रुतेनामृतेन संसिच्यमानमिति योज्यम् ।। २८ ।।

**अ.सं.**– हंसमन्त्रचतुष्टये ध्यानप्रकारमाह– **ध्यायेदिति । रवीन्दू** सूर्यचन्द्रौ ऊर्ध्वकायोर्यस्य तम् । **शङ्खारी** शङ्खचक्रेऽधोदोर्द्वये यस्य तम् । **सहस्रलक्षेति ।।** अधिकार्यपेक्षया सहस्रेति । लक्षविशेषणं वा । **इन्दुबिम्बे** चन्द्रमण्डलमध्ये विद्यमानम् । **उदर्कमहेन्दुबिम्बात्** उद्रिक्तमहाचन्द्रमण्डलैकदेशात् निःसृतेन अमृतेन संसिच्यमानं । **प्रियया** लक्ष्म्या सहितं रमाधिनाथं ध्यायेदित्यन्वयः ।। २८ ।।

**गु.दी.**– ध्यानमाह— **ध्यायेदिति ।। रवीन्दुकरं** ऊर्ध्वहस्तद्वये रवीन्दुयुक्तम् । अधिकारियोग्यतापेक्षया **सहस्रलक्षेति । इन्दुबिम्बे** चन्द्रमण्डले **प्रियया** रमया **सहितमास्थितम्**। प्रियाभिः क्रुद्धोल्कादिमूर्तिभिः सहितं वा । **उदर्कमहेन्दुबिम्बात्** विंशत्सहस्रयोजनविस्तृतत्वेनोदर्कादुत्कृष्टत्वात् उपरिगताद्वा महाचन्द्रमण्डलैकदेशान्निःसृतेन अमृतेन संसिच्यमानम् ।। २८ ।।

**मङ्गाली**– हंसमन्त्रचतुष्टये ध्यानप्रकारमाह– **ध्यायेदिति ।।** रवीन्दू सूर्यचन्द्रौ ऊर्ध्वकरयोर्यस्य तम् । शङ्खारी शङ्खचक्रे अधोदोर्द्वये यस्य तम् । **सहस्रलक्षेति ।।** अधिकार्यपेक्षया सहस्रेति । लक्षविशेषणं वा। इन्दुबिम्बे आस्थितं चन्द्रमण्डलमध्ये विद्यमानं **उदर्कमहेन्दुबिम्बात्** उद्रिक्तमहाचन्द्रमण्डलैकदेशात् निस्सृतेनामृतेन संसिच्यमानं **प्रियया** लक्ष्म्या समेतं रमाधिनाथं ध्यायेदित्यन्वयः ।। २८ ।।

चतुर्थहंसमन्त्रध्येये वर्णे विशेषभिधानम्

त.सा. **अन्त्यस्य रक्तवर्णो वा ध्येयो विष्णुः सनातनः ।**
**विद्युद्वर्णोऽथवा ध्ये(ज्ञे)यः...................... ।।**

**त.क.–** एवं चतुर्णामपि मन्त्राणां इन्दुवर्णत्वमुक्त्वा चतुर्थस्य वर्णान्तरमप्याह– **अन्त्यस्येति ।।** जपे क्रियमाण इति शेषः । प्रकारान्तरमाह— **विद्युदिति ।।** अन्त्यस्येति वर्तते ।। २९ ।।

**अ.सं.–** चतुर्थमन्त्रे वर्णे विशेषमाह– **अन्त्यस्येति ।। अन्त्यस्य** चतुर्थस्य मन्त्रस्य देवता सनातनः विष्णू रक्तवर्णो ध्येयः । **अथवा** पक्षान्तरम् । विद्युद्वर्णो विष्णुर्ध्येयः ।। २९ ।।

**गु.दी.–** सप्ताक्षरमन्त्रध्याने विशेषमाह— **अन्त्यस्येति ।। अन्त्यस्य** चतुर्थमन्त्रस्य रक्तवर्णो विद्युद्वर्णो वा विष्णुर्ध्येयः ।। २९ ।।

**मङ्गाली–** चतुर्थमन्त्रे वर्णे विशेषमाह– **अन्त्यस्येति ।। अन्त्यस्य** चतुर्थस्य मन्त्रस्य देवता सनातनो विष्णू रक्तवर्णो ध्येयः । **अथवा** पक्षान्तरम् । विद्युद्वर्णो विष्णुर्ध्येयः ।। २९ ।।

अष्टाक्षरो हंसमन्त्रः

**त.सा.** ................. **शक्त्येतः पञ्चमन्त्रयुक्** ।। २९ ।।
**अष्टाक्षरो महामन्त्रस्तैरेवाङ्गैः समन्वितः ।**
**अन्त्यध्यानयुतश्चैव निःशेषपुरुषार्थदः** ।। ३० ।।

**त.क.–** पञ्चमं मन्त्रमुद्धरति— **शक्त्येति ।।** शक्तिः शक्तिबीजंह्रीमित्यक्षरम् । तेन युतश्चेत् पञ्चमो मन्त्र एवं **पञ्चमन्त्रयुक्** पञ्चमन्त्रसमुदायः '**ॐ ह्रीं हंसः सोहं स्वाहा**' इत्याकारः अष्टाक्षरो महामन्त्रः सम्पद्यत इत्यर्थः । अङ्गन्यासमाह– **तैरेवेति।।** अनेन पञ्चाङ्गन्यास एवेति सूचयति । पञ्चपदात्मकत्वान्मन्त्रस्य । पञ्चममन्त्रस्य ध्यानमाह— **अन्त्येति ।।** रक्तवर्णो वा विद्युद्वर्णो वा ध्येय इत्यर्थः ।। फलमाह— **निःशेषेति ।।** एतेषां महामन्त्रेत्यनेन पूर्वेणान्वयः ।। ३० ।।

**अ.सं–** हंसस्यैव मन्त्रान्तरमाह– **शक्त्येत इति ।।** पूर्वोक्तो हंसमन्त्रः शक्त्या शक्तिबीजेन बिन्दुयुक्तेन ह्रीकारेण युक्तश्चेत् अष्टाक्षरो महामन्त्रो भवति । तथा च

**'ॐ ह्रीं हंसः सोऽहं स्वाहा'** इति मन्त्रनिष्पत्तिः। मालामन्त्रत्वज्ञापनाय **पञ्चमन्त्रयुक्** इत्युक्तम्। पञ्चमन्त्रैः युक् सहितः पञ्चमन्त्रमालारूपोऽयं हंसमन्त्र इति भावः। पञ्चमस्याङ्गान्याह– **तैरेवेति।। तैरेव** ॐकारह्रीकारादिभिः पञ्चमन्त्रैरेव **अङ्गैः** पञ्चाङ्गैः समन्वितः। पञ्चमस्य ध्यानप्रकारमाह– **अन्त्येति ।।** अन्त्ये चतुर्थे मन्त्रे रक्तवर्णो वा विद्युद्वर्णो वेति यत् ध्यानमुक्तं तेन युत इत्यर्थः। अन्यत्समानम्। 'ॐ हृदयाय नमः। ह्रीं शिरसे स्वाहा' इत्यादिन्यासप्रकारः। अष्टाक्षरहंसमन्त्रफलमाह– **निःशेषेति ।।** एतन्मन्त्रे सर्वेषामधिकारः। अङ्गन्यासफलयोः कथनात्। सर्वेषामनधिकारादेव हि ब्रह्माद्यधिकारिके सप्ताक्षरमन्त्रेऽङ्गन्यासफलयोरनुक्तिः। नन्वत्र चतुर्थमन्त्रे न्यासफलयोरनुक्तिरसिद्धा। पूर्वमन्त्रोक्तयोर्न्यासफलयोरेवमेवेत्यतिदेशात् इति चेन्न। मन्त्रत्रयोक्तषडङ्गन्यासस्य सप्ताक्षरेऽतिदेशायोगात्। चतुर्थस्य ॐकारस्य न्यासाभावेनावशिष्टत्वात्। सर्वदा सर्वफलाधिकारिणां ब्रह्मादीनां कालविशेषेण फलविशेषस्यातिदेशायोगाच्चेति ।। ३० ।।

**गु.दी.**– पञ्चमहंसमन्त्रमाह— **शक्त्येति ।।** शक्त्या बिन्दुसमेतह्रीङ्कारेण इतो युक्तो अयं मन्त्रसमुदायः **पञ्चमन्त्रयुक्** पञ्चमन्त्रत्वेन युगित्यर्थः। तथा च **'ओं ह्रीं हंसः सोहं स्वाहा'** इत्यष्टाक्षरहंसमालामन्त्रनिष्पत्तिः। त्यजति त्याजयति दोषानिति हम्। गुणसारत्वात्सः। हश्चासौ सश्चेति हंसः। परोक्षत्वात्सः। सर्वहेयत्वादहम्। स्वीयसारविषयस्वीकर्तृत्वात् स्वाहेति मन्त्रार्थः। **तैः** पञ्चमन्त्रैरेव **अङ्गैः** पञ्चाङ्गैः। **अन्त्यस्य** चतुर्थमन्त्रस्य यद्ध्यानं 'रक्तवर्णो वा' (तं.सा.४-२९) इत्यादिनोक्तं तेन युत इत्यर्थः ।। ३० ।।

**मङ्काली**– हंसस्यैव मन्त्रान्तरमाह– **शक्त्येत इति ।।** पूर्वोक्तो हंसमन्त्रः शक्त्या शक्तिबीजेन बिन्दुयुक्तेन ह्रीकारेण युक्तश्चेत् अष्टाक्षरो महामन्त्रो भवति। तथाच **'ॐ ह्रीं हंसः सोऽहं स्वाहा'** इति मन्त्रनिष्पतिः। मालामन्त्रत्वज्ञापनाय **पञ्चमन्त्रयुक्** इत्युक्तम्। पञ्चमन्त्रैर्युक्त सहितः पञ्चमन्त्रमालारूपोऽयं हंसमन्त्र इति भावः। पञ्चमस्याङ्गान्याह– **तैरेवेति ।। तैरेव** ओङ्कारह्रीकारादिभिः

पञ्चमन्त्रैरेव **अङ्गैः** पञ्चाङ्गैस्समन्वितः । पञ्चमस्य ध्यानप्रकारमाह– **अन्त्येति ।। अन्त्ये** चतुर्थमन्त्रे । रक्तवर्णो वा विद्युद्वर्णो वेति यद्ध्यानामुक्तं तेन युत इत्यर्थः । अन्यत्समानम् । 'ॐ हृदयाय नमः । ह्रीं शिरसे स्वाहा' इत्यादि न्यासप्रकारः । अष्टाक्षरहंसमन्त्र फलमाह— **निश्शेषेति ।।** एतन्मन्त्रे सर्वेषामधिकारः । अङ्गन्यासफलयोः कथनात् । सर्वेषामनधिकारादेव हि ब्रह्माद्यधिकारिके सप्ताक्षरमन्त्रेऽङ्गन्यासफलयोरनुक्तिः । नन्वत्र चतुर्थमन्त्रे न्यासफलयोरनुक्तिरसिद्धा । पूर्वमन्त्रोक्तयोर्न्यासफलयोरेवमेवेत्यतिदेशादिति चेन्न । मन्त्रत्रयोक्तषडङ्गन्यासस्य सप्ताक्षरेऽतिदेशायोगात् । चतुर्थस्योङ्कारस्य न्यासाभावेनावशिष्टत्वात् । सर्वदा सर्वफलाधिकारिणां ब्रह्मादीनां कालविशेषण फलविशेषस्यातिदेशायोगाच्चेति ।। ३० ।।

अष्टादशवर्णात्मकः दधिवामनमन्त्रः

**तं.सा.** **मूलं नः प्रतिषेधश्च सोद्देशो भगवानपि ।**
**विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः ।। ३१ ।।**

**अङ्गानि तत्पदैरेव मन्त्रचिन्तामणिस्त्वयम् ।**
**यथेष्टभक्ष्यभोज्यादिदाता मुक्तिप्रदायकः ।। ३२ ।।**

**त.क.**– वामनमन्त्रमुद्धरति— **मूलमिति ।।** सर्ववर्णादित्वात् मूलमोङ्कारः । ततः **नः** नेति शब्दः । ततः **प्रतिषेधो** मकारः । चशब्दात् विसर्गः । ततो **भगवान्** भगवच्छब्दः **सोद्देशः** चतुर्थ्यन्तः । ततो **विष्णुर्**विष्णुशब्दः । सोद्देश इति अत्रापि सम्बध्यते । ततो **भोज्याधिपः** भोज्याधिपशब्दपर्यायान्नाधिपतिशब्दः सोद्देशः । अन्ते स्वाहायुक्तः प्रयुक्तश्चेत् **'ॐ नमो भगवते विष्णवे अन्नाधिपतये स्वाहा'** इति अष्टादशवर्णात्मको मन्त्रो निष्पद्यत इत्यर्थः । अष्टादशवर्णत्वसिद्ध्यर्थं अकारः असंहिततया निर्देष्टव्य इत्यर्थः । 'संहितैकपदे नित्या' इत्यादेः । अङ्गन्यासमाह— **अङ्गानीति ।।** तेन पदानां षट्त्वात् षडङ्गन्यास इति सिद्ध्यति । फलमाह— **मन्त्रेति ।।** मन्त्रेषु चिन्तामणिरिवेति निर्धारणसप्तम्या सर्वाभीष्टसिद्धेरेतदन्त-

रङ्गसाधनमिति सूचयति। एवेत्यनेनोपचरितत्वं निवारयति। तुशब्देनानुपलम्भबाधं निवारयति। चिन्तामणिशब्दप्रयोगेन लब्धं समस्ताभीष्टदातृत्वं विवृणोति— **यथेष्टेति ।।** भक्ष्यभोज्यादीत्यनेन ऐहिकफलमुच्यते। मुक्तिशब्देनाऽमुष्मिकम्। दातेत्यादि तु करणे कर्तृत्वोपचारः भगवत्प्रसादान्तरङ्गसाधनत्वज्ञापनाय। अत एव प्रदायक इति दातेति च ण्वुल्तृचोक्तिः ।।३१,३२।।

**अ.सं.**— मन्त्रचिन्तामणिमन्त्रमाह— **मूलमिति ।। मूलं** ॐकारः। ततो **नः** नकारः **प्रतिषेधः** प्रतिषेधार्थको मकारश्च नमः शब्द इत्यर्थः। **अपिपदात्** सोद्देश इति भगवान् विष्णुर्भोज्याधिप इति त्रयाणां विशेषणम्। ततश्च नमःशब्दादनन्तरं चतुर्थ्यन्तो भगवच्छब्दः। ततः चतुर्थ्यन्तो विष्णुशब्दः। ततः **भोज्याधिप** एतदर्थकान्नाधिपतिशब्दश्चतुर्थ्यन्तः। अन्ते **स्वाहायुक्तः** स्वाहाशब्दयुतः **अष्टादशवर्णकः** अष्टादशाक्षरः मन्त्रः मन्त्रचिन्तामणिरिति स्मृतः। ततश्च **'ॐ नमो भगवते विष्णवे अन्नाधिपतये स्वाहा'** इति मन्त्र उद्धृतो भवति। दधिवामनस्तोत्रोक्तलक्षणानामत्र प्रतीतेरिममेव मन्त्रं दधिवामनमन्त्र इत्यप्याहुः। तस्मिन् पक्षे मन्त्रचिन्तामणिशब्दस्य फलदाने चिन्तामणिसदृशो मन्त्र इत्यर्थः। अङ्गन्यासमाह— **अङ्गानीति ।। तत्पदैः** मन्त्रपदैः **षड्भिः** षडङ्गानि न्यसनीयानि। धृतिरिति च्छन्दो ज्ञेयम्। गायत्रीच्छन्द इत्यप्याहुः। मन्त्रजपफलमाह— **यथेष्टेति ।।** इह लोके यथेष्टभोज्यादिदाता। परलोके मुक्तिप्रदायकः ।। ३१,३२ ।।

**ग.दी.**— अथ दधिवामनमन्त्रापरसञ्ज्ञकं भोज्याधिपतिमन्त्रमाह— **मूलमिति ।। मूलं** ॐकारः। **नः** नकारः। **प्रतिषेधः** तदर्थको मकारः। **सोद्देशः** चतुर्थ्यन्तो **भगवान्** भगवच्छब्दः। **विष्णुः** विष्णुशब्दः। **भोज्याधिपः** तदर्थको भोज्या(अन्ना)धिपतिशब्दः, **अपिपदात्** उभावपि चतुर्थ्यन्तौ। स्वाहायुक्तश्च। तथा चैवं निष्पत्तिः— **'ॐ नमो भगवते विष्णवे भोज्या(अन्ना)धिपतये स्वाहा'** इति। गुणपूर्णत्वात् ॐ। 'विष्लृ व्याप्तौ' इति (धा.पा.१०९५) धातोर्व्याप्ताय अन्नस्य सर्वेन्द्रियोपभोग्यविषयस्य स्वामिने नमः स्वाहेति मन्त्रार्थः।। **तत्पदैः** मन्त्रपदैः **अङ्गानि** षडङ्गानि। **मन्त्रचिन्तामणिः** मन्त्रश्रेष्ठः।

**यथेष्टं** यथाकामम्। **भक्ष्यं** दन्तैः छित्वा छित्वा ग्राह्यमपूपादि। **भोज्यं** जिह्वाव्यापारैकसाध्यमोदनादि। **आदिपदेन** लेह्यचोष्यपेयादिग्रहणम्। **लेह्यं** मुखलालाजलेन द्रवीभावमापाद्यमानं खण्डशर्करादि। **चोष्यं** रसमात्रं गृहीत्वा त्याज्यमिक्षुकादि। **पेयं** दन्तजिह्वाव्यापारानपेक्षं गुडोदकादि। तेषां दाता। **मुक्तिप्रदायकः** स्वार्थे णिच्। मुक्तिप्रद इत्यर्थः ॥ २८ ॥

**मङ्गाली–** मन्त्रचिन्तामणिमन्त्रमाह– **मूलमिति** ॥ **मूलं** ओङ्कारः। ततो **नः** नकारः **प्रतिषेधः** प्रतिषेधार्थको मकारश्च नमश्शब्द इत्यर्थः। सोद्देश इति भगवान् विष्णुः भोज्याधिप इति त्रयाणां विशेषणम्। ततश्च नमःशब्दानन्तरं चतुर्थ्यन्तो भगवच्छब्दः। ततश्चतुर्थ्यन्तो विष्णुशब्दः। ततो **भोज्याधिपः** एतदर्थकोऽन्नाधिपतिशब्दः चतुर्थ्यन्तः। अन्ते **स्वाहायुक्तः** स्वाहाशब्दयुतः **अष्टादशवर्णः** अष्टादशाक्षरः मन्त्रः मन्त्रचिन्तामणिरिति स्मृतः। ततश्च **'ओं नमो भगवते विष्णवे अन्नाधिपतये स्वाहा'** इति मन्त्र उद्धृतो भवति। दधिवामनस्तोत्रोक्तलक्षणानामत्र प्रतीतेरिममेव मन्त्रं दधिवामनमन्त्र इत्यप्याहुः। तस्मिन्पक्षे मन्त्रचिन्तामणिशब्दस्य फलदाने चिन्तामणिसदृशो मन्त्र इत्यर्थः॥

अङ्गन्यासमाह– **अङ्गानीति** ॥ **तत्पदैः** मन्त्रपदैः षड्भिः षडङ्गानि न्यसनीयानि। अस्य मन्त्रस्य धृतिः छन्दः इति ज्ञेयम्। गायत्री छन्द इत्यप्याहुः। मन्त्रजपफलमाह– **यथेष्टेति** ॥ इह लोके यथेष्टभक्षभोज्यादिदाता। परलोके मुक्तिप्रदायकः ॥ ३१,३२ ॥

दधिवामनमन्त्रस्य ध्यानकथनम्

**तं.सा ध्यायेत्सुशुक्लमरविन्ददलायताक्षं**
**सौवर्णपात्रदधिभोज्यमथामृतं च।**
**दोर्भ्यां दधानमखिलैश्च सुरैः समेतं**
**शीतांशुमण्डलगतं रमया समेतम् ॥ ३३ ॥**

**त.क.–** ध्यानमाह—**ध्यायेदिति** ॥ **सुशुक्लमित्यनेन** अतिशुभ्रवर्णत्वमुच्यते।

दधिमिश्रं भोज्यमन्नं **दधिभोज्यम्।** सौवर्णं पात्रं यस्य तत् **सौवर्णपात्रम्। अमृतम्** अमृतकलशम्। **दोर्भ्यां दधान**मित्यनेन दध्यन्नपात्रमेकेन हस्तेन, अन्येनामृतपात्रमिति द्विभुजत्वं लभ्यते। **शीतांशुमण्डलगत**मित्यनेन चन्द्रमण्डले ध्यानमुक्तं वेदितव्यम् ॥ ३३ ॥

**अ.सं.–** ध्यानप्रकारमाह– **ध्यायेदिति ॥ सुशुक्लं** अतिधवलवर्णं सौवर्णपात्रे स्थितं **दधिभोज्यं** दधिमिश्रमन्नममृतं च दोर्भ्यां दधानम्। अनेन द्विभुजत्वमुक्तं भवति। **शीतांशुमण्डलगतं** चन्द्रमण्डलसंस्थम् ॥ ३३ ॥

**गु.दी.–** ध्यानमाह— **ध्यायेदिति ॥ सुशुक्लम्** अतिश्वेतम्। अरविन्दस्य दलं अर्धं तदिव आयते अक्षिणी यस्य सः अरविन्ददलायताक्षस्तम्। सौपर्णपात्रे स्थितं दधिमिश्रितं भोज्यमन्नममृतं च **दोर्भ्यां** दक्षिणवामाभ्यां दधानम्। अनेन द्विभुजत्वमुक्तं भवति।

रुग्मपात्रस्थमन्नं सुललितदधिखण्डं पाणिना दिक्षणेन।
कलशममृतपूर्णं वामहस्ते दधानम्' इति वामनपुराणवाक्यात्।

'पयः कीलालममृतम्'(अ.को.१-११-१५५) इत्यमरात् अमृतं जलमिति केचित् ॥ ३३ ॥

**मङ्गली–** ध्यानप्रकारमाह– **ध्यायेदिति ॥ सुशुक्लं** अतिधवलवर्णं सौवर्णपात्रस्थितदधिभोज्यं दधिमिश्रमन्नं अमृतं च दोर्भ्यां दधानम्। अनेन द्विभुजत्वमुक्तं भवति। **शीतांशुमण्डलगतं** चन्द्रमण्डलसंस्थम् ॥ ३३ ॥

अष्टाक्षरो वामनमन्त्रः

**तं.सा.** **अमृतं(तः) स्वयमुद्देशयुक्तः(तः) सहृदयो मनुः।**
**सतारोऽष्टाक्षरोऽङ्गानि पदैर्न्यस्तैः समस्तकैः ॥ ३४ ॥**

**त.क.–** प्रकारान्तरेण वामनमन्त्रमुद्धरति— **अमृतमिति ॥** अमृतबीजं 'वं' इत्येकमक्षरम्। ततः **स्वयं** वामनशब्दः **उद्देशयुक्त**श्चतुर्थ्यन्तः। ततो **हृदयं** नमःशब्दः। एवं प्रयुक्तश्चेत् सप्ताक्षरो भवति। स एव सतारश्चेत् **'ॐ वं वामनाय**

**नमः'** इत्यष्टाक्षरो मन्त्रो भवति। अङ्गन्यासमाह— **अङ्गानीति**।। व्यस्तैः समस्तकैः पदैरित्यनेन पञ्चाङ्गन्यास उक्तः ।। ३४ ।।

**अ.सं.**– वामनमन्त्रमाह– **अमृतमिति** ।। **अमृतं** अमृतबीजं वामित्यक्षरम्। **स्वयं** स्ववाचको वामनशब्दः स **चोद्देशयुक्तः** चतुर्थ्यन्तः **सहृदयः** नमःशब्दयुक्तः **सतारः** ॐकारयुक्तः अष्टाक्षरो **मनुः** वामनमन्त्र इत्यर्थः। अनेन **'ॐ वां वामनाय नमः'** इति मन्त्रनिष्पत्तिः। अङ्गन्यासमाह– **अङ्गानीति**।। **व्यस्तैः** भिन्नैः चतुर्भिः समस्तेन मिलितेन च। एवं पञ्चभिः पदैः पञ्चाङ्गानि न्यसनीयानीत्यर्थः ।। ३४ ।।

**गु.दी.**– इदानीं वामनमन्त्रमाह— **अमृतमिति** ।। 'वकारोऽमृतबीजं स्यात्' इति वचनेनामृतबीजत्वात् **अमृतं** वकारो बिन्द्वन्तः **स्वयं** वामनः **उद्देशयुक्तः** चतुर्थीयुक्तः **सहृदयः** सनमःशब्दः **सतारः** सप्रणवः अष्टाक्षरो मनुः। **'ओं वं वामनाय नमः'** इति मन्त्रनिष्पत्तिः। वामत्वेन मङ्गलत्वेन स्वयं नयति प्रवर्तते सौन्दर्यं भक्तानां प्रापयतीति वा वामनस्तस्मै नमोऽस्त्वित्यर्थः। **व्यस्तैः** भिन्नैः पदैः **समस्तैः** मिलितैश्चाङ्गानि पञ्चाङ्गानि ।। ३४ ।।

**मङ्काली**– वामनमन्त्रमाह– **अमृतमिति**।। **अमृतं** अमृतबीजं वामित्यक्षरं **स्वयं** स्ववाचको वामनशब्दः। स **चोद्देशयुक्तः** चतुर्थ्यन्तः। **सहृदयो** नमः शब्दयुक्तः **सतारः** ओङ्कारयुक्तः अष्टाक्षरो मनुः वामन इत्यर्थः। अनेन **'ॐ वां वामनाय नमः'** इति मन्त्र उद्धृतो भवति। अङ्गन्यासमाह– **अङ्गानीति**।। **व्यस्तैर्भिन्नैश्चतुर्भिः** समस्तेन मिलितेन च। एवं पञ्चभिः पदैः पञ्चाङ्गानि न्यसनीयानीत्यर्थः ।। ३४ ।।

वामनमन्त्रस्य ध्यानकथनम्

**तं.सा.** **उद्यद्रविप्रभमरीन्द्रदरौ गदां च**
**ज्ञानं च बिभ्रतमजं प्रियया समेतम्।**
**विश्वावकाशमभितः प्रति(पूरयन्तं)भासयन्तं**
**भासा स्वया स्मरत विष्णुमजादिवन्द्यम्** ।। ३५ ।।

**त.क.**– ध्यानमाह—**उद्यदिति** ।। उद्यद्रविप्रभेव प्रभा यस्येति **उद्यद्रविप्रभम्** । अरीन्द्रेत्यादिना चतुर्भुजत्वं, विश्वावकाशमित्यदिना अतिकान्तिमत्त्वमुक्तं वेदितव्यम् ।। ३५ ।।

**अ.सं.**– ध्यानमाह– **उद्यदिति** ।। **अरीन्द्रं** चक्रं **दरं** शङ्खं गदां च **ज्ञानं च** ज्ञानमुद्रां च **बिभ्रतं** चतुर्भिर्भुजैर्दधानम् । **स्वया** स्वकीयया **भासा** कान्त्या **विश्वावकाशं** जगत्प्रदेशं **अभितः** समन्तात् प्रतिभासयन्तम् ।। ३५ ।।

**गु.दी.**– ध्यानमाह— **उद्यदिति** ।। उद्यदादित्यसमानकान्तिम् । **अरीन्द्रः** चक्रं **दरः** शङ्खः तौ बाहुभ्यां बिभ्रतम् । **ज्ञानं** ज्ञानमुद्राम् । **विश्वावकाशं** समग्रस्थानं **स्वया भासा** शरीरकान्त्या **अभितः** सर्वत्र **प्रतिपूरयन्तं** प्रतिभासयन्तम् । विष्णुं स्मरतेत्यर्थः ।। ३५ ।।

**मङ्गाली**– ध्यानमाह– **उद्यदिति** ।। **अरीन्द्रं** चक्रं **दरं** शङ्खं गदा च **ज्ञानं च** ज्ञानमुद्रां च । **बिभ्रतं** चतुर्भिः भुजैर्दधानम् । **स्वया** स्वकीयया **भासा** कान्त्या **विश्वावकाशं** जगत्प्रदेश**मभितः** समंतात् प्रतिभासयन्तम् ।। ३५ ।।

त्रिविक्रम(वामन)गायत्रीमन्त्रः

**तं.सा. त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्प(पु)रः ।**
**धीविदौ च महे विष्णुस्तन्नःप्रेरणमध्यगः ।। ३६ ।।**

**त.क.**— वामनस्यैव मन्त्रान्तरमाह— **त्रिविक्रम इति** ।। त्रिविक्रमशब्दः सोद्देशः । ततः **परो** विश्वरूपशब्दः । विद्महे धीमहे इति पदद्वयात्मको वर्णसमुदायः ततः परश्चतुर्थ्यन्ताद्विश्वरूपशब्दात् परः धीमहीति शब्दः । प्रेरणशब्देन प्रेरणवाचिप्रचोदयादिति शब्दः । तन्न इत्यनेन तन्न इत्याकारकः शब्दो गृह्यते । तन्नःप्रेरणयोर्मध्यं गच्छतीति तथोक्तः, **विष्णुः** विष्णुरिति शब्दः तन्नःप्रचोदयादित्यनयोर्मध्ये प्रयोक्तव्यः । तथाच— **'त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि । तन्नो विष्णुः प्रचोदयात्'** इति मन्त्रो निष्पद्यत इति भावः । यद्यपि—

एकादशाक्षरो मन्त्रो वामनस्य प्रदृश्यते ।
पूर्वोदिताः सप्तवर्णाः विशेषः समुदीर्यते ।।

पीयूषमादिदेवं च मन्दरं चादिमुद्धरेत् ।
विघ्नेशं गोपनं वायुमजादिं च चतुर्मुख ।

इत्यादिना— 'ॐ नमो भगवते वामनाय' इत्येकादशाक्षरादिमन्त्राः शास्त्रेषूद्धृताः । तथापि न तेषामत्यावश्यकतेति तुशब्देनाऽऽह ।। ३६ ।।

**अ.सं.**— वामनगायत्रीमाह– **त्रिविक्रम इति ।।** सोद्देशः त्रिविक्रमशब्दः । **तत्परः** तदनन्तरं स्थितः सोद्देशो विश्वरूपशब्दश्च । तदुपरि धीशब्दविच्छब्दौ । तत्रापि त्रिविक्रमशब्दोपरि विद्शब्दः । विश्वशब्दोपरि धीशब्द इति विवेकः । तयोः विद्शब्दधीशब्दयोरुपरि महे इति शब्दः। तदनन्तरं **तन्नःप्रेरणमध्यगः** प्रेरणशब्देन प्रचोदयादिति पदं गृह्यते । तथा च तन्न इति शब्दः, प्रचोदयादिति शब्दयोर्मध्ये स्थितः विष्णुशब्दश्चेत्यर्थः । ततश्चेत्थं गायत्री निष्पन्ना– **'त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि । तन्नो विष्णुः प्रचोदयात्'** इति । इमां गायत्रीं त्रिविक्रमगायत्रीत्यप्याहुः । अत्राङ्गानामनुक्तत्वात् ॐकारादयो वा पूर्णज्ञानादयो वा षडङ्गानि ज्ञेयानि । नरसिंहगायत्र्युक्तन्यायेन द्विरावृत्ताः त्रयः पादाः षडङ्गानीत्यप्याहुः । गायत्री च्छन्दः । उद्यद्रविप्रभमित्यादि ध्यानं द्रष्टव्यम् ।।३६।।

**गु.दी.**– वामनगायत्रीमप्याह— **त्रिविक्रम इति ।। सोद्देशः** चतुर्थीसहितः त्रिविक्रमशब्दः । विश्वरूपशब्दः **च**शब्दात् सोद्देशः । **तत्पुरः** चतुर्थ्यन्तत्रिविक्रम-विश्वरूपशब्दयोः पुरः **धीविदौ** धीशब्दविच्छब्दौ । अत्र यथायोगं सम्बन्धो न यथाक्रमम् । तयोरुपरि महे इति शब्दः चशब्दान्महिशब्दश्च । तदुत्तरं तन्नः प्रचोदयादिति **तन्नःप्रेरणयोः** तन्नःप्रेरणशब्दयोर्मध्यगः विष्णुशब्दश्च । तथाच **'त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि । तन्नो विष्णुः प्रचोदयात्'** इति मन्त्रनिष्पत्तिः । ऋषिदेवताध्यानानि तु पूर्वमन्त्रोक्तान्येव । त्रिभिः सत्वादिगुणैः विशेषेणानन्याधीनः क्रमः सृष्ट्यादिक्रमो यस्मात् । त्रयो विक्रमा पादविक्षेपा यस्येति वा तस्मै तत्प्रीत्यर्थं विद्महे । विश्वं गुणपूर्णं रूपं यस्येति विश्वं जगत् रूपं प्रतिमा यस्येति वा विश्वरूपः तत्प्रीत्यर्थं ध्यानं सम्पादयाम इति मन्त्रार्थः ।।३६।।

**मङ्गाली–** वामनगायत्रीमाह– **त्रिविक्रम इति ।।** सोद्देशः त्रिविक्रमशब्दः **तत्परस्तदनन्तरं** स्थितः सोद्देशो विश्वरूपशब्दश्च । तदुपरि धीशब्दविद्शब्दौ । तत्रापि त्रिविक्रमशब्दोपरि विद्शब्दः । विश्वशब्दोपरि धीशब्दः इति विवेकः । तयोर्विद्शब्दधीशब्दयोरुपरि महे इति शब्दः । तदनन्तरं **तन्नःप्रेरणमध्यगः** प्रेरणशब्देन प्रचोदयादिति पदं गृह्यते । तथा च तन्न इति शब्द प्रचोदयादिति शब्दयोर्मध्ये स्थितो विष्णुशब्दश्चेत्यर्थः। तथा चेत्थं गायत्री निष्पन्ना '**त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि । तन्नो विष्णुः प्रचोदयात्**' इति । इयं गायत्री त्रिविक्रमगायत्री इत्यप्याहुः । अत्रांगानामनुक्तत्वात् ॐकारादयो वा पूर्णज्ञानादयो वा षडङ्गानि ज्ञेयानि। नरसिंहगायत्र्युक्तन्यायेन द्विरावृताः त्रयः पादाः वा षडङ्गानि ज्ञेयानीत्यप्याहुः । गायत्री छन्दः, उद्यद्रविप्रभमित्यादि ध्यानं द्रष्टव्यम् ।। ३६ ।।

षडक्षर परशुराम-दाशरथिराममन्त्रौ

**तं.सा.** **स्वयमुद्देशसंयुक्तस्तदाद्यर्णपुरःसरः ।**
**सनतिः षडक्षरो मन्त्रो वर्णैरङ्गक्रिया मता** **।। ३७ ।।**

**त.क.–** जामदग्न्यदाशरथ्योर्मन्त्रं युगपदुद्धरति— **स्वयमिति ।।** स्वयंशब्देन बुद्धिस्थो राम उच्यते । स चोद्देशसंयुक्तः **तदाद्यर्णपुरःसरश्च** । तच्छब्देन रामशब्दः परामृश्यते । तस्याऽदिवर्णो रेफः । उपलक्षणमेतत् । अकारोऽनुस्वारः । 'अनलः प्रणवादिश्च सयष्टिर्बीजमीरितः' इत्युक्तेः । तथाच 'रम्' इति वर्णः पूर्वमुच्चार्यो यस्य स तथा। **सनतिः** नतिर्नमःशब्दः, अन्त्ये प्रयोक्तव्येन नमःशब्देन सहितस्तथा । एवं प्रयोगे '**रं रामाय नमः**' इति षडक्षरो मन्त्रो निष्पद्यत इत्यर्थः। अङ्गन्यासमाह— **वर्णैरिति ।।** एतन्मन्त्रगतैः षड्भिर्वर्णैर्हृदयादिषु षट्स्वङ्गेषु अङ्गक्रिया मतेत्यर्थः। केचित् 'तदाद्यर्णपुरःसरः' इति मूलं दृष्ट्वा रामशब्दस्याद्यवर्णः सदीर्घो रेफ उद्धृत इति मत्वा 'रां रामाय नमः' इति मन्त्रनिष्पत्तिमाहुः । 'अनलः प्रणवादिश्च सयष्टिर्बीजमीरितम्' इति वचने प्रणवादिशब्देनाकारस्यैव ग्रहणात् 'रम्' इत्येव बीजाक्षरप्रतीतेः ।। ३७ ।।

**अ.सं.—** इदानीं परशुराममन्त्रं दाशरथीराममन्त्रं च युगपदेवोद्धरति–

**स्वयमिति ।।** **उद्देशसंयुक्तः स्वयं** स्वनामभूतः रामशब्दः । **तदाद्यर्णपुरःसरः** तस्य रामशब्दस्य आदिः प्रथमः अर्णः रा इति वर्णः स च बीजत्वात् बिन्दुसहितो ज्ञेयः । स एव पुरःसरः पूर्वो यस्य रामशब्दस्य स तथोक्तः । **सनतिः** अन्ते नमः शब्दयुक्तः । तथा च **'रां रामाय नमः'** इति परशुराममन्त्रोद्धारः। तथा **'रां रामाय नमः'** इति दाशरथिराममन्त्रश्चोद्धृतो भवति । उभयोरङ्गान्याह– **वर्णैरिति ।।** 'रां हृदयाय नमः । रां शिरसे स्वाहा' इत्यादिप्रकारेण षड्भिर्वर्णैर**ङ्गक्रिया** षडङ्गन्यासस्य करणम् ।। ३७ ।।

**गु.दी.–** अथ भार्गवदाशरथिनाममन्त्रौ युगपदाह— **स्वयमिति ।। स्वयं** रामः **उद्देशसंयुतः** चतुर्थीयुतः । तस्य यः **आद्यर्णः** राकारः स **पुरःसरः** आदौ यस्य सः । स च सबिन्दुः अन्ते **सनतिः** नमःशब्दयुतः षडक्षरो राममन्त्रः । तथा च **'रां रामाय नमः'** इति मन्त्रोद्धारः । षड्भिर्वर्णैः **अङ्गक्रिया** षडङ्गन्यासः ।। ३७ ।।

**मङ्काली–** इदानीं परशुराममन्त्रं दाशरथिराममन्त्रं च युगपदेवोद्धरति– **स्वयमिति ।।** उद्देशसंयुक्तः **स्वयं** स्वनामभूतः रामशब्दः । **तदाद्यर्णपुरःसरः** तस्य रामशब्दस्य आदिः प्रथमवर्णः रा इति वर्णः । स च बीजत्वात् बिन्दुसहितो ज्ञेयः । स एव पुरस्सरः पूर्वो यस्य रामशब्दस्य स तथोक्तः । **सनतिः** अन्ते नमःशब्दयुक्तः। तथा च **'रां रामाय नमः'** इति परशुराममन्त्रः । तथा **'रां रामाय नमः'** इति दशरथिराममन्त्रश्चोद्धृतो भवति । उभयोरङ्गान्याह– **वर्णैरिति ।।** रां हृदयाय नमः, रां शिरसे स्वाहा इत्यादि प्रकारेण षड्भिर्वर्णैर**ङ्गक्रिया** षडङ्गन्यासस्य करणम् ।। ३७ ।।

परशुराममन्त्रस्य ध्यानकथनम्

**तं.सा.** **अङ्गारवर्णमभितोऽण्डबहिः प्रभाभि-**
**र्व्याप्तं परश्वधनुर्धरमेकवीरम् ।**
**ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भि-**
**रावीतमात्मपदवीं प्रतिपादयन्तम्** ।। ३८ ।।

**त.क.—** तत्रादौ परशुरामस्य ध्यानप्रकारमाह— **अङ्गारवर्णमिति ।।** विधूमपावकवत् रक्तवर्णमित्यर्थः । अण्डेत्यविभक्तिकनिर्देशः । अण्डमभितो व्याप्तमित्यन्वयः । प्रकरणादण्डाद्बहिरिति लक्ष्यते । चशब्दश्चाध्याहार्यः । अण्डबहिरित्येकं पदम् । अभितमित्यस्याण्डमित्यध्याहृतेन सम्बन्धः । अण्डस्यान्तर्बहिश्च व्याप्तमित्यर्थः । नन्वण्डान्तर्व्याप्तं विराड्रूपं बहिर्व्याप्तं च वासुदेवाख्यम् । रामः कथमेवमुच्यत इत्यतो घटयति— **प्रभाभिरिति ।।** न त्वाकृत्येत्यर्थः । **परश्वधः** परशुः । अनेन द्विवाहुत्वमुच्यते । **एकवीरो** मुख्यवीरः । **आवीतमुपवीतम् । आत्मपदवीमात्मस्वरूपम् ।** अजादिभ्यः प्रतिपादयन्तमित्यन्वयः । अनेन ज्ञानमुद्रा सूच्यते ।। ३८ ।।

**अ.सं.—** परशुरामध्यानमाह– **अङ्गारवर्णमिति ।। अङ्गारः** धूमहरहितोऽग्निः तत्सदृशवर्णयुक्तम् । आरक्तमिति यावत् । **अभितः** अण्डमिति शेषः । अण्डान्त इति यावत् । **अण्डबहिः** अण्डात् ब्रह्माण्डात् बहिश्च प्रभाभि**र्व्याप्तं** प्रकाशयन्तम् । **परश्वधं** कुठारः । **एकवीरं** वीरमुख्यम् । **अजेशपुरुहूतमुखैः** अजो ब्रह्मा । ईशो रुद्रः । पुरुहूतो इन्द्रः एतदादिभिः सुरैः **आवीतं** परिवृतम् । **आत्मपदवीं** आत्मनः स्वस्य पदवीं स्वरूपम् ।। ३८ ।।

**गु.दी.—** परशुरामध्यानं निरूपयति— **अङ्गारेति ।।** रक्तवर्णम् । **अभितः** अण्डमभितः अण्डान्तरम् । अण्डाद्बहिश्च प्रभाभिर्व्याप्तम् । **एकवीरं** मुख्यवीरम् । **आवीतं** परिवृतम् । **आत्मपदवीं** स्वस्वरूपमार्गं **प्रतिपादयन्तं** उपदिशन्तं **ध्यायेत्** चिन्तयेदित्यर्थः ।। ३८ ।।

**मङ्गाली—** परशुरामध्यानमाह– **अङ्गारवर्णमिति ।। अङ्गारो** धूमरहितोऽग्निस्तत्सदृशवर्णयुक्तम् । आरक्तमिति यावत् । अभितः अण्डमिति शेषः । अण्डान्तरिति यावत् । **अण्डबहिः** अण्डात् ब्रह्माण्डात् बहिश्च **प्रभाभिर्व्याप्तं** प्रकाशयुतम् । **परश्वधं** कुठारः, **एकवीरं** वीरमुख्यं । **अजेशपुरुहूतमुखैः** अजो ब्रह्मा ईशो रुद्रः पुरुहूतः इन्द्रः एतदादिभिः **सुरैरावीतं** परिवृतं । **आत्मपदवीं** आत्मनः स्वस्य पदवीं स्वस्वरूपम् ।। ३८ ।।

दाशरथिरामध्यानाभिधानम्

**तं.सा. श्यामं रवीन्द्वमितदीधितिकान्तियुक्तं**
**ज्ञानं शरं च दधतं प्रियया समेतम् ।**
**स्वात्मस्वरूपममितं हनुमन्मुखेषु**
**सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ।। ३९ ।।**

**त.क.—** दाशरथेर्ध्यानप्रकारमाह— **श्याममिति ।।** दूर्वादलश्याममित्यर्थः । अमितत्वं दीधितिकान्त्योर्विशेषणम् । रवीन्द्वोर्यथाक्रमं दीधितिकान्तिभ्यां सम्बन्धः । रवेरमितरश्मिसदृशरश्मियुक्तम् । इन्दोरमितकान्तिसदृशकान्तियुक्तम् । यद्वा, अमितत्वं रवीन्द्वोरेव विशेषणम् । अमितपदस्य परनिपातः । अमितरवीन्दुदीधितिकान्तियुक्तमित्यर्थः । **ज्ञानं शरं** चेत्यनेन ज्ञानमुद्रा शरश्च दक्षिणहस्ते धार्यत इत्युच्यते । वामेन धनुरित्यर्थात् सिध्यति । प्रिया सीता । हनुमदादिषु स्वात्मस्वरूपं सन्दर्शयन्तमित्यनेन ज्ञानं दधतमित्येतद्विवृतं भवति । **उरुगीर्भिः** अपौरुषेयत्वाद्यतिशयोपेतवाग्भिः प्रमाणैः सहाऽत्मस्वरूपं सन्दर्शयन्तमित्यन्वयः । वेदव्याख्यानरूपाभिः स्ववाग्भिरिति वा । 'हे जनाः स्मरत' इति भक्तजनान् प्रति सम्बोधनम् । **अमितमित्यनेन** प्रागेव प्रौढान् हनुमदादीन् प्रत्युपदेशो निरर्थक इति शङ्का निरस्यते ।। ३९ ।।

**अ.सं.—** दाशरथिरामध्यानमाह— **श्याममिति ।। रवीन्द्वमितदीधितिकान्तियुक्तं** रवेः अमितदीधितिः अपरिमितरश्मिः इन्दोरमितकान्तिः ताभ्यां युतम् । **ज्ञानं** ज्ञानमुद्रां शरं च दधतम् । दक्षिणकरे इति शेषः । वामकरे धनुर्धरमित्यपि ज्ञेयम् । **प्रियया** सीतया समेतम् । **उरुगीर्भीः** वेदवचनैः स्मरतेत्यन्वयः । वेदार्थविचारपूर्वकं तद्गुणत्वेन स्मरणं कुरुध्वमिति भावः ।।३९।।

**गु.दी.—** दाशरथिध्यानमाह— **श्याममिति ।। रवीन्द्वमितदीधितिकान्तियुक्तं** रवेर्दीधितेरधिका या दीधितिः, इन्दोः कान्तेरधिका या कान्तिस्ताभ्याम् अमिताभ्याम् अपरिच्छिन्नाभ्यां युक्तम् । **ज्ञानं** ज्ञानमुद्रां **शरं** बाणं दधतं, **स्वात्मस्वरूपं** स्वस्वरूपं **उरुगीर्भिः** सन्दर्शयन्तमित्यन्वयः । यद्वा नित्यत्वादिना

उत्कृष्टाभिः **गीर्भिः** वेदवाग्भिः **संस्मरत** वेदार्थविचारपूर्वकं तदर्थकगुणवत्त्वेन भगवत्स्मरणं कुरुध्वमिति भावः ।। ३९ ।।

**मङ्गाली–** दाशरथिध्यानमाह– **श्याममिति ।। रवींद्वमितदीधितिकान्तियुक्तं** रवेरमितदीधितिः अमितरश्मिः इन्द्रोरमितकान्तिः ताभ्यां युतम् । **ज्ञानं** ज्ञानमुद्रां शरं च दधतं । दक्षिणकर इति शेषः । वामकरे धनुर्धरमित्यपि ज्ञेयम् । **प्रियया** सीतया समेतम् । **उरुगीर्भिः** उत्कृष्टप्रवचनरूपाभिः अमितं स्वात्मस्वरूपं हनुमन्मुखेषु **सन्दर्शयन्तं** उपदिशन्तमित्यन्वयः । **उरुगीर्भिर्वेद**वचनैः स्मरते-त्यन्वयः । वेदार्थविचारपूर्वकं तद्गुणवत्त्वेन स्मरणं कुरुध्वमिति भावः ।। ३६ ।।

भार्गवदाशरथिरामयोः अष्टाक्षरौ अपरौ मन्त्रौ

**तं.सा. निजगोत्रं तु सोद्देशं पूर्वाक्षरपुरःसरम् ।**
**नत्यन्तं तारपूर्वं च मनुरष्टाक्षरो मतः ।। ४० ।।**

**त.क.–** तयोरेव मन्त्रान्तरमाह– **निजेति ।।** निजगोत्रवाचकं भार्गवराघवेति पदद्वयं **सोद्देशं** चतुर्थीसहितं **पूर्वाक्षरपुरस्सरं** भार्गवराघवयोः पूर्वमक्षरं भकारो रेफश्च । उपलक्षणमेतत् । अकारो बिन्दुश्च । अकारबिन्दुसहितपूर्वाक्षराभ्यां पूर्वमुच्चरिताभ्यां युक्तम् । तार ॐकारः । स सर्वापेक्षया पूर्वमुच्चार्यो यस्य तत् तथोक्तम् । **नत्यन्तं** नमःशब्दोऽन्ते प्रयोज्यः यस्य तत् तथोक्तम् । प्रयुञ्ज्यादित्य-ध्याहृतेन द्वितीयान्तस्यान्वयः । एवं च **'भं भार्गवाय नमः'** इत्यष्टाक्षरो जामदग्न्यमन्त्रः । **'ॐ रं राघवाय नमः'** इत्यष्टाक्षरो राघवमन्त्रश्च मत इत्यन्वयः । 'ॐ भां भार्गवाय नमः' इति जामदग्न्यमन्त्रनिष्पत्तिरित्यप्याहुः ।। ४० ।।

**अ.सं.—** तयो रामयोर्भार्गवराघवमन्त्रौ युगपदुद्धरति– **निजेति ।। तारपूर्वं** ॐकारपूर्वम् । पूर्वे भर्गवपदे राघवपदे च आदिभूते अक्षरे 'भा' 'रा' इति वर्णौ पुरःसरे भार्गवराघवपदापेक्षया पूर्वभाविनी, 'भां' 'रां' इति बिन्दुयुक्तत्वेन वीजभूते यस्य तत् तथोक्तम् । **सोद्देशं** चतुर्थीविभक्त्यन्तम् । **निजगोत्रं** स्वकीयगोत्रवाची भार्गवेति पदं राधवेति पदं च । **नत्यन्तं** नमःशब्दान्तम् । अनेन

**'ॐ भां भार्गवाय नमः'** इति भार्गवाष्टाक्षरो मन्त्रः । तथा **'ॐ रां राघवाय नमः'** इति राघवाष्टाक्षरो मन्त्रश्च उद्धृतो भवति । ध्यानं पूर्ववत् । पूर्णज्ञानादीनि षडङ्गानि ।। ४० ।।

**गु.दी.–** इदानीं रामयोरन्यावपि मन्त्रावाह– **निजेति ।। निजगोत्रं** भार्गवस्य भार्गव इति दाशरथेः राघव इति । पूर्वाक्षरे 'भां' 'राम्' इत्येते पुरस्सरे आदिनी यस्य तत् । **नत्यन्तं** नमःशब्दान्तं तारपूर्वं चेति यत् स अष्टाक्षरो मनुर्मत इत्यन्वयः । तथा च **'ॐ भां भार्गवाय नमः'** इति परशुरामस्य, **'ॐ रां राघवाय नमः'** इति दाशरथिरामस्य चाष्टाक्षरोऽपरो मन्त्रः । रमणीयत्वाद्रामः । रश्च अमश्चेति वा रामः । 'आनन्दरूपो निष्परीमाणः' (गी.भा.१०) इति श्रुतेः । भारतिज्ञानरूपत्वाद्वरणीयत्वाच्च भार्गवः । भृगुकुलाविर्भूतत्वाद्वा, रघुकुलाविर्भूतत्वाद्राघवः तस्मै नम इति मन्त्रत्रयार्थः ।। ४० ।।

**मङ्गाली–** तयो रामयोरन्यौ भार्गवराघवमन्त्रौ युगपदुद्धरति– **निजेति ।। तारपूर्वं** ॐकारपूर्वं **पूर्वाक्षरपुरस्सरं** पूर्वे भार्गवपदे राघवपदे च आदिभूते अक्षरे 'भा' 'रा' इति वर्णौ पुरस्सरे भार्गवराघवपदापेक्षया पूर्वभाविनी 'भां' 'रां' इति बिन्दुयुक्तत्वेन बीजभूते यस्य तत्तथोक्तम् । **सोद्देशं** चतुर्थीविभक्त्यन्तं । **निजगोत्रं** स्वकीयगोत्रवाचिभार्गवेति पदं राघवेति पदं च **नत्यन्तं** नमःशब्दान्तम् । अनेन **'ॐ भां भार्गवाय नमः'** इति भार्गवाष्टाक्षरो मन्त्रः । तथा **'ॐ रां राघवाय नमः'** इति राघवाष्टाक्षरो मन्त्रश्चोद्धृतो भवति । ध्यानं पूर्ववत् । पूर्णज्ञानादीनि षडङ्गानि ।। ४० ।।

भार्गवदाशरथिरामयोः एकाक्षरमन्त्रद्वयकथनम्, मन्त्राणां सामर्थ्यकथनं च

**तं.सा.** **ते च बीजे बीजभूते धर्मादीनामशेषतः ।**
**एते विजयदा मन्त्रा ज्ञानमोक्षप्रदायकाः ।। ४१ ।।**
**हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः ।**

**त.क.—** तयोरेव मन्त्रान्तरमाह— **ते चेति ।।** ते बीजे च मन्त्रान्तरमिति

सम्बन्धः । 'भम्' इति वा, 'भाम्' इति वा बीजाक्षरं जामदग्न्यस्य मन्त्रः । 'रम्' इति बीजाक्षरं राघवस्येति विवेक्तव्यम् । एतन्मन्त्रद्वयं स्तौति– **बीजभूत इति ॥** षष्ठ्यर्थे तसिः । अशेषाणां धर्मादीनां कारणभूत इत्यन्वयः । ध्यानप्रकारस्तु पूर्ववदेवेति भावः । षडक्षराष्टाक्षरैकाक्षराणां फलान्याह— **एत इति ॥** ज्ञानेत्यादि मुमुक्षूणां फलकथनम् । इतरत् त्रैविद्यानाम् ॥ ४१ ॥

**अ.सं.**— भार्गवराघवयोरेकाक्षरमन्त्रद्वयमाह– **ते चेति ॥** ते च भां रां इति **बीजे** बीजाक्षरे अपि मन्त्रौ । अनेन 'भाम्'इति एकाक्षरो भार्गवमन्त्रः । 'राम्' इत्येकाक्षरो राघवमन्त्रश्च उद्धृतो भवति । ज्ञानादीन्यङ्गानि । गायत्री च्छन्दः । ब्रह्मा ऋषिः । ध्यानं च पूर्ववत् । अशेषतः धर्मादीनां चतुर्णां **बीजभूते** कारणभूते इति बीजमन्त्रयोर्विशेषणम् । उक्तानां मन्त्राणां फलमाह– **एते इति ॥** एते पूर्वोक्ताः मन्त्राः कामिनां विजयदाः हिरण्यरत्नराज्यादिसमीचीनाभीष्टफलदाने **सुरद्रुमाः** कल्पवृक्षसदृशाः । निष्कामानां ज्ञानमोक्षप्रदा इत्यर्थः ॥ ४१ ॥

**गु.दी.**– एकाक्षरं मन्त्रद्वयमाह— **त इति ॥ ते तु बीजे** 'भां' 'राम्' इति बीजे **अशेषतः** सर्वेषां धर्मादीनां चतुर्णां **बीजभूते** जनके । तथा च **'रां' 'भाम्'** इति मन्त्रद्वयम् । अत्र ऋषिध्यानन्यासादिकं पूर्वमन्त्रोक्तमेव । छन्दस्तु पूर्वमन्त्रयोर्गायत्री अन्तिमयोस्तु एकाक्षरत्वादुक्तनामकं छन्दः । छन्दःशास्त्रेष्वेकाक्षरस्योक्तताप्रसिद्धेरिति ज्ञेयम् । एवं सर्वत्राप्येकाक्षरमन्त्रे द्रष्टव्यम् ॥ उक्तमन्त्राणां फलमाह— **एत इति ॥** एते मन्त्रा इत्यन्वयः । हिरण्याद्येव समभीष्टं, तद्दाने सुरद्रुम इव विद्यमाना इत्यर्थः ॥ ४१ ॥

**मङ्गली**– भार्गवराघवयोरेकाक्षरमन्त्रद्वयमाह– **ते चेति ॥** ते च 'रां' 'भां' इति बीजे बीजाक्षरेऽपि मन्त्रौ । अनेन **'भां'** इति एकाक्षरो भार्गवमन्त्रः । **'रां'** इत्येकाक्षरो राघवमन्त्रश्चोद्धृतो भवति । पूर्णज्ञानादीन्यङ्गानि गायत्री छन्दः ब्रह्मा ऋषिः । ध्यानं च पूर्ववत् । अशेषतो धर्मादीनां चतुर्णां **बीजभूते** कारणभूते इति बीजमन्त्रयोर्विशेषणम् । उक्तानां मन्त्राणां फलमाह– **एत इति ॥** एते पूर्वोक्ताः मन्त्राः सकामानां विजयदाः हिरण्यरत्नराज्यादिसमीचीनाभीष्टफलदाने **सुरद्रुमाः** कल्पवृक्षसदृशाः, निष्कामानां ज्ञानमोक्षप्रदा इत्यर्थः ॥ ४१ ॥

तं.शा. **कृष्णो गोविच्च कामेतः(लौ) सोद्देशो वल्लवीजनः ॥ ४२ ॥
प्रियश्च तादृशः स्वाहायुगष्टादशवर्णकः ।
पदैरङ्गानि सम्प्रीतिकाममोक्षप्रदो मनुः ॥ ४३ ॥**

**त.क.–** गोपालविषया मन्त्रास्त्रयस्त्रिंशत्प्रभेदिनः ।
तेषु सर्वेषु मन्त्रेषु मन्त्रराजमिमं शृणु ॥

स्वरान्तमिन्द्रसंयुक्तं महामायाविभूषितम् ।
बिन्दुनादसमायुक्तं बीजं त्रैलोक्यमोहनम् ॥

कृष्णं चतुर्थीसंयुक्तं गोविन्दं च तथा वदेत् ।
गोपीजनपदं चोक्त्वा यकारान्तं सवल्लभम् ॥

वह्निजायासमायुक्तं मन्त्रमष्टादशाक्षरम् ।
मन्त्रस्यास्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते ॥

गोपवेषधरो विष्णुर्देवता परिकीर्तिता ।
बीजं तु मन्त्रं सम्प्रोक्तं शक्तिः पत्नी हविर्भुजः ॥

इति सनत्कुमारवचनमनुसरन् अष्टादशाक्षरं कृष्णमन्त्रं सङ्केनोद्धरति– **कृष्ण इति**॥ कामशब्देन कामबीजं 'क्लीं' इत्यक्षरो गृह्यते । 'स्पर्शादिं पुलहं बन्धुं नासिक्यं बीजमुद्धरेत्' इत्युक्तेः। स्पर्शादिः ककारः। पुलहो लकारः। बन्धुरीकारः। नासिक्यमनुस्वार इत्यर्थः।

**कृष्णः** कृष्णशब्दः। सोद्देश इति वर्तते। गोविच्छब्देन तत्समानार्थकगोविन्दशब्द उच्यते। गोशब्दे उपपदे लाभकर्मविदेः क्विपि रूपमेतत्। सोऽपि सोद्देश इति चकारेणाचष्टे। वल्लवीजनप्रियशब्देन तत्पर्यायगोपीजनवल्लभशब्दो गृह्यते। वल्लवीशब्दस्य गोपीजनशब्दपर्यायत्वात्। तादृशशब्दः सोद्देश उच्यते। **स्वाहायुक्** स्वाहाशब्देन युक्तः। तथा च प्रथमतः 'क्लीं' इति कामबीजम्। ततः

'कृष्णाय' इति चतुर्थ्यन्तं पदम्। ततो 'गोविन्दाय' इति पदम्। ततो 'गोपीजनवल्लभाय' इति पदम्। ततः 'स्वाहा' इति पदमुद्धरेत्। ततः **'क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा'** इत्यष्टादशाक्षरो मन्त्रः सम्पद्यत इत्यर्थः। यतिभङ्गस्य काव्यदोषत्वान्नात्र शङ्का। अत्र यद्यपि गोपतिगोपिकाकान्तगोपिकारमणादिशब्दैर्मन्त्रः पूरयितुं शक्यः। तथापि—

........ गोविन्दश्च तथा वदेत्।
गोपीजनपदं चोक्त्वा यकारान्तं सवल्लभम्॥

इत्युक्तेः उपदेशपरम्परागतसम्प्रदायाच्चोक्त एव मन्त्रोद्धारप्रकारः। एवमन्यत्रापि।

वर्णेनैकेन हृदयं त्रिभिश्चैव शिरो मतम्।
चतुर्भिश्च शिखा प्रोक्ता तथैव कवचं मतम्॥
नेत्रं तथा चतुर्वर्णैर्द्वाभ्यामस्त्रैर्महामनुम्।

इति वचनं मनसि निधायाङ्गन्यासमाह— **पदैरिति॥** सन्निधानादेतन्मन्त्रगतैः पदैरङ्गानि न्यसनीयानीत्यर्थः। अनेन पञ्चपदत्वात् पञ्चाङ्गन्यास उक्तः। वचनं तु पाक्षिकषडङ्गन्यासमभिप्रेत्य। गोपीजनवल्लभायेति पदमष्टाक्षरं द्विचतुष्कत्वेन द्वेधा विभज्य गोपीजनेत्यनेन कवचं, वल्लभायेत्यनेन नेत्रमाहेति ध्येयम्। यद्यप्यत्र—

एवं मूलेन विन्यस्य मन्त्रवर्णं तनौ न्यसेत्।
मूर्ध्नि फाले भ्रुवोर्मध्ये नेत्रयोः कर्णयोर्नसोः॥
आस्ये कण्ठे च दोर्मूले हृदयोदरनाभिषु।
लिङ्गमूले तथाऽऽधारे कट्योर्जान्वोश्च गुल्फयोः।
पादयोश्च समस्तेन व्यापकं विन्यसेन्मनुम्॥

इति क्लींकारादीनां हकारान्तानामष्टादशानां वर्णानां मूर्धादिपादान्तेषु अष्टादशस्थानेषु न्यास उक्तः। सोऽपि संग्रहीतव्य एव। तथापि एकाक्षरादिमालामन्त्रान्तानां लाघवायैकीकृत्य वर्णन्यासे प्रकारः सज्जत इति नात्र संग्रहः। एवमन्यत्रापि द्रष्टव्यम्।

अनेन मन्त्रराजेन महेन्द्रत्वं पुरन्दरः ।
जगाम देवदेवेन दत्तं कृष्णेन विष्णुना ॥

दूर्वाससः पुरा शापदसौ भाग्येन पीडितः ।
स एव सुभगत्वं च तेनैव पुनराप्तवान् ॥

बहुनात्र किमुक्तेन पुनश्चरणसाधनैः ।
विनापि ज्ञानमात्रेण लभते सर्वमीप्सितम् ॥

इति वचनं संगृह्णन् फलमाह— **सम्प्रीतीति** ॥ सम्प्रीतिविषयो यः कामो मोक्षो वा तस्य प्रद इत्यनेन 'लभते सर्वमीप्सितम्' इत्येतद्विवृतम् ॥ ४२, ४३ ॥

**अ.सं.**— कृष्णमन्त्रमाह– **कृष्ण इति** ॥ **कामेतः** कामेन कामबीजेन क्लीं इति वर्णेन इतः युक्तः । **सोद्देशः** चतुर्थ्यन्तः कृष्णशब्दः । **गोवित्** गोभिर्वेदैः वेद्यत इति गोवित् । एतदर्थको गोविन्दशब्द इति यावत् । अयमपि सोद्देश इति ज्ञेयम् । ततः **वल्लवीजनः** इत्यत्र वल्लवीशब्देन वल्लवीशब्दपर्यायो गोपीशब्दो विवक्षितः । ततश्च वल्लवीजनः गोपीजनशब्दः । ततः **तादृशः** चतुर्थ्यन्तः। **प्रियः** प्रेयार्थकवल्लभशब्दः । अन्ते स्वाहायुतः । ततश्चैवं मन्त्रः– **'क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा'** इति । इमं मन्त्रं मदनगोपालनाम्नापि व्यवहरन्ति ।

अङ्गमाह– **पदैरिति** ॥ **पदैः** मन्त्रपदैः **पञ्चभिः अङ्गानि** पञ्चाङ्गानि न्यसनीयानि । क्लीं हृदयाय नम इत्यादि । धृतिः छन्दः । गायत्रीच्छन्द इत्यप्याहुः । फलमाह– **सम्प्रीतीति** ॥ **संप्रीतिः** विष्णुप्रीतिः । **कामः** ऐहिकाभीष्टम् ॥ ४२,४३ ॥

**गु.दी.**— अथ मदनगोपालापरपर्यायगोपालकृष्णमन्त्रमाह— **कृष्ण इति** ॥ **कामेतः** कामः क्लीं तेनेतः कृष्णः, **गोवित्** गोविन्दः सोद्देशः, **वल्लवीजनः** गोपीजनः, प्रियश्च वल्लभश्च समुच्चितम् । एतेन गोपीजनवल्लभपदं लभ्यते । तादृशश्चतुर्थ्यन्तः स्वाहायुक् अष्टादशवर्णको मन्त्रः । तथा च **'क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा'** इति गोपालकृष्णाष्टादशाक्षरो मन्त्रः ।

अङ्गान्याह— **पदैरङ्गानीति** ।। पञ्चाङ्गानीत्यर्थः । तत्प्रकारस्तु 'क्लीं हृदयाय नमः' इत्यादिनाऽवधेयः । फलमाह— **सम्प्रीतीति** ।। **सम्प्रीतिः** सुखं समीचीनप्रसादो वा । काम्यन्त इति **कामाः** विषयाः । **मोक्ष** आत्यन्तिकानिष्टनिवृत्तिसहितेष्ट-प्राप्तिलक्षणः तेषां प्रदायकः ।। ४२,४३ ।।

**मङ्गाली**— कृष्णमन्त्रमाह– **कृष्ण इति** ।। **कामेतः** कामेन कामबीजेन क्लीमिति वर्णेन इतो युक्तः । **सोद्देशः** चतुर्थ्यन्तः कृष्णशब्दः । **गोवित्** गोभिर्वेद्यत इति गोवित् । एतदर्थको गोविन्दशब्द इति यावत् । अयमपि सोद्देश इति ज्ञेयम् । ततः **वल्लवीजनः** इत्यत्र वल्लवीशब्देन तत्पर्यायो गोपीशब्दो विवक्षितः । ततश्च वल्लवीजनः गोपीजनशब्दः । ततः **तादृशः** चतुर्थ्यन्तः **प्रियः** प्रियार्थकवल्लभशब्दः । अन्ते स्वाहायुक्तः । ततश्चैवं मन्त्रः– **'क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा'** इति । इमं मन्त्रं मदनगोपालनाम्नापि व्यवहरन्ति । अङ्गमाह– **पदैरिति** ।। **पदैः** मन्त्रपदैः पञ्चभिरङ्गानि पञ्चाङ्गानि न्यसनीयानि । 'क्लीं हृदयाय नमः' इत्यादि । धृतिः छन्दः गायत्रीछन्द इत्यप्याहुः । फलमाह– **संप्रीतीति** ।। **संप्रीतिः** विष्णुप्रीतिः । **कामः** ऐहिकाभीष्टम् ।। ४२,४३ ।।

कृष्णमन्त्रध्यानाभिधानम्

**तं.सा.** **ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं**
**सौन्दर्यसारमरिशङ्खवराभयानि ।**
**दोर्भिर्दधानमजितं सरसं(सुरसं) च भैष्मी-**
**सत्यासमेतमखिलप्रदमिन्दिरेशम् ।। ४४ ।।**

**त.क.**– कल्याणलक्षणयुतं त्रिभङ्गं सिद्धविष्टरे ।
तिष्ठन्तं रुक्मिणीसत्यभामाभ्यां सहितं प्रभुम् ।।

ईषत्कुलितवामांघ्रिसुस्थितेतरमद्भुतम् ।
मेघश्यामं विशालाक्षं पीतवस्त्रं चतुर्भुजम् ।। इति । तथा–

कलापकुसुमश्याममम्भोरुहदलेक्षणम् ।
वेणुनादरतं देवं बर्हिबर्हावतंसकम् ।।

दिव्यपीताम्बरधरं पूर्णचन्द्रनिभाननम् ।
वन्यैश्च मालया पुष्पैः शोभितं वनमालया ।।

नेत्रोत्पलैश्च गोपीनामर्चितं सुन्दराकृतिम् ।
हारकेयूरमकरकुण्डलोदरबन्धनैः ।।

विराजमानं श्रीवत्सकौस्तुभोद्भासितोदरम् ।
गोपाङ्गनापरिवृतं मूले कल्पतरोः स्थितम् ।।

गोपालैर्गोसमूहैश्च वन्यसत्त्वैरमत्सरैः ।
आवृतं देवतावृन्दैः पुष्पवृष्टिकरैरपि ।।

वेणुनादसमाकृष्टचित्तवृत्तिभिरर्चितम् ।
दिव्येन वेणुनादेन नयन्तं स्ववशं जगत् ।।

एवं गोपाङ्गनानाथं ध्यात्वा हृदयपङ्कजे ।
समाहितमना भूत्वा जपेन्मन्त्रमनुत्तमम् ।।

इति वचनाभिप्रेतं संगृह्णन् ध्यानप्रकारमाह– **ध्यायेदिति ।।**

हरिन्मणिः इन्द्रनीलमणिः। तत्सदृशमित्यनेन 'मेघश्यामं विशालाक्षं,' 'कलापकुसुमश्यामम्' इति च विवृतं भवति। जगदेकवन्द्यमित्यनेन 'आवृतं देवतावृन्दैः' इत्यादि । सौन्दर्यस्य सारो यस्मिन् स तथा इत्यनेन 'नेत्रोत्पलैश्च, इत्यादि । अरिश्चक्रम् । वराभयशब्दाभ्यां तत्तन्मुद्रोच्यते । तथा च दक्षिणोर्ध्वबाहौ चक्रं, वामोर्ध्वबाहौ शङ्खं, दक्षिणाधरबाहौ वरमुद्रां, वामाधरबाहौ अभयमुद्रां दधानमित्यनेन 'पीतवस्त्रं चतुर्भुजम्' इत्युक्तं विवृतम्। न केनापि जितमजितम् इत्यनेन 'नयन्तं स्ववशं जगत्' इत्येतद्विवृतम्। **रसः** प्रीतिः। क्रियाविशेषणमेतत्। सरसं रसेन सहितं यथा भवति तथा भैष्मीसत्याभ्यां समेतमित्यनेन 'तिष्ठन्तं रुग्मिणी' इत्यादि। उपलक्षणमेतत्। 'गोपालैर्गो-

**समूहैश्च'** इत्यादिनोक्तैः भक्तविशेषैश्चावृतमिति चशब्देनाचष्टे। 'अखिलपुमर्थ-प्रदम्' इत्यनेन 'कल्याणलक्षणयुतम्' इत्येतत्। न हि दुर्लक्षणः कमपि ददाति इति यावत् ।। ४४ ।।

**अ.सं.—** ध्यानमाह– **ध्यायेदिति ।। हरिन्मणिनिभं** हरिन्मणिः इन्द्रनीलमणिः। तेन निभं सौन्दर्येण **सारम्** उत्तमम् । **सरसम्** रसो रागः अनुरागः। तेन सहितम्। दयायुक्तमिति यावत्। 'सुरसं' इति पाठे अत्यन्तसर्वोत्तममित्यर्थः। **भैष्मीसत्यासमेतं** रुग्मिणीसत्यभामासमेतम् ।।४४।।

**गु.दी.—** ध्यानं निरूपयति— **ध्यायेदिति ।। हरिन्मणिनिभं** इन्द्रनीलमणिवर्णम्। **सौन्दर्यसारं** सौन्दर्यवरम्। 'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः' इत्यभिधानात्। **सरसं** स्नेहसहितं यथा भवति तथा। **भैष्मी** रुग्मिणी। **सत्या** सत्यभामा च ताभ्यां समेतम्। यद्वा **सरसं** रसेन रागेण स्नेहेनेति यावत्। तेन सहितमित्यर्थः। 'सुरसं' इति पाठे सम्यक् सर्वोत्तममित्यर्थः। रसशब्दस्योत्तमार्थकत्वात्। कस्य सुखस्य लः परिग्रहः अस्यास्तीति क्ली। 'बिन्दुर्वाक्या(वक्त्य)धिकत्वं तु' इति वचनादाधिक्यं विन्द्वर्थः। सुखरूपत्वाद् ज्ञानरूपत्वात्सर्वचेष्टकत्वाद्बलरूपत्वात्कृष्णः। कृ चासौ ऋ चासौ ष् चासौ णश्चेति विग्रहः। नियमनादिना सर्वलोककर्षणाद्वा कृष्णः। 'कृष विलेखने' (धा.पा.९९०) इति धातुः। 'यतः कर्षसि देवेश नियम्य सकलं जगत्' (गी.भा.उदा.५-१) इत्यादिस्मृतेः। वेदवेद्यत्वाद्गानाख्यकिरणसम्बन्धाद्वा गोपालनेन तत्सत्ताकर्तृत्वाद्वा गोविन्दः। गोपिकाजनप्रियः तस्मै नम इति मन्त्रार्थः ।। ४४ ।।

**मङ्गाली–** ध्यानमाह– **ध्यायेदिति ।। हरिन्मणिनिभं** हरिन्मणिः इन्द्रनीलमणिः तेन निभम्। सौन्दर्येण सारं उत्तमं, **सरसं** रसो रागः तेन सहितं दयायुक्तमिति यावत्। 'सुरसं' इति पाठे अतिसर्वोत्तममित्यर्थः। **भैष्मीसत्यासमेतं** रुग्मिणीसत्यभामाभ्यां समेतम् ।। ४४ ।।

षडक्षरैकाक्षरकृष्णमन्त्रौ

**तं.सा. सकामः स्वयमुद्देशी नत्यन्तोऽयं षडक्षरः ।**
**तदादिरपि सर्वेष्टचिन्तामणिरु(रुदीरितः)दाहृतः ॥ ४५ ॥**

**त.क.–** अथ वश्यस्य कृष्णस्य मन्त्रः सम्प्रति कथ्यते ।
उद्गीथमुच्चार्य मुखे स्पर्शादिकमनन्तरम् ॥

ऋतधामा ततः पश्चात् क्रोधरूपमनन्तरम् ।
वनमालिनमाकारं श्वसनं विष्णुमस्तकम् ।
नत्यन्तमिति षड्वर्णा मन्त्रस्य कथिता मया ॥

इति वचनं व्याकुर्वन् षडक्षरं कृष्णस्य मन्त्रान्तरमाह– **सकाम इति ॥** कामबीजेन सहितः कामबीजानन्तरमुच्चरित इति यावत् । **उद्देशी** चतुर्थीयुतः स्वयं कृष्णशब्दः **नत्यन्तो** नमःशब्दान्त उच्चरितश्चेत् **'क्लीं कृष्णाय नमः'** इत्ययं वर्णसमुदायः षडक्षरो मन्त्रो भवतीत्यर्थः। अनेन मन्त्रगतमुद्गीथपदं मुच्चैः गीतमिति कामबीजमाह। मुखे आदौ कामबीजमुच्चार्यानन्तरं स्पर्शादिकं स्पर्शादिश्चासौ कश्चेति विग्रहः, 'कादयो मावसानाः स्पर्शाः' इत्युक्तेः, स्पर्शाक्षरेष्वादिभूतं ककारमुच्चारयेत्। ततो ऋतधामा। 'ऋकारो ऋतधामा च पद्मनाभस्ततोऽच्युतः' इत्युक्तेः ऋकारम्। ततः पश्चात् क्रोधरूपं षकारम्। 'षकारः क्रोधरूपी स्यात्, इत्युक्तेः। तदनन्तरं वनमालिनं णकारम्। 'णकारो वनमाली स्यात्' इत्युक्तेः। तत आकारम् विष्णुरकारः। 'अकारो विष्णुरुच्यते' इत्युक्तेः। स मस्तके उपर्युच्चार्यो यस्य तं विष्णुमस्तकं श्वसनं यकारम्, 'यकारः पुरुषात्मा स्याद्वायुः' इत्युक्तेः। तन्नत्यन्तमुच्चारयेत्। एवं कामबीजेन सह ककारऋकारषकारणकाराकारयकाराकाराः नमःशब्दान्ता उच्चरिताश्चेदाहृत्य मन्त्रवर्णाः षट् कथिता भवन्तीति वचनव्याख्यानप्रकारः सूचितः। एकाक्षरं मन्त्रान्तरमुद्धरति– **तदादिरपीति ॥** तच्छब्देन कामबीजसहितं मन्त्रद्वयं परामृश्यते। तस्यादिः कामबीजम्। तन्मात्रमप्येको मन्त्रः। तस्य फलमाह– **सर्वेष्टचिन्तामणिरिति ॥** सर्वेष्टदाने चिन्तामणिरिवोदाहृतः। 'फलानि पूर्वमुक्तान्यानन्त्यादुच्यते पुनः' इत्यादाविति शेषः ॥ ४५ ॥

**अ.सं.**— कृष्णस्यैव मन्त्रान्तरमाह– **सकाम इति ।। सकामः** क्लीकारेण युतः । **उद्देशी** चतुर्थीयुतः । **स्वयं** स्ववाचकः कृष्णशब्दः । **नत्यन्तः** नमोऽन्तः । अनेन **'क्लीं कृष्णाय नमः'** इति मन्त्र उक्तो भवति । एकाक्षरकृष्णमन्त्रमाह– **तदादिरिति ।।** तस्य क्लीं कृष्णाय नम इति मन्त्रस्य आदिः आदौ स्थितः क्लीमितिशब्दोऽपि मन्त्र इत्यर्थः । **सर्वेष्टचिन्तामणिः** सर्वेष्टप्रदाने चिन्तामणिरिवोदाहृतः । यद्वा सर्वेष्टचिन्तामणिरिति क्लीमित्येकाक्षरस्य कृष्णमन्त्रस्यैव संज्ञा । अनेनास्य मन्त्रस्य फलमप्युक्तं भवति । एतन्मन्त्रद्वयस्यापि पूर्णज्ञानादीनि अङ्गानि । गायत्री च्छन्दः । ब्रह्मा ऋषिः । ध्यानं तु पूर्ववदेव ।। ४५ ।।

**गु.दी.**— मन्त्रान्तरमाह— **सकाम इति ।।** आदौ क्लीमित्यनेन युतः **स्वयं** कृष्णः **उद्देशी** चतुर्थ्यन्तः **नत्यन्तः** नमोऽन्तः । तथा च **'क्लीं कृष्णाय नमः'** इति कृष्णषडक्षरमन्त्रः । एकाक्षरकृष्णमन्त्रमाह— **तदिति ।।** क्लीमित्यप्येकाक्षरो मन्त्रः । मन्त्रनामाऽह— **सर्वेष्टेति ।।** अनेन फलमप्यभिहितम् । अत्र ज्ञानैश्वर्येति (तं.सा.४-८) सर्ववैष्णवमन्त्राणां सामान्यत उक्तान्येवाङ्गानि इति ज्ञेयम्।। ४५ ।।

**मङ्गाली**– कृष्णस्यैव मन्त्रान्तरमाह– **सकाम इति ।। सकामः** क्लीकारणेन युतः । **उद्देशी** चतुर्थीयुतः । **स्वयं** स्ववाचकः कृष्णशब्दः । **नत्यन्तः** नमोन्तः । अनेन **'क्लीं कृष्णाय नमः'** इति मन्त्र उक्तो भवति । एकाक्षरकृष्णमन्त्रमाह– **तदादिरिति ।।** तस्य क्लीं कृष्णाय नम इति मन्त्रस्य आदिरादौ स्थितः क्लीमिति शब्दोऽपि मन्त्र इत्यर्थः । **सर्वेष्टचिन्तामणिः** सर्वेष्टप्रदाने चिन्तामणिरिवोदाहृतः । यद्वा सर्वेष्टचिन्तामणिरिति क्लीमित्येकाक्षरस्य कृष्णमन्त्रस्य संज्ञा । अनेनास्य मन्त्रस्य फलमप्युक्तं भवति । एतन्मन्त्रद्वयस्यापि पूर्णज्ञानादीन्यङ्गानि, गायत्री छन्दः, ब्रह्मा ऋषिः ध्यानं तु पूर्ववदेव ।। ४५ ।।

चतुर्थाध्यायोक्तमन्त्राणां उद्दीप्तवीर्यवत्वकथनम्

**तं.सा.** **दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम् ।**
**तत्राप्युद्दीप्तवीर्या हि मन्त्रा अत्र प्रकीर्तिताः ।। ४६ ।।**

**वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि वीर्यदाः ।। ४७ ।।**

**त.क.**— नन्वेतत्कथम्? अनुपलम्भादित्यत आह— **दृष्टार्थ एवेति** ।। नादृष्टद्वारके फले वीर्यं तिरोहितमित्येवार्थः। तत्किं मन्त्राणामुक्तफलजननशक्तिरेव नास्तीत्याशङ्क्यते उत शक्तिसद्भावेऽपि तदकार्यकारीति? नाद्यः। उक्तवचनैः प्रमितत्वात्। न हि प्रमितत्वेऽसत्त्वाशङ्का भवति। किञ्च दृष्टार्थे मन्त्राणां सामर्थ्यं नास्तीत्युच्यते उतादृष्टार्थ इति? नाद्यः। दृष्टार्थे सामर्थ्याभावेऽपि, अदृष्टार्थे सामर्थ्यसद्भावेऽपि तदुक्त्युपपत्तेः। ननु तर्ह्यदृष्टफलान्येव वक्तव्यानि। कथं 'हिरण्यरत्नादिसमभीष्टसुरद्रुमः'(४-४२) इत्यादिना दृष्टफलोक्तिरिति चेन्न। यतः कलावपि वीर्यं तिरोहितमेव। न पुनरसत्। अन्यथैतदुक्तिरयुक्ता स्यात्। न हि प्रतिबन्धात् कार्यमसाधयत् तदसाधनमेवोच्यते। तथा सति वह्निना दह्यत इवोच्यते। मण्यादिप्रतिबन्धकसमवधानदशायां वह्निवीर्यस्य तिरोहितत्वात्। एतेन दृष्टार्थेऽपि सामर्थ्याभावोऽनङ्गीकारपराहतः। एतेन द्वितीयोऽपि परास्त इति भावः।

नन्वेतेषामेव मन्त्राणां फले समर्थानामपि कालबलेन सामर्थ्यं तिरोहितमित्युच्यते उतान्येषामपि ? न द्वितीयः। तेषामप्यत्र वक्तव्यत्वापत्तेः। कालसामर्थ्यात्तिरोधानस्याविशेषात्। आद्ये, तेषां शास्त्रेऽनुद्धार्यत्वप्रसङ्ग इत्यत आह– **तत्रापीति** ।। तिरोहितवीर्या अन्येऽपि मन्त्राः शास्त्रान्तरे उद्धृतास्सन्ति। तथापि तेषां मध्येऽत्रास्माभिरुद्धृताः केचन मन्त्राः कलावप्युद्दीप्तवीर्ययुताः। अयमर्थः। यद्यपि शास्त्रे बहवो मन्त्रा उद्धृताः, कालान्तरे दृष्टादृष्टोभयसाधकाश्च। ततस्तदुद्धारवैयर्थ्यशङ्काऽनवकाशः। तथापीदानीं काले केषाञ्चिदेव मन्त्राणामुद्धारोऽपि नासङ्गतः। मन्त्रान्तराणामिव कालबलेनापि बहुतरं सामर्थ्यतिरोधानाभावादिति ।।

नन्वथाप्युद्धृतस्य कृष्णमन्त्रस्येव वराहादिमन्त्राणां काल उद्दीप्तवीर्यत्वमस्ति न वा? नेति पक्षः वचनव्याघातेन परास्तः। आद्ये तु सर्वेष्टचिन्तामणिरित्यस्यैव कथं विशेषणमुक्तमित्याशङ्क्योत्तरमन्त्रोद्धारस्य सङ्गतिं दर्शयन् विशेषणसार्थक्यमाह— **वासिष्ठेति** ।। प्रवर इत्युभयत्र सम्बध्यते। **वासिष्ठप्रवरो** व्यासः। **वृष्णिप्रवरो** वासुदेवः। अनयोर्मन्त्राः कलावप्युद्दीप्तमन्त्रेष्वपि मध्ये **वीर्यदाः**

अतिशयेन सामर्थ्यशालिनः। तत्रापीति विशेषणादेवातिशयवत्त्वं लभ्यते। वीर्यवत्स्वप्ययं वीर्यवानितीति यथा। यद्यप्युक्ता अपि मन्त्रा उद्दीप्तवीर्या एव। वासिष्ठादिमन्त्रास्त्वचिरेणैव फलप्रदाः। अतो युक्तं तत्र विशेषणमिति भावः ॥ ४६,४७ ॥

**अ.सं.—** ननु मन्त्राणामुक्तफलानुपलम्भेन निष्फलत्वात् मन्त्रकथनं व्यर्थमित्यत आह– **दृष्टार्थ इति ॥ मन्त्राणां** वेदपञ्चरात्राद्युक्तसर्वमन्त्राणां **वीर्यं** फलजनकत्वसामर्थ्यं **तिरस्कृतं** तिरोहितम् । प्रतिबद्धमिति यावत्। वीर्यस्य तिरोहितत्वादेव फलानुफलंभः न तु वीर्याभावेनेति भावः । तर्हि तिरस्कृतवीर्याणां मन्त्राणां कथनं व्यर्थमित्यत आह– **दृष्टार्थ एवेति ॥** प्रत्यक्षार्थ एव। ऐहिकफलविषय एव। न तु पारत्रिकफलेऽपीत्यर्थः। ततश्च दृष्टार्थे तिरस्कृतवीर्यत्वेऽपि पारत्रिकफलजननसामर्थ्यवत्वात् न वैय्यर्थ्यमिति भावः। ननु दृष्टार्थे तिरस्कृतवीर्यत्वे राज्यादिदमत्यादि दृष्टकथनमयुक्तमित्यत आह– **कलाविति ॥** कलावेवेत्यपि सम्बन्धः। कृतादिषु तु ऐहिकविषयेऽपि वीर्यमस्तीति युगान्तराभिप्रायेण दृष्टफलोक्तिरपि युक्तेति भावः। ननु कलौ फलाजनकत्वेऽत्र तादृशमन्त्रकथनं व्यर्थमित्यत आह– **तत्रापीति ॥ तत्रापि** केलावपि ऐहिकफलविषयेऽपि **उद्दीप्तवीर्याः** 'हिर्हेतावधारणे' इत्यभिधानदभिव्यक्तफलजनकत्वसामर्थ्या एव मन्त्राः **अत्र** चतुर्थाध्याये **प्रकीर्तिताः** उक्ताः। अतोऽत्र मन्त्रकथनं न व्यर्थमित्यर्थः । चतुर्थाध्यायोक्तमन्त्रेष्वपि विशेषमाह– **वासिष्ठेति ॥ वासिष्ठः** वेदव्यासः, **वृष्णिप्रवरः** यादवकृष्णः तयोर्मन्त्रा इत्यर्थः। **तत्रापि** चतुर्थाध्यायोक्तेषूद्दीप्तवीर्येष्वपि मन्त्रेष्वित्यर्थः। **वीर्यदाः** वीर्येण फलप्रदाः। अतिशयेन ऐहिकफलजननसमर्था इति भावः। एतेनैव मन्त्रान्तराण्यनुक्त्वा वराहादय एवात्र कुतः कथिता इत्यपि चोद्यं परिहृतं वेदितव्यम्। मन्त्रान्तराणां कलौ तिरस्कृतवीर्यत्वात्। अत्रोक्तानां तु उद्दीप्तवीर्यत्वादिति ॥ ४६,४७ ॥

**गु.दी.—** वेदपञ्चरात्रोक्तसर्वमन्त्रापेक्षया अत्रोक्ता एव मन्त्रा उत्तमाः। तत्रापि कृष्णादिमन्त्रा उत्तमा इत्याशयेन मन्त्रफलभूतैहिकपुरुषार्थविषये सामान्यन्या-

यमाह— **दृष्टार्थेति ।।** प्रत्यक्षविषयेऽर्थे वीर्यं तिरस्कृतम् । अपवादमाह— **तत्रापीति ।।** कलियुगेऽपीत्यर्थः । **अत्र** चतुर्थाध्याये । प्रथमाध्यायोक्तमन्त्राणां 'एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः' (तं.सा.१-४७) इत्यादिना सर्वतोऽप्यतिशयस्य सिद्धत्वान्न विरोधः । तत्रापि विशेषमाह— **वासिष्ठेति ।। तत्रापि** चतुर्थाध्यायोक्तमन्त्रेष्वपि ।। ४६,४७ ।।

**मङ्गाली—** ननु मन्त्राणामुक्तफलानुपलम्भेन निष्फलत्वात् मन्त्रकथनं व्यर्थमित्यत आह– **दृष्टार्थ इति ।। मन्त्राणां** वेदपञ्चरात्राद्युक्तसर्वमन्त्राणां **वीर्यं** फलजनत्वसामर्थ्यं **तिरस्कृतं** तिरोहितं प्रतिबद्धमिति यावत् । वीर्यस्य तिरोहितत्वादेव फलानुपलम्भः । न तु वीर्याभावेनेति भावः । तर्हि तिरस्कृतवीर्याणां मन्त्राणां कथनं व्यर्थमित्यत आह– **दृष्टार्थ एवेति ।।** प्रत्यक्षार्थ एव । ऐहिकफलविषय एव न तु पारत्रिक फलेऽपीत्यर्थः । ननु दृष्टार्थे तिरस्कृतवीर्यत्वे राज्यादिदमित्यादि दृष्टफलकथनमयुक्तमित्यत आह— **कलाविति ।। एवेत्यस्य** कलावित्यनेनापि सबन्धः । कृतादिषु ऐहिकविषयेऽपि वीर्यमस्तीति युगान्तराभिप्रायेण दृष्टफलोक्तिर्युक्तेति भावः । ननु कलौ फलाजनकत्वेऽत्र तादृशं मन्त्रकथनं व्यर्थमित्यत आह– **तत्रापीति ।। तत्रापि** कलावपि ऐहिकफलविषयेऽपि **उद्दीप्तवीर्या हि** 'हिः हेताववधारणे' इत्यभिधानात् अतः व्यक्तफलजनकत्वसामर्थ्या एव मन्त्राः **अत्र** चतुर्थाध्याये **प्रकीर्तिताः** उक्ताः । अतोऽत्र मन्त्रकथनं न व्यर्थमित्यर्थः । प्रथमाध्यायोक्तमन्त्राणां 'एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः'(१-४७) इत्यादिना सर्वत आधिक्यस्योक्तत्वात् । अत्र चतुर्थाध्याय इत्युक्त्या तेषां दृष्टार्थे तिरस्कृतवीर्यत्वं न शङ्कनीयम् । केचित्तु एतच्छङ्कापरिहारार्थं अत्रेत्येतदस्मिन् तन्त्रसार इति व्याचक्षते । चतुर्थोध्यायोक्तमन्त्रेष्वपि विशेषमाह— **वाशिष्ठेति ।। वाशिष्ठो** वेदव्यासः, **वृष्णिप्रवरः** श्रीकृष्णः तयोर्मन्त्रा इत्यर्थः । **अत्रापि** चतुर्थाध्यायोक्तेषु उद्दीप्तवीर्येष्वपि मन्त्रेष्वित्यर्थः । **वीर्यदाः** वीर्येण फलप्रदाः अतिशयेन ऐहिकफलजननसमर्था इति भावः । एतेनैव मन्त्रान्तराण्यनुक्त्वा वाराहादय एवात्र कुतः कथिता इति चोद्यं निरस्तं वेदितव्यम् । मन्त्रान्तराणां कलौ तिरस्कृतवीर्यत्वात् । अत्रोक्तानामतथात्वादिति ।। ४६,४७ ।।

अष्टाक्षरः वेदव्यासमन्त्रः

**तं.सा.** **स्वयं वेदपदारूढः पूर्ववर्णपुरःसरः ।**
**नत्यन्तोऽष्टाक्षरो मन्त्रः प्रियो विज्ञानगोपतेः ॥ ४८ ॥**

**व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ।**
**वादे विजयदो नित्यं यथा युद्धे नृकेसरी ॥ ४९ ॥**

**त.क.**— यादवमन्त्राः कथिताः । वासिष्ठास्तु ते के? येऽतिशयिताः प्रशंसिता इत्यत अष्टाक्षरमन्त्रं तावदाह— **स्वयमिति ॥** व्यासशब्द इत्यर्थः । **वेदपदारूढः** वेदपदस्योपर्युच्चरितः । व्यासपदस्य पूर्वो यो वर्णः व्याकारः, बिन्दुसहितश्चेत्यपि ग्राह्यं, सः पूर्वमुच्चार्यो यस्य सः तथा । **नत्यन्तो** नमःशब्दः अन्त उच्चार्यो यस्य सः व्यासशब्दः । **'व्यां वेदव्यासाय नमः'** इत्यष्टाक्षरात्मको मन्त्रः सम्पद्यते । नत्यन्त इत्यनेनैव व्यासशब्दस्य चतुर्थ्यन्तत्वं लब्धमिति सोद्देश इति नोक्तम् । 'तत्रापि वीर्यदाः' इत्यर्थे हेतुं सूचयति– **प्रिय इति॥** विज्ञानमेव गौः रश्मिः । तत्पतेरित्यनेन भास्करसाम्यमुच्यते ज्ञानप्रदातृत्वलाभाय । तथापि वीर्यवत्त्वं कुत इत्यत आह— **व्याख्येति ॥** व्याख्या च श्रीश्च । व्याख्योपयुक्ता श्रीरिति वा । **कविता** श्लोकग्रथनादिसामर्थ्यम् । 'ततोऽनन्तं नियामकम्' इत्युक्तेः । वादे विजयदो नित्यमिति योगविभागः । यथा युद्धे नृकेसरीत्युक्त्या नृसिंहमन्त्रा अपि पूर्वत्रोपसङ्ख्येया इति सूचयति ॥ ४८,४९ ॥

**अ.सं.**— प्रकृतं वेदव्यासमन्त्रमाह– **स्वयमिति ॥ वेदपदारूढः** वेदादुपरि अनन्तरं स्थितः । **स्वयं** व्यासशब्दः **पूर्ववर्णपुरःसरः** पूर्ववर्णः व्यासपदस्य पूर्वो वर्णः व्या इत्याख्यः स एव बिन्दुयुक्तः सन् पुरःसरः पूर्वभावी यस्य वेदव्यासपदस्य स तथोक्तः । **नत्यन्तः** नमःशब्दान्तः । अनेन व्यासशब्दस्य चतुर्थ्यन्तत्वं च गम्यते । 'नमःस्वस्ति'(पा.सू.२-३-१६)इत्यादिना नमःशब्दयोगे चतुर्थीविधानात् । **विज्ञानगोपतेः** ज्ञानसूर्यस्य वेदव्यासस्य **प्रियः** प्रीतिजनकः । एवं च **'व्यां वेदव्यासाय नमः'** इति मन्त्रस्वरूपनिष्पत्तिः । मन्त्रशक्तिमाह– **व्याख्येति ।**

**व्याख्याश्रीः** व्याख्यनसंपत्। **सर्वविज्ञानं** सर्वविषयकज्ञानं। **कविता** पद्यादिरचनशक्तिः। **आदि**शब्देन शिष्यसम्पत्तिकीर्त्यादि। **वादे** जल्पादिकथायां **नित्यं** नियमेन विजयदः। तत्र दृष्टान्तः– **यथेति**॥ **नृकेसरी** नरसिंहमन्त्रः प्रतिपक्षिजयप्रदः यथा तथाऽयमपीत्यर्थः॥ ४८,४९॥

**गु.दी.**— इदानीं श्रीवेदव्यासमन्त्रं निरूपयति— **स्वयमिति**॥ **वेदपदारूढः** वेदपदपुरस्सरः **स्वयं** व्यासः। **पूर्ववर्णपुरस्सरः** व्यासपदे पूर्ववर्णः व्या इति बिन्द्वन्तः, पुरस्सरः आदौ यस्य मन्त्रस्य स तथा। **नत्यन्तो** नमोऽन्तोऽष्टाक्षरो मन्त्रः। **विज्ञानगोपतेः** ज्ञानभास्करस्य विज्ञानात्मकस्य **गोपतेः** सर्ववेदवाक्याधिनाथस्य वा 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इति कोशात्, व्यासदेवस्य **प्रिय** इष्ट इत्यर्थः। तथा च **'व्यां वेदव्यासाय नमः'** इति अष्टाक्षरव्यासमन्त्राकारः॥

फलमाह— **व्याख्येति**॥ **व्याख्याश्रीः** व्याख्यानविषये शोभा। व्याख्या च श्रीश्चेति वा। **सर्वविज्ञानं** सर्वशास्त्रविषयकं ज्ञानम्। **वादे** विवादे जल्पवितण्डालक्षणे। विशेषतो जयं ददातीति **विजयदः**। अत्र निदर्शनं— **यथेति**॥ **नृकेसरी** नृसिंहः। नरसिंहमन्त्र इति अन्ये॥ ४८,४९॥

**मङ्गाली**— प्रकृतं वेदव्यासं मन्त्रमाह– **स्वयमिति**॥ **वेदपदारूढः** वेदपदादुपरि अनन्तरं स्थितः **स्वयं** व्यासशब्दः **पूर्ववर्णपुरस्सरः** **पूर्ववर्णः** व्यासपदस्य पूर्वो वर्णः व्या इत्याख्यः, स एव विन्दुयुक्तः सन् पुरःसरः पूर्वभावी यस्य वेदव्यासस्य स तथोक्तः। **नत्यन्तः** नमःशब्दान्तः। अनेन व्यासशब्दस्य चतुर्थ्यन्तत्वं च गम्यते। **'नमः स्वस्ति'**(पा.सू.२-३-१६) इत्यादिना नमोयोगे तद्विधानात्। **विज्ञानगोपतेः** ज्ञानसूर्यस्य वेदव्यासस्य **प्रियः** प्रीतिजनकः। एवं च **'व्यां वेदव्यासाय नम'** इति मन्त्रस्वरूपनिष्पत्तिः॥

मन्त्रशक्तिमाह– **व्याख्येति**॥ **व्याख्याश्रीः** व्याख्यानसंपत्। **सर्वविज्ञानं** सर्वविषयज्ञानम्। **कविता** पद्यादिरचनशक्तिः। **आदि**पदेन शिष्यसंपत्तिकीर्त्यादि। वादजल्पादिकथयां **नित्यं** नियमेन विजयदः। तत्र दृष्टान्तः– **यथेति**॥ **नृकेसरी** नरसिंहमन्त्रः प्रतिपक्षिजयप्रदः तथाऽयमपीत्यर्थः॥ ४८,४९॥

वेदव्यासध्यानकथनम्

**तं.सा.** **विज्ञानरोचिःपरिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ।**
**तर्काभयेतं विधिशर्वपूर्वगीर्वणविज्ञानदमानतोऽस्मि ॥ ५० ॥**

**त.क.—** ध्यानप्रकारमाह— **विज्ञानेति ॥** विज्ञानरोचिषा परिपूरितमण्डकोशान्तर्बाह्यं येन स तथा। परनिपातश्छान्दसः। हरितोपलमिन्द्रनीलमाणिक्यम्। तर्काभयेतमित्यनेन द्विभुजत्वम्। तत्रापि तर्कमुद्रा दक्षिणहस्ते। अभयमुद्रा तु वामहस्त इति सूचयति ॥ ५० ॥

**अ.सं.—** ध्यानमाह– **विज्ञानेति ॥** विज्ञानाख्यरोचिषा प्रकाशेन परिपूरितः। अन्तर्बाह्यभागसहितः अण्डकोशः ब्रह्माण्डं यस्य स तथोक्तः तं। हरितोपलस्य मरकतकमणेः आभेव आभा यस्य स तथोक्तः तं। **तर्काभयेतं** ज्ञानमुद्राऽभयमुद्रायुक्तम् ॥ ५० ॥

**गु.दी.–** ध्यानमाह— **विज्ञानेति ॥** विज्ञानमेव **रोचिः** प्रकाशः। 'रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपे' (अ.को.१-४-३४) इत्यमरः। तेन रोचिषा परिपूरिते **अन्तर्बाह्ये** अन्तर्बहिर्भागौ यस्य सः **अण्डकोशो** ब्रह्माण्डलक्षणः स यस्य स तथा तम्। हरितोपलस्याभेव आभा यस्य स तथा तम्। **तर्काभयेतं** तर्कमुद्राभयमुद्राभ्यां युक्तम्। विधिशर्वौ पूर्वौ येषां ते। ते च ते गीर्वाणास्तेषां **विज्ञानदं** योग्यज्ञानप्रदातारम्। 'विज्ञानमात्मयोग्यं स्यात्' (भा.ता.१-८-३) इत्यादेः। **आनतः** प्रणतोऽस्मि ॥ ५० ॥

**मङ्गाली–** ध्यानमाह– **विज्ञानेति ॥** विज्ञानाख्यरोचिषा प्रकाशेन परिपूरितः। अन्तर्बाह्यभागसहितः अण्डकोशः ब्रह्माण्डं यस्य स तथोक्तः तं। हरितोपलस्य मरतकमणेराभेवाभा यस्य स तथोक्तः तं। **तर्काभयेतं** ज्ञानमुद्राभयमुद्राभ्यां युक्तम् ॥ ५० ॥

व्यासगायत्रीमन्त्रः

**तं.सा.** **ज्ञानानन्दपुरः पूर्णो विद्महे धीमहे तथा ।**
**तन्नःप्रेरणमध्ये तु व्यासो मन्त्राधिपाधिपः ॥ ५१ ॥**

**त.क.**—अस्यैव मन्त्रान्तरमाह–**ज्ञानेति ।। ज्ञानानन्दपुरः** ज्ञानानन्दशब्दयोः पूर्वं **पूर्णः** पूर्णशब्दः । ज्ञानानन्दशब्दौ पुरस्तादुच्चार्यौ यस्येति वा । ततो विद्महे इति तिङन्तं पदं, धीमहि इति तिङन्तं च यथाक्रमं प्रथमद्वितीययोरुच्चारणीयम् । तन्न इति षष्ठ्यन्तं तन्न इत्याकारकं पदमुच्यते। प्रेरणेति तदर्थकं प्रचोदयादिति तिङन्तं पदम् । तयोर्मध्ये व्यासशब्द उच्चरितश्चेत् **'पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि । तन्नो व्यासः प्रचोदयात् ।'** इत्याकारको मन्त्रो मन्त्राधिपानां वराहादीनामप्यधिपः । अधिकफलदानादित्यर्थः ।। ५१ ।।

**अ.सं.**— वेदव्यासगायत्रीमन्त्रमाह– **ज्ञानेति ।। ज्ञानानन्दपुरः** ज्ञानानन्दशब्दाभ्यां पुरः पूर्वम् । **पूर्णः** पूर्णशब्दः । तौ च चतुर्थ्यन्तौ ज्ञातव्यौ । तथा ज्ञानशब्दात् परं विद्महे इति शब्दः । आनन्दशब्दात्परं धीमहीति शब्दः । तदनन्तरं **तन्नः प्रेरणमध्ये तु** तन्नः शब्दप्रचोदयाच्छब्दयोर्मध्ये व्यासशब्दः प्रयोक्तव्यः । अयं मन्त्रः सर्वमन्त्राधिपानां सर्वमन्त्रश्रेष्ठानामपि अधिकः अत्युत्कृष्ट इत्यर्थः । तथाच **'पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि । तन्नो व्यासः प्रचोदयात्'** इति व्यासगायत्री उद्धृता भवति । ज्ञानादिकं षडङ्गम् । गायत्री छन्दः ।। ५१ ।।

**गु.दी.**— व्यासगायत्रीमाह— **ज्ञानेति ।।** ज्ञानानन्दशब्दयोः **पुरः** पूर्वं **पूर्णः** पूर्णशब्दः । **तथा** तदग्रे क्रमात् विद्महे धीमहे । तन्नश्शब्दप्रचोदयादिति शब्दयोर्मध्ये व्यासशब्दः प्रथमान्तः । **मन्त्राधिपाधिपः** मन्त्रश्रेष्ठानामुत्तमः । तथा च **'पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि । तन्नो व्यासः प्रचोदयात्'** इति चतुर्विंशत्यक्षरव्यासगायत्रीमन्त्रप्रयोगः ।। ५१ ।।

**मङ्गाली**– वेदव्यासगायत्रीमाह– **ज्ञानेति ।। ज्ञानानन्दपुरः** ज्ञानानन्दशब्दाभ्यां पुरः पूर्वं पूर्णशब्दः । तौ चतुर्थ्यन्तौ ज्ञातव्यौ । तथा ज्ञानशब्दात् परं विद्महे इति आनन्दशब्दात्परं धीमहीति शब्दः । तदनन्तरं **तन्नः प्रेरणमध्ये तु** तन्नःशब्दप्रचोदयाच्छब्दयोर्मध्ये व्यासशब्दः प्रयोक्तव्यः । अयं मन्त्रः सर्वमन्त्राधिपानां सर्वमन्त्रश्रेष्ठानामधिकः अत्युत्कृष्ण इत्यर्थः । तथा च– **'पूर्णज्ञानाय विद्महे पूर्णानन्दाय धीमहि । तन्नो व्यासः प्रचोदयात्'** इति व्यासगायत्री उद्धृता भवति । ज्ञानादि षडङ्गं गायत्री छन्दः ।। ५१ ।।

एकाक्षरः व्यासमन्त्रः

**त.सा.** **आदिबीजं स्थिराशेषज्ञानबीजं विमुक्तिदम् ।**
**सर्वपापक्षयकरं सर्वव्याधिविनाशनम्** ॥ ५२ ॥

**त.क.—** तस्यैव एकाक्षरं मन्त्रान्तरमाह— **आदीति** ॥ व्यासशब्दस्यादौ विद्यमानं **'व्यां'** इति बीजाक्षरं मन्त्रान्तरमिति शेषः । बीजशब्देन सानुस्वारत्वं सूचयति । अत्रापि मन्त्राधिप इत्यनुवर्तत इत्यभिप्रेत्योभयोरपि मन्त्राधिपत्यं फलोक्त्या विवृणोति— **स्थिरेति** ॥ स्थिराश्च ते अशेषाश्च जीवेश्वरप्रकृत्यादायः । तद्विषयं ज्ञानबीजम् । स्थिरं च तदशेषज्ञानं चेति वा । ज्ञानस्य स्थिरत्वं कुतर्काद्यप्रतिघातनीयत्वम् । **विमुक्तिदं** विशेषबन्धमुक्तिदम् । लिङ्गशरीरभङ्गदं वा । प्रथमान्तानामिदं मन्त्रद्वयमित्यध्याहृतेनान्वयः ॥ ५२ ॥

**अ.सं.—** एकाक्षरवेदव्यासमन्त्रमाह– **आदिबीजमिति** ॥ **आदिबीजं** व्यासशब्दस्याद्याक्षरः व्याकारः तद्रूपं बीजं सबिन्दुकमित्यर्थः । यद्वा पूर्वोक्तस्य 'व्यां वेदव्यासाय नमः' इति मन्त्रस्य आदौ प्रयुज्यमानं व्यामिति बीजम् । तथा च **'व्यां'** इत्येकाक्षरो मन्त्र उक्तो भवति । अस्यापि पूर्वोक्तमेवाङ्गादिकम् । फलमाह– **स्थिरेति** ॥ स्थिरस्य भ्रमजनकैरनेकदुर्वादिकुशास्त्रैरपि अनुच्छेद्यस्य अदोषस्य निर्दोषस्य ज्ञानस्य बीजं जनकम् ॥ ५२ ॥

**गु.दी—** एकाक्षरव्यासमन्त्रमाह— **आदिबीजमिति** ॥ व्यासशब्दस्य आद्यावयवरूपो व्याकारस्तद्बीजं सबिन्दुकमित्यर्थः । तथा च **'व्याम्'** इत्येकाक्षरो व्यासमन्त्रः । फलं वक्ति— **स्थिरेति** ॥ विभ्रमजनकैरनेकदुर्वादिकुशास्त्रैरप्यनुच्छेद्यस्य निर्दोषज्ञानस्य **बीजं** जनकम् ॥ ५२ ॥

**मङ्गाली—** एकाक्षरवेदव्यासमन्त्रमाह– **आदिबीजमिति** ॥ **आदिबीजं** व्यासशब्दस्याद्याक्षरं व्याकारः तद्रूपं बीजं सबिन्दुकमित्यर्थः । यद्वा पूर्वोक्तस्य 'व्यां वेदव्यासाय नमः' इति मन्त्रस्य आदौ प्रयुज्यमानं व्यामिति बीजम् । तथा च **'व्याम्'** इत्येकाक्षरो मन्त्र उद्धृतो भवति । अस्यापि पूर्वोक्तमेवाङ्गादिकम् ।

फलमाह– **स्थिरेति ॥ स्थिरस्य** भ्रमजनकैरनेकदुर्वादिकुशास्त्रैरपि अनुच्छेद्यस्या-दोषस्य निर्दोषस्य ज्ञानस्य **बीजं** जनकम् ॥ ५२ ॥

वेदव्यासगायत्री-एकक्षरवेदव्यासमन्त्रयोः ध्यानकथनम्

**तं.सा. ध्यायेच्छशाङ्कशतकोट्यतिसौख्यकान्तिं**
**संसिच्यमानममृतोरुघटैः सुरेशैः ।**
**वर्णाभिमानिभिरजेशमुखैः सहैव**
**पञ्चाशता प्रतिगिरन्तमशेषविद्याः ॥ ५३ ॥**

**त.क.—** मन्त्रद्वयस्यापि ध्येयमाह— **ध्यायेदिति ॥** शशाङ्कशतकोटिवत् अतिसौख्यप्रदा कान्तिर्यस्य सः। अमृतोरुघटैः सुरेशैरित्यत्रापि वर्णाभिमानिभि-रित्यादि वक्ष्यमाणं सम्बध्यते। **पञ्चाशता** पञ्चाशद्भिरशेषविद्याः **प्रतिगिरन्तं** उच्चारयन्तम्। अनेन ज्ञानप्रदत्वमुच्यते। अत्र कृष्णषडक्षरमारभ्योद्धृतानां मन्त्राणां वर्णन्यासानुक्तिः कुत इति चेन्न।

ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव वा ।
पूर्णात्ममध्यगैः सर्वैर्वैष्णवाङ्गान्यथो विदुः ॥ (तं.सा.४-८)

इति प्रागेव शिक्षितत्वात् ॥ ५३ ॥

**अ.सं.—** मन्त्रद्वये ध्यानमाह– **ध्यायेदिति ॥ शशाङ्कशतकोट्यतिसौख्य-कान्तिं** चन्द्रशतकोटिवत् अतिसौख्यकरकान्तियुक्तम्। **पञ्चाशता** पञ्चाशद्भिः **वर्णाभिमानिभिः** अकारादिपञ्चाशदक्षराभिमानिभिः **अजेशमुखैः** ब्रह्मरुद्रादिभिः सुरेशैः **सहैव** युगपदेव **अमृतोरुघटैः** सुधापूर्णस्थूलकलशैः **संसिच्यमानं** अभिषिच्यमानम्। यद्वा **पञ्चाशता** पञ्चाशद्वर्णैः **सहैव** सार्धम् **अशेषविद्याः** वेदादिसर्वविद्याः **प्रतिगिरन्तं** उद्गिरन्तं उच्चारयन्तमित्यर्थः। अकारादिपञ्चाशद्वर्णान् वेदादिविद्याश्च ब्रह्मादिभ्यः व्याचक्षाणमिति भावः। एतादृग्गुणवन्तं ध्यायेदित्यर्थः ॥ ५३ ॥

**गु.दी.—** मन्त्रद्वये ध्यानमाह— **ध्यायेदिति ॥ शशाङ्कानां** चन्द्राणां

शतकोटिभ्योऽतिशयितं **सौख्यं** सुखम्, स्वार्थे ष्यञ्, यस्याः सकाशात् तादृशी कान्तिर्यस्य तम्। यद्वा सौख्यात्मककान्तिम्। **पञ्चाशता** पञ्चाशद्भिः। **वर्णाभिमानिभिः** वर्णानां रमायाः प्रधानाभिमानित्वादवान्तराभिमानिभिः **अजेशमुखैः** सुरेशैरमृतपूर्णोत्कृष्टघटैः संसिच्यमानमिति सम्बन्धः। अशेषविद्याः **सहैव** युगपदेव **प्रतिगिरन्तं** उच्चारयन्तम्। यद्वा वर्णाभिमानिभिरजादिरूपैः सह। अजादिवासुदेवरूपाणां वर्णाभिमानित्वं नाम वर्णप्रतिपाद्यत्वं, न तु परदत्तपदाधिष्ठातृत्वं तद्गतानां दुःखानां भोगो वा। वर्णप्रतिपाद्यैरजादिभिः सह विद्यमानैरजेशमुखैरिति। पूर्वमन्त्रे द्विरावृत्तैर्मन्त्रपदैरेव षडङ्गानि। द्वितीये द्विरावृत्तैः पादैरेवाङ्गानि। एकाक्षरमन्त्रे व्यां व्यीं व्यूं व्यैं व्यौं व्यः इति षडङ्गानीति सम्प्रदायविदः। यद्यपि

> ज्ञानैश्वर्यप्रभानन्दतेजःशक्तिभिरेव वा।
> पूर्णात्ममध्यगैः' (तं.सा.४-८)

इत्युक्तन्यासोऽप्यत्र भविष्यति। तथापि गुरुसम्प्रदायाद्व्यवस्था।

अयमत्र व्यासमन्त्रार्थः। सर्वस्माद्विशिष्टत्वाद्विः। आ समन्तात् सः 'सृ गतौ' (धा.पा.९३५) 'सृ प्लृ गतौ' इत्यतो वा डे परे रूपमेतत्, गत इति। विशिष्टः सर्वगश्चेति व्यासः। 'स व्यासो वीति तमप् वै विः' (गी.भा.१०-३७) इति गीताभाष्यदशमाध्यायोदाहृतश्रुतेः। यद्वा 'वी गतिप्रजननकान्त्यशनखादनेषु' इति (धा.पा.१०४८) धातोरत्र वी गत्यर्थः। तथा च वीं स्वपरगताखिलविशेषविषयकं ज्ञानमाप्नोति सर्वदेति व्याम्। वेदेषु विशेषेण परममुख्यया वृत्त्या प्रतिपाद्यतया आस्ते इति वा, वेदानां व्यासो विभागो यस्मादिति वा वेदव्यासस्तस्मै नमः। **पूर्णज्ञानाय** स्वपरगताखिलविशेषविषयकप्रज्ञाय पूर्णः आनन्दो यस्य तस्मै तत्प्रीत्यर्थं विद्महे धीमहे च। **तत्** तस्मात् **तत्र** ज्ञानादौ **नः** अस्मान् **प्रचोदयात्**प्रेरयेदिति ॥ ५३ ॥

**मङ्गाली**– मन्त्रद्वये ध्यानमाह– **ध्यायेदिति**। **शशाङ्कशतकोट्यतिसौख्यकान्तिं** चन्द्रशतकोटिवदतिसौख्यकरकान्तियुक्तम्। **पञ्चाशता** पञ्चाशद्भिः **वर्णाभिमानिभिः** अकारादिपञ्चाशदक्षराभिमानिभिः

**अजेशमुख्यैः** ब्रह्मरुद्रादिभिः सुरेशैः **सहैव** युगदेव **अमृतोरुघटैः** सुधापूर्णस्थूलकलशैः **संसिच्यमानं** अभिषिच्यमानम् । यद्वा **पञ्चाशता** पञ्चाशद्वर्णैस्सहैव सार्धं **अशेषविद्याः** वेदादिसर्वविद्याः **प्रतिगिरन्तमुच्चारयन्त**-मित्यर्थः । अकारादिपञ्चाशद्वर्णान् वेदादिविद्याश्च ब्रह्मादिभ्यो व्याचक्षाणमिति भावः । एतादृग्गुणवन्तं ध्यायेदित्यर्थः ।। ५३ ।।

अष्टाक्षरः हयग्रीवमन्त्रः

**तं.सा.** **सोद्देशस्तु स्वयं दीर्घ(पूर्ववर्णाद्यो) पूर्वार्णाद्यो नमोयुतः ।**
**सर्वविद्याप्रदोऽष्टार्णः प्रतिवादिजयप्रदः ।**
**विमुक्तिसाधनः कीर्ति(कान्ति)बुद्धिस्थैर्यप्रदः सदा ।। ५४ ।।**

**त.क.—** हयग्रीवमन्त्रमुद्धरति— **सोद्देश इति ।।** स्वयमिति बुद्धिस्थितहयग्रीवशब्द उच्यते । दीर्घसहितः पूर्वार्णो दीर्घपूर्वार्णः । शाकपार्थिवादित्वात् समासः । पूर्वत्वं च उपस्थितत्वाद्धयग्रीवपदान्तर्गतवर्णेष्विति सिद्ध्यति । उपलक्षणमेतद्बिन्दुसाहित्यस्य । यद्वा दीर्घबिन्दुसहितः पूर्वार्ण इति विग्रहः । स आद्यो यस्य । **सोद्देशश्चतुर्थीसहितः नमोयुतः** नमःशब्देन युतश्चेत् **'हां हयग्रीवाय नमः'** इत्यष्टाक्षरो मन्त्रः सम्पद्यत इत्यर्थः । अत्र स्वयंशब्देन हयशिरःशब्दः, हयशीर्षञ्छब्दः, हयशीर्षशब्दश्च गृह्यते । षकारणकारयोर्भेदमाश्रित्य द्वितीयेऽष्टाक्षरत्वमाश्रित्य **'हां हयशिरसे नमः'**, **'हां हयशीर्ष्णे नमः'**, **'हां हयशीर्षाय नमः'** इति मन्त्रत्रयमप्यनेनैवोद्धृतमित्यप्याह । वासिष्ठवृष्णिप्रवरेत्युक्त्या कलौ वीर्यतिरोधानं न मन्तव्यमित्याह— **सर्वविद्येति ।।** विमुक्तिसाधन इति करणे ल्युडन्तस्य नपुंसकत्वनियमाभावात् साधु । 'कोऽसावनुमानो नाम'इति यथा । **कीर्तिः** यशः । **बुद्धिस्थैर्यं** विस्मरणाभावः । 'बुद्धिकान्तिः'इति पाठे कान्तिशब्देन ज्ञानानुकूलस्तेजोविशेष उच्यते ।। ५४ ।।

**अ.सं.—** एकेनैव पद्येन हयग्रीवमन्त्रचतुष्टयमुद्धरति– **सोद्देश इति ।।** **दीर्घपूर्ववर्णाद्यः** दीर्घः पूर्ववर्णः हाकारः स च बिन्दुयुक्तः सन् आद्यः पूर्वभावी यस्य हयशिरआदिमन्त्रचतुष्टयस्य स तथोक्त इत्यर्थः । **नमोयुतः** अन्ते नमः

शब्दयुतः। **सोद्देशश्चतुर्थ्यन्तः स्वयं** स्ववाचकः हयशिर आदिशब्दः। **अष्टार्णः** अष्टाक्षरं मन्त्रः। एवं च **'हां हयशिरसे नमः'** इति मन्त्र उद्धृतो भवति। उक्तं च सारसङ्ग्रहे-

स्वबीजपूर्वमुद्धृत्य ङेतं हयशिरो वदेत्।
हृदन्तोऽष्टाक्षरो मन्त्रो हयग्रीवस्य चोदितः॥ इति।

ङेतं चतुर्थ्यन्तम्। **हृदन्तः** नमोऽन्त इत्यर्थः। एवमेव **'हां हयग्रीवाय नमः' 'हां हयशीर्षाय नमः' 'हां हयशीर्ष्णे नमः'** इति मन्त्रत्रयमुद्धृतमिति ज्ञातव्यम्। आगमान्तरोक्तेः। 'हां हयशीर्ष्णे नमः' इति मन्त्रे षकारणकारयोर्भेदेनाष्टाक्षरता ज्ञेया। मन्त्रसामर्थ्यमाह- **सर्वेति॥ सर्वविद्याप्रदः** सकलविद्यास्वभिज्ञताप्रदः। **प्रतिवादिजयप्रदः** जल्पादिकथायामिति शेषः। विमुक्तेः साधनज्ञानं यस्मात्सः। **कान्तिः** ब्रह्मवर्चसम्। **बुद्धिस्स्थैर्यं** मोहशास्त्रैरनुच्छेद्यत्वम्। यद्वा श्रुतस्य विस्मृत्यभावः धारणाशक्तिरिति यावत्। तत्प्रद इत्यर्थः॥ ५४॥

**गु.दी.—** हयग्रीवमन्त्रमाह— **सोद्देश इति॥ स्वयं** हयग्रीवः। **सोद्देशः** चतुर्थ्यन्तः। **दीर्घपूर्वार्णाद्यः** बिन्दुदीर्घान्तहकारः आद्यो यस्य स तथा। नमश्शब्दयुतः। एतेन **'हां हयग्रीवाय नमः'** इति मन्त्रनिष्पत्तिः। 'ओ हाक् त्यागे' (धा.पा.१०९०) इति धातोः हकारः पारतन्त्र्यादिनिखिलदोषराहित्यवाची। यातेर्गत्यर्थत्वात् यो ज्ञानवाची। तथा च निर्दोषज्ञानात्मकग्रीवोपलक्षित-सर्वावयवोपेतत्वात्, हयति गच्छति ब्रह्मादिसर्वग्रीवाद्यवयवेषु तैजसादिरूपैरिति वा हयग्रीवस्तस्मै नम इत्यर्थः। फलमाह— **सर्वेति**॥ ५४॥

**मङ्गाली—** एकेनैव पद्येन हयग्रीवमन्त्रचतुष्टयमुद्धरति- **सोद्देश इति॥ दीर्घपूर्ववर्णाद्यः** दीर्घः पूर्ववर्णो हाकारः। स च बिदुयुक्तः सन् आद्यः पूर्वभावी यस्य हयशिर आदिमन्त्रचतुष्टयस्य स तथोक्त इत्यर्थः। **नमोयुतः** अन्ते नमःशब्दयुतः। **सोद्देशश्चतुर्थ्यन्तः स्वयं** वाचकः हयशिर आदिशब्दः **अष्टार्णः** अष्टाक्षरो मन्त्रः। एवं च **'हां हयशिरसे नमः'** इति मन्त्र उद्धृतो भवति। उक्तं च सारसङ्ग्रहे–

स्वबीजं पूर्वमुद्धृत्य ङेन्तं हयशिरो वदेत् ।
हृदन्तोऽष्टाक्षरो मन्त्रो हयग्रीवस्य चोदितः ।। इति ।

ङेन्तं चतुर्थ्यन्तं । **हृदन्तो** नमोन्त इत्यर्थः । एवमेव **'हां हयग्रीवाय नमः' 'हां हयशीर्षाय नमः' 'हां हयशीर्ष्णे नमः'** इति मन्त्रत्रयमप्युद्धृतं भवति । आगमान्तरोक्तेः । 'हां हयशीर्ष्णे नमः' इति मन्त्रे षकारणकारयोर्भेदेनाष्टाक्षरता ज्ञेया । मन्त्रसामर्थ्यमाह– **सर्वेति ।। सर्वविद्याप्रदः** सकलविद्यास्वभिज्ञताप्रदः **प्रतिवादिजयप्रदः** जल्पादिकथायामिति शेषः । विमुक्तेः साधनं ज्ञानं यस्मात्सः । **कान्तिर्ब्रह्मवर्चसं । बुद्धिस्थैर्यं** मोहकशास्त्रैरनुच्छेद्यत्वम् । यद्वा श्रुतस्य विस्मृत्यभावः । धारणाशक्तिरिति यावत् । तत्प्रद इत्यर्थः ।। ५४ ।।

हयग्रीवध्यानम्

**तं.सा.** **वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं**
**चन्द्रावदातममृ(मि)तात्मकरैः समन्तात् ।**
**अण्डान्तरं बहिरपि प्रतिभासयन्तं**
**शङ्खाक्षपुस्तकसुबोधयुताब्ज(त्म)बाहुम्** ।। ५५ ।।

**नस्तो मुखादपि निरन्तरमुद्गिरन्तं**
**विद्या अशेषत उताब्जभवेशमुख्यैः ।**
**संसेव्यमानमतिभक्तिभरावनम्रै-**
**र्लक्ष्माऽमृतेन सततं परिषिच्यमानम्** ।। ५६ ।।

**त.क.**— ध्यानप्रकारमाह— **वन्द इति ।।** तुरङ्गस्तुरगः । **शशिबिम्बसंस्थं** संस्थितं चन्द्रमण्डलान्तर्गतम् । **चन्द्रावदातं** श्वेतवर्णम् । अमृताः अविनाशिनः आत्मानः स्वरूपभूताः रश्मयः । तैरण्डान्तरं **बहिरपि** समन्तादपि प्रतिभासयन्तमित्यन्वयः । अक्षशब्देन अक्षमाला उच्यते । सुबोधयुताब्जं बोधमुद्रया सहितं अब्जं यस्येति विग्रहः । तेन दक्षोर्ध्वबाहौ शङ्खः । वामोर्ध्वबाहौ अक्षमाला । दक्षाधःकरे पुस्तकं, वामाधःकरे ज्ञानमुद्रा पद्मं चेत्युभयं दधत इति

चतुर्बाहुत्वमुक्तं वेदितव्यम् । **नस्तो** नासिकातः । **अशेषतः** अशेषाः । **उतश्चार्थः** । लक्ष्या च संसेव्यमानमित्यन्वयः । लक्ष्म्या अब्जभवेशमुखैश्च कर्तृभिरमृतेन करणेनाभिषिच्यमानमिति सम्बन्धः ॥ ५५,५६ ॥

**अ.सं.—** ध्यानमाह– **वन्द इति ॥ चन्द्रावदातं** चन्द्रवत् धवलवर्णम् । **अमृतात्मकरैः** अमृतैः नाशरहितैः अमृतस्राविभिर्वा अमृतत्वप्रदैर्वा स्वरूपकिरणैः। 'अमितात्मकरैः' इति पाठे अनन्तकिरणैरित्यर्थः । **अक्षं** जपमाला । **सुबोधः** ज्ञानमुद्रा । एतच्चतुष्टययुताः । अब्जानीव नालयुतपद्मानीव बाहवो यस्येति विग्रहः अब्जबहुमित्यनेन बाहुनां नालसाम्यं हस्तानां पद्मसाम्यं व्यज्यते । **नस्तः** नासिकायाः **उद्गिरन्तं** बहिः निःसारयन्तम् । **अशेषतः** अशेषाः। अङ्गादीनि पूर्ववत् ॥ ५५,५६ ॥

**गु.दी.—** ध्यानमाह— **वन्द इति ॥ शशिबिम्बे** इन्दुमण्डले । चन्द्रवत् अवदातं शुभ्रम् । **अमृतात्मकरैः** नाशरहितैः अमृतस्राविभिर्वा स्वरूपभूतैः किरणैः । समन्तात् तस्यैव विवरणम् **अण्डान्तरं बहिरपि प्रतिभासयन्तं** प्रकाशयन्तम् । **'अमितात्मकरैः'** इति पाठे अपरिमितस्वकिरणैरित्यर्थः । शङ्खः **अक्षम्** अक्षमाला पुस्तकं **सुबोधः** ज्ञानमुद्रा एतैः युक्ताः अब्जानीव बाहवो यस्य तम् । अब्जानि तु सनालपद्मानि तेन बाहूनां नालसाम्यं दैर्घ्ये, हस्तानां च पद्मसाम्यमिति लभ्यते । **'युतात्मबाहुम्'** इति क्वचित्पाठः । **अतिभक्तिभरेण** अतिशयितभक्त्याऽधिक्येन **अवनम्रैः** विनतैः । **तुरङ्गवदनं** तुरं गच्छतीति तुरङ्गा वडवा । वडवामुखमित्यर्थः । अत्र द्विरावृत्तमन्त्रपदैर्वा ज्ञानैश्वर्यादिभिर्वा षडङ्गन्यास इति यथासम्प्रदायं व्यवस्था । एवमग्रेऽपि ॥ ५५,५६ ॥

**मङ्गाली—** ध्यानमाह– **वन्द इति ॥ चन्द्रावदातं** चन्द्रवद्धवलवर्णम् । **अमृतात्मकरैः** अमृतैर्नाशरहितैः अमृतश्राविभिर्वा अमृतत्वप्रदैर्वा स्वरूपकिरणैः । 'अमितात्मकरैः' इति पाठे अनन्तकिरणैरित्यर्थः । **अक्षं** जपला **सुबोधो** ज्ञानमुद्रा एतच्चतुष्टययुताः । अब्जानीव नालयुतपद्मानीव बाहवो यस्येति विग्रहः । अब्जबाहुमित्यनेन बाहूनां नालसाम्यम् । हस्तानां पद्मसाम्यं व्यज्यते । **नस्तो**

नासिकायाः । **उद्गिरन्तं** बहिर्निस्सारयन्तम् । **अशेषतः** अशेषाः । अङ्गादीनि पूर्ववत् ।। ५५,५६ ।।

अष्टाक्षरकपिलमन्त्र-नवाक्षरदत्तात्रेयमन्त्रोद्धारः

**तं.सा. स्वयमुद्देशवान् पूर्ववर्णपूर्वो नमोयुतः ।**
**सतारोऽष्टाक्षरश्चैव नवार्णश्च मनू स्मृतौ ।। ५७ ।।**

**त.क.–** कपिलदत्तात्रेययोर्मन्त्रौ युगपदुद्धरति— **स्वयमिति ।।** पूर्ववद् बुद्धिस्थत्वात् कपिलशब्दः दत्तात्रेयशब्दश्चेत्यर्थः । **उद्देशश्चतुर्थीविभक्तिः** । अनयोः शब्दयोः यः पूर्ववर्णः ककारो दकारश्च स एव पूर्वो यस्येति विग्रहः । नमोयुतः सतारश्चेत् **'ॐ कं कपिलाय नमः'** इत्यष्टाक्षरः कपिलमन्त्रः, **'ॐ दं दत्तात्रेयाय नमः'** इति नवाक्षरश्च दत्तात्रेयमन्त्रः सम्पद्यते । एवमिमौ मन्त्रौ पञ्चरात्रादौ स्मृतावित्यन्वयः ।। ५७ ।।

**अ.सं.—** कपिलदत्तात्रेयमन्त्रौ युगपदाह– **स्वयमिति ।। स्वयं** स्ववाचकः कपिलशब्दः । स च सोद्देशः । तथा **पूर्ववर्णपूर्वः** पूर्ववर्णः कपिलपदे आद्यः वर्णः ककारः । सः बिन्दुयुक्तः सन् पूर्वः आदिभूतः यस्य कपिलशब्दस्य स तथोक्तः । अन्ते नमोयुतः **सतारः** ॐकारपूर्वकः अष्टाक्षरश्च । एवं च **'ॐ कं कपिलाय नमः'** इति मन्त्रः उद्धृतो भवति । एवमेव **स्वयं** स्ववाचकदत्तात्रेयशब्दः स च सोद्देशः **पूर्ववर्णपूर्वः** पूर्ववर्णः दत्तात्रेयपदे पूर्वो वर्णो दकारः स एव बिन्दुयुक्तः सन् पूर्वः प्रथमः यस्य दत्तात्रेयशब्दस्य स तथोक्तः । नमोयुतः सतारः **नवार्णः** नवाक्षरश्च । तथा च **'ॐ दं दत्तात्रेयाय नमः'** इति मन्त्र उक्तो भवति । **मनू** कपिलदत्तात्रेयमन्त्रौ स्मृतौ ।। ५७ ।।

**गु.दी.—** अथ कपिलदत्तात्रेयमन्त्रावाह— **स्वयमिति ।। स्वयं** स्ववाचकः कपिलशब्दो दत्तात्रेयशब्दश्च । **उद्देशवान्** चतुर्थ्यन्तः । पूर्ववर्णः बिन्द्वन्तः ककारो दकारश्च ययोरन्ते नमश्शब्दोपेतः सतारश्च क्रमादष्टाक्षरो नवाक्षरश्च मनुः । तथा च **'ॐ कं कपिलाय नमः' 'ॐ दं दत्तात्रेयाय नमः'** इति मन्त्रयोर्निष्पत्तिः । कं वायुं पिं पिनाकिनं रुद्रं लाति स्वीयतया आदत्त इति वा, सुखकरत्वात्कः,

पालकत्वात् पिः, सर्वानुग्रहकर्तृत्वाल्ल इति वा कपिलस्तस्मै। ऋषये पुत्रत्वेन स्वयमेव स्वेन दत्तो अत्रिपुत्रत्वेनाविर्भूतत्वादात्रेय इति दत्तात्रेयः। तस्मै नम इति मन्त्रयोरर्थः ॥ ५७ ॥

**मङ्गाली–** कपिलदत्तात्रेययोर्मन्त्रौ युगपदाह– **स्वयमिति ॥ स्वयं** स्ववाचकः कपिलशब्दः स च सोद्देशः । तथा **पूर्ववर्णपूर्वः** पूर्ववर्णः कपिलपदे आद्यः ककारः। सः बिन्दुयुक्तः सन् पूर्वः आदिभूतः यस्य कपिलशब्दस्य स तथोक्तः । अन्ते नमोयुतः । **सतारः** ॐकारपूर्वकः अष्टाक्षरश्च । एवं च '**ॐ कं कपिलाय नमः**' इति मन्त्र उद्धृतो भवति। एवमेव **स्वयं** स्ववाचकदत्तात्रेयशब्दः स च सोद्देशः । **पूर्ववर्णपूर्वः** पूर्ववर्णः दत्तात्रेयपदे पूर्वो वर्णो दकारः। स एव बिन्दुयुक्तः सन् पूर्वः प्रथमो यस्य दत्तात्रेयशब्दस्य स तथोक्तः। नमोयुतः सतारः **नवार्णः** नवाक्षरश्च । तथा च '**ॐ दं दत्तात्रेयाय नमः**' इति मन्त्र उक्तो भवति। **मनू** कपिलदत्तात्रेयमन्त्रौ स्मृतौ ॥ ५७ ॥

कपिलदत्तात्रेययोः युगपद्ध्यानकथनम्

**त.सा. प्रोद्यद्दिवाकरसमानतनुं सहस्र-**
**सूर्योरुदीधितिभिराप्तसमस्तलोकम् ।**
**ज्ञानाभयाङ्कि(सि)तकरं कपिलं च दत्तं**
**ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ॥ ५८ ॥**

**अधृष्यताज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ।**

**त.क.—** ध्यानमपि युगपदेवाह— **प्रोद्यदिति ॥** उद्यद्भास्वत्समाभासतनुमित्यर्थः। सहस्रसूर्यादप्युर्व्यः उग्राः या दीधितयस्ताभिराप्तो व्याप्तः समस्तलोको येनेत्यर्थः। ज्ञानाभयशब्दाभ्यां तत्तन्मुद्रोच्यते। ताभ्यामश्चितौ चिह्नितौ करौ यस्य तमित्यनेन द्विबाहुत्वमुक्तम्। 'अङ्कितकरं'इति पाठेऽप्ययमेवार्थः। **समितिः** समुदायः। अनेन ज्ञानमुद्राया विशेषो दर्शितः। एवमभयं दधानमित्यपि द्रष्टव्यम्। अधृष्यतेत्यैहिकफलोक्तिः। ज्ञानमोक्षेत्यामुष्मिकस्य। भक्तेष्वित्यनुपलम्भबाधपरिहारार्थम्। सदेति काकतालीयत्वव्युदासार्थम् ॥ ५८ ॥

**अ.सं.—** उभयोर्ध्यानमाह– **प्रोद्यदिति ।।** उद्यदादित्यवर्णम् । सहस्रशब्दः अमितपरः । अमितसूर्यवत् तीक्ष्णकिरणैरित्यर्थः । **आप्तसमस्तलोकं** व्याप्तसमस्तलोकम् । ज्ञानाभयमुद्राङ्कितकरद्वयम् । **समितिः** समूहः । ध्यानमेव मन्त्राङ्गम्। न तु श्लोकपठनमपीति भावेन एकस्मिन्नेव श्लोके कपिलदत्तशब्दप्रयोग इति ज्ञातव्यम् । यद्वा कपिलध्याने दत्तपदं यौगिकम् । ददाति अभिष्टमिति दत्तः । कर्तरि क्तः । दत्तध्याने कपिलपदं यौगिकम् । कं सुखं पिबतीति कपिः । लाति भक्तान् स्वीकरोतीति लः । कपिश्चासौ लश्चेति कपिल इति व्याख्येयम् । मन्त्रसामर्थ्यमाह– **अधृष्यतेति ।।** अधृष्यता च ज्ञानं च मोक्षश्चेति द्वन्द्वः । शत्रुभिर्घर्षणाशक्यता अधृष्यता । अङ्गादि पूर्ववत् ।। ५८ ।।

**गु.दी.—** तयोर्ध्यानं निरूपयति— **प्रोद्यदिति ।।** रक्तवर्णमित्यर्थः ।। **सहस्रेति ।।** अत्र सहस्रशब्दोऽमितपरः । तथा च अमितसूर्येभ्यः उर्वीभिः उत्कृष्टाभिः दीधितिभिः **आप्तसमस्तलोकं** व्याप्तचतुर्दशभुवनम् । अत्र कपिलध्याने दत्तपदं यौगिकं दत्तात्रेयध्याने कपिलपदं यौगिकमिति न ध्यानश्लोकेऽसम्भवशङ्केति ज्ञेयम् । यद्वा ध्यानमेव मन्त्राङ्गं न श्लोकमपीति न काचिदनुपपत्तिरिति द्रष्टव्यम् । **भक्तेषु** योग्येषु । अधृष्यता अपराजितत्वं ज्ञानं शास्त्रजं मोक्षश्च इत्येतान् प्रकर्षेण दाति इति **अधृष्यताज्ञानमोक्षप्रदौ** ।। ५८ ।।

**मङ्गली–** उभयोर्ध्यानमाह– **प्रोद्यदिति ।।** उद्यदादित्यवर्णम् । सहस्रशब्दः अमितपरः । अमितसूर्यवत् तीक्ष्णकिरणैरित्यर्थः । **आप्तसमस्तलोकम्** व्याप्ताखिललोकम् । ज्ञानमुद्राभयमुद्राङ्कितकरद्वयम् । **समितिः** समूहः। ध्यानमेव मन्त्राङ्गं न तु श्लोकपठनमपीति भावेनैकस्मिन्नेव श्लोके कपिलदत्तशब्दप्रयोग इति ज्ञातव्यम् । यद्वा कपिलध्याने दत्तपदं यौगिकम् । ददात्यभीष्टमिति दत्तः । कर्तरि क्तः । दत्तध्याने कपिलपदं यौगिकम् । कं सुखं पिबतीति कपिः । लाति भक्तान् स्वीकरोतीति लः। कपिश्चासौ लश्चेति कपिल इति व्याख्येयम् । मन्त्रसामर्थ्यमाह– **अधृष्यतेति ।।** अधृष्यता च ज्ञानं च मोक्षश्चेति द्वन्द्वः । शुत्रभिर्घर्षणाशक्यताऽधृष्यता । अङ्गादिपूर्ववत् ।। ५८ ।।

चत्वारो वैदिकमन्त्राः

**तं.सा. सूक्तं दीर्घतमोदृष्टं विष्णोर्नुकमिति प्रभोः ॥ ५९ ॥**

**सर्वार्थदं गार्त्समदं यो जात इति चापरम् ।**
**वासिष्ठं च परो मात्रयेति ज्ञानविमुक्तिदम् ॥ ६० ॥**

**भौवनीयं सर्वकाममोक्षदं य इमेत्यपि ।**
**एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः ॥ ६१ ॥**

**त.क.–** तन्त्रोक्तान् विष्णुमन्त्रानभिधाय वेदोक्तान् तानाह— **सूक्तमिति ॥** 'विष्णोर्नुकं वीर्याणि प्रवोचं' (ऋ.सं.१-१५४-१) इत्यारभ्य 'परमं पदमवभाति भूरि'(ऋ.सं.१-१५४-६) इत्यन्तं षडृच सूक्तमेकं मन्त्रं विद्यादिति सम्बन्धः। 'विष्णोः षड्वैष्णवं हि'(अनु.क्र.१-१५१) इति वचनात् सूक्तत्रयमपि गृह्यत इत्यप्याहुः । **दीर्घतमोदृष्टमि**त्यनेन दीर्घतमोनामकोऽस्य ऋषिः, **सर्वार्थद**मति फलं चोक्तं वेदितव्यम् । विष्णोरेव मन्त्रमाह– **गार्त्समदिमति॥** 'यो जात एव प्रथमो मनस्वान्' (ऋ.सं.२-१२-१) इत्यारभ्य 'सुवीरासो विदथमा वदेम' इत्यन्तं पञ्चदशर्चं सूक्तं गृत्समदेन ऋषिणा दृष्टमपरं मन्त्रं विद्यात् इत्यर्थः । 'यो जातः पञ्चोना'(अनु.क्र.२-१२) इति वचनात् । तृतीयं मन्त्रमुद्धरति— **वासिष्ठमिति ॥** 'परो मात्रया तन्वा वृधान' (ऋ.सं.७-९९-१) इत्यारभ्य 'यूयं पात स्वस्तिभिः सदा नः' इत्यन्तं वसिष्ठेन ऋषिणा दृष्टमपरं मन्त्रं विद्यादित्यर्थः । 'परो मात्रयेति वैष्णवं चतुर्दशं' इति वचनात् । **ज्ञानविमुक्तिद**मिति फलोक्तिः । अनियमन्यायेन ज्ञानेनैव मुक्तेः सिद्धत्वेऽपि यत् पृथग्वचनं तेन मौक्तिकानन्दवृद्धिमभिप्रैति । अत एव वीत्याह । चतुर्थमन्त्रमाह– **भौवनीयमिति ॥** 'य इमा विश्वा भुवनानि जुह्वत्' (ऋ.सं.१०-८१-१) इत्यारभ्य 'असुतृप उक्थशासश्चरन्ति' इत्यन्तं चतुर्दशर्चं भौवनेन दृष्टं चतुर्थं विद्यात् । भुवनं प्रासादादि । तन्निर्माता भौवनो विश्वकर्मा । 'कश्यपो विश्वकर्माणं भौवनमभिसिषेच' इति श्रुतेः । तेन दृष्टं भौवनम् । 'य इमा विश्वकर्मा भौवनः' इत्यनुक्रमणिकोक्तेः । विश्वकर्मणः पिता भुवन इत्यप्याहुः । एतत्सूक्तमपरं

मन्त्रं विष्णौ विद्यात् इत्यादि सर्वं पूर्वावृत्त्या योज्यम् । **'काममोक्षदं'** इत्यैहिकामुष्मिकफलोक्तिः ।

ननु सूक्तचतुष्टयस्य विष्णुमन्त्रत्वोक्त्या तदितराणां सूक्तानामतन्मन्त्रत्वं प्राप्तम् । एवं तदन्तर्गतानां वर्णानामृचां च तत एव विष्णुप्रतिपादकत्वाभावोऽपि। तथा च 'सर्वे वेदाः' इति वचनविरोधः । कथं च 'यो जात एव प्रथमः', 'य इमा विश्वा' इत्यनयोर्विष्णुमन्त्रत्वम्? तत्रेन्द्रविश्वकर्मणोः प्रतिपाद्यत्वावगमात् । सर्वशब्दवाच्यत्वेन तदुपपत्तौ रौद्रादिसूक्तानामपि तन्मन्त्रत्वसम्भवेन विशिष्योक्तौ नियामकाभावः । लक्ष्म्यादिमन्त्रत्वेनानुपदमेवोद्धृतेन सूक्तान्तरेण व्याहन्यत इति शङ्कामतिदेशव्याजेन परिहरति— **एवमिति** ।। चतुर्णां सूक्तानामुद्धरणादन्येषां तदभावो न मन्तव्यः । किन्तु सूक्तानामनन्तत्वाद्युगपदुद्धर्तुमशक्यत्वाच्च स्थालीपुलाकन्यायेन केषाञ्चिदेवोद्धरणम् । न तावता द्वयोरेवोद्धरणं शङ्क्यम् । विषयव्याप्त्यर्थमुदाहरणान्तरस्यैवोपपत्तेः । किञ्च नेमे इन्द्रविश्वकर्मसूक्ते तयोरवान्तरतात्पर्यमश्नुवाते । 'यज्ञनामा रमारमणः' इत्युक्त्या विष्णोरिन्द्रपदाधिष्ठातृत्वश्रवणात् । इन्द्रशब्दश्च राजादिशब्दवत् तदधिष्ठातृनाम । निरवकाशानि विष्णुलिङ्गानि सूक्तद्वयेऽपि श्रूयन्ते च । यथा गायत्रीपुरुषसूक्तादौ । लक्ष्म्यादिसूक्तानि तु लक्ष्म्यादाववान्तरतात्पर्यभाञ्जि । ततस्तान्यत्र नाभिहितानि । अत एव देवतान्तरमन्त्रत्वेनोद्धरिष्यन्ते च । अत एव च सूक्तादिव्यवस्थाऽविरोधः । न वा सर्वसूक्तानां विष्णुमन्त्रत्वातिदेशविरोधः । महातात्पर्येण विष्णुमन्त्रत्वमवान्तरतात्पर्येणान्यमन्त्रत्वमित्युपपत्तेः । गायत्री पुरुषसूक्तं चाष्टमहामन्त्र एवोद्धृतमिति न किंचिदनुपपन्नमिति । तदेतदाह— **विष्णुतत्परा एवेति** ।। विष्णौ महातात्पर्यवन्त एव । अन्यत्रावान्तरतात्पर्यवन्त एवेत्यर्थः ।। ५९-६१ ।।

**अ.सं.**— इदानीं वैदिकान् वैष्णवान् मन्त्रान् जप्यानाह— **सूक्तमिति** ।। **प्रभोः** विष्णोः । **दीर्घतमोदृष्टं** दीर्घतमोनामकऋषिणा दृष्टं । **विष्णोर्नुकमिति** ।। 'विष्णोर्नुकं वीर्याणि प्रवोचं'(ऋ.सं.१-१५४-१) इति सूक्तम् षडर्चम् । 'विष्णोः षड्वैष्णवं ही'(अनु.क्र१-१५१) अनुक्रमणिकोक्तेः । अस्य सूक्तस्य दीर्घतमा ऋषिः।

त्रिष्टुप् च्छन्दः । विष्णुर्देवतेति ज्ञातव्यम्। केचित्तु– विष्णोर्नुकमिति सूक्तं वर्गत्रयात्मकमिति वदन्ति। फलमाह– **सर्वेति** ।। सर्वपुरुषार्थप्रदम् । मन्त्रान्तरमाह– **गार्त्समदमिति** ।। **प्रभोः** विष्णोः। **अपरं च** पूर्वोक्तादन्यच्च । **गार्त्समदं** गृत्समदऋषिणा दृष्टम् । **यो जात इति** ।। 'यो जात एव प्रथमो मनस्वान्' (ऋ.सं.२-१२-१) इति पञ्चदशर्चं सूक्तम् । 'यो जातः पञ्चोना' (अनु.क्र.२-१२)इत्यनुक्रमणिकोक्तेः। पञ्चोना पञ्चभिः ऋग्भि न्यूना विंशतिरित्यर्थः। **सर्वार्थद**मिति एतत्सूक्तस्यापि फलकथनम् । अस्य सूक्तस्य इन्द्रनामा विष्णुर्देवता त्रिष्टुप्छन्दः । गृत्समद ऋषिर्ज्ञेय इति । **वासिष्ठं च** वसिष्ठऋषिणा दृष्टं 'परो मात्रया तन्वा वृधाना'(ऋ.सं.७-९९-१) इति सूक्तं चतुर्दशर्चम्। 'परो मात्रयेति वैष्णवं चतुर्दशर्चं' इत्यनुक्रमणिकोक्तेः। **अपरं** सूक्तम्। अस्य सूक्तस्य विष्णुर्देवता वसिष्ठऋषिः त्रिष्टुप् च्छन्द इति ज्ञेयम्। **ज्ञानमुक्तिद**मिति फलकथनम्। **भौवनीयं** भुवननामकस्य पुत्रः विश्वकर्मा भौवनः। 'कश्यपो विश्वकर्माणं भौवनमभिषिषेच' इति श्रुतेः। तेन दृष्टम्। 'य इमा विश्वा भुवनानि जुह्वत्' (ऋ.सं.१०-८१-१) इत्यादि चतुर्दशर्चम्। सर्वकाममोक्षदं च। अपरंसूक्तम्। अस्य सूक्तस्य विष्णुर्देवता विश्वकर्मा ऋषिः । त्रिष्टुप् छन्दः। सर्वस्यापि सूक्तस्य मूलमन्त्रेण प्राणायामः। तद्वदेव ध्यानादीत्याहुः। वेदे सूक्तानामानन्त्येन प्रत्येकं वक्तुमशक्यत्वेनोक्त-न्यायमन्यत्राप्यतिदिशति– **एवमेवेति** ।। **अखिलाः** वेदाः **एवमेव** विष्णो-र्नुकमित्यादिसूक्तवदेव **विष्णुतत्पराः** विष्णौ तात्पर्यवन्तः **एवमेव** पूर्वसूक्तवत् **सर्वार्थदाः** सर्वपुरुषार्थदाः ज्ञातव्याः। तेषु सूक्तेषु कलौ उद्दीप्तविर्याण्येवास्माभिः कण्ठतः उक्तानीति ज्ञेयमिति भावः ।। ५९-६१ ।।

**गु.दी.–** ननु अजादीन् प्रति वेदविद्योपदेष्टृत्वमयुक्तम्। हिरण्यगर्भादीनामपि वेदप्रतिपाद्यत्वेन स्वसमत्वादित्यतोऽशेषवेदार्थत्वमस्यैवेति वक्तुं तत्रैव प्रसिद्धान् वैदिकान् वैष्णवमन्त्रानाह— **सूक्तमिति** ।। **प्रभोर्विष्णोः** सूक्तं दीर्घतमोदृष्टं **'विष्णोर्नुकं'** (ऋ.सं. १-१५४-१) षडर्चं **प्रोक्त**मित्यन्वयः। 'विष्णोः षड्वैष्णवं हि' (अनु.क्र.१-१५१) इत्यनुक्रमणिकोक्तेः। **गार्त्समदं** गृत्समदृषिकं 'यो जात' (ऋ.सं. २-१२-१) इति पञ्चदशर्चं **प्रभोरपरं** पूर्वोक्तात्। सूक्तं सर्वार्थदमिति योजना। 'यो

जातः पश्चोन' (अनु.क्र.२-१२) इत्यनुक्रमणिकायामुक्तत्वात्। **वासिष्ठं** वसिष्ठदृष्टं 'परो मात्रया' (ऋ.सं.७-९९-१) इति सप्तर्चं प्रभोरपरं सूक्तम्। **भौवनीयं** विश्वकर्मदृष्टं 'य इमा विश्वा भुवनानि' (ऋ.सं.१०-८१-१) इति चतुर्दशर्चमपरं प्रभोः सूक्तं सर्वकामादिदमति सम्बन्धः। अनुक्रमणिकायां 'य इमा विश्वकर्मा भौवनो वैश्वकर्मणाम्' इत्युक्तत्वात्। सूक्तचतुष्टयजपे ज्ञानादीन्येवाङ्गानि। विष्णुषडक्षरवद्विष्णुसूक्ते उद्यद्भास्वदिति स्थाने नीलमेघेति पदप्रक्षेपेण ध्यानम्। अन्यत्र उद्यद्भास्वदिति यथास्थितमेव ध्यानमिति सम्प्रदायविदः। ननु

ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः।
यजूंषि निगदाच्चैव तथा सामानि सामतः॥ (ऋ.भा.१-३-१३)

इति पुराणेष्वपरिच्छिन्नमूलवेदात् ऋङ्निगदसामानीति सञ्ज्ञाः उपवेदास्ततश्चावान्तरवेदाश्चतुर्विंशत्यादिशाखाभेदयुक्ताः कृत्रिमाष्टकादिभेदभिन्ना उद्धृता इत्यवगम्यते। तत्र सूक्तसञ्ज्ञा कुत्र किंनिबन्धाना चेति चेत्। इत्थम्। मूलवेदे ऋचां या आनुपूर्वी क्रमः ता ऋचो निरन्तराः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमित्युच्यते। यथोक्तमृग्भाष्ये 'सूक्तं त्वनारतं प्रोक्तम्' इति। उपवेदादुद्धृतेषु ऋग्वेदादिष्ववान्तरवेदेषु उपवेदगतसूक्तान्तर्गतक्रमविशिष्टयत्किञ्चिदृक्प्रबन्धवत् सूक्तम्। यत उपवेदगतक्रमपठितानां कासाञ्चिदृचामुद्वापः स्थानान्तरस्थानां तत्रावापश्चास्ति। तदुक्तम्— 'अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम्' इति (ऋ.भा.अ१-सू३-मं१२) ॥५३॥

विष्णुसूक्ताद्यर्थस्तु–

**विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः॥१॥**

यच्छब्द आक्षेपे। पार्थिवानि रजांसि **यः** कः विममे? न कोऽपि, आनन्त्यात्। यद्वा विमम इति काका योज्यम्। नुशब्दस्त्वर्थे। पार्थिवपरमाण्वपेक्षया विशेषानन्त्योपेतानि विष्णोर्वीर्याणि **कं** कः **प्रावोचं** प्रावोचत् एतावन्तीति। यो विष्णुस्**त्रेधा विचक्रमाणः** त्रिविक्रमरूपेण पादविक्षेपं कुर्वन् स्वरभसा त्रिविष्टपं

चलितं निशम्य स्वसदनादुरु कम्पमानं चतुर्मुखं निशम्य तेन **उरुगायः** उरु गीयमानः सन् **सधस्थं**, सहस्य सधेत्यादेशः, ब्रह्मणा सह विद्यमानं **उत्तरं** सर्वोच्चं ब्रह्मसदनम् **अस्कभायत्** स्तम्भितवान् इति। अथवा नु इत्यस्मिन्नर्थे नुकमिति पदद्वयम्। शाखान्तरे एकपदत्वेन पाठाच्च। यो विष्णुः रजांसि **विममे** विशेषेण निर्ममे। अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः। तथा च मन्त्रान्तरं– 'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यामवमस्यामुतस्थे' (ऋ.सं.१-१०८-९) इति। किञ्च यश्च विष्णुः **पार्थिवानि** पृथिवीसम्बन्धीनि रजांसि पृथिव्याः अधः सप्तलोकान् **विममे** निर्मितवान्। रजःशब्दो लोकवाची। 'लोका रजांस्युच्यन्ते' इति यास्कोक्तेः। यश्च **उत्तरं** उद्गततरमुत्तरभाविनं **सधस्थं** सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकं **अस्कभायत्** स्तम्भितवान् सृष्टवानित्यर्थः। यद्वा **उत्तरमु**त्तरतरमतिविस्तीर्णं **सधस्थं** सहस्थानं लोकत्रयाश्रयभूतमन्त-रिक्ष**मस्कभायत्** लोकानामाधारत्वेन स्तम्भितवान्। अनेन अन्तरिक्षाश्रित-लोकत्रयमपि सृष्टवानित्युक्तं भवति। **उत्तरं** उत्कृष्टतरं **सधस्थ**मुपासकानां सहस्थानं सप्तलोकम् **अस्कभायत्** ध्रुवं स्थापितवान्। किं कुर्वन् **त्रेधा विचक्रमाणः** त्रिप्रकारं स्वसृष्टान् लोकान्विविधं क्रममाणः। विष्णोस्त्रेधा क्रमणं 'इदं विष्णुर्विचक्रमे' (ऋ.सं.१-२२-१७) इत्यादिश्रुतिसिद्धम्। अत एव **उरुगायः** उरुभिर्महात्मभि-र्गीयमानः, अति प्रभूतं गीयमानो वा। एतादृशस्य विष्णोर्वीर्याणि नुकमिदानीं प्रावोचम्।

**प्र तद् विष्णुः स्तुवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।**
**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥२॥**

इति द्वितीया ऋक्। स महानुभावो विष्णु**र्वीर्येण** स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण **स्तुवते** स्तूयते सर्वैः। तृतीयसवने स्तोमातिरेके शस्त्रे वीर्येण स्तूयमानत्वे दृष्टान्तः– **मृगो न** ॥ सिंहादिरिव। स्वविरोधिनो मृगयिता सिंह इव। **भीमो** शत्रूणां भीतिजनकः। **कुचरः** कुत्सितहिंसादिकर्ता दुर्गमप्रदेशादिगतो वा। **गिरिष्ठाः** पर्वताद्युन्नतप्रदेशस्थायी। किञ्च **कुचरः** कुषु सर्वासु भूमिषु

लोकत्रयेषु सञ्चारी वा। **गिरिष्ठाः** गिरिरिव निश्चलः सन् सर्वलोकेषु तिष्ठतीति। यद्वा, गिरि मन्त्रादिरूपायां वाचि। सर्वदा वर्तमानः। ईदृशोऽयं **स्वमहिम्ना** स्तूयते। किञ्च, यस्य विष्णोः **उरुषु** विस्तीर्णेषु **त्रिषु** त्रिसङ्ख्याकेषु **विक्रमणेषु** **विश्वा** विश्वानि **भुवनानि** भूतजातानि आश्रित्य निवसन्ति स विष्णुस्तृतीयसवने स्तूयते ॥

**प्रविष्णव** इति तृतीया ॥

**प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।**
**य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभिः ॥३॥**

**विष्णवे** सर्वव्यापकाय। **शूषम्** अस्मद्रक्षाणादिजन्यमहद्बलत्वं **मन्म** मननं स्तोत्रं मननीयं **शूषं** बलवान् विष्णुः **एतु** प्राप्नोतु । कर्मणः सम्प्रदानत्वाच्चतुर्थी । कीदृशाय? **गिरिक्षिते** गिरिवदुन्नतप्रदेशे तिष्ठते **उरुगायाय** बहुभिर्गीयमानाय **वृष्णे** वर्षित्रे कामानाम् । एवं महानुभावं प्रति शूषं मन्म च प्राप्नोतु । कोऽस्य विशेष इति । उच्यते । **यो** विष्णुः **इदं** प्रसिद्धं दृश्यमानं **दीर्घम्** अतिविस्तृतं **प्रयतं** नियतं **सधस्थं** सहस्थानं लोकत्रयम् **एक इत्** एक एव अद्वितीयः सन् त्रिभिः **पदेभिः** पादैः **विममे** विशेषेण निर्मितवान् ।

चतुर्थऋक् **'यस्य त्री पूर्णा'** इति ।

**यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।**
**य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥**

**यस्य** विष्णोः **मधुना** मधुरेण दिव्येनामृतेन **पूर्णा** पूर्णानि **पदानि** पादक्षेपणानि **अक्षीयमाणा** अक्षीणानि। **स्वधया** अन्नेन **मदन्ति** मदयन्ति। विबुधाः। **य उ** य एव **पृथिवीं** प्रख्यातां भूमिं **द्यां** द्योतनात्मकमन्तरिक्षं च **विश्वा** सर्वाणि भुवनानि चतुर्दशलोकांश्च। यद्वा पृथिवीशब्देनाधोवर्तीन्यतलादिसप्तभुवनानि, **उत द्यां** द्युशब्देन तदवान्तररूपाणि भुवरादिसप्तभुवनानि। एवं चतुर्दशलोकान् **विश्वा भुवनानि** तत्रत्यानि जनजातानि। **त्रिधातु** त्रयाणां भूतानां समाहारः त्रिधातु। पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा

**दाधार** धृतवान्। उत्पादितवानित्यर्थः। तथा च छन्दोगारण्यके 'तत्तेजोऽसृजत तदन्नमसृजत' (छा.उ.६-२-३) इत्यादिना भूतत्रयसृष्टिमुक्त्वा 'हन्तेमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा.उ.६-३-४) इति त्रिवृत्करणसृष्टिरुपपादिता। यद्वा **त्रिधातु** कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः।

**'तदस्य प्रियमभि पाथः'** इति पञ्चमी ऋक्।

**तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति।**
**उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥**

**अस्य** महतो विष्णोः **प्रियं** प्रियभूतं **तत्** सत्यत्वेन प्रसिद्धं **पाथः** अन्तरिक्षनामैतत्, अनश्वरं ब्रह्मलोकम् **अश्यां** प्राप्नुयाम्। तदेव विशिष्यते— **यत्रेति**॥ **यत्र** स्थाने **देवयवः** देवं द्योतनस्वभावं विष्णुमात्मनः इच्छन्तः यज्ञदानादिना प्राप्तुमिच्छन्तः नराः **मदन्ति** तृप्तिमनुभवन्ति। तदश्यामित्यन्वयः। पुनरपि तदेव विशिष्यते— **उरुक्रमस्य** अत्यधिकं सर्वं जगदाक्रममाणस्य **विष्णोः** तत्तदात्मना व्यापकस्य परमेश्वरस्य **परमे** उत्कृष्टे निरतिशये केवलसुखात्मके **पदे** स्थाने **मध्वः** मधुररसस्य **उत्सः** निष्यन्दो वर्तते। तदश्याम्। यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति, सङ्कल्पमात्रेणामृततुल्यभोगाः प्राप्यन्ते तादृशमित्यर्थः। ततोऽधिकं नास्तीत्याह— **इत्था** इत्थमुक्तप्रकारेण **स हि बन्धुः** सर्वेषां सुकृतिनां बन्धुभूतः सन् हितकरो वा। तस्य बन्धुत्वं सर्वश्रुत्यादिप्रसिद्धमिति हिशब्दः। यद्वा तस्य विष्णोः प्रियं **पाथः** जलं तत्पादतीर्थं शालग्रामतीर्थमिति यावत्। **अभ्यश्याम्** अश्नामि। **देवयवो** नरा **यत्र** यस्मिन् प्राप्ते **मदन्ति** हृष्टा भवन्ति तत्पाथ इत्यन्वयः। मध्वरूपी वायुस्तत्रोत्साहयुक्त इत्याह— **परमे विष्णोः पदे** विष्णुपादोदके शालग्रामशिलातीर्थे **मध्वः** आनन्दकरशास्त्रनिर्माता आनन्दतीर्थः **उत्सः** उत्साहयुक्तः। **स** मध्वः **इत्था** इत्थमुरुक्रमस्य बन्धुरिति हि 'देहेऽपि यत्र' (म.भा.ता.नि. ४-४६) इत्युपात्त 'कस्मिन् न्वहम्' इत्यादिश्रुतिप्रसिद्धमित्यर्थः॥

**'यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्।**
**यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः'** ॥

**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।'**

हे देव विष्णो त्वं **मात्रया** मितेः **परः** अपरिमितगुण इति यावत् । न केवलं गुणतः किन्तु **तन्वा** शरीरेणैव **वा वृधान** अभिवृद्धः । ते **महित्वं** महिमानं केऽपि **नान्वश्नुवन्ति** साकल्येन जानन्ति । शिष्टमन्यत्र ज्ञेयम् ।

**य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यषीदत्पिता नः ।**
**स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ।।**

(ऋ.सं.१०-८१-१)

**यः** परमात्मा इमानि **विश्वा** समस्तानि भुवनानि सत्यादिलोकान् ब्रह्मादिभ्यो **जुह्वत्** ददानः । **ऋषिः** सर्वज्ञः । **होता** इन्द्रियेषु विषयहोता । **न्यषीदत्** इन्द्रियेषु विषयेषु च नियामकत्वेन निषसाद । **नः** सर्वेषां पिता **स** परमात्मा **आशिषा** भक्तमनोरथानुसारेण **द्रविणं** तदुपलक्षितभक्ताभीष्टं दातुमिच्छमानः **प्रथमच्छत्** प्रथमविभागः प्रथमावतारः पुरुषनामा **अवरान्** स्वापेक्षयाऽतिनीचान् ब्रह्मादीन् **आविवेश** देहनियामकत्वेन प्रविवेशेति । शिष्टमन्यत्र द्रष्टव्यम् ।

ननु विष्णुसूक्तादिचतुष्टयस्य विष्णुपरत्वेऽपि नाशेषवेदार्थत्वं युक्तम् । हिरण्यगर्भादिसूक्तानां हिरण्यगर्भादिपरत्वात् । यद्यपि 'नामानि सर्वाणि यमाविशन्ति' (ब्र.सू.उ.श्रु.१-१-१) 'यो देवानां नामधा एक एव' इत्यादिश्रुत्या हिरण्यगर्भादिनाम्नां विष्णौ शक्तिमात्रमवसीयते । तथापि न तात्पर्ये प्रमाणमस्ति । 'यत्परः शब्दः स हि शब्दार्थः' इति हि न्यायः । न च शक्तिमात्रेण तात्पर्यं कल्पयितुं युक्तम् । अभ्यवहरणसमये प्रयुक्तस्य सैन्धवमानयेति वाक्यस्य तुरङ्गादौ तात्पर्यापत्त्याऽतिप्रसङ्गः स्यादित्यतो विष्णुसूक्तादिदृष्टान्तेनाशेषवेदानां भगवत्परत्वमाह— **एवमेवेति ।।** एवं विष्णुसूक्तादय इव **अखिलाः** हिरण्यगर्भप्रभृतिसमस्ता **वेदाः** अकर्तृकत्वप्रसिद्धिमद्वाक्यसमूहाः विष्णौ मुख्यतः तात्पर्यवन्त एव ज्ञातव्याः । उपक्रमादिभिरिति शेषः । कथमुपक्रमादितात्पर्यलिङ्गानीति चेत् । इत्थम् । 'तत्तु समन्वयात्' (ब्र.सू.१-१-४) इति नयरीत्योपक्रमादिरपि सकलसूक्तानां विष्णावेवेति तत्रैव महातात्पर्यम् । उपपत्तिश्च । तथा हि । सर्वोऽपि वेदस्तावदेकमेव शास्त्रं, भेदे मानाभावात् ।

शास्त्रैक्यं च विषयप्रयोजनैक्यनिमित्तं निमित्तान्तराभावात् । सर्वोत्तमश्च वेदः प्रसिद्धः 'वेदशास्त्रात्परं नास्ति' (म.भा.ता.नि.२-६९) इत्यादौ । सर्वोत्तमता च सर्वोत्तमप्रयोजनवत्ताया-मुपपद्यते । सर्वोत्तमं च प्रयोजनं मोक्ष एव ।

धर्मार्थकामाः सर्वेऽपि न नित्या मोक्ष एव हि ।
नित्यस्तस्मात् तदर्थाय यतेत मतिमान्नरः ।। इत्यादेः ।

(वि.त.नि.उ.भाल्लवेयश्रुतिः)

तथा च सर्वशास्त्राणां मोक्षार्थत्वे स्थिते विषयोऽपि विचार्यते । प्रतिवाक्यमर्थानामनेकत्वेऽपि न तेषां शास्त्रविषयतोपपद्यते । वाक्यभेदप्रसङ्गात् । अतो यत्प्रतिपत्तयेऽवान्तरवाक्यार्थप्रतिपादनं स एक एव महातात्पर्यगोचरो विषयो वाच्यः । यश्च ज्ञातोऽभिमतप्रयोजनहेतुः स एव महातात्पर्य-गोचरतामापद्यते । विषयप्रयोजनयोः सम्बन्धाभावे शास्त्रस्यानुपादेयत्वप्रसङ्गात् । अभिमतप्रयोजनस्य च मोक्षस्य सर्वोत्कृष्टतया ज्ञातः प्रसन्नो भगवान् विष्णुरेव हेतुरिति

यस्य प्रसादात् परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण ।
नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात् ।।

(वि.त.विनि.उदा. नारायणश्रुतिः)

इति स्पष्टं श्रूयते । तस्मात्स एको विष्णुरेव सकलवेदमुख्यतात्पर्यगोचरोऽङ्गी-कार्य इति ।

मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतेः परम् ।
उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम् ।। (वि.त.विनि.उदा.)

इति महावाराहवचनं चात्र मानम् ।

एतेनेदमपि निरस्तम्– वेदानां हिरण्यगर्भादिपरत्वेऽभियुक्तव्याख्यानमेव ज्ञापकमस्तीति । मुख्यतात्पर्यनिराकरणेऽप्यवान्तरतात्पर्याभ्युपगमात् । मुख्य-तात्पर्यप्रवक्तॄणामुक्तवाक्यादिविरोधित्वेनाभियुक्तत्वमेव नास्तीति ।

ननु शक्त्यतिरिक्तं किं तात्पर्यम्? यदत्र समर्थितम्, तात्पर्यवृत्तेरतिरिक्ताया

अन्यत्र शास्त्रे निराकृतत्वादिति चेत्, सत्यमेवं तथापि तयोरस्ति भेदः। पदस्य सामान्यतः इतरान्विते या वृत्तिः सा शक्तिः। यथोक्तम्—

शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ।। इति ।(अनु.व्या.१-१-७२)

तस्या एव शक्तेः पदान्तरादिसमभिव्याहारेण विशेषान्वयप्रमाजनकत्वे पर्यवसानम्। तदाहितशक्त्यन्तरं वा तात्पर्यमिति। तथा च तत्प्रमितिजनकत्वमेव तात्पर्यशब्दार्थ इत्यवगन्तव्यम् ।। ५९-६१ ।।

**मङ्गाली–** इदानीं वैदिकान् वैष्णवान् जप्यान् मन्त्रानाह– **सूक्तमिति ।। प्रभोः** विष्णोः। **दीर्घतमोदृष्टं** दीर्घतमोनामकऋषिणा दृष्टं। **विष्णोर्नुकमिति।** 'विष्णोर्नुकं वीर्याणि प्रवोचं'(ऋ.सं.१-१५४-१) इति सूक्तं षडर्चम्। 'विष्णोः षड् वैष्णवं हि'(अनु.क्र.१-१५१-१) इत्यनुक्रमणीकोक्तेः। अस्य सूक्तस्य दीर्घतमा ऋषिः। त्रिष्टुप् छन्दः। विष्णुर्देवतेति ज्ञातव्यम्। केचित्तु विष्णोर्नुकमिति सूक्तं वर्गत्रयात्मकमिति वदन्ति। फलमाह– **सर्वेति।।** सर्वपुरुषार्थदम्। मन्त्रान्तरमाह– **गार्त्समदमिति ।। प्रभोर्विष्णोः। अपरं च** पूर्वोक्तादन्यच्च। **गार्त्समदम्** गृत्समदऋषिणा दृष्टम्। **'यो जात' इति ।।** 'यो जात एव प्रथमो मनस्वान्'(ऋ.सं.२-१२-१) इति पञ्चदशर्चं सूक्तम्। 'यो जातः पञ्चोना'(अनु.क्र. २-१२) इत्यनुक्रमणिकोक्तेः। पञ्चोना पञ्चभिः ऋग्भिः न्यूना विंशतिरित्यर्थः। **सर्वार्थद**मिति एतत्सूक्तस्यापि फलकथनम्। अस्य सूक्तस्येन्द्रनामा विष्णुर्देवता। त्रिष्टुप् छन्दः। गृत्समदो ऋषिरिति ज्ञेयम्। **वासिष्ठं** च वसिष्ठऋषिणा दृष्टम्। 'परो मात्रया तन्वा वृधाना'(ऋ.सं.७-९९-१) इति सूक्तं चतुर्दशर्चं। 'परो मात्रयेति वैष्णवं चतुर्दशर्चं' इत्यनुक्रमणिकोक्तेः। अपरं सूक्तं। अस्य सूक्तस्य विष्णुर्देवता। वशिष्ठ ऋषिः। त्रिष्टुप्छन्द इति ज्ञेयम्। **विज्ञानमुक्तद**मिति फलकथनम् ।।

**भौवनीयम्** भुवनामकस्य पुत्रो विश्वकर्मा भौवनः। 'कष्यपो विश्वकर्माणं भौवनमभिषिषेच' इति श्रुतेः। तेन दृष्टम्। 'य इमा विश्वा भुवनानि जुह्वयात्' (ऋ.सं.१०-८१-१) इत्यादि चतुर्दशर्चं सर्वकाममोक्षदं च। अपरं सूक्तं। अस्य सूक्तस्य विष्णुर्देवता। विश्वकर्मा ऋषिः। त्रिष्टुप् छन्दः। सर्वस्यापि

वैष्णवसूक्तस्य **मूलेन प्राणायामः** । ज्ञानादीन्यङ्गानि । उद्यद्भास्वदित्यादि ध्यानमिति द्रष्टव्यम् । ध्यानानुक्तौ प्रधानवदित्युक्तेः । केचित्तु सर्वस्यापि वैष्णसूक्तस्य विष्णुमन्त्रेण प्राणायामः । तद्वदेव ध्यानादीत्याहुः । वेदे सूक्तानामानंत्येन प्रत्येकं वक्तुमशक्यत्वे-नोक्तन्यायमन्यत्राप्यतिदिशति– **एवमेवेति** ।। अखिला वेदाः **एवमेव** विष्णोर्नुकमित्यादि सूक्तवदेव । **विष्णुतत्पराः** विष्णौ तात्पर्यवन्तः । **एवमेव** पूर्वसूक्तवत्**सर्वार्थदाः** सर्वपुरुषार्थदा ज्ञातव्याः । तेषु सूक्तेषु कलावुद्दीप्तवीर्याण्येवास्माभिः कण्ठत उक्तानीति ज्ञेयमिति भावः ।। ५९-६० ।।

वैदिको लक्ष्मीमन्त्रः

**तं.सा. स्वदृष्टं सूक्तमखिलं कामदं (अखिलकामदं) हरितुष्टिदम् ।**
**वाचोऽम्भृण्याः श्रियोऽङ्गानि श्रीर्लक्ष्मीर्मेन्दिरा रमा ।।६२।।**

**त.क.—** एतेषां ज्ञानैश्वर्यैत्यादिप्रदत्वमाश्रित्यान्यान् मन्त्रानुद्धरति । तत्रापि लक्ष्म्याः सर्वाधिक्यादाधिक्यक्रमेणादावुद्धरति— **स्वदृष्टमिति** ।। देवतात्वेन चित्ते परिवर्तमाना लक्ष्मीः स्वशब्देन परामृश्यते । अखिलं सूक्तमित्यनेन 'अहं रुद्रेभिः' (ऋ.सं.१०-१२५-१) इत्यारभ्य 'एतावती महिना सम्बभूव' इत्यन्तं गृह्यते । न ह्येक एवर्षिर्देवता च भवति । उच्यते । 'ऋषिश्च देवतैकोऽहं'(तं.सा.१-१७) इत्युक्त्या ऋषिदेवतयोर्न भेदनियमः । तत्रापि रूपभेदेनैव तदुभयमिति चेदिहापि तथोपपत्तिः । 'अहमष्टौ वागम्भृणीः तुष्टावात्मानं द्वितीया जगति' इत्युक्तेः । अत एवाऽह— **अम्भृण्या इति**।। श्रियो विशेषणम् । अम्भृणीरूपेण द्रष्टत्वं, श्रीरूपेण देवतात्वमिति लभ्यते । तद्वैय्यर्थ्यमन्यथा न निवार्यते । अङ्गन्यासमन्त्रान् सूचयति— **अङ्गानीति** ।। श्र्यादिपञ्चशब्दैर्यथाक्रमं हृदयशिरःशिखाकवचास्त्रशब्दाः नमःस्वाहावषट्कवचायहुमस्त्रायफट्शब्दोत्तरा लक्ष्यन्ते । तथा च 'श्रीं हृदयाय नमः । लक्ष्मीं शिरसे स्वाहा' इत्यादिरूपेण पञ्चमन्त्रनिष्पत्त्या पञ्चाङ्गन्यासो ज्ञातव्यः ।। ६२ ।।

**अ.सं.—** लक्ष्मीमन्त्रमाह– **स्वदृष्टमिति** ।। **वाचः** वह्नियामकत्वेन वागाख्यायाः । अम् अकारवाच्यं ब्रह्म । 'अः इति ब्रह्म'(ऐ.उ.२-३-८) इति श्रुतेः

तं बिभर्तीति अंभ्रिणीनामिकायाः **श्रियः** लक्ष्मीदेव्याः प्रतिपादकं **स्वदृष्टं** स्वया श्रीदेव्या दृष्टम् **अखिलकामदं** हरिंतुष्टिदं विष्णुप्रीतिकरं सूक्तम् । 'अहं रुद्रेभिर्वसुभिश्चरामि' इत्याद्यष्टर्चं ज्ञेयम् । 'अखिलं कामदं' इति पाठे अखिलसूक्तमित्यन्वयः । अस्य सूक्तस्य अंभृणी देवता । लक्ष्मी ऋषिः । द्वितीयामृते त्रिषुप् छन्दः । द्वितीयाया जगती। 'अहमष्टौ वागम्भृणीतुष्टावात्मानं द्वितीयाया जगती' इत्यनुक्रमणिकोक्तेः। पञ्चाङ्गन्यासमन्त्रानाह– **श्रीरिति ।।** श्रीरित्यादिपञ्चपदानि चतुर्थ्यन्तानि अङ्गानि पञ्चाङ्गन्यासमन्त्रा ज्ञेयाः ।। ६२ ।।

**गु.दी.–** इदानीं लक्ष्मीमन्त्रमाह— **स्वदृष्टमिति ।। वाचः** वाङ्नियामकत्वेन वागाख्यायाः अं परमात्मानं बिभर्तीत्यम्भ्रणीनामिकायाः श्रियः प्रतिपादकं **स्वदृष्टं** 'अहं रुद्रेभिर्वसुभिश्चरामि' (ऋ.सं.१०-१२५-१) इति सूक्तमखिलकामदं हरितुष्टिदं चेत्यर्थः । 'अखिलं' इति पाठेऽहंरुद्रेभिरित्याद्यष्टर्चं सूक्तमित्यर्थः । श्रीरित्यादीनि पञ्चपदानि सोद्देशानि **अङ्गानि** अङ्गन्यासमन्त्रा इति भावः ।। ६२ ।।

**मङ्गाली–** लक्ष्मीमन्त्रमाह– **स्वदृष्टमिति ।। वाचो** वाङ्नियामकत्वेन वागाख्यायाः । अं अकारवाच्यं ब्रह्म । 'अः इति ब्रह्म'(ऐ.उ.२-३-८) इति श्रुतेः । तं बिभर्तीति अंबृणीनामिकायाः **श्रियो** लक्ष्मीदेव्याः प्रतिपादकं **स्वदृष्टं** स्वया श्रीदेव्या दृष्टं अखिलकामदम् । **हरितुष्टिदं** विष्णुप्रीतिकरं सूक्तं 'अहं रुद्रेभिर्वसुभिश्चरामि'(ऋ.सं.१०-१२५-१) इत्याद्यष्टर्चं ज्ञेयम् । 'अखिलं कामदं' इति पाठे अखिलं सूक्तमित्यन्वयः । अस्य सूक्तस्यांभृणीदेवता । लक्ष्मीः ऋषिः । द्वितीयामृते त्रिष्टुप् छन्दः । द्वितीयाया जगती । 'अहमष्टौ वागम्भृणी तुष्टावात्मानं द्वितीयाया जगती' इत्यनुक्रमणि-कोक्तेः । पञ्चाङ्गन्यासमाह– **श्रीरिति ।।** श्रीरित्यादि पञ्चपदानि चतुर्थ्यन्तानि । **अङ्गानि** पञ्चाङ्गन्यासमन्त्राः ज्ञेयाः ।।६२।।

लक्ष्मीध्यानम्

**तं.सा. कौशेयपीतवसनामरविन्दनेत्रां**
**पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।**

**उद्यच्छतार्कसदृशीं(सदृशां) परमाङ्कसंस्थां**
**ध्यायेद्विधीशनु(न)तपादयुगां जनित्रीम् ॥ ६३ ॥**

**त.क.**— ध्यानप्रकारमाह— **कौशेयेति** ॥ पद्मद्वयमभयं वरं च यस्याः सा तथोक्ता। उद्यतः ऊर्ध्वः पद्महस्तो यस्याः सा। पद्मद्वयाभयवरा च सा उद्यतपद्महस्ता चेति विग्रहः। तेन दक्षोर्ध्वबाहौ पद्मं, वामोर्ध्वबाहौ चापरं पद्मं, दक्षाधःकरे अभयमुद्रां, वामाधःकरे वरमुद्रां च दधती इति चतुर्बाहुत्वमुक्तं वेदितव्यम्। उद्यच्छतार्केत्यनेनादित्यवर्णत्वमुक्तम्। परमस्य हरेरङ्के संस्थाम्। विधीशेति सर्वोपलक्षणम्। जनित्रीमित्यत्राप्येतत् सम्बध्यते ॥ ६३ ॥

**अ.सं.**— ध्यानमाह- **कौशेयेति** ॥ कौशेये कृमिकोशोत्थे पीतवर्णे वसने यस्यास्तामित्यर्थः। पीतवस्त्रस्थाने रक्तवस्त्रद्वयस्य लज्जाबीजे वक्ष्यमाणत्वात्। पद्मद्वयेन अभयमुद्रावरमुद्राभ्यां च उद्यताः युक्ताः। पद्मवत् विद्यमानाः चतुःसङ्ख्याकाः हस्ताः यस्याः सा तथोक्ता, तामित्यर्थः। ऊर्ध्वकरद्वये पद्मद्वयम्। अधरदक्षिणकरे अभयमुद्रा। वामाधःकरे वरमुद्रा इति विवेकः। तदुक्तम्-

चतुर्भुजां सुवर्णाभां सपद्मोर्ध्वकरद्वयाम्।
दक्षिणाभयहस्तां तां वामहस्तवरप्रदाम् ॥ इति।
परस्य विष्णोरङ्के उपविष्टां जनित्रीं लोकमातरम् ॥ इति ॥ ६३ ॥

**गु.दी.**— ध्यानमाह— **कौशेयेति** ॥ कुशाख्यकीटनिर्मितत्वात् **कौशेयं** वर्णतः पीतं वसनं यस्याः सा तथोक्ता ताम्। पद्मद्वयेनाभयवरमुद्राभ्यां चोद्यताः उद्युक्ताः ऊर्ध्वं कृताः पद्मवत्प्रशस्ताः हस्ताः यस्याः सा तथा ताम्। पद्मयोः द्वयं पद्मद्वयम्। पद्मद्वयं च अभयं च वरं च पद्मद्वयाभयवराणि। पद्मद्वयाभयवराणि एषु करेषु सन्तीति पद्मद्वयाभयवराः। पद्मद्वयाभयवरेषु उद्यतौ पद्महस्तौ यस्याः सा तामिति वा। परमस्य विष्णोः अङ्के संस्थाम्। विधीशौ ब्रह्मरुद्रौ। सर्वमातृत्वाज्जनित्रीम् ॥ ६३ ॥

**मङ्गली**— ध्यानमाह- **कौशेयेति** ॥ कौशेये क्रिमिकोशोत्थे पीतवर्णे वसने यस्यास्तामित्यर्थः। पीतवस्त्रस्थाने रक्तवस्त्रद्वयस्य लज्जाबीजे वक्ष्यमाणत्वात्।

पद्मद्वयेन अभयमुद्रावरमुद्राभ्यां च उद्यताः युक्ताः पद्मवत् विद्यमानाः चतुस्सङ्ख्याकाः हस्ता यस्यास्सा तथोक्ता तामित्यर्थः । ऊर्ध्वकरद्वये पद्मद्वयम् । अधरदक्षिणकरे अभयमुद्रा वामाधःकरे वरमुद्रेति विवेकः । तदुक्तम्–

चतुर्भुजां सुवर्णाभां सपद्मोर्ध्वकरद्वयाम् ।
दक्षिणाभयहस्तां तां वामहस्तवरप्रदाम् ।। इति ।

परस्य विष्णोरंके उपविष्टां जनित्रीं लोकमातरम् ।। इति ।। ६३ ।।

लक्ष्म्या एकाक्षरमन्त्रद्वयम्

**च.सा. लज्जा बीजं च तद्बीजं तस्या एवाभिधायकम् ।**
**पाशांकुशौ रक्तवस्त्रे लज्जाबीजे विशिष्यते ।। ६४ ।।**

**त.क.–** मन्त्रान्तरमाह— **लज्जेति ।।** लज्जाशब्देन तत्पर्यायः ह्रीशब्दः, बीजशब्देनानुस्वारसाहित्यम् । तेन **'ह्रीं'** इत्येकाक्षरं **तस्याः** श्रिय एवाभिधायकं मन्त्रान्तरमिति यावत् । तद्बीजं च, तच्छब्देन श्रीवाचकः शब्दः । बीजमनुस्वारः । श्रीमित्येकाक्षरं च तस्या एवाभिधायकं मन्त्रान्तरम् । **'ह्रीं'** इत्येको मन्त्रः **'श्रीं'** इत्येको मन्त्रः । तदुक्तम्—

छन्दसामादिराद्यर्णं तुर्यमग्रेरनन्तरम् ।
अग्निश्च महती मायाऽनुस्वारश्च पञ्चमः ।।

एकाक्षरो मनुर्ब्रह्म श्रियस्सर्वफलप्रदः ।
ऋषिर्मकणकः प्रोक्तश्छन्दो गायत्रमुच्यते ।
श्रीरस्य देवताऽङ्गानि स्वेन रूपेण कल्पयेत् ।। इति ।

अग्नेः रेफस्य तुर्यं चतुर्थमक्षरं शकारः अनन्तरं रेफः । इति मन्त्रद्वयमुक्तं वेदितव्यम् । ध्यानं पूर्ववदेवेति चेतसि कृत्वा तत्र केषाञ्चित्पदानामावाप-मुद्वापश्चाह— **पाशेति ।।** पाशांकुशयोरावापः । पद्मद्वयस्योद्वापः । पीतवसना-मित्यस्योद्वापः । रक्तवस्त्रेत्यस्यावापः । तेन दक्षोर्ध्वकरे पाशः । वामोर्ध्वकरे अंकुशः । दक्षाधःकरेऽभयम् । वामाधःकरे वरं च धत्त इति, तथा धारणार्थमेकं

रक्तवस्त्रमुपर्येकं रक्तवस्त्रमेवं द्वे रक्तवस्त्रे धत्त इत्येतल्लज्जावीजरूपे ह्रीमित्याकारके मन्त्रे विशिष्यते । श्रीमिति मन्त्रे तु यथापूर्वमेव ध्यानमित्यर्थः ।। ६४ ।।

**अ.सं.—** लक्ष्म्या अपरौ मन्त्रावाह– **लज्जाबीजमिति ।। लज्जाबीजं** लज्जार्थकं ह्रीमिति बीजम् । **तद्बीजं** तस्याः श्रियः बीजं श्रीमिति बीजं च । **तस्या एव** लक्ष्या एवाभिधायकमिति प्रत्येकं सम्बन्धः । अनेन **'ह्रीं'** इति एकः **'श्रीं'** इत्येकः । एवं द्वौ मन्त्रौ उक्तौ भवतः । एवं मन्त्रद्वयेऽपि पूर्वोक्तमेव ध्यानम् । तत्र लज्जाबीजे ध्यानविशेषमाह– **पाशेति ।।** पद्मद्वयस्थाने **पाशाङ्कुशौ** तन्नामकायुधविशेषौ । पीतवस्त्रस्थाने रक्तवस्त्रद्वयं ज्ञेयम् । आयुधवस्त्रविषय एव विशेष इति भावः । ततश्च पूर्वोक्तध्यानश्लोके । ''कौशेयरक्तवसनामरविन्दनेत्रां पाशाङ्कुशाभयवरोद्यतपद्महस्तां'' इत्यूहः कर्तव्य इति भावः सूचितो भवति । तदुक्तम्–

उद्यदादित्यरुचिरां पाशाङ्कुशवराभयैः ।
अलङ्कृतां चतुर्बाहुं लज्जादेवीं हृदि स्मरेत् ।। इति ।

श्रीबीजस्य भृगुः ऋषिः लज्जाबीजस्य वसिष्ठसुतः शक्तिः ऋषिः । छन्दस्तु निचृन्नामकगायत्री । देवता लक्ष्मीरेव । उक्तं चेदं श्रीबीजमन्त्रोद्धारपूर्वकं नारायणीये–

संवर्त्तात् वामतः षष्ठव्योमसप्तमसंयुतम् ।
तुरीयस्वरचन्द्रार्थकलानादविभूषितम् ।।

एकाक्षरो रमामन्त्रः मनोरथसुरद्रुमः ।
भृगुरस्य मुनिः प्रोक्तः छन्दश्चास्य निचृन्मतम् ।।
देवता गदिता लक्ष्मीर्भोगमोक्षफलप्रदा ।। इति ।

अस्यार्थः । संवर्तः क्षकारः । तदपेक्षया वामतः व्युत्क्रमेण षष्ठं षष्ठाक्षरं शकारः। व्योमसप्तमसंयुतम् । व्योम हकारः । तदपेक्षया व्युत्क्रमेण सप्तमः रेफः तेन युतः । तुरीयस्वरः चतुर्थस्वरः ईकारः । चन्द्रार्धकला अर्धचन्द्रः । नादः एतैर्युक्तः । अयमेकाक्षरो रमामन्त्रः । श्री इति बीजमन्त्रः । निचृन्नामकगायत्री इति । श्रीह्रीबीजमन्त्रोद्धारश्लोक्तो दक्षिणामूर्तिसंहितायाम्–

व्योमवह्निसमारूढं वामाक्षिपरिभूषितम् ।
बिन्दुनादकलाक्रान्तं विज्ञेया भुवनेश्वरी ।।

ऋषिः शक्तिर्वसिष्ठस्य सुतः छन्दोऽस्य कथ्यते ।
गायत्रं देवताबोधवाचि संवित्कलः परा ।। इति ।

अस्यार्थः । व्योम हकारः । वह्निसमारूढं वह्निः अग्निबीजं रेफः । 'वाय्वग्निवरुणानां च बीजानि य-र-वाः क्रमात्' इत्युक्तेः । तद्युक्तः । वामाक्षि वामनेत्रन्यसनीयः ईकारः । तेन च युतः । बिन्दुनादकलाक्रान्तः अनुस्वार-नादार्धचन्द्रयुक्तः । अयं ह्रीं इति एकाक्षरो रमामन्त्र इत्यर्थः । शिष्टं स्पष्टम् ।।६४।।

**गु.दी.–** लक्ष्म्याः एकाक्षरमन्त्रावाह— **लज्जेति ।। लज्जाबीजं** ह्रीरिति । **तद्बीजं** तस्याः श्रियो बीजं श्रीरिति । ततश्च **ह्रीं श्रीं** इति मन्त्रद्वयं **तस्याः** रमाया एवाभिधायकम् । ह्रीमित्येकाक्षरमन्त्रध्याने विशेषमाह— **पाशाङ्कुशाविति ।।** पद्मद्वयस्थले पाशाङ्कुशौ पीतवस्त्रस्थाने रक्तवस्त्रमिति लज्जाबीजे ह्रीमित्येकाक्षरमन्त्रे विशिष्यत इत्यर्थः ।। ६४ ।।

**मङ्गाली–** लक्ष्म्या अपरौ मन्त्रावाह– **लज्जाबीजमिति ।। लज्जाबीजं** लज्जार्थकं ह्रीमिति बीजम् । **तद्बीजं** तस्याः श्रियो बीजं श्रीमिति बीजं च । **तस्या एव** लक्ष्म्या एवाभिधायकमिति प्रत्येकं सम्बन्धः । अनेन **'ह्रीम्'** इत्येकः **'श्रीम्'** इत्येकः । एवं द्वौ मन्त्रावुक्तौ भवतः । एतन्मन्त्रद्वयेऽपि पूर्वोक्तमेव ध्यानम् । तत्र लज्जाबीजे ध्याने विशेषमाह– **पाशेति ।।** पद्मद्वयस्थाने **पाशांकुशौ** तन्नामकायुधविशेषौ । पीतवस्त्रस्थाने रक्तवस्त्रद्वयं ज्ञेयम् । आयुधवस्त्रविषय एव विशेष इति भावः । ततश्च पूर्वोक्तध्यानश्लोके 'कौशेयरक्तवसनामरविंदनेत्रां पाशांकुशाभयवरोद्यतपद्महस्तां' इत्यूहः कर्तव्य इति भावः सूचितो भवति । तदुक्तम्–

उद्यदादित्यरुचिरां पाशाङ्कुशवराभयैः ।
अलङ्कृतां चतुर्बाहुं लज्जादेवीं हृदि स्मरेत् ।। इति ।

श्रीबीजस्य भृगुः ऋषिः । लज्जाबीजस्य वसिष्ठपुत्रः शक्तिऋषिः । छन्दस्तु

निचृन्नामकगायत्री । देवता लक्ष्मीरेव । अयं विशेषो नारायणीयदक्षिणामूर्तिसंहि-
तयोः 'संवर्त्ताद्वामतः' इत्यादिना 'व्योमवह्निसमारूढां' इत्यादिनोक्तः ।। ६४ ।।

लक्ष्मीमन्त्रद्वयस्य षडङ्गन्यासाभिधानम्, लक्ष्म्याः मन्त्रान्तरोद्धारश्च

**तं.सा. अमध्ययुग्मस्वरगतेनैवाङ्गमुदाहृतम् ।**
**सत्ताबीजं च दुर्बीजं तद्वदेव प्रकीर्तितम् ।। ६५ ।।**

**त.क.–** बीजं शक्तिं तथैवाङ्गं हृदयादि च षड्विधम् ।
ऋषिश्छन्दो देवता च वर्णो दीपनमेव च ।
आप्यायनं मोचनं च..................... ।
संकलीकरणं चैव द्वादशैतानि पद्मज ।
द्वादशाङ्गानि यो वेत्ति मन्त्रं सोऽर्हति वेदितुम् ।

इति पाद्मे चतुर्थपादे षड्विंशाध्यायोक्तेरङ्गन्यासस्यावश्यकत्वात्,
द्विःसव्यनेत्रकर्णेनः मन्वन्त्यस्वरसंयुजा ।
मनुनैव षडङ्गानि जातियुक्तानि कल्पयेत् ।। इति, तथा—
युग्माब्धिषट्सूर्यमनुविकृतिस्वरवह्निभिः ।
बिन्दुनादयुजा व्योम्ना षडङ्गानि सजातिभिः ।। इति, तथा—
गोपनं पञ्चबिन्दुं च और्ध्वलोकेशमन्यतः ।
वीरसेनं कलान्तं च सङ्कर्षणसमाह्वयम् ।
सबीजमङ्गसन्तानं कल्पयेद्धृदयादिषु ।।

इति वचनं संगृह्णाति— **अमध्येति** ।। युग्मशब्दो द्वितीयपरः । ये युग्मस्वराः मातृकायां द्वितीयत्वेन पठिताः द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशस्वरा आकारेकारोकारऋकारऌकारैकारौकाराः तेषु मध्याभ्यां ऋकारऌकाराभ्यां षष्ठदशमाभ्यां भिन्नाः अकारादयः अःकारान्ता ये षट् स्वरास्ते अमध्ययुग्मस्वरशब्देनोच्यन्ते । ता न गच्छति संयुक्तं न

**भवतीत्यमध्ययुग्मस्वरगतम्।** एवंविधेन ह्रीबीजेन श्रीबीजेन च मन्त्राणामङ्गं हृदयादिषट्कं न्यसनीयमुक्तं वचनादौ। अमध्ययुग्मस्वरगतं च तत् लज्जाबीजं चेति कर्मधारयो वा। तथा च ह्रीशब्दादुत्तरं द्वितीयेन चाकारेण योगे ईकारलोपे 'ह्रां' इत्येको मन्त्रः। तथा ह्रीशब्दादुत्तरं द्वितीयेन च ईकारेण संयोगे ईकारलोपे च 'ह्रीं' इति द्वितीयो मन्त्रः। एवं 'ह्रूम्' इति तृतीयो मन्त्रः। एवं ह्रीशब्दात् परं द्वादशेन च ऐकारेण संयोगे पूर्वावदीकारलोपे च बिन्दुलोपेन च 'ह्रः' इति षष्ठो मन्त्रः। एतैः षड्भिर्मन्त्रैः पूर्ववत् नमःस्वाहावषट्हुंवौषट्फट्छब्दान्तै-र्हृदयशिरःशिखाकवचनेत्रास्त्रेषु न्यासः कर्तव्य इत्यर्थः। तेन द्विर्द्वितीय आकारो वर्णः, सव्यमिति नेत्रकर्णयोर्विशेषणं, तेन सव्यनेत्रे सव्यकर्णे च मातृकान्यासः न्यसनीयः। ईकारः ऊकारश्च सव्यनेत्रकर्णशब्देनोच्यते। इनशब्देन सूर्यवाचिना द्वादशत्वसंख्यावानैकारो लक्ष्यते। मनुशब्देन पुरुषविशेषवाचिना चतुर्दशत्वसंख्यावानौकारो लभ्यते। अन्त्यशब्देन अःकारः। द्विश्च सव्ये नेत्रकर्णौ च इनश्च मनुश्च अन्त्यश्चेति द्वन्द्वः। ततः कर्मधारयः। एतैः स्वरैर्युजा युक्तेन मनुना श्रीं ह्रीमित्याकारेण मन्त्रेणाङ्गानि हृदयाद्यङ्गवाचकानि चतुर्थ्यन्तानि जातियुक्तानि नमःस्वाहावषट्हुंवौषट्फडिति शब्दयुक्तानि, 'नमःस्वाहा तथा वौषट् वषट् हुं फट् च जातयः' इत्युक्तेः, कल्पयेत् वदेत् इत्यादि वचनस्यार्थः। युग्मो द्वितीयः आकारः। अब्धिश्चतुर्थी ईकारः। षट् षष्ठ ऊकारः। सूर्यमनू प्राग्वत्। विकृतिः अकारः युग्मश्चाब्धिश्च षट् च सूर्यश्च मनुश्च विकृतिश्चेति द्वन्द्वः। ततः स्वरशब्देन कर्मधारयः। वह्निः रेफः। विकृतिस्वरैः सहितो वह्निः येषु पदेषु तानि तथोक्तानि। बिन्दुरनुस्वारः। नादः स्वरविशेषः। व्योम हकारः। सजातयः नम आदिशब्दा। एतैरङ्गानि न्यसनीयनीति द्वितीयवचनस्यार्थः। एवं गोपनमाकारः। पञ्चबिन्दुरीकारः। और्ध्वलोकेश ऊकारः। वीरसेन ऐकारः। सङ्कर्षण औकारः। कलान्त अःकारः। सबीजाक्षरेण ह्रीमित्यादिना सहितमिति तृतीयवचनस्यार्थ इति सूचितम्॥

लक्ष्म्या एवापरं मन्त्रद्वयमुद्धरति— **सत्ताबीजमिति॥** सत्तावाचिभूशब्दाख्यं बीजमक्षरं भूमित्याकारम्। दुरित्येकाक्षरं बीजमुच्यते। 'दुर्गाबीजं

दक्षकर्णयुतस्त्रिश्च विसर्गवान्' इत्युक्तेः। दक्षकर्णे न्यसनीयो वर्ण उकारः। तेन युक्तस्तृतीयस्तवर्गे दकारः। स च विसर्गवान् विसर्जनीयवान्। तथा च **'भूम्'** इत्येको मन्त्रः, **'दुः'**, इत्यपरो मन्त्रः।

मनुं धरण्या वक्ष्यामि साधनं च यथा तथा।
छन्दसामादिमुद्धृत्य सूक्ष्मदृक् पुलहं तथा।
हृषीकेशं विसर्गान्तमनुरेकाक्षरः स्मृतः ।। इति

यद्यपि पाद्मे तन्त्रे भ्लूमित्येकाक्षरो सम्पद्यते। छन्दसामादिरोङ्कारः पृथगुच्चरितो वेदितव्यः। सूक्ष्मदृक् भकारः। 'भल्लायुधो भकारश्च सुभद्रः सूक्ष्मलोचनः' इत्युक्तेः। पुलहो लकारः। 'लकारः पुलहः स्मृतः' इत्युक्तेः। ततो हृषीकेश ऊकारः। 'ऊकारश्च हृषीकेशः' इत्युक्तेः। विसर्गः अनुस्वारः। भकारलकारोकारानुस्वाराणां श्लिष्टोच्चारणे 'भ्लूम्' इति सम्पत्तेः। तथापि लक्ष्म्याः मन्त्रान्तरमेवैतदिति नोद्धृतम्। 'भ्लूम्' इत्येतदेव सत्ताबीजमित्यनेनोच्यत इत्यप्याहुः। अङ्गन्यासध्यानप्रकारजिज्ञासायामाह— **तद्वदेवेति**।। लज्जाबीजवदेवेत्यर्थः।। ६५ ।।

**अ.सं.**– मन्त्रद्वयस्य षडङ्गन्यासमाह– **अमध्येति**।। मध्याभ्यां मध्ये विद्यमानाभ्यां युग्मस्वराभ्याम् अन्ये अमध्याः। अमध्याश्च ते युग्मस्वराश्च अमध्ययुग्मस्वराः **अमध्ययुग्मस्वरगतेन** तैः गतेन संगतेन मन्त्रेणेत्यर्थः।

अयं भावः। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः इति षोडश स्वराः। तत्र प्रथमतृतीयपञ्चमसप्तमनवमएकादशत्रयोदशपञ्चदश इत्यष्टौ स्वराः अयुग्माः। द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडश इत्यष्टौ स्वराः युग्माः। तत्राष्टसु युग्मस्वरेषु मध्ये विद्यमानौ ऌ ॡ इत्येतौ युग्मस्वरौ विना अवशिष्टैः आ ई ऊ ऐ औ अः इत्येतैः षड्भिः युग्मस्मरैः सम्बद्धेन लज्जाबीजेन ह्रीशब्देन श्रीबीजेन श्रीशब्देन च षडङ्गन्यासो ज्ञेयः। ह्रीशब्दस्य स्वरसम्बन्धप्रकारस्तु– 'ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः' इति। श्रीशब्दस्यापि 'श्रां श्रीं श्रूं श्रैं श्रौं श्रः' इति ज्ञेयः। तदुक्तम्-

द्विसव्यनेत्रकर्णेन मन्वन्त्यस्वरसंयुजा।
मनुनैव षडङ्गानि जातियुक्तानि कल्पयेत् ।। इति।

अस्यार्थः– द्विः द्वितीयः आकारः । सव्यनेत्रकर्णौ वामनेत्रकर्णयोः न्यसनीयौ । ईकारः ऊकारश्चेत्येतौ । इनः सूर्यः । द्वादशः ऐकारः । मनुः चतुर्दशः औकारः । अन्त्यः षोडशः अः इति वर्णः । एतैः षड्भिः स्वरैः । सयुजा मनुनैव श्रीबीजमन्त्रेणैव जातियुक्तानि अङ्गानि कल्पयेदिति । जातयस्तु । 'नमः स्वाहा तथा वौषट् हुं वषट् फट् च जातयः' इति सारोक्ताः ज्ञेयाः । तथा ह्रींबीजेऽप्युक्तम्–

युग्माब्धिषट्सूर्यमनुर्विकृतिः स्वरवह्निभिः ।
बिन्दुनादयुजा व्योम्ना षडङ्गानि सजातिभिः ।। इति ।

अस्यार्थः । युग्मः द्वितीयः । आकारः अब्धिः चतुर्थः ईकारः षट् षष्ठः ऊकारः । सूर्यः द्वादशः । ऐकारः । मनुः चतुर्दशः औकारः विकृतिः अः । एतैः षड्भिः स्वरैः, वह्निः रेफः तेन च बिन्दुनादयुजा । व्योम्ना हकारेण सजातिभिः । नमःस्वाहाशब्दादिभिः सह षडङ्गानि ज्ञेयानीति ।

तथा चेत्थं न्यासप्रकारः । ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वौषट् । ह्रैं कवचाय हुम् । ह्रौं नेत्राभ्यां वषट् । ह्रः अस्त्राय फट् इति । एवमेव श्रीबीजेऽपि न्यासो ज्ञेयः ।

लक्ष्म्या एवापरं मन्त्रद्वयमाह– **सत्तेति** ।। सत्तार्थकं भू इति बीजम् । दुः इत्येतत् दुर्बीजं च इत्येतल्लक्ष्म्याः मन्त्रद्वयम् । **तद्वदेव** ह्रीबीजादिवदेव अङ्गादियुक्तं च । दुर्गाबीजोद्धारादिकमुक्तं नारायणीये–

दुर्गाबीजं दक्षकर्णयुतोऽत्रिश्च विसर्गवान् ।
कश्यपस्तु ऋषिः प्रोक्तः छन्दो गायत्रमीरितम् ।
दुर्गा च दीर्घसंयुक्तबीजेनैव षडङ्गकम् ।। इति ।

दक्षकर्ण उकारः । त्रिः त थ द ध नेति तवर्गतृतीयः दकारः । विसर्गयुक् दुः इति दुर्गाबीजमुद्धृतं भवति । दुर्गा च देवतेति शेषः । दीर्घैः पूर्वोक्तैः षड्भिः आकारादिस्वरैः संयुक्तेन दुरिति बीजेन षडङ्गकं ज्ञेयमित्यर्थः ।। ६५ ।।

**गु.दी.– मन्त्रद्वयन्यासमाह— अमध्य इति ।।** अमध्ययुग्मस्वरगेत्य-

विभक्तिको निर्देशः। अमध्ययुग्मस्वरगेनेति। यद्वा, अमध्ययुग्मस्वरगं च तत् तच्च तद्बीजं चामध्ययुग्मस्वरगतत्। तेनेत्येकं वा पदम्। न विद्येते मध्ययुग्मस्वरौ येषां ते अमध्ययुग्मस्वराः। अमध्ययुग्मस्वरान् गच्छति प्राप्नोतीति अमध्ययुग्मस्वरगं। तादृशेन बीजमन्त्रेण **अङ्गं** षडङ्गमुदाहृतमित्यर्थः। अष्टौ स्वरयुग्मानि अआइत्यारभ्य अंअःइत्यन्तानि। तत्र ऋॠऌॡ इति मध्यस्वरयुग्मे। ते विहाय पूर्वैस्त्रिभिर्दीर्घस्वरैः आइत्यादिभिरुत्तरैस्त्रिभिः ऐइत्यादिदीर्घविसर्गस्वरैश्च सहितेन बीजमन्त्रेण षडङ्गमुदाहृतमित्यन्वयः। तत्प्रकारस्त्वित्थम्– ह्रां हृदयाय नमः। ह्रीं शिरसे स्वाहा। ह्रूं शिखायै वौषट्। ह्रैं कवचाय हुम्। ह्रौं नेत्राभ्यां वौषट्। ह्रः अस्त्राय फडिति। एवमन्यत्रैकाक्षरमन्त्रे न्यासो द्रष्टव्यः॥

अपरं मन्त्रद्वयमाह— **सत्तेति**॥ सत्तार्थकबीजं भूरिति। **दुर्बीजं** दुर्गाबीजं दुरिति। **तद्वदेव** ह्रीं श्रीमिति मन्त्रद्वयमिव लक्ष्मीवाचकं प्रकीर्तितम्॥ ६५॥

**मङ्खाली**– मन्त्रद्वयस्य षडङ्गन्यासमाह– **अमध्येति**॥ मध्याभ्यां मध्यमाभ्यां मध्ये विद्यमानाभ्यां युग्मस्वराभ्याम् अन्ये अमध्याः। अमध्याश्च ते युग्मस्वराश्च अमध्ययुग्मस्वराः। तैर्गतेन सङ्गतेन अमध्ययुग्मस्वरगतेन मन्त्रेणेत्यर्थः। अयं भावः। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः इति षोडश स्वराः। तत्र प्रथमतृतीयपञ्चमसप्तमनवमैकादशत्रयोदशपञ्चदश इत्यष्टौ स्वरा अयुग्माः। द्वितीयचतुर्थषष्ठाष्टमदशमैकादशद्वादशचतुर्दशषोडश इत्यष्टौ स्वराः युग्माः। तत्राष्टसु युग्मस्वरेषु मध्ये विद्यमानौ ॠॡ इत्येतौ युग्मस्वरौ विना अवशिष्टैः आ ई ऊ ऐ औ अः इत्येतैः षड्भिर्युग्मस्वरैः सम्बन्धेन लज्जाबीजेन ह्रीं शब्देन श्रीबीजेन श्रीशब्देन च षडङ्गन्यासो ज्ञेयः। ह्रीशब्दस्य स्वरसम्बन्धप्रकारस्तु ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति। श्रीशब्दस्यापि श्रां श्रीं श्रूं श्रैं श्रौं श्रः इति ज्ञेयः। अयं च विशेषः 'द्विसव्यनेत्रकर्ण' इत्यादिना 'युग्माब्धिषट्सूर्य' इत्यादिना चागमान्तरेण च श्रीबीजलज्जाबीजयोरुक्तः। ततश्च ह्रां हृदयाय नमः। ह्रीं शिरसे स्वाहा। ह्रूं शिखायै वौषट्। ह्रैं कवचाय हुं। ह्रौं नेत्राभ्यां वषट्। ह्रः अस्त्राय फट् इति ह्री बीजे न्यासप्रकारो ज्ञेयः। एवं श्रीबीजेऽपि।

लक्ष्म्या एवोपरं मन्त्रद्वयमाह- **सत्तेति** ।। सत्तार्थकं भूमिति बीजम् । दुरित्येत् दुर्बीजं च इत्येतल्लक्ष्म्या मन्त्रद्वयम् । **तद्वदेव** ह्रीबीजादिवदेव अङ्गादियुक्तं च । दुर्गाबीजोद्धारादिकमुक्तं नारायणीये-

दुर्गाबीजं दक्षकर्णयुतोऽत्रिश्च विसर्गवान् ।
कश्यपस्तु ऋषिः प्रोक्तः छन्दो गायत्रमीरितम् ।
दुर्गा च दीर्घसंयुक्तबीजेनैव षडङ्गकम् ।। इति ।

दक्षकर्णः मातृकान्यासे दक्षिणकर्णे न्यसनीय उकारः । त्रिः तवर्गे तृतीयो दकारः । विसर्गयुक् ततश्च दुरिति दुर्गाबीजमुद्धृतं भवति । दुर्गा च देवतेति शेषः । दीर्घैः पूर्वोक्तैः षड्भिराकारादिस्वरैः संयुक्तेन दुरिति बीजेन षडङ्गकमिति ज्ञेयमित्यर्थः ।। ६५ ।।

भूं, दुः इति बीजद्वये ध्येयवर्णेषु विशाषाभिधानम्

**तं.सा.** **वर्णः श्यामो विशेषोऽत्र ताम्बूलं नीलमुत्पलम् ।**
**चक्रशङ्खौ तर्जनं च शूलमित्यपरत्र च ।। ६६ ।।**

**त.क.**– तत्र सत्ताबीजमन्त्रे विशेषमाह— **वर्ण इति** ।। श्यामो वर्णः । न त्वर्कसदृशः । ताम्बूलं नीलमुत्पलं च हस्तद्वये, न तु पद्मद्वयं, न वा पाशांकुशौ इति विशेषोऽत्र सत्ताबीजे द्रष्टव्यः । तथा च भां, भीं, भूं, भैं, भौं, भः इति षण्मन्त्रैः हृदयादिषडङ्गन्यासः । भूशब्दितं लक्ष्म्या रूपान्तरं चतुर्भुजम् । तत्र दक्षोर्ध्वबाहुना पूगीफलनागवल्लीदलाद्यात्मकं ताम्बूलं धत्ते । वामोर्ध्वकरेणैव नीलमुत्पलम् । दक्षाधःकरेणाभयम् । वामाधःकरेण वरम् । श्यामलं च तद्रूपमिति विवेक्तव्यम् । दुर्बीजे विशेषमाह— **चक्रशङ्खाविति** ।। दुर्गाख्यं लक्ष्म्या रूपान्तरं चतुर्भुजं अर्कवर्णमेव । तत्र दक्षोर्ध्वकरेण चक्रम् । वामोर्ध्वकरेण शङ्खम् । दक्षाधःकरेण तर्जनीमुद्राम् । वामाधःकरेण शूलमिति । **अपरत्र** दुर्बीज इत्यर्थः ।। ६६ ।।

**अ.सं.**– बीजद्वये ध्येयवर्णविशेषमाह- **वर्ण इति** ।। **अत्र** बीजद्वये सत्ताबीजे । अपरं विशेषमाह- **ताम्बूलमिति** ।। अत्रेत्यस्यानुवृत्तिः । **अत्र**

सत्ताबीजे पद्मद्वयस्थाने ताम्बूलं नीलोत्पलं विशेष इत्यर्थः। दुर्बीजेऽपि विशेषमाह– **चक्रेति ।। अपरत्र** दुर्बीजे । पद्मादिस्थाने चक्रादिचतुष्टयं ज्ञेयम् । तदुक्तम्–

दूर्वोपमां त्रिनेत्रां च शङ्खचक्रसमन्विताम् ।
शूलतर्जनसंयुक्तां ध्यायेद्दुर्गामभीष्टदाम् ।। इति ।। ६६ ।।

**गु.दी.—** अत्र मन्त्रद्वये श्यामो वर्णो विशेषः। पूर्वमन्त्रद्वये उद्यच्छतार्कसदृशीमित्युक्तम् । पद्मद्वयस्थाने ताम्बूलनीलोत्पले । **अपरत्र** दुर्गाबीजे शङ्खचक्रे तर्जनं शूलमित्यायुधानि ध्येयानीति शेषः । तथोक्तमन्यत्रापि—

दूर्वोपमां त्रिनेत्रां च शङ्खचक्रसमन्विताम् ।
शूलतर्जनसंयुक्तां ध्यायेद्दुर्गामभीष्टदाम् ।। इति ।। ६६ ।।

अम्भ्रणीसूक्तार्थस्तूच्यते— **अहं रुद्रेभिः** इत्याद्या ऋक् । अहमर्थस्य अहंशब्दार्थस्य देवदेवीचेतनस्य क्षीरनीरवत्सम्पिण्डत्वेन परममुख्यामुख्यवृत्तिभ्यां द्वयोरपि देवदेव्योः वाचकत्वात् श्रीदेवी ऋषिः । स्वस्वान्तर्यामिविवक्षया 'अहं चरामि' इत्यादि वक्ति । अहं **रुद्रेभिः** 'रैवतोऽजो भवो भीमः' (भा.६-६-१८) इति प्रमाणोक्तैरेकादशरुद्रैः । 'अतो भिस ऐस्' (पा.सू. ७-१-९) 'बहुलं छन्दसि' इति भिस ऐस्त्वादेशाभावः । **वसुभिः** अग्निप्रमुखैरष्टवसुभिः । **आदित्यैः** 'विवस्वानर्यमा पूषा' (भा.६-६-३८) इति भागवतोक्तविष्णुव्यतिरिक्तैकादशादित्यैः । **विश्वे देवैरुत** पुरूरवाः, आर्द्रवः, धुरिर्विलोचनः, कामः, कायनः, क्रतुः, दक्षः, सत्यो, वसुरित्येवं दश विश्वेदेवैरपि । यद्वा उतशब्दादन्यैर्मरुत्प्रभृतिभिरपि । **चरामि** 'चर=गतिभक्षणयोः' (धा.पा.५५९) सञ्चरामि व्याप्ततया वर्त इत्यर्थः । तन्नियामकतया वर्त इति वा । तैः परिवारभूतैः सह वर्त इति वा । अहं **मित्रावरुणा** मित्रावरुणौ । 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' (पा.सू.७-१-३९) इति द्वितीयाया आकारादेशः । **उभा** उभौ मित्रावरुणौ बिभर्मि । उभावित्यग्रेऽप्यन्वेति । अहम् **उभौ** इन्द्राग्नी बिभर्मि । 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति (पा.सू.१-१-११) सन्ध्यभावः । अहम् **अश्विना** उभौ

अश्विनौ **बिभर्मि** 'भृञ् भरणे' (धा.पा. ८९८) पुष्णामीत्यर्थः। द्विवचनेनोभयोर्लाभेऽप्युभावित्युक्तिर्मुक्तामुक्तद्वयलाभाय। छान्दोग्ये दहरविद्यायां 'उभेऽस्मिन् द्यावा पृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च' इत्यादाविव (छा.८-१-३)। उक्तं हि तत्र भाष्ये– 'इत्याद्युभयशब्दो मुक्तामुक्तराश्यपेक्षया' इति (छा.भा.८-१-३)॥ अहमिति पुनरुक्तिरुपचारनिवृत्त्यर्था। एवमग्रेऽपि।

**अहं सोमम्** इति द्वितीया। **आहनसम्** अभिषूयमाणं **सोमं** चन्द्रम्। 'हन= हिंसागत्योः' इति (धा.पा.१०१२) धातोः हननमभिषवः। स च सोमलताया एव। लताभिमानित्वाच्चन्द्रोऽप्याहनसमित्युक्तः। अहं बिभर्मि। **उत** किञ्च त्वष्टारं पूषणं भगमहं विभर्मि। **हविष्मते** वपापुरोडाशादिहविर्युक्ताय। **सुप्राव्ये**। अवते रक्षणगत्याद्यनेकार्थत्वादिह तृप्त्यर्थादुपसर्गद्वयपूर्वकादवतेः 'अवितृसवितृभ्यः' इतीकारप्रत्यये चतुर्थ्येकवचने परतो यणादेशे सुप्राव्ये इति रूपत्वात् सुष्ठु प्रकर्षेणावित्रे शोभनहविर्दानेन विष्णुप्रभृतिदेवानां तर्पकायेत्यर्थः। **सुन्वते** सोमाभिषवं कुर्वते सोमयाजिने यजमानाय **द्रविणं** ज्ञानधनरूपदैवमानुषवित्तं **दधामि** 'डु धाञ्=धारणे' (धा.पा.१०९२) धृतवत्यस्मि। दातुमिति शेषः। ददामीति वा॥

**अहं राष्ट्री** सङ्गमनीति तृतीया॥

**राष्ट्री** सर्वस्वामिनी। **वसूनां** दैवमानुषवित्तानां **सङ्गमनी** सङ्गमयित्री। उपासकानां प्रापयित्री। **चिकितुषी**। 'कित निर्माणे' जगन्निर्मात्रीत्यर्थः। कितशब्दो ज्ञानपर्यायः। ज्ञानवती सर्वज्ञेति वा। **यज्ञियानाम्**। यज्ञशब्दाद्घ-प्रत्ययः। यज्ञार्हाणां यज्ञैराराध्यानाम्। **प्रथमा** मुख्या। यज्ञियानां वसूनां सङ्गमनीति वा सम्बन्धः। **ताम्** एवमुक्तगुणविशिष्टाम्। **भूरिस्थात्रां**। भूरि बहुभावेन बहुरूपतया स्थात्रीं तिष्ठन्तीम्। ङीप्व्यत्ययश्छान्दसः। दुर्गेति अम्बिकेति चण्डिकेति नानारूपवत्त्वेन वर्तमानाम्। किं दुर्गाम्बिकादि-नामकजीवान्तरैक्येन तथा वर्तते नेत्याह— **भूरि** भूरीणि बहूनि दुर्गाम्बिका-भैरवीकालीत्यादिरूपेण बहुधा विद्यमानभूतजातानि **आवेशयन्तीं**, स्वार्थे णिच्, आविशन्तीमित्यर्थः। तत्तन्नामकजीवानां तत्र तत्र स्थानविशेषेषु **आवेशयन्तीं**

सन्निधिं कारयन्तीमिति वा । **प्रथमा चिकितुषी** अनादितः सर्वत्र कृतनिवासा वा । 'कित निवासे' इति पठन्ति । तां **मा** मां **पुरुत्रा** '....देवपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा.सू.५.५६) इति सप्तम्यास्त्रादेशः । पुरुषु देशेषु करवीरप्रभृतिषु देवाः **व्यदधुः** लडर्थे लुङ्, विदधति नानाविधजनैः पूज्यतया कुर्वन्तीत्यर्थः । तदुक्तं दशमस्कन्धे—

'देवी माया भगवती । बहुनामनिकेतेषु बहुनामा बभूव ह' ।। इति । (भाग.१०.५.१३)

**मया सो अन्नमत्तीति** चतुर्थी ।।

यः अन्नमत्ति स **मया** मत्प्रेरित एवान्नम् **अत्ति** भुङ्क्ते, यः **विपश्यति** विविधवस्तुजातं पश्यति, यः **प्राणिति**, 'अन चेष्टायां', श्वासोछ्वासादिव्यापारं करोति, यश्च परेणोक्तं शृणोति, 'श्रु श्रवणे', (धा.पा.९४२) सर्वोऽपि **मया ई** मयैव दर्शनश्रवणादिकं करोति । 'स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः' (केन.उ.१-२) इत्यादिना हरेरेव मुख्यमिदम् । ईमित्यस्य ईदृशीमिति वाऽर्थः । सर्वप्रेरकतया स्थितां माम् **अमन्तवः** अजानन्तः मदज्ञानिनो ये ते **उपक्षियन्ति** 'क्षि क्षये' (धा.पा.२३६) क्षीणा भवन्ति, नश्यन्तीत्यर्थः । **श्रुत** विश्रुत प्रख्यातेति साधुवर्गसम्बोधनम् । **श्रद्धिवं** श्रद्धिः श्रद्धा,'श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते' इत्युक्तेः । श्रच्छब्दपूर्वकात् 'डु धाञ् धारणपोषणे' (धा.पा.१०९२) इत्यतः 'उपसर्गे घोः किः' इति (पा.३-३-९२) किप्रत्यये जाते 'आतो लोपः' इत्याकारलोपे श्रद्धिरिति सिद्धेः । ततो मत्वर्थे वप्रत्ययः । श्रद्धावन्तम् । श्रद्धेत्यङ्गेनाङ्गिनः श्रवणादेरुपलक्षणम् । श्रद्धापूर्वकश्रवण-मननध्यानवन्तं विषयतासम्बन्धेन तद्वन्तम् । श्रद्धापूर्वकानुष्ठितश्रवणादिगम्यमिति यावत् । तादृशं परमात्मानं ते तुभ्यं **वदामि** वेदाभिमानित्वाद् 'विज्ञानमानन्दं ब्रह्म' इत्यादि वेदमुखेन **वदामि** उपदिशामीत्यर्थः । **श्रुधि** शृणु । द्वादशगीताभाष्यटीकायां तु '**अमन्तवो** निरपराधाः ये ते **उपक्षियन्ति** समीपे वसन्ति । **श्रद्धिवं** श्रद्धेयम्' इत्यभिहितम् (प्र.दी.१२-१) ।

**अहमेव स्वयमिदं वदामीति** पञ्चमी ।।

**देवेभिः** ब्रह्मादिभिर्देवैः **मानुषेभिरुत** मनुष्यैरपि ऋषिगन्धर्वादिभिरपीति वा उतशब्दार्थः। **जुष्टं** सेवितम्। **सत्यं** सत्यमित्युपलालितमिति यावत्। **इदं** वक्ष्यमाणमहमेव **स्वयं** साक्षादनुपचारेण वदामि नान्योक्तमनुवदामीत्येवकारार्थः। तत्किमित्यत आह— **यमिति**॥ तं तमित्युक्तेर्यमित्यस्यावृत्तिः। यंयं रुद्रं कर्तुं कामये तं तं **उग्रं** रुद्रं **कृणोमि** करोमि। यं **ब्रह्माणं** विरिञ्चं कर्तुं कामये तं ब्रह्माणं कृणोमि। यम् **ऋषिं** वसिष्ठादिऋषिं कर्तुं कामये तमृषिं करोमि। यं **सुमेधां** सुमेधसं कर्तुं कामये तं **सुमेधां** सुमेधसं कृणोमि। रुद्रादिसर्वदेवादिपदप्राप्तिरपि तद्योग्यानां मदधीनैवेत्यर्थः। तदुक्तं—

ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्वगीर्वाणसन्ततिरियं यदपाङ्गलेशम्।
आश्रित्य विश्वविजयं विसृजति....॥ इत्यादि। (द्वा.स्तो. ७.२)

॥ अम्भ्रणीसूक्ते आद्यो वर्गः॥

द्वितीयवर्गे आद्या ऋक् **अहं रुद्राय धनुरातनोमीति**॥

अहं **शरवे** 'शृ हिंसायां'(धा.पा.१४८९) हिंसकाय पञ्चममुखच्छेदाद् **ब्रह्मद्विषे** ब्रह्मद्विषां दैत्यानां शरव इति वा। **रुद्राय** द्वितीयार्थे चतुर्थी। एवंविधं रुद्रं **हन्तवा उ** हन्तवे उ एव। 'तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवेङ्तवेनः' (पा.सू.३-४-९) इति तुमर्थे तवे प्रत्ययः। हन्तुमेव न तु भीषयितुमित्यर्थः। **धनुः** चापं **आतनोमि** ज्याकर्षणेन विस्तारयामि। ननु उशब्दस्य एवेति व्याख्यानमनुपपन्नं, हननस्याकृतत्वाद्भीषणस्यैव कृतत्वात्। ततश्च हन्तुमेवेति प्रतिज्ञाय हननाकरणे भीषणमात्रकरणे च अम्भ्रण्याः इच्छा मोघा स्यादिति चेत्। उच्यते। न ब्रूमो वयं हन्तवा इति हननसङ्कल्प इति। येनोक्तदोषः। किं नाम? यथा क्रुद्धः पिता पुत्रं म्रियस्वेत्याक्षेपपूर्वकं दुर्गुणपरित्यागाभिप्रायेण वदति तथाऽम्भ्रण्यपि रुद्रस्यातिभीषणतया तद्वधमनभिप्रेत्यैव हन्तुमेवेति वदतीत्यङ्गीकारात्' इत्यभिनवचन्द्रिकायां (अभि.चं.१-१-१) व्यक्तम्। अहं **जनाय** जनस्य समदं कृणोमि। अहं द्यावापृथिव्युपलक्षितान् सर्वानूर्ध्वाधरलोकान् धारणाय **आविवेश**। 'विश प्रवेशने' (धा.पा.१४२५) प्रविष्टवत्यस्मीत्यर्थः॥

**अहं सुव** इति द्वितीया ।।

अहं **अस्य** जगतः **पितरं** ब्रह्माणं **मूर्धन्** मूर्ध्नि, 'सुपां सुलुक्...' इति (पा.सू.७-१-३९) सप्तम्या लुक्, 'न ङिसम्बुध्योः' इति (पा.सू.८-२-८) नलोपाभावः, सर्वोत्कृष्टतयेति यावत्, **सुवे** जनयामि। न केवलं पदे संस्थापयामि जनयामि चेत्यर्थः। एवम्भूताया ममापि **योनिः** कारणभूतः समुद्रे **अप्सु** अपामन्तस्तिष्ठतीति योज्यम्।

गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि ।। (तत्त्व.प्र. १.१.१)

इति स्मरणात् स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय 'आपो नारा' इति स्मृत्युक्तरीत्या नारायणशब्दार्थमेवोवाच। यत एवं सर्वस्वामित्वे सति नारायणैकायत्तता ततो हेतोः **विश्वा भुवना** भुवनानि लोकान् अनुरोमकूपलयोदिनो विष्णोरनन्तरं **वितिष्ठे** व्याप्य तिष्ठामि व्याप्नोमि। तस्य विवरणम् **अमूं द्याम्** उपरितनलोकान् उतशब्दादधस्तनलोकान् **वर्ष्मणा** देहेन **उपस्पृशामि** व्याप्य वर्ते इति ।।

**अहमेव वात इवेति** तृतीया ।।

अहमेव **विश्वा** विश्वानि भुवनानि **आरभमाणा** उत्पादयन्ती, न केवलं भुवनानि व्याप्य वर्तमाना आकाशवत् किन्तूत्पादयन्त्यपि। **वात इव** वायुरिव **प्रवामि**, 'वा गतिगन्धनयोः'(धा.पा.१०५०) निर्लेपा सती सञ्चरामि। सर्वमुत्पाद्य तत्र स्थिताऽप्यहं तत्तद्दोषलिप्ता नास्मीत्यर्थः। उक्तं स्वमाहात्म्यं भगवदाधिक्योक्तिपूर्वकमुपसंहरति— **परो दिवेत्यादिना ।।** तृतीया पञ्चम्यर्थे। योऽयं मम योनिः समुद्रेऽन्तरुक्तः स **दिवा** दिवः **परः** उत्तमः। उपलक्षणमेतत्। 'परो दिवेभिरसुरैर्यदिस्त' इति श्रुत्यन्तरोक्तदिशा देवासुरेभ्योऽपि परः। अहं तु **महिना** महिम्ना **एतावती** परिमिता बभूव। लिडुत्तमपुरुषैकवचनम्। परिमितमहिमैवास्मीति ।। इत्यम्भ्रणीसूक्ते द्वितीयो वर्गः ।।

'अहमष्टौ वागम्भृणी तुष्टावात्मानं द्वितीया जगती' (अनु.क्र.१०-१२५) इत्यनुक्रमणिकोक्त्यनुरोधेनाहमित्यष्टर्चं सूक्तम्। अम्भ्रणस्य महर्षेर्दुहिता

वाङ्नाम्नी अस्य सूक्तस्य ऋषिः। द्वितीया ऋग्जगती। शिष्टाः सप्त त्रिष्टुभः। परमात्मा देवतेति केचिदाहुः। तत्राम्भ्रणस्य महर्षेर्दुहिता वाङ्नाम्नी ऋषिरित्ययुक्तम्। 'श्रीभूदुर्गाऽम्भ्रणी ह्रीश्च महालक्ष्मीश्च दक्षिणा' (बृ.भा.अ१-अव्याकृतब्राह्मणम्) इत्यादिना प्रथमबृहद्भाष्योक्तपैङ्गिश्रुतौ लक्ष्मीपर्यायत्वेनाम्भ्रणी-शब्दस्योक्त्या तद्विरोधात्। किन्तु स्वदृष्टं सूक्तमित्यत्रैवो(तं.सा.४-५५) क्तेश्चाम्भ्रणीसञ्ज्ञा श्रीदेव्येव ऋषिरिति सङ्क्षेपः ।।छ।।

श्रीराघवेन्द्रतीर्थोक्तः श्रीसूक्तार्थो निरूपितः ।
तन्त्रसारस्य टीकायां वेङ्कटेशाख्यसूरिणा ।।

।। इति तन्त्रसारटीकायां वेङ्कटपतिकृतायां लक्ष्मीसूक्तार्थः समाप्तः ।।

**मङ्गाली–** बीजद्वये ध्येयवर्णविशेषमाह– **वर्ण इति** ।। अत्र बीजद्वये सत्ताबीजे अपरं विशेषमाह– **ताम्बूलमिति** ।। अत्रेत्यस्यानुवृत्तिः। **अत्र** सत्ताबीजे पद्मद्वयस्थाने ताम्बूलं नीलोत्पलं च विशेष इत्यर्थः। दुर्बीजेऽपि विशेषमाह– **चक्रेति** ।। **अपरत्र** दुर्बीजे पद्मादिस्थाने चक्रादिचतुष्टयं ध्येयम्। तदुक्तम्–

दूर्वोपमां त्रिनेत्रां च शङ्खचक्रसमन्विताम्।
शूलतर्जनसंयुक्तां ध्यायेद्दुर्गामभीष्टदाम् ।। इति।

दुर्गालक्ष्मीमित्यर्थः ।। ६६ ।।

पञ्चाक्षरः भूमन्त्रः, षडक्षरः दुर्गामन्त्रः, वेदोक्तदुर्गामन्त्रश्च

तं.सा. **नमोऽन्तः(न्तं) स्वेन सहित(तं)स्तदेवान्यो मनुः स्मृतः।**
**दुर्गा त्रिष्टुप् कश्यपोक्ता तत्र वर्णोऽग्निवत् स्मृतः ।। ६७ ।।**

**त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते।**
**पादैः समस्तेन तथा षड्वर्णे(षडर्णेन)नाङ्गमुच्यते ।। ६८ ।।**

**त.क.–** लक्ष्या मन्त्रान्तरमाह—**नमोऽन्तमिति** ।। नमःशब्दोऽन्ते यस्य तत्। **स्वेन सहितं** स्वशब्देन लक्ष्मीवाचक ह्री-श्री-भू दुर्गेति शब्दचतुष्टयं गृह्यते,

तेन सहितं **तदेव** ह्री, श्रीं, भूं दुरिति बीजचतुष्टयमेव अन्यो मनुः स्मृत इत्यर्थः। एतच्च न समुदायाभिप्रायम्। पूर्वार्धोक्तश्चशब्दोऽत्र सम्बध्यते। तेन लमिति बीजं लक्ष्मीशब्दसहितं नमोऽन्तं मन्त्रान्तरं सूचितम्। तथाच **'लं लक्ष्म्यै नमः' 'श्रीं श्रियै नमः' 'ह्रीं ह्रियै नमः' 'भूं भुवे नमः' 'दुः दुर्गायै नमः'** इति पञ्चमन्त्रा उद्धृता वेदितव्याः।

दुर्गामन्त्रान्तरमुद्धरति— **दुर्गेति** ॥ दुर्गादेवताका, त्रिष्टुप्छन्दस्का कश्यपदृष्टा 'जातवेदसे सुनवाम सोमम्' (ऋ.सं.१-९९-१) इत्येका ऋक् अन्यो मनुः स्मृतः। ध्यानविशेषमाह— **तत्रेति** ॥ वर्णस्त्वग्निवत् स्मृतः। यद्यप्यरविन्दनेत्रामिति लक्ष्म्याः सर्वरूपसाधारण्येन ध्यानमुक्तम्। तथापि दुर्गायाः प्रायः त्रिनेत्रत्वं ज्ञातव्यम्। कुतः? **सर्वत्र** पुराणादौ त्रिनेत्रत्वं यथा कथ्यत इत्यर्थः। तेन सर्वेषु लक्ष्मीमन्त्रेषु कौशेयपीतवसनामिति श्लोक एव तत्र तत्र उक्तविशेषवाचक-पदावापेन पदान्तरोद्वापेन चोहनीय इत्युक्तं भवति। तथा हि—

श्यामां वराभयकरामरविन्दनेत्रां नीलोत्पलाढ्यसुकरामतिशोभमानाम्।
ताम्बूलमप्युरुवरेण सदा दधानां ध्यायेद्ध्रुवं सकलभूषणभूषिताङ्गीम् ॥

तथा—

दोर्भिश्चक्रं च शङ्खं दितिजभयकरं तर्जनं शूलमुग्रं
बिभ्राणामम्बुजाक्षीं त्रिभुवनजननीं पीतकौशेयवस्त्राम्।
विष्णोरङ्के निषण्णां विधिमृडसुरराट्पूज्यमानाङ्घ्रिपद्मां
दुर्गां देवीं त्रिनेत्रामभिमतफलदामर्कवर्णां नमामि ॥ इत्यदि ॥

तत्र वैदिकस्य दुर्गामन्त्रस्याङ्गन्यासमाह– **पादैरिति** ॥ **तथा**शब्दश्चार्थः। **समस्तेन** पादचतुष्टयात्मकेन 'जातवेदसे सुनवाम सोम' इत्यादिवाक्यजातेन वैदिकस्य दुर्गामन्त्रस्याङ्गं न्यसनीयमुच्यते इत्यन्वयः। अनेन पञ्चाङ्गन्यास उक्तो भवति। 'दुः दुर्गायै नमः' इति षडक्षरस्य दुर्गामन्त्रस्याङ्गन्यासमाह– **षड्वर्णेति** ॥ षण्णामर्णानां समाहारः तेन। दुर्गामन्त्रगतैः षड्भिरक्षरैः हृदयादिनेत्रसहितं षडङ्गं न्यसनीयमुच्यत इत्यर्थः ॥ ६७-६८ ॥

**अ.सं.**— लक्ष्म्याः पुनरपरं मन्त्रद्वयमाह– **नमोऽन्तमिति ।। तदेव** भूं दुं इत्येतद्बीजद्वयमेव **नमोऽन्तं** अन्ते नमःशब्दोपेतम्। **स्वेन** स्ववाचकेन नमःशब्दयोगात् चतुर्थ्यन्तेन भूशब्देन च सहितम्। **अन्यः मनुः** लक्ष्म्या एव मन्त्रद्वयं स्मृतम्। 'नमोऽन्तः स्वेन सहितः' इति पुल्लिङ्गपाठे तु विधेयलिङ्गानुसारेण नमोऽन्त इत्यादौ पुल्लिङ्गप्रयोगो ज्ञेयः। तथा च **'भूं भुवे नमः'** इति पञ्चाक्षरो भूमन्त्रः, **'दुं दुर्गायै नमः'** इति षडक्षरो दुर्गामन्त्रश्च उद्धृतो भवति। पुरातनटीकाकारैः नमोऽन्तमित्येतत् दुर्गाषडक्षरमन्त्रोद्धारकत्वेनैव व्याख्यातम्। अत एवोत्तरत्र 'षडर्णेनाङ्गमुच्यते' इति तन्मन्त्रस्याङ्गोक्तिः। तथापि संप्रदायप्राप्तमन्त्रकोशेषु भूपञ्चाक्षरस्यापि दर्शनात् मूलस्य तदुद्धारकतयाऽपि व्याख्यातुं शक्यत्वात् षडर्णेत्यस्योपलक्षणतया पञ्चार्णेनाङ्गमुच्यत इत्यर्थसंभवात् भूपञ्चाक्षरोद्धारकत्वेनापि व्याख्यातम्।

मन्त्रान्तरमाह– **दुर्गेति ।।** त्रिष्टुप्छन्दोबद्धा **कश्यपोक्ता** कश्यपर्षिणा दृष्टा 'जातवेदसे सुनवाम सोमं' (ऋ.सं.१-९९१-) इति ऋक् दुर्गामन्त्रः इत्यर्थः। तत्र तन्मन्त्रदेवतायाः वर्णः अग्निवत् रक्तवर्णः स्मृतः ।।

**सर्वत्र** सर्वदुर्गामन्त्रेषु दुर्गायाः प्रायः त्रिनेत्रत्वं च ध्येयम्। विद्यापेक्षया जपादिकरणसमयेऽतिकोपव्यञ्जकत्रिनेत्रत्वध्यानस्याकर्तव्यत्वात् **प्रायः** इत्युक्तमित्याहुः। वैदिकदुर्गामन्त्रस्याङ्गन्यासमन्त्रानाह– **पादैरिति ।।** पादैः व्यस्तैरिति शेषः। चतुर्भिः समस्तेन विशिष्टमन्त्रेणेति पञ्चाङ्गानि न्यसनीयानि। प्रसङ्गाद्दुर्गाषडर्णमन्त्रस्याङ्गन्यासमन्त्रानाह– **तथा षडर्णेनेति ।।** षडक्षरदुर्गामन्त्र इति शेषः ।। ६७,६८ ।।

**गु.दी.**– दुर्गाषडक्षरमन्त्रं भूपञ्चाक्षरमन्त्रं चैकोक्त्यैवोद्धरति– **नमोन्त इति ।। तत्** भूरिति बीजं दुरिति बीजं च **स्वेन** स्ववाचकेन भूशब्देन दुर्गाशब्देन चतुर्थ्यन्तेन सहितः **नमोन्तः** नमश्शब्दान्तः **अन्यः** केवलबीजापेक्षया एकाक्षरमन्त्रापेक्षयेति यावत्। **मनुः** मन्त्रः। विधेयलिङ्गानुसारेण नमोन्त इत्यादौ पुल्लिङ्गप्रयोगः। तथा च **'भूः भुवे नमः' 'दुः दुर्गायै नमः'** इति पञ्चाक्षरषडक्षरमन्त्रनिष्पत्तिः।

त्रिष्टुप्छन्दस्कं दुर्गाया मन्त्रान्तरमाह– **दुर्गेति** ।। त्रिष्टुप्छन्दोबद्धा । **कश्यपोक्ता** कश्यपदृष्टा ।।

**जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ।।**

इति (ऋ.सं.१-९९-१) दुर्गामन्त्रः ।

तदर्थस्तु— जातं वेत्तीति **जातवेदाः** । 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यदि' (ब्र.सू.भा.उदा.१.४..) इति वचनात् पुल्लिङ्गोपपत्तिः । तत्प्रीत्यर्थं **सोमं सुनवाम** उत्तराधरोपलाभिः सोमाभिषवणं कुर्मः । **सः वेदः** सर्वज्ञः **अरातीयतो** दुःखकारित्वेन शत्रुवदाचरतो रागादिदोषान् **निदहाति** नितरां भस्मीकरोति । अग्रयत्वादाग्निर्दुर्गा । **नः** अस्मान् । **अतिदुर्गाणि** अत्यन्तं निर्गन्तुमशक्यानि **विश्वा** विश्वानि दुरितानि सिन्धुं **नावेव** कर्णधार इव **अतिपर्षत्** उत्तारयामासेति ।

एतन्मन्त्रदेवतायां वर्णविशेषमाह— **तत्रेति ।। अग्निवद्वर्णः** शुक्लभास्वररूपो वर्णः रक्तवर्णो वा । दुर्गारूपस्य नेत्रसङ्ख्यां प्रसङ्गादाह— **त्रिनेत्रत्वमिति ।।** दुर्गायाः **त्रिनेत्रत्वं** त्रिचक्षुष्मत्त्वं **प्रायः** बाहुल्येन **सर्वत्र** 'दूर्वोपमां त्रिनेत्रां च' इत्याद्युदाहृतपुराणवाक्येषु कथ्यत इत्यर्थः । यद्वा **सर्वत्र** सर्वदुर्गामन्त्रेष्वित्यर्थः । ऐश्वर्याद्यपेक्षया जपादिसमयेऽतिक्रौर्याभिव्यञ्जकत्रिनेत्रत्वध्यानस्याकर्तव्यत्वात्**प्राय** इत्युक्तम् ।।

इदानीं वैदिकमन्त्रे षडर्णमन्त्रे चाङ्गन्यासमाह— **पादैरिति** ।। वैदिके मन्त्रे व्यस्तैः पादैः समस्तेन च पादेन पञ्चाङ्गानि । तथा षडर्णे मन्त्रे षडर्णेनाङ्गषट्कमुच्यत इत्यर्थः ।। ६७,६८ ।।

**मङ्गाली–** लक्ष्म्याः पुनरपरं मन्त्रद्वयमाह– **नमोऽन्तमिति ।। तदेव** भूं दुरित्येतत् बीजद्वयमेव **नमोऽन्तं** अन्ते नमःशब्दोपेतं **स्वेन** स्ववाचकेन नमःशब्दयोगात् चतुर्थ्यन्तेन भूशब्देन दुर्गाशब्देन च सहितम् । **अन्यो मनुः** लक्ष्म्या एव मन्त्रद्वयं स्मृतम् । 'नमोऽन्तः स्वेन सहितः' इति पाठे तु विधेयलिङ्गानुसारेण नमोऽन्त इत्यादौ पुल्लिङ्गप्रयोगो ज्ञेयः । तथा च **'भूं भुवे**

**नमः**' इति पञ्चाक्षरो भूमन्त्रः । '**दुः दुर्गायै नमः**' इति षडक्षरो दुर्गामन्त्रश्चोद्धृतो भवति । पुरातनटीकाकारैः नमोऽन्तमित्येतद्दुर्गाषडक्षरमन्त्रोद्धारकत्वेनैव व्याख्यातम् । अत एवोत्तरत्र 'षडर्णेनाङ्गमुच्यते' इति तन्मात्रस्याङ्गोक्तिः । तथापि संप्रदायप्राप्तमन्त्रकोशेषु भूपञ्चाक्षरस्यापि दर्शनात् । मूलस्य तदुद्धारकतयापि व्याख्यातुं शक्यत्वात् । षडर्णेत्यस्योपलक्षणतया 'पञ्चार्णेनाङ्गमुच्यते' इत्यर्थ-सम्भवात् पञ्चाक्षरोद्धारत्वेनापि व्याख्यातम् । मन्त्रान्तरमाह– **दुर्गेति** ।। **त्रिष्टुप्** त्रिष्टुप्छन्दोबद्धा **काश्यपोक्ता** कश्यपऋषिणा दृष्टा । 'जातवेदसे सुनवाम सोमं' इति ऋक् । **दुर्गा** दुर्गामन्त्र इत्यर्थः । तत्र तन्मन्त्रदेवतायाः वर्णः **अग्निवत्** अग्निवर्णवत् रक्तवर्णस्मृतः ।।

**सर्वत्र** सर्वदुर्गामन्त्रेषु दुर्गायाः प्रायः त्रिनेत्रत्वं च ध्येयम् । विद्यापेक्षया जपादिकरणसमयेऽतिकोपव्यञ्जकत्रिनेत्रत्वध्यानस्याकर्तव्यत्वात्**प्राय** इत्युक्त-मित्याहुः । वैदिकदुर्गामन्त्रस्याङ्गन्यासमन्त्रानाह– **पादैरिति** ।। पादैर्व्यस्तैश्च-तुर्भिरिति शेषः । **समस्तेन** विशिष्टेन मन्त्रेणेति पञ्चाङ्गानि न्यसनीयानि । प्रसङ्गात् दुर्गाषडक्षरमन्त्रस्याङ्गन्यासमन्त्रानाह– **तथा षडर्णेनेति** ।। षडक्षरदुर्गा-मन्त्रे इति शेषः ।। ६७,६८ ।।

### श्रीभूदुर्गारूपाणां लक्ष्मीरूपत्वकथनम्

**तं.सा. रमाया एव रूपाणि त्वेतानि हि विदो विदुः ।**
**मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः ।। ६९ ।।**

**त.क.**– ननु श्रीं ह्रीं भूं दुर्गेत्यादिना पार्वत्यादीनां रूपाण्युच्यन्ते । तत्कथं रमामन्त्रोद्धारावसरे तेषामुद्धार इत्यत आह— **रमाया एवेति** ।। तुशब्देन, पार्वत्यादीनामपि तानि रूपाणि सन्ति, तथापि न तानि मुख्यतः तच्छब्दवाच्यानि, किन्तु रमारूपाण्येवेति विशेषमाचष्टे । 'विदो विदुः' इति ज्ञानिसम्मतप्रमाणमाचष्टे । ननु जातवेदस इति ऋचः देवतान्तरमेव प्रतीयते । तत्कथं दुर्गादेवता मुख्येत्युच्यत इत्यत आह— **मुख्यत इति** ।। **जामदग्न्यः** परशुरामः **अस्य** जातवेदस इत्यस्य मनोः मुख्यतो देवता स्मृत इत्यर्थः । तुशब्देन

भगवद्रूपापेक्षयाऽमुख्यदेवतात्वं दुर्गाया अभिहितम्। न तु पार्वत्याद्यपेक्षयेति विशेषः ।। ६९ ।।

**अ.सं.—** दुर्गामन्त्रस्य लक्ष्मीमन्त्रमध्ये कथनमयुक्तम्। दुर्गायाः गौरीत्वप्रसिद्धेरित्यत आह– **रमाया एवेति ।।** भूमिति बीजमन्त्रे तद्युक्तपञ्चाक्षरमन्त्रे च पञ्चभूतावरा पृथ्वीदेवता प्रतिपाद्यत इति शङ्कापरिहाराय वा आह– **रमाया एवेति ।। एतानि** स्वदृष्टमित्यादिनोक्ताशेषमन्त्रप्रतिपाद्यानि रमाया एव रूपाणीति ज्ञानिनः जानन्तीत्यर्थः। क्षत्रियसंहारकपरशुरामोऽस्य मन्त्रस्य देवतेति केचित्। तदभिप्रायमाह– **मुख्यत इति ।। अस्य** 'जातवेदसे' इत्यृचस्य मनोः **जामदग्न्यो** भार्गवरामः मुख्यदेवता । दुर्गा तु अमुख्या । गायत्रीमन्त्रस्य विष्णुसवितृवत् अतो न विरोध इति भावः ।। ६९ ।।

**गु.दी.–** ननु लक्ष्मीमन्त्रकथनावसरे दुर्गामन्त्रकथनमयुक्तं, सर्वोत्तमा गौरी कृष्णस्वसा वा दुर्गेति बहूनां प्रवादादित्यत आह— **रमाया इति ।। एतानि** श्रीभूदुर्गानामकानि रमाया एव रूपाणीति—

श्रीभूदुर्गेति याऽभिन्ना प्रकृतिः शक्तिरुच्यते ।
विष्णोः स्वरूपशक्तेः सा शक्यत्वाच्छक्तिरुच्यते ।।

इति तन्त्रभागवतादिशास्त्रविदः **विदुः** ज्ञातवन्तः ।। 'श्रीमन्त्रस्य क्षत्रहन्ता रामो देवता' इति ग्रन्थान्तरैकवाक्यतायै आह— **मुख्यत इति ।। अस्य मनोः** दुर्गामन्त्रस्य **जामदग्न्यः** परशुरामः **मुख्यतो देवता** मुख्यप्रतिपाद्यः। अमुख्या देवता रमेत्याशयः। तथा च दुर्गामन्त्रोक्ता गुणास्तच्छब्दवाच्यभगवति मुख्या निरवधिकाश्च। लक्ष्म्यां भगवदायत्तास्तदपेक्षया न्यूनाश्चेत्युक्तं भवति। एवं ब्रह्मादिमन्त्रेष्वपि द्रष्टव्यम् ।। ६९ ।।

**मङ्गाली–** दुर्गामन्त्रस्य लक्ष्मीमन्त्रकथनमध्ये कथनमयुक्तम्। दुर्गाया गौरीत्वप्रसिद्धेरित्यत आह– **रमाया एवेति ।।** भूमिति बीजमन्त्रे तद्युक्तपञ्चाक्षरमन्त्रे च पञ्चभूतावरपृथिवीदेवता प्रतिपाद्यत इति शङ्कापरिहाराय वाऽऽह– **रमाया एवेति ।। एतानि** स्वदृष्टमित्यादिनोक्ताशेषमन्त्रप्रतिपाद्यानि

रमाया एव रूपाणीति ज्ञानिनो जानन्तीत्यर्थः । क्षात्रियसंहारकपरशुरामोऽस्य मन्त्रस्य देवतेति केचित् । तदभिप्रायमाह– **मुख्यत इति ।। अस्य** जातवेदस इत्यस्य मनोः **जामदग्न्यः** परशुरामो मुख्यदेवता दुर्गात्वमुख्या । गायत्री मन्त्रस्य विष्णुसवितृवत् । अतो न विरोध इति भावः ।। ६९ ।।

वेदोक्तचतुर्मुखमन्त्रोद्धारः

**तं.सा.** **हिरण्यगर्भसूक्तं च भृगुदृष्टं प्रकीर्तितम् ।**
**ब्रह्मधातृविरिञ्चाजपाद्मैरङ्गमुदाहृतम्** ।। ७० ।।

**त.क.**– तारतम्यानुक्रमेण चतुर्मुखमन्त्रमाह— **हिरण्यगर्भेति** ।। 'हिरण्यगर्भः समवर्तताग्रे' (ऋ.सं.१०-१२१-१) इति पञ्चदशर्चमेकं सूक्तं भृगुऋषिणा दृष्टम् । हिरण्यगर्भमन्त्रत्वेन शास्त्रेषु प्रकीर्तितमिति शेषः । चशब्दः वक्ष्यमाणमन्त्रोद्धार-समुच्चायकः । अङ्गन्यासमाह— **ब्रह्मेति** ।। एतैः पञ्चभिः पदैः 'ब्रह्मणे हृदयाय नमः, धात्रे शिरसे स्वाहा' इत्यादिरूपेण हृदयाद्यङ्गजातं न्यसनीयमुदाहृतमित्यर्थः ।। ७० ।।

**अ.सं.**— हिरण्यगर्भमन्त्रमाह– **हिरण्यगर्भेति ।। भृगुदृष्टं** भृगुमुनिना दृष्टम् । पञ्चदशर्चं 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिहिरण्यगर्भसूक्तं चतुर्मुखब्रह्मणः मन्त्ररूपमित्यर्थः । अङ्गान्याह— **ब्रह्मेति** ।। सोद्देशैः ब्रह्म दिपञ्चपदैरित्यर्थः । 'ब्रह्मणे हृदयाय नमः' इत्यादि । त्रिष्टुम् छन्दः ।। ७० ।।

**गु.दी.**— अथ ब्रह्मणश्चतुर्मुखस्य मन्त्रमाह— **हिरण्येति** ।। भृगुदृष्टं

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीमुत द्यामुतेमां कस्मै देवाय हविषा विधेम ।।**

(ऋ.सं. १०-१२१-१)

इति वर्गद्वयं पञ्चदशर्चं सूक्तं हिरण्यगर्भस्य मन्त्ररूपमित्यर्थः ।।

संस्मृत्य चरणद्वन्द्वं श्रीनिवासार्यसद्गुरोः ।
हिरण्यगर्भसूक्तार्थः कथ्यते तत्कृपाबलात् ।।

**हिरण्यगर्भ** इति दशर्चं सूक्तम् (ऋ.सं.१०-१२१)। भृगुऋषिस्त्रिष्टुप्छन्दः। अत्र हिरण्यगर्भशब्दः कशब्दश्च विरिञ्चतदन्तर्याम्युभयपरः। 'अन्तस्तद्धर्मोपदेशात्' (ब्र.सू.१-१-२०) इत्यधिकरणे अधिदेवगताशेषशब्दानां महायोगविद्वद्रूढिभ्यां विष्णुवाचित्वोक्तेः। 'ज्योतिश्चरणाभिधानात्' (ब्र.सू.१-१-२४) इत्यत्राशेषसूक्तानामवैष्णवत्वप्रसिद्धेरध्यापकसम्बन्धिन्याः विष्णुनारायणादिप्रसिद्धपदाभावनिमित्ताज्ञानमूलकत्वोक्त्या वैष्णवत्वोक्तेरन्तर्यामितयैव विष्णोः सूक्तप्रतिपाद्यत्वोपगमेन। एवं रूपेण सर्वसूक्तानां वैष्णवत्वेऽपि 'इदं हिरण्यगर्भसूक्तं' 'इदं वायुसूक्तं' इत्यादिसूक्तव्यवस्थायाश्च 'अभिव्यक्तेरित्याश्मरथ्यः'(ब्र.सू.१-२-२९) 'अनुस्मृतेर्बादरिः' (ब्र.सू. १-२-३०) 'सम्पत्तेरिति जैमिनिः' (ब्र.सू. १-२-३१) इति त्रिसूत्र्यामुक्तदिशा हिरण्यगर्भादिसूक्तैर्हिरण्यगर्भाद्यधिष्ठानेन स्मरणशब्दोक्तो-पासने तत्रैव हरेरपरोक्षत्वप्राप्यत्वयोः सत्वेनानुस्मरणाभिव्यक्तिप्राप्तीनां वाय्वादेरधिष्ठानत्वहेतुनोपचारेणोपपत्तेः। 'यो देवानां नामधा एक एव' इति 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतेः। 'ब्रह्मणि ब्रह्मरूपोऽसौ' इति स्मृतेश्च। 'मन्त्रादिवद्वाऽविरोधः' (ब्र.सू.३-३-५८) इत्युपासनापादीयसूत्रेऽधमदेवतापरमन्त्राणां तदुत्तमदेवतापरत्वेन व्याख्यानेऽप्यविरोधस्योक्तत्वाच्चोभयपरत्वेनैव मन्त्राणामर्थो ध्येयः।

**तत्राद्या ऋक्।**

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीमुत द्यामुतेमां कस्मै देवाय हविषा विधेम॥ इति।**

हिरण्यशब्दोऽत्र हिरण्मयब्रह्माण्डपरः।

अप एव ससर्जादौ तासु वीर्यमवासृजत्।
तदण्डमभवद्धैमम्....॥ मित्युक्तेः (ब्र.सू.भा.१-१-२०उदा.व्यासस्मृतिः)॥

तस्य **गर्भः** गर्भवदन्तर्विद्यमान इत्यर्थः। 'सप्तार्धगर्भे'त्यादिश्रुतेः (ऋ.सं.१-१६४-३६)। ब्रह्माण्डावरणमहदादितत्त्वसप्तकमध्ये महदभिमानितया हिरण्यनामकब्रह्माण्डमेव गर्भो यस्य स इति वार्थः। हिरुक् सुखरूपं णं चेष्टारूपं यं ज्ञानरूपं

ब्रह्म गर्भे जठरे विशेषेण सन्निहितं यस्येति वा **हिरण्यगर्भः** ब्रह्मा । अग्रे **भूतस्य** अनादितो विद्यमानस्य, 'भू सत्तायाम्' (धा.पा.१) इति धातोः । यद्वा 'भू वहौ' 'बहुः पूर्णतायाम्' (छा.भा.३-१२-१) इति छान्दोग्यभाष्योक्तेर्भूतस्य देशकालगुणपूर्णस्य हरेस्सकाशात् **एकः** एकाकी **अग्रे** सृष्ट्यादौ जातः उत्पन्नः । **समवर्तत** अतिष्ठत् । 'यो ब्रह्माणं विदधाति पूर्वं' (श्वेता.उ. ६.१८) 'ब्रह्मा देवानां प्रथमः सम्बभूव' इत्यादेः (मु.उ.१-१-१) सर्वश्रैष्ठ्यद्योतनायैक इत्युक्तिः । सृष्टौ हरेः यः पूर्वमुत्पन्नः सः स्वजातावुत्तम इति व्याप्तेः । यथा शब्देषु प्रथमोत्पन्न ॐकार इति दृष्टान्तसम्भवात् । अन्तर्यामिणो जननं च रूपान्तरेण तत्र प्रादुर्भावो द्युभ्वाद्यधिकरणन्यायेन (ब्र.सू. १-३-१) । 'तदधीनत्वादर्थवत्' इति (ब्र.सू. १-४-३) सूत्रोक्तदिशा हिरण्यगर्भजननं प्रति स्वातन्त्र्येण निमित्तेन वा जात इत्युक्तिर्युक्ता । तस्य महिमानमाह— **पतिरिति ॥** भूतस्येत्यन्वेति । समुदायाभिप्रायमेकवचनम् । प्राणिजातस्य **पतिः** स्वामी आसीत् । सर्वप्राण्याधिपत्येऽधिकृतोऽभूदित्यर्थः । किञ्च **स** हिरण्यगर्भः **इमां** प्रमाणसिद्धां **पृथिवीं** अधस्तनसप्तलोकान् **द्यामुत** स्वर्गाद्युपरितनलोकांश्च । उतेत्यन्तरिक्षसमुच्चयो वा । **दाधार** धृतवान् । तदाधारतया पृथिव्यादिजगत्तिष्ठतीत्यर्थः । 'छन्दसि लुङ्लङ्लिटः' (पा. ३-४-६) इति सार्वकालिकोऽयं लिट् । एतच्च धारणं 'एको दाधार भुवनानि विश्वा, 'स सेतुर्विधृतिः' (छा.उ.८-४-१) 'एष सेतुर्विधारणः' (बृ.उ.६-४-२२) 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्' इत्यादिश्रुतेः, 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' (ब्र.सू.१-३-१६) 'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र.सू.१-३-१) इत्यादिसूत्रैश्च हरौ मुख्यम् । अन्यत्र तदधीनं सङ्कुचितं चेति ज्ञेयम् । एवमग्रेऽपि **॥ देवाय** दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' (धा.पा.११०७) इति क्रीडाद्यर्थाद्दीव्यतेः कर्तर्यक् प्रत्यये स्तुत्यर्थात्कर्मणि घञ्प्रत्यये च देव इति रूपसिद्धेः क्रीडादिकर्त्रे स्तुतिविषयभूतायेत्यर्थो भगवति । विरिञ्चे तु स्तुत्यर्थाद्दीव्यतेः कर्मणि कर्तरि च । स्वाधमैः स्तुत्याय हरिस्तोत्रकर्त्रे चेत्यर्थः । **कस्मै** कशब्दवाच्याय ब्रह्मणे । 'हिरण्यगर्भः कः प्रोक्तः' (गी.भा.२.५४) इति गीतातात्पर्योक्तेः ।

सर्वनामत्वाभावेऽपि छान्दसः स्मै इत्यादेशः। **हविषा** हविरादिपूजासाधनद्रव्यैः **विधेम** परिचरेम। विधधातुः परिचरणार्थः। तस्य सकर्मकत्वेन कशब्दार्थस्य कर्मकारकत्वेऽपि प्राजापत्यात्मकपशोर्वपापुरोडाशादिहविर्दाने सम्प्रदानत्वाच्चतुर्थी। **देवं** क्रीडादिगुणकं **कं** विरिञ्चं तदन्तर्यामिणं च हविषा **परिचरेम** आराधयाम इत्यर्थः। उत्तरमन्त्रगतं य इति पदमत्राप्याकृष्यते। य एवंविधस्त्रिपाद्यामुक्तरूपः **तस्मै** तादृशाय कस्मै हविषा विधेम ॥

द्वितीया–

**य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।**
**यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥**

**यः** हिरण्यगर्भः **आत्मदाः** आकारान्तः, सेवकेभ्यः स्वात्मप्रदः भक्तवश इति यावत्। परमात्मोपदेष्टेति वा। **बलदाः** बलप्रदश्चेत्यर्थः। **विश्वे** सर्वे जनाः **यस्य** हिरण्यगर्भस्य **प्रशिषं** अनुशासनमनुतिष्ठन्ति। देवाश्च यस्य **प्रशिषं** प्रशासनमुपासते। **अमृतं** भावे निष्ठा, मृत्यभावः यस्य छायेव **छाया** अधीनः। मृत्युः मृतिश्च यस्य छायेव। तस्मै कस्मै देवायेति पूर्ववद्योजना। यस्य छायामृतं यस्य मृत्युरिति पालकानां संहारकाणां चेन्द्रादीनां रुद्रादीनां च तत्प्रतिबिम्बत्वं चाब्रवीत्। पुनर्यस्येति योगादादरत इत्युक्तमिति। 'यस्य छायामृतं मृत्युरिति चादरतोऽब्रवीत्' (ऋ.भा.१-६८) इति प्रथमाध्यायऋग्भाष्यवाक्यात्। न विद्यते मृतं मरणं यस्मादित्यमृतं पालकजातमिन्द्रादि। मृत्युः मारको रुद्रादि यस्य छायेव छाया प्रतिबिम्बभूत इति सम्प्रदायार्थः। 'शासु अनुशिष्टौ' (धा.पा.१०७५) क्विप्। क्वौ च 'शास इत्वं' इत्युपधाया इत्वे 'शासिवसिघसीनां च' (पा.सू.८-३-६०) इति षत्वे प्रोपसर्गे च प्रशिषमिति रूपम्। एतच्च प्रशासनं हरेरेव मुख्यम्। 'एतस्य वाऽक्षरस्य प्रशासने गार्गि' (बृ.उ.५-८-९) इत्यादिश्रुतेः। 'एकः शास्ता न द्वितीयोऽस्ति शास्ता' इत्यादेः (म.भा.२-५८-७; १२-२२०-८; १४-२७-१)। 'सा च प्रशासनात्' इति (ब्र.सू.१-३-११) सूत्राच्चेति ॥

तृतीया।

**यः प्राणतो निमिषतो महित्वैक इन्द्राजा जगतो बभूव ।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥**

**यो** हिरण्यगर्भः **प्राणतः** प्रश्वसतः 'अन प्राणने'(धा.पा.१०७०) इति धातोः। यद्वा प्रकर्षेण चेष्टमानस्य, 'अन चेष्टायाम्' इति धातोः। **निमिषतः** निमेषमक्षिपक्ष्मचालनं कुर्वतः **जगतो** जङ्गमस्य **महित्वा** महित्वेन, 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' (पा.सू.७-१-३९) इति तृतीयाया आकारादेशः, माहात्म्येन **एक इत्** अद्वितीय एव राजा बभूव। **यो** हिरण्यगर्भः **अस्य** प्रमाणप्रसिद्धस्य **द्विपदः** द्वौ पादौ यस्य पादद्वययुक्तस्य मनुष्यस्य। जातावेकवचनम्। **चतुष्पदः** पादचतुष्टययुक्तस्य गवाश्वादेश्च **ईशे** ईष्टे। कर्मणि षष्ठी। द्विपदादीन् यो नियामयति तस्मै **कस्मै** देवायेत्यादि पूर्ववत्। अत्रापि जगद्राजत्वं द्विपदादीशत्वं च 'न ते महित्वमन्वश्नुवन्ति' (ऋ.सं.१-१५४-१) 'य आत्मानमन्तरो यमयति' इत्यादेः हरेरेव मुख्यम्॥

चतुर्थी।

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।**
**यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥**

हिमान्यस्मिन्सन्तीति **हिमवान्**। बहुवचनमाद्यर्थे। हिमवदादयः **इमे** प्रमिताः सर्वेऽपि पर्वताः **यस्य** हिरण्यगर्भस्य **महित्वा** महित्वमैश्वर्यमित्याहुः। तेन सृष्टत्वपाल्यत्वादिहेतोः तदीयमाहात्म्यद्योतकत्वेन वर्तन्त इत्यर्थः। **रसया**। रसो जलम्। मतुबर्थे 'अर्श आदिभ्योऽच्' (पा.सू.५-२-१२७) इत्यकारप्रत्ययः। जातावेकवचनम्। **रसया** रसवतीभिर्नदीभिः सह **समुद्रं**, अत्रापि जातावेकवचनं, सर्वान् समुद्रान् यस्य महित्वमाहुरार्याः। पूर्वत्रेवाभिप्रायः। यस्य च **इमाः प्रदिशः** आग्नेयादिकोणदिशः महित्वमाहुः। बाहुरित्यनेनान्वयः। यस्येति पुनः श्रवणादिन्द्रादिप्रधानदिशः कोणदिशश्च यस्य **बाहू**, कार्यकारणयोरभेदोपचारः, बाहुभ्यां जातास्तस्मै देवायेत्यादि ॥ छ ॥

पञ्चमी।

**येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः।**
**यो अन्तरिक्षे रजसे विमानः कस्मै देवाय हविषा विधेम॥**

**येन** हिरण्यगर्भेण द्यौरुग्रा कृतेति शेषः। **उग्रा** गहनरूपा कृता। येन पृथिवी च **दृळ्हा** दृढीकृता स्थिरीकृता। येन **स्वः** स्वर्गलोकः **स्तभितः**, यथा अधो न पतति तथा उपर्यवस्थापित इत्यर्थः। 'ग्रसितस्कभितस्तभित...' (पा.सू.७.२.३४) इति निपातनात्साधुः। ततः उपरितनलोकश्च येन स्तभितः नाक आसीदित्येके। **यो** हिरण्यगर्भः अन्तरिक्षे **रजसः**, उपलक्षणमेतत्, रजस्तमःप्रधानान् प्राणिनो **विमानो** निर्मिमाणो रक्षःपिशाचादीनन्तरिक्षचारिणः कुर्वाण इत्यर्थः। तस्मै कस्मै देवायेत्यादि। एतदपि द्यावाभूम्यादिकर्तृत्वं 'द्यावाभूमी जनयन्देव एकः'(ऋ.सं.१०-८१-३) इत्यादेर्हरेरेव मुख्यमिति ज्ञेयम्॥

॥ इति हिरण्यगर्भसूक्ते आद्यो वर्गः ॥

द्वितीयवर्गे आद्या ऋक्।

**यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।**
**यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम॥**

**क्रन्दसी,** प्रजापतिना क्रन्दितत्वात् नोदितत्वात् प्रेरितत्वहेतुना क्रन्दसीत्युक्ते स्तुतिं कुर्वन्त्याविति वा, **अवसा** रक्षणेन लोकस्य रक्षणनिमित्तं **तस्तभाने** प्रजापतिना स्तब्धे लब्धसर्वैश्वर्ये सत्यौ **रेजमाने** राजमाने दीप्यमाने, आकारस्यैकारः, द्यावापृथिव्यौ **यं** हिरण्यगर्भं **मनसा** बुध्या **अभ्यैक्षेतां** अवयोर्महित्वं कृतमनेनेत्यभ्यपश्यतामित्यर्थः। अभिमान्यपेक्षयैतत्। 'ईक्ष दर्शनाङ्कनयोः'(धा.पा.२५)लङ्। **यत्राधि** यस्मिन्नाधारभूते लोके हिरण्यगर्भा-धारकत्वेनेति वा। **सूरः** सूर्यः **उदितः** उदयं प्राप्तः सन् **विभाति** प्रकाशते। तस्मै कस्मै देवायेत्यादि।

द्वितीया।

**आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम्।**
**ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम।**

'आपो वै सर्वा देवताः' (जा.उ.४) इति श्रुतेराप इति सर्वदेवानामप्भूतस्य च सङ्ग्रहः। **बृहतीः** बृहत्यः। 'बृहन्महतोरुपसङ्ख्यानम्' इति ङीप्। **अग्निं**

**जनयन्तीः** जनयन्त्यः। यज्ञाङ्गभूतगार्हपत्याद्यग्निं तदभिमानिनं चोत्पादयन्त्यः। हविर्दाने दूतं कुर्वन्त्य इति वा। आपः **गर्भं** ब्रह्माण्डस्य गर्भीभूतं हिरण्यगर्भं **दधानाः** हृदये धारयन्त्यः ध्यायन्त्यः इति यावत्। **विश्वं** जगत् **आयन्** प्राप्नुवन्, 'इण् गतौ' (धा.पा.१०४५) लट्। **यद्** यस्मात् **ततः** देवानां **असुः** प्राणभूतः एकः समवर्तत। तस्मै कस्मै देवायेत्यादि।

तृतीया।

**यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।**
**यो देवेष्वधिदेव एक आसीत् कस्मै देवाय हविषा विधेम।**

**यज्ञं** अग्निष्टोमादियज्ञं **जनयन्तीः** वैदिकाग्निसम्पादनेनानन्तरं तदङ्गकयज्ञकर्म कुर्वाणाः **दक्षं** प्रजापतिपर्यायोऽयम्, प्रजापतिं हिरण्यगर्भमिति यावत्। तदन्तर्यामिणं च **दधानाः** हृदये धारयित्रीः **महिना** महिम्ना स्वमाहात्म्येन। **आपः** अपः, द्वितीयायाः व्यत्ययेन प्रथमा। **यश्चित्** योऽपि ब्रह्मा **पर्यपश्यत्** परितो दृष्टवान्। यश्च देवेषु **अधि** अधिक एवासीत्। तस्मै कस्मै देवायेत्यादि।

चतुर्थी।

**मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।**
**यश्चापश्चन्द्रा बृहती जजान कस्मै देवाय हविषा विधेम।**

हिरण्यगर्भः **नो** अस्मान् **मा हिंसीत्**, 'विसि हिंसायां', मद्विषयपीडां मा कार्षीदित्यर्थः। यः **पृथिव्याः** भूमेः भूम्याद्यधस्तनलोकानां **जनिता** जनयिता। 'जनिता मन्त्रे' (पा.सू.६-४-५३) इति निपातनात् णिलोपः। स्रष्टेत्यर्थः। **यो वा** यश्च **सत्यधर्मा** अवितथजगद्धारणादिधर्मवान्। **दिवः** द्युप्रभृत्युपरितनलोकान् **जजान** जनयामास। यश्च **बृहतीः** महतीः **चन्द्राः** आह्लादिनीः **अपः** उदकानि **जजान** जनयामास। तस्मै कस्मै देवायेत्यादि।

पञ्चमी।

**प्रजापते न त्वदेतान्यन्यो जातानि परि ता बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥**

हे प्रजापते **त्वत्** त्वत्तः अन्यः कश्चिद् **एतानि** प्रमितानि **जातानि** कार्यभूतानि **विश्वा** विश्वानि **न परि बभूव** तत्परिभूय स्थितो नाभूत्। ततोऽतिशयितशक्तिमान्नाभूत्। तानि त्वमेव परिबभूविथेति भावः। ततोऽतिशयितशक्तिमानभूः तत्स्वामित्वेन वर्तस इति यावत्। वयं च **यत्कामाः** यत्फलं कामयमानाः। **ते** तुभ्यं त्वदर्थं **जुहुमः** हवींषि प्रयच्छामः। **तत्** फलं **नः** अस्माकं **अस्तु** भवतु। तथा च वयं **रयीणां** धनानां **पतयः** ईश्वराः **स्याम** भवेम।।

।। हिरण्यगर्भसूक्तार्थे द्वितीयो वर्गः ।।

।। इति तन्त्रसारटीकायां चतुर्थाध्याये हिरण्यगर्भसूक्तार्थः समाप्तः ।।

अस्य सरस्वत्यादिदेवतामन्त्रेष्वपि देवतात्वं ज्ञेयम्। यथोक्तमृग्भाष्ये— 'तथात्र च। ऋते प्रसिद्धां ब्रह्मैव' (ऋ.भा.अ१-सू१-श्लो४७) इति। 'तथात्र च श्रीदेव्यां प्रसिद्धाः अम्भ्रणीसूक्ताद्याः ऋते अन्यासां विद्यानां ब्रह्मैव देवता' इति तट्टीकायाम्। न्यासमाह— **ब्रह्मेति ।। ७० ।।**

**मङ्गाली**— हिरण्यगर्भमन्त्रमाह— **हिरण्यगर्भेति ।। भृगदृष्टं** भृगुमुनिना दृष्टं पञ्चदशर्चं 'हिरण्यगर्भस्समवर्तताग्रे' इत्यादि हिरण्यगर्भसूक्तं चतुर्मुखब्रह्मणो मन्त्ररूपमित्यर्थः। अङ्गान्याह— **ब्रह्मेति ।।** सोद्देशैर्ब्रह्मादिपञ्चपदैरित्यर्थः। 'ब्रह्मणे हृदयाय नमः' इत्यादि। त्रिष्टुप् छन्दः ।। ७० ।।

चतुर्मुखध्यानम्

**तं.सा.** **ध्यायेन्निषण्णमजमच्युतनाभिपद्मे**
**प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् ।**
**मातृप्रकारकरमुत्तमकान्तिमद्भि-**
**र्वक्त्रैः सृजन्तमखिलैः परमार्थविद्याः(द्याम्) ।। ७१ ।।**

**त.क.**— ध्यानप्रकारमाह— **ध्यायेन्निषण्णमिति ।।** अच्युतस्य हरेः नाभिपद्मे निषण्णमुपविष्टमित्यर्थः। **दिवाकरसमूहनिकाशं** तत्सदृशम्। **अग्र्यं** सर्वजीवोत्तमम्। मातुर्लक्ष्म्याः। करसम्बन्धी कारः। सम्बन्धश्च सादृश्यम्।

सम्यक्ता प्रशब्दार्थस्तत्रान्वेति। मातुः कराणामत्यन्तसदृशौ करौ यस्य स तथोक्तः। अनेन दक्षोर्ध्वकरे वामोर्ध्वकरे च पद्मम्। दक्षाधःकरे चाभयम्। वामाधःकरे च वरमिति चतुर्भुजत्वं वेदितव्यम्। परमार्थो भगवान्। उत्तमार्थत्वात्। तत्प्रतिपादकविद्या ऋगद्याः। वक्त्रैः अखिलैः **सृजन्त**मुच्चरन्तमभिव्यञ्जयन्तम्। अनेन प्रागादिचतुर्दिक्षु चत्वार्यस्य वक्त्राणीत्युक्तं भवति ॥ ७१ ॥

**अ.सं.**— ध्यानमाह— **ध्यायेदिति** ॥ **अजं** अकारवाच्यनारायणपुत्रम्। **अच्युतनाभिपद्मे** विष्णुनाभ्याख्यकमले **निषण्णं** आसीनम्। **प्रोद्यद्दिवाकरसमूहनिकाशं** उद्यदादित्यसमूहसदृशकान्तिम्। **अग्र्यं** सर्वजीवोत्तमम्। **मातृप्रकारकरं** मातुः लक्ष्म्याः प्रकाराः करसदृशाः कराः चत्वारो यस्य स तथोक्तस्तमित्यर्थः। लक्ष्मीवत् पद्मद्वयाभयवरयुक्तचतुर्भुजोपेतमिति भावः। **परमार्थविद्याः** परमः सर्वोत्तमो हरिः अर्थः प्रतिपाद्यो यासां ताः। परमार्थाश्च ता विद्याः ऋगादिविद्याश्च। **अखिलैश्चतुर्भिर्वक्त्रैः** मुखैः **सृजन्तं** उच्चरन्तमित्यर्थः ॥ ७१ ॥

**गु.दी.**— ध्यानमाह— **ध्यायेदिति** ॥ **अच्युतनाभिपद्मे** पद्मनाभस्य नाभिकमले **निषण्णं** आसीनम्। **प्रोद्यद्दिवाकरसमूहनिकाशं** सम्यगुद्यदादित्यसमूहनिभम्। **मातृप्रकारकरं** मातुः लक्ष्म्याः करप्रकारः कराणां प्रकारः पद्मद्वयाभयवरयुक्तत्वरूपो यस्य स तथेति। करशब्दस्य परनिपातः। उत्कृष्टकान्तिसम्पन्नैरखिलैर्वक्त्रैश्चतुर्मुखैः **परमार्थविद्यां** 'ता एव परमा विद्या यदा विष्णोस्तु वाचका' (आ.उ.१-१) इत्युक्तेर्ऋगादिरूपां **सृजन्तं** उच्चारयन्तम् ॥ ७१ ॥

**मङ्गाली**— ध्यानमाह— **ध्यायेदिति** ॥ **अजं** अकारवाच्यनारायणपुत्रं **अच्युतनाभिपद्मे** विष्णुनाभिकमले **निषण्ण**मासीनं **प्रोद्यद्दिवाकरसमूहनिकाशं** उद्यदादित्यसमूहसदृशकान्तिं **अग्र्यं** सर्वजीवोत्तमं **मातृप्रकारकरं** मातुर्लक्ष्म्याः प्रकाराः करसदृशाः कराश्चत्वारो यस्य स तथोक्तस्तमित्यर्थः। लक्ष्मीवत् पद्मद्वयाभयवरयुक्तचतुर्भुजोपेतमिति भावः। **परमार्थविद्याः** परमः सर्वोत्तमो हरिः अर्थः प्रतिपाद्यो यासां ताः। परमार्थाश्च ता विद्या ऋगादिविद्याश्च। **अखिलैः** चतुर्भिः **वक्त्रैर्मुखैः** **सृजन्तं** उच्चरन्तमित्यर्थः ॥ ७१ ॥

चतुर्मुखस्य पञ्चाक्षराष्टाक्षरमन्त्रौ

**त.सा. स्वयमुद्देशनतिमांस्तस्य पञ्चाक्षरो मनुः ।**
**स्वयमेवापरोऽष्टार्णस्तादृशः सम्प्रकीर्तितः ॥ ७२ ॥**

**त.क.–** तस्यैव पञ्चाक्षरं मन्त्रमाह— **स्वयमिति ॥** बुद्धिस्थत्वाद्बहुप्रयोगाच्च स्वयंशब्देन ब्रह्मशब्दो गृह्यते। उद्देशश्चतुर्थीविभक्तिः। नतिर्नमःशब्दः उद्देशनती अस्यानन्तरमुच्चार्यत्वेन स्त इत्युद्देशन**तिमान्** चेत् **'ब्रह्मणे नमः'** इति पञ्चाक्षरो मनुः **तस्य** ब्रह्मण इत्यर्थः। तस्यैवाष्टाक्षरमन्त्रमाह— **स्वयमेवेति ॥** अत्र स्वयंशब्देन हिरण्यगर्भशब्दः पञ्चाक्षरो ग्राह्यः। न तु चतुर्वक्त्रादिशब्दः। तथात्वे मन्त्रस्याष्टाक्षरत्वानुपपत्तेरित्येवार्थः। तादृश इत्यनेन चतुर्थीनमःशब्दाभ्यां योज्यते। तथा च **'हिरण्यगर्भाय नमः'** इत्यष्टार्णो मन्त्रः सम्प्रकीर्तित इत्यर्थः ॥ ७२ ॥

**अ.सं.–** चतुर्मुखब्रह्मण एव पञ्चाक्षरमन्त्रमाह– **स्वयमिति ॥ उद्देशनतिमान्** उद्देशश्चतुर्थी, नतिः नमःशब्दः ताभ्यां युक्तः। **स्वयं** स्ववाचकब्रह्मशब्दः । **तस्य** ब्रह्मणः पञ्चाक्षरो मन्त्र इत्यर्थः । **'ब्रह्मणे नमः'** इति मन्त्रनिष्पतिः । अङ्गं ध्यानं च पूर्ववत् । छन्दस्तु सूचितमेव । तस्यैव मन्त्रान्तरमाह– **स्वयमेवेति ॥ तादृशः** चतुर्थी नमःशब्दवान् । **स्वयमेव** स्ववाचकः हिरण्यगर्भशब्दः । **अष्टार्णः** अष्टाक्षरः । अपरः मन्त्रः सम्प्रकीर्तितः । तथा च **'हिरण्यगर्भाय नमः'** इति मन्त्रो भवति । अत्रापि पूर्ववदेवाङ्गादीनि ॥ ७२ ॥

**गु.दी.—** तस्य पञ्चाक्षरमन्त्रमाह— **स्वयमिति ॥ स्वयं** ब्रह्मशब्दः। **उद्देशनतिमान्** चतुर्थीविभक्तिनमःशब्दवान्। तथा च **'ब्रह्मणे नमः'** इति मन्त्रनिष्पत्तिः। तस्यैव मन्त्रान्तरमाह— **स्वयमेवेति ॥ स्वयं** हिरण्यगर्भ एव **तादृशः** चतुर्थीनमःशब्दयुक्तः अपरः अष्टार्णो मनुः। ततश्च **'हिरण्यगर्भाय नमः'** इति मन्त्रनिष्पत्तिः। अत्र मन्त्रद्वये न्यासादिकं पूर्वमन्त्रवदेवेति द्रष्टव्यम् ॥ ७२ ॥

**मङ्गाली–** चतुर्मुखब्रह्मण एव पञ्चाक्षरमन्त्रमाह– **स्वयमिति ॥**

**उद्देशनतिमान्** उद्देशश्चतुर्थी नतिर्नमःशब्दः, ताभ्यां युतः । **स्वयं** स्ववाचको ब्रह्मशब्दः । **तस्य** ब्रह्मणः पञ्चाक्षरो **मन्त्र** इत्यर्थः । **'ब्रह्मणे नमः'** इति मन्त्रनिष्पत्तिः । अङ्गध्याने च पूर्ववत् । छन्दस्तु पूर्वसूचितमेव । तस्यैव मन्त्रान्तरमाह– **स्वयमेवेति** ।। **तादृशः** चतुर्थीनमःशब्दवान् । **स्वयमेव** स्ववाचकः हिरण्यगर्भशब्दः । **अष्टार्णः** अष्टाक्षरोऽपरो मन्त्रः संप्रकीर्तितः । तथा च **'हिरण्यगर्भाय नमः'** इति मन्त्रो भवति । अत्रापि पूर्ववदेवाङ्गादि ।। ७२ ।।

वेदोक्तमुख्यप्राणमन्त्रोद्धारः

**तं.सा.** **बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते ।**
**प्राणाद्यैः पञ्चभिस्तस्याप्यङ्गान्युक्तानि सूरिभिः ।। ७३ ।।**

**त.क.**– मुख्यप्राणस्य मन्त्रमुद्धरति— **बळाद्यमिति** ।। 'बळित्था तद्वपुषे धायि दर्शतं' (ऋ.सं.१-१४१-१) इत्यादित्रयोदशर्चमेकं सूक्तं सप्तो नेत्यनुवृत्तेः(?)। प्राणश्चासावग्निश्च । अनेन सूक्तस्याऽग्नेयत्वप्रसिद्धिरुपपादिता । 'प्राणाग्नय एवैतस्मिन् जाग्रति' इति प्रयोगात् । अङ्गन्यासमाह– **प्राणाद्यैरिति** ।। (षप्र.उ.४-३) प्राणापानव्यानोदानसमानशब्दैः पञ्चभिर्हृदयादीनि पञ्चाङ्गानि न्यसनीयानीत्यर्थः । **सूरिभिरित्यनेन** न्यासान्तरमनादरणीयमिति सूचयति ।। ७३।।

**अ.सं.**— मुख्यवायुमन्त्रमाह– **बळाद्यमिति** ।। बळाद्यं बळ् बडिति पदं आद्यं प्रथमं यस्य सूक्तस्य तत् **बळाद्यं** 'बळीत्था तद्वपुषे धायि दर्शतं' (ऋ.सं.१-१४१-१) इत्याद्येकवर्गात्मकम् । त्रयोदशर्चमित्येके । पञ्चदशर्चमित्यन्ये । **सूक्तं प्राणाग्नेः** प्राणः सर्वजीवनहेतुः । अग्निः स्वतो गमनासमर्थस्यागशब्दवाच्यस्य जगतः निः नेता । प्राणश्चासावग्निश्चेति विग्रहः । तस्य प्राणाग्निनाम्नो मुख्यप्राणस्य मन्त्ररूपमित्यर्थः । मुरव्यवायोरिति वक्तव्ये प्राणाग्नेरिति वदता बळित्थेति सूक्तस्याग्निसूक्तत्वप्रसिद्धिरुपपादिता भवति । अन्यत्राग्निशब्दस्य प्राणाग्निपरत्वेन व्यारव्यानात् । वायोश्च प्राणाग्निशब्दवाच्यत्वस्योपनिषत्प्रसिद्धत्वात् । तथाहि षट्प्रश्नोपनिषत् । 'प्रणाग्नय एवैतस्मिन् हृदयपुरे जाग्रति गार्हपत्यो वा एषोऽपानो व्यानोऽन्वाहार्यपचनो गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः' (ष.प्र.उ.४-२)

इत्यादि। 'एतस्मिन् पुरे शरीरे प्राणा मुख्यप्राणरूपाण्येवाग्नयः प्राणाग्नयः' इति तट्टीकायां व्याख्यानात्। मुख्यप्राणरूपाणां प्राणापानादीनां मुख्यप्राणस्वरूपत्वेन मुख्यप्राणस्यापि प्राणाग्निशब्दवाच्यत्वात्। तस्याङ्गान्याह– **प्राणाद्यैरिति ॥** प्राणापानव्यानोदानसमानाख्यपञ्चपदैरित्यर्थः। **तस्यापि** वायुसूक्तस्यापि **अङ्गानि** पञ्चाङ्गानि उक्तानीत्यर्थः ॥ ७३ ॥

**गु.दी.–** इदानीं वायुमन्त्रमाह— **बळाद्यमित्यादिना ॥** बट् इत्याद्यं यस्य तत् **बळाद्यम्।** 'बळित्था तद्वपुषे धायि' (ऋ.सं.१-१४१-१) इति पञ्चर्चं **प्राणाग्नेः** मुख्यप्राणस्य सूक्तम्। बळित्थेत्यस्य अग्निसूक्तत्वप्रसिद्धेः **प्राणाग्नेरित्युक्तम्।** प्राणस्याग्नित्वमुपनिषत्प्रसिद्धं द्रष्टव्यम्।

यद्वा बट् एतस्मादाद्यं

वेदिषदे प्रियधामाय सुद्युते धासिमिव प्रभरा योनिमग्नये।
वस्त्रेणेव वासया मन्मना शुचिं ज्योतीरथं शुभ्रवर्णं तमोहनम् ॥
(ऋ.सं.१-१४०-१)

इति त्रयोदशर्चं वर्गत्रयात्मकं सूक्तम्। बट् इत्याद्यं यस्येति **बळाद्यं** बळित्थेत्यादि पञ्चर्चम्। तन्त्रावृत्त्येकशेषाणाम् अन्यतमाश्रयणेन उदाहृतसूक्तद्वयं प्राणाग्नेः सम्बन्धि तद्देवताकमित्यर्थः। **प्राणाग्ने**रित्येकवचननिर्देशात् 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' (ष.प्र.उ. ४-३) इति श्रुतौ 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इत्यधिकरणन्यायेन रूपबहुत्वापेक्षया बहुवचनमिति सूचयति। भृगुणा दृष्टमित्युक्त्या च सर्वानुक्रमकारोक्तस्य एतत्सूक्तद्वयद्रष्टुरौचथ्यस्य दीर्घतमसः प्रसिद्धाग्निवाचकतया दर्शनेऽपि भार्गवदर्शनापेक्षया प्राणाग्निदैवत्यताऽप्युपपन्नेति सूचयति। अन्यथा ऋषिदेवताकथनस्य वैयर्थ्यात्। न च तज्ज्ञानार्थमेव तदुक्तिः। छन्दसोऽपि कथनप्रसङ्गात्। 'यो ह वा' इत्यादौ तद्ज्ञानाभावेऽपि दोषश्रवणात्। वैष्णवमन्त्रकथनानन्तरं कथितानां 'विष्णोर्नुकं' इति सूक्तानां छन्दर्षिदैवतस्याकथनाच्च। तस्माद्यस्मिन्नंशेऽधिकविवक्षा तावानंश आचार्येणोच्यते। प्रकृते चाश्वलायनोक्तछन्दोविषये विप्रतिपत्त्यभावात् तदनुक्त्वा ऋषिदेवते एवोपात्ते।

नन्वेवं 'वेदिषदे सप्तोना दीर्घतमा औचथ्य आग्नेयं तु' इति (अनु.क्र.१-१४१) आश्वलायनेनानुक्रमकारेणास्य सूक्तस्य एतदनन्तरस्य बळित्थेति सूक्तस्य च द्वित्वसङ्ख्यायां परिभाषितेन तुशब्देनाग्निदेवताकत्वोक्तेस्तद्विरोध इत्यत उक्तं— **प्राणाग्नेरिति ।।** 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' (ष.प्र.उ.४-३) इति श्रुतेरग्निशब्दस्य प्राणेऽपि रूढत्वात् । न च प्राणाश्चाग्नयश्चेति श्रुतौ द्वन्द्वमाश्रियत इति वाच्यं, 'द्वन्द्वे घि' (पा.सू.२-१-३२) इत्यनेन अग्निशब्दस्य पूर्वनिपातप्रसङ्गात् । यदि च प्राणस्याग्न्यपेक्षयाऽभ्यर्हितत्वात् 'द्वन्द्वे घि' (पा.सू.२-१-३२) इत्यस्य बाधः, तर्हि, सुषुप्तौ मनआद्यभिमानिनां रुद्रादीनामप्युपरतव्यापारतया सुप्तत्वेन तदपेक्षया निकृष्टस्य वागभिमानिनोऽग्नेः सुतरां सुप्ततया जाग्रत्वोक्त्ययोगात् प्राण एवात्राग्निः । अपकृष्टेष्वग्न्यादिषूत्कृष्टानां वाय्वादीनां नियामकतया स्थितत्वेनाग्निसूक्तत्वेनाभिमतस्यापि वायुप्रतिपादकताया अविरोधाच्च । ऋषिविशेषेण देवताविशेषवाचकतया दृष्टस्यापि मन्त्रस्य ऋष्यन्तरेण देवतान्तरवाचकतया दर्शनस्य सम्भवेनाविरोधाच्च । अन्यथा 'अग्निर्मूर्धा दिव' (ऋ.सं.८-४४-१६) इत्यादीनामपि सर्वानुक्रमे आग्नेयादित्वेन पठितत्वात् स्मृतिकाराद्युक्ता मङ्गलादिग्रहपरताऽपि न स्यात् । आश्वलायनोक्त्यपेक्षया प्राणाग्नेरिति तन्त्रसारसङ्ग्रहवचनस्य विष्णूदिततन्त्रसारमूलकत्वेन प्रामाण्यातिशयाच्च । केवलस्वोत्प्रेक्षामूलत्वे च तत्तन्मन्त्रपुरश्चरणजन्यफलावाप्तिरनुभवसिद्धा न स्यात् । तस्मान्मुख्यामुख्यवृत्तिभ्यामग्निशब्दस्य उभयपरत्वमवश्यं वक्तव्यम् ।

वेदिषद इति ऋगर्थस्तु– हे अधिकारिन्, अङ्गानि नयति प्रेरयतीति **अग्निः** मुख्यप्राणः । तस्मै **योनिं** आसनं **प्रभर** । 'यो निष्ट इन्द्रनिषदे अकारि' इत्यादौ (ऋ.सं.१-१०४-१) योनिशाब्दस्याऽसने प्रयोगात् । **वेदिषदे** वेद्यां सौमिक्यां सीदति सोमपानार्थं निषीदतीति वेदिषत् तस्मै । **प्रियं धाम** यज्ञवेदिलक्षणं धाम यस्य तस्मै **प्रियधामाय** । शोभना द्युत् यस्येति **सुद्युत्** । तस्मै । किमिव । **अग्नये** प्रसिद्धायादनशीलाय पुरुषाय वा **धासिमिव** अन्नमिव, दधाति सिनोति चेति

योगात्, अन्ननामसु पाठाच्च। किञ्च ज्योतीरूपस्य वायोः रथस्थानीयं वेदिरूपस्थानं **वस्त्रेणेव वासय** वर्हिषा वेदिं स्तृणीहि । वस्त्रदृष्टान्तेनानतिसादृश्यं स्तृणातिश्रुत्युक्तप्रकारं सूचयति। वस्त्रेणाच्छादितं हि किञ्चिद्दृश्यते किञ्चिन्न। एवं बर्हिषा वेदिस्तरीतव्येति भावः। **शुचिं** शुद्धं **शुभ्रवर्णं** सत्यगुणकार्यत्वाच्छुक्लवर्णं तमोहनं प्रकाशरूपं रथमिति। शिष्टसूक्तार्थः नारायणपण्डितार्यप्रणीतायां मध्वमन्त्रार्थमञ्जर्यां द्रष्टव्यः ।।६५,६६।।

बळित्थेत्यादेरयमर्थः। **सहसः** सहोरूपस्य **देवस्य** क्रीडादिगुणसम्पन्नस्य वायोः मूलरूपं **बट्** बलात्मकम्। **दर्शतं** ज्ञानरूपम्। **भर्गः** जगद्भरणगुणम्। **इत्था** इत्थम्भूतमेव न पुनरन्यथा। **वपुषे** रूपत्रयावताराय। **यतो** यस्मात् भगवतः **अधायि** निहितं भगवता प्रेरितं तस्मादजनि। यद्वा **यतो** वायोर्भगवान् **अजनि** व्यक्तोऽभूत्तस्य वायोरिति सम्वन्धः। प्रथमावतारस्य स्वरूपमाह– **यदीमिति** ।। **यदीं** यदेव **मतिः** हनुमदाख्यं प्रथमं रूपम्। हनशब्दो ज्ञानवाची। उच्छब्दः उत्कृष्टत्ववाची। 'उत्कृष्टत्वमुकारार्थः' इति बृहद्भाष्योक्तेः। तथा च निर्वचनत्वान्नकारस्थाकारलोपे हनु इति जाते 'तदस्यास्त्यस्मिन्' (पा.सू.५-२-९४) इति सूत्रेण मतुप्प्रत्यये हनुमदिति प्रातिपदिकम्। तथा च ईशादन्यत्रालोचने सर्वविषयकत्वेनोत्कृष्टज्ञानवान् हनुमानित्यर्थः। अथ वा गत्यर्थाद्धनधातोस्ताच्छील्यार्थे उन्प्रत्ययः। 'ताच्छील्यार्थादुनस्तथा' (अनु.व्या.१-४-३४३) इति अनुव्याख्यानोक्तेः। तथा च 'हलन्त्यं' (पा.सू.१-३-३) इति न इत्यस्य लोपे उक्तसूत्रेण मतुप्प्रत्यये सति अनादिकालाभिव्यक्तवैदिकेश्वरज्ञानवत्त्वेन ज्ञानस्वभाववान् हनुमानित्यर्थः। तर्हि मतिमच्छब्दवाच्यत्वप्राप्त्या मतिशब्दवाच्यत्वं कथमिति चेत्, सत्यम्, ज्ञानवतोऽपि ज्ञानस्वरूपताप्रकटनाय मतिशब्दप्रयोगात्। **उपह्वरते** रामस्य समीपे तिष्ठति। **साधते** रामकार्याणि साधयति। **तेन** हनूमता। **ऋतस्य** सत्यरूपस्य पूर्वावगतवत्सदा स्थितस्य वा रामस्य **सस्रुताः** अमृतस्रावयुक्ताः **धेनाः** वाचोऽनयन्त सीतां प्रतीति शेषः ।।

**पृक्षो वपुः पितुमान् नित्य आशये द्वितीयमा सप्तशिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ।।**

द्वितीयावतारस्वरूपमाह— **पृक्ष इति ।।** द्वितीयं वपुः भीमाख्यं **पृक्षः** कुरुपृतनाक्षयकारि । **पितुमान्** पितुरित्यन्नसंज्ञा । 'भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः' इति वचनाद्भूमार्थे मतुबयम् । **भूमा** बाहुल्यम् । बह्वन्नवान् । तद्वत्त्वं च भोक्तृत्वेनेति द्रष्टव्यम् । तथा च बह्वन्नभोक्तेत्यर्थः । बकासुरवधादौ दर्शनात् । **नित्यः** नित्यं **सप्तशिवासु** परममङ्गलरूपासु सप्तसु **मातृषु** प्रमाणभूतासु ऋगाद्यासु **आशये** शेते । तद्विचाररत इति भावः । अनेन भृताः माः प्रमाः प्रमाणानि यस्मिन्नसौ भीम इति भीमशब्दार्थ उक्तः । तृतीयावतारस्वरूपमाह– **तृतीयमिति ।। अस्य वृषभस्य** श्रेष्ठस्य वायोस्तृतीयवपुः **दोहसे** ज्ञानदोहाय **दशप्रमतिं** पूर्णप्रज्ञनामकं **योषणो** मध्यगेहभट्टस्य पत्न्यो, गुरुत्वाद्बहुवचनम्, **जनयन्त** अजनयन्त । अत्र वृषभस्य तृतीयवपुरित्युक्त्या आनन्दतीर्थाचार्या-परनामा पूर्णप्रज्ञः साक्षाद्वाय्ववतार एवेति सम्प्रदायविदः । **अन्ये तु** 'आनन्दतीर्थवरनामवती तृतीया भैमी तनुर्मरुत आह कथाः परस्य' इति (म.ता.नि.३-८) तात्पर्यनिर्णयवाक्ये सन्निधानेन भैमीत्यनेन तनुं विशिष्य भीमसेनस्य रूपान्तरमानन्दतीर्थः, न तु साक्षान्मूलरूपस्य वायोरिति मन्यन्ते । तदसत् । तृतीयेत्यस्यानन्वयात् । भीमावधिकतृतीयत्वस्यानन्दतीर्थेऽसम्भवात् । हनुमदपेक्षया तृतीयत्वस्य साक्षाद्वायुतनुत्वं विनाऽसम्भवात् । न च तत्पक्षे भैमीत्येतदसङ्गतं, भीमसेनादनन्तरा भैमीत्यर्थोपपत्तेः । एवमन्यान्यपि द्वात्रिंशदध्यायस्थितानि वाक्यानि योज्यानि ।

शिष्टऋक्त्रयव्याख्यानमन्यत्र पितृचरणरचिततैत्तिरीयभाष्यटीकायां द्रष्टव्यम् ।।

अङ्गन्यासमाह— **प्राणाद्यैरिति ।।** प्राणापानव्यानोदानसमानैः **सोद्देशैः** नमोन्तैरिति ग्राह्यम् ।। ७३ ।।

**मङ्गाली–** मुख्यवायुमन्त्रमाह– **बळाद्यमिति ।। बळाद्यं** बट् बडिति पदं आद्यं प्रथमं यस्य सूक्तस्य तत् बळाद्यम् । 'बळिथा तद्वपुषे धायि दर्शतं' इत्याद्येकवर्गात्मकम् । त्रयोदशर्चमित्येके । पञ्चदशर्चमित्यन्ये । सूक्तं **प्राणाग्नेः** प्राणः सर्वजीवनहेतुः अग्निस्स्वतोगमनासमर्थस्यागशब्दवाच्यस्य जगतो निः नेता

प्राणश्चासावग्निश्चेति विग्रहः । **तस्य** प्राणाग्निनाम्नो मुख्यप्राणस्य मन्त्ररूपमित्यर्थः। मुख्यवायोरिति वक्तव्ये प्राणाग्नेरिति वदता बळित्थेति सूक्तस्याग्निसूक्तत्वप्रसिद्धि-रुपपादिता भवति । अग्निशब्दस्य प्राणाग्निपरत्वेन व्याख्यानात् । वायोश्च 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' (ष.प्र.उ.४-३) इत्यादिना षट्प्रश्नोपनिषदि प्राणाग्निशब्द-वाच्यतायाः प्रमित्वात् । तस्यांगान्याह- **प्राणाद्यैरिति** ।। प्राणापानव्यानोदा-नसमानाख्यपञ्चपदैरित्यर्थः । **तस्यापि** सूक्तस्यापि **अङ्गानि** पञ्चागान्युक्तानीत्यर्थः ।।७३।।

मुख्यप्राणध्यानकथनम्

**तं.सा.** **उद्यद्रविप्रकरसन्निभमच्युताङ्के**
**स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिम् ।**
**ध्यायेद्गदाभयकरं सुकृताञ्जलिं तं**
**प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ।। ७४ ।।**

**त.क.–** ध्यानप्रकारमाह— **उद्यदिति** ।। **अस्य** हरेः नुत्यां नित्यं वचःप्रवृत्तिः यस्य सः नुतिनित्यवचःप्रवृत्तिः । अनेन सर्वस्य हृदये मुख्यप्राणः सर्ववेदैर्भगवन्तं नित्यं स्तौतीति वैदिकीं कथां सूचयति । सुकृतौ सम्यग्बद्धौ अञ्जली यस्य सः । अनेन चतुर्भुजत्वमुक्तं भवति । **तं** वेदैः श्वासोच्छवासप्रवर्तकत्वेन च प्रसिद्धम् । यथेष्टा तनुर्यस्य सः । अनेन नित्यं सर्वदेहे स्थित्वा स्तुतिकरणमुपपादितम् । उन्नतानि अनन्तानि कर्माणि तदनुकूलानि शक्तयश्च यस्य सः । 'मारुत्येव यतश्चेष्टाः' इत्युक्तेः ।। ७४ ।।

**अ.सं.–** ध्यानमाह– **उद्यादिति** ।। उद्यदादित्यससूहसदृशम् । **अस्य** अच्युतस्य । **नुतिनित्यवचःप्रवृत्तिं** नुतौ स्तुतौ विषये नित्यं निरन्तरं वचसां प्रवृत्तिर्यस्य स तथोक्तस्तमित्यर्थः । यद्वा स्तुतिरूपं नित्यवचः तस्य प्रवृत्तिर्येन तम् । सर्वदा भगवत्स्तुतिकर्तारं भगवत्प्रतिपादकवेदानुच्चरन्तमिति भावः । **यथेष्टतनुं** यथेष्टाः बह्व्यः तनवो यस्य तम् । अनेकरूपवन्तमित्यर्थः । यथेष्टा वृहती तनुर्यस्य तमिति वाऽर्थः । यद्वा **यथेष्टतनुं** स्वेच्छानुसार्यनेकावतारवन्तं

भगवन्तं प्रति सुकृताञ्जलिम् । यः भगवदवतरः तस्य तस्याभिमुख्येन अञ्जलिं वध्वा तिष्ठन्तमिति भावः । **उन्नतकर्मशक्तिं** उत्कुष्टकार्यकरणे समर्थम् ।। ७४ ।।

**गु.दी.**— ध्यानमाह— **उद्यदिति** ।। उद्यद्रविप्रकराणाम् उद्यदादित्यरश्मीनां सन्निभम् । उद्यद्रविसमूहसदृशं वा । सुष्टु आसीनम् **अस्य** अच्युतस्य **नुतिरूपं** स्तुतिरूपं यत् **नित्यवचः** वेदवाक्यं तत्प्रवृत्तिर्यस्य तमित्यर्थः । नुतौ नित्यं वचःप्रवृत्तिः यस्यासाविति वा । नुतिशब्दस्य नित्यसापेक्षत्वात्समासः । **गदाभयकरं** गदाभयाभ्यां युक्तकरम् । सुष्ठु कृता **अञ्जलिः** करयोर्मुकुलीभावो येन तं **सुकृताञ्जलिम्** । प्रकृष्टचेष्टकत्वात् **प्राणम्** । **यथेष्टतनुम्** । इष्टं इच्छा भावे क्तः । इच्छामनतिक्रम्य स्थिता तनुः यस्य तं कामरूपमित्यर्थः । उन्नता उत्कृष्टा कर्मणि जगद्धारणादौ शक्तिः सामर्थ्यं यस्य सः उन्नतकर्मशक्तिः तम् ।। ७४ ।।

**मङ्गाली**— ध्यानमाह– **उद्यदिति** ।। उद्यदादित्यसमूहसदृशं । **अस्याच्युतस्य नुतिनित्यवचःप्रवृत्तिं** नुतौ स्तुतौ विषये निरन्तरवचसां प्रवृत्तिर्यस्य स तथोक्तस्तमित्यर्थः । यद्वा स्तुतिरूपं यन्नित्यवचः वेदवचः तस्य प्रवृत्तिर्येन तम् । **यथेष्टतनुं** यथेष्टाः वह्व्यस्तनवो यस्य तं अनेकरूपवन्तमित्यर्थः । यथेष्टा अतिबृहती तनुर्यस्य तमिति वाऽर्थः । यद्वा यथेष्टतनुं स्वेच्छानुसार्यनेकावतारवन्तम् । भगवन्तं प्रति **सुकृताञ्जलिं** यो यो भगवदवतारस्तस्य तस्याभिमुख्येनाञ्जलिं बध्वा तिष्ठन्तम् । **उन्नतकर्मशक्तिं** उत्कृष्टकार्यकरणे समर्थम् ।। ७४ ।।

पञ्च मुख्यप्राणमन्त्राः

**तं.सा.** **प्राणाद्याः पञ्चमन्त्राश्च तस्य देवस्य वाचकाः ।**
**उच्यते हरिरप्येतैः साक्षान्नारायणादिकः ।। ७५ ।।**

**त क.**– वायोरेव पञ्च मन्त्रान् युगपदुद्धरति— **प्राणाद्या इति** ।। **'प्राणाय नमः'**, **'अपानाय नमः'** इत्याद्याः पञ्च मन्त्रा इत्यर्थः । ननु प्राणापानादिशब्दैः नारायणानिरुद्धादिपञ्चरूपो हरिरुच्यत इत्यन्यत्रोच्यते । तत्कथं तस्य देवस्य

वाचका इत्युच्यत इत्यत आह— **उच्यत इति ।।** यद्यपि नारायणादिको हरिरेतैः प्राणादिशब्दैरुच्यत इत्युच्यते । तथापि न विरोधः । कुतः ? **साक्षात्** परममुख्यया वृत्त्या एतैः शब्दैः हरिरुच्यते । अवान्तरवृत्त्या प्राणादिशब्दैर्वायुरुच्यत इत्युक्तौ न विरोध इत्यर्थः ।। ७५ ।।

**अ.सं.–** वायोरेवापरानपि मन्त्रानाह– **प्राणाद्या इति ।।** उद्देशनमःशब्दयुक्ताः प्राणापानव्यानोदानसमानशब्दाख्याः पञ्चमन्त्राः । **तस्य देवस्य** वायोर्वाचका इत्यर्थः । **'प्राणाय नमः'** **'अपानाय नमः'** इत्यादि पञ्चमन्त्रोद्धारप्रकारो द्रष्टव्यः । न्यासादि पूर्ववत् । एते प्राणादयः पञ्चशब्दाः विष्णोरपि मन्त्रा इत्याह– **उच्यत इति ।।** **एतैः** प्राणादिपञ्चमन्त्रैः । **नारायणादिकः** नारायण-वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यपञ्चरूपो हरिरपि **साक्षात्** प्राणापानाद्यनन्तर्गत एवोच्यते । न तु अन्यदेवतामन्त्रवत् अन्यदेवतान्तर्गतत्वेन प्रतिपाद्यते । अनेन नारायणादिपञ्चात्मकव्यूहः प्राणादिपञ्चान्तर्गत एकः । तदनन्तर्गतश्चापरः । एतदभिप्रायेण इदं वाक्यं प्रवृत्तमित्यङ्गीकर्तव्यम् । अन्यथा अन्यदेवतामन्त्राणां सर्वेषामप्यन्तर्यामिपरत्वेन भगवत्प्रतिपादकत्वसिद्धेरेतैरिति विशिष्योक्तेरयोगात्। अन्यदेवतामन्त्राणामन्तर्यामिपरत्वस्य च 'मन्त्रेष्वेतेषु सर्वेषु'(४-८४) इत्युत्तरत्र वक्ष्यमाणत्वात् । अत एवात्र साक्षादित्युक्तं भवति ।। ७५ ।।

**गु.दी.–** तस्य अपरानपि मन्त्रानाह— **प्राणाद्या इति ।।** उद्देशनमःशब्दयुताः प्राणादिशब्दा मन्त्रा इत्यर्थः । **'प्राणाय नमः'** इत्यादिमन्त्रप्रकारो द्रष्टव्यः । एतेषां वैष्णवमन्त्रत्वं चाह— **उच्यत इति ।।** **एतैः** पञ्चमन्त्रैर्नारायणवासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धरूपो हरिरपि **साक्षात्** परममुख्यतः उच्यते । यद्वा **साक्षात्** पृथक् स्थितः वाय्वनन्तर्गतः **नारायणादिकः** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः, आदि-पदोक्ताः नारायणादिव्यूहः प्राणादिपञ्चकान्तर्गतः एकः । तदनन्तर्गतश्चापरः । एतद्विवक्षया चेदम् । अन्यथा सर्वमन्त्राणामप्यन्तर्यामिपरत्वेन एतैरिति विशिष्योक्त्ययोगात् । अन्तर्यामिपरत्वस्य 'मन्त्रेषु' (तं.सा.४-८४) इत्युत्तरत्र वक्ष्यमाणत्वाच्च । पूर्वमन्त्राणामप्यनन्तर्गततत्तद्रूपपरत्वेन पृथङ्मन्त्रत्वमेतन्न्यायेनैव ज्ञेयम् ।। ७५ ।।

**मङ्गाली–** वायोरेवापरानपि मन्त्रानाह– **प्राणाद्या इति ।।** उद्देशनमःशब्दयुक्ताः प्राणापानव्यानोदानसमानशब्दाख्याः पञ्चमन्त्राः **तस्य देवस्य** वायोर्वाचका इत्यर्थः। **'प्राणाय नमः'** **'अपानाय नमः'** इत्यादिपञ्चमन्त्रोद्धार प्रकारो द्रष्टव्यः । एते प्राणादयः पञ्च शब्दाः विष्णोरपि मन्त्रा इत्याह– **उच्यत इति ।। एतैः** प्राणादिपञ्चरूपो हरिरपि **साक्षात्प्राणाद्यनन्तर्गत** एव उच्यते । न त्वन्यदेवतामन्त्रवदन्यदेवतान्तर्गतत्वेन प्रतिपाद्यते । अनेन नारायणादिपञ्चात्मकव्यूहः प्राणादिपञ्चान्तर्गत एकः । तदनन्तर्गतश्चापरः । एतदभिप्रायेणेदं वाक्यं प्रवृत्तमित्यङ्गीकर्तव्यम् । अन्यथाऽन्यदेवतामन्त्राणामन्तर्यामिपरत्वस्य 'मन्त्रेष्वेतेषु सर्वेषु' (४-८४) इत्युरत्र वक्ष्यमाणत्वात् । 'उच्यते हरिरपी'इति विशेषोक्तिर्न स्यात् । अत एवात्र **साक्षादित्युक्तमित्युक्तं** भवति ।। ७५ ।।

ब्रह्माणी-भारतीमन्त्रौ

**तं.सा.** **ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ ।**
**मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ** ।। ७६ ।।

**तक.–** ब्रह्माणीभारत्योर्ध्यानोक्तिसौकर्याय युगपन्मन्त्रानुद्धरति— **ब्रह्माण्या इति ।।** 'गौरीर्मिमाय सलिलानि तक्षत्येकपदी' (ऋ.सं.१-१६४-१) इत्येषा ऋक्, 'यस्ते स्तनः शशयो यो मयो' इत्येषा च ऋक् दीर्घतमसा दृष्टौ श्रुतौ प्रसिद्धौ यथाक्रमं ब्रह्माण्या भारत्याश्च मन्त्रौ ज्ञातव्यावित्यर्थः ।। ७६ ।।

**अ.सं.–** सरस्वतीभारत्योः क्रमेण मन्त्रावाह– **ब्रह्माण्या इति ।। ब्रह्माण्याः** सरस्वस्याः भारत्याः अपि **गौरीः** 'गौरीर्मिमाय सलिलानि तक्षति' 'यस्ते स्तनः शशयो यो मयो भूः' (ऋ.सं.१-१६४-४९) इति श्रुतिप्रसिद्धौ मन्त्रौ क्रमेण ज्ञेयौ । **दीर्घतमोदृष्टौ** दीर्घतमोनामकऋषिणा दृष्टौ । तन्मन्त्रफलकथनम्– **सर्वाभीष्टेति** ।। ७६ ।।

**गु.दी.–** अथ ब्रह्माणीभारतीमन्त्रावाह— **ब्रह्माण्या इति ।।**

**गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।**

वाचका इत्युच्यत इत्यत आह— **उच्यत इति** ।। यद्यपि नारायणादिको हरिरेतैः प्राणादिशब्दैरुच्यत इत्युच्यते । तथापि न विरोधः । कुतः ? **साक्षात्** परममुख्यया वृत्त्या एतैः शब्दैः हरिरुच्यते । अवान्तरवृत्त्या प्राणादिशब्दैर्वायुरुच्यत इत्युक्तौ न विरोध इत्यर्थः ।। ७५ ।।

**अ.सं.–** वायोरेवापरानपि मन्त्रानाह– **प्राणाद्या इति** ।। उद्देशनमःशब्दयुक्ताः प्राणापानव्यानोदानसमानशब्दाख्याः पञ्चमन्त्राः । **तस्य देवस्य** वायोर्वाचका इत्यर्थः । **'प्राणाय नमः' 'अपानाय नमः'** इत्यादि पञ्चमन्त्रोद्धारप्रकारो द्रष्टव्यः । न्यासादि पूर्ववत् । एते प्राणादयः पञ्चशब्दाः विष्णोरपि मन्त्रा इत्याह– **उच्यत इति** ।। **एतैः** प्राणादिपञ्चमन्त्रैः । **नारायणादिकः** नारायण-वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यपञ्चरूपो हरिरपि **साक्षात्** प्राणापानाद्यनन्तर्गत एवोच्यते । न तु अन्यदेवतामन्त्रवत् अन्यदेवतान्तर्गतत्वेन प्रतिपाद्यते । अनेन नारायणादिपञ्चात्मकव्यूहः प्राणादिपञ्चान्तर्गत एकः । तदनन्तर्गतश्चापरः । एतदभिप्रायेण इदं वाक्यं प्रवृत्तमित्यङ्गीकर्तव्यम् । अन्यथा अन्यदेवतामन्त्राणां सर्वेषामप्यन्तर्यामिपरत्वेन भगवत्प्रतिपादकत्वसिद्धेरेतैरिति विशिष्योक्तेरयोगात्। अन्यदेवतामन्त्राणामन्तर्यामिपरत्वस्य च 'मन्त्रेष्वेतेषु सर्वेषु'(४-८४) इत्युत्तरत्र वक्ष्यमाणत्वात् । अत एवात्र साक्षादित्युक्तं भवति ।। ७५ ।।

**गु.दी.–** तस्य अपरानपि मन्त्रानाह— **प्राणाद्या इति** ।। उद्देशनमःशब्दयुताः प्राणादिशब्दा मन्त्रा इत्यर्थः । **'प्राणाय नमः'** इत्यादिमन्त्रप्रकारो द्रष्टव्यः । एतेषां वैष्णवमन्त्रत्वं चाह— **उच्यत इति** ।। **एतैः** पञ्चमन्त्रैर्नारायणवासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धरूपो हरिरपि **साक्षात्** परममुख्यतः उच्यते । यद्वा **साक्षात्** पृथक् स्थितः वाय्वनन्तर्गतः **नारायणादिकः** वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः, आदि-पदोक्ताः नारायणादिव्यूहः प्राणादिपञ्चकान्तर्गतः एकः । तदनन्तर्गतश्चापरः । एतद्विवक्षया चेदम् । अन्यथा सर्वमन्त्राणामप्यन्तर्यामिपरत्वेन एतैरिति विशिष्योक्त्ययोगात् । अन्तर्यामिपरत्वस्य 'मन्त्रेषु' (तं.सा.४-८४) इत्युत्तरत्र वक्ष्यमाणत्वाच्च । पूर्वमन्त्राणामप्यनन्तर्गततत्तद्रूपपरत्वेन पृथङ्मन्त्रत्वमेतन्न्यायेनैव ज्ञेयम् ।। ७५ ।।

**मङ्गाली–** वायोरेवापरानपि मन्त्रानाह– **प्राणाद्या इति ।।** उद्देशनमःशब्दयुक्ताः प्राणापानव्यानोदानसमानशब्दाख्याः पञ्चमन्त्राः **तस्य देवस्य** वायोर्वाचका इत्यर्थः। **'प्राणाय नमः'** **'अपानाय नमः'** इत्यादिपञ्चमन्त्रोद्धार प्रकारो द्रष्टव्यः । एते प्राणादयः पञ्च शब्दाः विष्णोरपि मन्त्रा इत्याह– **उच्यत इति ।। एतैः** प्राणादिपञ्चरूपो हरिरपि **साक्षात्प्राणाद्यनन्तर्गत** एव उच्यते । न त्वन्यदेवतामन्त्रवदन्यदेवतान्तर्गत्वेन प्रतिपाद्यते । अनेन नारायणादिपञ्चात्मकव्यूहः प्राणादिपञ्चान्तर्गत एकः। तदनन्तर्गतश्चापरः। एतदभिप्रायेणेदं वाक्यं प्रवृत्तमित्यङ्गीकर्तव्यम् । अन्यथाऽन्यदेवतामन्त्राणामन्तर्यामिपरत्वस्य 'मन्त्रेष्येतेषु सर्वेषु' (४-८४) इत्युरत्र वक्ष्यमाणत्वात् । 'उच्यते हरिरपी'इति विशेषोक्तिर्न स्यात्। अत एवात्र **साक्षादित्युक्तमित्युक्तं** भवति ।। ७५ ।।

ब्रह्माणी-भारतीमन्त्रौ

तं.सा. **ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ ।**
**मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ ।। ७६ ।।**

**तक.–** ब्रह्माणीभारत्योर्ध्यानोक्तिसौकर्याय युगपन्मन्त्रानुद्धरति— **ब्रह्माण्या इति ।।** 'गौरीर्मिमाय सलिलानि तक्षत्येकपदी' (ऋ.सं.१-१६४-१) इत्येषा ऋक्, 'यस्ते स्तनः शशयो यो मयो' इत्येषा च ऋक् दीर्घतमसा दृष्टौ श्रुतौ प्रसिद्धौ यथाक्रमं ब्रह्माण्या भारत्याश्च मन्त्रौ ज्ञातव्यावित्यर्थः ।। ७६ ।।

**अ.सं.–** सरस्वतीभारत्योः क्रमेण मन्त्रावाह– **ब्रह्माण्या इति ।। ब्रह्माण्याः** सरस्वस्याः भारत्याः अपि **गौरीः** 'गौरीर्मिमाय सलिलानि तक्षति' 'यस्ते स्तनः शशयो यो मयो भूः' (ऋ.सं.१-१६४-४९) इति श्रुतिप्रसिद्धौ मन्त्रौ क्रमेण ज्ञेयौ । **दीर्घतमोदृष्टौ** दीर्घतमोनामकऋषिणा दृष्टौ । तन्मन्त्रफलकथनम्– **सर्वाभीष्टेति** ।। ७६ ।।

**गु.दी.–** अथ ब्रह्माणीभारतीमन्त्रावाह— **ब्रह्माण्या इति ।।**

**गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।**

**अष्टापदी नवपदी बभूविषी सहस्राक्षरा परमे व्योमन् ।।**

(ऋ.सं.१-१६४-१) इति सारस्वती ऋक् ।

**यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।**
**यो रत्नधा वसुविद् यः सुचिः सरस्वति तमिह धातवेऽकः ।।**

(ऋ.सं.१-१६४-४९)

इति भारतीदेवत्या। इति श्रुतौ प्रसिद्धौ द्वौ मन्त्रौ दीर्घतमसा दृष्टौ सर्वाभीष्टप्रदावित्यर्थः।

गौरवर्णत्वात् जगद्गुरुब्रह्मभार्यात्वाद्वा **गौरीः** सरस्वती। **सलिलानि** सलिलोपलक्षितभूम्यादीनि पञ्चभूतानि **मिमाय** निर्ममे। तानि **तक्षति** ब्रह्माण्डादिकार्यरूपतया तनुत्वेन करोति। **एकपदी** एकपादात्मकछन्दोवद्धमन्त्राभिमानिनी। **द्विपदी** द्विपादात्मकछन्दोबद्धमन्त्राभिमानिनी। **चतुष्पदी** पादचतुष्टयात्मकछन्दोवद्धमन्त्राभिमानिनी। **सहस्राक्षरा** अनियताक्षरच्छन्दोबद्धमन्त्राभिमानिनी। **बभूविषी** भवितुमिच्छन्ती सती **परमे** सर्वोत्तमे विशेषेण गुणैरोतत्वात् **व्योमन्** व्योम्नि भगवद्विषये प्रतिपादकतया वर्तत इत्यर्थः।

हे **सरस्वति** भारति। ते यः **स्तनः शशयः** अतिशयितसुखानुभवकरः, शं सुखं तस्य शयः आश्रय इति वा। **मयोभूः** मयस्य सर्वप्रधानस्य हरेः भूः सन्निधानपात्रतया आश्रयः। यद्वा भिन्नं पदं, अवग्रहदर्शनात्। मयः सर्वप्रधानः भूः पूर्णः। 'भू वहौ' (धा.पा.१८४५) इति पठन्ति। त्वं येन स्तनेन **वार्याणि** पुत्रत्वेन वरयितुं स्वीकर्तुं योग्यानि **सर्वा** सर्वाणि गरुडशेषादिदेवजातानि **पुष्पसि** पुष्णासि रक्षसि। यः स्तनः रत्नानि धत्त इति **रत्नधाः**। नवरत्नमयमालाधरः। **वसु** आभरणरूपमेव विन्दति प्राप्नोतीति **वसुवित्** सुवर्णमयाभरणप्राप्तिमान्। **सुदत्रः** सुष्ठु पिबद्देवादिदन्तसम्बन्धवान्। सम्यग्दाता रक्षकश्चेति वा। तमिह देवेतरजीवजातविषये **धातवे** धातुं रक्षितुम्। **अकः** अकरोः करोषि करिष्यसि चेत्यर्थः। क्रियाप्रबन्धे लट्।। ७६ ।।

**मङ्गाली–** सरस्वतीभारत्योः क्रमेण मन्त्रावाह– **ब्रह्माण्या इति ।। ब्रह्माण्याः** सरस्वत्याः भारत्या अपि **गौरीः** 'गौरीर्मिमाय सलिलानि तक्षति',

(ऋ.सं.१-१६४-१) **यस्ते इति** 'यस्ते स्तनः शशयो मयो भूः' (ऋ.सं.१-१६४-४९) इति **श्रुतौ** श्रुतिप्रसिद्धौ मन्त्रौ क्रमेण ज्ञेयौ । **दीर्घतमोदृष्टौ** दीर्घतमोनामकऋषिणा दृष्टौ । तन्मन्त्रशक्तिकथनं- **सर्वाभीष्टेति** ।। ७० ।।

**ब्रह्माणीभारत्योः ध्यानम्**

**तं.सा.** **उद्यद्दिवाकरसमूहनिभां स्वभर्तु-**
**रङ्के(ङ्क) स्थितामभयसद्वरबाहुयुग्माम् ।**
**मुद्रां च तत्त्वदृशये वरपुस्तकं च**
**दोर्युग्मकेन दधतीं स्मरताऽत्मविद्याम्** ।। ७७ ।।

**त.क.**– युगपद्ध्यानमाह— **उद्यदिति** ।। **स्वभर्तुः** ब्रह्मणो वायोश्च । **अभयेति** तन्मुद्रोच्यते । सत्त्वविशेषणेन वरस्य अमोघत्वं तदपि सज्जनान् प्रत्येवेति सूचयति । तत्त्वदृशये मुद्रामित्यनेन ज्ञानमुद्रोच्यते । पुस्तकस्य वरत्वम् आत्मविद्यालिपिवत्त्वम् । अनेन दक्षोर्ध्वकरेऽभयमुद्रा, वामोर्ध्वकरे वरमुद्रा, दक्षाधःकरे ज्ञानमुद्रा, वामाधःकरे पुस्तकश्चेति उभयोर्बाहुचतुष्टयवत्त्वमुक्तम् । **आत्मविद्यां** ब्रह्मविद्याभिमानिनीम् । स्मरतेति शिष्यान् प्रति बोधनम् ।। ७७ ।।

**अ.सं.**— उभयोर्ध्यानमाह– **उद्यदिति** ।। **तत्त्वदृशये** तत्त्वज्ञानार्थं **मुद्रां** ज्ञानमुद्रामिति यावत् । **वरपुस्तकं** उत्तमपुस्तकं **आत्मविद्यां** परमात्मप्रतिपादक-विद्यादेवताम् सरस्वतीं भारतीं च स्मरत ध्यायतेत्यर्थः ।। ७७ ।।

**गु.दी.**— ध्यानमाह— **उद्यदिति** ।। अभयसहितः सन् वरः यस्य तत् अभयसद्वरम् । अभयसद्वरं बाहुयुग्मं यस्याः सा ताम् **अभयसद्वरबाहुयुग्माम् ।** अभयमुद्रावरमुद्राभ्यां संयुतबाहुद्वयामिति यावत् । **तत्त्वदृशये** स्वोपासकानां तत्त्वज्ञानाय **मुद्रां** ज्ञानमुद्राम् । **वरपुस्तकं** उत्तमपुस्तकं च **दोर्युग्मकेन** बाहुद्वयेन दधतीम् । **आत्मविद्यां** परमात्मप्रतिपादकविद्यादेवतां । आत्मनः जीवसमूहस्य विद्या यया सा तथा ताम् । भगवद्विषयकज्ञानदात्रीमिति वा । आत्मनो विद्या यस्यां सेति भगवद्विद्यायुतामिति वा । सरस्वतीं भारतीं स्मरतेत्यर्थः ।। ७७ ।।

**मङ्गाली**– उभयोर्ध्यानमाह– **उद्यदिति** ।। **तत्त्वदृशये** तत्त्वज्ञानार्थम् । मुद्रां

ज्ञानमुद्रामिति यावत् । **वरपुस्तकं** उत्तमपुस्तकम् । **आत्मविद्यां** परमात्मप्रतिपादकविद्यादेवतां सरस्वतीं भारतीं च स्मरत ध्यायतेत्यर्थः । अत्रैकाकापि ऋगुभयोर्मन्त्र इति केचित् ।। ७७ ।।

ब्रह्माणीभारत्योर्मन्त्रान्तरम्

**तं.सा. पादैर्व्यस्तैः समस्तैश्च तदङ्गानि विदो विदुः ।**
**स्वयमुद्देशनत्यन्तौ मन्त्रौ द्वावपरौ तयोः ।। ७८ ।।**

**त.क.—** अङ्गन्यासमाह— **पादैरिति ।।** पूर्वोक्तऋग्गतैः चतुर्भिः पादैः, समस्तैश्च पादैरित्यनेन पञ्चाङ्गन्यासः । तयोर्मन्त्रान्तरं युगपदुद्धरति— **स्वयमिति ।।** स्वयंशब्देनोपस्थितत्वात्, प्राधान्याच्च ब्रह्माणीभारतीशब्दौ । **'ब्रह्माण्यै नमः' 'भारत्यै नमः'** इति द्वौ मन्त्रावपरौ ज्ञातव्यावित्यर्थः ।। ७८ ।।

**अ.सं.—** उभयोरङ्गआह– **पादैरिति ।।** तत्तन्मन्त्रपादैरित्यर्थः । **अङ्गानि** पञ्चाङ्गानि । अनेन एकैकैव ऋक् जप्या न तु सूक्तमिति ज्ञायते । आद्या जगती । द्वितीया त्रिष्टुप् । सरस्वतीभारत्योः पञ्चाक्षरमन्त्रावाह– **स्वयमिति ।। स्वयं** ब्रह्माणीभारतीशब्दौ । **'ब्रह्माण्यै नमः' 'भारत्यै नमः'** इति मन्त्रौ ज्ञेयौ । अत्र वर्णैः पञ्चाङ्गानि ज्ञेयानि । ध्यानं तु पूर्ववत् ।। ७८ ।।

**गु.दी.—** अङ्गन्यासं वक्ति– **पादैरिति ।। तयोः** सरस्वतीभारतीमन्त्रयोः अङ्गानि पञ्चाङ्गानि । तयोरेव पञ्चाक्षरमन्त्रावाह— **स्वयमिति ।।** स्ववाचकौ ब्रह्माणीभारतीशब्दावित्यर्थः । चतुर्थीनमःशब्दान्तौ **तयोः** ब्रह्माणीभारत्योः अपरौ मन्त्रौ । तथा च **'ब्रह्माण्यै नमः' 'भारत्यै नमः'** इति मन्त्रोद्धारः । ब्रह्मभार्यात्वाद्ब्रह्माणी । तस्यै नमोऽस्तु । ज्ञानप्रकाशरमणततत्वात् भरतो विष्णुर्वायुश्च । वेदादिभिः प्रतिपादकतया तत्सम्बन्धित्वात्, रतत्वाद्भात्मके विष्णौ भरतो वायुस्तस्येयमिति वा भारती । तस्यै नम इति मन्त्रद्वयार्थः ।।७८।।

**मङ्गाली—** उभयोरङ्गमाह– **पादैरिति ।।** तत्तन्मन्त्रपादैरित्यर्थः । **अङ्गानि**

पञ्चाङ्गानि। अनेनैकैकऋक् जप्या न तु सूक्तमिति ज्ञायते। आद्या जगती, द्वितीया त्रिष्टुप्। सरस्वतीभारत्योः पञ्चाक्षरमन्त्रावाह- **स्वयमिति**।। **स्वयं** ब्रह्माणी-भारतीशब्दौ। **'ब्रह्माण्यौ नमः'** **'भारत्यौ नमः'** इति मन्त्रौ ज्ञेयौ। अत्र वर्णैः पञ्चाङ्गानीत्याहुः। ध्यानं पूर्ववत्।। ७८।।

विष्ण्वादिभारत्यन्तमन्त्राणां शिवादिमान्त्रापेक्षयाऽतिशयत्वप्रदर्शनम्

तं.सा. **मन्त्रा एते हरेः प्रीतिदायकाः सर्वकामदाः।**
**इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता।**
**गुरुर्ब्रह्माऽथ वायुर्वा विद्या देव्यौ प्रकीर्तिते ।। ७९ ।।**

**तस्मादेते प्रिया विष्णोरन्तरङ्गतया सदा।**
**ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः प्रीतिमभीप्सता ।। ८० ।।**

**त.क.**– एतत्पर्यन्तमुद्धृतानां विष्ण्वादिभारत्यन्तमन्त्राणामुद्धरिष्यमाणशिवादिमन्त्रेभ्योऽत्यादरेण जप्यत्वरूपं माहात्म्यं वक्तुमाह— **मन्त्रा इति**।। यतः सर्वकामदा अतो हरिप्रीतिदायकाः। हरिप्रीतिदायकत्वे हेत्वन्तरमाह— **इष्टमिति**।। हरिरेतेषां देवतेत्यर्थः। कथं तर्हि लक्ष्म्यादीनां देवतात्वमत आह– **साक्षादिति**।। **भाग्यं** विद्याभ्यासोपयुक्तान्नवस्त्रादिक्षमैश्वर्यम्। तद्देवता लक्ष्मीरित्यर्थः। **ब्रह्मा** वायुश्चोपदेशकः। **देव्यौ** ब्रह्माणीभारत्यौ अभ्यस्यमानविद्यातज्जन्यज्ञानाभिमानिन्यौ। शिवादयोऽपि विष्णोः प्रिया एवेत्यत उक्तम्— **अन्तरङ्गतया प्रिया इति**।। कदाचिद्बलभद्रादेस्तदप्यस्तीत्यत उक्तम्— **सदेति**।। यस्मादेवं तस्मादेते लक्ष्म्याद्या पञ्च सदा ज्ञेयाः पूज्याश्च। यस्मादेवं तदेवं तस्मादेते मन्त्रा अतिशयेन जप्या इति शेषः। यद्यपि शैवादयो मन्त्रा अपि सन्ति। तथापि न ते अत्यावश्यकाः। तत्प्रतिपाद्यानां शिवादीनां देवतात्वभाग्यदेवतात्वगुरुत्वविद्याभिमानित्वानामभावात्। तदपि कुत इति चेन्न। विष्णुव्यतिरिक्तस्य सर्वस्यापि मुख्यदेवतात्वानङ्गीकारात्। साक्षाद्भाग्यदेवतात्वानङ्गीकाराच्च। लक्ष्म्यादयस्तु साक्षाद्भाग्यदेवतादय एव। तदपि तेषां

विष्ण्वन्तरङ्गप्रियत्वात्। अत एवैते मन्त्रा हरेः प्रीतिदायकाः। अत एवात्यावश्यका इति भावः ॥ ७९,८० ॥

**अ.सं.–** लक्ष्म्यादिमन्त्राणामन्यदेवतामन्त्रत्वादत्र कथनमनुपपन्नमित्यत आह– **मन्त्रा इति ॥** हरेः **प्रीतिदायकाः** अधिकारिणां विष्णुप्रसादजनकाः। विष्णुप्रसादे च सति **सर्वकामदाः** ऐहिकामुष्मिकाभीष्टदाः। 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्युक्तेः। लक्ष्म्यादिमन्त्राः हरिप्रीतिजननद्वारा सर्वपुरुषार्थप्रदत्वादत्र कथिता इति भावः। ननु लक्ष्म्यादिपूजया हरिप्रीतिर्भवतीत्येतन्न युज्यते। न ह्यन्यपूजनेनान्यप्रीतिर्दृष्टेत्यतोः राजादौ तथा दृष्टमित्यभिप्रेत्य लक्ष्म्यादीनामन्तरङ्गत्वमाह– **इष्टमिति ॥** हरिः **साक्षादिष्टं दैवं** सर्वेषामिष्टप्रददेवता न तु परम्परया। लक्ष्मीः **भाग्यदेवता** अविशेषेण सर्वेषामपि भाग्यप्रददेवता। ब्रह्मा **गुरुः** मुक्तियोग्यानां तत्त्वज्ञानदः। **वा** यथा ब्रह्मा गुरुः तथा वायुरपि गुरुः। सरस्वतीभारत्यौ **विद्यादेव्यौ** सर्वविद्याप्रतिपादकदेवते। यस्मादेते लक्ष्म्यादयः पञ्च विष्णोः इष्टदेवता अन्तरङ्गतया सदा प्रियाः। तस्माद्विष्णोः प्रीति**मभीप्सता** इच्छता पुरुषेण **एते** लक्ष्म्यादयः ज्ञेयाः प्रपूज्याश्च। तत्तन्मन्त्रजपेन इतरदेवापेक्षयाऽतिशयेन पूज्याः। राजप्रीतिकामिनां राजान्तरङ्गस्त्रीपुत्रादिपूजया राजप्रीतेर्दर्शनादिति भावः। यद्वा शिवादिमन्त्रान् वक्तुं तेषामुक्तमन्त्रसाम्यप्रतीतिं वारयितुमाह– **मन्त्रा इति ॥** प्रीतिदायकाः विशेषेणेति शेषः। प्रीतिदायकत्वं विवृणोति– **इष्टमित्यादिना** ॥ ७९,८० ॥

**गु.दी.—** शिवादिमन्त्रान् वक्तुं तेषामुक्तमन्त्रसाम्यप्रतीतिं निवारयितुमाह– **मन्त्रा इति ॥** प्रीतिदायकाः। विशेषेणेति शेषः। नन्वेतदयुक्तम्। अन्यपूजयाऽन्यप्रीत्यदृष्टेरित्याशङ्कायां राजादौ प्रेक्षावत्पुरुषे दृष्टमित्याशयेन हिरण्यगर्भादीनामन्तरङ्गत्वं वदन्नुपासनाप्रकारं सूचयति— **इष्टमिति ॥** हरिः **साक्षादिष्टं** मुख्येष्टम्। **दैवं** स्तुत्यं लक्ष्मीः भाग्यस्य देवता। ब्रह्मा अथवा वायुः गुरुः सर्वेषामिति शेषः। **देव्यौ** ब्रह्माणीभारत्यौ **विद्या** विद्याभिमानिन्यौ प्रकीर्तिते। 'विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात्' (ब्र.सू.भा.उदा.२-३-१५) इत्यादाविव अभिमान्यभिमन्यमानयोरैक्योक्तेरिति ज्ञेयम्। तस्मादेते

पञ्चान्तरङ्गतया सदा विष्णोः प्रियाः । तस्माद्विष्णोः प्रीतिमभीप्सता विष्णुप्रियत्वेन तदङ्गत्वेन च ज्ञेयाः पूज्याश्च ।

गुरुर्ब्रह्माऽस्य जगतो दैवं विष्णुः सनातनम् ।
इत्येवोपासनं कार्यं नान्यथा तु कथञ्चनेति ।। वाराहवचनात् ।

(भा.ता.१०-२७-१५)

इदमुक्तं भवति । विष्णुभक्तिस्तावत्कर्तव्येति सकलसम्मतम् । मुक्तिहेतुत्वात् । सा च तद्भक्तभक्त्यैव साङ्गा । नान्यथा । विमतः भगवद्भक्तभक्तिमान् भगवद्भक्त्या पुरुषार्थभाक्त्वात्, यो यद्भक्त्या पुरुषार्थभागसौ तद्भक्तभक्तो दृष्टः । यथा राजसखभक्तो अमात्य इत्यनुमानात् । सा च भक्तभक्तिः यस्मिन्नधिकविष्णुप्रसादः तस्मिन्नधिका । यत्र न्यूनस्तत्राल्पेति तथाऽनुष्ठान एव स्वस्मिन्नीशप्रसादोत्पत्तेः राजादौ दर्शनात् । तथा च प्रयोगः– ईश्वरः स्वप्रीत्यनुसारेण स्वभक्तेषु भक्ते प्रसीदति प्रेक्षावत्पुरुषत्वाद्राजवदिति । यथोक्तं—

तारतम्येन तेष्वद्धा भक्तिर्दृष्टानुसारतः ।
विष्णुप्रसादानुसारात्कार्या दोषस्तदन्यथा ।
तत्प्रीत्यनुसृतौ प्रीतिः लोकेष्वद्धैव दृश्यते ।। इति ।। ७९,८० ।।

(अनु.३-४-२४४)

**मङ्काली–** लक्ष्म्यादिमन्त्राणामन्यदेवतामन्त्रत्वादत्र कथनमनुपपन्नमित्यत आह– **मन्त्रा इति** ।। हरेः प्रीतिदायकाः। अधिकारिणां विष्णुप्रसादजनकाः । विष्णुप्रसादे सति **सर्वकामदाः** ऐहिकामुष्मिकाभीष्टदाः । 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्युक्तेः । अतोऽत्रान्यदेवतामन्त्राः कथिता इति भावः । अन्यमन्त्रजपादिना हरिप्रीतिः कथमित्यत आह– **इष्टमिति** ।। हरिस्साक्षात् सर्वेषा**मिष्टं दैवं** इष्टप्रददेवता न तु परंपरया । लक्ष्मीः **भाग्यदेवता** अविशेषेण सर्वेषामपि भाग्यप्रददेवता । ब्रह्मा **गुरुः** मुक्तियोग्यानां तत्वज्ञानप्रदः । **वा** यथा ब्रह्मा गुरुः तथा वायुः । अथ वायुरपि गुरुः, सरस्वतीभारत्यौ **विद्यादेव्यौ** सर्वेविद्याप्रददेवते विद्याभिमानि देवते इति वा । यस्मादेते लक्ष्म्यादयः पञ्च विष्णोरिष्टदेवताया अन्तरङ्गतया सदा प्रियाः तस्माद्विष्णोः प्रीतिम**भीप्सता** इच्छता

पुरुषेण लक्ष्म्यादयो ज्ञेयाः। तत्तन्मन्त्रार्थत्वेनेति शेषः। प्रपूज्याश्च तत्तन्मन्त्रजपेनेतरदेवापेक्षयाऽतिशयेन पूज्याः राजान्तरङ्गस्त्रीपुत्रादिपूजया राजप्रीतिवत्। भगवदन्तरङ्गत्वाल्लक्ष्म्यादीनां तज्जपादिना भगवत्प्रीतियुक्तेति भावः। यद्वा शिवादिमन्त्रान्वक्तुं तेषामुक्तमन्त्रसाम्यप्रतीतिं वारयितुं आह– **मन्त्रा इति ।।** प्रीतिदायकाः विशेषेणेति शेषः । प्रीतिदायकत्वं विवृणोति– **इष्टमित्यादिना ।।** वाराहादिमन्त्रजपस्य कर्तव्यत्वे हेतुमाह– **इष्टमितीति केचित् ।। ७७,८० ।।**

शिवपञ्चाक्षरमन्त्रः

**तं.सा. उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु ।। ८१ ।।**

**वर्णैरेतैस्तदङ्गानि वामदेवो मुनिः स्मृतः ।**
**पङ्क्ति(ङ्क्तिः)शब्दार्थविज्ञाने न हि छन्दसि संशयः ।। ८२ ।।**

**त.क.–** प्रणवं नतिर्मन्वक् च शुभदं च त्रिविक्रमम् ।
वरुणं गोपनं वायुमादिमुद्धृत्य मन्त्रवित् ।
मनुः पञ्चाक्षरः कार्यः....... ।।

इति वचनं व्याकुर्वन् शिवपञ्चाक्षरमुद्धरति— **उद्देशेति ।।** उद्देशश्चतुर्थी। नतिर्नमश्शब्दः। ताभ्यां युक् स्वयं शिवशब्द एव शिवमन्त्र इत्यर्थः। **'नमः शिवाय'** इति मन्त्रो निष्पद्यते।

प्रणवः ॐकारः पृथगुच्चारणीयः। नतिर्नमश्शब्दः। अन्वक् तदनन्तरम्। शुभदः शकारः। 'शकारश्शुभदो लक्ष्मीः' इत्युक्तेः। ततस्त्रिविक्रम इकारः। 'स्यादिकारस्त्रिविक्रमः' इत्युक्तेः। ततो वरुणो वकारः। 'वकारो वरुणः कुम्भः' इत्युक्तेः। ततो गोपन आकारः। 'आदिदेवो गोपनश्च' इत्युक्तेः। ततो वायुर्यकारः। 'यकारो वायुः' इत्युक्तेः। तत आदिरकारः, अचामादित्वादिति वचनार्थो ज्ञातव्यः। यद्यपि 'वैधरं नृहरिं मायां प्रचण्डं मधुसूदनम्' इत्यादिना 'नमः शिवाय दक्षिणामूर्तये स्वाहा' इत्यादिरूपमन्त्रान्तराणि शास्त्रेषूद्धृतानि।

तथाप्ययं पञ्चाक्षरो मन्त्रः कलावप्यतिरोहितवीर्य इति विशेष इति तुशब्देनाचष्टे ॥ ८१ ॥

गोपतिं विष्णुसहितमनुस्वारं समुद्धरेत् ।
बीजमेतच्चतुर्वक्त्र षडङ्गानामुदाहरेत् ।

इति वचने गोपतिः शकारः । 'शकारो वित्तवर्धनः' इत्युक्तेः । वित्तं गौः । तद्वर्धनः तद्वर्धनात् तत्पतिरिति व्याख्यानात् । विष्णुरकारः अनुस्वारश्चेत्येतत्त्रयं संश्लिष्य उच्चरितं 'शम्' इति पञ्चाक्षरमन्त्रस्य बीजं भवति । तच्च षडङ्गनां न्यासकाले उदाहरेदित्युक्तमिति मनसि निधाय षडङ्गन्यासमाह— **वर्णैरतैरिति ॥** बीजसहितैर्वर्णैरित्यर्थः । 'शं हृदयाय नमः । नं शिरसे स्वाहा' इत्यादिर्न्यास-प्रकारः । यद्वा पञ्चाङ्गन्यास एवानेनोच्यते । वचनं तु पक्षान्तरमाश्रित्य प्रवृत्तम् । 'उपमन्युर्मनुः' इति वचनानुसारात् ऋषिमाह— **वामदेव इति ॥** उपमन्युरिति तस्यैव नामान्तरमिति भावः । यद्वा वामदेवादन्य उपमन्युरपि ऋषिरेव । एकमन्त्रस्य बहुदृष्टत्वसम्भवात् । तथा च पक्षान्तरमेवास्माभिरुक्तमिति भावः । छन्दः किमिति जिज्ञासायां तत्र सन्देहाभावात् न वक्तव्यमित्याह— **पङ्क्तीति ॥** पंक्तिशब्दार्थः पञ्चत्वसङ्ख्याविशिष्टः । 'पांक्तं वा इदं सर्वम्' (तैत्त.उ.१-१८) इत्यत्र तथा व्याख्यानात् । 'पञ्चपदा पंक्तिः' इति हि पंक्तिच्छन्दोलक्षणम् । अयं पञ्चाक्षरमन्त्रः एकैकाक्षरैरेकैकपादत्वविवक्षया पञ्चपादः । तेन पंक्तिरेवास्य च्छन्द इति विज्ञानात् छन्दसि संशयो नास्तीत्यर्थः । 'छन्दो गायत्रमुच्यते' इति वचनं तु न्यासकाले बीजसाहित्येन त्रिपदत्वादेकैकं पदमेकैकः पाद इति त्रिपदा गायत्रीत्युक्त-लक्षणसंभवात् गायत्रीत्वमपि सुसंपादमित्यभिप्रायेण पक्षान्तराभिप्रायमिति भावः ॥ ८२ ॥

**अ.सं.**— इदानीं पञ्चाक्षरशिवमन्त्रमाह— **उद्देश इति॥ उद्देशनतियुक्** चतुर्थीनमःशब्दयुतः । **स्वयमेव** स्ववाचकशिवशब्द एव शिवस्य मन्त्र इति सम्बन्धः । **'नमः शिवाय'** इति मन्त्र उद्धृतो भवति । अङ्गन्यासमाह— **वर्णैरिति ॥ एतैः** मन्त्रगतैः **तदङ्गानि** तस्य मन्त्रस्य अङ्गानि पञ्चाङ्गानि । 'नं हृदयाय नमः'

इत्यादि न्यासप्रकारः । वामदेवो **मुनिः** ऋषिः । छन्द आह– **पङ्क्तिरिति ।।** च्छन्द इति शेषः । पञ्चाक्षरमन्त्रस्य पङ्क्तिछन्द इति सुज्ञानायोक्तम् । वस्तुतस्तु छन्दो न वक्तव्यमेव । छन्दोलक्षणज्ञानवतोऽक्षरगणनया च्छन्दोज्ञानस्य सर्वत्रापि सुलभत्वादित्याह— **शब्दार्थेति ।।** पञ्चाक्षरोऽयं शब्दः षडक्षरोऽयं शब्द इत्यादि-प्रकारेणाक्षरसङ्ख्यापूर्वकं मन्त्रात्मकशब्दाख्यार्थज्ञाने सति तत्तन्मन्त्रगतवर्णसङ्ख्या-ज्ञाने सतीति यावत् । छन्दसि संशयो न हि भवतीत्यर्थः । उक्तं चैतत् पुरस्तात्– **'वर्णभेदतः च्छन्दो ज्ञेयम्'**(४-६) इति । यद्वा शिवपञ्चाक्षरमन्त्रजपफलमाह– **शब्दार्थेति ।।** छन्दस विषये शब्दार्थविज्ञाने । वैदिकशब्दार्थज्ञानविषये इति यावत् । संशयो न हि भवतीत्यर्थः । शिवपञ्चाक्षरमन्त्रजपेन वेदार्थविषये संशयनिवृत्तिर्भवतीति भावः ।।

पङ्क्तिशब्दार्थेति पङ्क्तिशब्दस्य समासावयवत्वेन पाठे तु, अस्य शिवपञ्चाक्षर-मन्त्रस्य च्छन्दः कुतो नोक्तमित्यत आह–**पङ्क्तीति ।।** च्छन्दोवाचकपङ्क्तिशब्दस्यार्थः पञ्चाक्षरत्वम् । 'पञ्चाक्षरा पङ्क्तिः' इति तैत्तरीयश्रुतेः । तस्य विज्ञाने सति पङ्क्तिः च्छन्दोलक्षणज्ञानवतः इति यावत् । च्छन्दसि शिवपञ्चाक्षरमन्त्रस्य च्छन्दोविषये संशयो नास्ति । अक्षरगणनयाऽस्य मन्त्रस्य पङ्क्तिः च्छन्द इति निश्चितत्वात् इति हि शब्देनाह । अतो नोक्तमिति भावः ।। ८१,८२ ।।

**गु.दी.**— इदानीं पञ्चाक्षरं शिवमन्त्रमाह— **उद्देशेति ।।** चतुर्थीनमःशब्दाभ्यां युतः **स्वयं** स्ववाचकशिवशब्द एव । तथा च **'शिवाय नमः'** इति मन्त्रनिष्पत्तिः । मङ्गलरूपत्वाच्छिवाय नम इत्यर्थः । न्यासमाह— **वर्णैरिति ।।** तस्य मन्त्रस्य पञ्चाङ्गानि । अस्य मन्त्रस्य छन्द आह— **पङ्क्तिरिति ।।** छन्द इति शेषः । इदं च सुज्ञानायोक्तम् । वस्तुतस्तु अक्षरगणनया छन्दोज्ञानं सर्वत्रापि सुकरमित्याशयेनाह– **शब्दार्थविज्ञान इति ।।** शब्दरूपार्थज्ञान इत्यर्थः । पञ्चाक्षरोऽयं शब्दः षडक्षरोऽयं शब्द इत्यादिप्रकारेण अक्षरसङ्ख्यापूर्वकं शब्दस्वरूपज्ञाने संशयो नास्तीति भावः । यद्वा शिवमन्त्रस्य फलमाह— **शब्दार्थेति ।।** विषयसप्तमीयम् । वेदे शब्दार्थप्रतिज्ञाने वैदिकशब्दार्थज्ञानविषये संशयो न भवतीत्यर्थः । 'पङ्क्तिशब्दार्थविज्ञाने' इति पाठे 'पञ्चाक्षरा पङ्क्ति' इति

तैत्तरेयशाखोक्तपङ्क्तिशब्दार्थविज्ञाने सति शिवमन्त्रस्य छन्दसि विषये न सन्देह इति भावः ।। ८१,८२ ।।

**मङ्गाली—** इदानीं पञ्चाक्षरशिवमन्त्रमाह– **उद्देशेति ।। उद्देशनतियुक्** चतुर्थीनमःशब्दयुतः । **स्वयमेव** स्ववाचकशिवशब्द एव । शिवस्य मन्त्र इति सम्बन्धः । **'नमश्शिवाय'** इति मन्त्रः उद्धृतो भवति । अङ्गन्यासमाह– **वर्णैरिति ।।** एतैर्मन्त्रगतैः **तदङ्गानि** तस्य मन्त्रस्याङ्गानि पञ्चाङ्गानि 'नं हृदयाय नमः' इत्यादिन्यासप्रकारः । वामदेवो **मुनिः** ऋषिः । छन्द आह– **पङ्क्तिरिति ।।** छन्द इति शेषः । पञ्चाक्षरमन्त्रस्य पङ्क्तिः छन्द इति सुज्ञानायोक्तम् । वस्तुतस्तु छन्दो न वक्तव्यमेव । छन्दोलक्षणज्ञानवतोऽक्षरगणनया छन्दोज्ञानस्य सर्वत्रापि सुलभत्वादित्याह– **शब्दार्थेति ।।** पञ्चाक्षरोऽयं मन्त्रः षडक्षरोऽयं मन्त्र इत्यादिप्रकारेणाक्षरसङ्ख्यापूर्वकं शब्दरूपार्थज्ञाने सति छन्दसि संशयो नास्तीति भावः । उक्तं चैतत् पुरस्तात् 'वर्णभेदतः छन्दो ज्ञेयं' (४-६) इति । यद्वा तैत्तरीयशाखागतपञ्चाक्षरो– **पङ्क्तिरिति ।।** वाक्यार्थविज्ञाने सतीत्यर्थः । 'पङ्क्तिशब्दार्थ' इति पाठे तु शिवपञ्चाक्षरे छन्दसि संशयो नास्ति । कुत इत्यत उक्तम्– **पङ्क्तीति ।।** पङ्क्तिशब्दस्य योऽर्थः चत्वारिंशदक्षरत्वं तस्य विज्ञाने सतीत्यर्थः । चत्वारिंशदक्षररूपपङ्क्तिछन्दसोऽष्टमभागस्यापि पङ्क्तिछन्दस्त्वात् । शिवपञ्चाक्षरस्यापि तदष्टमभागरूपत्वेन न छन्दोविषये संशय इति भावः । यद्वा पञ्चाक्षरापङ्क्तिरिति श्रुत्युक्तपङ्क्तिशब्दार्थविज्ञाने सतीत्यर्थः । अथवा शिवपञ्चाक्षर-मन्त्रजपफलमाह– **शब्दार्थेति ।।** छन्दसविषये शब्दार्थविज्ञाने वैदिकशब्दार्थ-ज्ञानविषय इति यावत् । संशयो न हि भवतीत्यर्थः । शिवपञ्चाक्षरमन्त्रजपेन वेदवेदार्थविषये संशयनिवृत्तिर्भवतीति भावः ।। ७२ ।।

**तं.सा.** **ध्येयः पञ्चमुखो रुद्रः स्फटिकामलकान्तिमान् ।**
**विद्युच्छुभ्रासितरजः श्यामान्यस्य मुखानि तु ।। ८३ ।।**

**जटावबद्धेन्दुकलः प्रियायुङ्नागभूषणः ।**

**त.क.**—..........अथो ध्यानमीशानस्य ब्रवीमि ते ।

कुन्देन्दुमुक्ताशङ्खाभं सर्वाकल्पपरिष्कृतम् ॥

वैय्याघ्रचर्मवसनं जटामण्डलमण्डितम् ।

नासाग्रन्यस्तनयनं शशिखण्डविराजितम् ॥

प्रसन्नवदनं देवं चतुर्भुजमभीष्टदम् ।

वामजानुनि विन्यस्तवामेतरपदाम्बुजम् ॥

स्फाटिकामक्षमालां च बिभ्राणं दक्षिणे करे ।

वामे करेऽम्बुजं हस्ते धृतविज्ञानपुस्तकम् ।

दर्शयन्तं ज्ञानमुद्रां महर्षिगणसेवितम् ॥

इति वचनार्थं संगृह्णन् ध्यानप्रकारमाह– **ध्येय इति ॥** स्फटिकामलकान्तिमानित्यनेन कुन्देन्दुमुक्ताशङ्खानामाभेवाभा यस्य स इत्युक्तस्य तात्पर्यमुक्तम् । विद्युदिति विद्युद्वर्णमुच्यते । असितं सितेतरम् । रजः रक्तम् । श्यामम् । द्वन्द्वश्च समासः । तेन पञ्चानां मुखानां पञ्चवर्णा उक्ता वेदितव्याः । जटायामवबद्धेन्दुकला यस्येति विग्रहेण जटामण्डितमिति । शशिखण्डविराजितमिति च संगृहीतम् । चशब्देन चतुर्भुजम् । तेषु च यथाक्रममक्षमाला दक्षोर्ध्वकरे, वामोर्ध्वकरेऽम्बुजं, दक्षाधःकरे विज्ञानसाधनं पुस्तकं, वामाधःकरे ज्ञानमुद्रा इत्यादिलक्षणान्तरं सूचयति ॥ ८३ ॥

**अ.सं.**— ध्यानप्रकारमाह– **ध्येय इति ॥** स्पटिकवत् धवलकान्तिमान् । पञ्चानां मुखानां वर्णानाह– **विद्युदिति ॥ अस्य** पञ्चमुखस्य रुद्रस्य पञ्चमुखानि च विद्युदादिवर्णानि विद्युद्वर्णोपेतं, शुभ्रं धवलम्, असितं कृष्णं, रजः रक्तवर्णं श्यामवर्णं चेति । **जटावबद्धेन्दुकलः** जटया सम्बद्धार्धचन्द्रः । **नागभूषणः** सर्पभूषणः । अत्र 'नमः शिवाय' इत्येव मन्त्रोद्धारः । न तु शिवाय नम इति । तदुक्तं सारसङ्ग्रहे–

पञ्चमस्य तु वर्गस्य पञ्चमं प्रथमं भवेत् ।

षड्वर्गस्यान्तिमो वर्णः प्रथमान्त्यसमन्वितः ॥

द्वितीयवर्णमाख्यातमष्टमस्याद्यमक्षरम् ।
प्रथमस्य तृतीयार्णसमेतं च तृतीयकम् ।।

चतुर्थसप्तमस्याद्यद्वितीयार्णसमन्वितम् ।
चतुर्थवर्णो मन्त्रस्य सप्तमाद्यं तु पञ्चमम् ।।

एष पञ्चाक्षरो मन्त्रः प्रणवाद्यः षडक्षरः ।
प्रणवस्तु परब्रह्मबोधकः समुदाहृतः ।।

ऋषिरुक्तो वामदेवः पङ्क्तिः च्छन्द उदाहृतम् ।
सदाशिवो देवताऽस्य मन्त्रस्य परिकीर्तितः ।।
षडङ्गानि मनोर्वर्णैर्जातियुक्तानि कल्पयेत् ।। इति ।

जातयस्तु नमः स्वाहेत्यादयः पूर्वोक्ताः ज्ञेयाः। अकारादिपञ्चाशद्वर्णानामष्टवर्गत्वात्तत्प्रकारेण तन्मन्त्रोद्धारो द्रष्टव्यः। तथा हि– पञ्चमवर्गस्य तकारादिवर्गस्य पञ्चमं पञ्चमाक्षरं नकारः । प्रथमं शिवपञ्चाक्षरमन्त्रस्य आद्याक्षरं भवेत्। ततः षड्वर्गस्य पवर्गस्य अन्तिमः पञ्चमो वर्णः मकारः। प्रथमान्त्यसमन्वितः प्रथमस्य अकारादिप्रथमवर्गस्य अन्त्येन अः इति षोडशेन स्वरेण समन्वितः सन् मन्त्रस्य द्वितीयवर्णमाख्यातम् । अष्टमस्य शकारादिवर्गस्य आद्यमक्षरं शकारः । प्रथमस्याकारादिवर्गस्य तृतीयार्णसमेतं तृतीयार्णेन इकारेण समेतं सत् तृतीयं मन्त्रस्य तृतीयो वर्णो भवति । ततः सप्तमस्य यादिवर्गस्य चतुर्थमक्षरं वकारः। आद्यद्वितीयार्णसमन्वितम्। आद्यवर्गस्य द्वितीयार्णेन आकारेण समन्वितं सत् मन्त्रस्य चतुर्थो वर्णो भवति। सप्तमाद्यं सप्तमस्य यादिवर्गस्य आद्यमक्षरं यकारः पञ्चमम् । मन्त्रस्य पञ्चमवर्णो भवति । एवञ्च 'नमः शिवाय' इति शिवपञ्चाक्षरमन्त्र उद्धृतो भवतीति ।। ७३ ।।

**गु.दी.**— ध्यानमाह— **ध्येय इति**।। स्फटिकवदमला कान्तिरस्येत्यर्थे मतुप्। अस्य पञ्चमुखानि विद्युदादिवर्णानि। **श्यामो** इन्द्रनीलमणिः। ततोऽसित इति न पुनरुक्तिः। **असितः** मेघनीलः। जटासु अवबद्धा इन्दुकला अर्धचन्द्रो यस्य स तथा। प्रियया उमया युक् ।। ८३ ।।

**मङ्कली—** ध्यानप्रकारमाह– **ध्येय इति** ।। स्फटिकवद्धवलकान्तिमान् । पञ्चानां मुखानां वर्णानाह– **विद्युदिति** ।। अस्य पञ्चमुखस्य रुद्रस्य पञ्चमुखानि विद्युदादिवर्णानि विद्युद्वर्णो पीतं शुभ्रं धवलं, असितं कृष्णं, रजः रक्तवर्णं श्यामवर्णं चेति । **जटाबद्धेन्दुकलः** जटया सम्बद्धार्धचन्द्रः । **नागभूषणः** सर्पभूषणः । अत्र 'नमः शिवाय' इत्येवमन्त्रोद्धारः । नतु शिवाय नम इति षोडशस्वरात्मकवर्णापेक्षया तवर्गस्य पञ्चमत्वं 'पञ्चमस्य तु वर्गस्य पञ्चमं प्रथमं भवेत्' इत्यादिसारसङ्ग्रहवचनात् ।। ८३ ।।

सर्वमन्त्रेषु अन्तर्यामितया हरिर्ध्येयः

**तं.सा. मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः ।। ८४ ।।**
**अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा ।**

**त.क.—** नन्वन्यमन्त्राणामुक्तानां वक्ष्यमाणानां च तत्तद्देवतान्तरवाचकत्वं भवति न वा ? नाद्यः । 'स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते' इति वचनादवश्यमाद्यन्तयोः, क्वचिन्मन्त्रान्तर्गततया चोच्चार्यमाणस्योंकारस्य 'प्रणवस्तु परब्रह्मबोधकः समुदाहृतः' इति वचनेन विष्णवैकवाचित्वनिश्चयेन मन्त्रस्यान्यदेवतावाचित्वानुपपत्तेः । न ह्यवयवस्यान्यवाचकत्वमवयविनोऽन्यवाचकत्वं संभवति । वाक्यभेदप्रसङ्गात् । न द्वितीयः । 'ध्येयः पञ्चमुखो रुद्रः' 'शिवस्य मन्त्रः' इत्याद्युक्तव्याघातात् । न हि मन्त्रावाच्यं ध्येयं सम्भवतीत्यत आह— **मन्त्रेष्विति** ।। यद्यप्यन्यमन्त्रेषु अन्तर्गतत्वेन तारेण च केशव एव वाच्यः । अपि चावशिष्टेन मन्त्रेण तत्तद्देवता एव वाच्याः । तथापि न वाक्यभेदः । अन्तर्यामितया सर्वेषु देवेषु स्थितः केशवो ध्येयः । अतः विशिष्टोऽपि मन्त्रो तत्पर इत्यङ्गीकारात् । न वा स्वोक्तिविरोधः । तत्तद्देहस्थभगवद्रूपस्य ध्येयत्वाङ्गीकारात् । न ह्यधिष्ठानध्यानमन्तराऽन्तर्यामिरूपं ध्यातुं शक्यमिति भावः ।। ८४ ।।

**अ.सं—** ननु लक्ष्म्याद्यन्यदेवतामन्त्रेषु लक्ष्म्यादीनामेव ध्येयतोक्ता । सा न सम्भवति । 'परिवारतया ग्राह्याः' न तु ध्येयाः प्रधानतः'(अनु.१-१-१३६) इत्यादौ

प्राधान्येनेतरदेवताध्यानादेर्निषिद्धत्वात् । अतः रमाब्रह्मादीनां कथं प्राधान्येन ध्येयतेत्यतो न प्राधान्येन ध्येयत्वं तेषां किन्तु भगवत्प्रतिमात्वेनैवेत्याशयेनाह– **मन्त्रेष्विति ।।** सर्वदा तत्तन्मन्त्रतिपाद्यसर्वदेवेषु केशवः अन्तर्यामितया ध्येयः । ननु तत्तन्मन्त्राणां तत्तद्देवतामात्रप्रतिपादकत्वेन केशवप्रतिपादकत्वाभावात् कथं तज्जपाङ्गध्यानकालेऽन्तर्यामित्वेन भगवद्ध्यानमित्याशङ्कामपानुदन् केशवं विशिनष्टि– **मन्त्रेष्विति ।। सर्वेषु** उक्तेषु वक्ष्यमाणेषु **एतेषु** अन्यदेवतामन्त्रेषु **तारेण** ॐकारेण । 'अनोङ्कृतमासुरं भवति' 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते' (सुधा.जि) इत्याद्युक्तेराद्यन्तयोरोङ्कारोच्चारणस्यावश्यकत्वात् तस्य चाध्याहाररूपत्वेन मन्त्रावयवत्वात् । 'प्रणवस्तु परब्रह्मबोधकः समुदाहृतः' इत्युक्तेः मन्त्रावयवोङ्कारवाच्यस्य भगवतोऽवयविमन्त्रप्रतिपाद्यत्वं लब्धमेवेति भावः । अध्याहृतस्य शब्दस्य तद्वाक्यावयवत्वं न्यायसुधायां स्पष्टमेव । 'न चोह्यमानं वाक्यात्पृथगिति शक्यते वक्तुं' इति । तारवाच्यत्वेनैव भगवतो मन्त्रप्रतिपाद्यत्वमित्येतदुपलक्षणम् । परममुख्यवृत्त्या सर्वमन्त्रस्य प्रतिपाद्यो हरिरेव । तदुक्तमनुव्याख्याने–

देवतान्तरगाः सर्वे शब्दा वृत्तिनिमित्ततः ।
विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः ।।
अन्यदेवान् वदन्ति............... । इत्यादि ।। ८४ ।। (अनु.३-३-२८)

**गु.दी.—** ननु 'परिवारतया ग्राह्या अपि हेयाः प्रधानतः' (अनु.व्या.१-१-१३६) इत्यादौ प्राधान्येनेतरदेवताध्यानादेर्निषिद्धत्वेन कथं रमाब्रह्मशिवादीनां प्राधन्येन ध्येयत्वमित्यतो न प्राधान्येन ध्येयत्वं तेषां किन्तु भगवत्प्रतिमात्वेनैवेत्याशयेनाह— **मन्त्रेष्विति ।।** सर्वदा तत्तन्मन्त्रप्रतिपाद्यसर्वदेवेषु केशवः अन्तर्यामितया ध्येयः । ननु तत्तन्मन्त्राणां तत्तद्देवतामात्रप्रतिपादकत्वेन केशवप्रतिपादकत्वाभावात् कथं तत्तज्जपाङ्गध्यानकालेऽन्तर्यामित्वेन भगवद्ध्यानमित्याशङ्कां परिहरन् केशवं विशिनष्टि— **मन्त्रेष्विति ।। सर्वेषु** उक्तवक्ष्यमाणेतरदेवतामन्त्रेष्वाद्यन्तयोरुच्चार्यमाणतारेण वाच्यः केशव इत्यर्थः ।

प्रागन्यदेवतामन्त्रोद्धारसमये ओङ्कारस्यानुक्तत्वेऽपि 'स्रवत्यनोङ्कृतं' इत्यादेरोङ्कारस्योहः कर्तव्य इति द्रष्टव्यम् । तारवाच्यत्वेन मन्त्रप्रतिपाद्यत्वमित्येतदुपलक्षणम् । तत्तच्छब्दप्रवृत्तिनिमित्तानां भगवत्येव मुख्यत्वादिति द्रष्टव्यम् । तथा चोक्तमनुव्याख्याने

देवतान्तरगाः सर्वे शब्दवृत्तिनिमित्ततः ।
विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः ।।
अन्यदेवान् वदिन्त...........।। इति (अनु.३-३-३८) ।। ८४ ।।

**मङ्गाली–** ननु लक्ष्म्याद्यन्यदेवतामन्त्रेषु 'परिवारतया ग्राह्या अपि हेयाः प्रधानतः'(अनु.१-१-१३६) इत्युक्तेः कथं लक्ष्म्यादीनां प्राधान्येन ध्येयत्वमित्यतो न प्राधान्येन ध्येयत्वं किंतु भगवत्प्रतिमात्वेनेत्याशयेनाह– **मन्त्रेष्विति ।।** सर्वदा तत्तन्मन्त्रप्रतिपाद्यदेवेषु केशवः अन्तर्यामितया ध्येयः । ननु तत्तन्मन्त्राणां तत्तद्देवतामात्रप्रतिपादकत्वेन केशवप्रतिपादकत्वाभावात् कथं तज्जपाङ्गध्यानकालेऽन्तर्यामित्वेन भगवद्ध्यानमित्याशङ्कामपनुदन् केशवं विशिनष्टि– **मन्त्रेष्विति ।।** एतेषु मन्त्रेषु **तारेण** ओङ्कारेण 'अनोङ्कृतमासुरं भवति' 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते' इत्युक्तेः आद्यन्तयोरोङ्कारोच्चारणस्यावश्यकत्वात् । तस्य चाध्याहाररूपत्वेन मन्त्रावयवत्वात् । 'प्रणवस्तु परब्रह्मबोधकः समुदाहृतः' इत्युक्तेः मन्त्रावयवोङ्कारवाच्यस्य भगवतोऽवयविमन्त्रप्रतिपाद्यत्वं लब्धमेवेति भावः । 'न चोह्यमानं वाक्यात् पृथगिति शक्यते वक्तुं' इति न्यायसुधायामध्याहृतस्यावयवत्वं स्पष्टमुक्तम् ।

देवतान्तरगाः सर्वे शब्दा वृत्तिनिमित्ततः ।
विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः ।।
अन्यदेवान्वदन्ति..........। (अनु.३-३-३८)

इत्यनुव्याख्यानात् तारवाच्यत्वेन भगवतः तत्तन्मन्त्रप्रतिपाद्यत्वकथनमुपलक्षणं ध्येयम् ।। ८४ ।।

पञ्चाक्षरः पार्वतीमन्त्रः

**तं.सा.** **स एव वनितालिङ्गः पार्वत्या मनुरुच्यते** ।। ८५ ।।
**गौरी वराभयकरा ध्येया पीताम्बरा च सा ।**

**त.क.**— पार्वतीपञ्चाक्षरमुद्धरति— **स एवेति** ।। उद्देशनतियुक्तस्वशब्द एव **वनितालिङ्गः** स्त्रीलिङ्गश्चेत् **'नमः शिवायै'** इति पञ्चाक्षरो मन्त्रः सम्पद्यते। वराभयकरेत्यनेन दक्षिणकरे वरमभयं चेति द्विभुजत्वमुक्तम्। पूर्ववदेव ऋष्यादिः वामदेवादिः ।। ८५ ।।

**अ.सं.**— पञ्चाक्षरपार्वतीमन्त्रमाह– **स एवेति** ।। **स एव** पूर्वमन्त्रगतशिवशब्द एव **वनितालिङ्गः** स्त्रीलिङ्गान्तश्चेदित्यर्थः । **'नमः शिवायै'** इति मन्त्रो भवति । न्यासादि पूर्वमन्त्रवदेव । ध्यानमाह– **गौरीति** ।। ८५ ।।

**गु.दी.**— अथ पार्वतीमन्त्रमाह— **स एवेति** ।। पूर्वमन्त्रगतः शिवशब्द एव **वनितालिङ्गः** स्त्रीलिङ्गः पार्वत्या मन्त्रः। तथा च **'शिवायै नमः'** इति मन्त्रप्रयोगः। मङ्गलस्त्रीरूपत्वात् शिवा। तस्यै नम इत्यर्थः। ध्यानमाह— **गौरीति** ।। गौरवर्णयुता । वराभयाभ्यां युतकरा ।। ८५ ।।

**मङ्गाली**– पञ्चाक्षरपार्वतीमन्त्रमाह– **स एवेति** ।। पूर्वमन्त्रगतशिवशब्द एव । **वनितालिङ्गः** स्त्रीलिङ्गश्चेत् इत्यर्थः । **'नमश्शिवायै'** इति मन्त्रो भवति । न्यासादि पूर्वमन्त्रवदेव । ध्यानमाह– **गौरीति** ।। ८५ ।।

शेषमन्त्रः तद्ध्यानकथनं च

**तं.सा.** **स्वयमुद्देशनत्यन्तः पूर्वपूर्वः षडक्षरः** ।। ८६ ।।

**सनत्कुमारदृष्टोऽयं मन्त्रः(मनुः) शेषस्य कामदः ।**
**दधानो हलसौनन्दौ श्वेतवर्णः कृताञ्जलिः** ।। ८७ ।।

**सहस्रमूर्धा(ऽ)द्वितीयकर्णभूषः प्रियायुतः ।**
**वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः** ।। ८८ ।।

**त.क.**— शेषमन्त्रमुद्धरति— **स्वयमिति ॥ स्वयं** शेषशब्दः, चतुर्थीनमः-शब्दावन्ते यस्य सः। बुद्धिस्थत्वाच्छेषनाम्नि पूर्वो वर्णः शेकारः सानुस्वारः पूर्वः यस्य सः **'शें शेषाय नमः'** इति षडक्षरो मन्त्रः सम्पद्यते। सौनन्दं मुसलाख्यमायुधम्। द्वितीयकर्ण एव भूषा भूषणं यस्येत्यनेन वामकर्णे भूषणं दक्षिणकर्णे तु नास्तीति लक्ष्यते। अद्वितीयकर्णभूषण इति विच्छिद्य द्वितीयकर्णे भूषणं नास्तीत्यर्थं चाहुः। प्रिया वारुणी, विष्णोः पृष्ठत इत्यनेन भगवत्सेवकत्वेनैव ध्यानं न तु प्राधान्येनेत्युक्तं भवति ॥ ८६-८८ ॥

**अ.सं.**— शेषमन्त्रमाह– **स्वयमिति ॥ स्वयं** शेषशब्दः **पूर्वपूर्वः** पूर्ववर्णः शेकारः सानुस्वारः सन् पूर्वभावी यस्य स तथोक्तः। चतुर्थ्यन्तो नमोन्तश्च। **सनत्कुमारदृष्टः** सनत्कुमारनाम्ना ऋषिणा दृष्टः। कामदः अयं षडक्षरो मन्त्रः शेषस्य वाचकः। **'शें शेषाय नमः'** इति मन्त्रोद्धारः। अत्र वर्णैः षडङ्गन्यासो ज्ञेयः ॥

ध्यानमाह– **दधान इति ॥** सौनन्दशब्देन मुसलमुच्यते। **सहस्रमूर्धा** सहस्रफणः। **अद्वितीयकर्णभूषः** न विद्यते द्वितीया कर्णभूषा कर्णाभरणं यस्य स तथोक्तः। एककुण्डल इति भावः। तदुक्तं पञ्चमस्कन्धे– 'नीलवासा एककुण्डलः' (भा.५.२३.३८) इति। **पृष्ठतः** पश्चाद्भागे ॥ ८६-८८ ॥

**गु.दी.**— शेषमन्त्रमाह— **स्वयमिति ॥ स्वयं** शेषशब्दः **उद्देशनत्यन्तः** चतुर्थीनमःशब्दौ अन्ते यस्य स तथा। **पूर्वपूर्वः** पूर्वाक्षरभूतबिन्द्वन्तशेकारपूर्वः। तथा च **'शें शेषाय नमः'** इति मन्त्रनिष्पत्तिः। 'शिषॢ विशेषणे' (धा.पा.१४५२) इति धातोः शिष् इत्यस्मात् पचाद्यत्रि कृते 'पुगन्तलघूपधस्य च' (पा.सू.७-३-८६) इति इकारस्य एकाररूपे गुणे शेषेति रूपम्। तथा च विशिष्टत्वाच्छेषायेत्यर्थः। ध्यानमाह— **दधान इति ॥** सौनन्दशब्देन मुसल उच्यते। सहस्राणि मूर्धानि यस्य स तथा। न विद्यते द्वितीयकर्णभूषा यस्य स तथोक्तः। एककर्णाभरणयुक्त इत्यर्थः। यथोक्तं भागवते 'नीलवासा एककुण्डलः' (भाग.५-२३-३८) इति। **पृष्ठतः** पश्चाद्भागे। अत्र मन्त्राक्षरैरेव पञ्चाङ्गन्यासः। द्विरावृत्तैः पदैः षडङ्गन्यासो वा द्रष्टव्यः ॥ ८६-८८ ॥

**मङ्गाली**— शेषमन्त्रमाह– **स्वयमिति ॥ स्वयं** शेषशब्दः । **पूर्वपूर्वः**

पूर्ववर्णः शेङ्कारः सानुस्वरस्सन् पूर्वभावी यस्य स तथोक्तः। चतुर्थ्यन्तो नमोन्तश्च। सनत्कुमारनाम्ना ऋषिणा दृष्टः। कामदः अयं षडक्षरो मन्त्रः शेषस्य वाचकः। **'शेंषाय नमः'** इति मन्त्रोधारः। अत्र वर्णैः षडङ्गन्यासो ज्ञेयः ॥

ध्यानमाह– **दधान इति** ॥ सौनन्दशब्देन मुसलमुच्यते। **सहस्रमूर्धा** सहस्रफणः। **अद्वितीयकर्णभूषः** न विद्यते द्वितीयकर्णभूषा द्वितीयकर्णाभरणं यस्य स तथोक्तः। एककुण्डल इति भावः। **पृष्टतः** पश्चाद्भागे ॥ ८६-८८ ॥

गरुडमन्त्रः

**तं.सा.** **व्यत्यस्तपक्षितारौ च स्वाहान्तो गरुडो मनुः ।**
**का(क)श्यपोऽस्य मुनिर्ध्येयः सुधापूर्णं हिरण्मयम् ॥ ८९ ॥**

**दधानः कुम्भमभयं पीतः (शुक्लोऽरुणो)पीतशुक्तारुणो हरिः ।**
**कृष्णश्च जानुतो(कृष्णश्चाऽजानुतो) नाभेः कण्ठात् कादन्त एव च ॥ ९० ॥**

**प्रियायुक् पुरतो विष्णोः पक्षतुण्डसमन्वितः ।**
**जङ्गमस्थावरविषहृदयं सर्वकामदः ॥ ९१ ॥**

**त.क.**— गरुडमन्त्रमुद्धरति— **व्यत्यस्तेति** ॥ पक्षिशब्दश्च तारश्च पक्षितारौ। व्यत्यस्तौ च तौ पक्षितारौ च व्यत्यस्तपक्षितारौ। व्यत्यस्तत्वं विपरीतक्रमवत्त्वं पक्षितारेत्यस्मिन्नेव निर्देशे ज्ञातव्यम्। तथाच प्रथमं तार ॐकारः। ततः पक्षिशब्दः। ततः स्वाहाशब्दः। एवं क्रमेणोच्चारणे **'ॐ पक्षि स्वाहा'** इति गरुडमन्त्रो निष्पद्यते। कश्यप एव काश्यपः। व्यत्यस्तत्वं पक्षिशब्देत्यस्यैव विशेषणम्। व्यत्यस्तपाक्षिशब्दस्तारश्च स्वाहान्त एको मन्त्रः। तथा हि पञ्चरात्रे— 'प्राङ्कलमन्त्रमध्याद्यव्यत्यययो विषहा भवेत्' इति वचनम्। तस्यार्थः—

प्रणवं पूर्वमुद्धृत्य पक्षिशब्दमनन्तरम् ।
पञ्चाक्षरो महामन्त्रः स्वाहान्तः परिकीर्तितः ॥

इति पूर्वश्लोकोक्तः 'ॐ पक्षि स्वाहा' इति पञ्चाक्षरो मन्त्रः प्राङ्मूलमन्त्रेत्युच्यते। प्रागुदाहृतो मूलमन्त्र इति विग्रहात्। तथाच प्रागुद्धृतस्य 'ॐ पक्षि स्वाहा' इति मन्त्रस्य मध्यं पक्षिशब्दः, आद्यस्तारस्तयोर्व्यत्ययात् 'क्षिप ॐ स्वाहा' इत्याकारो मन्त्रो विषहा भवेत् इति व्याख्येयमित्यप्याहुः।

अथ ध्यानं प्रवक्ष्यामि पक्षिराजस्य पद्मज ।
मेरुशृङ्गनिभाकारं रुक्मपक्षतिमण्डितम् ॥

वैडूर्यनीलनासाग्रं वक्रतुण्डं भयङ्करम् ।
अनन्तकर्णाभरणं मूर्ध्नि वासुकिभूषितम् ॥

मस्तके बद्धकार्कोटं कलाहेः कोटिवेष्टितम् ।
उपवीतकृतेनापि शङ्खपालेन भूषितम् ॥

जयेन गुळिकेनापि कल्पितं कटिनूपुरम् ।
धनञ्जयाभिधानेन विजयेन च भोगिना ॥

वामदक्षिणहस्ताभ्यां बिभ्राणं कटकद्वयम् ।
बालपल्लवताम्रेण वारवाणेन शोभितम् ॥

उद्भिन्नभ्रुकुटीवन्धं करण्डिमुकुटं तथा ।
पक्षविक्षेपगम्भीरं कृतोर्ध्वनयनभ्रमम् ।
दंष्ट्राकरालवदनं ताम्रवर्तुलचक्षुषम् ॥

इत्यादिवचनमनुसरन् ध्यानप्रकारमाह— **ध्येय इति ॥** हिरण्मयं सुधापूर्णं कुम्भमभयं च दधान इत्यनेन दक्षिणकरे सुधाकलशः, वामकरेऽभयमुद्रेति सिद्ध्यति। तेन द्विभुजत्वमुक्तम्। पीतशुक्लारुणेति संज्ञानि रूपाणि यस्य सः पीतशुक्लारुणः। हरिः हरिद्वर्णः। कृष्णः नीलवर्णः। अनेन पञ्चवर्णत्वमुक्तम्। तदुपपादयति— **आजानुत इति ॥** अत्र सर्वत्र पञ्चम्यन्तपदेषु अन्वयः। आजानुपर्यन्तं पीतः। नाभिपर्यन्तं शुक्लः। कण्ठपर्यन्तमरुणः। कशब्दवाच्य-शिरःपर्यन्तं हरिद्वर्णः। अन्ते कृष्णवर्ण इत्यर्थः। प्रिया सुपर्णी। पक्षतुण्डसमन्वित

इत्यनेन चशब्देन वचनेनोक्तविशेषणानि ग्राह्याणि । जङ्गमस्थावरविषहृदित्यनेन 'यथावज्जपतो मन्त्रमादित्येन्यस्तचक्षुषः। ऊर्ध्ववाहोर्भविष्यन्ति दासा एव फणीश्वराः' इति फलवाक्यं विवृतम् ।। ८९-९१ ।।

**अ.सं.**— गरुडमन्त्रमाह– **व्यत्यस्तेति** ।। **व्यत्यस्तः** विपरीतः व्युत्क्रमेण पठित इति यावत्। **पक्षिशब्दः** क्षिप इति शब्द इत्यर्थः। व्यत्यस्तश्चासौ पक्षिशब्दश्च व्यत्यस्तपक्षिशब्दः। व्यत्यस्तपक्षिशब्दश्च तारश्च व्यत्यस्तपक्षितारौ मन्त्रस्यादौ प्रयोज्यौ। तथा चैवं मन्त्रोद्धारः– **'क्षिप ॐ स्वाहा'** इति। उक्तश्चानेनैव क्रमेण मन्त्रोद्धारप्रकारः।

संवर्तको नेत्रयुतः पाधस्तारोऽग्निसुन्दरी ।
गारुडो मनुराख्यातो विषद्वयविनाशनः ।। इति तिलके । *(२४.४८)*

अस्यार्थः । आदौ पाधः पकारात्पूर्वं, नेत्रयुतः नेत्रेण 'तृतीयेन' वर्णेन इकारेण युतः समेतः । संवर्तः क्षकारः। एवञ्च क्षिप इति शब्दो भवति । तदनन्तरं तारः ॐकारः। ततः अग्निसुन्दरी अग्निभार्यावाचकस्वाहाशब्दः इति । पाध इत्यत्र अध इत्यस्य पूर्वमित्यर्थत्वन्तु तृतीयाध्याये 'तृतीयाऽधः'(तं.सा.३-१४०) इत्यत्र विष्णुगायत्रीमन्त्रोद्धारे इत्यत्र स्पष्टम् । केचित्तु 'ॐ क्षिप स्वाहा' इति क्रमेण मन्त्रोद्धारं वदन्ति । अन्ये तु व्यत्यस्तपक्षितारमित्यत्र पक्षितारशब्दव्यत्यासं व्याख्याय 'ॐ पक्षि स्वाहा' इति मन्त्रमुद्धरन्ति । तत्र गरुडपुराणं प्रमाणयन्ति । तत्तु प्रकारान्तरेण गरुडस्य मन्त्रान्तरं भविष्यतीति ज्ञेयम्। अत्र क्रमव्युत्क्रमतः पदैः अङ्गानीति सूर्यमन्त्रोक्तन्यायेन न्यासो ज्ञेयः। केचित्तु द्विरावृत्तैः पदैः क्रमेणैव न्यास इत्याहुः। ऋषिमाह– **कश्यप इति** ।। ध्यानमाह– **ध्येय इति** ।। हिरण्मयं सुधापूर्णं कुम्भमभयञ्च हस्ताभ्यां दधान इत्यन्वयः ।।

पञ्चवर्णत्वं चावयावयविविभागेन ध्येयमित्याह– **पीत इति** ।। जानुतः नाभेः कण्ठात् कात् इति पदचतुष्टये ल्यब्लोपनिमित्ता पञ्चमी। तथा च जानुमारभ्याधस्तात् पीतवर्णः। नाभिमारभ्याधस्तात् शुक्लः। कण्ठमारभ्याधस्तात् **अरुणः** रक्तवर्णः। **कात्** मस्तकमारभ्याधः हरिद्वर्णः। **अन्ते** शिरसि

कृष्णवर्ण इति ज्ञेयम् । 'आजानुतः' इति पाठे आ इत्येत्सर्वत्र सम्बध्यते । ततश्च आजानुतः जानुपर्यन्तं पीतः। आनाभेः शुक्लः। आकण्ठादरुणः। आकात् हरिद्वर्णः। अन्ते कृष्ण इति व्याख्येयम्। पक्षतुण्डसमन्वितः प्रियायुक् विष्णोः **पुरतः** अग्रे ध्येय इति सम्बन्धः। मन्त्रसामर्थ्यमाह– **जङ्गमेति ।।** जङ्गमाः गमनशीलाः प्राणिनः। स्थावराः संचाररहिताः वृक्षादयः। उभयविधजीवविषनाशकोऽयं गारुडो मन्त्रः। तदुक्तम्– 'गारुडो मनुराख्यातो विषद्वयविनाशनः' इति ।। ८९-९१ ।।

**गु.दी.**— गरुडमन्त्रमाह—**व्यत्यस्त इति ।।** विपरीतः पक्षिशब्दः क्षिप इति। **तारश्च** ओङ्कारश्च **व्यत्यस्तपक्षितारौ** ताभ्यामुपेतः। तथा स्वाहान्तश्चेति गारुडो मनुः। कश्यप एव **काश्यपः**। 'कश्यपः' इति क्वचित्पाठः। तथा च **'ओं क्षिप स्वाहा'** इति मन्त्रः। प्रसिद्धानि विषाणि अज्ञानादीनि च क्षिप निराकुरु इत्यर्थः। ध्यानमाह— **ध्येय इति ।।** हिरण्मयं कुम्भमभयं च दधानः। आ इति सर्वत्रानुषज्जते। 'आङ् मर्यादावचने' (पा.सू.१-४-८९)। आङ् मर्यादायां कर्मप्रवचनीयसञ्ज्ञः स्यात्। 'पञ्चम्यपाङ् परिभिः' (पा.सू.२-३-१०) एतैः कर्मप्रवचनीययोगे पञ्चमी स्यादिति सूत्रात्। आ जानुतः इत्याङः कर्मप्रवचनीयत्वेन तद्योगे आ जानुत इत्यादिपञ्चमी युक्ता। **आ जानुतः** पादमारभ्य जानुपर्यन्तम् **आ जानुतः** जानुमारभ्य **आ नाभेः** नाभिपर्यन्तामित्यर्थः। इममेव स्फुटमुपदिशन्ति गुरुचरणाः। 'पादमारभ्य जानुपर्यन्तं पीतः। जानुमारभ्य नाभिपर्यन्तं शुक्लः। नाभिमारभ्य कण्ठपर्यन्तमरुणः। कण्ठमारभ्य शिरःपर्यन्तं हरिद्वर्णः। कात् शिरसः आरभ्य अन्तः अन्तिमो भागः कृष्णः श्यामवर्णः' इति। अन्ते शिरसि कृष्ण इति वा। प्रियया सौपर्ण्या युतः विष्णोः पुरतः कृताञ्जलिः स्थित इति शेषः। फलमाह— **जङ्गमेति ।।** जङ्गमः सर्पवृश्चिकादिः, स्थावरः वत्सनाभ्यादिः तयोर्विषं हरतीति **जङ्गमस्थावरविषहृत्**। **अयं** गारुडो मन्त्रः **सर्वकामदः** सर्वाभीष्टविषयदः ।। ८९-९१ ।।

**मङ्गाली–** गरुडमन्त्रमाह– **व्यत्यस्तेति ।। व्यत्यस्तः** विपरीतः व्युत्क्रमेण पठित इति यावत् । **पक्षिशब्दः** क्षिपेति शब्द इत्यर्थः । व्यत्यस्तश्चासौ पक्षिशब्दश्च व्यत्यस्तपक्षिशब्दः । व्यत्यस्तपक्षिशब्दश्च तारश्च व्यत्यस्तपक्षितारौ मन्त्रस्यादौ प्रयोज्यौ । तथा चैवं मन्त्रोद्धारः **'क्षिप ॐ स्वाहा'** इति ।

संवर्तको नेत्रयुतः पाधस्तारोऽग्निसुन्दरी ।
गारुडो मनुराख्यातो विषद्वयविनाशनः ।। इति तिलकोक्तेः ।

अस्यार्थः । आदौ पाधः पकारात्पूर्वं, नेत्रयुतः नेत्रेण तृतीयेन इकारेण युतः समेतः । संवर्तकः क्षकारः। एवं च क्षिपेतिशब्दो भवति । तदनन्तरं तारः ओङ्कारः, ततोऽग्निसुन्दरी अग्निभार्यावाचक स्वाहा शब्द इति । अन्ये तु 'ॐ क्षिप स्वाहा' इति क्रमेण मन्त्रोद्धारं वदन्ति । अपरे तु व्यत्यस्तपक्षितारावित्यत्र पक्षितारशब्दयोर्व्यत्यासं व्याख्याय 'ॐ पक्षि स्वाहा' इति मन्त्रमुद्धरन्ति । तत्र गरुडपुराणं प्रमाणयन्ति । तत्तु प्रकारान्तरेण गरुडस्य मन्त्रान्तरं भविष्यती इति ज्ञेयम् । अत्र व्युत्क्रमतः पादैरङ्गानीति सूर्यमन्त्रोक्तन्यायेन न्यासो ज्ञेयः । अन्ये तु द्विरावृत्तैः पदैः क्रमेणैव न्यास इत्याहुः। ऋषिमाह– **कश्यप इति ।।** ध्यानमाह– **ध्येय इति ।। हिरण्मयं** सुवर्णात्मकं सुधापूर्णं कुम्भं अभयं च हस्ताभ्यां दधान इत्यन्वयः । अवयवविभागेन पञ्चवर्णत्वं च ध्येयमित्याह– **पीत इति ।।** जानुतः नाभेः कण्ठात् कात् इति पदचतुष्टये ल्यब्लोपनिमित्ता पञ्चमी । तथा च जानुमारभ्याधस्तात् पीतवर्णः । नाभिमारभ्याधस्तात् शुक्लः । कण्ठमारभ्याधस्तादरुणः रक्तवर्णः । कात् मस्तकमारभ्याधस्तात् हरिद्वर्णः। अन्ते शिरसि कृष्ण इति ज्ञेयम् । 'आजानुतः' इति पाठे आ इत्येतत्सर्वत्र सम्बध्यते । ततश्चाजानुतः जानुपर्यन्तं पीतः । आनाभेः शुक्लः । आकण्ठादरुणः । आकाद्धरिद्वर्णः । अन्ते कृष्ण इति व्याख्येयम् । पक्षतुण्डसमन्वितः प्रियायुक् विष्णोः **पुरतो**ऽग्रेध्येय इत्यन्वयः । मन्त्रसामर्थ्यमाह– **जङ्गमेति ।। जङ्गमाः** गमनशीलाः प्राणिनः । **स्थावराः** सञ्चाररहिता वृक्षादयः । उभयविधजीवविषनाशकोऽयं गारुडो मन्त्रः ।। ८९-९१ ।।

लोकपालमन्त्राः

**तं.सा.** **मन्त्राश्च लोकपालानां नमोन्ताः सर्वकामदाः ।**
**पीतरक्तासितश्वेतशुक्लरक्ताश्च वर्णतः ॥ ९२ ॥**

**सप्रियाः साभया वज्रशक्तिदण्डासिपाशिनः ।**
**गदाकुमुदशूलर्ष्टि(लेष्ट)खड्गिनो भूषणोज्ज्वलाः ॥ ९३ ॥**

**त.क.**— इन्द्रादीशानान्तानामष्टानां मन्त्रान् युगपदुद्धरति— **मन्त्राश्चेति ॥**

सर्वदेवेश्वरश्चेन्द्रो नीलवर्णः प्रियायुतः ।
दधानो वज्रमभयं ध्येयः सर्वार्थसिद्धिदः ॥
ॐ लां इन्द्रय नमः ।

रक्तवर्णः सदा वह्निः सप्रियः सर्वकामदः ।
दधानः शक्तिमभयं ध्येयः सर्वमुमुक्षुभिः ॥
ॐ रां अग्नये नमः ।

सर्वधर्मपतिः सर्वैः सदा ध्येयोऽसितो यमः ।
दधानो दण्डमभयं सभार्यः सर्वकामदः ॥
ॐ मां यमाय नमः ।

नाम्ना च निर्ऋतिर्ध्येयो दिक्पालोऽसितवर्णकः ।
बिभ्रद्वरासिमभयं सप्रियः सर्वकामदः ॥
ॐ क्षां निर्ऋतये नमः ।

वरुणो वर्णतः शुक्लो ध्येयः सर्वमुमुक्षुभिः ।
दधानः पाशमभयं सप्रियः सर्वकामदः ॥
ॐ वां वरुणाय नमः ।

दिक्पालः सर्वदा ध्येयो सर्वधूम्रश्च वर्णतः ।
वायुर्गदाऽभये बिभ्रत्सप्रियः सर्वकामदः ॥
ॐ वां वायवे नमः ।

दिक्पालः सर्वदा ध्येयः सोमः शुक्लश्च वर्णतः ।
कुमुदाभयोद्यतकरः सप्रियः सर्वकामदः ।।
ॐ सां कुबेराय नमः ।

ईशानः शुक्लवर्णश्च ध्येयः शूलर्ष्टिखड्गधृक् ।
सप्रियः साभयः सर्वैस्सर्वाभरणभूषितः ।।
ॐ ईं ईशानाय नमः ।।

लोकपालानां वाचकाः इन्द्रादीशानान्तशब्दाः नमोऽन्ताश्च लोकपालानां निष्पन्ना मन्त्रा इत्यध्याहारेण योज्यम् । नमोऽन्तत्वादेव चतुर्थ्यन्तत्वं सिद्ध्यति । तथाच—

प्रथमं छन्दसामादिं विक्रमं मानुषेश्वरम् ।
वैधरं वह्निमपरं गोपनं पवनं मुखम् ।

नतिमुद्धृत्य मघोनः कथितो मनुरब्जज ।
छन्दसामादिरोङ्कारः.......... ।।

विक्रमः त्रिविक्रमः ईकारः । 'स्यादीकारस्त्रिविक्रमः' इत्युक्तेः । ततो मानुषेश्वरो नकारः । 'नकारो मानुषेश्वरः' इत्युक्तेः । ततो वैधरो रुकारः । ततो वह्नी रेफः । ततो गोपनः आकारः । ततः पवनो यकारः । ततो मुखम् आकारः । अचामादित्वात् । ततो नतिर्नमःशब्दः । इति वचनात् 'इन्द्राय नमः' इति मन्त्रः पूर्वदिक्पालस्येन्द्रस्य द्रष्टव्यः । एवं 'अग्नये नमः' इति तत्कोणस्थस्याग्नेः । 'चतुर्थ्यन्तं स्वाभिधानं नत्यन्तमपरो मनुः' इत्युक्तेः ।

प्रभञ्जनं च दक्षेश आदिदेवं सदागतिम् ।
अनुद्धारेऽपि कथितो मनुर्वैवस्वताश्रयः ।

प्रभञ्जनो यकारस्ततोऽकारश्चेति ग्राह्यम् । इति वचनानुसारेण 'यमाय नमः' इति दक्षिणदिक्पालस्य मन्त्रः । एवं 'निर्ऋतये नमः' इत्येतत् कोणपस्य । एवं 'वरुणाय नमः' इत्यादिप्रकारेण शेषा द्रष्टव्याः । तेषां युगपदेव ध्यानमाह—

**पीतेति ।। सप्रियाः** शच्यादिभार्यायुक्ताः । अभयमुद्रासहिताः । अनेनेन्द्रादीनां सर्वेषामभयमुद्राऽस्तीति सूचितम् । आयुधान्याह— **वज्रेति ।।** वज्रमिन्द्रस्य । शक्तिरग्नेः । दण्डो यमस्य । असिर्निर्ऋतेः । पाशो वरुणस्य । गदा वायोः । कुमुदं सोमस्य । शूलं ऋष्टिः खड्गश्चेति त्रयमीशानस्य । तेनेशानस्यैकस्यैव चतुर्भुजत्वमन्येषां हि द्विभुजत्वमुक्तं वेदितव्यम् । अत एव,

रुद्रं त्रिनेत्रमरुणं जटामुकुटधारिणम् ।
चतुर्भुजं नीलकण्ठमिन्दुलेखाविभूषितम् ।। इत्युक्तम् । तथा च–

श्यामः किरीटी द्विभुजो वासवो वज्रदक्षिणः ।
वामावलम्बितकटिः सर्वकल्पपरिष्कृतः ।।

ज्वालामण्डलमध्यस्थो ज्वलनो द्विभुजो भवेत् ।
वरदः शक्तिहस्तश्च करण्डिमुकुटोज्ज्वलः ।।

वैवस्वतश्च द्विभुजः किरीटी मेचकच्छविः ।
दक्षिणाभयदोर्दण्डी निर्ऋतिर्भीमदर्शनः ।।

दंष्ट्राकरालवदनो भ्रुकुटीकुटिलेक्षणः ।
दक्षिणाभीतिरुत्स्वङ्गो करण्डिमुकुटोज्ज्वलः ।।

वरुणः श्यामलः पाशहस्तो वामेऽभयप्रदः ।
करण्डिमुकुटश्चैव वायुर्धूम्रो द्विहस्तकः ।
अङ्कुशो दक्षिणे हस्ते वामः कट्यवलम्बितः ।।

इत्यादिवचनानुसारेण नीलवर्णो, द्विभुजः, (अत्र नीलरूपं वक्ष्यमाणपीतरूपभेदः) दक्षिणहस्ते वज्रं, कट्यवलम्बितवामहस्तः, शचीसहितः, गजारूढः इन्द्रो ध्येयः ध्यातव्यः । दक्षिणहस्तेऽभयाख्यवरमुद्रा । वामहस्ते शक्तिः । वर्हिवाहनोऽग्निः रक्तवर्णो ध्येयः । ज्वालामण्डलमध्यस्थ इत्यनेन रक्तवर्णस्य प्रतीतेः । एवं यमोऽपि मेचकच्छविरित्यनेनासितवर्णत्वेनोक्तः, दक्षिणहस्तेऽभयमुद्रा, वामहस्ते दण्ड इति ध्यातव्यः । निर्ऋतिस्त्वसितवर्णः, दक्षिणेऽभयमुद्रा

वामहस्तेऽसिपर्यायखड्गवान् । वरुणस्तु श्वेतवर्णः । वचने श्यामलशब्दस्तु श्वेतरूपेष्वेवावान्तरभेदपरः । अत एव वक्ष्यमाणशुक्लशब्देन न पुनरुक्तिः । दक्षिणहस्तधृतपाशः । वामाभयः । वायुस्तु रक्तविशेषवर्णः । वचने धूम्रशब्दस्तु रक्तरूपावान्तरप्रभेदपरः । अत एव नाग्निसारूप्यं, न वा पुनरुक्तिः । दक्षिणहस्ते गदावान् । वचनेऽङ्कुशशब्दो गदापर एव । कट्यलम्बितवामकराभयश्च । सोमः शुक्लः कुमुदाभयहस्तः । ईशानोऽपि शुक्लः शूलर्ष्टिखड्गाभयहस्त इति वेदितव्यः ।

ऋषिर्जीवो विराट् छन्दो देवता वलसूदनः ।
यथेष्टं वा तुरासाहं साम्राज्यं फलमश्नुते ।।

छन्दो विराड् देवलश्च द्रष्टाऽग्निरधिदेवता ।
कामस्य लाभः सर्वस्य फलमत्यन्तदुर्लभम् ।।

ऋषिः सत्यतपाश्छन्दो गायत्रं दैवमीरितम् ।
मन्त्रश्चापि नृदेवत्यः जपः स्याल्लक्षपञ्चकम् ।
तेनाराध्य श्राद्धदेवमभीष्टं सर्वमश्नुते ।।

इत्यादिवचनादेषां मन्त्राणां ऋष्यादिकमवधेयम् । तदेतदाह— **सर्वकामदा इति** ।। ९२,९३ ।।

**अ.सं.**— लोकपालानामिन्द्रादीनां दशानां मन्त्रमाह— **मन्त्रा इति** ।। नमोऽन्ताः अत एव चतुर्थ्यन्ताः इन्द्राग्न्यादिशब्दाः । इन्द्रादिलोकपालानां मन्त्रा इत्यर्थः । 'इन्द्राय नमः । अग्नये नमः । यमाय नमः' इत्यादि प्रकारेण मन्त्रोद्धारः । फलमाह— **सर्वकामदा इति** ।। वर्णैर्न्यासः । तेषां ध्यानमाह— **पीतेति** ।। इन्द्रादयः वर्णतः **पीतरक्तासितश्वेतरक्तशुक्लाः** पीतादिवर्णोपेता इत्यर्थः । रक्तादिवर्णेष्वप्यवान्तरविशेषोऽस्तीति पृथगुक्तिरिति ज्ञातव्यम् । पीतश्च रक्तश्च असितश्च श्वेतश्च रक्तश्च शुक्लश्चेति समासः। इन्द्रः पीतः । अग्नीः रक्तः। यमनिर्ऋतिवायवः असिताः । वरुणचन्द्रेशानाः श्वेताः । अनन्तः शुक्लः । ब्रह्मा रक्तः इति वर्णविवेको ज्ञेयः । उक्तं च तिलके—

पीतो रक्तोऽसितो धूम्रः शुक्लो धूम्रः सितावुभौ ।
गौरोऽरुणः क्रमादेते वर्णतः परिकीर्तिताः ।। इति (४.११९) ।

धूम्रः सितवर्णविशेषोपेतः । शुक्लः श्वेतवर्णविशेषोपेतः । एवमुत्तरत्रापि ज्ञेयम् । गौरः शुक्लवर्णविशेषोपेतः । अरुणः रक्तवर्णविशेषोपेत इति प्रमाणगतधूम्रादि-पदार्थोऽवागन्तव्यः । तेन कथमिदमुक्तार्थे प्रमाणमिति चोद्यानवकाशः ॥

**सप्रियाः** सभार्याः । **साभयाः** अभयमुद्रायुताः एकस्मिन् हस्ते । द्वितीयहस्ते क्रमेणायुधान्याह– **वज्रेति ॥** वज्रश्च शक्तिश्च दण्डश्च असिश्च खड्गश्च पाशश्च एतानि आयुधानि हस्ते एषां सन्तीति तथोक्ताः । गदा च कुमुदश्च शूलश्च ऋष्टिश्च खड्गश्च एतानि आयुधानि हस्ते एषां सन्तीति तथोक्ताः । इन्द्राद्याः ब्रह्मान्ताः एकस्मिन् हस्ते क्रमेण वज्राद्यायुधोपेता इत्यर्थः ॥ ९२-९३ ॥

**गु.दी.–** इदानीं लोकपालमन्त्रानाह— **मन्त्राश्चेति ॥ नमोन्ताः** सोद्देशाः इन्द्रादयः शब्दाः दशलोकपालानां मन्त्रा इत्यर्थः । तत्रोर्ध्वाधोलोकपालयोः ब्रह्मशेषयोर्मन्त्रौ प्रागेवोक्तौ । इतरेषां तु— **'लं इन्द्राय नमः' 'रं अग्नये नमः' 'हं यमाय नमः' 'बं निर्ऋतये नमः' 'वं वरुणाय नमः' 'यं वायवे नमः' 'सं सोमाय नमः' 'शं ईशानाय नमः'** इति मन्त्राः मान्त्रिकसम्प्रदायसिद्धाः द्रष्टव्याः । वर्णानाह– **नीलेति ॥** नीलश्च रक्तश्च असितश्च श्वेतश्च रक्तश्च शुक्लश्चेति विग्रहः । ध्यानमाह— **सप्रिया इति ॥** स्वस्वभार्याभिः सहिताः । **साभयाः** अभयमुद्रासहिताः । द्वितीयहस्ते आयुधान्याह— **वज्रेति ॥** अत्रायं वर्णायुधयोर्विवेकः । इन्द्रः नीलः वज्री । अग्निः रक्तः सशक्तिः । यमः असितः दण्डी । निर्ऋतिवरुणवायुसोमेशानाः श्वेताः असिपाशगदाकुमुदशूलिनः । ऊर्ध्वदिगभिमानी ब्रह्मा रक्तः सेषुः । अधोदिगभिमानी अनन्तः शुक्लः खड्गीति । ननु ब्रह्मानन्तयोरिव वायुमन्त्रोऽपि उक्त एवेति चेत् । सत्यम् । स प्रधानवायुः अयं तु तत्पुत्रः कोपा(णा)धिपः आतिवाहिकमरीच्यपरनामा प्रवह इति ध्येयम् ॥ ९२,९३ ॥

**मङ्गली–** लोकपालानां दशानामिन्द्रादीनां मन्त्रानाह– **मन्त्रा इति ॥** नमोन्ता अत एव चतुर्थ्यन्ता इन्द्राग्न्यादिशब्दा इन्द्रादिलोकपालानां मन्त्रा इत्यर्थः । **'इन्द्राय नमः' 'अग्नये नमः' 'यमाय नमः'** इत्यादि प्रकारेण

मन्त्रोद्धारः । फलमाह- **सर्वकामदा इति ॥** वर्णैर्न्यासः । तेषां ध्यानमाह- **पीतेति ॥** वर्णतः पीतरक्तासितश्वेतरक्तशुक्लाः पीतादिवर्णा इत्यर्थः । रक्तादिवर्णेष्वप्यवान्तर-विशेषोऽस्तीति पृथगुक्तिः । पीतश्च रक्तश्च असितश्च श्वेतश्च रक्तश्च शुक्लश्चेति समासः । इन्द्रः पीतः, अग्नी रक्तः, यमनिर्ऋतिवायवः असिताः, वरुणचन्द्रेशानाः श्वेताः, अनन्तः शुक्लः, ब्रह्मा रक्त इति वर्णविवेको ज्ञेयः । उक्तं च तिलके-

पीतो रक्तोऽसितो धूम्रः शुक्लो धूम्रः सितावुभौ ।
गौरोऽरुणः क्रमादेते वर्णतः परिकीर्तिताः ॥ इति ।

धूम्रः असितवर्णविशेषोपेतः । शुक्लः श्वेतवर्णविशेषोपेतः । एवमुत्तरत्रापि ज्ञेयम् । गौरः शुक्लवर्णविशेषोपेतः । अरुणः रक्तवर्णविशेषोपेतः इति प्रमाणगतधूम्रादिपदार्थ इत्यवगन्तव्यम् । तेन कथमिदमुक्तार्थे प्रमाणमिति चोद्यानवकाशः ॥

**सप्रियाः** सभार्याः । **साभयाः** अभयमुद्रायुताः एकस्मिन् हस्ते । द्वितीयहस्ते क्रमेणायुधान्याह- **वज्रेति ॥** वज्रं च शक्तिश्च दण्डश्च असिः खड्गश्च पाशश्च एतान्यायुधानि हस्ते एषां सन्तीति तथोक्ताः । गदा च कुमुदकं च शूलं च इष्टिश्च खड्गश्च एतान्यायुधान्येषां हस्ते सन्तीति तथोक्ताः । इन्द्राद्या ब्रह्मान्ताः एकस्मिन् हस्ते क्रमेण वज्राद्यायुधोपेता इत्यर्थः । अपरे तु इन्द्रादीनामष्टानां दिक्पालकानां मन्त्रानाहेति मन्त्राश्च लोकपालानामित्येतदवतार्याष्टदिक्पाल-मन्त्रोद्धारपरत्वमस्याङ्गीकृत्य तेषां ध्यानमाहेति नीलारक्तासितश्वेतरक्तशुक्लाश्च वर्णत इति मूलमेवं पाठमवतार्य इन्द्रो नीलवर्णः । अग्नी रक्तवर्णः । यमनिर्ऋती असितौ । वरुणः श्वेतः । वायू रक्तः । चन्द्रेशानौ शुक्लाविति विवेकं वज्राद्यैरायुधैरष्टभिः इन्द्राद्या उपेता इति ज्ञातव्यम् । इष्टि खड्गो सर्वेषाम् । इष्टिर्यष्टिर्दंड इति यावत् । एतेनाभयवज्राद्यष्टकयष्टिखड्गोपेतैश्चतुर्भिः वाहुभिरुपेता इत्युक्तं भवतीति व्याचक्षते ॥ ९२-९३ ॥

षडक्षरस्कन्दमन्त्रः

**तं.सा.** **अग्निश्च स्वयमुद्देशी सनमः स्कन्दवाचकः ।**
**कौशिकोऽस्य मुनिर्वह्निवर्णः षण्मुख उज्ज्वलः ॥ ९४ ॥**

**धनुःशक्तिधरो ध्येयः कामदो भयनाशनः ।**

**त.क.**— स्कन्दमन्त्रमाह— **अग्निश्चेति** ॥ अग्निरित्यग्निबीजं रमित्येकाक्षरमुच्यते । **सनमः** स्कन्दवाचकः नमःशब्दसहितः स्कन्दवाचकः स्कन्दशब्दः **स्वयं** साक्षादेव, न तु तत्पर्याय इत्यर्थः । तथा च **'रं स्कन्दाय नमः'** इति षडक्षरो मन्त्रः । **कौशिको** विश्वामित्रः । एकैकस्य मन्त्रस्य 'सूक्तस्यर्च एव वा' इत्युक्तन्यायेन बहुदृष्टत्वसम्भवात् शास्त्रेष्वप्यन्तरो न विरुद्ध्यते । एवमन्यत्रापि ।

विष्टरे काञ्चनन्यस्ते शुभास्तरणसंयुते ।
आसीनं सह देवीभ्यां सर्वाभरणभूषितम् ॥

रक्तचन्दनलिप्ताङ्गं रक्तमाल्योपशोभितम् ।
जातकुण्डलिनं कान्तं युवानं क्षौमवाससम् ॥

वसानमप्सरोमुख्यैः स्त्रीगणैः परितो वृतम् ।
षण्मुखं च चतुर्बाहुं दाडिमीकुसुमप्रभम् ॥

वराभयप्रदौ मुख्यौ जघन्ये शक्तितोमरौ ।
कामं रक्तनिभं रक्तप्रसवाम्बरधारिणम् ।
हस्ताभ्यामैक्षवं चापं बिभ्राणं सुमनश्शरान् ॥

इत्यादिवचनानुसारेण ध्येयमाह— **वह्निवर्ण इति** ॥ धनुश्शक्तिधर इत्यनेन द्विभुजत्वमुक्तम् । वचने चतुर्भुजोक्तिस्तु विकल्पाभिप्रायम् । अत एवैकस्या एव देवताया दुर्गादेः षोडशभुजत्वाद्युक्तिः । 'भयनाशनः' इत्यनेन फलमुक्तम् ॥९४॥

**अ.सं.**— षडक्षरस्कन्दमन्त्रमाह– **अग्निश्चेति** ॥ अग्निबीजं रकारः । **स्वयं** स्ववाचकः स्कन्दशब्दः । उद्देशी **सनमः** नमोऽन्तः **स्कन्दवाचकः**

स्कन्दप्रतिपादकः, स्कन्दमन्त्र इति भावः । **'रं स्कन्दाय नमः'** इति मन्त्रोद्धारः । ऋषिमाह– **कौशिक इति ।। अस्य** मन्त्रस्य **कौशिकः** विश्वामित्रः ऋषिः । वर्णैः न्यासः । ध्यानमाह– **वह्नीति ।।** रक्तवर्ण इत्यर्थः । फलमाह– **कामद इति** ।। ९४ ।।

**गु.दी.—** षडर्णस्कन्दमन्त्रमाह— **अग्निरिति ।।** अग्निबीजं रमिति । **स्वयं** स्ववाचकः स्कन्दशब्दः **उद्देशी** चतुर्थ्यन्तः **सनमः** नमोन्तः स्कन्दवाचकमन्त्रः । **अस्य** मन्त्रस्य **कौशिको** विश्वामित्रो मुनिः । तथा च **'रं स्कन्दाय नमः'** इति मन्त्रनिष्पत्तिः । ध्यानमाह— **वह्नीति ।।** शुक्लभास्वरवर्णः वह्नेर्यो वर्णः रक्तरूपः प्रागुक्तः तद्युक्त इति वा । **भयनाशनः** भीतिनाशकः ।। ९४ ।।

**मङ्गाली–** षडक्षरं स्कन्दमन्त्रमाह– **अग्निश्चेति ।। अग्निः** अग्निबीजं रेफः । **स्वयं** स्ववाचकः स्कन्दशब्दः । उद्देशी **सनमः** नमोन्तः **स्कन्दवाचकः** स्कन्दप्रतिपादकः स्कन्दमन्त्र इति भावः। **'रं स्कन्दाय नमः'** इति मन्त्रोद्धारः । ऋषिमाह– **कौशिक इति ।। अस्य** मन्त्रस्य **कौशिकः** विश्वामित्रः ऋषिः । वर्णैर्न्यासः । ध्यानमाह– **वह्नीति ।।** रक्तवर्ण इत्यर्थः । फलमाह– **कामद इति** **।। ९४ ।।**

सूर्यमन्त्रोद्धारः

**तं.सा.** **ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा ।। ९५ ।।**

**सतारोऽष्टाक्षरः सौरः क्रमव्युत्क्रमतः पदैः ।**
**अङ्गानि पद्मयुगलधरो ध्येयोऽरुणो रविः ।। ९६ ।।**

**सर्वव्याधिहरः श्रीदो ह(वृ)ष्टिदोऽयं मनुः स्मृतः ।**

**त.क.–** ब्रह्मकोशं पद्मपाणिमृतं सुमुखसञ्ज्ञितम् ।
रामभिन्दुं हृषीकेशमग्निवायुमचां मुखम् ।।
वैधरं विन्दुवैराजं वायुं तारं समुद्धरेत् ।
इत्थमष्टाक्षरो मन्त्रः..............।।

इति वचनानुसारेण सूर्यमन्त्रमुद्धरति- **ह्रस्व इति ।।** **कृपालुः** कृपालुशब्दपर्यायो घृणीशब्दः । स च **ह्रस्वः** ह्रस्वान्तः । **सेतश्च** अन्ते सकारेण युक्तः । घृणिस् इति स्थिते ततः **स्वयं** बुद्धिस्थितत्वात् सूर्यशब्दः । स च सेतः । ततो रुत्वे यत्वे तस्य लोपः । श्लिष्टोच्चारणे 'घृणिः सूर्यः' इति भवति । ततोऽन्यः **स्वयम्** आदित्यशब्दः । सेतश्चेति वर्तते । सतारः ॐकारसहितः । स च प्रायो मन्त्रादावेवोच्चार्यत इति सामर्थ्यादत्राप्यादावुच्चार्यः । ततः सुपो विसर्जनीयः । तथा च **'ॐ घृणिः सूर्य आदित्यः'** इत्यष्टाक्षरो भवति । ब्रह्मकोशः ॐकारः । पद्मपाणिर्घकारः । 'पद्मपाणिर्घकारस्तु यच्चात्मा' इत्यादेः । ऋतः ऋकारः । 'ऋकार ऋतधामा च' इत्युक्तेः । नामैकदेशे नामग्रहणम् । सुमुखो णकारः । 'णकारः सुमुखः' इत्युक्तेः । राम इकारः । 'स्यादिकारो रामः' इत्युक्तेः । स च सविसर्ग इति ग्राह्यम् । तत इन्दुः सकारः । 'पूर्णचन्द्रः सकारः स्यात्' इत्युक्तेः । हृषीकेश उकारः । अग्निः रेफः । वायुर्यकारः । 'अचां मुखमकारः' इत्यादिवचनव्याख्यानेन नान्यथा मन्त्रोद्धारः । ऋषिरत्रिः । गायत्री च्छन्दः ।

अङ्गान्याह— **क्रमेति ।।** घृणिः, सूर्यः, आदित्यः, आदित्यः, सूर्यः, घृणिः इत्यादिकैः षड्भिः पदैः हृदयादीनि षडङ्गानि न्यसनीयानीत्यर्थः ।

मार्ताण्डं द्विभुजं रक्तं रक्ताम्बरधरं स्थितम् ।
पृष्ठभागे शिरश्चक्रं स्थाने विपुलमण्डलम् ।।
बिभ्राणं कमलद्वन्द्वं हस्ताभ्यां च किरीटिनम् ।
उरःप्रदेशे विमलं स्यमन्तकमहामणिम् ।
आसीनं वा सुखं बिम्बे पद्मेऽष्टदलसंयुते ।।

इत्यादिवचनं संगृह्णन् ध्यानमाह- **पद्मयुगलेति ।।** युगलं द्वन्द्वम् । अरुणो रक्तः ।

आयुरारोग्यसौन्दर्यसमृद्धिसुखसम्पदः ।
सप्तजन्मसु वंशेऽस्मिन् भवन्ति निरवग्रहाः ।।

इत्युक्तं संगृह्णाति— **सर्वव्याधीति ।।** ९५,९६ ।।

**अ.सं.—** सूर्यमन्त्रमुद्धरति- **ह्रस्व इति ।। कृपालुः** कृपालुपर्यायः

घृणीशब्दः । स च **ह्रस्वः** दीर्घरहितः, **सेतश्च** सकारोद्देशेन विसर्गेण युक्तश्च । एवञ्च घृणिरिति भवति । ततः **स्वयं** स्ववाचकसूर्यशब्दः । ततः **स्वं** स्ववाचकोऽ**न्यः** सेतः आदित्यशब्दश्च । **सातारः** ॐकारपूर्वकः । **सौरः** सूर्यप्रतिपादकः मन्त्रः अष्टाक्षरः । एवं च '**ॐ घृणिः सूर्य आदित्यः**' इति मन्त्र उद्धृतो भवति । एवमेवोक्तं तिलके (१३.२७,२८) ।

तारो घृणिर्भृगुः पश्चात् वामकर्णविभूषितः ।
वह्न्यासनो मरुच्छ्रेष्ठः सनेत्रो त्रिस्त्यपश्चिमः ।।

अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतप्रदः ।
देवभा(ना)गो मुनिः प्रोक्तो गायत्रीऽच्छन्द ईरितम् ।। इति ।

अस्यार्थः । भृगुः तकारः । स च वामकर्णविभूषितः वामकर्णन्यसनीयोकारयुतः । वह्न्यासनः वह्निः अग्निबीजं रेफः । स एवासनमधः पूर्वमित्यर्थः । यस्य स तथोक्तः । रेफादुत्तर इति यावत् । मरुत् वायुबीजं यकारः। ततश्च सूर्यशब्दसिद्धिः । ततः शेषः आकारः । ततः सनेत्रः ईकारयुक्तः । ततः त्रिः तवर्गतृतीयो दकारः । त्यपश्चिमः त्यकारान्तः । एवं चादित्यशब्दनिष्पत्तिः ।

अङ्गान्याह– **क्रमेति ।। पदैः** ॐकारव्यतिरिक्तमन्त्रपदैः **क्रमव्युत्क्रमतः** क्रमेण व्युत्क्रमेण **अङ्गानि** षडङ्गानि न्यसनीयानि । घृणिः सूर्य आदित्य इति क्रमः । आदित्यः सूर्यो घृणिरिति व्युत्क्रमो ज्ञेयः । ध्यानमाह– **पद्मेति ।।** फलमाह– **सर्वेति** ।। ९५,९६ ।।

**गु.दी.**– सूर्यमन्त्रमाह– **ह्रस्व इति ।। कृपालुः** कृपालुवाचकः घृणीति शब्दः । स च **ह्रस्वः** अदीर्घः **सेतः** सविसर्गः । एवं च घृणिरिति भवति । **स्वयं** स्ववाचकः सूर्यशब्दः । **स्वयं** स्ववाचकः **अन्यः** आदित्यशब्दः । **सतारः** सप्रणवः **सौरः** सूर्यप्रतिपादको मन्त्रः । तथा च '**ॐ घृणिः सूर्य आदित्यः**' इति मन्त्रनिष्पत्तिः । दयालुत्वाद्धृणिः । सूरिप्राप्यत्वात्सूर्यः । आदितः सर्वकाले भव आदित्य इत्यर्थः । न्यासमाह— **क्रमेति ।।** तारातिरिक्तैरिति शेषः । घृणिः सूर्य आदित्य इति क्रमः । आदित्यः सूर्यो घृणिरिति व्युत्क्रमः । **अङ्गानि** षडङ्गानि । ध्यानमाह— **पद्मेति ।।** फलमाह— **सर्वेति ।। वृष्टिदः** अवग्रहनिवारणद्वारा ।। ९५,९६ ।।

**मङ्गाली–** सूर्यमन्त्रमुद्धरति– **ह्रस्व इति** ।। **कृपालुः** कृपालुपर्यायघृणीशब्दः । स च **ह्रस्वः** दीर्घरहितः **सेतश्च** सकारादेशेन विसर्गेण युक्तश्च । एवं च 'घृणिः' इति भवति । ततः **स्वयं** स्ववाचकः सूर्यशब्दः । ततः **स्वयं** स्ववाचकोऽन्यः **सेतः** आदित्यशब्दश्च **सतारः** ॐकारपूर्वकः **सौरः** सूर्यप्रतिपादकः मन्त्रः अष्टाक्षरः । एवं च '**ॐ घृणिः सूर्य आदित्यः**' इति मन्त्र उद्धृतो भवति । अस्य 'देवभागो मुनिः, गायत्री छन्दः' इति च तिलकेऽभिहितम् । अङ्गान्याह–**क्रमेति** ।। **पदैः** ॐकारातिरिक्तमन्त्रपदैः **क्रमव्युत्क्रमतः** क्रमेण व्युत्क्रमेण **चाङ्गानि** षडङ्गानि न्यसनीयानि । 'घृणिः सूर्य आदित्यः' इति क्रमः । 'आदित्यः सूर्यो घृणिः' इति व्युत्क्रमः । ध्यानमाह– **पद्मेति** ।। फलमाह– **सर्वेति** ।। ९५,९६।।

विघ्नेश्वरमन्त्रोद्धारः, स्वातन्त्र्येण फलदाता च हरिरेव

**तं.सा.** **मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः ।। ९७ ।।**

**रक्ताम्बरो रक्ततनू रक्तमाल्यानुलेपनः ।**
**महोदरो गजमुखः पाशद(न्तेऽ)न्तांकुशाभयः(ये) ।। ९८ ।।**

**बिभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ।**
**तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ।। ९९ ।।**

**एक एव महाशक्तिः कुरुते सर्वमञ्जसा ।।**

**त.क.–** विघ्नेश्वरमन्त्रमुद्धरति— **मोनेति** ।। अस्मिन् निर्देशे **व्यत्यस्तो** व्युत्क्रमेणोच्चरितो वर्णविशेषः '**क्षिप्रप्रसादाय नमः**' इत्याकारको विघ्नराजमन्त्र इत्यर्थः ।

गजाननं चतुर्बाहुं लम्बकुक्षिं सितप्रभम् ।
करण्डिकामुकुटिनं लम्बयज्ञोपवीतिनम् ।
वामहस्तेन मुख्येन संगृहीतमहाफलम् ।।

इतरेण तु हस्तेन भग्नदन्तपरिग्रहम् ।
अपराभ्यां तु हस्ताभ्यां पाशांकुशधरं प्रभुम् ।।

इत्यादि संगृह्णाति— **रक्ताम्बर इति ।।** पाशश्च दन्तश्च पाशदन्तौ । औकारादेशः । अंकुशं चाभयं च अंकुशाभये । विभ्रदित्यनेन चतुर्भुजत्वमुक्तम् । दक्षोर्ध्वकरे पाशः दक्षाधःकरे भग्नदन्तः । वामोर्ध्वकरे अंकुशम् । तदधःकरेऽभयमिति विवेक्तव्यम् । वचनन्तु रूपान्तराभिप्रायम् । यद्वा, वामहस्ते पाशं मोदकं च, इतरेण हस्तेन दन्तः, अन्येन हस्तेनांकुशमपरेण हस्तेन वरमभयं चेति योज्यम् । 'आरब्धकर्म निर्विघ्नं फलं दुग्धे यथेप्सितम्' इति वचनं संगृह्णाति— **विघ्नहर इति ।।** हिशब्देन नायं फलवादः गुडजिह्विकान्यायेन प्रवृत्तः, किन्तु अस्त्येव तासां देवतानां तत्तत्फलदाने सामर्थ्यमिति सूचयति । न चैतावता तत्तद्देवतानां स्वातन्त्र्यप्राप्तिः । न वा विष्णोः सर्वसाधारण्यमित्याह — **तत्र तत्रेति ।।** लक्ष्म्यादावित्यर्थः ।। ९७-९९ ।।

**अ.सं.**— विघ्नेश्वरमन्त्रमाह– **मोनेति ।।** मोनयदासाप्रप्रक्षि इत्येवंक्रमोपेतोऽयमष्टवर्णसमुदायः **व्यत्यस्तः** व्युत्क्रमेणोच्चरितः सन् **विघ्नराण्मनुः** विघ्नेश्वरमन्त्रो भवति । एवञ्च **'क्षिप्रप्रसादाय नमः'** इति मन्त्रः सिद्ध्यति । द्विवारं तैरेव पदैः क्रमेणैव न्यास इत्यप्याहुः । अत्रापि सूर्यमन्त्रवत् न्यासो ज्ञेयः । ध्यानमाह– **रक्ताम्बर इति ।।** रक्तवस्त्रः रक्तवर्णः रक्तमाल्यः रक्तगन्धानुलेपनश्च । **पाशदन्तः** पाशदन्तयुक्तहस्तद्वय इत्यर्थः । 'पाशदन्ताङ्कुशाभये' इति पाठे पाशदन्ताभ्यां युक्ते अङ्कुशाभये बिभ्रत् दधानः । अनेन चतुर्भुजो ध्येय इत्युक्तं भवति । मन्त्रफलमाह– **विघ्नहर इति ।।** अयं मन्त्रः त्वरया कामदश्च ।।

ननूक्तमन्त्रे प्रतिपाद्यान्यदेवतानामस्वातन्त्र्यात् स्वातन्त्र्येण फलदानासम्भवात् कथमन्यदेवतामन्त्राणां नानाविधफलसाधकत्वमभिहितमित्यत आह— **तत्र तत्रेति ।। तत्र तत्र** तत्तन्मन्त्रप्रतिप्राद्यदेवतासु **स्थितः** अन्तर्यामित्वेन स्थितः । **तत्तच्छक्तीः** तत्तदभीष्टफलदानादिशक्तीः प्रवोधयन् महाविष्णुः एक एव **अञ्जसा** स्वातन्त्र्येण सर्वं कुरुते ।। ९७-९९ ।।

**मङ्गाली–** सूर्यमन्त्रमुद्धरति– **ह्रस्व इति ।। कृपालुः** कृपालुपर्यायघृणीशब्दः । स च **ह्रस्वः** दीर्घरहितः **सेतश्च** सकारादेशेन विसर्गेण युक्तश्च । एवं च 'घृणिः' इति भवति । ततः **स्वयं** स्ववाचकः सूर्यशब्दः । ततः **स्वयं** स्ववाचकोऽन्यः **सेतः** आदित्यशब्दश्च **सतारः** ॐकारपूर्वकः **सौरः** सूर्यप्रतिपादकः **मन्त्रः** अष्टाक्षरः । एवं च '**ॐ घृणिः सूर्य आदित्यः**' इति मन्त्र उद्धृतो भवति । अस्य 'देवभागो मुनिः, गायत्री छन्दः' इति च तिलकेऽभिहितम् । अङ्गान्याह–**क्रमेति ।। पदैः** ॐकारातिरिक्तमन्त्रपदैः **क्रमव्युत्क्रमतः** क्रमेण व्युत्क्रमेण **चाङ्गानि** षडङ्गानि न्यसनीयानि । 'घृणिः सूर्य आदित्यः' इति क्रमः । 'आदित्यः सूर्यो घृणिः' इति व्युत्क्रमः । ध्यानमाह– **पद्मेति ।।** फलमाह– **सर्वेति ।। ९५,९६।।**

विघ्नेश्वरमन्त्रोद्धारः, स्वातन्त्र्येण फलदाता च हरिरेव

तं.सा. **मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः ।। ९७ ।।**

**रक्ताम्बरो रक्ततनू रक्तमाल्यानुलेपनः ।**
**महोदरो गजमुखः पाशद(न्तेऽ)न्तांकुशाभयः(ये) ।। ९८ ।।**

**विभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ।**
**तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ।। ९९ ।।**

**एक एव महाशक्तिः कुरुते सर्वमञ्जसा ।।**

**त.क.–** विघ्नेश्वरमन्त्रमुद्धरति— **मोनेति ।।** अस्मिन् निर्देशे **व्यत्यस्तो** व्युत्क्रमेणोच्चरितो वर्णविशेषः '**क्षिप्रप्रसादाय नमः**' इत्याकारको विघ्नराजमन्त्र इत्यर्थः ।

गजाननं चतुर्बाहुं लम्बकुक्षिं सितप्रभम् ।
करण्डिकामुकुटिनं लम्बयज्ञोपवीतिनम् ।
वामहस्तेन मुख्येन संगृहीतमहाफलम् ।।

इतरेण तु हस्तेन भग्नदन्तपरिग्रहम् ।
अपराभ्यां तु हस्ताभ्यां पाशाङ्कुशधरं प्रभुम् ।।

इत्यादि संगृह्णाति— **रक्ताम्बर इति** ।। पाशश्च दन्तश्च पाशदन्तौ । औकारादेशः । अंकुशं चाभयं च अंकुशाभये । बिभ्रदित्यनेन चतुर्भुजत्वमुक्तम् । दक्षोर्ध्वकरे पाशः दक्षाधःकरे भग्नदन्तः । वामोर्ध्वकरे अंकुशम् । तदधःकरेऽभयमिति विवेक्तव्यम् । वचनन्तु रूपान्तराभिप्रायम् । यद्वा, वामहस्ते पाशं मोदकं च, इतरेण हस्तेन दन्तः, अन्येन हस्तेनांकुशमपरेण हस्तेन वरमभयं चेति योज्यम् । 'आरब्धकर्म निर्विघ्नं फलं दुग्धे यथेप्सितम्' इति वचनं संगृह्णाति— **विघ्नहर इति** ।। हिशब्देन नायं फलवादः गुडजिह्विकान्यायेन प्रवृत्तः, किन्तु अस्त्येव तासां देवतानां तत्तत्फलदाने सामर्थ्यमिति सूचयति । न चैतावता तत्तद्देवतानां स्वातन्त्र्यप्राप्तिः । न वा विष्णोः सर्वसाधारण्यमित्याह — **तत्र तत्रेति** ।। लक्ष्म्यादावित्यर्थः ।। ९७-९९ ।।

**अ.सं.**— विघ्नेश्वरमन्त्रमाह– **मोनेति** ।। मोनयदासाप्रप्रक्षि इत्येवंक्रमोपेतोऽयमष्टवर्णसमुदायः **व्यत्यस्तः** व्युत्क्रमेणोच्चरितः सन् **विघ्नराण्मनुः** विघ्नेश्वरमन्त्रो भवति । एवञ्च **'क्षिप्रप्रसादाय नमः'** इतिं मन्त्रः सिद्ध्यति । द्विवारं तैरेव पदैः क्रमेणैव न्यास इत्यप्याहुः । अत्रापि सूर्यमन्त्रवत् न्यासो ज्ञेयः । ध्यानमाह– **रक्ताम्बर इति** ।। रक्तवस्त्रः रक्तवर्णः रक्तमाल्यः रक्तगन्धानुलेपनश्च । **पाशदन्तः** पाशदन्तयुक्तहस्तद्वय इत्यर्थः । 'पाशदन्ताङ्कुशाभये' इति पाठे पाशदन्ताभ्यां युक्ते अङ्कुशाभये बिभ्रत् दधानः । अनेन चतुर्भुजो ध्येय इत्युक्तं भवति । मन्त्रफलमाह– **विघ्नहर इति** ।। अयं मन्त्रः त्वरया कामदश्च ।।

ननूक्तमन्त्रे प्रतिपाद्यान्यदेवतानामस्वातन्त्र्यात् स्वातन्त्र्येण फलदानासम्भवात् कथमन्यदेवतामन्त्राणां नानाविधफलसाधकत्वमभिहितमित्यत आह— **तत्र तत्रेति** ।। **तत्र तत्र** तत्तन्मन्त्रप्रतिप्राद्यदेवतासु **स्थितः** अन्तर्यामित्वेन स्थितः । **तत्तच्छक्तीः** तत्तदभीष्टफलदानादिशक्तीः प्रबोधयन् महाविष्णुः एक एव **अञ्जसा** स्वातन्त्र्येण सर्वं कुरुते ।। ९७-९९ ।।

**गु.दी.**— गणेशमन्त्रमाह— **मोनेति ।।** अयं पादः व्यत्यस्तः सन् **'क्षिप्रप्रसादाय नमः'** इत्याकारेण मनुरित्यर्थः। भजकानां क्षिप्रफलहेतुः प्रसादो यस्मात्सः क्षिप्रप्रसादः। तस्मै नम इति मन्त्रार्थः। ध्यानमाह— **रक्ताम्बर इति ।। रक्तमाल्यं** जपाकुसुमादिस्रक् **अनुलेपनं** चन्दनगन्धः ते यस्य स तथा **।। पाशदन्ताङ्कुशाभये** पाशदन्ताभ्यां सहिते अङ्कुशाभये इति मध्यमपदलोपी समासः। 'पाशदन्तोऽङ्कुशाभये' इति पाठे पाशयुक्तो दन्तो यस्य सः पाशदन्तः। पाशदन्तधर इति यावत् ।।

नन्वुक्तानामन्यदेवतामन्त्राणां नानाविधफलसाधकत्वमभिहितम्। न च तत्सम्भवति। तत्तन्मन्त्रप्रतिपाद्यदेवतानामस्वातन्त्र्येण फलदानासमर्थत्वादित्यत आह— **तत्र तत्रेति ।। तत्र तत्र** गरुडविघ्नेशादौ स्थितो विष्णुः तत्तत्फलदानशक्तीः **प्रबोधयन्** अभिव्यञ्जयन् **सर्वं** कर्म कुरुते। ननु एकस्य एकदैवानेकपदार्थेषु स्थित्वा तत्तच्छक्तिप्रबोधकर्तृत्वमन्यत्राविद्यमानमस्मिन् कथं ज्ञातव्यमित्यत अचिन्त्यशक्त्याख्यसम्भावकेन ज्ञातव्यमित्याह— **महाशक्तिरिति** ।। ९७-९९ ।।

**मङ्गाली**— विघ्नेश्वरमन्त्रमाह– **मोनयेति ।।** मोनयदासाप्रप्रक्षि इत्येवं क्रमोपेतोऽयमष्टवर्णसमुदायः **व्यत्यस्तः** व्युत्क्रमेणोच्चरितः सन् **विघ्नराण्मनुः** विघ्नेश्वरमन्त्रो भवति । एवं च **'क्षिप्रप्रसादाय नमः'** इति मन्त्रः सिद्ध्यति। अत्रापि सूर्यमन्त्रवत् न्यासो ज्ञेयः । केचित्तु द्विवारं तैरेव पदैः क्रमेण न्यास इत्याहुः। ध्यानमाह– **रक्ताम्बर इति ।।** रक्तवस्त्रः रक्तवर्णः रक्तमाल्यः रक्तगन्धानुलेपनश्च। **पाशदन्तः** पाशदन्तयुक्तहस्तद्वयः इत्यर्थः। 'पाशदन्तां-कुशाभये' इति पाठे पाशदन्ताभ्यां युक्ते अङ्कुशाभये **बिभ्रत्** दधानः। अनेन चतुर्भुजो ध्येय इत्युक्तं भवति । मन्त्रफलमाह– **विघ्नहर इति ।। अयं मन्त्रः** त्वरया कामदश्च ।।

नन्वन्यदेवतानामस्वातन्त्र्यात् स्वातन्त्र्येण फलदानासम्भवात् कथमन्यदेवता-मन्त्राणां नानाविधफलसाधनत्वमित्यत आह– **तत्र तत्रेति ।। तत्र तत्र**

तत्तन्मन्त्रप्रतिपाद्यदेवतासु **स्थितः** अन्तर्यामित्वेन स्थितः। **तत्तच्छक्तीः** तत्तभीष्टफलदानादिशक्तीः प्रबोधयन् महाविष्णुः एक एवाञ्जसा स्वातन्त्र्येण सर्वं कुरुते ।। ९७-९९ ।।

अष्टाक्षर धन्वन्तरिमन्त्रोद्धारः

**तं.सा. स्वयमुद्देशवान् पूर्वपूर्वो हृदयसंयुतः**
**(पूर्वपूर्ववर्णो नमोयुतः) ।। १०० ।।**

**धान्वन्तरो महामन्त्रः संसृति(सर्व)व्याधिनाशनः ।**
**अत्रोक्तसर्वमन्त्राणां नायकोपलसन्निभः ।। १०१ ।।**

**त.क.**– धन्वन्तरिमन्त्रोद्धारावसरे जपहोमतर्पणादिना व्याध्यादिपीडापरिहारस्य दुर्निमित्तादिजन्यानिष्टनिवृत्तिप्रकारादेः शास्त्रे बहुतरं व्युत्पादितत्वात् तत् सर्वसाधारणमिति ज्ञापयितुमन्ते धान्वन्तरमन्त्रमुद्धरति— **स्वयमिति ।।** पूर्वशब्दात् पूर्वं वर्णशब्दोऽध्याहार्यः। पूर्ववर्णपूर्वः चतुर्थीयुक्तः **हृदयसंयुतः** नमःशब्देन युतः। **स्वयं**ः धन्वन्तरिशब्दः। **'धं धन्वन्तरये नमः'** इत्याकारः धान्वन्तरो महामन्त्रः सम्पद्यत इत्यर्थः। किमस्यैव मन्त्रस्य महत्त्वं विशिष्यत इत्यत आह— **संसृतीति ।।** संसृतिश्च व्याधिश्चेति द्वन्द्वः। तत्तत्पुरुषकारापेक्षया व्यस्तं च फलमिति यतोऽत इति च ग्राह्यम् ।। १००, १०१ ।।

**अ.सं.**— अन्यदेवतामन्त्रकथनेन मन्त्रकथनसमाप्तिमरोचयमानोऽत्युत्तमं धन्वन्तर्यष्टाक्षरं विष्णुमन्त्रमाह– **स्वयमिति ।।** उद्देशवान् **स्वयं** धन्वन्तरिशब्दः **पूर्वपूर्वः** पूर्वः पूर्ववर्णः धकारः बिन्दुसहितः सन् आदिमः यस्य धन्वन्तरिशब्दस्य स तथोक्तः। **'धं धन्वतरये नमः'** इति मन्त्रनिष्पतिः। फलमाह– **संसृतीति ।।** संसारं व्याधीश्च संसारलक्षणव्याधिं वा नाशयतीत्यर्थः। **महामन्त्रः** सर्वोत्तमो मन्त्रः। 'एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः' (१.४७) इति प्रथमाध्यायेऽष्ट-महामन्त्राणां सर्वमन्त्रमूलत्वेन सर्वमन्त्रोत्तमत्वस्य कथितत्वात् कथं धन्वन्तरिमन्त्रस्य सर्वमन्त्रोत्तमत्वमित्यत आह– **अत्रेति ।।** अत्रास्मिन्

चतुर्थाध्याये उक्तानां सर्वेषां मन्त्राणां **नायकोपलसन्निभः** श्रेष्ठमणिसदृशः उत्तम इति यावत् । तथा च चतुर्थाध्यायोक्तसर्वमन्त्राणां मध्ये एवास्योत्तमत्वम् । न त्वष्टमहामन्त्रापेक्षयोत्तमत्वम् । अतो न विरोध इति भावः ।। १००-१०१ ।।

**गु.दी.—** अन्यदेवतामन्त्रेण तत्समाप्तिमरोचयमानोऽत्युत्तमं धान्वन्तरमष्टाक्षरमन्त्रमाह— **स्वयमिति ।। स्वयं** स्ववाचकः धन्वन्तरिशब्दः **वर्णपूर्वः** पूर्ववर्णभूतधकारपूर्वः । स च बीजत्वेन विन्दुसहित इति द्रष्टव्यम् । **हृदयसंयुतः** नमःशब्दयुतः । एवं च **'धं धन्वन्तरये नमः'** इति मन्त्रोद्धारः । धन्वं पापं तत्कार्यं ज्वरादिकं च तारयतीति धन्वन्तरिरित्यर्थः । 'शतधन्वयोजना सप्ताक्षिः' इति ऋग्भाष्ये तथा धन्वपदव्याख्यानात् । फलमाह— **सर्वेति ।।** 'अत्रोक्तसर्वमन्त्राणां नायकोपलसन्निभः' इति क्वचित्पाठः । तत्र नायकोपलसन्निभ इत्यस्य शिरोरत्नसमान इत्यर्थः ।। १००-१०१ ।।

**मङ्गाली—** अन्यदेवतामन्त्रकथनेन मन्त्रकथनसमाप्तिमरोचमानोऽत्युत्तमं धान्वन्तरमष्टाक्षरं विष्णुमन्त्रमाह– **स्वयमिति ।।** उद्देशवान् **स्वयं** धन्वन्तरिशव्दः **पूर्वपूर्वः** पूर्ववर्णो धकारः विन्दुसहितः सन् आदिर्यस्य धन्वन्तरिशब्दस्य स तथोक्तः । **हृदयसंयुतः** नमोयुतः धान्वन्तरः धन्वन्तरिनामकविष्णुप्रतिपादकः । **'धं धन्वन्तरये नमः'** इति मन्त्रनिष्पत्तिः । फलमाह– **संसृतीति ।।** संसारं व्याधींश्च संसारलक्षणव्याधिं वा नाशयतीत्यर्थः । **महामन्त्रः** सर्वोत्तममन्त्रः । 'एते तु सर्वमन्त्राणां मूलमन्त्रा विशेषतः'(१-४७) इति प्रथमाध्यायोक्तमन्त्राणां सर्वोत्तममन्त्रत्वस्य कथितत्वात् कथमस्य सर्वोत्तममन्त्रत्वमित्यत आह– **अत्रेति ।। अत्र** अस्मिंश्चतुर्थाध्यायोक्तमन्त्राणां **नायकोपलसन्निभः** श्रेष्ठमणिसदृशः उत्तम इति यावत् । तथा च चतुर्थाध्यायोक्तसर्वमन्त्राणां मध्ये एवास्योत्तमत्वं न त्वष्टमहामन्त्रापेक्षया अतो न विरोध इति भावः ।। १००-१०१ ।।

धन्वन्तरिध्यानकथनम्

**तं.सा. चन्द्रौघकान्तिममृतोरु(अमृतात्मकैः अमितोरूकैः)करैर्जगन्ति**
**सञ्जीवयन्तममितात्मसुखं परेशम् ।**

ज्ञानं सुधाकलशमेव च सन्दधानं
शीतांशुमण्डलगतं स्मरताऽत्मसंस्थम् ॥ १०२ ॥

मूर्घ्नि स्थितादमुत एव सुधां स्रवन्तीं(न्तं)
भ्रूमध्यगाच्च तत एव च तालुसंस्थात् ।
हार्दाच्च नाभिसदनादधरस्थिताच्च
ध्यात्वाऽभिपूरिततनुर्दुरितानि (तं निहन्यात्) हन्यात्
॥ १०३ ॥

**त.क.**— ध्यानमाह—**चन्द्रेति** ॥ चन्द्रौघस्य कान्तिरिव कान्तिर्यस्य सः। यद्वा ओघशब्दः संख्याविशेषपरः। तेन चन्द्रशब्दस्य समानाधिकरणसमासः। कडारादित्वात् पूर्वनिपातः। अमृतस्राविणः उरुकराः किरणविशेषास्तैर्जगन्ति सञ्जीवयन्तम्। नास्मिन्नेव कल्पे किन्तु कल्पान्तरेष्वपीति वहुवचनम्। ज्ञानं सुधाकलशमित्यनेन द्विवाहुत्वं सूचयति। एवेति प्रकारान्तरं निषेधति। **शीतांशुमण्डलगतं** चन्द्रमण्डलस्थितं, **आत्मसंस्थं** स्वदेहस्थमित्यनेन चन्द्रमण्डलगतस्यापि स्वात्मसंस्थस्यापि ऐक्यं चिन्तनीयमिति सूचितम्। तस्य देहस्थितत्वं स्थलविशेषोक्त्या विवृण्वन् तत्कार्यसूचनेन ध्यानप्रकारमेव विशदयति— **मूर्ध्नीति** ॥ वक्ष्यमाणरीत्या मूर्धभ्रूमध्यहृदयनाभितदधःप्रदेशेषु स्थितेषु पञ्चसु पद्मेषु धन्वन्तरेरपि पञ्चरूपाणि वर्तन्ते। तथा चामुत इत्येतत्सर्वेणापि पञ्चम्यन्तेन सम्बध्यते। मूर्ध्नि स्थितादमुत एव धन्वन्तरेरेव स्रवन्ती सुधां ध्यात्वा तन्माहात्म्येनाऽप्यभिपूरिततनुरनिष्टानि हन्यादिति योज्यम्। 'सुधां स्रवन्तं' इति पाठेऽमुतश्चन्द्रमण्डलात् सुधां स्रावयन्तं ध्यात्वेति योज्यम् ॥ १०२,१०३ ॥

**अ.सं.**— ध्यानमाह— **चन्द्रेति** ॥ **अमृतात्मकरैः** नाशरहितैः अमृतस्राविभिर्वा अमृतपदवाच्यमुक्तिप्रदैर्वा स्वरूपकिरणैः। **परेशं** रमाब्रह्मादिनायकम्। **ज्ञानं** ज्ञानमुद्रां सुधाकलशं च हस्ताभ्यां दधानम्।

**शीतांशुमण्डलगतं** चन्द्रमण्डलसंस्थम्। **आत्मसंस्थं** स्वस्मिन् ध्यातरि विद्यमानं स्मरत। चन्द्रमण्डलगत एव स्वस्विन् वर्तत इति ध्यायेदिति भावः ॥

तस्यैव विशेषतो ध्यानमाह– **मूर्ध्नि स्थितादिति ॥ अमुत एव** चन्द्रमण्डलगतात् धन्वन्तरेरेव। **तत एव** धन्वन्तरेरेवेति। तालुसंस्थादित्यादौ सर्वत्र पञ्चम्यन्तपदेन सम्बध्यते। **हार्दात्** हृदि स्थितात् **नाभिसदनात्** नाभिस्थितात् **अधरस्थितात्** गुह्याधःस्थलगतात् सुधां स्रवन्तीमिति सर्वैः पञ्चम्यन्तपदैः योज्यम्। **ध्याता** सुधयाऽभिपूरिततनुः जापकः **दुरितानि** अनिष्टानि **हन्यात्** परिहरेत्। अत्र मूर्धाद्यङ्गानि ध्यातुरेवेति ज्ञातव्यम्। तथा च तत्र तत्र स्थितधन्वन्तरेः स्वमूर्धाद्यङ्गेषु सुधास्रावित्वध्यानेन सर्वानिष्टनिवृत्तिर्भवतीति भावः। 'सुधां स्रवन्तं' इति कचित्पाठः। तत्रामुत इत्यादेः पञ्चम्यन्तस्य चन्द्रमण्डलादित्यर्थः। स्रवन्तमित्यस्य स्वमूर्धाद्यङ्गेषु स्रावयन्तमित्यर्थः। धन्वन्तरमिति शेषश्च ज्ञेयः। शिष्टं पूर्ववत् ॥ १०२,१०३ ॥

**गु.दी.—** ध्यानमाह— **चन्द्रेति ॥ अमितोरुकरैः** अपरिच्छिन्नोत्कृष्टरश्मिभिः जगन्ति **सञ्जीवयन्तं** उज्जीवयन्तम्। 'अमृतोरुकरैः' इति पाठे नाशरहितैः **अमृतत्वस्य** मुक्तत्वस्य प्रदैर्वा अमृतस्राविभिर्वा उरुभिः किरणैरित्यर्थः। **अमितात्मसुखं** अपरिच्छिन्नस्वरूपसुखम्। **आत्मसंस्थं** चित्तसंस्थं तद्विषयीकृतमिति यावत्। शरीरसंस्थमिति वा। **मूर्ध्नि स्थितात्** मूर्धस्थद्वादशदलपद्मगतात्। **अमुतः** धन्वन्तरेरेव स्रवन्तीं सुधां ध्यात्वेति सर्वत्र योज्यम्। **भ्रूमध्यगात्** भ्रूमध्यगतचतुर्दलपद्मगतात् **तत** एव धन्वन्तरेरेव। इदं सर्वत्र सम्बध्यते। **तालुसंस्थात्** इन्द्रयोन्यपरनामकतालुगतद्विदलकञ्जगतात्। हार्दात् हृदिस्थाष्टदलपद्मगतात्। **नाभिसदनात्** नाभिगतषड्दलपद्मस्थाच्च। **अधरस्थितात्** गुदाख्यमूलाधारस्थचतुर्दलपद्मगताच्च। धन्वन्तरेरेव स्रवन्तीं सुधां ध्यात्वा **तया** सुधया अभिपूरिततनुः **दुरितं** पापम्। 'अंहो दुरितदुष्कृतम्' इत्यमरः (अ.को.१-४-८४) ॥

अपरे तु– चन्द्रस्थत्वमेव विवृण्वन्नाह— **मूर्ध्नीति ।। अमुतः** चन्द्रमण्डलात् । **तत** एव चन्द्रमण्डलादेव **स्रवन्तं** स्रावयन्तमिति व्याचक्षते ।। १०२,१०३ ।।

**मङ्गाली—** ध्यानमाह– **चन्द्रेति ।। अमृतात्मकरैः** अमृतैर्नाशरहितैः अमृतश्राविभिर्वा अमृतपदवाच्यमुक्तिप्रदैर्वा **आत्मकरैः** स्वरूपकिरणैः **परेशं** रमाब्रह्मादिनियामकम् । **ज्ञानं** ज्ञानमुद्रां सुधाकलशं च हस्ताभ्यां दधानं **शीतांशुमण्डलगतं** चन्द्रमण्डलसंस्थं **आत्मसंस्थं** स्वस्मिन् ध्यातरि विद्यमानं स्मरत । चन्द्रमण्डलगत एव स्वस्मिन् वर्तत इति ध्यायेदिति भावः ।।

तस्यैव विशेषतो ध्यानमाह– **मूर्ध्नि स्थितादिति ।। अमुत एव** चन्द्रमण्डलगताद्धन्वन्तरेरेव । **तत एव** धन्वन्तरेवेति तालुसंस्थादित्यादौ सर्वत्र पञ्चम्यन्तपदे सम्बध्यते । **हार्दात्** हृदि स्थितात् **नाभिसदनात्** नाभिस्थितात् **अधरस्थितात्** गुह्याधःस्थलगतात् सुधां स्रवन्तीमिति सर्वैः पञ्चम्यन्तपदैर्योज्यम्। ध्यात्वा सुधाया अभिपूरिततनुः जापकः **दुरितानि** अनिष्टानि **हन्यात्** परिहरेत् । अत्र मूर्धाद्यङ्गानि ध्यातुरेवेति ज्ञेयम् । तथा च तत्र तत्र स्थितधन्वन्तरेः स्वमूर्धाद्यङ्गेषु सुधास्रावित्वध्यानेन सर्वानिष्टनिवृत्तिर्भवतीति भावः । 'सुधां स्रवन्तं' इति क्वचित्पाठः । तत्रामुत इत्यादेः पञ्चम्यन्तस्य चन्द्रमण्डलादित्यर्थः । स्रवन्तमित्यस्य स्रावयन्तमित्यर्थः । धन्वन्तरिमिति शेषः । शिष्टं पूर्ववत् ।। १०४,१०५ ।।

धन्वन्तरिमन्त्रसामर्थ्यकथनम्

**अज्ञानदुःखभयरोग(अज्ञानरोगभयदुःख)महाविषाणि**
**योगोऽयमाशु विनिहन्ति सुखं च दद्यात् ।**
**उन्मादविभ्रमहरः परतश्च(स्मरतश्च) सान्द्र-**
**मा(स्वा)नन्दमेव पदमापयति स्म नित्यम् ।। १०४ ।।**

**ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं**
**देवं स यस्य शिरसि स्वकरं निधाय ।**

**आवर्तयेन्मनुमिमं स च वीतरोगः**
**पापादपैति मनसा यदि भक्तिनम्रः ॥ १०५ ॥**

**त.क.—** संसृतिव्याध्योर्नाशकत्वमेव विवृण्वन् ऐहिकामुष्मिकं फलान्तरं चाह– **अज्ञानेति ॥** अज्ञानं च रोगाश्चेति द्वन्द्वः । ताभ्यां जातं भयं दुःखं च । तान्येव महाविषाणि । **अयं योगः** धन्वन्तरिमन्त्रजपलक्षण उपायः । सुखमैहिकम् । उन्मादविभ्रमहर इत्यनिष्टनिवृत्तिः । एतदुभयमैहिकफलमुक्तम् । पारत्रिकं फलं सान्द्रमानन्ददमित्यनेनोच्यते । न केवलमेतावतैव महत्त्वं मन्त्रस्य, किन्तु प्रकारान्तरेणापीत्याह— **ध्यात्वैवेति ॥** स इति मन्त्रसिद्धिं प्राप्त उच्यते । हस्तेति योग्यतया स्वहस्ततलगमिति लभ्यते । अमृतं **स्रवन्तं** स्रावयन्तं देवं धन्वन्तरिं ध्यात्वा यस्य शिरसि करं निधाय एनं मन्त्रमावर्तयेत् सः वीतरोगो भवति । सः पापादपैति च । स जापको यदि मनसा भक्तिनम्रः स्यादिति वा । अनेनानुपलम्भबाधः परिहृतः । **एवेति** होमादिप्रयासं निवारयति । यत एवमावर्तमात्र एवं फलं ततस्तस्य महत्त्वं युक्तमिति भावः ॥ १०४-१०५ ॥

**अ.सं.—** मन्त्रसामर्थ्यमाह– **अज्ञानेति ॥** अज्ञानशब्देन संशयविपरीतज्ञाने च ग्राह्ये । आध्यात्मिकादित्रिविधं दुःखम् । **भयं** ग्रहादिजन्यम् । **रोगः** ज्वरादिः । **महाविषं** शत्रुमरणार्थं स्थापितं भुक्तं विषम् । **अयं योगः** धन्वन्तरिमन्त्रः । **उन्मादविभ्रमौ** व्याधिविशेषौ । **परतः** परस्मिन् लोके । स्मरतश्चेति क्वचित् । नित्यं पदम् । पद्यते गम्यते इति **पदम्** । **सान्द्रं** स्वानन्दस्वरूपसुखं **आपयति** प्रापयति । यद्वा एतद्ध्यानस्य फलान्तरमाह– **अज्ञानेति ॥ अयं योगः** इदं ध्यानम् ॥

मन्त्रसामर्थ्यमाह– **ध्यात्वेति ॥ सः** ध्याता स्वमृतं स्रवन्तं **देवं** धन्वन्तरिं **हस्ततलगं** स्वकरतलसंस्थं ध्यात्वैव **तं** स्वकरं **यस्य** रोगिणः शिरसि निधाय **इमं मनुं** धन्वन्तरिमन्त्रं **आवर्तयेत्** जपेत् **स तु** रोगी **वीतरोगः** नष्टरोगो भवति । यदि मनसा **भक्तिनम्रः** नारायणे प्रवणः तर्हि **पापादपैति** सर्वपापमुक्तश्च भवति ॥ १०४,१०५ ॥

**गु.दी.**– मन्त्रसामर्थ्यमाह— **अज्ञानेति ।। अयं योगः** उक्तध्यानरूपोपायः अज्ञानादीनि विनिहन्ति । तावन्मात्रस्यापुरुषार्थत्वादाह— **सुखं च दद्यादिति ।। उन्मादः** अपस्मारव्याधिविशेषः । **विभ्रमः** पित्तकार्यमूर्धभ्रमणविशेषः । नेदमैहिकमात्रमस्य फलम् । पारत्रिकं चास्तीत्याह– **परतश्चेति ।। सान्द्रं** पूर्णं नित्यमानन्दं पद्यते इति **पदं** मोक्षस्थानम् । **आपयति** सम्प्रापयति ।।

प्रकारान्तरेण ध्यानमाह— **ध्यात्वैवेति ।।** सुष्ठु अमृतं स्रवन्तं देवं धन्वन्तरिं स्वहस्ततलगं ध्यात्वा यस्य **शिरसि** करं निधाय इमं मन्त्रं **आवर्तयेत्** जपेत् स च **पापात्** रोगहेतोः अपैति । अत एव वीतरोगो भवतीति योजना । मनसा भक्त्या विनतश्चेत्यर्थः ।। १०४,१०५ ।।

**मङ्गाली**– मन्त्रसामर्थ्यमाह– **अज्ञानेति ।।** अज्ञानशब्देन संशयविपरीतज्ञाने च ग्राह्ये । **रोगो** ज्वरादिः । **भयं** ग्रहादिजन्यभयम् । आध्यात्मिकादित्रिविधं दुःखं **महाविषं** शत्रुणा मरणार्थं स्थापितं भुक्तं विषम् । **अयं योगः** धन्वन्तरिमन्त्रः **उन्मादिविभ्रमौ** व्याधिविशेषौ । **परतः** परस्मिन् लोके । 'स्मरतश्च' इति क्वचित्पाठः । नित्यं **पदं** पद्यते गम्यत इति पदम् । **सान्द्रं** स्वरूपभूतमानन्दं सुख**मापयति** प्रापयति । यद्वा एतद्ध्यानस्य फलान्तरमाह– **अज्ञानेति ।। अयं योगः** इदं ध्यानम् ।।

मन्त्रसामर्थ्यविशेषमाह– **ध्यात्वेति ।। सः** ध्याता स्वमृतं स्रवन्तं **देवं** धन्वन्तरिं **हस्ततलगं** स्वकरतलसंस्थं ध्यात्वैव **तं** स्वकरं **यस्य** रोगिणः शिरसि निधाय **इमं मनुं** धन्वन्तरिमन्त्रं **आवर्तयेत्** जपेत् । **स तु** रोगी । एतदनुपलम्भबाधितमित्यत आह– **मनसेति ।।** रोगिणो भक्त्यभावनिवन्धनः फलाभाव इति भावः । **वीतरोगो** नष्टरोगो भवति । **पापात्** रोगहेतोरपैति अत एव ।। १०४,१०५ ।।

रोगानुसरोण धन्वन्तरिमन्त्रजपसङ्ख्याभिधानम्

**तं.सा.** **शतं सहस्रमयुतं लक्षं वाऽऽरोगसंक्षयात् ।**
**इममेव जपेन्मन्त्रं साधूनां दुःखशान्तये ।। १०६ ।।**

**ज्वर(ज्यूति)दाहादिशान्त्यर्थं तर्पयेन्मनुनाऽमुना ।**
**ध्यात्वा हरिं जले सप्तरात्राज्जूतिर्विनश्यति ।। १०७ ।।**

**(ध्यात्वा हरिं जपेत् सप्तरात्रं ज्यूतिर्विनश्यति ।)**

**त.क.—** प्रकारान्तरेण महत्त्वमुपपादयति— **शतमिति ।।** यदा रोगी असन्निहितस्तदा देशान्तरस्थेनैवैतन्मन्त्रजपे क्रियमाणे तदीयदुःखशन्तिर्भवति । न ह्येवविधं न महद्भवतीति भावः । हेत्वन्तरमाह— **ध्यात्वेति ।।** सप्तरात्रेषु जले स्थित्वा जप्तेन मन्त्रेण **जूतिर्ज्वरो** विनश्यतीत्यर्थः । 'जपेत् सप्तरात्रं जूर्तिः' इति क्वचित् पाठः । तत्र 'तेन जपेन' इत्यध्याहारः ।। १०६-१०७ ।।

**अ.सं.—** कतिवारं जपेदित्याकांक्षायामाह– **शतमिति ।।** लक्षवारमावर्तनेऽपि रोगनिवृत्यभावे कियत्पर्यन्तं कर्तव्यमित्यत आह– **आरोगसंक्षयादिति ।।** साधूनां **दुःखशान्तये** रोगनाशपर्यन्तं प्रत्यहं शतादिकं रोगप्रावल्यानुसारेण इममेव मन्त्रं जपेत् ।।

ज्वरादिनवर्तकमनन्यशेषभूतं तर्पणमाह– **ज्यूर्तीति ।। ज्यूर्तिः** ज्वरः । रोग इत्याहुः । तत्कृतदाहादेः शान्त्यर्थं जले हरिं ध्यात्वा सप्तरात्रममुना मनुना यदि **तर्पयेत्** तर्पणं कुर्यात् तर्हि जूर्तिर्विनश्यति ।। १०६,१०७ ।।

**गु.दी.—** कियद्वारमित्यपेक्षायां प्रयोगमाह— **शतमिति ।।** रोगानुसारेण **शतं** शतवारं सहस्रवारं अयुतवारं लक्षवारं वा जपेत् । लक्षवारमावर्तनेऽपि रोगनिवृत्त्यभावे कथमित्यत आह— **आरोगसङ्क्षयादिति ।।** आत्मन इति शेषः । स्वस्य रोगनाशपर्यन्तं वा । **इमं** धान्वन्तरं मन्त्रं जपेत् । **साधूनां** परेषां दुःखशान्तये च। अत्र साधूनामित्युक्त्याऽसाधूनां शिरसि हस्तं निधाय जपेऽपि उक्तफलं न भवतीति सूचयति ।।

ज्वरादिनिवर्तकमनन्यशेषभूतं तर्पणमाह— **ज्वरेति ।।** ज्वरशान्त्यर्थं तापशान्त्यर्थं ज्वरप्रयुक्तो यस्तापस्तच्छान्त्यर्थमिति वा । **अमुना** मन्त्रेण **तर्पयेत्** तर्पणं कुर्यात् । जले हरिं ध्यात्वा **सप्तरात्रं** सप्तरात्रपर्यन्तं यदि तर्पयेत् तदा **जूतिः** ज्वरः विनश्यति ।। १०६,१०७ ।।

**मङ्गाली**— कतिवारं जपेदित्यपेदित्यपेक्षायामाह— **शतमिति** ।। लक्षवारमार्तनेऽपि रोगनिवर्त्यभावे कियत्कर्तव्यमित्यत आह– **आरोगसङ्ख्यादिति** ।। साधूनां दुःखशान्तये रोगनाशपर्यन्तं प्रत्यहं शताधिकं रोगप्राबल्यानुसारेण इममेव मन्त्रं जपेत् । साधूनामित्युक्त्याऽसाधूनां शिरसि हस्तं निधाय जपेऽप्युक्तफलं न भवतीति सूचयति । अत एव प्राक् 'मनसा यदि भक्तिनम्रः' इत्युक्तम् ।।

ज्वरादिनिवर्तकमनन्यशेषभूतं तर्पणमाह– **ज्यूतीति** ।। ज्यूतिः ज्वरः तत्कृतदाहादेः शान्त्यर्थं जले हरिं ध्यात्वा सप्तरात्रं अमुना मनुना यदि **तर्पयेत्** तर्पणं कुर्यात् तर्हि विनश्यति ।। १०६-०१७ ।।

धन्वन्तरिमन्त्रहोमकथनम्

**तं.शा. अयुतामृतसमिद्धोमाद्गोघृतक्षीरसंयुतात् ।**
**सर्वे रोगा(सर्वरोगा) विनश्यन्ति विमुखो न हरेर्यदि ।। १०८ ।।**

**त.क.**— हेत्वन्तरमाह— **अयुतेति** ।। अमृतसमिद्भिर्गोघृतेन क्षीरेण चायुतहोमः कर्तव्य इत्यर्थः । 'गोघृतक्षीरसंयुतात्' इति क्वचित् पाठः । विमुखं इत्यस्य प्रयोजनं पूर्ववत् । गोघृतक्षीरसंयुतत्वममृतसमिद्विशेषस्य वा विशेषणम् ।। १०८ ।।

**अ.सं.**— अनन्यशेषरोगनिवर्तकं होमं चाह– **अयुतेति** ।। रोगी यदि हरेर्न विमुखः तर्हि गोघृतक्षीरसंयुतात् अयुतात् अयुतामृतसमिद्धोमात् तस्य सर्वरोगाः विनश्यन्तीत्यन्वयः । अमृतसमिधः अमृतवल्लीसंज्ञाः । समित्परिमाणं तु 'अमृताः समिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः' (२.२२) इति द्वितीयाध्याये उक्तं ज्ञेयम् । होममन्त्रस्त्वयमेव ।। १०८ ।।

**गु.दी.**— रोगनिवर्तकहोममाह— **अयुतेति** ।। गोघृतक्षीराभ्यां संयुतात् **अयुतामृतसमिद्धोमात्** अयुतसङ्ख्याकात् 'अमृता गुडूची तन्त्रिकाऽमृता' इत्यभिधानात् तत्समिद्धोमात् । सर्वरोगा विनश्यन्ति । **हरेः** नारायणस्य **विमुखः** विरुद्धमुखः तत्कटाक्षाविषय इति यावत्, यदि न भवेत् ।। १०८ ।।

**मङ्गाली–** अनन्यशेषं रोगनिवर्तकं होमं चाह– **अयुतेति** ।। रोगी यदि हरेर्न विमुखस्तर्हि गोघृतक्षीरसंयुतात् अयुतामृतसमिद्धोमात् तस्य सर्वे रोगाः विनश्यन्तीत्यन्वयः । **अमृतसमिधः** अमरवल्लीसंज्ञाः ।। १०८ ।।

भूताभिचारादिशान्त्यर्थं होमाभिधानम्

**तं.सा.** **भूताभिचारशान्त्यर्थमपामार्गाहुतिक्रिया ।**
**द्विगुणाऽमृतया पश्चात् केवलेन घृतेन वा ।। १०९ ।।**

**त.क.—** हेत्वन्तरमाह— **भूतेति** ।। भूतं पिशाचादिः । अभिचारः श्येनादिः । तत्प्रयुक्तापमृत्युशान्त्यर्थमपामार्गनामकसमिद्विशेषस्य वा विशेषा आहुतिक्रियाः कर्तव्याः । पश्चात् **अमृतया** अमृताख्यसमिधा द्विगुणाहुतिक्रिया कार्या । तदलाभे केवलघृतेन वा कार्येत्यर्थः । अत्र सर्वत्रामुना मन्त्रेणेत्यावर्तनेन संवन्धः । तेन प्रकृतसङ्गतिर्भविष्यति ।। १०९ ।।

**अ.सं.—** अनिष्टान्तरनिवर्तकं होमान्तरमाह– **भूतेति** ।। भूतशान्त्यर्थं पिशाचाद्यावेशशान्त्यर्थम् । अभिचारो नाम मरणादिसाधनक्रियाविशेषः । तत्प्रयुक्तापमृत्यादिशान्त्यर्थमित्यर्थः । **अपामार्गाहुतिक्रिया** अपामार्गाख्यसमिद्भिः होमरूपक्रिया । कर्मकर्त्रा **पश्चात्** अपामार्गहोमानन्तरं अपामार्गापेक्षया द्विगुणितया अमृतया समिधा होमः कार्यः । अमृताभावे केवलेन द्विगुणेन घृतेन वा होमः कार्यः । होमद्वयेन भूताभिचारशान्तिर्भवतीत्यर्थः । यद्वा अपामार्गाहुतिक्रियाया अतिक्रूरत्वात्पश्चादात्मसंरक्षणार्थं कर्तव्यं होममाह– **द्विगुणेति** ।। अत्र स्वरक्षणार्थं होमः कर्तव्य इति शेषः ।। १०९ ।।

**गु.दी.—** परकृताभिचारकर्मशान्त्यर्थं होमविशेषमाह— **भूतेति** ।। **भूतानां** पिशाचविशेषाणामावेशशान्त्यर्थं **अभिचारशान्त्यर्थं** अभिचारो नाम मरणादिसाधनक्रियाविशेषः । तत्प्रयुक्तमरणादिशान्त्यर्थं च **अपामार्गाहुतिक्रिया** अपामार्गाणां आहुतिक्रिया कार्येति शेषः । अस्मिन्नेव होमेऽङ्गहोममाह— **द्विगुणेति** ।। **पश्चात्** अपामार्गहोमानन्तरं **द्विगुणामृतया** अपामार्गसङ्ख्यातः

द्विगुणितसङ्ख्यावती या अमृता तया समिधेति शेषः, होमः कार्यः। होमद्वयेन भूताभिचारशान्तिरित्यर्थः। अमृतया द्विगुणा आहुतिक्रियेति वा। वस्तुतस्तु– समिधेति शेषः। अमृतसमिधां चतुरङ्गुलत्वोक्तेस्तद्विगुणया अष्टाङ्गुलपरिमिता-पामार्गसमिधेति योज्यम्। अपामार्गाभावे अनुकल्पमाह— **केवलेति**।। पूर्वं विद्यमानं द्विगुणपदं बुद्ध्या विविक्तं नपुंसकलिङ्गं तृतीयान्तं सदनुवर्तते ।।१०९।।

**मङ्गाली—** अनिष्टान्तरनिवर्तकं होमान्तरमाह– **भूतेति**।। भूतशान्त्यर्थं पिशाचाद्यावेशशान्त्यर्थम्। अभिचारो नाम मरणादिसाधनक्रियाविशेषः। तत्प्रयुक्तमरणादिशान्त्यर्थमित्यर्थः। **अपामार्गाहुतिक्रिया** अपामार्गाख्यसमिद्भिः होमरूपक्रिया कर्म कार्या। **पश्चात्** अपामार्गहोमानन्तरम् अपामार्गापेक्षया द्विगुणितया अमृतया समिधा होमः कार्यः। अमृताभावे केवलेन द्विगुणेन घृतेन वा होमः कार्यः। होमद्वयेन भूताभिचारशान्तिर्भवतीत्यर्थः। यद्वा अपामार्गाहुतिक्रियाया अतिक्रूरत्वात् पश्चादात्मसंरक्षणार्थं कर्तव्यहोममाह– **द्विगुणेति**।। अत्र स्वरक्षणार्थं होमः कार्य इति शेषः।। १०९ ।।

आयुर्विवृद्ध्यर्थं होमान्तरकथनम्

**तं.सा.** **आयुर्विवृद्धये नित्यं जन्मनक्षत्र एव वा।**
**चतुश्चतुर्भिर्दूर्वाभिः क्षीराज्याक्ताभिरिष्यते** ।। ११० ।।

**त.क.—** हेत्वन्तरमाह— **आयुरिति**।। नित्यहोमाशक्तौ जन्मनक्षत्र इति पक्षान्तरम्। चतुश्चतुर्भिरिति वीप्सा ।। ११० ।।

**अ.सं.—** इदानीं फलान्तरसाधनहोमान्तरमाह– **आयुरिति**।। **आयुर्विवृद्धये** क्षप्तायुष्यपूर्त्यर्थं **नित्यं** प्रतिदिनम्। जन्मनक्षत्र एव वा। **क्षीराज्याक्ताभिरेव** गोदुग्धघृतमिश्राभिरेव। **चतुश्चतुर्भिः दूर्वाभिः** चतुश्चतुसङ्ख्याकदूर्वाभिः एको होमः कर्तव्यः। चत्वारः चत्वारो मानं यासां ताः चतुश्चत्वारः ताभिः। एवं दूर्वाभिरयुतादिहोम इष्यते। अत्र जपतर्पणहोमानामङ्गाङ्गिभावं विना स्वप्राधान्येनैवानुष्ठानमिति ज्ञेयम्। पृथक् पृथक् सङ्ख्यायाः कथनात् ।। ११० ।।

**गु.दी.–** इदानीं फलान्तरसाधनहोमान्तरमाह— **आयुरिति** ।। आयुर्विवृद्धये **नित्यं** प्रत्यहं जन्मनक्षत्र एव वा **चतुर्भिश्चतुर्भिः** चत्वारश्चत्वारो मानं यासां ताः चतुश्चतस्रः ताभिश्चतुश्चतसृभिरिति यद्यपि भवितव्यम्। तथापि छन्दस्त्वात् चतुश्चतुर्भिरिति पुल्लिङ्गता युक्ता। चतुश्चतुःसङ्ख्याकाभिः दूर्वाभिः क्षीराज्याभ्यां संसिक्ताभिरेको होमः इष्यते। एवं दूर्वादिभिरयुतादिहोमः ।। ११० ।।

**मङ्गाली–** इदानीं फलान्तरसाधनहोमान्तरमाह– **आयुरिति** ।। क्लृप्तायुष्यपूर्त्यर्थं **नित्यं** प्रतिदिनं जन्मनक्षत्र एव वा क्षीराज्याक्ताभिः **चतुश्चतुर्भिर्दूर्वाभिः** चतुश्चतुःसङ्ख्याकदूर्वाभिरयुतादिहोम इष्यते। चत्वारश्चत्वारो मानं यासां ताः चतुश्चत्वारस्ताभिः। द्वित्राः पञ्चषडतिवत् वहुव्रीहिः। अङ्गस्यस्त्रियावृत्तावपि चतुश्शब्दस्य स्त्रियामवृत्तेर्न च तस्तादृश इति केचित्। अत्र जपतर्पणहोमानामङ्गाङ्गिभावं विना स्वप्राधान्येनैवानुष्ठानमिति ज्ञेयम्। पृथक् पृथक् संख्यायाः कथनात् ।। ११० ।।

जपहोमादिसर्वकर्मणां प्रधानाङ्गकथनम्

**त.सा.** **सर्वाः क्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः ।**
**गुरुभक्तैः सदाचारैः फलन्त्यद्धा न चान्यथा ।। १११ ।।**

**त.कै.—** ननूक्तधन्वन्तरिमन्त्रस्य, लक्ष्म्यादिमन्त्रस्य, ततः प्रागुक्तानां विष्णुमन्त्राणां च फलानि न युक्तानि। आमुष्मिकफलस्य दर्शनायोग्यत्वेऽपि तद्योग्यानां फलानामप्यनुपलम्भात्। न चाङ्गवैगुण्यं शङ्कनीयम्। साङ्गेऽपि तस्मिन् फलानुपलम्भादित्यत आह— **सर्वा इति** ।। भक्त इति विषयसप्तमी। हराविति च। हरिविषये भक्तः। तद्विषये तमुद्दिश्येति यावत्। हरिभक्तैः गुरुभक्तैः सदाचारैः ऋत्विग्भिश्च साङ्गमनुष्ठिताः सर्वा अपि क्रियाः जपतर्पणहोमादिरूपाः फलन्ति। नान्यथेत्यर्थः। कचित् फलानुपलम्भः उद्देश्यस्यायोग्यत्वात्, गुरुभक्तिराहित्यादनादराच्च। क्वचिदङ्गवैगुण्याच्चेति भावः ।। १११ ।।

**अ.सं.—** साङ्गादेव कर्मणः फलावश्यंभावनियमाज्जपादिसर्वक्रियाणां

प्रधानाङ्गमाह– **सर्वेति ।।** हरौ भक्ते विषयसप्तमीयम् । यः हरिभक्तः तद्विषय एवेत्यर्थः । तथा **सदाचारैः** स्ववर्णाश्रमोचितकर्मानुष्ठानकारिभिः गुरुभक्तैः हरिभक्तैरेव **स्वनुष्ठिताः** सु सम्यक् हरिस्मरणपूर्वकमिति यावत् । कृताः **सर्वाः क्रियाः** जपादिसर्वकर्माणि **अद्धा** निश्चयेन फलन्ति । **अन्यथा** हरिभक्ति-विषयकत्वाभावे कर्तुरपि हरिभक्त्यादिगुणाभावे च नैव फलन्ति । हरिभक्त्या-दिमतैव कर्त्रा हरिभक्तोपकाराय कृतं जपहोमादिसत्कर्म फलति नान्यथेति भावः । अनेन भक्त्यादेः प्रधानाङ्गत्वमुक्तं भवति ।। १११ ।।

**गु.दी.—** अथ साङ्गादेव कर्मणः फलावश्यम्भावात् जपादिसर्वक्रियाणा-मङ्गमाह— **सर्वेत्यादिना ।। सर्वक्रियाः** होमादिकर्माणि **हरौ भक्ते** हरिभक्तविषये **स्वनुष्ठिताः** हरिस्मरणपूर्वकमनुष्ठिताः **अद्धा** सत्यं फलन्ति ।

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ।।
(ऋ.सं.१०-७१-६)

इति मन्त्रवर्णोऽत्र मानम् । यः पुरुषः **सचिविदं** सखिविदं परकृतसेवादि जानन्तं **सखायं** एकदेहस्थत्वेन जीवसखायं परमात्मानं **तित्याज** तत्याज तस्य **वाच्यपि** वेदवाच्यधीतायामपि **भागः** फलं नास्ति । **सुकृतस्य** शुभकर्मणः **पन्थां** पन्थानं प्राप्तिसाधनं भगवन्तं न प्रवेद । **हि** यस्मादतो विष्णवभक्तो यच्छृणोति तद् **अलकं** अलीकम् । **ईं** मिथ्यैव फलाहेतुत्वात् । अतो विष्णुस्मरणं प्रतिकर्म कार्यमिति । इत्थम्भावान्तरमाह— **गुरुभक्तैः सदाचारैरिति ।।** गुरुषु भक्तैः, सन् आचारः प्रयत्नो येषां ते सदाचारास्तैः । 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः' (भा.११-८-४८) इति वचनादाचारशब्दार्थो ज्ञेयः । **अन्यथा** भक्तविषयकत्वभक्तादि-कर्तृकत्वाभावे ।। १११ ।।

**मङ्गाली—** जपादिसर्वक्रियाणां प्रधानाङ्गमाह– **सर्वा इति ।।** हरौ भक्ते विषये सदाचारैः स्ववर्णाश्रमोचितकर्मानुष्ठातृभिः गुरुभक्तैः हरिभक्तैरेव **स्वनुष्ठिताः** सम्यक् हरिस्मरणपूर्वकमिति यावत् । कृताः **सर्वाः क्रियाः** जपादिरूपाः **अद्धा**

निश्चयेन फलन्ति नान्यथेत्यर्थः। अनेन भक्त्यादेः प्रधानाङ्गत्वमुक्तं भवति ।। १११ ।।

गुरुप्रदर्शनपूर्वं तत्पूजाविधानम्

**तं.सा. ब्रह्मान्ता गुरवश्चैव सम्प्रदायप्रवर्तकाः ।**
**तत्तद्गुणानुसारेण पूज्या मान्याश्च(ध्येयाश्च)कृत्स्नशः।।११२।।**

**त.क.–** विद्योपदेष्टैव गुरुरिति प्रतीतिनिरासायाऽह— **ब्रह्मान्ता इति ।।** तेषां यद्यपि विद्योपदेष्टृत्वं नास्ति। तथापि **सम्प्रदायो** वैदिकमर्यादा तत्पूर्वकत्वमस्तीति भावः। ननु साक्षाद्गुरुमारभ्य ब्रह्मान्तेषु भक्तिः, विष्णौ भक्तिश्च फलप्रयोजिकेत्युक्तमयुक्तम्। ब्राह्मशैवस्कान्दगाणपत्यादीनां ब्रह्मादिषु, विष्णुपाषण्डिनां विष्णौ च भक्तिसद्भावात्, तेषां ब्रह्मादिषु माहात्म्यज्ञानपूर्वकस्नेहसद्भावादित्याशङ्क्य भक्तिः पूजाद्युपलक्षिकेति भावेन हीरगुरुभक्तिं विवृणोति। ब्रह्मादीनां यावन्तो गुणाः ज्ञानानन्दादयो धर्मास्तदनुसारेण पूजार्हा मानार्हाश्च नान्यथा। मानो वहुमानो भक्तिः। ब्रह्मादिभ्यः सर्वेभ्योऽप्यधिका अतिनिश्चला च विष्णौ भक्तिः (कार्या। यद्यपि केषश्चन ब्रह्मादिदेवतासु भक्तिरस्ति कदाचित्। न थापि सा न तद्गुणानुसरिणी । वलरामादेर्विष्णुसमत्वज्ञानात्) कार्यकारिणी च भक्तिरस्ति। तथापि म ब्रह्मादिदेवतासु भक्तिरस्ति। कदाचित् साऽपि न तद्गुणानुसारिणी । वलरामादेर्विष्णुसमत्वज्ञानात् । उभयसमुचयाभावेन नोक्तदोषः। अत एव विष्णौ भक्तिश्चेति चशब्दावृत्त्या समुचयो व्याख्येयः। अनेनान्यदेवतामन्त्रोद्धारः समर्थितो वेदितव्यः।। ११२ ।।

**अ.सं.—** गुरुभक्तैरित्युक्तम्। के ते गुरव इत्यपेक्षायां गुरून् प्रदर्शयन्नेव तत्पूजादिकमपि सर्वकर्माङ्गमित्याह– **ब्रह्मान्ता इति ।। साक्षात्स्वगुरुमारभ्य** ब्रह्मा अन्ते येषां ते ब्रह्मान्ता गुरवः। **तत्तद्गुणानुसारेण** तेषां तेषां गुणानां ज्ञानभक्त्यादीनामनुसारेणाधिक्यानुसारेण पूज्याः । साक्षाद्गुरोः गुरुत्वं सम्भवति । इतरेषां गुरुत्वं कथमित्यत आह– **सम्प्रदायप्रवर्तका इति ।।** हेतुगर्भविशेषणम् ।

अथवा स्वोत्तममारभ्य ब्रह्मान्ता गुरव इत्यर्थः। 'अन्येऽपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः' (मा.भा.ता.नि.१.१२०) इत्युक्तेः। स्वोत्तमेष्वपि विशेषोपकारसद्भावात् व्याख्यानपरम्पराप्रवर्तका गुरवः विशेषतो नम्या इत्याशयेन ब्रह्मान्तपदेन गृहीतानामपि 'सम्प्रदायप्रवर्तकाः' इति पुनर्ग्रहणम्। यद्वा स्वावराणामपि कचित्सम्प्रदायप्रवर्तकत्वे तेषामपि पूज्यत्वज्ञापनाय **प्रवर्तका** इत्युक्तम्। तदुक्तमन्यत्र– 'मर्यादार्थं तेऽपि पूज्याः' (मा.भा.ता.नि. १.१२६) इति ।। ११२ ।।

**गु.दी.**— गुरुभक्तैरिति प्रकृताः गुरवः क इत्याशङ्कायां साधारणानसाधारणांश्च गुरून् प्रदर्शयन्नेव तत्पूजादिकमपि अङ्गमित्याह— **ब्रह्मान्ता इति ।।** स्वोत्तममारभ्येति शेषः। तदुक्तं— 'अन्येऽपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः' (म.भा.ता.नि.१-१२०) इति। गुरुत्वे हेतुः **सम्प्रदायप्रवर्तका** इति। स्वावराणामपि कचित्सम्प्रदायप्रवर्तकत्वे तेषामपि पूज्यत्वज्ञापनार्थमिदमुक्तम्। तदुक्तमन्यत्र 'मर्यादार्थं तेऽपि पूज्याः' (म.भा.ता.नि.१-१२६) इति। सम्प्रदाय-प्रवर्तका इत्युपलक्षणम्। अनुग्राहकाश्चेत्याद्यपि ग्राह्यम्। ननु विद्योपदेष्टृत्वं गुरुत्वम्। न च सर्वान् प्रति ब्रह्मणस्तदस्ति। तत्कथं तस्य गुरुत्वमिति चेत्, सत्यं, अस्त्यत्र सम्प्रदायविशेषः। इह जन्मान्तरे वा हिरण्यगर्भोपदेशेन विना कस्यापि न मुक्तिरिति साधारणं गुरुत्वं तस्योपपन्नम्। तथा चोक्तमनुव्याख्याने– 'उपदेशो ब्रह्मणश्च सर्वेषामेव मुक्तये' (अनु.व्या.३-३-२८) इति। एकादश-स्कन्धतात्पर्ये च (भागा.ता.११-९-३१) 'ज्ञानं प्राप्य वहुभ्योऽपि नर्ते मुक्तिश्चतुर्मुखात्। ज्ञानमप्राप्य' इति। ब्रह्मेतरेषामप्युत्तमानां तात्त्विकानां शेषादीनां तत्सम्प्रदायप्रवर्तकत्वेन सन्मार्गप्रवर्तकत्वेन च साधारणगुरुत्वम्। विद्याप्रवर्तकानां च पितृप्रभृती-नामनुग्राहकत्वादिना असाधारणं गुरुत्वमित्यादि द्रष्टव्यम्। तथाह मनुः—

निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ।।

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विन्द्याच्छ्रुतोपकृतिहेतुतः ।। इति ।।

श्रीमदानन्दतीर्थीयमतमाचन्द्रतारकम् ।
आसेतोराहिमाद्रेश्च समीचीनं प्रवर्तताम् ।।

इत्यादि प्रार्थनाकर्तृत्वेनापीतरेषां स्वोत्तमानां गुरुत्वं द्रष्टव्यम् । ब्रह्मादयः पित्रन्ताः सर्वे किं साम्येन पूजाद्यर्हाः? नेत्याह– **तत्तद्गुणानुसारेणेति ।। कृत्स्नशः** समस्ताः ब्रह्माणमैहिकसद्गुर्वादींश्चारभ्य पित्रन्ताः सर्वे **तत्तद्गुणानुसारेण** ज्ञानभक्त्यादिगुणतारतम्यानुसारेण **पूज्याः** वन्दनादिना मान्याश्चेत्यर्थः ।

ननु तर्हि निषेकादिकर्तृपितृमातृविद्योपदेष्टृगुरुपरमगुर्वादीनामेकत्र दैवात्सम्मेलने के प्रथमं मान्या इत्यतश्चेदमुदितम्– **तत्तद्गुणानुसारत इति ।।** प्रथममिति शेषः । अत्र गुणशब्दः शुभार्थः । तदुक्तं गीताभाष्ये—

शब्दाद्या इन्द्रियाद्याश्च सत्वाद्याश्च शुभानि च ।
अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ।। इति (गी.भा.३-२९) ।

उच्चत्वादिशुभधर्मानुसारेणाधिकाः प्रथमतो वन्द्या इत्यर्थः । तथा हि मातापित्रोः समवाये पिता प्रथमं वन्दनीयः । तस्य मुख्यत्वात् । 'सहस्रं तु पितुर्माता गौरवेणातिरिच्यते' इति वाक्यं तु निषेकमात्रकर्तृजातकोपनयनादिसंस्काराकर्तृपितृविषयम् । आचार्यपित्रोः समवाये तु आचार्यः आदौ नम्यः ।

उत्पादकब्रह्मदात्रोः गरीयान् ब्रह्मदः पिता ।
शिरसा प्रणमेत्तं हि पितरं तदनन्तरम् ।। इति वचनात् ।

गुरोः परमगुरोश्च समवाये परमगुरुरादावभिवन्दनीयः । यथाहाऽपस्तम्भः—'प्रोष्य च समागते प्राचार्याचार्यसन्निपाते प्राचार्यमुपसङ्गृह्याचार्यमुपसञ्जिघृक्षेत्' इति ।। ११२ ।।

**मञ्जाली—** गुरुभक्तैरित्यत्रोक्तान् गुरून् दर्शयन्नेव तत्पूजादिकमपि कर्माङ्गमित्याह– **ब्रह्मान्ता इति ।।** साक्षात् स्वगुरुमारभ्य ब्रह्मा अन्ते एषां ते ब्रह्मान्ता गुरवः **तत्तद्गुणानुसारेण** तेषां तेषां गुणानां ज्ञानभक्त्यादीनामनुसारेण आधिक्यानुसारेण पूज्याः । साक्षाद्गुर्वतिरिक्तानामुपकृत्याभावेन कथं गुरुत्वमिति नाशङ्कनीयमित्यभिप्रेत्याह– **संप्रदायप्रवर्तका इति ।।** यद्वा स्वोत्तममारभ्य ब्रह्मान्ता गुरव इत्यर्थः । 'अन्येऽपि स्वात्मनो मुख्याः क्रमात् गुरव ईरिताः'

(म.भा.ता.नि.१-२०)इत्युक्तेः स्वोत्तमेष्वपि विशेषोपकारसद्भावात्। व्याख्यान-परम्पराप्रवर्तका गुरवो विशेषेण नम्या' इत्याशयेन ब्रह्मान्तपदेन गृहीतानामपि 'संप्रदायप्रवर्तकाः' इति पुनर्ग्रहणम्। स्वावराणामपि क्वचित्संप्रदायप्रवर्तकत्वे तेषामपि पूज्यत्वज्ञापनार्थ-मेतत्पदेन तदुक्तिरिति वा। तदुक्तमन्यत्र– 'मर्यादार्थं तेऽपि पूज्याः'(म.भा.ता.नि.१-१२६) इति ॥ ११२ ॥

तारतम्यक्रमेण भक्तिः कार्या

**त.सा. सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला।**
**लक्ष्मीब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ॥ ११३ ॥**
**एवं विद्याः फलिष्यन्ति नान्यथा तु कथञ्चन।**

**त.क.—** ननु 'क्लेशोऽधिकतरस्तेषाम्'(भ.गी.१२-१५) इत्युक्तेर्लक्ष्मीभजनं न कार्यमेवेत्या-पन्नम्। गुरुत्वेन ब्रह्मादेरेव ग्रहणात्। 'लक्ष्मीर्भाग्याधिदेवता' इत्युक्तत्वाच्चेति शङ्कामुपसंहारव्याजेन परिहरति— **लक्ष्मीति ॥** क्रमेण तत्तद्योग्यतानुसारभाविता सम्यगभिवृद्धा भक्तिः स्वकार्याय पर्याप्ता स्यादित्यर्थः। लक्ष्म्या अपि सम्प्रदायप्रवर्तकत्वस्य सत्त्वात् गुरुत्वमस्ति। 'क्लेशोऽधिकतरः' इत्यादेस्तु तावतैव पर्यवसानं नास्ति। ततः तद्भजने प्रथमं कालक्षेपो न कार्य इति भावः। फलानुपलम्भस्यान्यथासिद्धत्वमुपपाद्योपसंहरति— **एवमिति** ॥ ११३ ॥

**अ.सं.—** हरिभक्तैर्गुरुभक्तैरित्युक्तम्। तत्र हरौ गुरुषु च सामान्येन भक्तेः कर्तव्यत्वप्रतीतिं वारयति- **सर्वेभ्य इति ॥ सर्वेभ्यः** लक्ष्मीब्रह्मादिभ्यः **अभ्यधिका** निरतिशया। **ततः** विष्णोरनन्तरं लक्ष्मीब्रह्मादिषु **क्रमेण** रमाब्रह्मादिस्वरूपता-रतम्यक्रमेण **सुभाविता** सम्यक् सम्पादिता स्यात्। अत्र लक्ष्मीग्रहणेन ब्रह्मान्ता गुरव इत्येतदुपलक्षणमिति ज्ञेयम्। एवं पूर्वोक्तप्रकारेण भक्त्यादिमतां **विद्याः** मन्त्रादिविद्याः **फलिष्यन्ति** उक्तफलप्रदा भविष्यन्ति। **अन्यथा** भक्त्यादिपूर्वकत्वरूपाङ्गाभावे **कथञ्चन** सर्वथा न फलिष्यन्ति ॥ ११३ ॥

**गु.दी.—** हरिभक्तैर्गुरुभक्तैरिति चोक्तम्। तत्र हरिभक्तिः कीदृशी? गुरुभक्तिश्च

कीदृशी? किञ्च ब्रह्मान्ता गुरव इत्युक्तम्। एवं सति लक्ष्म्यसङ्ग्रह इत्यत आह— **सर्वेभ्य इत्यादिना ।।** **सर्वेभ्यो** ब्रह्मादिभ्यः **अभ्यधिका** अतिनिश्चला अन्तरायसहस्रेणाप्यप्रतिवद्धा भक्तिर्विष्णौ स्यात्। **ततः** विष्णवनन्तरं लक्ष्मीं ब्रह्माणं चारभ्य चतुर्गुणोपासकान्तेषु स्वोत्तमेषु **क्रमेण** गुणतारतम्यक्रमेण भक्तिः **सुभाविता** सुष्ठु भाविता अनुष्ठिता, सम्यक् सम्पादिता वा स्यात्। एवं क्रमेण भक्तिकरणे मन्त्ररूपाः **विद्याः फलिष्यन्ति** फलदानसमर्थाश्च भविष्यन्ति। **अन्यथा** विष्णौ सर्वाधिकभक्त्यभावेऽन्यथाक्रमेण साम्येन वाऽनुष्ठाने वा न फलिष्यन्ति। तथा च ब्रह्मान्ता इत्युपलक्षणमिति भावः ।। ११३ ।।

**मङ्गाली–** हरिभक्तैर्गुरुभक्तैरित्युक्तम्। तत्र हरौ गुरुषु च साम्येन भक्तेः कर्तव्यत्वप्रतीतिं वारयति– **सर्वेभ्य इति ।। सर्वेभ्यः** लक्ष्मीब्रह्मादिभ्यः **अभ्यधिका** निरतिशया। **ततः** विष्णोरनन्तरं लक्ष्मीब्रह्मादिषु **क्रमेण** रमाब्रह्मादिदेवतातारतम्यक्रमेण **सुभाविता** सम्यक् संपादिता स्यात्। अत्र लक्ष्मीग्रहणेन ब्रह्मान्ता इत्येतदुपलक्षणमिति ज्ञापितम्। एवं पूर्वोक्तप्रकारेण भक्त्यादिमतां विद्याः फलिष्यन्ति। **अन्यथा** भक्त्यादिपूर्वकत्वरूपाङ्गाभावे **कथंचन** सर्वथा न फलिष्यन्ति ।। ११३ ।।

जपाद्यनुष्ठातुः आवश्यकगुणकथनम्

**तं.सा.** **शुभान् ध्यायन्ति ये कामान् गुरुदेवप्रसाजिान् ।। ११४ ।।**

**इतरानात्मपापो(स्वात्मदोषो)त्थांस्तेषां विद्या फलिष्यति ।**
**मुक्तावपि च संसारे नाऽत्मनो विष्णुतां क्वचित् ।। ११५ ।।**

**ब्रह्मरुद्रादिभावं वा साम्यं वाऽऽधिक्यमेव वा ।**
**अतद्वशत्वमथवा यः स्मरेत् स तु सिद्धिभाक् ।। ११६ ।।**

**नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि ।**

**त.क.—** इतोऽप्युक्तफलानुपलम्भोऽन्यथासिद्धस्तेन न मन्त्रापराधो मन्तव्य

इत्याह— **शुभानिति** ।। मन्त्रजपादिकाले तदन्यकाले वा प्राप्तान् **कामान्** काम्यान् विषयान् सुखादीन् वा गुरुप्रसादसम्पादितान् सन्दधते, **इतरान्** दुःखादीन् **आत्मदोषोत्थान्** प्राचीनकर्मभिरिह गुरुदेवतापचारादिभिः प्राप्तान् अनुसन्दधते तेषामेव विद्या फलिष्यति नान्येषामिति योजनया प्रकृतसङ्गतिः। यथाश्रुतयोजनायामितिकर्तव्यतान्तरं विद्याभ्यासिनमुक्तं वेदितव्यम्। अत एव प्रकरणविच्छेदः कृतः । एवमग्रेऽपि । नैतावदेवेत्याह— **मुक्तावपीति** ।। संसार इति दृष्टान्ताभिप्रायम्। संसारे स्वात्मनो दुःखित्वानुभवेन यथा विष्ण्वादित्वं नानुसन्धत्ते तथा **मुक्तावपि** मुक्तिकालेऽपि विष्णुत्वं **ब्रह्मरुद्रादिभावं** ब्रह्मरुद्रादित्वं विष्ण्वादिसाम्यं तदाधिक्यं तदधीनत्वाभावं वा स्वात्मनो न भविष्यतीति योऽनुसन्दध्यात् स सकलभाग् भवति नान्यथेत्यादि पूर्ववत् ।। ११४-११६ ।।

**अ.सं.**— विद्यासाधकानामितिकर्तव्यतान्तरमाह– **शुभानिति** ।। ये **शुभान्** अभीष्टान् गुरुदेवप्रसादजान् ध्यायन्ति। **इतरान्** अशुभा**नात्मपापोत्थान्** स्वपापजन्यान् ध्यायन्ति। तेषां विद्याः फलिष्यन्ति। 'मम यच्छुभं जातं तत् अस्मद्गुरुदेवतानुग्रहेणैव। मम यदशुभं तत् मत्पापेनैव' इत्यनुसन्धानवतां पुरुषाणां विद्या फलप्रदा भवतीति भावः ।।

अधिकारिणामित्थंभावान्तरमाह– **मुक्ताविति** ।। मुक्तावपि संसारे च **आत्मनः** स्वात्मनः **विष्णुतां** विष्ण्वैक्यमिति यावत्। **ब्रह्मरुद्रादिभावं वा** विष्णोर्ब्रह्मरुद्राद्यैक्यं वा ब्रह्मादिसाम्यं वा ब्रह्मादीनामाधिक्यमेव वा तेषाम**तद्वशत्वं** वा विष्ण्वधीनत्वाभावं वा **क्वचित्** सर्वथा न स्मरेत्। तदभावादिति भावः । किन्तु विष्णोः स्वस्माद्भेदं ब्रह्माद्युत्तमत्वं ब्रह्मादिस्वामित्वं च स्मरेदिति शेषः । **स तु** स एव **सिद्धिभाक्** विद्याफलवान् भवति। **अन्यथा** पूर्वोक्तगुणाभावे कल्पकोटिशतैरपि अनुष्ठिताभिर्विद्याभिः **सिद्धिं** फलं नाप्नोति ।। ११४-११६ ।।

**गु.दी.**– मन्त्रविद्याप्रयोगादौ कर्तृगुणान्तराण्याह— **शुभानिति** ।। काम्यन्त इति कामाः विषयास्तान्। तदुत्थसुखविशेषांश्च गुर्वाद्यनुग्रहसम्भवान्। **इतरान्**

अशुभान्। आध्यात्मिकादिक्लेशानात्मपापोत्थान् ये **ध्यायन्ति** चिन्तयन्ति तेषां विद्या फलिष्यति ॥

आत्मनो ब्रह्मैक्यज्ञानं मोक्षसाधनमिति केचित्। आत्मनः सर्वाभेदज्ञानं मोक्षासाधनमित्यन्ये आस्थिषत। सर्वत्र तारतम्याभावज्ञानं मोक्षसाधनमिति अपरे। अतः सर्वेभ्योऽभ्यधिका भक्तिरित्यादिकं कथमुपपाद्यत इत्यत आह— **मुक्तावपीति ॥** अन्योन्यसमुच्चयेऽपिचशब्दौ। आत्मन इति सर्वत्र सम्बध्यते। तथा च मुक्तौ संसारेऽपि **आत्मनः** स्वस्य **विष्णुतां** विष्ण्वभेदम्। **ब्रह्मरुद्रादिभावं** ब्रह्मरुद्रादित्वम्। ब्रह्मत्वं रुद्रत्वमादिपदादिन्द्रादित्वम्। ब्रह्मादिभिर्विष्णुना च स्वस्य साम्यं वा तेभ्य आधिक्यं वा। **अतद्वशत्वं** तदधीनत्वाभावं वा यो न स्मरेत् सोऽधिकारी **सिद्धिभाक्** फलप्राप्तिमान् भवति। **अन्यथा** मुक्तौ संसारे च आत्मनो विष्णुत्वादिस्मरणे। कल्पानां याः कोटयस्तासां शतैरपि। वहुत्वोपलक्षणमेतत्। वहुकल्पैरपि सिद्धिभाङ् न भवति।

इदमुक्तं भवति। न तावदैक्यादिज्ञानं मोक्षसाधनम्, अन्यथाज्ञानत्वात्। न हि जीवेशयोरैक्यं कदाऽप्यस्ति। संसृतौ तावदहमज्ञ इति साक्षिणा श्रुतिसिद्धेश्वराद्भेद एवावसीयते। तथा हि। जीवस्तावत्प्रत्यक्षसिद्धः। स तु 'यः सर्वज्ञः' इत्याद्यागमसिद्धेश्वरगुणभूतसार्वज्ञ्यादिविरुद्धाज्ञानादिकं 'अहमज्ञः' 'मामन्यं च न जानामि' इति स्वात्मन्यनुभवन् ततो भेदं प्रत्येत्येव। प्रत्यक्षे धर्मिणि भेदक-धर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वात् 'पृथगुपदेशात्' (ब्र.सू. २-३-२८) इत्यादि शास्त्राच्च। 'द्वा सुपर्णा' (ऋ.सं.१-१६४-२०, आ.उ.२-१) इत्यादि निरवकाशवाक्याच्च। मुक्तावपि 'यज्ञस्य मात्रां विमिमीत उ त्वे' इति भेद एवावसीयते, ध्यातृध्येययोर्भेदनियमात्। न च

ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः।
दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥ (भा.१०-७८-४)

इत्यादावित्रोपपत्तिः। 'पूर्णमदः पूर्णमिदम्' (बृ.उ.) इत्याद्यनन्तश्रुतिसिद्धाभेदे भेदकार्यस्य विशेषवलादुपपत्तेः। अभिन्नेऽनुपचरितभेदव्यवहारहेतुर्विशेषः। घटपटभेदव्यवहारे विशेषाभावादभिन्नेत्युक्तम्। पशुकार्यकारित्वेन पशुसदृशं

कश्चित्पुरुषं दृष्ट्वोच्यते 'अयं पुरुषो न' इति। तत्राभिन्ने पुरुषे 'पुरुषो न' इति भेदव्यवहारहेतुर्विशेषः क्लृप्तः स्यादत उक्तमनुपचरितेति। स तूपचरित इति नातिप्रसङ्गः। स्पष्टं च जीवेश्वरयोः भेदकधर्मवत्त्वं विष्णुपुराणे—

उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः।
स्वाभाविकं तयोरेतन्नान्यथाऽस्मात्कथञ्चन ॥ इति।

न हि कदापि जीवेश्वराभेदे प्रमाणमस्ति। न च 'तत् त्वमसि' (छा.उ.६-३-१४) इत्यादीन्यत्रापि सन्तीति वाच्यम्। तेषां शास्त्रेऽन्यथा व्याख्याततत्वात्। तत ऐक्यस्यान्यथात्वेन तज्ज्ञानमन्यथाज्ञानमिति, अन्यथाज्ञानं च नरकहेतुत्वेन प्रमितमिति न तन्मोक्षसाधनम्। एवं सर्वाभेदज्ञानमपि। तारतम्यस्याप्यनन्त-श्रुतिपुराणवाक्यैः शास्त्रे साधितत्वेन तदभावज्ञानमप्यन्यथाज्ञानमेवेति न तारतम्याभावज्ञानमपि मोक्षसाधनमिति ॥११४-११६ ॥

**मङ्गाली–** विद्यासाधकानामितिकर्तव्यतान्तरमाह– **शुभानिति ॥** ये **शुभान्** कामानभीष्टान् गुरुदेवप्रसादजान् ध्यायन्ति **इतरानशुभान् आत्मपापोत्थान्** स्वपापजन्यान् ध्यायन्ति तेषां विद्याः फलिष्यन्ति ॥

अधिकारिणामित्थंभावान्तरमाह– **मुक्ताविति ॥** मुक्तावपि संसारे च **आत्मनः** स्वात्मनः **विष्णुतां** विष्णौक्यमिति यावत्। **ब्रह्मरुद्रादिभावं** वा विष्णोः ब्रह्माद्यैक्यं वा ब्रह्मादीनां विष्णुसाम्यं वा विष्ण्वाधिक्यमेव वा। 'साम्याधिक्ये त्वदन्येषां' इत्युक्तेः। ब्रह्मादीनां **अतद्वशत्वं** वा विष्णवधीनत्वाभावं वा **क्वचित्सर्वथा न स्मरेत्**। तदभावादिति भावः। किन्तु विष्णोः स्वस्माद्भेदं ब्रह्माद्युत्तमत्वं ब्रह्मादिस्वामित्वं च स्मरेदिति शेषः। **स तु स** एव **सिद्धिभाक्** विद्याफलवान् भवति। **अन्यथा** पूर्वोक्तगुणाभावे कल्पकोटिशतैरपि अनुष्ठिताभिर्विद्याभिः सिद्धिं फलं नाप्नोति ॥ ११४-११६ ॥

विद्यारम्भकाले स्मर्तव्यगुरुनिरूपणम् गुरूमन्त्रयोरवज्ञाकृतेऽनर्थकथनं च

**तं.सा. स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरूंस्तथा(गुरू तथा) ॥११७॥**

**देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ।**

**अवज्ञाता गुरूणां च देवतानां न सिद्ध्यति ।। ११८ ।।**
**प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च ।**

**यस्तारतम्यवेत्ता स्याद्गुरूणां देवतास्वपि ।। ११९ ।।**
**भक्तिमान् गुरुदेवेषु वासुदेवे(तद्भक्तेषु) च सिद्ध्यति ।**

**गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ।। १२० ।।**

**अकामक्रोधलोभश्च न चिरात् सिद्धिमाप्नुयात् ।**
**सकामेभ्योऽमितगुणा ह्य(याऽ)कामैस्तु कृताः क्रियाः ।। १२१ ।।**

**तस्मादकाम एवालं भजेद्विष्णुं सनातनम् ।।**

**त.क.–** न केवलं गुरुभक्तिमात्रेणैवालम् । किन्तु गुरुस्मरणमपि, तन्नतिरपीति भावेन गुरुनमस्कारक्रममाह— **स्मृत्वेति ।। गुरुं** साक्षाद्विद्योपदेष्टारम् । **पूर्वगुरुं** परमगुरुम् । आदिगुरुमित्यादिशव्देन सर्वगुरवः सर्वदेवताश्च संगृह्यन्ते । **मूलगुरुं** श्रीमदाचार्यम् । **देवता**शव्देन व्यासभारतीसरस्वतीवायुव्रह्मलक्ष्म्यो गृह्यन्ते । **वासुदेव**शव्देन नारायणः । चशव्दात् नमन् विद्याभ्यासी मन्त्रजपादिकर्ता च **सिद्धिभाक्** फलप्राप्तिभाग् भवति । तथा च— श्रीगुरुभ्यो नमः । परमगुरुभ्यो नमः । सर्वगुरुभ्यो नमः । सर्वदेवताभ्यो नमः । श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः । श्रीवेदव्यासाय नमः । भारत्यै नमः । सरस्वत्यै नमः । वायवे नमः । व्रह्मणे नमः । महालक्ष्म्यै नमः । नारायणाय नमः । इति क्रमेण द्वादशनमस्कारोऽत्र ज्ञातव्यः ।

अन्वयमुक्त्वा व्यतिरेकमाह— **अवज्ञातेति ।।** अवज्ञानं विस्मरणं नत्यभावादि । गुरुग्रहणेनैव सिद्धेऽपि देवताग्रहणं तदावश्यकतां सूचयति । अनिष्टप्राप्तिं चाऽह— **प्रयाति चेति ।।** गुर्ववज्ञाऽन्योपलक्षणमित्याह— **मन्त्रेति ।।** तदवज्ञा तस्मिन्नविश्वासः । एवशव्देन काकतालीयत्वं व्यावर्तयति ।

गुर्ववज्ञा न कार्येत्येतावता उत्तमत्वं मन्तव्यमित्याह— **य इति** ।। गुरूणां सकाशाद्देवतासु रमादिषु वासुदेवे नारायणे च तारतम्यं यो वेत्ता स सिद्ध्यतीत्यन्वयः। गुरुदेवेषु वासुदेवे च भक्तिमानिति पुनर्वचनमादरार्थम्। 'तद्भक्तेषु च सिद्ध्यति' इति च क्वचित् पाठः। न केवलमवज्ञाभावमात्रेण पूर्यत इत्याह— **गुरुदेवेति** ।। स्वगुरोर्देवतानां च प्रतीपानां निन्दादिकारिणां स्वयं विमुखः सहवासादिरहितः, **तत्प्रिये रतः** गुर्वादिप्रियेषु सख्यमापन्नः, कामादिरहितश्च **नचिरात्** शीघ्रं सिद्धिमाप्नुयादित्यर्थः। तदेवं पूर्वोक्तस्य धान्वन्तरमन्त्रस्य क्वचित् फलानुपलम्भः ऋत्विजां यजमानस्य चायोग्यत्वात्, गुरुभक्तिसदाचारादिराहित्यात्, कचिद्विपरीतभक्तिपूजादिना, क्वचित् शुभप्राप्तौ गुरुप्रसादजत्वाननुसन्धानेन, क्वचिद् दुःखप्राप्तौ गुर्वादावविश्वासेन, स्वस्य विष्णोर्वा साम्यज्ञानेन, क्वचिदतद्वशत्वज्ञानेन, क्वचिद् द्वादशगुरुनमस्कार-परित्यागेन विद्याप्रारम्भेण, क्वचिद्गुरुदेवतयोस्तारतम्यापरिज्ञानात्, क्वचिद्गुरुदेवता-प्रतीपैः सहवासात् कामक्रोधाभिभूतत्वादिनाऽन्यथासिद्ध इत्युक्तं नायुक्त-मित्युक्तम्।

ननु गृह्णीमैतत्सर्वम्। कामस्य फलप्रतिबन्धकत्वं तु न मृष्यामहे। कामनाया अधिकारसम्पादकत्वेनाऽवश्यकत्वश्रवणात्। न ह्यकामः क्वचित् प्रवर्तते। अकामिनः फलाभावेन च शास्त्राप्रामाण्यमित्यत आह— **सकामेभ्य इति** ।। कामनासहितेभ्यः कृता या क्रिया तदपेक्षयाऽकामैः कृता क्रिया त्वमितगुणा भवतीति योज्यम्। न वयं कामस्य फलमात्रे प्रतिबन्धकतामाचक्ष्महे। किन्त्वतिशयितफलप्राप्तौ। अल्पफलं च पद्मरागमणेस्तण्डुलमुष्टिरिवाफलमेव। तदभिप्रायेणैव प्रतिबन्धकत्वोक्तिः। अल्पफलप्रयोजकताऽप्यस्तीत्यधिकारिविशेष-णत्वं कामनायाः क्वचिदुच्यते ।।

अल्पफलकामनाया निषिद्धत्वे महाफलज्ञानादिकामनायास्तदभावात्, अत एव प्रवृत्त्यनुपपत्तिरपि समाहितेति भावेनोपसंहरति— **तस्मादिति** ।। यस्मात् **अकाम एव** अल्पकामनारहित एव विष्णुमलं **भजेत्** सम्यक् प्राप्नोति तस्मादकाम एव भजेदित्यावृत्त्या योजनीयम् ।। ११७-१२१ ।।

**अ.सं.—** विद्यारम्भकाले एते स्मर्तव्या इत्याह– **स्मृत्वेति ।। गुरुं** साक्षद्गुरुं विद्यादातारं **पूर्वगुरुं** साक्षाद्गुरोर्गुरुं **आदिगुरुं** श्रीमध्वाचार्यं **मूलगुरून्** व्यासादिनारायणान्तात् । सप्तमूलगुरवश्चोक्ताः पञ्चरात्रे–

व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ।
तथा नारायणं मूलगुरूनहुर्विपश्चितः ।। इति ।

**देवतां** विद्यादेवताम् । **वासुदेवं** वासुदेवपदवाच्यम् । **विद्याभ्यासी** विद्याभ्यासं करिष्यन् **सिद्धिभाक्** फलभाक् ।।

'न चान्यथा' इत्यादिना हरिगुरुभक्तेरावश्यकत्वमुक्तम् । प्रसङ्गात्तदवज्ञा-कर्तुरनर्थमाह– **अवज्ञातेति ।। न सिद्ध्यति** फलभाक् न भवति । न केवलमिष्टाप्राप्तिः। किं तर्हि अनर्थश्च भवतीत्याह– **प्रयाति चेति ।।** मन्त्रावज्ञाकृच्च पुरुषः घोरं तमः प्राप्नोत्येव इत्यनेन मन्त्रे विश्वासोऽप्यङ्गमिति सूचयति ।।

गुरुदेवतातारतम्यज्ञानं चाङ्गमित्याह– **य इति ।।** देवतास्वपीति सप्तमी षष्ठ्यर्थे। **तद्भक्तेषु** गुरुदेवताभक्तेषु चेत्यर्थः । गुरुदेवताभक्तेरावश्यकत्वज्ञापनार्थं 'भक्तिमान् गुरुदेवेषु' इति पुनर्वचनम् ।।

अत्यावश्यकमङ्गान्तरमाह– **गुरुदेवेति ।।** गुरुदेवविरोधिनां **विमुखः** तत्र स्नेहरहितः तन्मुखविलोकनादिरहित इति यावत् । **तत्प्रिये** तयोः गुरुदेवयोः प्रिये हिते **रतः** आसक्तः। **अकामक्रोधलोभश्च** कामः निषिद्धः । क्रोधलोभौ सर्वात्मना । एते त्रयः यस्य न सन्ति स तथोक्तः । **न चिरात्** शीघ्रम् ।।

फलानुसन्धानराहित्यमप्यावश्यकाङ्गमित्याह– **सकामेभ्य इति ।। अकामैः** इदं फलं मे भूयादिति फलानुसन्धानरहितैः सत्कर्मकारिभिः पुरुषैः या क्रिया कृता **सकामेभ्यः** फलानुसन्धावनवद्भिः पुरुषैः कृतायाः क्रियायाः सकाशात् अमितफलदा । यतः तस्मात् **अकाम एव** निष्काम एव सन् । जपपूजादिकर्मभिः **अलं** अञ्जसा सनातनं विष्णुं भजेत् ।। ११७-१२१ ।।

**गु.दी.—** इदानीं विद्यारम्भकाले गुर्वादिस्मरणरूपमित्थम्भावान्तरमाह—

**स्मृत्वेति** ।। अनेन स्मृतिपूर्वं नमनमभिप्रेतम् । **गुरुं** विद्योपदेष्टृस्वगुरुम् । **पूर्वगुरुं** गुरोर्गुरुम् । **आदिगुरुम्** आनन्दतीर्थश्रीचरणम् । **मूलगुरून्** व्यासादिनारायणान्तान् सप्त । तदाह पञ्चरात्रे—

व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ।
ततो नारायणं मूलगुरूनाहुर्विपश्चितः ।। इति ।

**देवतां** विद्याप्रतिपाद्यदेवताम् । **'या तेनोच्यते सा देवता'** (सर्वानुक्रमणी.१-२) इति अभियुक्तोक्तेः । **मोक्षप्रदं वासुदेवं च स्मृत्वा । अयमत्र सम्प्रदायः । यदा यन्मन्त्रजपः क्रियते तदा तन्मन्त्रप्रतिपाद्यदेवतानत्यन्तरं वासुदेवनतिरनुष्ठेयेति । अपरे तु— देवतां वासुदेवमिति सामानाधिकरण्यम् । देवताशब्दस्य नित्यस्त्रीलिङ्गत्वात् न विरोध इत्याहुः । अत्र केचित् गुरुशब्देन साक्षात् स्वगुरुः सर्वे गुरवश्च विवक्षिताः । एकवचनं समुदायाभिप्रायम् । पूर्वगुरुशब्देन गुरुगुर्वादयः ।** **आदिगुरुः** श्रीमदाचार्यः । **मूलगुरुः** वेदव्यासः । अत्र देवताशब्देन महालक्ष्मीः ब्रह्माणीभारत्यौ सर्वदेवताश्च विवक्षिताः । वासुदेवं च वसुदेवसुतं कृष्णम् । चशब्दाद्ब्रह्मवायू इति ।

**'न चान्यथे'त्यादिना** (तं.सा.४-११७) हरिगुरुभक्तेरावश्यकत्वमुक्तम् ।। प्रसङ्गात् तदवज्ञाकर्तुरनर्थमाह— **अवज्ञातेति** ।। **देवतानां** मन्त्रप्रतिपाद्यानां **गुरूणां** ब्रह्मादीनां चशब्दात् वासुदेवस्य **चावज्ञाता** अपमानकर्ता न सिध्यति । **घोरं** अपुनरुत्थानं तमश्च प्रयाति । न केवलमयं किन्तु देवताप्रतिपादकगुरूक्तमन्त्रावज्ञाकृच्च तम एव यातीति यात्येवेति वा सम्बन्धः । अनेन मन्त्रे विश्वासश्चाङ्गमिति सूचितं भवति । गुरुदेवतातारतम्यज्ञानं चाङ्गमित्याह— **य इति** ।। **देवतास्विति** सप्तमी षष्ठ्यर्थे । गुरुदेवताभक्तेरत्यावश्यकत्वज्ञापनाय **पुनर्भक्तिमान् गुरुदेवेषु** इत्युक्तम् । अत्र गुरुशब्देन सम्प्रदायप्रवर्तनद्वारा विशेषज्ञानदायका एवोच्यन्ते । न तु स्वोत्तममात्राः । **तद्भक्तेषु** देवतागुरुभक्तेषु भक्तिमानिति पृथग्विद्यमानत्वात् । **गुरुदेवप्रतीपानां** गुरुदेवताद्वेषिणां **विमुखः** विरोधीति यावत् । **तत्प्रिये** गुरुदेवताप्रिये रतः । **कामो** दुर्विषये । **क्रोधः** सत्सु । **लोभः** सत्पात्रे वित्तत्यागानिच्छा । तैः शून्यः ।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ।। (भ.गी.१६-२१)

इति गीतोक्तेः। **नचिरात्** शीघ्रम्। काम्यकर्मिभ्यः निवृत्तकर्मिण आधिक्यं वदन् अकामनया विष्णुभजनं विधत्ते— **सकामेभ्य इति ।। सनातनं** नादेन सहितः सनादनः। स एव सनातनस्तम्। वेदवेद्यमित्यर्थः। **अलं** सुष्ठु ।। ११७-१२१ ।।

**मङ्गाली–** विद्यारम्भकालेऽपि एते स्मर्तव्या इत्याह– **स्मृत्वेति ।। गुरुं** साक्षाद्गुरुं विद्यादातारं **पूर्वगुरुं** साक्षाद्गुरोर्गुरुं श्रीमध्वाचार्यं **मूलगुरून्** व्यासादिनारायणान्तान्। सप्त मूलगुरवश्चोक्ताः पञ्चरात्रे–

व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ।
तथा नारायणं मूलगुरूनाहुर्विपश्चितः ।। इति ।

**देवतां** विद्यादेवतां **वासुदेवं** वासुदेवपदवाच्यं **विद्याभ्यासी** विद्याभ्यासं करिष्यन् **सिद्धिभाक्** फलभाक् ।।

'न चान्यथा'(तं.सा.४-११७) इत्यादिना हरिगुरुभक्तेरावश्यकत्वमुक्तम्। प्रसङ्गात्तदवज्ञाकर्तुरनर्थमाह– **अवज्ञातेति ।। न सिद्ध्यति** फलभाङ् न भवति। न केवलमिष्टाप्राप्तिः किं तर्हि अनर्थश्च भवतीत्याह– **प्रयाति चेति ।।** मन्त्रावज्ञाकृच्च पुरुषः घोरं तमः प्राप्नोति । अनेन मन्त्रे विश्वासोऽप्यङ्गमिति सूचयति ।।

गुरुदेवतातारतम्यज्ञानं चाङ्गमित्याह– **य इति ।।** देवतास्वपीति सप्तमी षष्ठ्यर्थे। **तद्भक्तेषु** गुरुदेवताभक्तेष्वित्यर्थः। गुरुदेवताभक्तेरत्यावश्यकत्वज्ञापनार्थं 'भक्तिमान् गुरुदेवेषु' इति पुनर्वचनम् ।।

अत्यावश्यकमङ्गान्तरमाह– **गुरुदेवेति ।।** गुरुदेवविरोधिनां **विमुखः** तत्र स्नेहरहितः तन्मुखावलोकनरहित इति यावत् । **तत्प्रिये** गुरुदेवतयोः प्रिये हिते **रतः** आसक्तः। **अकामक्रोधलोभश्च** कामः निषिद्धविषयकः, क्रोधलोभौ सर्वात्माना एतन्त्रयो यस्य न सन्ति स तथोक्तः। **नचिरात्** शीघ्रम् ।।

फलानुसन्धानराहित्यमप्यावश्यकाङ्गमित्याह– **सकामेभ्य इति** ।। **अकामैः** इदं फलं मे भूयादिति फलकामनारहितैः सत्कर्मकारिभिः पुरुषैः या क्रिया कृता सा **सकामेभ्यः** फलानुसन्धानवद्भिः पुरुषैः कृतायाः क्रियायाः सकाशादमितफलदा । **यतः** तस्मात् । **अकाम एव** निष्कामः सन् जपपूजादिकर्मभिः **अलं** अञ्जसा सनातनं विष्णुं भजेत् ।। ११७-१२१ ।।

वेदोक्तधान्वन्तरमन्त्रः धान्वन्तरमन्त्रोक्तजपतर्पणादीनां वराहदिसर्वमन्त्रेष्वतिदेशश्च

**तं.सा. अयं मे हस्त इति च मन्त्रः पूर्वोक्तवत् स्मृतः ।। १२२ ।।**
**अत्रोक्तास्तु क्रियाः सर्व(पूर्व)मन्त्रेष्वप्युपलक्षणम् ।**

**ता.क.–** एवं धान्वन्तरमन्त्रस्य प्रसक्तानुप्रसक्त्या महामन्त्रत्वं प्रसाध्य तस्यैव वेदरूपं मन्त्रान्तरमाह— **अयमिति** ।। 'अयं मे हस्तो भगवान्' (ऋ.सं.१०-६०-१२) इत्येका ऋक् धन्वन्तरेरपरो मन्त्रः **पूर्वोक्तवत्** धान्वन्तराष्टाक्षरमन्त्रवत् फलप्रसवः सर्वशास्त्रेषु स्मृतः । नन्वनयोरेव मन्त्रयोः बहव इतिकर्तव्यताविशेषाः फलविशेषश्च कथिताः । तर्हि कुतो वराहादिमन्त्रा उद्धृताः । किञ्च तेष्वपि तत्र कथितफलानुपलम्भबाधः कथं परिहरणीय इत्यत आह– **अत्रेति** ।। धान्वन्तरमन्त्रप्रकरण उक्ताः **क्रियाः** जपतर्पणहोमगुरुदेवतापूजादिरूपाः वराहादिमन्त्रेष्वप्युपलक्षणं फलानुपलम्भादि-व्यावर्तकमित्यर्थः ।। १२२ ।।

**अ.सं.–** एवं प्रासङ्गिकमुक्त्वा इदानीं वैदिकधान्वन्तरं मन्त्रमाह– **अयमिति** ।। 'अयं मे हस्तो भगवान्' इति एकऋगात्मको मन्त्रश्च **पूर्ववत्** (ऋ.सं.१०-६०-१२) पूर्वोक्तधन्वन्तरिमन्त्रवत् **स्मृतः** धन्वन्तरिप्रतिपादकः । उक्ताशेषफलप्रदश्चेत्यर्थः । व्यस्तसमस्तपादैः पञ्चाङ्गानि, अनुष्टुप्छन्दश्च ज्ञेयम् । धन्वन्तरिमन्त्रोक्तजपतर्पण-होमादिक्रियाः सर्वमन्त्रेष्वतिदिशति– **अत्रेति** ।। **अत्र** धन्वन्तरिमन्त्रे **क्रियाः** जपादयः **सर्वमन्त्रेषु** पूर्वोक्तसर्वमन्त्रेष्वपि **उपलक्षणं** जपहोमादिकर्तव्यतायां ज्ञापका इत्यर्थः ।। १२२ ।।

**गु.दी.–** एवं प्रासङ्गिकं समाप्यावश्यवक्तव्यमवशिष्टमन्त्रमाह– **अयं म इति** ।।

**अयं मे हस्तो भगवानयं मे भगवत्तरः ।**

**अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ।।** (ऋ.सं.१०-६०-१२)

इति **मन्त्रश्च** पूर्वोक्तधान्वन्तरमन्त्रवत् धन्वन्तरिप्रतिपादक उक्ताशेषफलकश्चेति **स्मृत** इत्यर्थः । **अयं** बुद्धिसन्निहितः **मे हस्तः** हस्तस्थितो धन्वन्तरिः **भगवान्** समग्रैश्वर्यगुणः । स्वयोग्यसमग्रैश्वर्यादिमत्त्वेन लक्ष्म्यादावपि भगवच्छब्दवृत्तेः कथमीश्वरे विशेषणत्वमित्यत उक्तं– **भगवत्तर इति ।।** अनन्याधीननिरवधिकानन्तसमग्रैश्वर्यादिगुणवानतिशयेनेति भगवत्तरः । **विश्वभेषजः** सर्वानिष्टनिवर्तकत्वेनौषधस्थानीयः शिवस्य परममङ्गलस्य अभिमर्शनं सम्वन्धो यस्मात्स **शिवाभिमर्शन** इति मन्त्रार्थः । धान्वन्तरमन्त्रोक्तप्रयोगानन्यमन्त्रेष्वतिदिशति— **अत्रेति ।।** धान्वन्तरमन्त्रे **सर्वमन्त्रेषु** वराहादिमन्त्रेषु उपलक्षणं यथा भवति तथा द्रष्टव्या इत्यर्थः । 'पूर्वमन्त्रेषु' इति क्वचित्पाठः ।। १२२ ।।

**मङ्गाली–** एवं प्रासङ्गिकमुक्त्वा इदानीं वैदिकं धन्वन्तरमन्त्रमाह– **अयमिति ।।** 'अयं मे हस्तो भगवान्' (ऋ.सं.१०-६०-१२) इति एकऋगात्मको मन्त्रश्च । **पूर्ववत्** पूर्वोक्तधन्वन्तरिमन्त्रवत् **स्मृतः** धन्वन्तरिप्रतिपादकः उक्ताशेषफलप्रदश्चेत्यर्थः । व्यस्तसमस्तपादैः पञ्चाङ्गानि । अनुष्टुप्छन्दश्च ज्ञेयम् । धन्वन्तरिमन्त्रोक्त-जपतर्पणहोमादिक्रियाः सर्वमन्त्रेष्वतिदिशति– **अत्रेति ।। अत्र** धन्वन्तरिमन्त्रे । **क्रियाः** जपादयः **सर्वमन्त्रेषु** पूर्वोक्तसर्वमन्त्रेष्वपि **उपलक्षणं** जपहोमादि कर्तव्यतायां ज्ञापका इत्यर्थः ।। १२२ ।।

मन्त्रविशेषाणां फलविशेषकथनम्

**तं.सा. विजयस्तम्भनादीनि नारसिंहैर्विशेषतः ।। १२३ ।।**

**जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि ।**

**वाराहैः स्तंभनं क्षिप्रं श्रीकराः कथिताः पुरा ।। १२४ ।।**

**त.क.—** प्रसङ्गात् पूर्वोक्तानां मन्त्राणां विनियोगमाह— **विजयेति ।।** विजयस्त्वम्भनादीनि नारसिंहैः नृसिंहानुष्ठानादिभिः जामदग्न्यैः राघवैर्याद-

वैर्वाराहैश्च मन्त्रैः कार्याणीत्यनेन विजयस्तम्भनादौ विनियोग उक्तो भवति। तत्रापि विशेषमाह— **वाराहैरिति** ।। वाराहैः स्तम्भने कृतेऽग्निजलवाय्वादि-स्तम्भनाख्यं कार्यं क्षिप्रं भवति। श्रीकरास्तु मन्त्राः पूर्वमेव कथिताः। श्रीकराष्टाक्षरादय इत्यर्थः ।।

**अ.सं.**– इदानीं मन्त्रविशेषैः फलविशेषमाह– **विजयेति** ।। विजयस्तंभनादीनि कार्याणि फलानि सर्वमन्त्रैरपि भवन्ति । नारसिंहैः जामदग्न्यैः राघवैर्यादवैरपि मन्त्रविशेषैर्विशेषतो भवन्ति। तत्रापि वाराहैर्मन्त्रैः स्तम्भनं क्षिप्रं भवति। विजयः प्रसिद्धः। स्तम्भनशब्देनाग्निस्तम्भनं जलस्तम्भनं प्रतिवादिस्तम्भनं विषस्तम्भनं शत्रुस्तम्भनं चेत्यादिस्तम्भनानि ग्राह्याणि। स्तम्भनशब्दार्थस्तु अग्न्यादेः स्वकार्यकरणाक्षमत्वम्। **आदि**शब्देन शत्रूच्चाटनोन्मादसम्पादनादिकं ग्राह्यम्। क्षिप्रं ऐश्वर्यप्रदा मन्त्राः के इत्यत आह– **श्रीकरा इति** ।। पुरा कथिताः सर्वेऽपि मन्त्राः **श्रीकराः** सम्पत्करा इत्यर्थः । राज्यादिफलप्रदस्योक्तत्वात्तेषामिति भावः। यद्वा श्रीकरा इति बहुवचनमाद्यर्थे। श्रीकरशब्दस्यावृत्तिः। इतिशब्दश्चाध्याहार्यः। तथा च श्रीकरमन्त्रहंसमन्त्रादयः मन्त्राः **श्रीकराः** सम्पत्करा इति पूर्वं कथिता इत्यर्थः ।। १२३,१२४ ।।

**गु.दी.**— प्रसङ्गान्नृसिंहमन्त्रेष्वनुक्तं फलमाह— **विजयेत्यादिना** ।। **विजयः** प्रतिपक्षिपराजयः **स्तम्भनं** अग्न्यादिस्तम्भनं वाङ्कुद्रणं वा। **आदिपदेन** पिशाचोच्चाटनादीनि सर्वमन्त्रैरपि भवन्ति। नारसिंहैस्तु विशेषत इत्यर्थः। जामदग्न्यैरित्यादौ विशेषत इत्यनुवर्तते। श्रीकरा इति बहुवचनमाद्यर्थे। श्रीकरशब्दस्यावृत्तिः। इतिशब्दोऽध्याहार्यः। तथा च श्रीकरादयो मन्त्राः श्रीकरा इति कथिता इत्यर्थः। पुरा कथिताः सर्वेऽपि मन्त्राः **श्रीकराः** सम्पत्करा इति वा ।। १२३,१२४ ।।

**मङ्गाली**— इदानीं मन्त्रविशेषैः फलविशेषमाह– **विजयेति** ।। विजयस्तम्भनादीनि फलानि सर्वमन्त्रैरपि भवन्ति। नारसिंहैः जामदग्न्यै राघवैर्यादवैरपि मन्त्रविशेषैर्विशेषतो भवन्ति । तत्रापि वाराहैर्मन्त्रैस्तम्भनं क्षिप्रं भवति। विजयः प्रसिद्धः। स्तम्भनशब्देनाग्निस्तम्भनं जलस्तम्भनं प्रतिवादि-

स्तम्भनं शत्रुस्तम्भनं विषस्तम्भनं चेत्यादिस्तम्भनानि ग्राह्याणि। स्तम्भनशब्दार्थस्त्वग्न्यादेः स्वकार्यकारणाक्षमत्वम्। **आदिपदेन** शत्रूच्चाटनादिकं ग्राह्यम्। क्षिप्रमैश्वर्यप्रदाः मन्त्राः के इत्यत आह– **श्रीकरा इति** ॥ पुरा कथिताः सर्वेपि मन्त्राः संपत्करा इत्यर्थः ॥ १२३,१२४ ॥

विजयाद्युपयुक्ततत्तद्देवताध्यानकथनम्

**तं.सा. बहुबाहुं महाकायमुद्युक्तं चोद्यतायुधम्।**
**स्मरन् विजयमाप्नोति स्तम्भनादींश्च कारयेत् ॥ १२५ ॥**

**त.क.**— तत्फलान्तरेष्वितिकर्तव्यताविशेषमाह— **बहुबाहुमिति** ॥ स्मरन् मन्त्रं जप्त्वा विनियुज्य च विजयमाप्नोतीत्यर्थः। बहुबाह्वादिगुणकं तत्तद्देवताविशेषं हरिं च स्मरन् एतैर्मन्त्रैः स्तम्भनादीन् कुर्यात्। शिष्यैः कारयेद्वा ॥ १२५ ॥

**अ.सं.**– नृसिंहाद्यैर्मन्त्रैर्विजयादीनि भवन्तीत्युक्तम्। तत्र विजयादि-तत्तत्काम्यफलप्राप्त्यर्थं तत्तदुपयुक्तध्यानविशेषमाह– **बहुबहुमित्यादिना** ॥ उद्युक्तं शत्रुहननादौ। स्मरन् हरिमिति शेषः। विजयमााप्नोति। तथा वहुबाहुमित्यादिविशेषणवन्तं स्मरन् **स्तम्भनादीन्** स्तम्भनशत्रुमरणोच्चाटनादीनि प्रयोजनामि च **कारयेत्** साधयेत् प्राप्नुयादित्यर्थः ॥ १२५ ॥

**गु.दी.**– नृसिंहादिमन्त्रैः विजयादीनि भवन्तीत्युक्तम्, तत्र विजयादिप्राप्त्यर्थं तदुपयुक्तध्यानविशेषः कार्य इत्याह— **बहुबाहुमित्यादिना** ॥ बहवो बाहवो यस्य स बहुवाहुस्तम्। **महाकायं** स्थूलकायम्। **उद्युक्तं** वैरिसंहरणोद्योगसम्पन्नं स्मरन् **विजयं** पराभवमात्मन उत्कर्षं च **आप्नोति** लभते। स्तम्भनादीन् कारयेच्च ॥ १२५ ॥

**मङ्काली**– नृसिंहाद्यैर्मन्त्रैर्विजयादीनि भवन्तीत्युक्तम्। तत्र विजयादि तत्तत्काम्यफलप्राप्त्यर्थं तत्तदुपयुक्तध्यानविशेषमाह– **बहुबाहुमित्यादिना** ॥ उद्युक्तं शत्रुहननादौ, स्मरन् हरिमिति शेषः। विजयमाप्नोति। तथा बाहुमित्यादि

विशेषणवन्तं स्मरन् **स्तम्भनादीन्** स्तम्भनशत्रुमरणोच्चाटनादीनि प्रयोजनानि च **कारयेत्** साधयेत् प्राप्नुयादित्यर्थः ।। १२५ ।।

द्रविणप्राप्त्यर्थं ध्यानविशेषकथनम्

**तं.सा. वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् ।**
**वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः ।। १२६ ।।**

**श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् ।**

**त.क.–** द्रविणप्राप्तौ मन्त्रविनियोगे ध्यानप्रकारमाह— **वसुपूर्णेति** ।। करे द्रविणं दधतमित्यर्थः । अजादिभिः सेव्यमानं हरिं **विभावयन्** स्मरन् जपंश्च द्रव्यसिद्धिमाप्नोतीत्यर्थः । ऐश्वर्यविनियुक्तस्य मन्त्रस्य ध्यानविषयमाह–**श्रियेति** ।। लक्ष्म्या । तैर्विभूतिभिः तद्रूपविशेषैश्च युक्तं हरिं ध्यायन्नित्यर्थः ।। १२६ ।।

**अ.सं.—** द्रव्याद्युद्देशकमन्त्रजपध्यानमाह— **वस्विति** ।। **वसुपूर्णकरं** द्रव्यसम्पूर्णहस्तं रत्नपर्यङ्के विद्यमानं **अजादिभिः** ब्रह्मादिभिः सेव्यमानं हरिं विभावयन् वसुसिद्धिमवाप्नोति । ऐश्वर्याद्युद्देश्यकमन्त्रजपे ध्यानमाह– **श्रियेति** ।। **श्रिया** ऐश्वर्यनियामिकया लक्ष्म्या **विभूतिभिः** नानासम्पद्भिः युक्तं हरिं भावयन् **भूतिं** ऐश्वर्यमाप्नुयात् ।। १२६ ।।

**गु.दी.—** धनप्राप्तिसाधनं ध्यानविशेषं निरूपयति— **वसुपूर्णेति** ।। द्रव्यपूर्णकरं रत्नपर्वतेऽधिष्ठितं **विभावयन्** ध्यायन् **वसुसिद्धिं** स्वेच्छया द्रव्यलाभाख्यसिद्धिमाप्नोति । **श्रिया** रमया । **विभूतिभिः** सम्पद्भिः । **भूतिं** महालक्ष्मीम् ।। १२६ ।।

**मङ्गाली—** द्रव्याद्युद्देश्यकमन्त्रजपे ध्यानमाह– **वस्विति** ।। **वसुपूर्णकरं** द्रव्यसंपूर्णहस्तम् । रत्नपर्वते विद्यमानम् । **अजादिभिर्ब्रह्मादिभिः** सेव्यमानं हरिं **विभावयन्** ध्यायन् **वसुसिद्धिं** द्रव्यसिद्धिं अवाप्नोति । ऐश्वर्याद्युद्देश्यकमन्त्रजपे ध्यानमाह– **श्रियेति** ।। **श्रिया** ऐश्वर्यनियामकया लक्ष्म्या **विभूतिभिः** नानासंपद्भिः युतं हरिं भावयन् **भूतिमैश्वर्यमाप्नुयात्** ।। १२६ ।।

फलप्राप्त्यर्थं सामन्यतः ध्याननिरूपणं, सम्पदाद्यर्थं क्रियमाणहोमद्रव्यनिरूपणं च

**त.सा. यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ।। १२७ ।।**

**तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् ।**
**श्रिये पद्मानि जुहुयात् सम्प्रीत्या उत्पलानि च ।। १२८ ।।**

**शरान् जयाय जुहुयादभिमन्त्र्य प्रयोजयेत् ।**
**विद्यायै मन्त्रितं वारि वचां वा तुलसीमपि ।। १२९ ।।**

**ब्राह्मीं(सोमं)घृष्टं(वृतं) सुवर्णं वा शतावृत्त्या तु नित्यशः ।।**
**अकुर्वंश्च क्रिया भक्त्या निरपेक्षो भजन् हरिम् ।। १३० ।।**

**सर्वमेतदवाप्नोति विशेषेण न संशयः ।।**

**त.क.**— गौरवनिरासाय तत्तत्फलेषु विनियुक्तानां मन्त्राणां तत्तत्कलसिद्धि-हेतुभगवद्ध्यानप्रकारमाह— **यद्यदिति ।।** यस्य पुंसः पुत्रभार्यापरिवारादिकं यद्यन्मनोगतं प्रार्थितं स्यात् तथा तथा पुत्रभार्यायुक्तत्वेन हरिं ध्यायन् जपंश्च **तत्तत्** पुत्राद्याप्नोति । असंशयमित्यनेन 'तं यथा यथोपासते तथैव भवति' इति श्रुतिं सूचयति । न केवलं ध्यानमेव फलहेतुः किन्त्वित्यत आह– **क्रिया इति ।। तास्ताः** तावद्वक्ष्यमाणा होमरूपाः क्रियाः कुर्वंश्च तत्तदाप्नोतीति पूर्वेणान्वयः । ता एव क्रिया दर्शयति— **श्रिय इति ।।** ऐश्वर्यप्राप्त्यर्थं **पद्मानि** कमलानि तैर्मन्त्रैर्जुहुयात् । **जयाय** जयप्राप्त्यर्थं **शरान्** शरस्तम्बान् जुहुयात् । तदनु **शरान्** वाणांस्तत्तन्मन्त्रैरभिमन्त्र्य शत्रुषु प्रयोजयेच्च । ततो जयो भवतीति शेषः । **विद्यायै** विद्याप्राप्त्यर्थं ज्ञानसाधनत्वेन पूर्वोक्तैर्मन्त्रैः शतावृत्त्या **मन्त्रितं** अभिमन्त्रितं वारि, वचां, तुलसीं, ब्राह्मीं, **घृष्टं** चूर्णितं सुवर्णं वा नित्यशः पिबेत् भक्षयेच्च । ततो विद्याप्राप्तिर्भवतीति शेषः ।

नन्वकामक्रोधलोभश्चेति कामवर्जनमङ्गमुक्तं पूर्वम् । अधुना तु श्रियै, सम्प्रीत्यै, जयायेत्यादिना कामनाऽङ्गमुच्यते । तत्कथं न विरोध इति चेन्न । न ह्यत्र स्यादिति कामो विधीयते । किन्तु प्राङ्मुखोऽन्नानि भुञ्जीतेत्यादौ स्वतो

भोजने प्रवृत्तस्य प्राङ्मुखत्वादिनियमविधिवत् स्वतो रक्तस्य पञ्चहोमादिविधिरेव। नन्वेवं नियमविधिमहिम्नैवाकामस्य प्रकृतफलप्राप्तिर्न स्यात्। न च सकामेभ्य इत्यादिना परिहृतमेतदिति वाच्यम्। तत्र महाफलोक्तावप्यैश्वर्यादिप्राप्तेरनुक्तत्वादित्यत आह— **अकुर्वन्निति ।।** होमवारिजपादिरूपाः। **निरपेक्षः** फलापेक्षारहितः हरिं पूजयन्नेत**त्सर्व**मैश्वर्यादिकमाप्नोति। न केवलमेतावत्, विशेषेणामितगुणत्वादिनेत्यर्थः। पञ्चहोमादिविधानं तु रागादिकलुषितस्य तावद्विलम्बमसहमानस्याचिरात् फलप्राप्तावुपायाभिधानमेवेति भावः ।। १२७-१३० ।।

**अ.सं.–** इदानीं तत्तत्फलप्राप्त्यर्थं तत्तदुपयुक्तध्यानादिप्रकारं सामान्येनाह– **यद्यदिति ।। तस्य** फलकामिनः **यद्यत्** विद्यादिकं **मनोगतं** अपेक्षितं **तथा तथा** तत्तद्विद्यादियुक्तत्वेनेत्यर्थः। स्वस्वकामितफलवत्तयेति भावः । हरिं ध्यायन् **तास्ताः** स्वस्वमनोगततत्तत्प्रयोजनानुकूलाः क्रियाः **साधयन्** कुर्वन् तत्तत्स्वापेक्षितं फलं **असंशयं** निश्चयेनाप्नोति। 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः ।।

ताः क्रियाः लेशतो दर्शयति– **श्रिय इत्यादिना ।। श्रिये** ऐश्वैर्याय । **सम्प्रीत्यै** तृप्तये । होमानन्तरं शरान् मन्त्रेणाभिमन्त्र्य शत्रुषु **प्रयोजयेत्** प्रक्षिपेत् ।।

विद्याफलकं साधनविशेषमाह– **विद्यायै इति ।। विद्यायै** विद्याप्राप्त्यर्थं **नित्यशः** प्रतिदिनं शतावृत्त्या वेदव्यासादिमन्त्रैः मन्त्रितं वारि पिबेदिति शेषः। वचामित्यादौ मन्त्रितमिति पदस्य लिङ्गव्यत्ययेनानुवृत्त्या सम्बन्धः। वचायाः वजेत्यपभ्रष्टभाषा । **तुलसीमपि** तुलसीं वा । ब्राह्मीं ओन्देलग इत्यपभ्रष्टभाषा । 'सोमं' इति क्वचित्पाठः। सोमलतामित्यर्थः। **घृतं** आज्यं सुवर्णं वा। 'घृष्टं' इति क्वचित्पाठः। तत्र **घृष्टं** चूर्णितं सुवर्णमित्यर्थः। भक्षयेदिति शेषः ।।

'श्रिये' इत्यादिनोक्तक्रियाकरणं सकामस्यैव। अकामस्य तु न तन्नियम इत्याशयेनाह– **अकुर्वंश्चेति ।। निरपेक्षः** केवलैश्वर्यादिविषयकामनारहितः सन् **क्रियाः** पूर्वोक्ताः क्रियाः कर्माणि अकुर्वन्नपि भक्त्या हरिं भजन् **सर्वमेत**त्पूर्वोक्तं फलं विशेषतः सकामेन कृतकर्मलभ्यफलापेक्षया अतिशयेन प्राप्नोति। अत्र निरपेक्षपदेन भगवदुपासनानङ्गकेवलैश्वर्यादिकाम एव निषिद्ध्यते। न तु

काममात्रम्। भगवदुपासनाङ्गभूतैश्वर्यादिकामनाया अनिषिद्धत्वस्य च 'आवहन्ती वितन्वाना'(तै.उ.१-१०) त्यादौ दृष्टत्वादिति ज्ञातव्यम् ।। १२७-१३० ।।

**गु.दी.–** अथ सामान्यतः प्रयोगमाह— **यद्यदिति ।।** स्वमनोरथं यद्यद्विद्यादिकं तत्तद्विशिष्टत्वेनेत्यर्थः । **तास्ताः** स्वमनोगततत्तत्प्रयोजनानुकूलाः होमादीनि । **साधयन्** कुर्वन् तत्तदाप्नोति । ता एव क्रियाः लेशतो दर्शयति— **श्रिय इत्यादिना ।। श्रियै** सम्पदे **पद्मानि** सरसिजानि **सम्प्रीत्यै** सन्तृप्त्यै, 'तृप् सन्तर्पणे' इति धातोः, उत्पलानि **जयाय** जयार्थं **शरान्** इषून् समिद्विशेषान् वा जुहुयादिति सम्बन्धः । प्रयोजयेदित्यत्रापि शरानित्यस्यानुषङ्गः । तथाचाभिमन्त्र्य शरान् शत्रवे प्रयोजयेदित्यर्थः । **विद्यायै** विद्यार्थम् । धान्वन्तरादिभिर्मन्त्रैः शतावृत्त्याऽभिमन्त्रितं वारि नित्यशः पिबेदिति शेषः । वचां तुलसीं अत्रापि लिङ्गव्यत्ययेन मन्त्रितामिति मन्त्रितपदमनुवर्तते । भक्षयेदिति शेषः । **अपि**शब्दो विकल्पार्थे । **ब्राह्मीम्** वन्देलगु इत्यपभ्रष्टभाषा । 'सोमं' इति क्वचित्पाठः । तत्र सोमलताया रसमित्यर्थः । **घृष्टसुवर्णं** सुवर्णचूर्णं पिबेदित्यन्वयः ।।

निष्कामनया कुर्वाणस्येदं सर्वं भवतीत्याह— **अकुर्वन्निति ।। क्रियाः** होमाद्या अकुर्वन् । **निरपेक्षः** कामनाशून्यः भगवदुपास्त्यङ्गभूतैश्वर्यादिकामनाया अनिषिद्धत्वस्य 'आवहन्ती वितन्वाना' (तै.उ.१-१०) इत्यादौ दृष्टत्वात् केवलैश्वर्यादिविषयककामनारहितः । हरिं भजन् **एतत्सर्वं** जयैश्वर्यादिकं **विशेषेण** स्वकामनादपि विशेषेणावाप्नोति । नात्राधिकारिभिः संशयः कार्य इत्याह— **न संशय इति** ।। १२७-१३०।।

**मङ्गाली—** इदानीं तत्तत्फलप्राप्त्यर्थं तत्तदुपयुक्तध्यानप्रकारं सामान्येनाह– **यद्यदिति ।। तस्य** फलकामिनः **यद्यत्** विद्यादिकं मनोगतं अपेक्षितं **तथा तथा** तत्तद्विद्यादित्युक्तत्वेनेत्यर्थः । स्वस्वकामितफलवत्तयेति भावः । हरिं ध्यायन् **तास्ताः** स्वस्वमनोगततत्तत्प्रयोजनानुकूलाः क्रियाः **साधयन्** कुर्वन् तत्तत्स्वापेक्षितं फल**मसंशयं** निश्चयेनाप्नोति । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः ।।

ताः क्रियाः लेशतो दर्शयति– **श्रिय इत्यादिना** ।। **श्रिये** ऐश्वर्याय । **संप्रीत्यै** तृप्तये । जयाय **शरान्** तृणविशेषान् **जुहुयात्** अभिमन्त्र्य प्रयोजयेदित्यत्र शरानित्यस्यानुषङ्गः । अनुषक्तस्य तस्य बाणानित्यर्थः । होमानन्तरं शरान्मन्त्रेणाभिमन्त्र्य शत्रुषु **प्रयोजयेत्** प्रक्षिपेत् ।।

विद्याफलकं साधनविशेषमाह– **विद्याया इति** ।। **विद्यायै** विद्याप्राप्त्यर्थं **नित्यशः** प्रतिदिनं शतावृत्या वेदव्यासमन्त्रैर्मन्त्रितं वारि पिबेदिति शेषः । वाचामित्यादौ मन्त्रितमित्यस्य लिङ्गव्यत्ययेनानुवृत्या सम्बन्धः । वचायाः बजेत्यपभ्रष्टभाषा । **तुलसीमपि** तुलसीं वा **ब्राह्मीं** वन्देलग इत्यपभ्रष्टभाषा । 'सोमं' इति क्वचित्पाठः। सोमलतामित्यर्थः । **घृतमाज्यं** सुवर्णं वा । 'घृष्टं' इति क्वचित्पाठः । **घृष्टं** चूर्णितं सुवर्णमित्यर्थः । भक्षयेदिति शेषः ।।

श्रिय इत्यादिनोक्तं क्रियाकरणं सकामस्यैव। अकामस्य तु न नियम इत्याशयेनाह– **अकुर्वंश्चेति** ।। **निरपेक्षः** केवलैश्वर्यादिविषयकामनारहितः सन् क्रियाः पूर्वोक्ताः अकुर्वन्नपि भक्त्या हरिं भजन् **सर्वमेतत्** पूर्वोक्तं फलं **विशेषतः** सकामकृतकर्मफलापेक्षयाऽतिशयेन प्राप्नोति। अत्र निरपेक्षपदेन भगवदुपासना-नङ्गकेवलैश्वर्यादिकाम एव निषिध्यते। न तु काममात्रम्। तदङ्गभूतैश्वर्या-दिकामताया अनिषिद्धत्वस्य 'आवहन्ती वितन्वाना'(तै.उ.१-१०) इत्यादौ दृष्टत्वादिति ज्ञेयम् ।। १२७-१३० ।।

सृष्टिस्थितिसंहारभेदेन त्रिविधवर्णन्यासकथनम्

**तं.सा. सृष्टिस्थितिलयन्यासाः प्रातिलोम्या(प्रतिलोमा)नुलोमतः ।। १३१ ।।**

**स्थित्यन्ता एव वर्णानां श्रेष्ठा एव(वं) चतुर्दश ।**
**संहृत्यन्ता मोक्षिणां च(तु) एकविंशतिरेव वा ।। १३२ ।।**

**त.क.** ।। ननु—

काममात्रम्। भगवदुपासनाङ्गभूतैश्वर्यादिकामनाया अनिषिद्धत्वस्य च 'आवहन्ती वितन्वाना'(तै.उ.१-१०) त्यादौ दृष्टत्वादिति ज्ञातव्यम् ।। १२७-१३० ।।

**गु.दी.–** अथ सामान्यतः प्रयोगमाह— **यद्यदिति ।।** स्वमनोरथं यद्यद्विद्यादिकं तत्तद्विशिष्टत्वेनेत्यर्थः । **तास्ताः** स्वमनोगततत्तत्प्रयोजनानुकूलाः होमादीनि । **साधयन्** कुर्वन् तत्तदाप्नोति । ता एव क्रियाः लेशतो दर्शयति— **श्रिय इत्यादिना ।। श्रियै सम्पदे पद्मानि** सरसिजानि **सम्प्रीत्यै** सन्तृप्त्यै, 'तृप् सन्तर्पणे' इति धातोः, उत्पलानि **जयाय** जयार्थं **शरान्** इषून् समिद्विशेषान् वा जुहुयादिति सम्बन्धः । प्रयोजयेदित्यत्रापि शरानित्यस्यानुषङ्गः । तथाचाभिमन्त्र्य शरान् शत्रवे प्रयोजयेदित्यर्थः । **विद्यायै** विद्यार्थम् । धान्वन्तरादिभिर्मन्त्रैः शतावृत्त्याऽभिमन्त्रितं वारि नित्यशः पिबेदिति शेषः । वचां तुलसीं अत्रापि लिङ्गव्यत्ययेन मन्त्रितामिति मन्त्रितपदमनुवर्तते । भक्षयेदिति शेषः । **अपि**शब्दो विकल्पार्थे । **ब्राह्मीम्** वन्देलगु इत्यपभ्रष्टभाषा । 'सोमं' इति क्वचित्पाठः । तत्र सोमलताया रसमित्यर्थः । **घृष्टसुवर्णं** सुवर्णचूर्णं पिबेदित्यन्वयः ।।

निष्कामनया कुर्वाणस्येदं सर्वं भवतीत्याह— **अकुर्वन्निति ।। क्रियाः** होमाद्या अकुर्वन् । **निरपेक्षः** कामनाशून्यः भगवदुपास्त्यङ्गभूतैश्वर्यादिकामनाया अनिषिद्धत्वस्य 'आवहन्ती वितन्वाना' (तै.उ.१-१०) इत्यादौ दृष्टत्वात् केवलैश्वर्यादिविषयककामनारहितः । हरिं भजन् **एतत्सर्वं** जयैश्वर्यादिकं **विशेषेण** स्वकामनादपि विशेषेणावाप्नोति । नात्राधिकारिभिः संशयः कार्य इत्याह— **न संशय इति** ।। १२७-१३०।।

**मङ्गाली—** इदानीं तत्तत्फलप्राप्त्यर्थं तत्तदुपयुक्तध्यानप्रकारं सामान्येनाह– **यद्यदिति ।। तस्य** फलकामिनः **यद्यत्** विद्यादिकं मनोगतं अपेक्षितं **तथा तथा** तत्तद्विद्यादित्युक्तत्वेनेत्यर्थः । स्वस्वकामितफलवत्तयेति भावः । हरिं ध्यायन् **तास्ताः** स्वस्वमनोगततत्तत्प्रयोजनानुकूलाः क्रियाः **साधयन्** कुर्वन् तत्तत्स्वापेक्षितं फल**मसंशयं** विश्चयेनाप्नोति । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः ।।

ताः क्रियाः लेशतो दर्शयति– **श्रिय इत्यादिना** ।। **श्रिये** ऐश्वर्याय । **संप्रीत्यै** तृप्तये । जयाय **शरान्** तृणविशेषान् **जुहुयात्** अभिमन्त्र्य प्रयोजयेदित्यत्र शरानित्यस्यानुषङ्गः । अनुषक्तस्य तस्य बाणानित्यर्थः । होमानन्तरं शरान्मन्त्रेणाभिमन्त्र्य शत्रुषु **प्रयोजयेत्** प्रक्षिपेत् ।।

विद्याफलकं साधनविशेषमाह– **विद्याया इति** ।। **विद्यायै** विद्याप्राप्त्यर्थं **नित्यशः** प्रतिदिनं शतावृत्या वेदव्यासमन्त्रैर्मन्त्रितं वारि पिबेदिति शेषः । वाचामित्यादौ मन्त्रितमित्यस्य लिङ्गव्यत्ययेनानुवृत्या सम्बन्धः । वचायाः बजेत्यपभ्रष्टभाषा । **तुलसीमपि** तुलसीं वा **ब्राह्मीं** वन्देलग इत्यपभ्रष्टभाषा । 'सोमं' इति क्वचित्पाठः। सोमलतामित्यर्थः । **घृत**माज्यं सुवर्णं वा । 'घृष्टं' इति क्वचित्पाठः । **घृष्टं** चूर्णितं सुवर्णमित्यर्थः । भक्षयेदिति शेषः ।।

श्रिय इत्यादिनोक्तं क्रियाकरणं सकामस्यैव । अकामस्य तु न नियम इत्याशयेनाह– **अकुर्वंश्चेति** ।। **निरपेक्षः** केवलैश्वर्यादिविषयकामनारहितः सन् क्रियाः पूर्वोक्ताः अकुर्वन्नपि भक्त्या हरिं भजन् **सर्वमेतत्** पूर्वोक्तं फलं **विशेषतः** सकामकृतकर्मफलापेक्षयाऽतिशयेन प्राप्नोति । अत्र निरपेक्षपदेन भगवदुपासनानङ्गकेवलैश्वर्यादिकाम एव निषिध्यते । न तु काममात्रम् । तदङ्गभूतैश्वर्यादिकामताया अनिषिद्धत्वस्य 'आवहन्ती वितन्वाना'(तै.उ.१-१०) इत्यादौ दृष्टत्वादिति ज्ञेयम् ।। १२७-१३० ।।

सृष्टिस्थितिसंहारभेदेन त्रिविधवर्णन्यासकथनम्

**तं.सा.** **सृष्टिस्थितिलयन्यासाः प्रातिलोम्या(प्रतिलोमा)नुलोमतः ।। १३१ ।।**

**स्थित्यन्ता एव वर्णानां श्रेष्ठा एव(वं) चतुर्दश ।**
**संहृत्यन्ता मोक्षिणां च(तु) एकविंशतिरेव वा ।। १३२ ।।**

**त.क.** ।। ननु—

आगमोक्तेन मार्गेण न्यासान् नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिं च विन्दते ॥

अकृत्वा न्यासजातं यो मूढात्मा मन्त्रजापकः ।
विघ्नैः स बाध्यते नूनं व्याघ्रैर्मृगशिशुर्यथा ॥

वेदाः सप्तदशोत्पत्तौ वसुरुद्राश्चतुर्दश ।
नवतिथ्येकविंशश्च स्थितावावृत्तयो हृतौ ॥

नीचमध्योत्तमा ज्ञेया............... ।
सृष्टिः स्थितिः संहृतिश्च यावत्संख्या न पूर्यते ॥

तावत् पुनः पुनः कार्या न्यासे सृष्ट्यन्तकादिके ।
सृष्टिन्यासो वर्णिनां स्यात् संहृतिर्मोक्षमिच्छताम् ॥

स्थितिन्यासो गृहस्थानां त्रयं काम्यानुसारतः ।
हृत्यन्ता शेषसन्धाना हरिणी परिकीर्तिता ॥

विद्याप्रदा च सृष्ट्यन्ता वर्णिनां शुद्धचेतसाम् ।
स्थित्यन्ता स्याद् गृहस्थानां त्रयं काम्यानुसारतः ॥

इत्यादिवचनैः सप्रपञ्चं मन्त्राणां वर्णन्यासस्य निरूपितत्वात्, तत्तन्मन्त्रोद्धारावसरे तत्तन्मन्त्रगतवर्णानां तत्तन्न्यासस्थानाभिधानपूर्वकं वक्तव्यत्वात् तदनुक्तिः। न च,

आदिवर्णत्रयं नाभिहृच्छिरस्सु यथाक्रमम् ।
न्यसनीयं च तद्वर्णदेवताध्यानपूर्वकम् ॥

पञ्जानुनाभिहृदयवाङ्नासानेत्रकेषु च ।
अष्टाक्षराणां न्यासः स्यात्....... । (तं.सा.१-३५,३६)
नाभिहृत्केषु सर्वेषु चतस्रो व्याहृतीर्न्यसेत् । (तं.सा.१-३९)

इत्यादिना तदप्युक्तमिति वाच्यम्। सृष्टिस्थितिलयन्यासानां लक्षणस्य, तत्राधिकारिभेदस्याऽवृत्तिसङ्ख्यायाश्चानुक्तत्वात्। केषाञ्चित् त्रयस्त्रिंशाद्यक्षराणां

वाराहादिमन्त्राणामेकाक्षराणां त्र्यक्षराणां च मन्त्राणां स्थानविशेषानुक्तेश्चेत्याशङ्क्य लाघवेनैकीकृत्य वर्णस्थानानि संग्रहीष्यन् सृष्टिन्यासादिलक्षणमादौ दर्शयति– **सृष्टीति ।।** न्यासशब्दः प्रत्येकं सम्बध्यते। अनुलोमशब्दो भावप्रधानः। स चावर्तनीयः । प्रातिलोम्यं च प्रातिलोम्यानुलोम्ये च आनुलोम्यं चेति विग्रहः । ततः पञ्चम्यन्तात्तसिः। पज्ञानुनाभीत्यादिनिर्देशापेक्षया प्रातिलोम्यतः शिरआदिपादपर्यन्तत्वेन न्यासो लयन्यास इत्यर्थः। वक्ष्यमाण एवशब्दः अत्राप्यनुकृष्यते । तेन,

मूर्धाक्षिनासामुखहृन्नाभिजानुपदेषु च ।
सृष्टिन्यासोऽयमुद्दिष्टः संहारश्चरणादिकः ।।

मूर्धान्तस्थितिरप्युक्ता शिरआदिहृदन्तका ।
स्थानानां प्रातिलोम्येन न्यासः सृष्टेरथ स्थितेः ।
हृन्मर्यादपदालब्धमूर्धादिस्तद्विधिक्रमः ।।

इत्यादिवचनानुसारात् लक्षणमेवं प्रतिपत्तव्यम्। नान्यथेति तस्यार्थः। एवं सृष्टिस्थितिलयन्यासाः मन्त्रजापकादिभिः सर्वैरधिकारिभिः बहुवारं कर्तव्या इत्यावृत्त्यध्याहाराभ्यां योज्यम् ।

तत्राऽवृत्तिसङ्ख्यामवसानप्रकारं च बहुत्वात् प्रथमं त्रैविद्यानां दर्शयति— **स्थित्यन्ता इति ।।** मन्त्रगतानां वर्णानां सृष्टिस्थितिलयन्यासे कर्तव्ये चतुर्दशवारं कर्तव्याः। स्थित्यन्ताश्च कार्याः। तथाच सृष्टिस्थितिलयन्यासास्त्रयोऽपि चतुर्वारमावर्तनीयाः। पञ्चमावृत्तौ सृष्टिन्यासं स्थितिन्यासं च कृत्वा तदन्ता एव समापनीयाः । एवं चेत् चतुर्दशावृत्तिर्भवति ।

सृष्टिः स्थितिः संहृतिश्च यावत्सङ्ख्या न पूर्यते ।
तावत्पुनः पुनः कार्या न्यासे सृष्ट्यन्तकादिके ।

इति वचनादिति भावः ।

ननु ग्रन्थान्तरेऽऽवृत्तौ सङ्ख्यान्यथाभावदर्शनात् कथमेतदित्यत आह– **श्रेष्ठा एवेति ।।** उत्तमा एवैते न्यासा इत्यर्थः। यद्यपि 'वसुरुद्राश्चतुर्दश स्थितौ' इति

वचनात् स्थितिन्यासे कर्तव्ये वसुरष्टौ, रुद्रा एकादश, चतुर्दश चावृत्तयः नीचमध्योत्तमभेदेन बहुधोक्ताः। तथाप्यस्माभिरेवमुत्तमकल्पमाश्रित्यावृत्तिसङ्ख्या उक्ता । न नीचमध्यमकल्पाविति द्वितीयैवशब्दार्थः। 'एवं चतुर्दश' इति पाठे ब्रह्मचारिणां सृष्टिन्यासे सृष्टिस्थितिलयन्यासाः दशवारं सृष्ट्यन्ताः कार्याः उत्तमकल्पेन। मध्यमकल्पेन सप्तवारम्। अधमकल्पेन चतुर्वारमिति योज्यम्। 'वेदाः सप्तदशोत्पत्तौ नीचमध्यमोत्तमा ज्ञेयाः' इत्युक्तेः। पाठान्तरे तु वक्ष्यमाणवाशब्देनैतल्लभ्यते। निष्कामानां सङ्ख्यादिकमाह— **संहृतीति**॥ सृष्टिस्थितिलयन्यासाः मुमुक्षूणामेकविंशतिवारं संहृत्यन्ताश्च कर्तव्याः । यद्यपि, 'नवतिथ्येकविंशश्च नीचमध्योत्तमा मताः' इति ववने नवसङ्ख्या तिथिशब्दितपञ्चदशसंख्यैकविंशतिसङ्ख्या च नीचमध्योत्तमपक्षमाश्रित्योक्ताः। तथाप्यस्माभिरुत्तमपक्षमेवाश्रित्योच्यत इति भावः। **वाशब्देन** पक्षत्रयेऽपि नीचमध्यमोत्तमपक्षा उक्तवचनानुसारेण ज्ञातव्या इत्याह। सृष्ट्यादिन्यासत्रयं सप्तवारमनुष्ठितं चेदेकविंशतिसंख्याकाः संहृत्यन्ताश्च सम्पद्यन्त इत्यादि विवेक्तव्यम्। इयमेव गतिस्तत्त्वन्यासादेरपि। 'न्यासत्रयं सदा कार्यमशक्तावेक एव तु' इत्युक्तेरेकविंशत्यादावशक्तस्य न्यासत्रयम्। तत्रापि स्थितिमारभ्य सृष्ट्यन्तं गृहस्थानाम्। सृष्टिमारभ्य लयान्तं संन्यासिनाम्। तत्राप्यशक्तस्यैक एव न्यासः। तत्रापि वर्णिनां गृहस्थानां च सृष्टिन्यास एव। संन्यासिनां लयन्यास एवेत्यादिविशेषोऽवगन्तव्यः। एतदप्याह **वाशब्देन** ॥ १३१-१३२ ॥

**अ.सं.**— इदानीमितिकर्तव्यतारूपं सर्वमन्त्रगतवर्णैः कर्तव्यं सृष्ट्यादिभेदेन त्रिविधं न्यासमाह- **सृष्टीति**॥ **वर्णानामेव** मन्त्रगतवर्णानामेव। **प्रातिलोम्यानुलोमतः** भावप्रधानो निर्देशः। प्रातिलोम्येन आनुलोम्येन प्रातिलोम्यानुलोम्याभ्यां चेत्यावृत्त्या व्याख्येयम्। सृष्टिस्थितिलयन्यासाः जपानुष्ठातृभिः सर्वैः कार्या इति शेषः । 'प्रातिलोम्यानुलोमतः' इत्यत्र क्रमो न विवक्षितः। किन्तु **अनुलोमतः** क्रमेण सृष्टिन्यासः । **प्रातिलोम्येन** व्युत्क्रमेण लयन्यासः। **प्रातिलोम्यानुलोम्याभ्यां** अर्धक्रमेण अर्धं व्युत्क्रमेण च स्थितिन्यास इति ज्ञेयम्।

अयं भावः। अष्टाक्षरमन्त्रेऽष्टानां शिरोक्षिनासावाक्हृदयनाभिजानुपादेषु अष्टसु स्थानेषु शिरआदिक्रमेण पादपर्यन्तं क्रियमाणः सृष्टिन्यासः। एषामेवाष्टानां वर्णानां पूर्वस्थानेष्वेव पूर्वक्रमविपरीतक्रमेण पादमारभ्य शिरःपर्यन्तं क्रियमाणो लयन्यासः। एषामेव वर्णानामर्धं शिरआदिक्रमेणार्धं पादादिव्युत्क्रमेण पूर्वस्थानेष्वेव क्रियमाणः स्थितिन्यास इत्युच्यते । तदुक्तं हयशीर्षे

मूर्धाक्षिनासामुखहृन्नाभिजानुपदेषु च ।
सृष्टिन्यासोऽयमुद्दिष्टः संहारश्चरणादिकः ।

मूर्धन्तः स्थितिरप्युक्ता शिर आदि हृदन्तका ।। इति । तथा–

आदौ मूर्धानमारभ्य वदनावधिकश्च यः ।
पादादिहृदयान्तश्च स्थितिरेव प्रकीर्तिता ।। इति ।

अथवा, सर्वेषां वर्णानां प्रातिलोम्यं अर्धवर्णप्रातिलोम्यं च गृहीत्वा प्रातिलोम्यं च प्रातिलोम्यं च प्रातिलोम्ये इत्येकशेषः। तथा अर्धवर्णानुलोम्यं सर्ववर्णानुलोम्यं च गृहीत्वा आनुलोम्यं च आनुलोम्यं च आनुलोम्ये इति च एकशेषो भवति । तदनन्तरं प्रातिलोम्ये च आनुलोम्ये च प्रातिलोम्यानि, तैरिति विग्रहः। तथा च प्रातिलोम्येन प्रातिलोम्यानुलोम्याभ्यां आनुलोम्येन चेत्येवं क्रमेण सृष्टिस्थितिलयन्यासाः ज्ञातव्या इत्यर्थः सिद्ध्यति ।।

अयमर्थः। प्रातिलोम्येन 'पज्जनुनाभिहृदयवङ्नासानेत्रकेषु च'(१-४७) इत्यादिना एतद्ग्रन्थोक्तन्यासस्थानक्रमापेक्षया विपरीतक्रमेण वर्णानां न्यासः सृष्टिन्यासः। प्रातिलोम्यानुलोम्याभ्यां पूर्वोक्तक्रमविशिष्टेष्वर्धस्थानेषु व्युत्क्रमेणार्धस्थानेषु क्रमेण वर्णन्यासः स्थितिन्यासः। आनुलोम्येन पूर्वोक्तेनैव क्रमेण स्थानेषु वर्णन्यासः लयन्यास इति । तदुक्तं योगदीपिकायाम्–

स्थानानां प्रातिलोम्येन न्यासः सृष्टेरथ स्थितेः ।
हृन्मर्यादः पदारब्धस्तदूर्ध्वादिस्वधिक्रमः ।। (२.७९) इति । तथा–

हृतिरेषामनुष्ठानं प्रातिलोम्येन सर्जनम् ।
परावरप्रातिलोम्यानुलोम्येन स्थितौ न्यसेत् ।। इति च ।

नन्वत्र न्यासत्रयं सर्वैरपि कर्तव्यमित्युक्तम् । तन्न युक्तम् ।

स्थितिन्यासो गृहस्थानामुत्पत्तिर्ब्रह्मचारिणाम् ।
यतीनां संहृतिन्यासो वनस्थानां तथैव च ।।

इति अधिकारिभेदप्रतिपादकवाक्यविरोधादित्यत आह– **स्थित्यन्ता एवेति ।।** गृहस्थानां ते त्रयः वर्णानां न्यासाः स्थित्यन्ता एव कर्तव्याः । **मोक्षिणां** यतीनां संहृत्यन्ताः कर्तव्याः । ब्रह्मचारिणां सृष्ट्यन्ता एवेति ज्ञातव्यम् । तदुक्तं क्रमदीपिकायाम्–

न्यासः संहारान्तो मस्करिवैखानसेषु विहितोऽयम् ।
स्थित्यन्तो गृहमेधिषु सृष्ट्यन्तो वर्णिनामिति प्राहुः ।। (२.३४) इति ।

वर्णिनां ब्रह्मचारिणामित्यर्थः ।

वैराग्ययुजि गृहस्थे संहारं केचिदहुराचार्याः ।
सहजानौ वनवासिनीस्थितिं च विद्यार्थिनां सृष्टिम् ।। (२३५) इति ।

सहजानौ सभार्ये इत्यर्थः । अयं भावः । गृहस्थैः सृष्ट्यादिक्रमेण न्यासत्रिकं कृत्वा अन्ते स्थितिन्यासं कृत्वैव समाप्तिः कार्या । सन्यासिभिस्तु सृष्ट्यादिन्यासत्रयानन्तरं संहृतिन्यासं कृत्वैव समाप्तिः कार्या । ब्रह्मचारिभिरपि सृष्टिस्थितिलयन्यासं कृत्वा अन्ते सृष्टिन्यासं कृत्वैव समाप्तिः कार्येति । अनेन सर्वेषां गृहस्थादीनां न्यासत्रयकर्तृत्वेऽपि तत्तन्यासान्तकर्तृत्वेनैव तत्तन्यासाधिकारिभेदसम्भवादधिकारिभेदप्रतिपादकवाक्यविरोधः परिहृतो भवति । प्रमाणगतस्थितिसंहृतिसृष्टिशब्दानां स्थित्याद्यन्तत्वेन व्याख्यानसम्भवात् ।

तत्र गृहस्थादिभिरेवं न्यासाः कति सङ्ख्याका कार्या इत्यत आह– **चतुर्दशैवेति ।।** गृहस्थानां स्थित्यन्ता न्यासाः **चतुर्दशैव** चतुर्दशसङ्ख्यका एव **श्रेष्ठा** उत्तमाः । **मोक्षिणां** संन्यासिनां तु संहृत्यन्ता न्यासाः एकविंशतिरेव **श्रेष्ठाः** उत्तमाः । ब्रह्मचारिणां तु सृष्ट्यन्ता न्यासा दशैव उत्तमा इति च ज्ञेयम् । 'श्रेष्ठाः' इत्यनेन गृहस्थानां स्थित्यन्तन्यासे मध्यमाधमपक्षौ वर्तेते इति सूचितम् । तथा संन्यासिनामपि संहृत्यन्तन्यासे 'एकविंशतिरेव वा' इति वाशब्देन मध्यमाधमपक्षान्तरं सूचयति । तदुक्तम्–

वेदाः सप्तदशोत्पत्तौ वासुरुद्राश्चतुर्दश ।
नवतिथ्यैकविंशश्च स्थितावावृत्तयो हृतौ ।
नीचमध्योत्तमा ज्ञेया...................... ।। इति ।

अस्यार्थः । उत्पत्तौ सृष्ट्यन्ते न्यासे वेदा चतस्रः । सप्तदश आवृत्तयः क्रमेण अधममध्यमोत्तमाः । स्थितौ स्थित्यन्तन्यासे वसुः अष्ट । रुद्राः एकादश । चतुर्दश आवृत्तयः क्रमेण नीचमध्योत्तमाः । हृतौ हृत्यन्तन्यास नवतिथिः पञ्चदश एकविंशति आवृत्तयः नीचमध्योत्तमाः ज्ञेया इति । अशक्तपक्षे गौतमीतन्त्रे– 'न्यासत्रयं सदा कार्यमशक्तावेक एव तु' इति । स्थित्यन्तत्वादिप्रकारेण न्यासत्रयं सदा कार्यम् । अशक्तौ तु तत्तन्न्यसाधिकारिभिः तत्तन्न्यासमात्रं कार्यमिति प्रमाणाभिप्रायः । न्यासानां स्थित्याद्यन्तत्वेन चतुर्दशाद्यावृत्तिकरणे प्रकार उक्तः सारनिधौ–

सृष्टिः स्थितिः संहृतिश्च यावत्सङ्ख्या न पूर्यते ।
तावत् पुनः पुनः कार्या न्यासे सृष्ट्यन्तकादिके ।। इति ।

सर्वैरपि सृष्टिमारभ्यैव न्यासत्रितयं कार्यमित्युक्तं क्रमदीपिकायाम्–

न्यासस्योक्ताः सृष्टिशिष्टैस्थितिरपि मुनिभिरभिहिता हृदादिमुखान्तिका ।
संहारोऽङ्घ्र्यादिमूर्धान्तस्त्रितयमिति विरचयेच्च सृष्टिमनुस्थितिम् ।। इति ।

स्थित्याद्यन्तन्यासप्रकारस्तु सृष्ट्यादिन्यासत्रिकं चतुर्वारमनुष्ठाय पुनः सृष्टिन्यासानन्तरं स्थितिन्यासे सति एकादशावृत्तयो भवन्ति । अयं मध्यमः । न्यासत्रयं द्विवारमनुष्ठाय पुनः सृष्टिन्यासानन्तरं स्थितिन्यासे कृतेऽष्टन्यासाः स्युः । अयमधमः । एते त्रयः गृहस्थानाम् ।

संन्यासिनां तु सृष्ट्यादिन्यासत्रयं सप्तवारमनुष्ठितं चेत् एकविंशतिसङ्ख्याकाः संहृत्यन्ताः न्यासाः स्युः । अयमुत्तमः कल्पः । पञ्चवारमनुष्ठितं चेत् पञ्चदश भवन्ति । अयं मध्यमः पक्षः । त्रिवारमनुष्ठितं चेत् नव न्यासाः स्युः । अयमधमः पक्षः ।

ब्रह्मचारिणां तु सृष्ट्यादित्रयं त्रिः कृत्वा पुनः सृष्टौ कृतायां दश सृष्ट्यन्ता

न्यासाः स्युः । अयमुत्तमः । द्विवारमनुष्ठाय पुनः सृष्ट्यादिसमाप्तिश्चेत् सप्त । अयं मध्यमः । एकवारमनुष्ठाय पुनः सृष्टिं कृत्वा समाप्तौ चत्वारो न्यासा भवन्ति । अयमधम इति । एवमेव सर्वमन्त्रवर्णानां सृष्टिस्थितिलयन्यासाः ज्ञेयाः ।

उत्पत्तिस्थितिसंहारभेदभिन्नगुणेन सः ।
मन्त्राक्षराणां विन्यासेऽप्ययमेव विधिर्मतः ।। इत्युक्तेः ।

अत्र स्थित्यन्ता एव वर्णानामिति वर्णानां ग्रहणात् वर्णन्यास एवायं सृष्ट्यन्तत्वादिनियमः । न मन्त्रन्यासे । तेन पञ्चाङ्गन्यासेऽयं नियमो नेति सूच्यते । तत्त्वमन्त्रन्यासे तु सृष्टिसंहारयोरुभयोरप्युक्तत्वादुभयोरपि प्राप्तिर्न स्थितेः । मातृकामन्त्रन्यासे सृष्टेरेवोक्तत्वात्सृष्टेरेव प्राप्तिः न स्थितिसंहृत्योः । तथा च सृष्टिमातृकान्यासः सर्वेषामपि संहृतितत्वन्यासः । संन्यासिनां सृष्टितत्वन्यासः तदन्येषामिति ज्ञेयम् । 'संहारो यतिनां प्रोक्तः तदन्येषां सृजिःस्मृता' इत्युक्तेः । तस्माद्वर्णन्यास एवायं नियमो न न्यासमात्रे इति सिद्धम् । एवं न्यासत्रयानुष्ठानं प्रतिदिनं जपादौ कार्यम् । 'प्रतिमायामात्मनि च न्यासोऽयं सन्निधानकृत्'(४-१३७) इति अनुपदमेव वक्ष्यमाणत्वात् । तत्र हि अयं सृष्टिस्थितिलयन्यासा इत्यत्र स्थित्याद्यन्तत्वेन उक्तः। **न्यासः** न्याससमुदायः पूजाकाले प्रतिमायां **सन्निधानकृत्** हरेः सान्निध्यकृत् । जपकाले **आत्मनि** जपकर्तरि च सन्निधानकृदित्युच्यते । तेन च जपपूजाव्यतिरेकेणात्मप्रतिमयोः न्यासाभावात् जपपूजयोश्च नित्यं कर्तव्यत्वात् न्यासस्यापि प्रतिदिनं कर्तव्यत्वमवगम्यते । 'न्यासत्रयं सदा कार्यमशक्तावेक एव तु' इति पूर्वोक्तगौतमीतन्त्रवचनाच्च । कुलार्णवे च–

आगमोक्तेन मार्गेण न्यासान्नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिश्च जायते ।।

देवतायाः मन्त्रदेवतायाः भावं सान्निध्यम् ।

अकृत्वा न्यासजातं यो मूढात्मा कुरुते जपम् ।
विघ्नैः स बाध्यते नूनं व्याधैर्मृगशिशुर्यथा ।। *(२.११)* इति ।

अत्रैके न्यासत्रयानुष्ठानं नूतनप्रतिमायां वा दीक्षाकाले शिष्ये वा कार्यम्। 'प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद्भवेत्' (२.९) इत्युक्तेः। न तु प्रत्यहं जपादौ कर्तव्यम्। तथा शिष्टाचाराभावादिति सम्प्रदायविद इत्याहुः। अस्मद्गुरवस्तु कामनया एवेदं न्यासत्रयानुष्ठानं न तु प्रत्यहम्–

सृष्टिन्यासो वर्णिनां च संहृतिर्मोक्षमिच्छताम् ।
स्थितिन्यासो गृहस्थानां त्रयं काम्यानुसारतः ।। इति वचनात् ।

हृत्यन्ता दोषसङ्गानां हरिणी परिकीर्तिता ।
विद्याप्रदा च सृष्ट्यन्ता वर्णिनां शुद्धचेतसाम् ।।
स्थित्यन्ता स्यात् गृहस्थानां त्रयं काम्यानुसारतः ।।

इति गौतमतिन्त्रोक्तवचनाचेत्याहुः । अनेन शिष्टाचाराभावे मूलमुक्तं भवति ।। १३२ ।।

**गु.दी.**– अथेदानीं तत्त्वमन्त्रादिषु न्यासे प्रकारविशेषमाह— **सृष्टिस्थितिलयन्यासा इति ।।** प्रातिलोम्यं चानुलोम्यं च प्रातिलोम्यानुलोम्ये चेत्येकशेषेण समासः। अत्र यथायोग्यं सम्बन्धो न यथाक्रमम्। अयं भावः। अनुलोमतः पठनं सृष्टिन्यासः। यथा मातृकान्यासे 'अं अजाय नमः' इत्यारभ्य 'क्षं नृसिंहाय नमः' इत्यन्तं पठनम्। यथा वा तत्त्वमन्त्रे 'शक्तिः प्रतिष्ठा' इत्यारभ्य 'पृथिव्यात्मने नमः' इत्यन्तं पठनम्। प्रातिलोम्येन पठनं लयन्यासः। यथा 'क्षम्' इत्यारभ्य 'अं अजाय' इत्यन्तं पठनम्। यथा वा 'पृथिव्यात्मने नमः' इत्यारभ्य शक्तिपर्यन्तं पठनम्। **प्रातिलोम्यानुलोमतः** अर्धं प्रतिलोमतः, अर्धमनुलोमतः इत्युभयसमाहारेण पठनं स्थितिन्यासः। यथा 'अं अजाय' इत्यारभ्य 'अः अर्धगर्भाय' इत्यन्तं स्वराक्षाराणां न्यासमानुलोम्येन पठित्वा 'क्षं नृसिंहाय' इत्यारभ्य 'कं कपिलाय' इत्येतत्पर्यन्तं प्रातिलोम्येन पठनम्। एवं शक्तिमारभ्य पुरुषपर्यन्तमानुलोम्येन पठित्वा पृथिवीमारभ्याव्यक्तान्तं प्रातिलोम्येन पठनम्।

इदानीं गृहस्थादिभेदेन न्यासभेदमाह— **स्थित्यन्ता इति ।।** उत्तरत्र

मोक्षिणामित्युक्तेरत्र गृहस्थानामिति लभ्यते। **वर्णानां** मन्त्राक्षराणां स्थित्यन्ता एव न्यासाः श्रेष्ठाः। प्रथमतः सृष्टिन्यासः तदनन्तरं संहृतिन्यासस्ततस्थितिन्यास इत्यन्तास्त्रयो न्यासाः सर्वेषां गृहस्थानां श्रेष्ठाः। ते च **चतुर्दश** सृष्टिस्थिति-संहारास्त्रयः। स्थितिसंहारसृष्टयस्त्रयः। संहारस्थितिसृष्टयस्त्रयः। संहारसृष्टिस्थि-तयस्त्रय इति द्वादश। पूर्वोत्तरौ सृष्टिस्थितिन्यासौ द्वौ। एवं चतुर्दशवारमेव कृता एव श्रेष्ठा इत्यर्थः। 'स्थित्यन्तो गृहिणां श्रेष्ठः' इति पञ्चसंस्कारोदाहृतवचनात्। अन्ते स्थितिन्यासं कृत्वा गृहस्थैः समाप्तिः कार्येति भावः।

यतीनां न्यासनियममाह— **संहृत्यन्ता इति ।। मोक्षिणां** सर्वसङ्गत्यागिनां संन्यासिनामिति यावत्। संहृत्यन्ता एव न्यासाः श्रेष्ठाः। ते च **एकविंशतिर्वा।** वाशब्दोऽधिकारविकल्पे। न सङ्ख्याविकल्पे। आरम्भे स्वस्मिन् त्रयो न्यासाः। कलशे त्रयः। अभिषेकात्पूर्वं प्रतिमायां त्रयः। अभिषेकानन्तरं प्रतिमायां त्रयः। अनुयागे त्रयः। अन्ते देवे त्रयः स्वस्मिन् त्रयः इत्येकविंशतिः। 'संहृत्यन्तो यतीनां स्यात्' इति वचनात्।

केचित्— वाशब्दादेक एव संहृत्याख्यो न्यास इति अनुकल्पश्च ग्राह्यः।

व्याख्याव्यासङ्गहीनानां त्रयो न्यासाश्च मोक्षिणाम्।
तद्व्यासङ्गवतामेक एव न्यासो लयाभिधः ।।

इति योगदीपिकावचनादिति वर्णयन्ति। 'सृष्ट्यन्तो ब्रह्मचारिणाम्' इति प्रमाणाद्ब्रह्मचारिणां सृष्ट्यन्ताः त्रयो न्यासाः इत्यपि ग्राह्यम्। तथा च क्रमदीपिकायां 'न्यासः संहारान्तः मस्करिवैखानसेषु विहितोऽयम्। स्थित्यन्तो गृहमेधिषु सृष्ट्यन्तो वर्णिनामिति प्राहुः' इति। **वर्णिनां** ब्रह्मचारिणामित्यर्थः। 'अशक्तेन सृष्ट्यन्तादिन्यासं विहाय सृष्ट्यन्ताधिकारिणा सृष्टिन्यासः, स्थित्यन्ताधिकारिणा स्थितिन्यासः, यतिना संहृतिन्यासः कार्यः' इति गौतमीयतन्त्रे। 'न्यासत्रयं सदा कार्यमशक्तैरेक एव तु' इति ।। १३२ ।।

**मङ्गाली–** इदानीं इतिकर्तव्यतारूपं सर्वमन्त्रगतवर्णैः कर्तव्यं सृष्ट्यादिभेदेन त्रिविधं न्यासमाह— **सृष्टीति ।। वर्णानामेव** मन्त्रगतवर्णानामेव।

**प्रातिलोम्यानुलोमपतः** भावप्रधानो निर्देशः। सर्वेषां वर्णानां प्रातिलोम्यम्। अर्धवर्णप्रतिलोम्यं च गृहीत्वा प्रातिलोम्यं च प्रातिलोम्यं च प्रातिलोम्ये इत्येकशेषः। तथा अर्धवर्णानुलोम्यं सर्ववर्णानुलोम्यं च गृहीत्वा आनुलोम्यं चानुलोम्यं च अनुलोम्ये इति च एकशेषो भवति। तदनन्दतरं प्रतिलोम्ये च प्रतिलोम्यानुलोम्यानि तैः प्रातिलोम्यानुलोमत इति विग्रहः। तथा च प्रातिलोम्येन प्रातिलोम्यानुलोमाभ्याम् आनुलोम्येन चेत्येवं क्रमेण सृष्टिस्थितिलयन्यासा जपानुष्ठातृभिः सर्वैः कार्या इति शेष इत्यर्थः सिद्ध्यति। अयमर्थः। प्रातिलोम्येन 'पञ्चानुनाभिहृदयवाङ्नासानेत्रकेशेषु च'(तं.सा.१-३६) इत्यादिना एतद्ग्रन्थोक्तन्यासस्थानक्रमापेक्षया विपरीतक्रमेण वर्णानां न्यासः सृष्टिन्यासः। प्रातिलोम्यानुलोमाभ्यां पूर्वोक्तक्रमविशिष्टेषु स्थानेषु मध्येऽर्धस्थानेषु व्युत्क्रमेणार्धस्थानेषु क्रमेण वर्णन्यासः स्थितिन्यासः। आनुलोम्येन पूर्वोक्तक्रमेणैव स्थानेषु वर्णन्यासः लयन्यास इति। यद्वा प्रातिलोम्यानुलोमत इत्यत्र क्रमो न विविक्षितः। किन्तु अनुलोमतः क्रमेण सृष्टिन्यासः। प्रातिलोम्येन व्युत्क्रमेण लयन्यासः। प्रातिलोम्यानुलोमाभ्यामर्धं क्रमेणार्धं व्युत्क्रमेण स्थितिन्यास इति ज्ञेयम्। तथा च अष्टाक्षरमन्त्रे अष्टानां वर्णानां शिरोक्षिनासावाक्हृदयनाभिजानुपदेषु अष्टसु स्थानेषु शिरआदिक्रमेण पादपर्यन्तं क्रियमाणः सृष्टिन्यासः। एषामेव वर्णानां पूर्वस्थानेष्वेव पूर्वक्रमविपरीतक्रमेण पादमारभ्य शिरःपर्यन्तं क्रियमाणः लयन्यासः। एषामेव वर्णानामर्धं शिर आदिक्रमेणार्धं पादादिक्रमेण पूर्वस्थानेष्वेव क्रियमाणः स्थितिन्यासो भवति। तदुक्तं हयशीर्षे–

मूर्धाक्षिनासामुखहृन्नाभिजानुपदेषु च।
सृष्टिन्यासोयऽमुद्दिष्टः संहारश्चरणादिकः।
मूर्धान्तः स्थितिरप्युक्ता शिर आदिहृदंतका ॥ इति। तथा–

आदौ मूर्धानमारभ्य वदनावधिकश्च यः।
पादादिहृदयान्तश्च स्थितिरेवं प्रकीर्तिता ॥ इति।

नन्वत्र न्यासत्रयं सर्वैकर्तव्यमित्युक्तमयुक्तम् ।

स्थितिन्यासो गृहस्थानां उत्पत्तिर्ब्रह्मचारिणाम् ।
यतीनां संहृतिन्यासो वनस्थानां तथैव च ।।

इत्यधिकारिभेदप्रतिपादकवाक्यविरोधादित्यत आह- **स्थित्यन्ता एवेति** ।। गृहस्थानां ते त्रयोवर्णानां न्यासाः स्थित्यन्ता एव कर्तव्याः । मोक्षिणां यतीनां संहृत्यन्ताः कर्तव्याः । ब्रह्मचारिणां सृष्ट्यन्ता एवेत्यपि ज्ञातव्यम् । तदुक्तं क्रमदीपिकायां-

न्यासः संहारान्तो मस्करिवैखानसेषु विहितोऽयम् ।
स्थित्यन्तो गृहमेधिषु सृष्ट्यन्तो वर्णिनामिति प्राहुः ।। इति ।

वर्णिनां ब्रह्मचारिणामित्यर्थः ।

वैराग्ययुजि गृहस्थे संहारं केचिदाहुरार्याः ।
सहजानौ वनवासिनि स्थितिं च विद्यार्थिनां सृष्टिम् ।। इति ।

सहजानौ सभार्ये इत्यर्थः । अयं भावः। गृहस्थैः सृष्ट्यादिक्रमेण न्यासत्रिकं कृत्वा अन्ते स्थितिन्यासं कृत्वैव समाप्तिः कार्या। सन्यासिभिस्तु सृष्ट्यादिन्यासत्रयानन्तरं संहृतिन्यासं कृत्वैव समाप्तिः कार्या । ब्रह्मचारिभिरपि सृष्ट्यादिन्यासान् कृत्वा अन्ते सृष्टिन्यासं कृत्वैव समाप्तिः कार्येति। अनेन सर्वेषां सर्वन्यासकर्तृत्वेऽपि तत्तन्यासस्यान्ते करणेनैव तत्तन्यासाधिकारिभेदसम्भवात् अधिकारिभेदप्रतिपादकवाक्यविरोधः परिहृतो भवति। प्रमाणगतस्थिति-संहृतिसृष्टिशब्दानां स्थित्याद्यन्तत्वेन व्याख्यानसम्भवात् ।

तत्र गृहस्थादिभिरेवं न्यासाः कतिसङ्ख्याकाः कार्या इत्यत आह- **चतुर्दशैवेति** ।। गृहस्थानां स्थित्यन्ताः न्यासाः **चतुर्दशैव** चतुर्दशसङ्ख्याका एव **श्रेष्ठाः** उत्तमाः । **मोक्षिणां** सन्यासिनां तु संहृत्यन्ता न्यासाः एकविंशतिरेव **श्रेष्ठाः** उत्तमाः । ब्रह्मचारिणां सृष्ट्यन्ता न्यासाः दशैवोत्तमा इति च ज्ञेयम् । श्रेष्ठा इत्यनेन गृहस्थानां स्थित्यन्तन्यासे मध्यमाधमपक्षौ च वर्त्तेते इति सूचितम् । तथा सन्यासिनामपि संहृत्यन्तन्यासे एकविंशतिरेव वेति वा शब्देन मध्यमाधमपक्षान्तरं सूचयति । तदुक्तम्-

वेदाः सप्तदशोत्पत्तौ वसुरुद्राश्चतुर्दश ।
नवतिध्येकविंशाश्च स्थितावावृत्तयो हृतौ ।
नीचमध्योत्तमा ज्ञेया..........।। इति ।

अस्यार्थः । उत्पत्तौ सृष्टन्तन्यासे वेदाः चतस्रः सप्त दश आवृत्तयः । क्रमेण अधममध्यमोत्तमाः । स्थितौ स्थित्यन्तन्यासे वसुरष्ट, रुद्राः एकादश चतुर्दशावृत्तयः क्रमेण नीचमध्योत्तमाः । हृतौ संहृत्यन्तन्यासे नवति पञ्चदश एकविंशतिरावृत्तयो नीचमध्योत्तमा ज्ञेया इति । अशक्तिपक्षे गौतमी तन्त्रे 'न्यासत्रयं सदा कार्यमशक्तावेक एव तु' इति । स्थित्यन्तत्वादिप्रकारेण न्यासत्रयं सदा कार्यम् । अशक्तौ तु तत्तन्न्यासाधिकारिभिस्तत्तन्न्यासमान्त्रं कार्यमित्यस्याभिप्रायः। न्यासानां स्थित्याद्यन्तत्वेन चतुर्दशाद्यावृत्तिकरणप्रकार उक्तः सारनिधौ–

सृष्टिः स्थितिः संहृतिश्च यावत्सङ्ख्या न पूर्यते ।
तावत्पुनः पुनः कार्या न्यासे सृष्ट्यन्तकादिके ।। इति ।

सर्वैरपि सृष्टिमारभ्यैव न्यासत्रितयं कार्यमित्युक्तं क्रमदीपिकायां–

न्यासस्योक्ता सृष्टिः शिष्टैः स्थितिरपि मुनिभिरभिहिता मूर्धादिहृदंतका ।
संहारोंऽघ्र्यादिमूर्धान्तस्त्रितयमिदमिति विरचये सृष्टिमनुस्थितिम् ।। इति ।

स्थित्याद्यन्तन्यासप्रकारस्तु सृष्ट्यादिन्यासत्रिकं चतुर्वारमनुष्ठाय पुनः सृष्टिन्यासानन्तरं स्थितिन्यासं कृत्वा समाप्तौ क्रियमाणायां चतुर्दशन्यासा भवन्ति । अयमुत्तमः पक्षः । पूर्ववन्न्यासत्रिकं त्रिवारमनुष्ठाय पुनः सृष्टिन्यासं कृत्वा स्थितिन्यासे कृते सति एकादशावृत्तयो भवन्ति । अयं मध्यमः । न्यासत्रयं त्रिवारमनुष्ठाय पुनः सृष्टिन्यासानन्तरं स्थितिन्यासे कृतेऽष्टन्यासा स्युः । अयमधमः । एते त्रयः पक्षा गृहस्थानाम् ।

सन्न्यासिनां तु सृष्ट्यादिन्यासत्रयं सप्तवारमनुष्ठितं चेत् एकविंशतिसङ्ख्याकाः संहृत्यन्ताः न्यासास्स्युः । अयमुत्तमः कल्पः । पञ्चवारमनुष्ठितं चेत् पञ्चदश भवन्ति । अयं मध्यमः । त्रिवारमनुष्ठितं चेन्नव न्यासाः स्युः । अयमधमः पक्षः ।

ब्रह्मचारिणां तु सृष्ट्यादित्रयं त्रिः कृत्वा पुनः सृष्टौ कृतायां दश सृष्ट्यन्ताः न्यासाः । अयमुत्तमः । द्विवारमनुष्ठाय पुनः सृष्ट्या समाप्तिश्चेत् सप्त न्यासाः । अयं मध्यमः । एकवारमनुष्ठाय पुनः सृष्टिं कृत्वा समाप्तौ चत्वारो न्यासाः भवन्ति । अयमधमः । एवमेव सर्वमन्त्रवर्णानां सृष्टिस्थितिलयन्यासः ज्ञेयाः ।

उत्पत्तिस्थितिसंहारभेदभिन्नगुणेन सः ।
मन्त्राक्षराणां विन्यासेऽप्ययमेव विधिर्मतः ।

इत्युक्तेः अत्र स्थित्यन्ता एव वर्णानामिति वर्णानां गृहणात् वर्णन्यास एव सृष्ट्यन्तत्वादिनियमः । न मन्त्रन्यासे । तेन पश्चाङ्गन्यासे अयं नियमो नेति सूच्यते । तत्र मन्त्रन्यासे तु सृष्टिसंहारयोरुभयोरप्युक्तत्वात् उभयोरपि प्राप्तिः न स्थितेः । मातृकामन्त्रन्यासे सृष्टेरेवोक्तत्वात् । सृष्टेरेव प्राप्तिः न स्थितिसंहृत्योः । तथा च सृष्टिमातृकान्यासः सर्वेषामपि, संहृतितत्त्वन्यासः सन्यासिनां, सृष्टितत्त्वन्यासः तदन्येषामिति ज्ञेयम् । 'संहारो यतीनां प्रोक्तः तदन्येषां सृजिःस्मृता' इत्युक्तेः । इदं न्यासत्रयानुष्ठानं नूतनप्रतिमायां दीक्षाकाले शिष्ये वा कार्यम् । 'प्रतिमायां सन्निधिकृत् शिष्ये माहात्म्यकृद्भवेत्' (तं.सा.२-९) इत्युक्तेः। न तु प्रत्यहं जपादौ । तथा शिष्टाचाराभावात् । कामनायां वा

सृष्टिन्यासो वर्णिनां च संहृतिर्मोक्षमिच्छताम् ।
स्थितिन्यासो गृहस्थानां त्रयं काम्यानुसारतः ।। इति वचनात् ।

हृत्यन्ता दोषसङ्घानां हरिणी परिकीर्तिता ।
विद्याप्रदा च सृष्ट्यन्ता वर्णिनां शुद्धचेतसाम् ।
स्थित्यन्ता स्यात् गृहस्थानां त्रयं काम्यानुसारतः ।।

इति गौतमीतन्त्रवचनाच्चेति संप्रदायविदः ।। १३२ ।।

एकाक्षरमन्त्रमारभ्य त्रयस्त्रिंशदक्षरपर्यन्तं वर्णन्यासस्थानकथनम्

**तं.सा. पादहृत्केषु नाभ्यास्ययुक्तं(तं) च सललाटकम् ।**
**सनासिकादृग्जान्वोश्च सकोष्ठं(सश्रोत्रं) सोरुकं तथा।।१३३।।**

**सोरस्कं च सकण्ठं च सभुजद्वयमेव च ।**
**सगण्डयुग्मं सालीकं सतुन्द(न्दं)क्रोडकं तथा ॥ १३४ ॥**

**समूलं(सतळं) च सगुह्यं च सपार्श्वद्वयमेव च ।**
**सदोर्द्वयं व्यापकं च गलपार्श्वद्वयेन च ॥ १३५ ॥**

**ककुत्स्तनद्वयेनापि पृष्ठमूलेन सर्वशः ।**
**न्यासो यथाक्रमं प्रोक्तो मन्त्रेष्वेतेषु कृत्स्नशः ॥ १३६ ॥**

**त.क.–** एकाक्षरमन्त्रमारभ्य त्रयस्त्रिशंदक्षरपर्यन्तं क्रमेण वर्णन्यासस्थानान्याह— **पादेत्यादि श्लोकचतुष्टयेन ॥** अत्र नाभ्यास्ययुक्तमित्यादिसहयोगयुक्तानि पञ्चदशपदानि क्रियाविशेषणम् । नाभ्यास्ययुक्तं यथा भवति तथा । पादहृत्केषु प्रोक्तमन्त्रेषु स्थितवर्णैर्न्यासः कार्य इति सम्बन्धः । पादहृत्केषु जान्वोश्च गलपार्श्वद्वयेन च न्यासः कार्य इति सप्तम्यन्तपदयोः सम्बन्धः । अत्र

न्यास एकाक्षरे मन्त्रे व्यञ्जनस्वरबिन्दुभिः ।
पादहृत्केषु विलये ह्युत्पत्तौ व्युत्क्रमाद्भवेत् ।
स्थितिरप्यत्र विज्ञेया शिरआदिहृदन्तका ।

इति वचनानुसारात् व्यञ्जनस्य पादे न्यासः । तदन्तर्गतस्य चाचो हृदये न्यासः । स्वरस्य मूर्ध्नि न्यास इत्येकाक्षरमन्त्रस्य वर्णन्यासप्रकारः । द्व्यक्षरस्य तु पूर्वाक्षरोत्तराक्षराभ्यां तत्समुदायेन च वर्णानां त्रित्वमाश्रित्य पादहृत्केष्वेव न्यासः । त्र्यक्षरस्य तु स्पष्ट एव पादहृत्केषु न्यासः । एवं पादहृत्केष्वित्यनेनैकाक्षरद्व्यक्षरत्र्यक्षरमन्त्राणां युगपदेव न्यास उक्तो वेदितव्यः । यद्यपि द्व्यक्षरस्त्र्यक्षरश्च मन्त्रो नोद्धृतः । तथापि उपलक्षणतया तदुद्धारोऽप्यावश्यक इति न दोषः । नाभ्यास्ययुक्तमित्येतेन नाभ्यास्याभ्यां युक्तं पूर्वोक्तस्थानं चतुरक्षरपञ्चाक्षरयोर्न्यासस्थानमित्यध्याहारेण व्याख्यातव्यम् । तेन चतुरक्षरमन्त्रस्य पादनाभिहृदयमूर्धसु, पञ्चाक्षरमन्त्रस्य पादनाभिहृदयास्यमूर्धसु न्यास उक्तो वेदितव्यः । अत्र नाभेर्हृदयादधोङ्गत्वादास्यस्य मूर्धाधोङ्गत्वात् पादानन्तरं

नाभेर्हृदयानन्तरमास्यस्य निवेशः। एवमग्रेऽपि। एवं ललाटसहितं पूर्वोक्तं स्थानपञ्चकं षडक्षरस्य न्यासस्थानमित्यर्थः। तेन पादनाभिहृदयवदनललाटमूर्धसु न्यास इति भावः। **सनासिकादृक्** नासिकादृग्भ्यां सहितं पूर्वोक्तं स्थानं सप्ताक्षराष्टाक्षरयोर्न्यासस्थानमित्यर्थः। तेन पादनाभिहृदयवदननासिकाललाटमूर्धसु सप्ताक्षरमन्त्रस्याष्टाक्षरमन्त्रस्य तु पादनाभिवदननासिकानेत्रललाटमूर्धस्स्विति विवेक्तव्यम्। अत्र यद्यपि पज्जानुनाभिहृदयेत्यादिना प्रकारान्तरमुक्तम्। तथापि नारायणाष्टाक्षरस्य तत्रोक्तत्वेऽपि तद्व्यतिरिक्तानां श्रीकराष्टाक्षरादीनामेवेह न्यासकथनाददोषः। जान्वोश्चोक्तस्थानेषु च नवाक्षरमन्त्रस्य न्यासः। तेन पादजानुनाभिहृदयवदननासिकानेत्रललाटमूर्धस्स्विति सिद्ध्यति। **सकोष्ठं** कोष्ठमुदरं तत्सहितं पूर्वोक्तमङ्गजातं दशाक्षरस्य मन्त्रस्य न्यासस्थानम्। अत्र हृदयादधो नाभेरूर्ध्वमुदरं निवेशनीयमित्यर्थः। **सोरुकं** ऊरुणा सहितमङ्गजातमेकादशाक्षर-मन्त्रस्य न्यासस्थानम्। अत्र ऊरुर्जान्वोरुपरि पठनीयः। **सोरस्क**मुरसा सहितं पूर्वोक्तमङ्गजातं द्वादशाक्षरमन्त्रस्य न्यासस्थानम्। **सकण्ठं** कण्ठेन सहितं पूर्वोक्तमङ्गजातं त्रयोदशाक्षरमन्त्रस्य न्यासस्थानम्। अत्र कण्ठः उरस उपरि पठनीयः। **सभुजद्वयं** भुजद्वयेन सहितं पूर्वोक्तमङ्गजातं चतुर्दशाक्षरमन्त्रस्य पञ्चदशाक्षरमन्त्रस्य चेति स्थानद्वयमुक्तम्। तेन दक्षिणभुजं चतुर्दशाक्षरमन्त्रस्य, वामभुजं पञ्चदशाक्षरमन्त्रस्येति विवेकः। एवमग्रेऽपि। अत्र भुजद्वयमूरोरनन्तरं पठनीयम्। **सगण्डयुग्मं** गण्डयुग्मेन सहितमित्यनेन स्थानद्वयमुक्तम्। तेन पूर्वोक्तमङ्गजातं षोडशाक्षरस्य सप्तदशाक्षरस्य च। अत्र गण्डयुग्मं कण्ठादुपरि वदनादर्वाक् पठनीयम्। **सालीकं** ललाटशिरसोरन्तरालमलीकमुच्यते। तेनालीकेन सहितं पूर्वोक्तमङ्गजातमष्टादशाक्षरमन्त्रस्य। अत्रालीकं ललाटादुपरि पठनीयम्। **सतुन्दं** नाभेरधोभागस्तुन्दमुच्यते। तेन सहितं पूर्वोक्तमङ्गजातमेकोनविंशाक्षरमन्त्रस्य। अत्र तुन्दमूरोरुपरि नाभेरधः पठनीयम्। **क्रोडकं** भुजयोर्मध्यम्। **तथा**शब्देन पूर्वोक्तमङ्गजातं समुच्चिनोति। तदेतद्विंशाक्षरस्य। **समूलं,** मूलं वृषणम्। तत्सहितं पूर्वोक्तमङ्गजातं एकविंशाक्षरस्य। मूलं च तुन्दादधः ऊरोरुपरि पठनीयम्। **सगुह्यं,** गुह्यं शिश्नम्।

तत्सहितमङ्गजातं द्वाविंशाक्षरस्य। तच्च मूलादुपरि तुन्दादधः पठनीयम्। **सपार्श्वद्वयं** पार्श्वद्वयेन सहितम्। तेन स्थानद्वयमुक्तम्। तथा च दक्षिणपार्श्वसहितं पूर्वोक्तमङ्गजातं त्रयोविंशाक्षरस्य, वामपार्श्वसहितं चतुर्विंशाक्षरस्येति विवेकः। **सदोर्द्वयमित्यनेन** स्थानद्वयमुक्तम्। दक्षिणदोर्दण्डसहितं पञ्चविंशाक्षरस्य। वामदोर्दण्डसहितं षड्विंशाक्षरस्य। **व्यापकं** सर्वदेहः। तत्सहितं पूर्वोक्तमङ्गजातं च सप्तविंशाक्षरस्य। गलपार्श्वद्वयसहितेन पूर्वोक्ताङ्गजातेन चाष्टाविंशाक्षरैकोनत्रिंशाक्षरयोर्न्यासः कार्य इति योजनया स्थानद्वयमुक्तम्। **ककुत्** गलपश्चाद्भागः। तत्सहितं पूर्वोक्तमङ्गजातं च त्रिंशार्णस्य स्थानमिति योज्यम्। **स्तनद्वयं** पूर्वोक्तमङ्गजातं चैकत्रिंशद्द्वात्रिंशार्णयोर्मन्त्रयोः स्थानम्। **सर्वशः** इति तृतीयान्तात्तसिः। सर्वेण पृष्ठमूलेन सहितं पूर्वोक्तमङ्गजातं त्रयस्त्रिंशार्णस्येति व्याख्येयम्। इतोऽधिकाक्षराणां यथायोगमिमान्येवाङ्गानि वर्णन्यासस्थानमवगन्तव्यम्। तदेतदाह– **कृत्स्नश इति॥** कृत्स्नेष्वपि मन्त्रेष्वित्यर्थः। अन्यथा एतेष्वित्युक्तत्वादिदं नावक्ष्यत्॥ १३३-१३६ ॥

**अ.सं.–** वर्णानां न्यासस्थानानि कानीत्यत एतदध्यायोक्तानुक्तैकाक्षरादिसर्व मन्त्रगतवर्णानां न्यासस्थानान्याह– **पादहृत्केष्वित्यादिना॥** पादहृदयशिरस्वित्यर्थः। **नाभ्यास्ययुक्तं** नाभिमुखसहितम्। **सदृक्** सनेत्रा। **सोरुकं** उरुसहितम्। **सोरस्कं** वक्षसा सहितम्। ललाटशिरसोरन्तरालः अलीकमुच्यते। तेन सहितं ललाटमित्यनेन न पुनरुक्तिरिति ज्ञेयम्। **तुन्दं** नाभेरधोभागः। **क्रोडकं** भुजयोर्मध्यम्। 'क्रोडकन्तु भुजान्तरं' इत्यमरः। **समूलं** वृषणसहितम्। **सपार्श्वद्वयं** उदरपार्श्वद्वयसहितम्। **व्यापकं** सर्वदेहः। **ककुत्** गलपर्श्वभागः। अत्र 'सभुजद्वयमेव च' इत्यादौ विवक्षाभेदेन स्थानभेदोऽवगन्तव्यः। स च अनुपदमेव स्पष्टीभविष्यति। नन्वत्र त्रयस्त्रिंत्शस्थानात्युक्तानि। अत्रोक्तमन्त्रेषु भूवराहमन्त्र एक एव त्रयस्त्रिंशदक्षरः। इतरे तु ततो न्यूनसङ्ख्याकवर्णाः। तस्मादयं न्यासः वराहमन्त्रमात्रस्येत्यन्यथाप्रतीतिं वारयति– **न्यास इति॥ कृत्स्नशः** सर्वेषु **एतेषु** एकाक्षरादित्रयस्त्रिंशदक्षरान्तमन्त्रेषु **यथाक्रमं** तत्तन्मन्त्रवर्णक्रममनतिक्रम्य वर्णसङ्ख्याक्रमानुसारेणेति यावत्। सर्वेषु पादादिपृष्ठमूलान्तेषु उक्तेषु स्थानेषु

न्यासः कार्यः । सर्वमन्त्रेषु वर्णन्यासः पादमारभ्य शिरःपर्यन्तत्वेनैव कार्यः । अयं तु लयन्यासः । एतद्व्युत्क्रमेण शिरआरभ्य पादपर्यन्तत्वेन सृष्टिन्यासः । तथा अर्धं शिरआदिक्रमेण अर्धपादादिव्युत्क्रमेण स्थितिन्यासश्चेति पूर्वोक्तप्रकारेण ज्ञातुं शक्यत इति भावेन संहारन्यासक्रम एक एवोक्त इति ज्ञातव्यम् । अत्र मन्त्राणामितोऽप्यधिकाक्षरत्वे स्थानानामावृत्तिः कार्येत्याहुः । अयं भावः। एकाक्षरे मन्त्रे व्यञ्जनस्वरबिन्दुभेदेन त्रिभिर्वर्णैः क्रमेण पादहृदयशिरस्तु न्यासः कार्यः । उक्तं च सङ्ग्रहे–

न्यास एकाक्षरे मन्त्रे व्यञ्जनस्वरबिन्दुभिः ।
पादहृत्केषु विलये ह्युत्पत्तौ व्युत्क्रमाद्भवेत् ।।
स्थितिरप्यत्र विज्ञेया शिरआदिहृदन्तका ।। इति ।

एवमेव द्व्यक्षरमन्त्रे पृथक् वर्णद्वयाभ्यां मिलितवर्णद्वयेन चेति त्रिभिः क्रमेण पादहृदयशिरस्सु न्यासः कार्यः । त्र्यक्षरे त्रिभिर्वर्णैः क्रमेण पादहृच्छिरस्स्वेव न्यासः। पादहृत्कानन्तरं यत् स्थानमुक्तं तत् चतुरक्षरे मन्त्रे, तदनन्तरमुक्तं स्थानं पञ्चाक्षरे इत्येवं प्रकारेण षडक्षरमारभ्य त्रयस्त्रिंशदक्षरपर्यन्तेषु मन्त्रेषूत्तरोत्तरतदनन्तरोक्त-स्थानानि क्रमेण संयोज्यानि । यद्यप्यत्र त्र्यक्षरादिमन्त्राः न कथिताः । तथाऽपि प्रसङ्गात्तेष्वपि न्यासः कथित इति ज्ञेयम् ।

वर्णानां स्थानसंयोजनप्रकारज्ञापनार्थं 'पादहृत्केषु' इत्यादिश्लोकचतुष्टय-व्याख्यानरूपाणि रघुवर्यतीर्थश्रीपादरचितानि पद्यानि लिख्यन्ते ।

एकद्वित्र्यवर्णमन्त्रार्णात् पादहृत्केषु विन्यसेत् ।। १,२,३ ।।

पन्नाभिहृन्मस्तकेषु चतुर्वर्णास्तु संहृतौ ।। ४ ।।

पन्नाभिहृद्वक्त्रकेषु पञ्चवर्णास्तु संहृतौ ।। ५ ।।

अङ्घ्रिनाभिहृदास्येषु ललाटे के षडक्षरे ।। ६ ।।

पादौ नाभिहृदी वक्त्रं नासिका च ललाटिका ।
सप्ताक्षराणं स्थानानि मस्तकेन समं विदुः ।। ७ ।।

पादनाभिहृदास्येषु नसि नेत्रललाटयोः ।
मस्तकेऽष्टार्णमन्त्राणां वर्णन्यासं विदो विदुः ।। ८ ।।

पज्जानुनाभिहृद्वक्त्रघ्राणनेत्रललाटकाः ।
मूर्धा च नववर्णानां स्थानानि मुनयो विदुः ।। ९ ।।

पज्जानुनाभिहृद्वक्त्रघ्राणाः श्रुतिदृशः क्रमात् ।
ललाटं मस्तकं वर्णदशकस्थानमुच्यते ।। १० ।।

न्यसेदेकादशार्णांस्तु पादजानूरुनाभिषु ।
हृदास्यघ्राणकर्णेषु दृकूललाटशिरस्सु च ।। ११ ।।

पज्जानूरुषु नाभौ च हृदुरोवदनेषु च ।
नासिकाश्रोत्रनेत्रेषु ललाटे मस्तके न्यसेत् ।
द्वादशाक्षरमन्त्रणामक्षरणि यथाक्रमम् ।। १२ ।।

पादयोर्जानुनोरूर्वोर्नाभौ हृदि तथोरसि ।
कण्ठे वक्त्रे नासिकायां श्रोत्रे नेत्रललाटयोः ।
के त्रयोदशवार्णानां न्यासोऽयं समुदीरितः ।। १३ ।।

पादयोर्जानुनोरूर्वोर्नाभौ हृदि तथोरसि ।
भुजे कण्ठे वक्त्रनसोः श्रोत्रे नेत्रललाटयोः ।
के चतुर्दशवर्णानां न्यासोऽयं सुमुदीरितः ।। १४ ।।

पश्चादशार्णमन्त्रणां द्विभुजग्रहणेन तु ।। १५ ।।

पादयोर्जानुनोरूर्वोर्नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डे नसोः श्रुतौ ।
नेत्रे ललाटे शिरसि षोडशार्णमनोर्न्यसेत् ।। १६ ।।

अयं सप्तदशार्णानां न्यासो गण्डयुगे नसि ।। १७ ।

पादयोर्जानुनोरूर्वोर्नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डयुगे नसि ।।

श्रुतिनेत्रललाटेष्वलीके मूर्ध्नि विन्यसेत् ।
अष्टादशार्णमन्त्राणां वर्णन्यासमिमं विदुः ।। १८ ।।

पादजानूरुतुन्देषु नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डयुगे नसि ।।
श्रुतिनेत्रललाटेषु त्वलीके मूर्ध्नि विन्यसेत् ।
एकोनविंशद्वर्णानां वर्णन्यासः प्रकीर्तितः ।। १९ ।।

पादजानूरुतुन्देषु नाभौ हृदि तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।।
श्रुतिनेत्रललाटेष्वलीके मूर्ध्नि विन्यसेत् ।
विंशदक्षरवर्णानां वर्णन्यासमथो विदुः ।। २० ।।

पज्जानूरुमूलतुन्दनाभिहृत्सु तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।।
श्रुतिनेत्रललाटेषु ह्यलीके मूर्ध्नि विन्यसेत् ।
एकविंशतिवर्णानां वर्णन्यासविधिः स्मृतः ।। २१ ।।

पज्जानूरुमूलगुह्यतुन्दे नाभौ हृदोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।।
श्रुतिनेत्रललाटेषु ह्यलीके मूर्ध्नि विन्यसेत् ।
द्वाविंशदर्णमन्त्राणां वर्णन्यासविधिः स्मृतः ।। २२ ।।

पादयोर्जानुनोरूर्वोर्मूले गुह्येऽथ पार्श्वयोः ।
तुन्दे नाभौ मन्त्रवर्णान् न्यसेद्धृदि तथोरसि ।।
क्रोडद्विभुजकण्ठेपु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेपु ह्यलीके मस्तकेऽपि च ।
त्रयोविंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ।। २३ ।।

पादयोर्जानुनोरूर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ मन्त्रवर्णान् न्यसेद्धृदि तथोरसि ।।

क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मस्तकेऽपि च ।
चतुर्विंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ।। २४ ।।

पादयोर्जानुनोरूर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृद्युरसोर्वर्णान् दोष्णोश्च विन्यसेत् ।।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मस्तकेऽपि च ।
पञ्चविंशार्णमन्त्राणां न्यासोऽयं समुदीरितः ।। २५ ।।

षड्विंशद्वर्णमनुषु न्यासो दोष्णोर्विभागतः ।। २६ ।।

सप्तत्रिंशार्णमन्त्राणां व्यापकान्तेन विन्यसेत् ।। २७ ।।

पदयोर्जानुनोरूर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृद्युरसि वर्णान् दोष्णोर्द्वयोर्न्यसेत् ।।
क्रोडद्विभुजकण्ठेषु गलपार्श्वद्वये मुखे ।
द्विगण्डयोर्नसि श्रोत्रदृक्ललाटालिकेषु च ।
अष्टविंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ।। २८ ।।

पादयोर्जानुनोरूर्वोमूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृद्युरसि वर्णान् दोष्णोर्द्वयोर्न्यसेत् ।।
क्रोडद्विभुजकण्ठे द्विगलपार्श्वककुन्मुखे ।
द्विगण्डयोर्नसि श्रोत्रे दृग्ललाटालिकेषु च ।
एकोनत्रिंशद्वर्णस्य मनोर्न्यासः प्रकीर्तितः ।। २९ ।।

पादयोर्जानुनोरूर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृत्स्तनोरूद्विबाहुषु च विन्यसेत् ।।
क्रोडद्विभुजकण्ठद्विगलपार्श्वोककुन्मुखे ।
द्विगण्डयोर्नसि श्रोत्रे दृग्ललाटालिकेषु च ।
त्रिंशद्वर्णमनोर्वर्णानेषु स्थानेषु च क्रमात् ।। ३० ।।

एकत्रिंशतिवर्णस्य न्यासः स्तनविभागतः ।। ३१ ।।

पादजानूरुमूलेषु गुह्ये पृष्टे द्विपार्श्वयोः ।
तुन्दे नाभौ हृदि द्वन्द्वे स्तनयोरुरसि न्यसेत् ।।
द्विदोष्णोः क्रोडके द्वन्द्वे भुजयोः कण्ठकूवरे ।
गलस्य पार्श्वद्वितये ककुदास्ये द्विगण्डयोः ।
घ्राणश्रोत्रदृग्ललाटालिकमूर्धसु भूपतेः ।। ३२ ।।

वराहमन्त्राक्षराणां व्यापकं चान्तिमं भवेत् ।
अनुष्टुभामयं न्यासः सर्वासां व्यापकं विना ।। इति ।

।। १३३-१३६ ।।

**गु.दी.–** एतदध्यायोक्तसर्वमन्त्रेषु वर्णन्यासस्थानान्याह— **पादेति ।।** अयं च न्यासो मन्त्राक्षरक्रमेण वोध्यः । चतुरक्षरमन्त्रन्यासः **पादहृत्केषु** चरणयोः हृदि शिरसि च । यद्वा पादहृत्केष्विति एकाक्षरे क्लीमित्यादिमन्त्रे व्यञ्जनस्वरविन्दुभिर्न्यासः कार्यः । यथोक्तं सङ्ग्रहे

न्यास एकाक्षरे मन्त्रे व्यञ्जनस्वरबिन्दुभिः ।
पादहृत्केषु.............।। इति ।।

पञ्चाक्षरे न्यासस्थानमाह— **नाभ्येति ।।** नाभिमुखाभ्यां युतं पूर्वं पादाद्यवयवत्रयम् । षडक्षरे त्वाह— **सललाटकमिति ।।** ललाटसहितं पूर्वावयवपञ्चकम् । 'ललाटमलिकं गोधिः' (अ.को.२-५-११३) इत्यमरः । एवमग्रेऽपि पूर्वोक्तमन्यच्चेति द्रष्टव्यम् । अष्टाक्षरे तु– **सनासिकादृगिति ।।** नासिकासहितदृक् । नवाक्षरे तु जान्वोश्च । चतुर्दशाक्षरे त्वाह— **सश्रोत्रं सोरुकं सोरस्कं सकण्ठं सभुजमिति ।।** इदं श्रोत्रादेः द्वित्वमविवक्ष्यैकत्वविवक्षायां ज्ञेयम् । पञ्चादशाक्षरे तु– **सभुजद्वयमेवेति ।।** एवकारेण विभागप्रतिपादनात् विभक्तयोः भुजयोरङ्गत्वं ज्ञेयम् । अष्टादशाक्षरे तु– **सभुजद्वयं सगण्डयुग्मं सालीकमिति ।।** चतुर्विंशत्यक्षरे **सतुण्डक्रोडकम्** ओष्टपुटसहितं क्रोडकं, भुजयोर्मध्यमित्यर्थः । 'क्रोडकं तु भुजान्तरम्' (अ.को.२-२) इत्यमरः । **समूलं** तलसहितं सगुह्यं

सपार्श्वद्वयमित्येतत् ज्ञेयम्। द्वात्रिंशदक्षरे तु **सदोर्द्वयं** बाहुद्वयसहितं **व्यापकं** सर्वाङ्गमभिव्याप्य स्थितं **गलस्य** कण्ठस्य **पार्श्वद्वयेन** सव्येन वामेन च भागेन ककुदा स्तनद्वयेनापि न्यसनं ज्ञेयम्। त्रयस्त्रिंशदक्षरे वाराहमन्त्रे त्वाह— **पृष्ठमूलेन सर्वश इति ।। पृष्ठमूलेन सर्वशः** सर्वैः पादादिस्तनद्वयान्तैः स्थानैश्च न्यसनं ज्ञेयम् ।।

उक्तन्यासमुपसंहरति— **न्यास** इति ।। **सर्वशः** सर्वेषु **एतेषु** मन्त्रेषु अयं न्यासः **यथाक्रमं** मन्त्राक्षरक्रमेण प्रोक्तः। अत्र चतुरक्षरमारभ्य त्रयस्त्रिंशदक्षरपर्यन्तं न्यासस्थानकथनं त्र्यक्षरैकविंशाक्षरादीनां त्वन्यत्रोक्तान्येव न्यासस्थानानि ज्ञातव्यानि। एतेषां त्वन्यत्रोक्तन्यासा न कार्याः। अपि तु अत्रोक्त एवेति ज्ञापयितुम् ।। १३३-१३६ ।।

**मङ्गली—** वर्णानां न्यासस्थानानि कानीत्यतः एतदध्यायोक्तानुक्तैकाक्षरादि-सर्वमन्त्रगतवर्णन्यासस्थानान्याह— **पादहृत्केष्वित्यादिना ।।** पादहृदयशिरस्सु इत्यर्थः। **नाभ्यास्ययुतं** नाभिमुखसहितं। **सनासिका** नासिकया सहिता **दृक्** नेत्रं **सोरुकं** ऊरूसहितं। **सोरस्कं** वक्षसा सहितं। **सालीकं** ललाटशिरसोरन्तरालं अलीकमुच्यते। तेन सहितम्। तेन सललाटमित्यनेन न पुनरुक्तिः। तुंदो नाभेरधोभागः। 'सतुण्डं' इति क्वचित्पाठः। अत्र ओष्ठपुटसहितमित्यर्थः। **क्रोडकं** भुजयोर्मध्यम्। 'क्रोडकं तु भुजान्तरं' इत्यमरः। **समूलं** वृषणसहितं, **सपार्श्वद्वयं** उदरपार्श्वद्वयसहितं, **व्यापकं** सर्वदेहः **ककुत्** गलपश्चात् भागः। अत्र 'सभुजद्वयमेव च' इत्यादौ विवक्षाभेदेन स्थानभेदोऽवगन्तव्यः। स चानुपदमेव स्पष्टीभविष्यति। अत्र नाभ्यास्ययुतं स्थानमित्यादि प्रथमा सप्तम्यर्थे। 'स्तनद्वयेन पृष्ठमूलेन' इत्यत्र युते स्थाने इत्यध्याहर्तव्यम्। नासिकादृग्भ्यां सहितं यथा भवति तथा। सनासिकादृगित्यादि क्रियाविशेषणं वा। नन्वत्र त्रयस्त्रिंशस्थानान्युक्तानि। अत्रोक्तमन्त्रेषु भूवराहमन्त्र एक एव त्रयस्त्रिंशदक्षरः। इतरे तु ततो न्यूनसङ्ख्यवर्णाः। तस्मादयं न्यासो वराहमन्त्रस्येत्यन्यथा प्रतीतिं वारयति— **न्यास इति ।। कृत्स्नशः** सर्वेषु **एतेषु** एकाक्षरादित्रयस्त्रिंशाक्षरान्तर्मन्त्रेषु **यथाक्रमं** तत्तन्मन्त्रवर्णक्रममनतिक्रम्य वर्णसङ्ख्याक्रमानुसारेणेति यावत्। सर्वशः सर्वेषु

पादादिपृष्टमूलान्तेषु उक्तेषु स्थानेषु प्रोक्तो न्यासः कार्यः । सर्वमन्त्रेषु वर्णन्यासः पादमारभ्य शिरः पर्यन्तत्वेनैव कार्यः । अयं तु लयन्यासः । एतद्व्युत्क्रमेण शिर आरभ्य पादपर्यन्तत्वेन सृष्टिन्यासः। तथा अर्धशिरआदिक्रमेण अर्धं पादादिव्युत्क्रमेण स्थितिन्यासश्चेति पूर्वोक्तप्रकारेण ज्ञातुं शक्यत इति भावेन संहारन्यासक्रम एवोक्तः इति ज्ञातव्यम् । अत्र मन्त्राणामितोऽप्यधिकाक्षरत्वे स्थानानामावृत्तिः कार्येत्याहुः । अयं भावः । एकाक्षरे मन्त्रे व्यञ्जनस्वरविन्दुभेदेन त्रिभिर्वर्णैः क्रमेण पादहृच्छिरस्वेव न्यासः । पादहृत्कानन्तरं यत् स्थानमुक्तं तत् चतुरक्षरे मन्त्रे । तदनन्तरमुक्तं स्थानं पञ्चाक्षर इत्येवं प्रकारेण षडक्षरमारभ्य त्रयस्त्रिंशदक्षरपर्यन्तेषु मन्त्रेषु तदनन्तरोक्तस्थानानि क्रमेण संयोज्यानि । यद्यप्यत्र त्र्यक्षरादिमन्त्रा न कथिताः। तथापि प्रसङ्गात्तेष्वपि न्यासः कथित इति ज्ञातव्यम् । वर्णानां स्थानसंयोजनप्रकारज्ञापनार्थं 'पादहृत्केषु' इत्यादि श्लोकचतुष्टय-व्याख्यानरूपाणि रघुवर्यतीर्थश्रीपादरचितानि पद्यानि लिख्यन्ते ।

एकद्वित्र्यर्णमन्त्रार्णान् पादहृत्केषु विन्यसेत् ।। १,२,३ ।।

पन्नाभिहृन्मस्तकेषु चतुर्वर्णांस्तु संहृतौ ।। ४ ।।

पन्नाभिहृद्वक्त्रकेषु पञ्चवर्णांस्तु संहृतौ ।। ५ ।।

अङ्घ्रिनाभिहृदास्येषु ललाटे के षडक्षरम् ।। ६ ।।

पादो(द)नाभिहृदीवक्त्रं नासिका च ललाटिका ।
सप्ताक्षराणां स्थानानि मस्तकेन समं विदुः ।। ७ ।।

पादनाभिहृदास्येषु नसि नेत्रललाटयोः ।
मस्तकेऽष्टार्णमन्त्राणां वर्णन्यासं विदो विदुः ।। ८ ।।

पज्जानुनाभिहृद्वक्त्रं घ्राणनेत्रललाटकाः ।
मूर्धा नवार्णमन्त्राणां स्थानानि मुनयो विदुः ।। ९ ।।

पज्जानुनाभिहृद्वक्त्रघ्राणश्रुतिदृशः क्रमात् ।
ललाटं मस्तकं वर्णदशकस्थानमुच्यते ।। १० ।।

न्यसेदेकादशार्णास्तु पादजानूरुनाभिषु ।
हृदास्यघ्राणकर्णेषु दृग्ललाटशिरस्सु च ।। ११ ।।

पञ्जानूरुषु नाभौ च हृदुरोवदनेषु च ।
नासिकाश्रोत्रनेत्रेषु ललाटे मस्तके न्यसेत् ।
द्वादशाक्षरमन्त्राणामक्षराणि यथाक्रमम् ।। १२ ।।

पादयोर्जानुनोरुर्वोर्नाभौ हृदि तथोरसि ।
कण्ठे वक्त्रे नासिकायां श्रोत्रे नेत्रललाटयोः ।
के त्रयोदशवर्णानां न्यासोऽयं समुदीरितः ।। १३ ।।

पादयोर्जानुनोरुर्वोर्नाभौ हृदि तथोरसि ।
भुजे कंठे वक्त्रनसोः श्रोत्रे नेत्रललाटयोः ।
के चतुर्दशवर्णानां न्यासोऽयं समुदीरितः ।। १४ ।।

पञ्चादशार्णमन्त्राणां द्विभुजग्रहणेन तु ।। १५ ।।

पादयोर्जानुनोरुर्वोः नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डनसोः श्रुतौ ।
नेत्रे ललाटे शिरसि षोडशार्णान्मनोर्न्यसेत् ।। १६ ।।

अयं सप्तदशार्णानां न्यासो गण्डयुगेन च ।। १७ ।।

पादयोर्जानुनोरुर्वोर्नाभौ हृदि तथोरसि ।।
भुजद्वये च कण्ठे च वक्त्रगण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु त्वलीके मूर्ध्नि विन्यसेत् ।
अष्टादशार्णमन्त्राणां वर्णन्यासमिमं विदुः ।। १८ ।।

पादजानूरुतुंदेषु नाभौ हृदि तथोरसि ।
भुजद्वये च कण्ठे च वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु त्वलीके मूर्ध्नि विन्यसेत् ।।
एकोनविंशद्वर्णानां वर्णन्यासः प्रकीर्तितः ।। १९ ।।

पादजानूरुतुंदेषु नाभौ हृदि तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रेगण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु त्वलीके मूर्ध्नि विन्यसेत् ।
विंशदक्षरमन्त्राणां वर्णन्यासमथो विदुः ।। २० ।।

पज्जानूरुमूलतुंदनाभिहृत्सु तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मूर्ध्नि विन्यसेत् ।
एकविंशार्णमन्त्राणां वर्णन्यासविधिस्स्मृतः ।। २१ ।।

पज्जानूरुमूलगुह्यतुंदे नाभिहृदोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मूर्ध्नि विन्यसेत् ।
द्वाविंशद्वर्णमन्त्राणां वर्णन्यासविधिस्मृतः ।। २२ ।।

पादयोर्जानुनोरुर्वोर्मूले गुह्ये च पार्श्वयोः ।
तुंदे नाभौ मन्त्रवर्णान् न्यसेद्धृदि तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मस्तकेऽपि च ।
त्रयोविंशार्णमन्त्राणां न्यासोऽयं समुदाहृतः ।। २३ ।।

पादयोर्जानुनोरुर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुंदे नाभौ मन्त्रवर्णान् न्यसेद्धृदि तथोरसि ।
क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मस्तकेऽपि च ।
चतुर्विंशार्णमन्त्राणां न्यासोऽयं समुदीरितः ।। २४ ।।

पादयोर्जानुनोरुर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुंदे नाभौ हृदुरसोर्वर्णान्दोष्णोश्च विन्यसेत् ।

क्रोडद्विभुजकण्ठेषु वक्त्रे गण्डयुगे नसि ।
श्रुतिनेत्रललाटेषु ह्यलीके मस्तकेऽपि च ।
पञ्चविंशार्णमन्त्राणां न्यासोऽयं समुदीरितः ।। २५ ।।

षड्विंशद्वर्णमन्त्रेषु न्यासो दोष्णोर्विभागतः ।। २६ ।।

सप्तविंशार्णमन्त्राणां व्यापकान्तेन विन्यसेत् ।। २७ ।।

पादयोर्जानुनोरुर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृदुरसोः वर्णान् दोष्णोर्द्वयोर्न्यसेत् ।
क्रोडद्विभुजकण्ठेषु गलपार्श्वद्वये मुखे ।
द्विगण्डयोर्नसि श्रोत्रं दृक्ललाटालिकेषु च ।
अष्टाविंशार्णमन्त्रस्य न्यासोऽयं समुदाहृतः ।। २८ ।।

पादयोर्जानुनोरुर्वोर्मूले गुह्ये द्विपार्श्वयोः ।
तुन्दे नाभौ हृदुरसो वर्णान् दोष्णोर्द्वयोर्न्यसेत् ।
क्रोडद्विभुजकण्ठद्विगलपार्श्वककुन्मुखे ।
द्विगण्डयोर्नसि श्रोत्रे दृक्ललाटालिकेषु के ।
एकोनत्रिंशवर्णस्य मनोर्न्यासः प्रकीर्तितः ।। २९ ।।

पादयोर्जानुनोरुर्वोः मूले गुह्ये द्विपार्श्वयोः ।
तुंदे नाभौ हृत्स्तनोरुद्विवाहुषु च विन्यसेत् ।
क्रोडद्विभुजकण्ठद्विगलपार्श्वककुन्मुखे ।
द्विगण्डयोर्नसि श्रोत्रे दृक्ललाटालिकेषु के ।
त्रिंशद्वर्णमनोर्वर्णान् एषु स्थानेषु च क्रमात् ।। ३० ।।

एकत्रिंशतिवर्णस्य न्यासस्तनविभागतः ।। ३१ ।।

पादजानूरुमूलेषु गुह्ये पृष्टे द्विपार्श्वयोः ।
तुंदे नाभौ हृदि द्वन्द्वे स्तनयोरुरसि न्यसेत् ।

द्विदोष्णोः क्रोडके द्वन्द्वे भुजयोः कण्ठकूबरे ।
गलस्य पार्श्वद्वितये ककुदास्ये द्विगण्डयोः ।
घ्राणश्रोत्रदृक्कूललाटालिकमूर्धसु विन्यसेत् ।
द्वात्रिंशद्वर्णमन्त्राणां न्यासोऽयं समुदीरितः ।। ३२ ।।

त्रयस्त्रिंशद्वर्णमनोर्व्यापकं चान्तिमं भवेत् ।। ३३ ।।
अनुष्टुभामयं न्यासः सर्वासां व्यापकं विना । इति ।। १३३-१३६ ।।

वर्णन्यासफलकथनं यन्त्रलेखनरप्रकारश्च

**तं.सा. प्रतिमायामात्मनि च न्यासोऽयं सन्निधानकृत् ।
बीजान्तः साध्यमध्यं च विभक्तदलमन्त्रयुक् ।। १३७ ।।**

**वर्णानुप्रातिलोम्येन(प्रतिलोमेतं) वृत्तं भूपुरसंयुतम् ।
बीजसन्दृब्धकोणं च यन्त्रं रक्षादिसाधकम् ।। १३८ ।।**

**त.क.—** अङ्गन्यास एवालम् । किमित्ययं प्रयाससाध्यो वर्णन्यास इत्यनादरणीयो नेत्याह– **प्रतिमायामिति ।।** पूजाकाले जपकाले इति शेषः । पूजाकाले प्रतिमायां स्वदेहे च, जपकाले स्वदेहमात्रे कियामाणोऽयं वर्णन्यासः वर्णप्रतिपाद्यानां च भगवद्रूपाणां फलौन्मुख्यरूपसन्निधानकृत् । अतोऽयमत्यादरणीय एव । प्रतिमन्त्रमङ्गन्यासवदनुक्तिस्तु लाघवलौल्यादेवेति भावः । मन्त्रोद्धारक्रमं, यद्यपि,

वर्णन्यासं पुरा कृत्वा देहन्यासमनन्तरम् ।
अङ्गन्यासं न्यसेत् पश्चादेष साधारणो विधिः ।।

देहशुद्धिं पुरा कृत्वा मन्त्रजापोऽक्षमालया ।
आद्यन्तयोर्बीजयुक्तं तथैव प्रणवान्वितम् ।।

जपकाले जपेन्मन्त्रं न द्रुतं न विलंवितम् ।
लक्ष्यीकृत्याच्युतं ध्यायेत्तदधीनमनोगतिः ।

बीजशक्त्यंगहीना ये मंत्राः स्युस्ते निरर्थकाः ।
तस्मात्साङ्गं शक्तियुतं बीजयुक्तं फलप्रदम् ।।

एकः सुसाधितो मन्त्रः जपहोमादितर्पणैः ।
स साधकस्य सर्वार्थं प्रसूते नात्र संशयः ।।

सम्यक् सिद्धैकमन्त्रस्य नासाध्यमिह किंचन ।
किं पुनर्बहवो यस्य का कथा हरिरेव सः ।।
तत्त्वं बुद्धिः परं व्योम क्षेत्रं ......... ।

इत्यादिना करन्यासशक्तिबीजपुनश्चरणान्तानामावश्यकत्वोक्तेः तत्संग्रहोऽपि कर्तव्यः। तथापि न तेषामतीवावश्यकता। 'यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते'(तं.सा.३-१६०) इत्यादिनाऽत्यावश्यकसंग्रहस्यैव प्रतिज्ञातत्वाददोषः। एवं मन्त्राणां जपतर्पणहोमादिना पुरुषार्थसाधनत्वं चाभिधाय यन्त्रादौ लेखनेनापि तदाहोत्तरश्लोकेन सार्धेन। बीजमन्तः यस्य, साध्यं प्रयोजनवाचकं मध्ये यस्य तत् तथोक्तम्। यच्च विभक्तेषु पद्मदलेषु मन्त्रगतवर्णलेखनयुक्तं, वर्णानां मातृकारूपाणामनुप्रातिलोम्येन, अर्धं क्रमेण, अर्धं व्युत्क्रमेण वृत्तं, भूपुरं नाम रेखाविशेषः तेन संयुतं, यच्च बीजसन्दृब्धं कोणं कोणेषु लिखितबीजाक्षरवत् तद्यन्त्रं **रक्षादिसाधकम्** रक्षाकर्षणविद्यादीन् साधयेदित्यर्थः ।। १३७-१३८ ।।

**अ.सं.–** 'सृष्टिस्थितिलयन्यासाः' इत्युक्तवर्णन्यासफलमाह– **प्रतिमायामिति** ।। **अयं** पूर्वोक्तो वर्णन्यासः **प्रतिमायां** पूजाकाले स्वोपास्यरामकृष्णादिमूर्त्तौ सन्निधानकृत्। तथा हरेरङ्गेषु न्यस्यमानमन्त्रगतवर्णप्रतिपाद्यरूपविशेषाणां च विशेषतः सन्निधिकृत् भवति । **आत्मनि** जपपूजाकर्तुः देहे च देहान्तर्यामिणो हरेः मन्त्रवर्णप्रतिपाद्यरूपविशेषाणां च सन्निधानकृद्भवति ।

आगमोक्तेन मार्गेण न्यासान्नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिश्च जायते ।। इत्युक्तेरिति भावः ।

चक्राब्जादिकमण्डले इत्यत्रादिशब्देन भद्रकयन्त्रमभिप्रेतम्। तत्र चक्राब्ज-भद्रकयोरुद्धारप्रकारः कथितः। इदानीं यन्त्रोद्धारप्रकारमाह– **बीजान्त इति** ।।

वीजं मन्त्रषीजाक्षरं अन्तः मध्ये यस्य तत् बीजान्तः। तच्च तत् साध्यं अपेक्षितप्रयोजनवाचकं वाक्यं च वीजान्तःसाध्यम् । तदेव मध्ये यस्य यन्त्रस्य तत् **बीजान्तःसाध्यमध्यम्**। **विभक्तदलमन्त्रयुक्** विभक्तदलेषु सान्तरदलेषु मन्त्रवर्णयुक्तम्। **वर्णानुप्रातिलोम्येन** आनुप्रातिपदाभ्यां युतं लोम्यम्। आनुप्रातिलोम्यम् । तेन वर्णानामकारादिपञ्चशद्वर्णानामानुलोम्येन अर्धं क्रमेण । प्रातिलोम्येन अर्धं व्युत्क्रमेण च। यद्वा सर्वेषां वर्णानामानुलोम्येन तेषामेव प्रातिलोम्येन चेत्यर्थः। **वृतमावृतम्**। 'वृत्तं' इति पाठे वृत्तरेखोपेतम्। **भूपुरसंयुतं** चतुरस्ररेखाद्वयेन संयुतम्। **बीजसंदृब्धकोणं** च मन्त्रविजाक्षरैर्वा लोकपालादिबिजाक्षरैर्वा संदृब्धानि युक्तानि कोणानि यस्य तत्तथोक्तम् । एतादृशं यन्त्रं **रक्षादिसाधकं** रक्षा रक्षणम् आदिशब्देन ज्ञानादिसङ्ग्रहः ।

अयं भावः। चतुरस्रं सुवर्णादिरचितं यन्त्रं कारयित्वा तन्मध्ये स्वोपास्य-मन्त्रविजाक्षरं लिखित्वा तत्परितः 'तत्त्वज्ञानं मम भूयात्' इत्यपेक्षित-प्रयोजनवाचकं वाक्यं लिखेत्। तत्परितः स्वोपास्यमन्त्रगतवर्णसमसङ्ख्याकानि मध्ये मध्ये व्यवधानयुक्तानि दलानि पद्मदलाकाराणि गृहाणि विलिख्य तेषु विविक्तदलेषु मन्त्रगतवर्णान् क्रमेण विलिख्य दलविवेकार्थं कृतेषु दलमध्यप्रदेशेष्वकारादिपञ्चाशद्वर्णानर्धं क्रमेण पुनः अर्धं व्युत्क्रमेण । यद्वा सर्वान् वर्णान् क्रमेण व्युत्क्रमेण च परितः आवरणत्वेन विलिखेत् । तद्वहिः वृत्तरेखां लिखेत्। तद्बहिः द्वारसहितं चतुरस्ररेखाद्वयरूपं भूपुरं लिखेत्। भूपुरकोणेषु चतुर्षु मन्त्रवीजाक्षराणि दिक्पालवीजाक्षराणि वा विलिखेत्।

यद्वा वीजान्तःसाध्यमध्यस्य अयमर्थः। वीजाक्षराणामन्तर्मध्ये विद्यमानं साध्यं मध्ये यस्य तत्तथोक्तमिति । अस्मिन् पक्षे मध्ये साध्यं विलिख्य तत्परितः वीजाक्षराणि विलिखेत् । तत्परितः पूर्वोक्तप्रकारेण दलादीनि विलिखेदीति भावः ।। १३७,१३८ ।।

**गु.दी.–** न्यासफलं निरूपयति— **प्रतिमायामिति**।। प्रतिमायां **आत्मनि** देहे चायं न्यासः सन्निधानकृत् हरेरिति शेषः। हरेः सन्निधानकृद्भवतीत्यर्थः ।।

अथ यन्त्रलेखनप्रकारमाह— **बीजान्तरिति** ।। यन्त्रं रक्षादिसाधकं भवतीति शेषः। तत्कीदृशमित्यतः- **बीजान्तः साध्यमध्यं चेत्यादि** ।। बीजान्तर्गतसाध्यं मध्ये यस्य तत्। तेन मध्ये वीजमालिख्य तद्गर्भ एव साध्यमपेक्षितप्रयोजन-वाचकवाक्यमालेख्यमित्युक्तं भवति। **विभक्तदलमन्त्रयुक्** विभक्तानि च तानि दलानि च तेषु मन्त्रेण मन्त्राक्षरैः युक्। अनुप्रतिपदाभ्यां युतं लोम अनुप्रतिलोम। तेनेति विग्रहः। तथा च वर्णानामनुलोमः अकारादिक्षकारान्तं यथास्थितक्रमः। **प्रतिलोमः** व्युत्क्रमश्च। तेन **वृतं** परिस्तृतम्। यद्वा यस्य मन्त्रस्य सिद्धिः स्वस्यास्ति तन्मन्त्रगतवर्णसमसङ्ख्याकानि दलानि कृत्वा तेषु तान् वर्णान् क्रमेण पुनः व्युत्क्रमेण च विलिखेदिति भावः। **भूपुरसंयुतं** चतुरस्त्ररेखारूपाभ्यां भूपुराभ्यां युतम्। **बीजसन्दृब्धकोणम्** बीजेन मन्त्रवीजेन सन्दृब्धानि कोणानि यस्य तत्तथा। **बीजैः** लोकपालवीजैः सन्दृब्धकोण-मित्यप्याहुः ।। १३७,१३८ ।।

**मङ्गाली**— 'सृष्टिस्थितिलयन्यासाः' इत्युक्तवर्णन्यासफलमाह- **प्रतिमायामिति**।। **अयं न्यासः** पूर्वोक्तन्यासः **प्रतिमायां** पूजाकाले स्वोपास्यनरसिंहादिमूर्त्तौ **सन्निधानकृत्** नरसिंहादिरूपस्य हरेः प्रतिमाङ्गेषु न्यस्यमानमन्त्रगतवर्णप्रतिपाद्यरूपविशेषाणां च विशेषतः सन्निधानकृत् भवेत्। **आत्मनि** जपपूजाकर्तुर्देहे चान्तर्यामिणो हरेः स्वाङ्गेषु न्यस्यमानमन्त्रगतवर्णप्रतिपाद्यरूपविशेषाणां च सन्निधानकृद्भवति। मन्त्रैः कर्तव्ययन्त्रलक्षणमाह- **बीजान्तरिति** ।। बीजं मन्त्रबीजाक्षरं अन्तः मध्ये यस्य तत् बीजान्तः। तच्च तत्साध्यं च तदेव मध्ये यस्य तत्तथोक्तम्। चतुरस्रं सुवर्णादिरचितं यन्त्रं कारयित्वा तन्मध्ये बीजाक्षरं विलिख्य तत्परितो 'मम तत्त्वज्ञानं भूयात्' इत्याद्यपेक्षितप्रयोजनवाचकं विलिखेदिति भावः। **विभक्तदलमन्त्रयुक्** विभक्तदलेषु सान्तरदलेषु मन्त्रवर्णयुक्तं स्वप्रयोजनवाचकस्य परितः स्वोपास्यमन्त्रगतवर्णसमसङ्ख्याकानि मध्ये व्यवधानयुक्तानि दलानि पद्मदलाकाराणि गृहाणि विलिख्य तेषु विविक्तदलेषु मन्त्रगतवर्णान् विलिखेदिति भावः। **वर्णानुप्रातिलोम्येन** आनुप्रातिपदाभ्यां युतं लोम्यमानुप्रातिलोम्यम्।

तेन वर्णानामकारादि पञ्चाशद्वर्णानां आनुलोम्येन अर्धं क्रमेण प्रातिलोम्येन अर्धं व्युत्क्रमेण च । यद्वा सर्वेषां वर्णानामानुलोम्येन प्रातिलोम्येन चेत्यर्थः । **वृतमावृत्तं** । 'वृत्तं' इति पाठे वृत्तरेखोपेतं दलविवेकार्थं कृतेषु दलमध्यप्रदेशेषु अकारादिपञ्चाशद्वर्णान् अर्धं क्रमेण पुनरर्धं व्युत्क्रमेण सर्वानकारादीन् वा क्रमेण व्युत्क्रमेण च विलिखेदिति भावः। 'वृत्तं' इति पाठे तद्बहिः वृत्तरेखां विलिखेदिति। **भूपुरसंयुतं** चतुरस्ररेखाद्वयेन संयुतम्। वृत्तरेखादेः परितो बहिर्भागे द्वारसहितं चतुरस्ररेखाद्वयरूपं भूपुरं विलिखेदिति भावः। **बीजसंदृब्धकोणं च** मन्त्रबीजाक्षरैर्वा लोकपालबीजाक्षरैर्वा संदृब्धानि युक्तानि कोणानि यस्य तत्तथोक्तम्। भूपुरकोणेषु चतुर्षु भूपुरबहिर्भागे मन्त्रबीजाक्षराणि दिक्पालकबीजाक्षराणि वा विलिखेदिति भावः । केचित्तु यन्त्रस्य चतुरस्रत्वेन वृत्ततया भूपुरादिविलेखने कोणचतुष्टयमवशिष्टं भवति। तत्र बीजाक्षरं विलिखेदिति भावमाहुः। भूपुरशब्देन गृहाकारा रेखोच्यत इति च। यद्वा बीजान्तःसाध्यमित्यस्यायमर्थः । बीजाक्षराणामन्तः मध्ये विद्यमानं साध्यं 'मम हरिभक्तिर्भूयात्' इत्यादिरूपं मध्ये यस्य तत्तथोक्तमिति । अस्मिन्पक्षे मध्ये साध्यं विलिख्य तत्परितः बीजाक्षणाणि विलिखेत्। तत्परितः पूर्वोक्तप्रकारेण दलादि लिखेदिति । एतादृशं यन्त्रं **रक्षादिसाधकं** रक्षा रक्षणम् । **आदिपदेन** ज्ञानादिसङ्ग्रहः ।। १३७-१३८ ।।

लिखितयन्त्रस्य उपयोगकथनम्

**त.सा. समं तत्(समन्तम्)सर्वमन्त्रेषु जप्तं धार्यं तु वा भुवि ।**
**विलिख्य मण्डले(तत्र) वा तत्पूजयेद्धरिमञ्जसा ।। १३९ ।।**

**त.क.–** ननु यन्त्रलेखनं सर्वेषामपि मन्त्राणां वोत्तममन्त्रविशेषाणां वा? आद्ये किं प्रकारभेदोऽस्ति न वा? आद्ये तत्तन्मन्त्रोद्धारावसर एवांगन्यासादिवत् प्रतिमन्त्रं वक्तव्यत्वापत्तिः। न द्वितीयः। वर्णानां मन्त्रेषु सङ्ख्यानियमाभावेन तत्तन्मन्त्रेष्वपि प्रकारभेदानिवारणात्। आद्यमन्त्रानन्तरमेव वक्तव्यत्वापाताच्च। अत एव न द्वितीयः। सर्वमन्त्रसाधारणन्यासाभिधानानन्तरमस्य निरूपणा-

योगाच्च। अत्र विशेषज्ञापकादर्शनाच्चेत्यत आह– **सममिति**।। तद्यन्त्रलेखनं सर्वमन्त्रेष्वपि समम्। उद्धृतैः सर्वमन्त्रैर्यन्त्रं लेखनीयम्। न तु मन्त्रविशेषेण। तेन न प्रक्रमभङ्गदोषः। अत एव 'विभक्तदलमन्त्रयुक्', 'वर्णानुप्रातिलोम्येन', 'बीजान्तःसाध्यमध्यं च' इति सामन्येनोक्तम्। न तु षोडशधा विभक्तदलयुक्, ककारादिवर्णेति, क्लीमिति, बीजान्तरिति वोक्तम्। न च तत्तन्मन्त्रोद्धारावसर एव वक्तव्यत्वापत्तिः। वर्णन्यासस्येव लाघवेनैकीकृत्य कथनप्रसङ्गादत्रोक्तिसम्भवात्। तथा च यो मन्त्रो यावदक्षरसङ्ख्यावांस्तावद्दलयुक्तपद्मं लिखित्वा, तन्मध्ये तत्तद्बीजाक्षरं लिखित्वा, तत्परितो मध्यप्रदेशे इदं मे भूयादिति स्वाभीष्टप्रार्थनपरपदानि साध्याख्यानि लिखित्वा, विभक्तदलेषु तत्तन्मन्त्राक्षराणि विलिख्य, तद्बहिरकारादिपश्चाशद्वर्णान्, तत्तन्मन्त्रवर्णान् वाऽर्धं क्रमेणार्धं व्युत्क्रमेण लिखित्वा, तद्बहिर्वृत्तरेखां लिखित्वा, तद्बहिश्चतुरस्ररेखाद्वयरूपभूपुरं लिखित्वा, भूपुरकोणेषु मन्त्रबीजानि दिक्पालबीजानि वा लिखेदित्यर्थः।

लिखितं यन्त्रं किं कार्यमित्यत इतिकर्तव्यताविशेषं सूचयन्नाह– **जप्तमिति**।। तत्तन्मन्त्रजपेनाभिमन्त्रितं हस्तादौ धार्यमित्यर्थः।

यन्त्रमेवं समालिख्य जातरूपमये पटे।
भाजने ताम्रपट्टे च भूर्जे क्षौममये तथा।।

सूक्ष्मतन्तुपटे वाऽपि प्रतिष्ठाप्य सशार्ङ्गिणम्।
हुत्वा सहस्रमाज्येन यन्त्रे सम्पातपूर्वकम्।
अर्चयित्वाऽयुतं जप्त्वा धारयेद्यन्त्रमुत्तमम्।।

इत्यादिवचनोक्तानितिकर्तव्यताविशेषांस्तुशब्देनाऽह। वाशब्दो वक्ष्यमाणापेक्षया।

अर्चनार्थं मुने वक्ष्ये यन्त्रं श्रीकरमुत्तमम्।
स्वगृहे वा वने वाऽथ विष्णोरायतनेऽपि वा।।

स्थानमेकान्तमाश्रित्य लेपयेद्गोमयाम्भसा।
तत्र तु स्थापयेत् पीठं क्षालितं शुद्धवारिणा।
विलिप्य गन्धं पङ्केन लिखेदष्टदलाम्बुजम्।।

इत्यादिवचनानुसारात् विनियोगान्तरमाह— **भुवीति ।।** तद्यन्त्रं **भुवि** मण्डले विलिख्य तत्र हरिमञ्जसा पूजयेद्वेति सम्बन्धः ।। १३९ ।।

**अ.सं.–** इदं यन्त्रे लेखनं न मन्त्रविशेषनिष्ठम् । किन्तु मन्त्रमात्रेऽपीत्याह– **सममिति ।। सर्वमन्त्रेषु** वराहादिमन्त्रेषु तत् यन्त्रलेखनं **समम्** कर्त्तुं योग्यमेव । लेख्यपत्राणि–

त्रिलोहभूर्जपत्राणि क्षौमतालदलानि च ।
तत्तत्कल्पोदितानि स्युर्यन्त्राधिकरणानि च ।।

यन्त्रे लेखनद्रव्याणि–

चन्दनागरुकर्पूरकस्तूरीरोचनान्वितः ।
मदः करिभवो लाक्षारसः कुंकुमसंयुतः ।। इति ।

एवं विलिखितयन्त्रस्योपयोगमाह– **जप्तमिति ।।** जप्तं यन्त्रं गायत्रीमन्त्रेण **जप्तम**भिमन्त्रितम् । यन्त्रगायत्री तु– 'यन्त्रराजाय विद्महे देवग्रहाय धीमहि । तन्नो यन्त्रः प्रचोयियात्' इति । प्रतिष्ठितं चेति ग्राह्यम् । प्रतिष्ठाप्रकारस्तु–

क्षौद्राज्यदुग्धैः प्रथमं नारिकेलाम्भसा ततः ।
अभिषिच्याथ तोयेन ततो नित्यं क्रमं यजेत् ।
एवं चक्रप्रतिष्ठायाः क्रमः सान्निध्यकारकः ।। इति ।

एतादृशं यन्त्रं **धार्यं** करे वा कण्ठे वा बध्नीयात् । अथवा पूज्यं चेत्यर्थः । धारयेद्वा पूजयेद्वेति भावः । पक्षान्तरमाह– **भुवीति ।।** वाशब्दो वर्तते । अथवा भुविकृते मण्डले तद्यन्त्रं **विलिख्य** पूर्वोक्तद्रव्यैर्लिखित्वा यन्त्रे हरिमञ्जसा पूजयेद्वेत्यर्थः । 'अत्र' इति पाठे यन्त्रमिति शेषः । यन्त्रं विलिख्येत्यन्वयः । **अत्र** यन्त्रे इत्यर्थः ।। १३९ ।।

**गु.दी.–** उक्तं यन्त्रलेखनप्रकारं सर्वत्राप्यतिदिशति— **सममिति ।। तत्** यन्त्रलेखनं **सर्वमन्त्रेषु** वाराहादिनिखिलमन्त्रेषु सममित्यर्थः । 'समन्तात्' इति पाठे **समन्तात्** विद्यमानेषु सर्वमन्त्रेषु लेखनप्रकारः सम इत्याध्याहृत्यार्थो द्रष्टव्यः । यन्त्रोपयोगं वक्ति— **जप्यमिति ।। जप्यं** अभिमन्त्रितं प्रतिष्ठितमिति

यावत्। धार्यं तुशब्दोऽप्यर्थे। पूज्यं चेत्यर्थः। धारणपूजनयोर्विकल्पो वेति। विकल्पान्तरमाह— **भुवीति ॥** भुवि कृते मण्डले **तत्** यन्त्रं विलिख्य। तदिति प्रथमा सप्तम्यर्थेऽपि। 'सप्तसु प्रथमा' इति सूत्रात्। तथा च तस्मिन् यन्त्रे हरिमञ्जसा पूजयेद्वेत्यन्वयः ॥

अथायं मन्त्रलेखनप्रकारः–

यावद्वर्णयुतो मन्त्रो लेख्यस्तावत्पत्रकं मध्ये कर्णिकायुक्तं पद्मं कृत्वा कर्णिकायामूर्ध्वभागे मन्त्रबीजं परितो लिखित्वा बीजमध्य एव साधकस्य नाम षष्ठ्यन्तं विलिख्य तत्रैव द्वितीयान्तं साध्यफलनाम लिखित्वा कुरु कुर्विति द्विवारं लिखेत्। तत्पत्रेषु मन्त्रवर्णान् लिखित्वा तद्बहिः कर्णिकासु अनुलोमान् अकारमारभ्य क्षकारान्तान् एवमेकपञ्चाशद्वर्णान् तद्बहिः प्रतिक्षकारमारभ्या-कारान्तान् प्रतिलोमांश्च वर्णान् वृत्ताकारेण विलिख्य ततः चतुर्दिक्षु 'हंसः सोऽहम्' इति यन्त्रप्राणजीवौ विलिख्य ततो वहिः चतुरस्त्ररेखारूपं भूपुरद्वयमालेख्य आद्यभूपुरादौ अनङ्गगायत्रीमालिख्यानन्तरं भूपुरद्वयमध्ये—

यन्त्रराजाय विद्महे महायन्त्राय धीमहि। तन्नो यन्त्रः प्रचोदयात् ॥ इति

यन्त्रगायत्रीमालिख्य द्वितीयभूपुरोर्ध्वम् 'ईं ईं' विलिख्य भूपुरदशदिक्षु 'लं रं मं क्षं वं यं सं हं ह्रीं आम्' इति यन्त्रहृदयरूपं लोकपालबीजं विलिखेदिति। यथोक्तं यन्त्रसारे—

लरमक्षान्वयौ सहौ ह्रीं आं यन्त्रस्य हृदयम्।

बिन्दुयुतं लेख्यं समन्ततः हंसः सोऽहं प्राणजीवौ यन्त्रे लेख्यौ प्रयत्नतः'

इति। लेख्यपत्राणि तु

त्रिलोहभूर्जपत्राणि क्षौमतालदलानीति सम्प्रदायविदः।

कामनाविशेषेण पत्रविशेषो लक्षसागरे–

सुवर्णरचितं यन्त्रं सर्वराजवशङ्करम्।

रजतेन कृतं यन्त्रमायुरारोग्यकामदम् ॥

ताम्रेण रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम् ।
यन्त्रं हि स्फाटिकं देवि! मनोभिलषितप्रदम् ।
माणिक्यरचितं यन्त्रं राज्यदं मुक्तिदं मतम् ।। इत्यादि ।

यन्त्रकालावधिरुक्ता तत्त्वसागरे–

यावज्जीवं सुवर्णे स्याद्रूप्ये द्वाविंशतिः प्रिये! ।
ताम्रे द्वादशकं वर्षं तदर्धम् भूर्जपत्रके ।। इति ।

सीसादौ लेखने दोष उक्तः तन्त्रराजे–

सीसकांस्यादिषु पुनः पूर्वोक्तविपरीतकृत् । इति ।। १३९ ।।

**मङ्काली**— इदं यन्त्रे लेखनं न मन्त्रविशेषनिष्ठं किंतु मन्त्रमात्रेऽपीत्याह– **सममिति ।। सर्वमन्त्रेषु** वराहादिमन्त्रेषु **तत्** यन्त्रलेखनं **समं** कर्तुं योग्यमेव । लेख्यपत्राणि–

त्रिलोहभूर्जपत्राणि क्षौमतालदलानि च ।
तत्तत्कल्पोदितानि स्युर्यन्त्राधिकरणानि च ।।

यन्त्रलेखनद्रव्याणि च–

चन्दनागरुकर्पूरकस्तूरीरोचनान्वितः ।
मदः करिभवो लाक्षारसः कुङ्कुमसंयुतः ।। इति ।

एवं लिखितयन्त्रस्योपयोगमाह– **जप्तमिति ।।** स्पृष्ट्वेति शेषः । यन्त्रं गायत्रीमन्त्रेणाभिमन्त्रितम् । यन्त्रगायत्री तु– 'यन्त्रराजाय विद्महे देवग्रहाय धीमहि ।। तन्नो यन्त्रः प्रचोदयात्' इति । प्रतिष्ठितं चेति ग्राह्यम् । प्रतिष्ठाप्रकारस्तु–

क्षौद्राज्यदुग्धैः प्रथमं नारिकेलांभसा ततः ।
अभिषिच्याथ तोयेन ततो नित्यं क्रमं यजेत् ।
एवं चक्रप्रतिष्ठायाः क्रमः सान्निध्यकारकः ।। इति ।

एतादृशं यन्त्रं **धार्यं** करे वा कण्ठे वा बध्नीयात् । **वा** अथवा पूज्यं वेत्यर्थः पक्षान्तरमाह– **भुवीति ।।** वाशब्दोऽनुवर्तते । अथवा भुविकृते मण्डले तद्यन्त्रं

**विलिख्य** पूर्वोक्तद्रव्यैर्लिखित्वा यन्त्रे हरिमञ्जसा पूजयेदित्यर्थः । 'अत्र' इति पाठे यन्त्रमिति शेषः । यन्त्रं विलिख्येत्यन्वयः । अत्रेत्यस्य यन्त्र इत्यर्थः । भुवि वा स्थापयेदिति शेष इत्यप्याहुः ।। १३९ ।।

तारतम्येन गुरुलक्षणाभिधानम्

तं.सा. **प्रतिमा(मोक्त)लक्षणैर्यावद्युक्त आचार्य उत्तमः ।**
**सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ।। १४० ।।**

**यावद्भक्तो यथालब्धैगुणैर्युक्तोऽथ(युतो हि) वैष्णवः ।**
**गुरुः सत्सम्प्रदायज्ञस्तारतम्येन सिद्धिदः ।। १४१ ।।**

**त.क.**— एवं सप्रपञ्चं प्रणवादिधान्वन्तरान्तान् मन्त्रानुद्धृत्य, वर्णन्यासहरिस्मरणादिसाधनांशजातं च तत्प्रकरण एवाभिधाय, उद्धृतमन्त्रजपे साधारणाङ्गजातं वक्तुमुत्तरो ग्रन्थः ननु—

मनोगतं यस्य यत्तु तत्तदाप्नोत्यसंशयम् ।
तथा तथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् । (तं.सा.४-१२८)

इत्यादिनोक्तः फलवादोऽनुपपन्नः । जपाद्यनुष्ठानेऽपि फलानुपलम्भात् । न च कालकृतोऽनुपलम्भ इति वाच्यम् । 'तत्राप्युद्रिक्तवीर्या हि मन्त्रा अत्र प्रकीर्तिताः'(तं.सा.४-४६) इत्युक्तत्वात् । न च 'अवज्ञाता गुरूणां च देवतानां न सिद्ध्यति' (तं.सा.४-११८) इत्यादिना गुर्वाद्यवज्ञानेन, कामक्रोधादिनाऽवैष्णवाचार्यलाभादिना वाऽन्यथासिद्ध इति वाच्यम् । तदभावेऽप्युक्तफलस्याऽञ्जस्येन सर्वेषामनुपलम्भात् । न हि वैष्णवोऽपि गुरुभक्तोऽपि सर्वो जनः साम्येन फलभागी दृश्यते । अश्वत्थामप्रयुक्तस्य ब्रह्मास्त्रस्य भगवता कृष्णेन निवारितत्वात्, अर्जुनेनोपसंहृतत्वाचेत्याशङ्क्याऽऽह– **प्रतिमेति।।** यद्वा, गुरुमुखाच्छ्रुत एव मन्त्रस्तद्गुरुतारतम्यानुसारेण सिद्धिद इत्यभिप्रेत्य गुरुलक्षणमाह— **प्रतिमेति ।।** 'मुखादूर्ध्वं द्व्यंगुलोच्चां नवांगुललसन्मुखाम्' (तं.सा.३-३) इत्यादिनोक्तैः षणावत्यंगुलत्वप्रभृतिद्वात्रिंशल्लक्षणैः **यावद्युक्तः** साकल्येन युक्तः उत्तम आचार्यः ।

निरवधिकोत्तम इत्यर्थः । **अथ** तदनु हरेः सृष्ट्याद्याज्ञापितार्थकरणे सामर्थ्ययुक्तः । तपसा सर्ववित् । **युक्तो** मनोयोगयुक्तः । यावद्भक्त्या समस्तजीवनिकायापेक्षया सम्पूर्णभक्त्या । तया यथालब्धगुणैः योग्यतयः सम्पूर्णशतानन्दादिगुणैर्युक्तः । **सत्सम्प्रदायज्ञः** भगवत्संप्रदायज्ञः । वैष्णवो चतुर्मुखो गुरुः तारतम्येन सिद्धिदः ॥ १४०-१४१ ॥

**अ.सं.—** इह प्रोक्तमन्त्राणां तदर्थज्ञानस्य च गुरुप्रसादलब्धानामेवाभीष्टफलसिद्धिहेतुत्वं नान्यथा । अतो गुरुस्वीकारः कर्तव्यः । तत्र यथा यथा गुरुवैशिष्ट्यं तथा तथा फलेऽप्याधिक्यमिति भावेन गुरूणां तारतम्यज्ञापनाय गुरुलक्षणमाह– **प्रतिमेति ॥ प्रतिमालक्षणैः** प्रतिमायाः यानि लक्षणानि षण्णवत्यङ्गुलादीनि तृतीयाध्याये उक्तानि तैः **यावत्** साकल्येन युक्तः । उपलक्षणमेतत् । द्वात्रिंशल्लक्षणैर्युक्तश्चेति ज्ञेयम् । 'द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम इष्यते' इति विष्णुतीर्थीयोक्तेः ।

षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः ।
सप्तपादचतुर्हस्तो द्वात्रिंशल्लक्षणैर्युतः ॥ *(१.१२२)*

इति महाभारततात्पर्यनिर्णयोक्तेश्च । द्वात्रिशंलक्षणानि तु लक्षणग्रन्थे उक्तानि ।

पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः ।
त्रिपृथुर्लघु गम्भीरो द्वात्रिंशल्लक्षणानि तु ॥ इति ।

अस्यार्थः । भुजनेत्रहनुजानुनासास्थानेषु पञ्चदीर्घत्वानि । त्वक्केशाङ्गुलिपर्वसु पञ्चसूक्ष्मणि । पाणिपादनेत्रान्ततालुस्थानेषु जिह्वायामधरोष्ठनखेषु सप्तरक्तत्वानि। कक्षकुक्षिवक्षोघ्राणस्कन्धललाटेषु षडुन्नतानि । ललाटकटिवक्षस्सु त्रिषु पृथुत्वं विशालत्वम् । ग्रीवाप्रजननजङ्घेषु त्रिषु ह्रस्वत्वानि । स्वरसत्वनाभिषु त्रिषु गम्भीरत्वानीति । अत्र लघुशब्दो ह्रस्वार्थो ज्ञेयः ।

तथा **सर्ववित्** सर्वज्ञः **तपसा** व्रतजपादितपसा युक्तः । हरेः **आज्ञाशक्तियुतः** आज्ञाकरणशक्तियुतः । हरिर्यत्र यत्र विषये आज्ञापयति तत्सर्वं कर्तुं समर्थ इति भावः । यद्वा आज्ञाशब्देन श्रुतिस्मृती उच्येते । 'श्रुतिस्मृती हरेराज्ञे' इत्युक्तेः ।

एवञ्च हरेराज्ञायां श्रुतिस्मृतिविहितसकलकर्मकरणे शक्तिमान् तत्कर्तेति यावत्। एतादृशः उत्तमः **आचार्यः** गुरुः ॥

तदवरगुरुलक्षणमाह– **यावदिति ॥ यावद्भक्तः** हरौ स्वयोग्यभक्तिमान्। सर्वप्रकारेण भक्त इति वा । **यथालब्धैः** स्वस्वयोग्यतानुसारेण प्राप्तैरित्यर्थः । **गुणैः** सार्वज्ञ्यव्याख्यातृत्वादिपूर्वोक्तगुणैः। उपलक्षणमेतत्। स्वयोग्यलक्षणैश्च युक्तः **वैष्णवः** विष्णुसर्वोत्तमत्वादिज्ञानवान् विष्णुदीक्षावान्वा, **सत्सम्प्रदायज्ञः** ब्रह्मादिगुरूपदेशपरम्पराप्राप्तसत्सिद्धान्तज्ञानी एतादृशः। **अथ** तदनन्तरः तदवरः। **गुरुः** गुरुसमुदायः। **क्रमेण** अमुख्य इत्यर्थः।

अयं भावः। मुख्यो गुरुश्चतुर्मुखः तस्यैव उक्तसम्पूर्णगुरुलक्षणपूरितत्वात्। तदुक्तम्। 'तस्मात् ब्रह्मा गुरुर्मुख्यः'(मा.भा.ता.नि.१.१२०) इति । तदन्ये तु स्वोत्तमान्ताः सर्वेऽपि क्रमात् अमुख्यगुरवः क्रमादूनलक्षणवत्वात्। उक्तं चानुव्याख्याने– 'स्वोतमास्तु क्रमेणैव' इति (३.३.४६) । 'क्रमादूनगुणास्त्वन्ये ईरिताः गुरवः क्रमात्' इति *(इति विष्णुतीर्थीये १.२५३)* चेति। क्रमादमुख्यगुरुत्वे युक्त्यन्तरमाह– **तारतम्येनेति ॥** तारतम्येन **सिद्धिदः** फलदः । अतः चतुर्मुखेतरगुरुसमुदायः क्रमेणामुख्य इत्यर्थः ॥ १४०-१४१ ॥

**गु.दी.**– गृहीत्वा गुरुणा दत्तं यन्त्रं भक्त्या प्रसन्नधीः ।
बिभृयादुक्तविधिना विश्वस्तः सर्वसिद्धये ॥

इति वचनेन गुरुप्रसादागतस्य यन्त्रस्य सफलत्वावगमात् तत्सङ्गतगुरुलक्षणमाह— **प्रतिमोक्तेति ॥ प्रतिमोक्तयावल्लक्षणैः** तृतीयाध्यायोक्तषण्णवत्यङ्गुलादिसर्वप्रतिमालक्षणैः युक्तः। उपलक्षणमेतत्। द्वात्रिंशल्लक्षणैश्चेत्यपि ग्राह्यम्। 'द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम इष्यते' (वि.ती. १-२५२) इति विष्णुतीर्थीयोक्तेः। **सर्ववित्** अश्रुतप्रतिभावान्, तपसा युक्तः। **हरेराज्ञाशक्तियुतः**। 'श्रुतिस्मृती हरेराज्ञे' इति वचनात् हर्याज्ञारूपाणामृगादिपञ्चवेदानां शक्तिर्मुख्यार्थज्ञप्तिस्तया युतः। निखिलवेदानां भगवत्परत्वरूपमुख्यार्थज्ञानी भीमसेनप्रभृतिरेव उत्तम आचार्यः। यथोक्तं गीतातात्पर्ये—

निरवधिकोत्तम इत्यर्थः। **अथ** तदनु हरेः सृष्ट्याद्याज्ञापितार्थकरणे सामर्थ्ययुक्तः। तपसा सर्ववित्। **युक्तो** मनोयोगयुक्तः। यावद्भक्त्या समस्तजीवनिकायापेक्षया सम्पूर्णभक्त्या। तया यथालब्धगुणैः योग्यतयः सम्पूर्णशतानन्दादिगुणैर्युक्तः। **सत्सम्प्रदायज्ञः** भगवत्संप्रदायज्ञः। वैष्णवो चतुर्मुखो गुरुः तारतम्येन सिद्धिदः ॥ १४०-१४१ ॥

**अ.सं.—** इह प्रोक्तमन्त्राणां तदर्थज्ञानस्य च गुरुप्रसादलब्धानामेवाभीष्टफलसिद्धिहेतुत्वं नान्यथा। अतो गुरुस्वीकारः कर्तव्यः। तत्र यथा यथा गुरुवैशिष्ट्यं तथा तथा फलेऽप्याधिक्यमिति भावेन गुरूणां तारतम्यज्ञापनाय गुरुलक्षणमाह– **प्रतिमेति ॥ प्रतिमालक्षणैः** प्रतिमायाः यानि लक्षणानि षण्णवत्यङ्गुलादीनि तृतीयाध्याये उक्तानि तैः **यावत्** साकल्येन युक्तः। उपलक्षणमेतत्। द्वात्रिंशल्लक्षणैर्युक्तश्चेति ज्ञेयम्। 'द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम इष्यते' इति विष्णुतीर्थीयोक्तेः।

षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः।
सप्तपादचतुर्हस्तो द्वात्रिंशल्लक्षणैर्युतः ॥ *(१.१२२)*

इति महाभारततात्पर्यनिर्णयोक्तेश्च। द्वात्रिशंलक्षणानि तु लक्षणग्रन्थे उक्तानि।

पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः।
त्रिपृथुर्लघु गम्भीरो द्वात्रिंशल्लक्षणानि तु ॥ इति।

अस्यार्थः। भुजनेत्रहनुजानुनासास्थानेषु पञ्चदीर्घत्वानि। त्वक्केशाङ्गुलिपर्वसु पञ्चसूक्ष्मणि। पाणिपादनेत्रान्ततालुस्थानेषु जिह्वायामधरोष्ठनखेषु सप्तरक्तत्वानि। कक्षकुक्षिवक्षोघ्राणस्कन्धललाटेषु षडुन्नतानि। ललाटकटिवक्षस्सु त्रिषु पृथुत्वं विशालत्वम्। ग्रीवाप्रजननजङ्घेषु त्रिषु ह्रस्वत्वानि। स्वरसत्वनाभिषु त्रिषु गम्भीरत्वानीति। अत्र लघुशव्दो ह्रस्वार्थो ज्ञेयः।

तथा **सर्ववित्** सर्वज्ञः **तपसा** व्रतजपादितपसा युक्तः। हरेः **आज्ञाशक्तियुतः** आज्ञाकरणशक्तियुतः। हरिर्यत्र यत्र विषये आज्ञापयति तत्सर्वं कर्तुं समर्थ इति भावः। यद्वा आज्ञाशव्देन श्रुतिस्मृती उच्येते। 'श्रुतिस्मृती हरेराज्ञे' इत्युक्तेः।

एवञ्च हरेराज्ञायां श्रुतिस्मृतिविहितसकलकर्मकरणे शक्तिमान् तत्कर्तेति यावत्। एतादृशः उत्तमः **आचार्यः** गुरुः ॥

तदवरगुरुलक्षणमाह– **यावदिति ॥ यावद्भक्तः** हरौ स्वयोग्यभक्तिमान्। सर्वप्रकारेण भक्त इति वा । **यथालब्धैः** स्वस्वयोग्यतानुसारेण प्राप्तैरित्यर्थः । **गुणैः** सार्वज्ञ्यव्याख्यातृत्वादिपूर्वोक्तगुणैः। उपलक्षणमेतत्। स्वयोग्यलक्षणैश्च युक्तः **वैष्णवः** विष्णुसर्वोत्तमत्वादिज्ञानवान् विष्णुदीक्षावान्वा, **सत्सम्प्रदायज्ञः** ब्रह्मादिगुरूपदेशपरम्पराप्राप्तसत्सिद्धान्तज्ञानी एतादृशः। **अथ** तदनन्तरः तदवरः। **गुरुः** गुरुसमुदायः। **क्रमेण अमुख्य** इत्यर्थः।

अयं भावः। मुख्यो गुरुश्चतुर्मुखः तस्यैव उक्तसम्पूर्णगुरुलक्षणपूरितत्वात्। तदुक्तम्। 'तस्मात् ब्रह्मा गुरुर्मुख्यः'(मा.भा.ता.नि.१.१२०) इति । तदन्ये तु स्वोत्तमान्ताः सर्वेऽपि क्रमात् अमुख्यगुरवः क्रमादूनलक्षणवत्वात्। उक्तं चानुव्याख्याने– 'स्वोतमास्तु क्रमेणैव' इति (३.३.४६) । 'क्रमादूनगुणास्त्वन्ये ईरिताः गुरवः क्रमात्' इति *(इति विष्णुतीर्थीये १.२५३)* चेति। क्रमादमुख्यगुरुत्वे युक्त्यन्तरमाह– **तारतम्येनेति ॥** तारतम्येन **सिद्धिदः** फलदः । अतः चतुर्मुखेतरगुरुसमुदायः क्रमेणामुख्य इत्यर्थः ॥ १४०-१४१ ॥

**गु.दी.**– गृहीत्वा गुरुणा दत्तं यन्त्रं भक्त्या प्रसन्नधीः ।
विभृयादुक्तविधिना विश्वस्तः सर्वसिद्धये ॥

इति वचनेन गुरुप्रसादागतस्य यन्त्रस्य सफलत्वावगमात् तत्सङ्गतगुरुलक्षणमाह— **प्रतिमोक्तेति ॥ प्रतिमोक्तयावल्लक्षणैः** तृतीयाध्यायोक्तषण्णवत्यङ्गुलादिसर्वप्रतिमालक्षणैः युक्तः। उपलक्षणमेतत्। द्वात्रिंशल्लक्षणैश्चेत्यपि ग्राह्यम्। 'द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम इष्यते' (वि.ती. १-२५२) इति विष्णुतीर्थीयोक्तेः। **सर्ववित्** अश्रुतप्रतिभावान्, तपसा युक्तः। **हरेराज्ञाशक्तियुतः**। 'श्रुतिस्मृती हरेराज्ञे' इति वचनात् हर्याज्ञारूपाणामृगादिपञ्चवेदानां शक्तिर्मुख्यार्थज्ञप्तिस्तया युतः। निखिलवेदानां भगवत्परत्वरूपमुख्यार्थज्ञानी भीमसेनप्रभृतिरेव उत्तम आचार्यः। यथोक्तं गीतातात्पर्ये—

अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।

विस्तृता नृषु जातं च तं विन्द्याद्देवसत्तमम् ।। (गी.ता.१३-२६) इति।

व्याख्यातं चेदमवतार्य टीकाकारैः– 'यदुक्तं मनुष्याणां मूलप्रमाणापेक्षा प्रायो न सम्यग्विभासत इति । तदयुक्तम् । पाण्डवादिमनुष्याणामश्रुतार्थेऽपि सम्यग्बहुप्रतिभादर्शनादित्याशङ्कां प्रमाणवाक्येन परिहरते— **अश्रुतेति ।।** विस्तृता व्याप्ता वहुलेत्यर्थः' (न्या.दी.१३-२६) इति ।।

तादृशगुरुप्राप्तेः सर्वेषामभावदाह— **यावदिति ।। यावद्भक्तः** पूर्णभक्तः । 'यावत्तावच्च सकलं' इत्यभिधानात् । **अथानन्तरं** मुख्यो गुरुर्न चेद् **यावद्भक्तः** यावती योग्यता तावद्भक्तः **यथालब्धैः** स्वयोग्यतानुसारेण प्राप्तैः व्याख्यातृत्वादिगुणैः **युक्तः** सम्पन्नः सत्सम्प्रदायज्ञो गुरुरित्यर्थः ।

इदमुक्तं भवति । मुख्यो गुरुश्चतुर्मुखः, तस्यैव सम्पूर्णगुरुलक्षणवत्त्वात् । तदुक्तं 'तस्माद्ब्रह्मा गुरुर्मुख्यः' (म.भा.ता.नि.१-१२०) इति । शिवमारभ्य स्वोत्तमान्ताः सर्वेऽपि क्रमान्मुख्यगुरवः क्रमादूनगुणत्वात् । यथोक्तमनुव्याख्याने—

क्रमादूनगुणास्त्वन्ये ईरिता गुरवः क्रमात् । इति ।

क्रमान्मुख्यगुरुत्वे युक्त्यन्तरमाह— **तारतम्येनेति ।। १४०-१४१ ।।**

**मङ्गाली—** इह प्रोक्तमन्त्राणां तदर्थज्ञानस्य च गुरुप्रसादलब्धानामेवाभीष्टफलसिद्धिहेतुत्वं नान्यथा। अतो गुरुस्वीकारः कर्तव्यः। तत्र यथा तथा गुरुवैशिष्ट्यं तथा तथा फलेऽप्याधिक्यमिति भावेन गुरूणां तारतम्यज्ञापनाय गुरुलक्षणमाह– **प्रतिमेति ।। प्रतिमालक्षणैः** प्रतिमायाः यानि लक्षणानि षण्णवत्यङ्गुलत्वादीनि तृतीयाध्याये उक्तानि तैः **यावत्** साकल्येन युक्तः । उपलक्षणमेतत् । द्वात्रिंशल्लक्षणैः युक्तश्चेति ज्ञेयम् । 'द्वात्रिंशल्लक्षणैर्युक्तो गुरुरुत्तम इष्यते' इति विष्णुतीर्थीयोक्तेः । तथा **सर्ववित्** सर्वज्ञः **तपसा** व्रतजपादितपसा युक्तः **हरेराज्ञाशक्तियुतः** आज्ञाकारणशक्तियुतः हरिर्यत्र यत्र विषयेऽऽज्ञापयति तत्सर्वं कर्तुं समर्थ इति भावः । यद्वा आज्ञाशब्देन श्रुतिस्मृती उच्येते। 'श्रुतिस्मृती हरेराज्ञे' इत्युक्तेः । एवं च हरेराज्ञायां श्रुतिस्मृतिविहितसकलकर्मकरणे शक्तिमान्

तत्कर्त्तेति यावत् । स्वयमसंशयः यथा परस्य संशयोच्छेदो भवति तथा व्याख्यानकरणशक्तिमानिति वाऽर्थः । एतादृशः उत्तमः आचार्यो गुरुः ॥

तदवरगुरुलक्षणमाह– **यावदिति ॥ यावद्भक्तः** हरौ स्वयोग्यभक्तिमान् । सर्वप्रकारेण भक्त इति वा । **यथालब्धैः** स्वस्वयोग्यतानुसारेण प्राप्तैरित्यर्थः। **गुणैः** सार्वज्ञव्याख्यातृत्वादिपूर्वोक्तगुणैः । उपलक्षणमेतत् । स्वयोग्यलक्षणैश्च युक्तः **वैष्णवः** विष्णुसर्वोत्तमत्वादिज्ञानवान् विष्णुदीक्षावान्वा **सत्संप्रदायज्ञः** ब्रह्मादिगुरूपदेशपरंपराप्राप्तसिद्धान्तज्ञानी एतादृशः । **अथ** तदनन्तरः तदवरः **गुरुः** गुरूसमुदायः क्रमेणामुख्य इत्यर्थः ।

अयं भावः । मुख्यो गुरुश्चतुर्मुख एव । तस्यैवोक्तसंपूर्णगुरुलक्षणत्वात् । तदुक्तम्– 'तस्मात् ब्रह्मा गुरुर्मुख्यः' इति । तदन्ये तु स्वोत्तमन्ताः सर्वेऽपि क्रमादमुख्यगुरुवः । क्रमादूनलक्षणत्वात् । उक्तं चानुव्याख्याने– 'स्वोत्तमास्तु क्रमेणैव' इति। 'क्रमादूनगुणास्त्वन्ये ईरिता गुरवः क्रमात्' इति च । क्रमादमुख्यगुरुत्वे युक्त्यन्तरमाह– **तारतम्येनेति ॥** तारतम्येन फलदः अतश्चतुर्मुखेतरगुरुसमुदायः क्रमेणामुख्य इत्यर्थः ॥ १४०-१४१ ॥

तारतम्यानुसारेण गुरुस्वीकारकथनम्

**तं.सा.** **उत्तमादुत्तमा सिद्धिधर्ममोक्षादिषु स्फुटम्(टा) ।**
**तस्मादुत्तम आचार्ये लब्धे नातोऽवरं व्रजेत् ॥ १४२ ॥**

**एकस्य शिष्यतां प्राप्य तदाज्ञां न विना समम् ।**
**अवरं वा व्रजेदुच्चगुरु(गुण)श्चेन्नैव दुष्यति ॥ १४३ ॥**

**विशेषतो गुणश्च स्याद्देवेष्वप्येवमेव हि ।**
**तस्मादुत्तममाचार्यं देवेशं चाऽश्रयेद्धरिम् ॥ १४४ ॥**

**त.क.**– तदेव विवृणोति— **उत्तमादिति ॥** निरवधिकोत्तमान्नारायणादुपदिष्ट-मन्त्राद्धर्ममोक्षादीना**मुत्तमसिद्धि**र्निरवधिकसिद्धिर्भवति । एवं तदनन्तरोत्तमाच्चतु-र्मुखात्तदनन्तरसिद्धिर्भवति । एवं तदनन्तरोत्तमात्तदनंतरसिद्धिर्भवतीत्या-

दिक्रमेणयोज्यम् । मोक्षे निरवधिकत्वसावधिकत्वव्यवस्थाऽयोगादुक्तं **स्फुट**मिति । ईश्वरेच्छैव केषाञ्चिदावरणं मुक्तावप्यस्तीत्यन्यत्रोक्तम् । तथा च सर्वेषां सम्यक् सिद्ध्यभावः निरवधिकोत्तमाचार्यालाभात् । क्वचिल्लाभेऽपि पूर्णभक्त्याद्य-भावादित्यन्यथासिद्ध इति । नोक्तमयुक्तमिति भावः । तेन गुरूपदिष्टमन्त्राणां जापक एव सिद्धिभागी । न यथाकथञ्चित्प्राप्तानाम् । तत्रापि गुरुतारतम्यानुसारेण सिद्धितारतम्यं भवतीति यस्मात् तस्मादुत्तम आचार्यः शरण्यः कर्तव्य इत्यर्थः । तदुक्तम्— 'श्रुत्वा भागवतं शुद्धमाचार्यं शरणं व्रजेत्' । (य.प्र.क.२) 'अधीहि भगवो ब्रह्म'(तै.उ.३-१) इति ।।

उत्तमगुरूपदेशो मन्त्रजपे साधारणमङ्गमुक्तम् । यदुक्तमवज्ञता गुरूणां चेत्यादिना गुर्ववज्ञा सिद्धिप्रतिबन्धिकेति तद्विवृण्वन्नङ्गान्तरमाह– **आचार्य इति ।।** 'उत्तमे' इति सप्तम्यन्तमत्राप्यनुवर्तते । उत्तम आचार्ये स्वीकृते सति स्वीकृताचार्यादवरं न स्वीकुर्यात् । स्वीकरिष्यमाणगुरोः शिष्यत्वं प्राप्य तत्समं तदवरं गुरुं न स्वीकुर्यादित्यर्थः । ननु पूर्वस्वीकृतस्य गुरोः समोऽवरो वा सहवासादौ सुघटः, पूर्वस्वीकृतः दुर्घटो यस्य तेन किं तूष्णीमेव स्थातव्यम्? अस्त्विति चेन्न । 'श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित्'(अनु.३-३-७८) इत्याद्युक्तिविरोधादित्यत आह— **तदाज्ञां विनेति ।।** पूर्वस्वीकृतगुरोराज्ञां विनेत्यर्थः'। ननु 'नातोऽवरं व्रजेत्' इति कुतः? 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इत्यादिना गुर्वन्तरस्वीकारस्यैव निषिद्धत्वात् । अत एवोत्तमपदमपि व्यर्थमित्यत आह— **उच्चेति ।।** न केवलं दोषाभावः । विशेषतोऽभीष्टसाधकश्च स्यादित्यर्थः । यद्यवरादिपदं न स्यात् तर्हि पूर्वगृहीतगुरुत्यागाभावेन विशेषाभीष्टसाधकश्च स्यात् । यद्यवरादिपदं न स्यात् पूर्वगृहीतगुरुत्यागाभावेन विशेषाभीष्टप्राप्त्यभाव आपद्येत । प्रत्यवायश्चोत्तमगुरुद्रोहात् । गुरुमन्त्रेत्यादिवचनं तूत्तमगुरुविषयमिति भावः । उत्तमगुरुस्वीकारे आदरोत्पादनाय देवेष्वप्येवं नियम इत्याह— **देवेष्विति ।।** यथोत्तमाचार्यस्वीकारे आदर आवश्यकः एवं सर्वमन्त्रप्रतिपाद्यतया देवतात्वेन विष्णुस्वीकारोऽप्यावश्यक इति प्रकृतप्रमेयो-

पसंहारव्याजेन दर्शयति— **तस्मादिति** ।। आचार्यं गुरुत्वेनाश्रयेत् । हरिं देवेशत्वेन । देवशब्दो देवतापर्यायः । मुख्यदेवतात्वेनेत्यर्थः ।। १४२-१४४ ।।

**अ.सं.**– तारतम्येनेत्युक्तं विवृणोति– **उत्तमादिति** ।। उत्तमात् गुरोः सकाशात् **धर्मज्ञानादिषु** धर्मः पुण्यम्, आदिपदेन वैराग्यभक्त्यादयः । एतद्विषये **उत्तमा सिद्धिः** अतिशयितप्राप्तिः । तदवरेभ्यः तदवरा सिद्धिरित्यपि ज्ञेयम् । किमतो यद्येवमित्यत आह– **तस्मादिति** ।। उत्तमसिद्धिसम्पादकत्वात् अतिशयितज्ञानादिप्राप्त्यै उत्तम एवाचार्यः सम्पादनीय इति पूर्वविधिर्ज्ञेयः । उत्तम आचार्ये लब्धे इत्यनुवादात् उत्तमे आचार्ये लब्धे सति **अतः** उत्तमगुरोः अवरं गुरुं **न व्रजेत्** न स्वीकुर्यात् ।।

अत्रैवान्यं विशेषमाह– **एकस्येति** ।। **एकस्य शिष्यतां प्राप्य** एकस्य गुरोः सकाशात् किञ्चित् श्रवणं कृत्वेत्यर्थः । **तदाज्ञां** तस्य गुरोः आज्ञां अनुज्ञां विना **समं** तत्समं तदवरं वा न व्रजेदिति पूर्वेणान्वयः । पूर्वगुर्वाज्ञा चेत् समं वा अवरं वा गुरुं व्रजेदिति भावः । **उच्चगुरुश्चेत्** पूर्वप्राप्तगुरुपरित्यागेन प्राप्यो गुरुः उत्तमश्चेत्तदा पूर्वगुर्वाज्ञां विनाऽपि तादृशगुरुं प्राप्तः पुरुषः **न दुष्यति** न प्रत्यवायी स्यात् । 'उच्चगुणश्चेत्' इति पाठे पूर्वगुर्वपेक्षया अधिकज्ञानादिगुणश्चेदित्यर्थः । तदुक्तं छान्दोग्यभाष्ये– *(४.१०.२.९)*

> उत्तमाचार्यसम्प्राप्त्यै नावराचार्यतः क्वचित् ।
> इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत्ततः ।। इति ।

न केवलं पूर्वगुरुपरित्यागेन तदुत्तमगुरुस्वीकारे प्रत्यवायाभावः । अपि तु महाफलं च भवतीत्याह– **विशेषत इति** ।। पूर्वं गुरोः सकाशाज्जायमान-ज्ञानाद्यपेक्षया **विशेषेण** अतिशयेन **गुणः** ज्ञानादिगुणसमुदायश्च स्यादित्यर्थः ।

अयमत्रसमुदायाभिप्रायः । उत्तमाधमगुर्वोर्मध्ये उत्तम एव स्वीकार्यः । फलाधिक्यस्य सत्वात् । अवरस्तु न स्वीकार्यः। उत्तमं गुरुं प्राप्य किञ्चिच्छ्रवाणादिकं कृत्वा तस्य गुरोर्वा स्वस्य वा दैवाद्वा मानुषाद्वा अपराधात् सहवासासम्भवे सहवासेऽपि वा केनचिन्निमित्तेन व्याख्यानविघ्ने सति तदा

पूर्वप्राप्तगुरोराज्ञया तत्समं तदधमं वाऽन्यं गुरुं प्राप्नुयात् । आज्ञाभावे तु नैव व्रजेत् । 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इत्युक्तेः । तदुत्तमगुरुस्वीकारे तु पूर्वप्राप्तगुर्वनुज्ञा नैवापेक्षिता । तत्र प्रत्यवायाभावात् गुणाधिक्यलाभाच्चेति ।

उक्तन्यायं देवेष्वप्यतिदिशति– **देवेष्विति** ।। **एवमेव** गुरुस्वीकारविषये अयमेव न्याय इत्यर्थः । फलितमाह– **तस्मादिति** ।। उत्तमगुरुदेवताप्राप्तेर्महाफल-हेतुत्वात् उत्तममाचार्यं देवोत्तमं हरिं वा आश्रयेदिति शेषः ।। १४२-१४४ ।।

**गु.दी.**— 'तारतम्येन सिद्धिदः' इत्युक्तं विवृणोति— **उत्तमादिति** ।। सम्यज्ज्ञानादिसमपेक्षमाणानामधिकगुरुप्राप्तिरावश्यकीति वक्तुं पूर्वमुत्तमगुरुं प्राप्तानामवरगुरुप्राप्तावनर्थमाह— **तस्मादिति** ।। लब्धे उपदेशकतयेति शेषः । प्राप्तेऽपरं न व्रजेदित्यर्थः । 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इति वचनादिति भावः । उक्तं चानुव्याख्याने—

'गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचित् । इति

(अनु.व्या.३-३-२८) ।

पूर्वगुरुसमानगुर्वन्तरे प्राप्ते प्राक्तनस्त्याज्यः किमित्यतस्तत्त्यागे विकल्पमाह– **एकस्येति** ।। **एकस्य** गुरोः शिष्यत्वं प्राप्य तदाज्ञां विना न समं व्रजेत् । अयं भावः । पूर्वस्वीकृतेन गुरुणा समे गुरौ समग्रानुग्रहकर्तरि स्वयमेव प्राप्ते सति स अवश्यं स्वीकार्यः न तु तदर्थं प्रयतितव्यम् । तर्हि दोषस्मृतेः का गतिरिति चेत्, उच्यते । समगुर्वन्तरस्वीकारे पूर्वस्यानुज्ञा सर्वथा भाव्या । विनाऽनुज्ञया समानपूर्वगुरुपरित्यागविषयं दोषस्मरणम् । सत्यामनुज्ञायामन्यगुरुस्वीकृतिरन्यथा तु नेति विकल्प एवेति । यथोक्तं 'समे विकल्प एव स्यात् पूर्वानुज्ञा च सर्वथा' (अनु.व्या.३-३-२८) इति । पूर्वं प्राप्तान्नीचेऽपि किं विकल्पः नेत्याह— **अवरं वेति** ।। **वा**शब्दः नञोऽनुकर्षणार्थः । एवार्थश्च । अवरं न व्रजेदेवेत्यर्थः । ननु दैवादल्पं गुरुमादौ प्राप्तस्य पश्चात्प्राप्त उत्तमगुरुः किं स्वीकार्यः उत पूर्वानुज्ञा मृग्यत इत्यतो नेत्याह— **उच्चगुणश्चेदिति** ।। उच्चाः पूर्वगुरोः सकाशाच्छ्रेष्ठाः गुणाः यस्य स **उच्चगुणः** गुरुश्चेल्लभ्यते तदा **नैव दुष्यति** 'गुरुमन्त्रपरित्यागी' इत्युक्तदोषवान्न

भवतीत्यर्थः। न केवलं दोषाभावादुत्तमगुरुस्वीकारः किन्त्वन्यप्रयोजन-मप्यस्तीत्याह— **विशेषतो गुणश्च स्यादिति ।।** संशयादेर्निवृत्तिरूपोऽधिकगुणश्च स्यादित्यर्थः। अन्यथा दैवादादावल्पगुरुं प्राप्तस्य शिष्यस्य प्रज्ञोत्कर्षवतः जातयोः संशयविपर्ययोरज्ञानस्य च निवृत्तिर्न स्यादिति भावः। एवं तर्ह्यनुपदिशत उत्तमस्य त्यागेनोपदिशतोऽधमस्य स्वीकारोऽपि कर्तव्यः स्यादिति चेत् सत्यम्। 'गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्कचित्' (अनु.व्या.३-३-१) इति प्रतिषेधवचने कचित्प्रयोजनविशेषेऽपीत्यनेन यस्माच्छुभप्राप्तिः तं प्राप्नुयादिति सामान्यन्यायस्यापोदितत्वात् ।।

इममेव प्रकारं विबुधेष्वतिदिशति— **देवेष्विति ।।** उपास्यत्वेन देवताप्राप्तावपि अयमेव न्यायो द्रष्टव्य इति भावः। फलितमाह— **तस्मादिति ।।** उत्तमगुरुदेवता-प्राप्तेर्महाफलहेतुत्वादित्यर्थः। देवेशं हरिमिति सम्बन्धः ।। १४२-१४४ ।।

**मङ्गाली–** तारतम्येनेत्युक्तं विवृणोति– **उत्तमादिति ।।** उत्तमाद्गुरोः सकाशाद्धर्मज्ञानादिषु **धर्मः** पुण्यं, **आदि**पदेन वैराग्यादयः। एतद्विषये **उत्तमा सिद्धिः** अतिशयितप्राप्तिः। तदवरेभ्यः तदवरा सिद्धिरित्यपि ज्ञेयम्। **किमतो** यद्येवमित्यत आह– **तस्मादिति ।।** उत्तमसिद्धिसंपादकत्वादतिशयितज्ञानादिप्राप्त्यै उत्तम एवाचार्यः संपादनीय इति पूर्वं विधिर्ज्ञेयः। उत्तम आचार्ये लब्धे इत्यनुवादादुत्तम आचार्ये लब्धे सति **अतः** उत्तमगुरोरवरं गुरुं **न व्रजेत्** न स्वीकुर्यात्। एतदुपलक्षणं। सममित्यपि ग्राह्यम् ।।

अत्रैवान्यं विशेषमाह– **एकस्येति ।। एकस्य शिष्यतां प्राप्य** एकस्य गुरोः सकाशात् कचिच्छ्रवणं कृत्वेत्यर्थः। **तदाज्ञां** तस्य गुरोराज्ञां अनुज्ञां विना **समं** तत्समं तदवरं वा न व्रजेदिति। पूर्वगुर्वाज्ञा चेत्सममवरं वा गुरुं व्रजेदिति भावः। **उच्चगुरुश्चेत्** पूर्वप्राप्तगुरुपरित्यागेन प्राप्यो गुरुरुत्तमश्चेत् तदा पूर्वगुर्वाज्ञां विना तादृशगुरुं प्राप्तः पुरुषः **न दुष्यति** न प्रत्यवायी स्यात्। 'उच्चगुणश्चेत्' इति पाठे पूर्वगुर्वपेक्षयाऽधिकज्ञानादिगुणश्चेदित्यर्थः ।।

न केवलं प्रत्यवायाभावः अपि तु महाफलं च भवतीत्याह– **विशेषत इति ।।**

पूर्वगुरोः सकाशात् जायमानज्ञानाद्यपेक्षया **विशेषतो** अतिशयेन ज्ञानादिगुण-समुदायश्च स्यादित्यर्थः ।

अयमत्र समुदायार्थः । उत्तमाधमगुर्वोर्मध्ये उत्तम एव स्वीकार्यः । फलाधिक्यस्य सत्वात् अवरस्तु न स्वीकार्यः । उत्तमगुरुं प्राप्य किंचिच्छ्रवणादिकं कृत्वा तस्य गुरोर्वा स्वस्य वा दैवाद्वा मानुषाद्वाऽपराधात् सहवासासम्भवे सहवासेऽपि केनचिन्निमित्तेन व्याख्यानविघ्ने सति पूर्वप्राप्तगुरोराज्ञया तत्समं तदधमं वा अन्यं गुरुं प्राप्नुयात् । आज्ञाभावे तु नैव व्रजेत् । 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इत्युक्तेः । तदुत्तमस्वीकारे तु पूर्वप्राप्तगुर्वज्ञा नैवापेक्षिता । तत्र प्रत्यवायाभावात् गुणाधिक्यलाभाच्चेति ।

गुरावुक्तं न्यायं देवेष्वतिदिशति– **देवेष्विति ।। एवमेव** गुरुस्वीकरणेयो न्यायः स एवेत्यर्थः । फलितमाह– **तस्मादिति ।।** उत्तमगुरुदेवताप्राप्तेः महाफलहेतुत्वात् उत्तममाचार्यं देवोत्तमं हरिं चाश्रयेत् ।। १४२-१४४ ।।

मोक्षसाधननिरूपणं, निदिध्यासनविभागश्च

**त.सा.** **अपरोक्षदृशेरेव यस्मान्मोक्षो न चान्यथा ।**
**अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।। १४५ ।।**

**सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ।**
**द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।। १४६ ।।**

**एकं ध्यानं हरेरन्यच्च.................. ।**

**त.क.–** ननु गुर्वाश्रयणमस्त्वावश्यकम् । गुर्वाश्रयणाभावे मन्त्रोपदेशायोगात् । हर्याश्रयणं तु कुत इत्यत आह— **अपरोक्षेति ।।** हरेरित्यादौ ग्राह्यम् । नान्यथेत्येवकारविवरणम् । यस्माद्धरिविषयकापरोक्षज्ञानादेव प्रसादद्वारा मोक्षो भवति तस्माद्धरिरप्याश्रयणीय इति भावः । ननु भगवदपरोक्षादेव मोक्षस्तर्ह्यलं गुरुपरिग्रहेण । मन्त्रजपादेरन्तरङ्गत्वाभावेन तदर्थस्य गुरुपरिग्रहस्य वैय्यर्थ्यादित्यत आह— **अपरोक्षदृशिरिति ।।** निदिध्यासनेनैवापरोक्षदृशिर्भवति । चशब्दात् प्रसादश्च । सा चोपासना श्रवणमननाभ्यां भवति ।।

उपासनायां श्रवणमननयोः क उपयोग इत्यत आह— **सम्यगिति ।।** तत्त्वनिष्कर्षाभावे तावत् ध्येयवस्तुनि न मनोनियोजनात्मकमुपासनमुपपद्यते । तत्त्वनिष्कर्षश्च सतोः संशयविपर्यययोर्नोत्पद्यत इति तन्निर्हरणैकप्रयोजनं युक्त्यनु-सन्धानात्मकं मननमावश्यकम् । धर्मिज्ञानाभावे युक्त्यनुसन्धानस्याशक्यतया, सति चाज्ञाने धर्मिज्ञानस्यानुदयात्, तन्निर्हरणप्रयोजनम् अयमस्य वाक्यस्यार्थ इति वाक्यार्थावधारणरूपं श्रवणमावश्यकम् । तदर्थं च गुरूच्चारणानूच्चारणरूपं श्रवणमावश्यकमिति यस्मात्तस्मात् गुरुस्वीकारोऽप्यावश्यक इति पूर्वेणान्वयः । ध्यानरूपोपासनायां तूक्तरीत्या परम्परयोपयोगो द्रष्टव्यः ।

न केवलमेवमतिपरम्परया गुरुस्वीकारस्य निदिध्यासनायामुपयोगः, किं तर्हि साक्षादेवेति भावेन तां विभजते— **द्विविधेति ।। विष्णुशास्त्रावमर्शनं** विष्णुप्रतिपादकत्वेन शास्त्राणां ऋगादीनां तात्पर्यपरिज्ञानं, ऋगादिशास्त्राभ्यासो वा इत्येकमुपासनम् । मानसावलोकनरूपं ध्यानं हीरविषयकमन्यदुपासनम् । एवं **सा** निदिध्यासना द्विविधेति सम्बन्धः । तथाच शास्त्रावमर्शनरूपादिनिदिध्यासनस्य ध्यानसमकक्ष्यतया साक्षादपरोक्षज्ञानसाधनत्वाद्गुरुस्वीकारोऽत्यावश्यक इति भावः ।। १४५,१४६ ।।

**अ.सं.—** ननु गुरुप्राप्तिरेव व्यर्था स्वयं पुरुषार्थरूपत्वाभावात् तत्साधनत्वा-भावाच्च । तथा च तद्विचार एवानुपपन्न इत्यत आह— **अपरोक्षदृशेरेवेति ।।** यस्माद्देवतापरोक्षदृशेरेव मोक्षो भवति । **अन्यथा** अन्येन प्रकारेण काशीमारणकुरुक्षेत्रवासादिना **न च** नैव भवति । सा **चापरोक्षदृशिः** अपरोक्षज्ञानं श्रवणात् **मननात्** श्रुतस्य प्रमेयस्य युक्तिभिरनुचिन्तनात् **अनु** अनन्तरं **सम्यक्निश्चिततत्त्वस्य** दूरोत्सारिताज्ञानसंशयविपर्ययस्य पुरुषस्य **निदिध्यासनया** उपासनया भवेत् । तच्च श्रवणादिकं यतो गुरोरेव तस्मात् श्रवणाद्यर्थमाचार्यमाश्रयेदित्यन्वयः ।

अयं भावः । गुरुप्राप्तेः साक्षात्पुरुषार्थतत्साधनान्यतरत्वाभावेऽपि महापुरुषार्थ-मोक्षसाधनमपरोक्षज्ञानम् तत्साधननिदिध्यासनं तत्साधनं निश्चितपरोक्षज्ञानं

तत्साधनं मननं तत्साधनं शास्त्रश्रवणं तत्कारणं गुरुः। एवं परम्परया पुरुषार्थसाधनत्वान्न तत्प्राप्तिरनुपपन्ना। ततश्च तद्विचारो नानुपपन्न इति ।।

प्रकृतापरोक्षज्ञानसाधनभूतामुपासनापरापर्यायां निदध्यासनां विभजते– **द्विविधेति ।। सा च** प्रकृता निदिध्यासना। द्वे विधे दर्शयति– **विष्ण्विति ।। विष्णुशास्त्रावमर्शनं** विष्णुशास्त्रावमर्शनरूपा एका। **अन्यत् हरेर्ध्यानं** ध्यानरूपा द्वितीया चेति। विष्णुशास्त्रावमर्शनं नाम श्रवणमननाभ्यां सम्यक् तत्त्वनिश्चयानन्तरं केवलापरोक्षज्ञानार्थमेव स्वयमेव सततं वैष्णवशास्त्रविमर्शकरणम्। शिष्ये सति सततं वैष्णवशास्त्रव्याख्यानकरणं च विवक्षितम्। यद्वक्ष्यति– 'अथ वा सततं शास्त्रविमर्शनेन भवीष्यति' (४.१७१) इति अत्र सततं विष्णुशास्त्रावमर्शनस्यापरोक्षज्ञानसाधनत्वम्। ध्यानसमाध्योः अखण्डस्मरणस्य अविशिष्टतया अनतिभेदात्। द्विविधोऽपि न युज्यते। 'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते। अप्रयत्नात्समाधिस्तु'(४-१७१)इत्यादिना वक्ष्यमाणध्यानादिलक्षणेन नातिभेदस्य प्रतीयमानत्वात्। यद्वा ध्यानशब्देन समाधिरेव ग्राह्यः। तस्यैव साक्षादपरोक्षज्ञानसाधनत्वात्। यद्वक्ष्यति– 'अप्रयत्नात्समाधिस्तु दर्शनं चिरयाऽनया'(४-१७१) इति ।। १४५-१४६ ।।

**गु.दी.–** ननु गुरुप्राप्तिरेव व्यर्था। स्वयं पुरुषार्थरूपत्वाभावात् सत्साधनत्वाभावाच्च। तथा च तद्विचार एवानुपपन्न इत्यतस्तस्याः पुरुषार्थत्वसाक्षात्तत्साधनत्वान्यतरत्वाभावेऽपि महापुरुषार्थमोक्षसाधनीभूतश्रवणमननादिकारणत्वेन परम्परया पुरुषार्थसाधनत्वेन वैय्यर्थ्याभावात् गुरुप्राप्तौ विचार उपपन्न एवेत्याशयेनाह— **अपरोक्षदृशेरेवेति ।।** यस्मादपरोक्षदृशेरेव मोक्षः नान्यथा। सा च अपरोक्षदृशिः श्रवणान्मननादनन्तरं निदिध्यासनया भवेत्। तस्माच्छ्रवणाद्यर्थमाचार्यमाश्रयेदित्यर्थः। निदिध्यासनाया अवान्तरभेदकथनपूर्वकं तदङ्गानि तेषां प्रभेदांश्च सप्रपञ्चमाह– **द्विविधेत्यादिना ।।** विष्णुप्रतिपादकसच्छास्त्रावमर्शनमेकं हरेर्ध्यानं **अन्यत्** द्वितीयम्। तत्र ध्याने चत्वार्यङ्गानि। चशब्दोऽनुक्तप्रत्याहारस्य समुच्चये। यद्वा यमानां ध्याने ज्ञानोत्पादे मोक्षातिशये

चाङ्गत्वमिति समुचये 'यमानामुपासनोत्पत्तौ ज्ञानोत्पादे मोक्षातिशये चाङ्गत्वमिति सूचनाय 'पुरुषार्थमभीप्सता' 'शुभमिच्छता' 'दृश्यते क्षिप्रमीश्वरः' इति विचित्रोक्तिरित्युपासनापादीयसुधोक्तेः ।। १४५-१४६ ।।

**मङ्गाली–** ननु गुरुप्राप्तिरेव व्यर्था । पुरुषार्थतत्साधनयोरन्यतरत्वाभावादतस्त-द्विचारोऽनुपपन्न इत्यत आह– **अपरोक्षेति ।।** यस्माद्देवतापरोक्षदृशेरेव मोक्षो भवति । **अन्यथा** अन्येन प्रकारेण काशीमरणकुरुक्षेत्रवासादिना **न च** नैव भवति । सा **चापरोक्षदृशिः** अपरोक्षज्ञानं श्रवणात् **मननात्** श्रुतप्रमेयस्य युक्तिभिरनुचिन्तनात् **अनु** अनन्तरम् । **सम्यक्निश्चिततत्त्वस्य** दूरोत्सारिता-ज्ञानसंशयविपर्यस्य पुरुषस्य **निदिध्यासनया** उपासनया भवेत् । तच्च श्रवणादिकं यतो गुरोरेव तस्मात् श्रवणाद्यर्थमाचार्यमाश्रयेदित्यन्वयः । गुरुप्राप्तेः साक्षात् पुरुषार्थत्वाभावेऽपि परंपरया तत्साधनत्वमस्त्येव । अतो न तद्विचारोऽनुपपन्न इति भावः ।।

प्रकृतापरोक्षज्ञानसाधनभूतामुपासनापरपर्ययां निदिध्यासनां विभजति– **द्विविधेति ।। सा च** प्रकृता निधिध्यासना । द्विविधे दर्शयति– **विष्ण्विति ।।** विष्णुशास्त्रावमर्शनमेकं । विष्णुशास्त्रावमर्शनं नाम श्रवणमननाभ्यां सम्यक् तत्त्वनिश्चयानन्तरं केवलापरोक्षज्ञानार्थमेव स्वयमेव वैष्णवशास्त्रावलोकनं विष्णुशास्त्रावमर्शनरूपैका । **अन्यत्** हरेर्ध्यानध्यानरूपा द्वितीया चेति ।। १४५,१४६ ।।

ध्यानाङ्गनिरूपणम्

**त.सा.** .................**चत्वार्यङ्गनि तस्य (तत्र) च ।**
**यमश्च नियमश्चासा प्राणायाम इतीरितः** ।। १४७ ।।

**(यमश्च नियमश्चासाप्राणायामा इतीरिताः ।)**

**त.क.—** तत्र प्रकृतस्य ध्यानस्याङ्गान्याह– **चत्वारीति ।।** चातुर्विध्यं दर्शयति— **यमश्चेति ।। आसा** आसनम् । प्राणानामायामो निग्रहः

प्राणायामः। अत्र यम इति प्रथमः प्रकारः। नियमश्चेति द्वितीयः। आसेति तृतीयः। प्राणायाम इति चतुर्थः प्रकार ईरितः। एवं ध्यानस्य चत्वार्यङ्गानीति सम्बन्धः। 'अष्टौ यमादयोऽङ्गानि' इत्यादिनोक्तं प्रकारान्तरमाद्येन चशब्देनाऽचष्टे। साक्षादनुक्तिस्तु चतुर्ष्वेवैषामन्त-र्भावमभिप्रेत्येति ज्ञातव्यम्। द्वितीयतृतीयचशब्दौ परस्परसमुच्चये। आवर्तितौ पदान्तराभ्यां सम्बद्ध्येते ॥ १४७ ॥

**अ.सं.**— तत्र ध्यानस्याङ्गान्याह- **चत्वार्यङ्गानीति** ॥ **तस्य** ध्यानस्य। 'तत्र' इति पाठे ध्याने इत्यर्थः। चौ परस्परसमुच्चये। यमश्च नियम**श्चासा** आसनंच प्राणायामश्चेति। चत्वार्यङ्गानि ईरितः। लिङ्गवचनव्यत्ययेन ईरितानीत्यन्वयः। तत्र चेतिशब्दोऽनुक्तयोर्धारणप्रत्याहारयोः समुच्चये ॥ १४७ ॥

**गु.दी.**— कानि तानि चत्वारीत्यत आह— **यमाश्चेति** ॥ अङ्गानीति वर्तते। अङ्गानीत्युद्दिश्य यमा इतीरिता इत्यादिविधानात्पुल्लिङ्गोपपत्तिः। अत्र चासा इतीरिता प्राणायाम इतीरित इति द्रष्टव्यम्। क्वचिच्च 'यमश्चेति ईरितः' इति च एकवचनान्तः पाठः ॥ १४७ ॥

**मङ्गली**— तत्र ध्यानस्यांगान्याह- **चत्वार्यङ्गानीति** ॥ **तस्य** ध्यानस्य। 'तत्र' इति पाठे ध्यान इत्यर्थः। चौ परस्परसमुच्चये। यमश्च नियमश्च **आसा** आसनं च प्राणायामश्चेति चत्वार्यङ्गानि ईरितः। लिङ्गवचनव्यत्ययेन ईरितानीत्यन्वयः। तस्य चेति चशब्दोऽनुक्तयोः प्रत्याहारधारणयोः समुच्चये ॥ १४७ ॥

यमनियमासनानां विभागः

**तं.सा.** **अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।**
**यमाः, शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् ॥ १४८ ॥**
**नियमाः, वीरपद्मे च स्वस्तिकाद्यानि चाऽसनम्।**

**त.क.**– प्रथमोद्दिष्टं यमं विभजते—**अहिंसेति** ।। **अहिंसा** हिंसावर्जनं, **सत्यं** सत्यवचनम्, **ब्रह्मचर्यम्** ऊर्ध्वरेतस्त्वादि, **अपरिग्रहः** अभिमानत्यागः इत्येते पञ्च यमा इतीरिता इति सम्बन्धः । अत्र यद्यपि-

अहिंसा सत्यमस्तेयं ब्रह्मचर्या दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहारः शौचश्चेति यमा दश ।।

इति दशविधत्वमुक्तम् । तथापि तर्जनादिराहित्यानां परिग्रहमूलत्वात्तदभावरूपाणां दयादीनां षण्णामपरिग्रहशब्देनैव गृहीतत्वान्न विरोधः । यद्वा, शौचमिति वक्ष्यमाणं यमा इत्यस्मात् प्राक् सम्बद्ध्यते । तथा च शौचस्य वाह्याभ्यन्तरत्वेन द्वैविध्यात् दयादिधृत्यन्तानां शौचेऽन्तर्भावः । मिताहारस्यापरिग्रहेऽन्तर्भाव इति बोध्यम्। द्वितीयमङ्गं विभज्य दर्शयति— **तप इति** ।। **तपः** कृच्छ्रचान्द्रायणादि । **तुष्टिर्मनः**समाधानम् । **स्वाध्यायो** व्याख्यानम् । **हरिपूजनं** प्रतिमार्चादि । एते चत्वारो नियमा इतीरिता इति सम्बन्धः । यद्यपि—

तपः सन्तुष्टिरास्तिक्यं दानमाराधनं हरेः ।
सिद्धान्तश्रवणं ह्रीश्च जप इत्यादिलक्षणः ।

इत्यादिना नियमो बहुविधः श्रूयते । तथापि स्वाध्यायशब्देनाऽस्तिक्यदानह्रीजपानां वेदोच्चारणसाध्यानां ग्रहणोपपत्तेर्न विरोधः । अत्राऽद्यव्याख्यानेऽऽभ्यन्तरगतं शौचं यमेऽन्तर्भवति । मृज्जलादिसाध्यं तत् नियमेऽन्तर्गतमिति ध्येयम् । तृतीयमङ्गविभागेन दर्शयति— **वीरेति** ।। वीरश्च पद्मं चेति विग्रहः । आद्यशब्देन सिंहासनं, भद्रासनं, गोमुखासनं, मयूरासनं च ग्राह्यम् । तेषां लक्षणानि—

प्रथमं स्वस्तिकं पादतलयोरुभयोरपि ।
पूर्वोत्तरे जानुनी द्वे कृत्वाऽसनमुदीरितम् ।।

सीवन्या दक्षिणे पार्श्वे सव्यं सव्ये तु दक्षिणम् ।
गुल्फं कृत्वाऽऽसनं तच्च स्वस्तिकं कथ्यते बुधैः ।।

आरोप्य चोर्वोश्चरणौ तदंगुष्ठद्वयं पुनः ।
व्युत्क्रमेणैव हस्ताभ्यां गृह्णीयात्तत्तदासनम् ।।

पाद्मं पद्मासनं ज्ञेयमासनेषु सुपूजितम् ।
एकं चरणमन्यस्मिन् ऊरावारोप्य निश्चलः ।।

आस्ते यदि दमेनेदं वीरासनमुदाहृतम् ।
सीवनीगुल्फदेशाभ्यां निपीड्य व्युत्क्रमेण तु ।।

प्रसार्य जानुनोर्हस्तावासनं सिंहमीरितम् ।
गुल्फौ च वृषणस्याधः सीवन्युभयपार्श्वयोः ।।

निवेश्य पादौ हस्ताभ्यां दृढं बद्ध्वा यदासनम् ।
भद्रासनं तद्विज्ञेयं सर्वपापप्रणाशनम् ।।

गुल्फं सव्येतरं सव्ये पृष्ठपार्श्वे विधाय च ।
आसनं गोमुखं यद्वत् गोमुखासनमिष्यते ।।

सीवनीपार्श्वमुभयं गुल्फाभ्यां व्युत्क्रमेण तु ।
निपीड्याऽऽसनमेतच्च मुक्तासनमुदाहृतम् ।।

मेढ्रस्योपरि निक्षिप्य सव्यगुल्फं तथोत्तरम् ।
मिवेश्योपरिगुल्फस्य यद्वा मुक्तासनं भवेत् ।।

अवष्टभ्य धरां सम्यक् तलाभ्यां हस्तद्वयोर्द्वयोः ।
कूर्परो नाभिपार्श्वे च स्थापयित्वा मयूरवत् ।
समुन्नम्य शिरः पादं मयूरासनमिष्यते ।।

इत्यादिशास्त्रेण ज्ञातव्यानि ।। १४८ ।।

**अ.सं.–** यमानाह– **अहिंसेति ।।** अहिंसादिलक्षणं याज्ञवल्क्येनोक्तम्

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ।।

सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् ।
कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहः ।।
अस्तेयमिति सम्प्रोक्तम्.......... ।। इति । (१.१५६)

यथार्थाभिभाषणं यथार्थवचनं सत्यं न । किन्तु येन भूतानां हितं स्यात्तदेव सत्यमित्युच्यत इति प्रमाणगतसत्यपदार्थः ।

कर्मणा मनसा वाचा सर्वावस्थासु सर्वथा ।
सर्वत्र मैथुनत्यागः ब्रह्मचर्यं प्रचक्षते ।। (ग.पु.२३८-६)

सर्वत्र सर्वथेत्यनेनाष्टविधस्यापि मैथुनस्य त्यागः । तदक्तं दक्षेण–

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।। इति ।

अष्टाङ्गं अष्टप्रकारम् ।

ब्रह्मचर्याश्रमस्थानां यतीनां नैष्ठिकस्य च ।
ब्रह्मचर्या तु सैवोक्ता तथैवारण्यवासिनाम् ।।

ऋतावृत्तौ स्वदारेषु सङ्गतिर्या विधानतः ।
राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यं प्रकीर्तितम् ।।

ब्रह्मचर्या तु सैवोक्ता सर्वेषां योगिनां तथा ।
योगिनां च सजायानां वसिष्ठादीनां ऋषीणाम् ।।

विशां वृत्तवतां चेदं केचिदिच्छन्ति पण्डिताः ।
शुश्रूषैव तु शूद्रस्य ब्रह्मचर्यं प्रकीर्तितम् ।
शुश्रूषा वा गुरौ नित्यं ब्रह्मचर्यं प्रकीर्तितम् । इति ।।

अपरिग्रहः लोकसङ्ग्रहद्रव्यसङ्ग्रहलौकिकवाग्व्यापाररूपपरिग्रहशून्यत्वं वैराग्यमिति यावत् ।

नियमानाह– **शौचमित्यादिना** ।। शौचद्वैविध्यमुक्तं याज्ञवल्क्येन–

शौचं तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं वाह्यं मनःशुद्धिस्तथोत्तरम् ।।

मनः शुद्धिस्तु विज्ञेया धर्मेणाध्यात्मविद्यया ।। इति ।

**तपः** जपहोमातिथ्यतीर्थाटनपरार्थचेष्टारूपः । **तुष्टिर्विषयालम्बुद्धिः । स्वाध्यायः** वेदाध्ययनम् । आचार्यसेवनं च ग्राह्यम् । आचार्यसेवनं मुख्यमित्याह दक्षः–

गुरवः पञ्च सर्वेषां चतुर्णां श्रुतिचोदिताः ।
माता पिता तथाऽऽचार्यो मातुलः श्वशुरस्तथा ।।

एषां मुख्यास्त्रयः प्रोक्ता आचार्यः पितरौ तथा ।
एषां मुख्यतमस्त्वेकः आचार्यः परमार्थवित् ।। इति ।

**हरिपूजनं** नित्यं हरेः प्रथमाध्यायोक्ताकारेण षोडशोपचारैः पूजा इत्येते नियमा इत्यर्थः ।।

आसनमाह– **वीरेति ।। वीरपद्मे च** वीरासनपद्मासने च स्वस्तिकाद्यानि चासनमित्युक्तानि । **आद्यशब्देन** सिद्धासनभद्रासनादि ग्रहणम् ।

स्वस्तिकं गोमुखे पद्मवीरसिद्धासनं तथा ।
भद्रमुक्तासनं चैव मयूरासनमेव च ।। इत्युक्तेः ।। १४८ ।।

**गु.दी.–** ननु देशकालावस्थाव्यवस्थां विना सर्वावस्थासु यदनुष्ठेयं तद्यमशब्दाभिधेयम् । तच्च विष्णुभक्त्यादिगुणसम्पूर्तिर्विषयसंसर्गादिदोषवर्जनं च । नियमादयश्च वक्ष्यमाणाः । मनसो विषयेभ्यो भगवन्तं प्रत्याहरणं प्रत्याहारः । एतेषां नोपासनोत्पत्तावुपयोगः । अवितथं व्रह्मानुचिन्तनं हि ध्यानम् । तेषामभावेऽप्यनुचिन्तनदर्शनात् । नाप्युपासनफलज्ञानोत्पत्तौ । एतत्सहितमेवोपासनं ज्ञानं जनयतीत्यत्र प्रमाणाभावादिति चेत् । उपासनोत्पत्तौ तावत्तेषामुपयोगं व्रूमः । विषयसंसर्गादिमतो भक्तिरहितस्योपासनानुपपत्तेः । न ह्यन्यत्र व्यासक्तमनास्तत्र स्नेहविधुरस्तं चिन्तयतीति युज्यते । द्वितीयं पक्षमपि स्वीकुर्मः । न च तत्र प्रमाणाभावः ।

विषयेषु च संसर्गाच्छाश्वतस्य च संशयात् ।

मनसा चान्यदाकाङ्क्षात् परं न प्रतिपद्यते ।। (महा.भा. ११.१९.३२)

इति भारतवाक्ये न प्रतिपद्यते न पश्यतीति विषयसंसर्गादिदोषाणां ज्ञानविरोधित्वाभिधानात् । तथा च विष्णुभक्त्याद्यभावाः विषयसंसर्गाद्याश्च दोषास्तावन्मुमुक्षादिमतस्त्याज्याः मोक्षादिविरोधित्वात् । यद्यस्य विरोधि तत्तदर्थिना त्याज्यं दृष्टम् । यथा आरोग्यार्थिना आरोग्यविरोध्यपथ्यम् । तथा च विष्णुभक्त्यादिकं तावत्कार्यम् । भावानुष्ठानेन विनाऽभावपरित्यागायोगादित्यभिसन्धिं हृदि निधायोक्तप्रवृत्तिनिमित्तभूतलक्षणाक्रान्तलक्ष्यप्रदर्शनार्थं यमादीन् निरूपयति— **अहिंसेत्यादिना ।।** अहिंसादयः पञ्च यमाः । शौचादयः पञ्च नियमाः प्रोक्ता इति शेषः । ननु यमा नियमाश्च पञ्चेत्ययुक्तम् ।

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।

आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ।।

शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ।

तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ।

एते यमाः सनियमाः उभयोर्द्वादश स्मृताः ।। (भाग.११-१९-३२,३३,३४)

इति भागवते यमानां नियमानां च पृथक् द्वादशत्वोक्तेरिति चेत् सत्यम् । तेष्वाधिक्येनोक्तानां चतुर्दशानामप्येतेषु दशस्वेवान्तर्भावात् । तथा हि— लोकासङ्गहरूपासङ्गस्य द्रव्यासङ्गहरूपस्यासञ्चयस्य वाग्व्यापारपरित्यागरूपस्य मौनस्येति त्रयाणामपरिग्रहेऽन्तर्भावसम्भवात् । क्षमायाः दुःखे सुखे च समत्वरूपायाः चित्तस्थापनरूपस्य स्थैर्यस्य च सन्तोषे । ह्रीआस्तिक्याभयानां सत्यमूलकत्वेन सत्ये । जपहोमश्रद्धातिथ्यतीर्थाटनपरार्थेहानां तपसि । स्वाध्यायस्य आचार्यसेवाप्राप्यत्वेन कार्ये स्वाध्याये आचार्यसेवनस्य अन्तर्भाव इति द्रष्टव्यम् ।

वीरपद्मे स्वस्तिकमाद्यं येषां तानि **स्वस्तिकाद्यानि** चासनानि । **आदिपदेन** गोमुखसिंहभद्रमुक्तामयूरासनादीनां ग्रहणम् । अत्र साक्षाद्वीरादित्रितयग्रहणं तु तेषामुत्तमोत्तमताप्रदर्शनाय । तथा चाह योगी याज्ञ्यवल्क्यः—

स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ।
भद्रं मुक्तासनं चैव मयूरासनमेव च ।
आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम् ।। इति ।। १४८ ।।

**मङ्गाली–** यमानाह– **अहिंसेति ।।** अहिंसादिलक्षणं याज्ञवल्केनोक्तम्

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्तं अहिंसात्वेन योगिभिः ।।

सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् ।
कर्मणा मनसा वाचा परद्रव्येषु निस्पृहा ।
अस्तेयमिति सम्प्रोक्तम्............ ।। इति ।

कर्मणा मनसा वाचा सर्वावस्थासु सर्वथा ।
सर्वत्र मैथुनत्यागः ब्रह्मचर्यं प्रचक्षते ।। इति ।

सर्वथेत्यनेनाष्टविधस्यापि मैथुनत्यागोऽभिप्रेत इत्युक्तं दक्षेण ।

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।। इति ।

अष्टाङ्गमष्टप्रकारमित्यर्थः ।

ब्रह्मचर्याश्रमस्थानां यतीनां नैष्ठिकस्य च ।
ब्रह्मचर्या तु सैवोक्ता तथैवारण्यवासिनाम् ।।

ऋतावृत्तौ स्वदारेपु सङ्गतिर्या विधानतः ।
राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यं प्रकीर्तितम् ।। इति ।।

अपरिग्रहः लोकसङ्ग्रहद्रव्यसङ्ग्रहलौकिकवाग्व्यापाररूपपरिग्रहशून्यत्वं वैराग्यमिति यावत् ।

नियमानाह– **शौचमित्यादिना ।।** शौचद्वयमुक्तं याज्ञवल्केन–

शौचं तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथोत्तरम् ।।
मनश्शुद्धिस्तु विज्ञेया धर्मेणाध्यात्मविद्यया ।। इति ।

**तपः** जपहोमातिथ्यतीर्थाटनपरार्थचेष्टारूपं । **तुष्टिः** विषयालम्बुद्धिः । **स्वाध्यायो** वेदाध्ययनम् । **हरिपूजनं** नित्यं हरेः प्रथमाध्यायोक्तप्रकारेण षोडशोपचारैः पूजा इत्येते नियमा इत्यर्थः । आसनमाह– **वीरेति । वीरपद्मे च** वीरासनपद्मासने च । स्वस्तिकाद्यानि चासनमित्युक्तानि । **आद्यशब्देन** सिंहासनादिग्रहणम् । वीरासनादि लक्षणं स्वयमेवानुपदं वक्ष्यत्याचार्यः ।।१४८।।

ध्यानाङ्गप्राणायमनिरूपणम्

त.सा. **रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।। १४९ ।।**

**प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते ।**
**अधीतिस्मृतियुक्तो(क्ता) हि(तु) निदिध्यासनमेव हि ।। १५० ।।**

**प्राणायामे च(मोऽपि) विष्णोर्यत् स्मरणं ध्यानमेव तत् ।**

**त.क.**– चतुर्थमङ्गं विभागेन दर्शयति— **रेचक इति ।।** प्राणायामः रेचकः पूरकः कुम्भकश्चेति त्रिप्रकारोपेत इत्यर्थः । एवशब्दो न्यूनाधिकसङ्ख्याव्यव- च्छेदार्थः । ननूपासनं नाम विष्णुस्मृतिः । तत्त्वं ध्यानस्य सुघटमेव । विष्णुशास्त्रावमर्शनस्य तु कथम्? तस्य स्वाध्यायरूपत्वात् । स्वाध्यायस्य च नियमान्तर्गतत्वात् । नियमस्य च ध्यानाङ्गत्वात् । तथा च ध्यानसमकक्ष्यत्वं चानुपपन्नमित्यत आह– **स्मृतिमिति ।।** सन्ततविष्णुस्मरणं विना या अधीतिः स्वाध्यायपदोक्ता सा नियम एव । न तु विष्णुशास्त्रावमर्शात्मिका विष्णुस्मृतियुक्ता त्वधीतिः । सा तु निदिध्यासनमेव । न तु नियमः । हिशब्देनोभयत्र प्रमाणं सूचयति । नियमान्तर्गतस्वाध्यायो यद्यपि ध्यानाङ्गम् । तथापि विष्णुस्मरणसहितः स्वाध्यायः विष्णुशास्त्रावमर्शनरूपो ध्यानसमकक्ष्यतां प्रतिपद्यते । श्रवणमननादिभिः विष्णुपरत्वेन सम्यक् निष्कृष्टस्य वेदस्य

स्वयमेवार्थावमर्शनं विष्णुरूपार्थचिन्तनं ध्यानवन्निदिध्यासनात्मकमेव भवतीति भावः ।।

नन्वेवमस्य ध्यानाद्भेदो न स्यात् । ध्यानस्याप्यखण्डविष्णुस्मृतिरूपत्वादित्यत आह— **प्राणायामे चेति ।। यद्** यस्मात् ध्यानं **प्राणायामोऽपि** प्राणायामात्मकमपि भवति तस्मात् ध्यानादस्य भेदो युक्तः । विष्णुशास्त्रावमर्शनरूपस्य स्वाध्यायस्य प्राणायामात्मकत्वाभावादित्यर्थः । नन्वेवं प्राणायामस्य ध्यानाङ्गत्वोक्तिविरोध इत्यत आह— **विष्णोरिति ।। यत्** यदा विष्णोः स्मरणं प्राणायामकाले भवति तदैव प्राणायामः ध्यानमपि भवतीत्युच्यते । तथाच विष्णुस्मरणरहितस्य प्राणायामस्य ध्यानाङ्गत्वेऽपि तत्सहितस्य प्राणायामस्य ध्यानात्मकत्वं न विरुद्धमिति भावः । प्राणायामद्वैविध्यं शास्त्रे प्रसिद्धमिति हिशब्दार्थेन चशब्देनाऽह । अग्रे चैतदुपपादयिष्यते ।। १४९-१५० ।।

**अ.सं.**– ध्यानाङ्गप्राणायामानाह– **रेचक इति ।।** प्राणायामः रेचकः पूरकः कुम्भकश्चेति **त्रिधा** त्रिप्रकारेण मत इत्यन्वयः । रेचकादिलक्षणमुक्तं वायुपुराणे–

प्राणः स्वदेहगो वायुस्तस्य वायोर्निरोधनम् ।
तद्रेचनं पूरकं च कुम्भकं च त्रिधोच्यते ।।

नासिकापुटमङ्गुल्या पीड्यैकमपरेण तु ।
औदरं रेचयेद्वायुं ततोऽयं रेचकः स्मृतः ।।

वाह्येन मरुता देहं दृतिवत् परिपूरयेत् ।
नासापुटेनापरेण पूरणात्पूरको मतः ।।

न मुञ्चति न गृह्णाति वायुमन्तर्बहिःस्थितम् ।
सम्पूर्णकुम्भवत्तिष्ठेदचलः स तु कुम्भकः ।। इति ।

प्राणायामस्य कुत्रचिदागमे नियमत्वमुक्तं कुत्रचित् निदिध्यासनत्वं कुत्रचित् ध्यानत्वमुक्तं तदभिप्रायमाह– **स्मृतिमिति ।।** विष्णोः स्मृतिं विना । उपलक्षणमेतत् । मन्त्रोच्चारणं विना । मंत्रोच्चारणविष्णुस्मृतिरहितः प्राणायामः नियम इत्युच्यते । **अधीतिःस्मृतियुक्तः** अधीतिर्मन्त्राध्ययनं मन्त्रोच्चारणमिति

यावत्। स्मृतिः मन्त्रवाच्यदेवतास्मरणम्। ताभ्यां युक्तः प्राणायामस्तु निदिध्यासनमित्युच्यते।

अगर्भश्च सगर्भश्च प्राणायामो द्विधा तयोः।
जपध्यानं विनाऽगर्भः सगर्भस्तत्समन्वितः ॥

इति नारदीये मन्त्रोच्चारणदेवताध्यानसाहित्यराहित्यभेदेन प्राणायामद्वैविध्योक्तेः। **यत्** यस्मिन्प्राणायामे मन्त्रोच्चारणं विना केवलं विष्णोः स्मरणमेवास्ति सः प्राणायामः ध्यानमित्युच्यते इत्यर्थः।

अयं भावः। प्राणायामस्यैवाकारभेदेन नियमनिदिध्यासनशब्दवाच्यत्वमिति। 'अधीतिः स्मृतियुक्ता हि' इति क्वचित्पाठः। तत्रायमर्थः। ननु स्वाध्यायस्य ध्यानाङ्गनियमप्रभेदत्वं कथम्। तस्य क्वचिदागमे निदिध्यासनत्वेनोक्तत्वादित्यत आह– **स्मृतिमिति** ॥ विष्णोः स्मृतिं विनाऽ**धीतिः** स्वाध्यायः नियम इत्युच्यते। स्मृतियुक्ता अधीतिः निदिध्यासनमित्युच्यते इत्यर्थः।

अयं भावः। स्वाध्यायो द्विविधः। सामान्यतो वाच्यत्वेन हरिस्मरणे सत्यपि, वाक्यार्थज्ञानपूर्वकं विष्णुस्मृतिरहितः। वाक्यार्थज्ञानपूर्वकविष्णुस्मृतियुक्तश्चेति। तत्र विष्णुस्मृतिरहितस्य स्वध्यानाङ्गनियमप्रभेदत्वं वाक्यार्थज्ञानपूर्वकविष्णु-स्मृतियुक्तस्य तु स्वयमेव शास्त्रावमर्शनरूपत्वेन निदिध्यासनत्वमेव। न ध्यानाङ्गत्वम्। एवं च स्वाध्यायस्योभयविधत्वेन एकस्य ध्यानाङ्गनियमत्वम्। अपरस्य ध्यानसमकक्षनिदिध्यासनत्वं च युज्यत इति। प्राणायामे चेत्यस्य पूर्व एवाभिप्रायः ॥ १४९-१५० ॥

**गु.दी.**– प्रसङ्गाद्धरिस्मृतिरहितरेचकादेर्नियमान्तर्भाव इत्याह— **रेचक इति** ॥ इति त्रिधा प्राणायाम इत्यर्थः। हरिस्मृतिसहितरेचकादिरेव प्राणायामः। स एव ध्यानाङ्गत्वेन प्रागुक्त इति द्रष्टव्यम्। विष्णोः स्मृतिं विना नियमः। एवं नियमत्वेनोक्तस्वाध्यायस्यापि वाक्यार्थज्ञानपूर्वकहरिस्मृतियुक्तत्वे शास्त्रावमर्शन-रूपत्वेन निदिध्यासनान्तर्भाव एवेत्याशयेनाह— **अधीतिरिति** ॥ **अधीतिः** मन्त्राध्ययनं स्वाध्याय इति यावत्। प्राक् हरिस्मृतियुक्तरेचकादेः प्राणायाम-

त्वमभिप्रेतम् । तत्र स्मृत्यंशस्य ध्यानान्तर्भाव इत्याह— **प्राणायामे चेति ।।** प्राणायामे विष्णोर्यत्स्मरणं तद्ध्यानमेव ।। १४९-१५० ।।

**मङ्गाली–** ध्यानाङ्गं प्राणायाममाह– **रेचक इति ।।** प्राणायामः रेचकः पूरकः कुम्भकश्चेति **त्रिधा** त्रिप्रकारो मतः । रेचकादिलक्षणमुक्तं वायुपुराणे–

प्राणः स्वदेहगो वायुः तस्य वायोर्निरोधनम् ।
तद्रेचनं पूरकं च कुम्भकं च त्रिधोच्यते ।।

नासिकापुटमङ्गुल्याऽपीड्यैकमपरेण तु ।
औदरं रेचयेद्वायुं ततोऽयं रेचकस्स्मृतः ।।

बाह्येन मरुता देहं हृतिवत्परिपूरयेत् ।
नासापुटेनापरेण पूरणात्पूरको मतः ।।

न मुञ्चति न गृह्णाति वायुमन्तर्बहिस्थितम् ।
संपूर्णकुम्भवत्तिष्ठेदचलः स तु कुम्भक ।। इति ।

प्राणायामस्य कुत्रचिदागमे नियमत्वमुक्तम् । कुत्रचिन्निदिध्यासनत्वं कुत्रचिद्ध्यानत्वमुक्तम् । तदभिप्रायमाह– **स्मृतिमिति ।।** विष्णोः स्मृतिं विना । उपलक्षणमेतत् । मन्त्रोच्चारणं च विनेति । मन्त्रोच्चारणविष्णुस्मृतिरहितः प्राणायामो नियम इत्युच्यते । **अधीतिस्मृतियुक्तः** अधीतिर्मन्त्राध्ययनं मन्त्रोच्चारणमिति यावत्। स्मृतिमन्त्रवाच्यदेवतास्मरणं ताभ्यां युक्तः प्राणायामस्तु निदिध्यासनमित्युच्यते ।

अगर्भश्च सगर्भश्च प्राणायामो द्विधा तयोः ।
जपध्यानं विनाऽगर्भः सगर्भस्तत्समन्वितः ।।

इति नारदीये मन्त्रोच्चारणदेवताध्यानसाहित्यराहित्यभेदेन प्राणायामद्वैविध्योक्तेः । **यत्तस्मिन्प्राणायामे** मन्त्रोच्चारणं विना केवलं विष्णोः स्मरणमेवास्ति स प्राणायामो ध्यानमित्युच्यत इत्यर्थः । अयं भावः । प्राणायामस्यैवाकारभेदेन नियमे निदिध्यासनध्यानशब्दवाच्यत्वमिति । 'अधीतिः स्मृतियुक्ता हि' इति

क्वचित्पाठः । तत्रायमर्थः । ननु स्वाध्यायस्य ध्यानाङ्गनियमभेदत्वं कथं ? तस्य क्वचिदागमे निदिध्यासनत्वेनोक्तत्वादित्यत आह– **स्मृतिमिति** । विष्णोः स्मृतिं विनाऽ**धीतिः** स्वाध्यायो नियम इत्युच्यते । स्मृतियुक्ताधीतिः निदिध्यासनमुच्यत इत्यर्थः । अयं भावः । स्वाध्यायो द्विविधः । सामान्यतो वाच्यत्वेन हरिस्मरणे सत्यपि वाक्यार्थज्ञानपूर्वकं विष्णुस्मृतिरहितः, वाक्यार्थज्ञानपूर्वकविष्णुस्मृतियुक्तश्चेति । तत्र स्मृतिरहितस्वाध्यायस्य ध्यानाङ्गनियमप्रभेदत्वम् । वाक्यार्थज्ञानपूर्वकविष्णुस्मृतियुक्तस्य तु स्वयमेव शास्त्रावमर्शनरूपत्वेन निदिध्यासनत्वमेव । न ध्यानाङ्गत्वम् । एवं च स्वाध्यास्योभयविधत्वेनैकस्य ध्यानाङ्गनियमत्वमपरस्य ध्यानसमकक्षनिदिध्यासनत्वं युज्यत इति । प्राणायामे चेत्यस्य पूर्व एवाभिप्रायः ।। १४९-१५० ।।

आसनशौचप्राणायामानां वैराग्यस्य, यमप्रभेदभूतानां अहिंसासत्यास्तेयब्रह्मचर्याणां, नियमप्रभेदानां तपतुष्टिस्वाध्यायहरिपूजानां तारतम्येन धर्महेतुत्वकथनम्

**त.सा.** **आसा शौचं प्राणायामो निष्परिग्रहपूर्वकाः ।। १५१ ।।**

**तपआद्याः क्रमात् सर्व उत्तरोत्तरतोऽधिकाः ।**
**सर्वतः(सर्वस्मात्) श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ।। १५२ ।।**

**त.क.–** अत्र 'यमश्च नियमश्चासा प्राणायाम इतीरिताः'(४-१४७) दत्याद्युद्देशक्रमानु-सारेण यमादेरुत्तमत्वं प्रतीयते। तच्चानुपपन्नम्। 'शौचासने त्वङ्गमाचं न पृथग् धर्मकारणम्'(४-१५७) इति वक्ष्यमाणत्वेन आसनस्य नियमादुत्तमत्वानुपपत्तेः। अहिंसेत्यादिना निर्दिष्टानामपरिग्रहान्तानां यमानामुत्तरोत्तरमाधिक्यं प्रतीयते। शौचस्य तपआधिक्यं प्रतीयते। तच्चानुपपन्नम्। शास्त्रान्तरविरोधात्। पूर्वपूर्वप्राबल्यप्राप्तौ यमस्य नियमादुत्तमत्वं स्यात्। तच्चानुपपन्नम्। हरिपूजनस्य सर्वाधिक्योक्तेरित्याशङ्क्य येन केनचित् क्रमेण प्रमेयमुद्देष्टव्यमित्येव, ग्रन्थान्तरानुसरणाय चैवमुद्देशः कृतः। क्रमस्त्वन्योऽस्तीति भावेनाह— **आसेति ।। आसा** आसनम्। **शौचं**

मृज्जलादिसाध्यम् । **प्राणायामः** रेचकः पूरकः कुम्भकश्चेति त्रिविधः । 'निष्परिग्रहपूर्वकाः' इत्यनेन अपरिग्रहब्रह्मचर्यास्ते-यसत्याहिंसा उच्यन्ते । तपआद्या इत्यनेन तपस्तुष्टिस्वाध्यायो हरिपूजनमिति गृह्यते । तपआद्या इत्यतः परं 'एवमुद्देष्टव्याः' इति शेषः । ततः किमित्यत आह– **क्रमादिति ।।** एवं क्रमादुद्दिष्टा आसनादिहरिपूजनान्ताः सर्वे धर्मा उत्तरोत्तरमधिकाः पूर्वपूर्वतो धर्मात् ज्ञातव्या इत्यर्थः । ननु 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादौ श्रवणादीनां त्रयाणामभिधानात् तेषां च स्वाध्यायात्मकत्वात् स्वाध्यायस्य च हरिपूजनादधमत्वप्राप्तिः । तथाच

अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।
सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ।। (तं.सा.४-१४५,१४६)

इत्युक्तमपरोक्षसाधनत्वं भज्येत । न हि प्रतिमापूजनादपि निकृष्टस्य श्रवणादेरपरोक्षसाधनत्वं युक्तमित्यत आह— **सर्वत इति ।।** सर्वतः हरिपूजनान्तेभ्यः श्रवणाद्या एवाधिका इति सम्बन्धः । कथं तर्हि न विरोध इत्यत उक्तम्— **मुख्या इति ।।** मुक्तिप्रसाधने मुख्यसाधनभूताः श्रवणाद्याः पूर्वत्राभिप्रेताः । स्वाध्यायात्मकश्रवणादेस्त्वमुख्यसाधनत्वमिष्टमेवेति भावः । श्रवणमनननिदिध्यासनशास्त्रावमर्शनभक्तीनामपि साधनत्वाविशेषाद्यमनियमादिना कुतो न संग्रह इत्यत ,आह— **सर्वत इति ।।** ज्ञानसाधनेभ्य सर्वेभ्योऽपि श्रवणाद्या मुख्यसाधनभूताः । अत एव तैर्द्वारा मुक्तावपि । तथा च परिगणितानां ध्यानसाधनत्वेन साक्षाज्ज्ञानत्वाभावात् श्रवणादीनां साक्षादेव ज्ञानसाधनत्वाद्युक्तं तेषां तेष्वपरिगणनमित्यर्थः ।। १५१, १५२ ।।

**अ.सं.**— इदानीमासनप्रणायामयोर्यमनियमभेदानां च तारतम्येन धर्महेतुत्वमाह– **आसेति ।। आसा** आसनं । **निष्परिग्रहपूर्वकाः** अपरिग्रहशब्दवाच्यवैराग्यादयः । अहिंसासत्यास्तेयब्रह्मचर्यरूपाः यमप्रभेदाः **तपआद्याः** तपस्तुष्टिस्वाध्यायहरिपूजनरूपाः नियमप्रभेदाः इत्येते सर्वे क्रमात् उत्तरोत्तरं **अधिकाः** पूर्वस्मात्पूर्वस्मात् अग्रिमा श्रेष्ठा इति भावः । तदुक्तं योगदीपिकायाम्–

आसा शौचं च धर्माङ्गे प्राणायामो परिग्रहः ।
अहिंसा सत्यसमस्तेयं ब्रह्मचर्यं तपस्तथा ।।

(समाधिर्निगमोतानां व्याख्यानं भक्तिरेव च)
तुष्टिर्यज्ञादयो धर्माः स्वाध्यायोऽभ्यर्चनं हरेः ।
उत्तरोत्तरमेतानि कर्तव्यानि विशेषतः ।। (३.८४ - ८६) इति ।

एतत्सर्वापेक्षया श्रवणादयः श्रेष्ठा इत्याह– **सर्वत इति** ।। पूर्वोक्तेभ्यः सर्वेभ्य इत्यर्थः । अत्राद्यशब्देन 'श्रवणं चाथ मननं ध्यानमेव च' इत्यादिना योगदीपिकोक्तश्रवणमननशास्त्रावमर्शानां ग्रहणम् । मुक्तिसाधने **मुख्या** मुख्यसाधनभूता इत्यर्थः ।। १५१-१५२ ।।

**गु.दी.**— पृथगङ्गत्वेनोक्तासनप्राणायामाभ्यां सहितयमनियमभेदानां तारतम्यमाह— **आसेति** ।। **निष्परिग्रहपूर्वका इति** ।। यमेषु अन्तिमभूतापरिग्रहपूर्वका अहिंसासत्यास्तेयब्रह्मचर्यरूपाः यमप्रभेदाः । **तपआद्याः** तपस्तुष्टिस्वाध्यायहरिपूजनरूपाः नियमप्रभेदाः इत्येते सर्वे क्रमादुत्तरोत्तरतोऽधिका इत्यर्थः । तदुक्तं तत्त्वप्रदीपिकायाम्—

आसा शौचं च धर्माङ्गे प्राणायामोऽपरिग्रहः ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तपस्तथा ।।

तुष्टिर्यज्ञादयो धर्माः स्वाध्यायोऽभ्यर्चनं हरेः ।
उत्तरोत्तरमेतानि कर्तव्यानि विशेषतः ।। इति ।

ननु उत्तरोत्तरतोऽधिका इत्ययुक्तम् । पूर्वं 'अपरोक्षदृशिश्चापि' (तं.सा.४-१४५) इति श्रवणादेरेव साक्षादपरोक्षहेतुत्वोक्त्या तेषामेवाधिकत्वप्रतीतेरित्यत आह— **सर्वत इति** ।। **सर्वतः** पूर्वोक्तात्सर्वस्मात् **श्रवणाद्याः** श्रवणमननध्यानानि मुक्तिप्रसाधने मुख्याः । तथा च श्रवणादीनामेतत्सर्वापेक्षया प्रधानसाधनत्वेऽपि मोक्षसाधनभूतध्यानाङ्गानामेतेषामुत्तरोत्तरत आधिक्यकथनं नायुक्तमित्याशयः ।। १५१,१५२ ।।

**मङ्गाली**— इदानीमासनप्राणायामयोर्यमनियमप्रभेदानां च तारतम्येन

धर्महेतुत्वमाह– **आसेति ।।** **आसा** आसनं । **निष्परिग्रहपूर्वकाः** अपरिग्रहशब्दवाच्यवैराग्यादयः— अहिंसासत्यास्तेयब्रह्मचर्यरूपाः यमप्रभेदाः **तपआद्याः** तपस्तुष्टिस्वाध्यायहरिपूजनरूपाः नियमप्रभेदाः इत्येते सर्वे **क्रमादुत्तरोत्तरतोऽधिकाः** पूर्वस्मात्पूर्वस्मादग्रिमोऽग्रिमः श्रेष्ठ इत्यर्थः । एतत्सर्वापेक्षया श्रवणादयः श्रेष्ठा इत्याह– **सर्वत इति ।।** पूर्वोक्तेभ्यः सर्वेभ्य इत्यर्थः । **आद्यशब्देन** मननध्यानशास्त्रावमर्शनानां ग्रहणम् । मुक्तिप्रसाधने **मुख्याः** मुख्यसाधनभूता इत्यर्थः ।। १५१-१५२ ।।

अधिकारिविशेषनिष्ठतया श्रवणादेः संख्यापूर्वं तारतम्यकथनम्

**तं.सा.** **अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा ।**
**ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् ।। १५३ ।।**

**वरं(स्वयं) दशगुणं तस्माद्व्याख्यैकस्य शतोत्तरा ।**
**अपरोक्षदृशाऽप्येषा कर्तव्या विष्णुतुष्टिदा ।। १५४ ।।**

**त.क.**– ननु श्रवणं मननस्य, मननं निदिध्यासनस्य, निदिध्यासनं ज्ञानस्य साधनमित्येवं स्थितिः । तत्कथं श्रवणं साक्षात् साधनमित्यत आह— **अज्ञस्येति ।।** श्रवणं **श्रेष्ठं** साक्षात्साधनम् । **अयुक्तेर्**युक्त्यनुसन्धानरहितस्य पुंसो मननं साक्षात्साधनम् इत्यादि योज्यम् । अधिकारिणो हि बहुविधाः । केचिच्छ्रवणप्रधानाः । केचिच्छास्त्रावमर्शनात्मकमननप्रधानाः । केचिद्भक्तिप्रधाना इति । तत्राद्यानां मननध्याने कर्तव्ये अपि श्रवणवत् आधिक्येन न । एवं तेषां तेषामपि तदितरान्नाधिक्यम्। तेन 'तन्निर्धारणार्थ नियमस्तद्दृष्टेः पृथग्ध्यप्रतिवन्धः फलम्'(ब्र.सू.३-३-४३) इत्यधिकरणरीत्या परस्परं साध्यसाधनभावमापन्नमपि साक्षात्साधनमप्यधिकारिविशेषणं भवतीति भावः । यद्वा, श्रवणादीनां साधनत्वमुपादाय श्रवणाद्यापादनक्रमं सूचयति— **अज्ञस्येति ।।** प्रबलज्ञानवतोऽधिकारिणः प्रचुरयुक्तिरहितान्मननाद्युक्तिसहितं श्रवणं श्रेष्ठम् । श्रवणस्यापि युक्तिगर्भत्वे श्रवणमननयोर्यथा न साङ्कर्यं तथोपपादितं चन्द्रिकायाम् । एवं तत्त्वनिश्चयशून्यात्

ध्यानात् तत्त्वनिश्चयसहितं मननं श्रेष्ठम्। एवं तत्त्वनिश्चयरहितात् प्रधानात् तत्त्वनिश्चयमात्रं श्रेष्ठमित्यर्थः। तथा च युक्तिसहितं श्रवणं, ध्यानसहितं मननं, तत्त्वनिश्चयसहितं ध्यानं, ध्यानसहितं शास्त्रावमर्शनं चावश्यमापाद्यमित्युक्तं भवति ॥

शास्त्रावमर्शनमित्युक्तं श्रैष्ठ्यमेव सङ्ख्यापूर्वं विवृणोति– **वरमिति** ॥ **(स्वयमिति)** ॥ न केवलं विष्णुशास्त्रावमर्शनमेकमित्यत्र तत्त्वनिष्कर्षानन्तरं स्वयमेवार्थानुसन्धानपूर्वकं शब्दावमर्शनं विष्णुशास्त्रावमर्शनशब्देनोच्यते, किन्तु व्याख्यानमपीति भावेन संख्यापूर्वमाधिक्यमाह— **तस्मादिति** ॥ स्वयमेवार्थानुसन्धानरूपाच्छास्त्रावमर्शनाद् व्याख्या शतगुणितमुत्तरमाधिक्यं यस्याः सेति विग्रहः। एकस्यापि व्याख्या शतोत्तरा, किं बहूनामित्यर्थः।

'तस्मादेषा व्याख्या अपरोक्षदृशाऽपि कर्तव्या' इति किं विशिष्योच्यते। श्रवणादेरपि कर्तव्यत्वात्। 'अद्यापि तेन देवाद्याः शृण्वते मन्वतेऽपि च'(अनु.३-३-७४) इत्यादौ तदुक्तेरित्यत आह— **विष्णुतुष्टिदेति** ॥ यतो विष्णोरतितुष्टिः व्याख्यया भवत्यतो विशेषत उक्तिर्युक्तैवेति भावः ॥ १५३,१५४ ॥

**अ.सं.–** श्रवणादिष्वधिकारिण आह– **अज्ञेति** ॥ यद्वा श्रवणादिष्वप्यवान्तरतारतम्यं सयुक्तिकमाह– **अज्ञस्येति** ॥ शास्त्रार्थज्ञानशून्यस्य आचार्यात् **श्रवणं** सच्छास्त्रश्रवणं मुख्यम्। तस्य मननाद्यनधिकारित्वात्। ज्ञातशास्त्रस्य **अयुक्ते**र्युक्त्यनुसंधानशून्यस्य, युक्तायुक्तसंशयवत इति यावत्। श्रवणपेक्षया श्रुतप्रमेयस्य दार्ढ्याय मननं **तथा** श्रेष्ठम्। श्रवणमननाभ्यां **निश्चिततत्त्वस्य** दूरोत्सारिताज्ञानसंशयविपर्ययस्य निश्चितपरोक्षज्ञानवतः पुरुषस्य ध्यानं विष्णुशास्त्रावमर्शनं च मुख्यम्। तयोर्मध्येऽपि ध्यानात्स्वयमेव शास्त्रावमर्शनमेव दशगुणमुत्तमम्। अधिकध्यानकाले बहुगुणानामविभासात्। विष्णुशास्त्रावमर्शनेन तु विष्णुशास्त्रस्य मन्त्रोपनिषदः भारतभागवतादेः ब्रह्मसूत्रन्यायैः श्रीमध्वाचार्योपदिष्टैः स्वयमेव आदरनैरन्तर्याभ्यामभीक्ष्णं भगवदुत्कर्षपर्यवसायितयाऽवधारणरूपेण तदुक्तानामनेकेषां गुणानां प्रतिभासादिति भावः ॥

**तस्मात्** एकाकिना स्वयमेव क्रियमाणात् शास्त्रवमर्शनात् एकस्य शिष्यस्य उक्तविधया विष्णुशास्त्रावमर्शनरूपव्याख्या **शतोत्तरा** शतगुणेनाधिका ।

आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ।। इत्युक्तेः ।

व्याख्यानतो विशेषगुणप्रतिपत्तेरिति भावः । एकस्यापि भगवद्गुणस्य शिष्यान् प्रति उक्तविधया व्याख्येत्यप्याहुः । व्याख्यानस्य उत्तमत्वमेव हेतुसूचनेन विवृणोति– **अपरोक्षेति।।** व्याख्यानसाध्यापरोक्षज्ञानरूपफलवताऽपि व्याख्यानस्य विष्णुप्रीत्यर्थत्वेन कर्तव्यत्वोक्तेः सर्वश्रैष्ठ्यमिति भावः ।। १५३-१५४ ।।

**गु.दी.**– श्रवणादिष्ववान्तरतारतम्यमधिकारिविशेषनिष्ठत्वेनाह– **अज्ञस्येति ।। अज्ञस्य** शास्त्रार्थज्ञानशून्यस्य श्रवणमेव श्रेष्ठं मननाद्यधिकाराभावात् । **अयुक्तेः** ज्ञातशास्त्रार्थस्य तत्रैव सम्यग्युक्त्यनुसन्धानशून्यस्य मननं श्रवणापेक्षया श्रेष्ठम् । अनेन मननस्य श्रवणापेक्षयोत्तमत्वे युक्तिः सूचिता भवति । एवमग्रेऽपि । **निश्चिततत्त्वस्य ।** श्रवणमननाभ्यामिति शेषः **।। तस्माच्छास्त्रावमर्शनमिति ।।** निश्चिततत्त्वस्येत्यनुवर्तते । तथा च श्रवणमननाभ्यां निश्चिततत्त्वस्य पुंसः **तस्मात्** ध्यानात् शास्त्रावमर्शनमेव दशगुणं वरमिति प्रोक्तम् । ध्यानकाले वहुगुणानामप्रतिभासात् । शास्त्रावमर्शने तु तदुक्तानामनेकेषां गुणानां प्रतिभासादिति भावः ।

अत्रेदं ज्ञेयम् । शास्त्रावमर्शनं द्विविधम् । ध्यानाङ्गभूतं तदुत्तरभावि चेति । तत्राद्यस्य ध्यानादवरत्वेऽपि द्वितीयस्य तदुत्तरत्वमिति न विरोधः । यथोक्तं सुधायाम्— 'शास्त्राभ्यासस्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वं चास्ति' इति । यदत्र वक्तव्यं तत् 'अथवा सततं शास्त्रविमर्शेन भविष्यति' (तं.सा.४-१७२) इत्यत्र वक्ष्यते । ध्यानरूपशास्त्रावमर्शनापेक्षया व्याख्यानतो विशेषगुणप्रति-पत्तेस्तदेव वरमित्याशयेनाह– **व्याख्येति ।।** एकस्य सच्छिष्यस्यापीति शेषः । अत्र व्यक्तवचनवाचकः चक्षिङ् धातुः । तस्य धातोः 'चक्षिङः ख्याञ्' (पा.सू.२-४-५४) 'चक्षिङः ख्याञादेशः स्यात्' इत्यनेन ख्याञादेशः । ततश्च वि आ ख्याञ् इति

स्थिते यणादेशान्त्यहल्लोपाभ्यां व्याख्याशब्दो निष्पद्यते। तत्र विशब्दो विस्तरार्थः। आङ् बलवदर्थः। तेन विस्तरेण बलवद्भिरुपायैर्व्यक्तवचनेनार्थ-प्रतिपादनं व्याख्याशब्दार्थः। **शतोत्तरा** शतगुणोत्तमा। उक्तं चैतत्तैत्तरीयभाष्ये—

सम्यग्ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च।
न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः ।। इति ।। (पुट.१२४)

व्याख्यानस्योत्तमत्वं हेतुसूचनेन विवृणोति— **अपरोक्षेति ।। अपरोक्षदृशा** अपरोक्षज्ञानिनाऽपि विष्णुतुष्टिदा व्याख्या कर्तव्या। तथा च अपरोक्षज्ञानिनस्तदुत्तरं श्रवणादि यथा मौक्तानन्दकारणं तथा व्याख्याऽपीति। अपरोक्षज्ञानिनाऽपि यदा कार्या तदा किमुतान्यैरिति वक्तुरिदमत्राकूतं- ज्ञानोत्तरानुष्ठितव्याख्यानादिप्रयत्नाधिक्याद्विष्णुतुष्टिद्वारा मुक्तावाधिक्यं प्राप्यत इति। इदं च मनुष्यपरमेव । न देवताविषयम्। तदुक्तं बृहद्भाष्ये- 'मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नाधिक्यादाधिक्यं मुक्तौ प्राप्यते' (बृ.भा.अ४-शारीरब्राह्मणम्) इति। 'वृद्धिह्रासौ विमुक्तिगौ' (अणु.भा.३-७) इत्यादि चान्यत्र। ननु मुक्तौ प्राप्तमाधिक्यं नाम न तावत्स्वरूपसुखस्यैव। तस्य क्लृप्तत्वेना-नागन्तुकत्वात्। नापि तदभिव्यक्तिः। ज्ञानेनाज्ञाननिवृत्तावभिव्यक्तेः सर्व-साधारण्यादिति चेदित्थम्। नाविद्यैवात्मस्वरूपावरणम्। किन्त्वीश्वरेच्छाऽपि। तथा चाज्ञाने निवृत्ते श्वेतद्वीपदर्शनेन स्वरूपसुखं व्यज्यते। न तु सर्वम्। येन ज्ञानोत्तरं प्रयत्नाधिक्यं कृतं तस्य तेन कर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोतीति यावदभिव्यक्तिरेवाधिक्यम्। तदनभिव्यक्तिरेव ह्रासः। तत्र ज्ञानोत्तरं प्रयत्नाकरणं कारणम्। तदुक्तमीशावास्यभाष्ये -

'........................ कृष्णोपास्तिमकुर्वतः।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ।। इति । (ई.भा.२)

विस्तरस्त्वस्मत्परमगुरुयादवाचार्यकृतसुधाटिप्पण्यां ।। १५३-१५४ ।।

**मङ्गाली—** श्रवणादिष्वधिकारिण आह— **अज्ञस्येति ।।** यद्वा श्रवणादिष्वपि

**तस्मात्** एकाकिना स्वयमेव क्रियमाणात् शास्त्रवमर्शनात् एकस्य शिष्यस्य उक्तविधया विष्णुशास्त्रावमर्शनरूपव्याख्या **शतोत्तरा** शतगुणेनाधिका ।

आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ।। इत्युक्तेः ।

व्याख्यानतो विशेषगुणप्रतिपत्तेरिति भावः । एकस्यापि भगवद्गुणस्य शिष्यान् प्रति उक्तविधया व्याख्येत्यप्याहुः । व्याख्यानस्य उत्तमत्वमेव हेतुसूचनेन विवृणोति– **अपरोक्षेति ।।** व्याख्यानसाध्यापरोक्षज्ञानरूपफलवताऽपि व्याख्यानस्य विष्णुप्रीत्यर्थत्वेन कर्तव्यत्वोक्तेः सर्वश्रैष्ठ्यमिति भावः ।। १५३-१५४ ।।

**गु.दी.–** श्रवणादिष्ववान्तरतारतम्यमधिकारिविशेषनिष्ठत्वेनाह– **अज्ञस्येति ।। अज्ञस्य** शास्त्रार्थज्ञानशून्यस्य श्रवणमेव श्रेष्ठं मननाद्यधिकाराभावात् । **अयुक्तेः** ज्ञातशास्त्रार्थस्य तत्रैव सम्यग्युक्त्यनुसन्धानशून्यस्य मननं श्रवणापेक्षया श्रेष्ठम् । अनेन मननस्य श्रवणापेक्षयोत्तमत्वे युक्तिः सूचिता भवति । एवमग्रेऽपि । **निश्चिततत्त्वस्य ।** श्रवणमननाभ्यामिति शेषः **।। तस्माच्छास्त्रावमर्शनमिति ।।** निश्चिततत्त्वस्येत्यनुवर्तते । तथा च श्रवणमननाभ्यां निश्चिततत्त्वस्य पुंसः **तस्मात्** ध्यानात् शास्त्रावमर्शनमेव दशगुणं वरमिति प्रोक्तम् । ध्यानकाले वहुगुणानामप्रतिभासात् । शास्त्रावमर्शने तु तदुक्तानामनेकेषां गुणानां प्रतिभासादिति भावः ।

अत्रेदं ज्ञेयम् । शास्त्रावमर्शनं द्विविधम् । ध्यानाङ्गभूतं तदुत्तरभावि चेति । तत्राद्यस्य ध्यानादवरत्वेऽपि द्वितीयस्य तदुत्तरत्वमिति न विरोधः । यथोक्तं सुधायाम्— 'शास्त्राभ्यासस्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वं चास्ति' इति । यदत्र वक्तव्यं तत् 'अथवा सततं शास्त्रविमर्शेन भविष्यति' (तं.सा.४-१७२) इत्यत्र वक्ष्यते । ध्यानरूपशास्त्रावमर्शनापेक्षया व्याख्यानतो विशेषगुणप्रति-पत्तेस्तदेव वरमित्याशयेनाह– **व्याख्येति ।।** एकस्य सच्छिष्यस्यापीति शेषः । अत्र व्यक्तवचनवाचकः चक्षिङ् धातुः । तस्य धातोः 'चक्षिङः ख्याञ्' (पा.सू.२-४-५४) 'चक्षिङः ख्याञादेशः स्यात्' इत्यनेन ख्याञादेशः । ततश्च वि आ ख्याञ् इति

स्थिते यणादेशान्त्यहल्लोपाभ्यां व्याख्याशब्दो निष्पद्यते। तत्र विशब्दो विस्तरार्थः। आङ् बलवदर्थः। तेन विस्तरेण बलवद्भिरुपायैर्व्यक्तवचनेनार्थ-प्रतिपादनं व्याख्याशब्दार्थः। **शतोत्तरा** शतगुणोत्तमा। उक्तं चैतत्तैत्तरीयभाष्ये—

सम्यग्ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च।
न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः ।। इति ।। (पुट.१२४)

व्याख्यानस्योत्तमत्वं हेतुसूचनेन विवृणोति— **अपरोक्षेति ।। अपरोक्षदृशा** अपरोक्षज्ञानिनाऽपि विष्णुतुष्टिदा व्याख्या कर्तव्या। तथा च अपरोक्षज्ञानिनस्तदुत्तरं श्रवणादि यथा मौक्तानन्दकारणं तथा व्याख्याऽपीति। अपरोक्षज्ञानिनाऽपि यदा कार्या तदा किमुतान्यैरिति वक्तुरिदमत्राकूतं-ज्ञानोत्तरानुष्ठितव्याख्यानादिप्रयत्नाधिक्याद्विष्णुतुष्टिद्वारा मुक्तावाधिक्यं प्राप्यत इति। इदं च मनुष्यपरमेव। न देवताविषयम्। तदुक्तं बृहद्भाष्ये- 'मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नाधिक्यादाधिक्यं मुक्तौ प्राप्यते' (बृ.भा.अ४-शारीरब्राह्मणम्) इति। 'वृद्धिह्रासौ विमुक्तिगौ' (अणु.भा.३-७) इत्यादि चान्यत्र। ननु मुक्तौ प्राप्तमाधिक्यं नाम न तावत्स्वरूपसुखस्यैव। तस्य क्लृप्तत्वेना-नागन्तुकत्वात्। नापि तदभिव्यक्तिः। ज्ञानेनाज्ञाननिवृत्तावभिव्यक्तेः सर्व-साधारण्यादिति चेदित्थम्। नाविद्यैवात्मस्वरूपावरणम्। किन्त्वीश्वरेच्छाऽपि। तथा चाज्ञाने निवृत्ते श्वेतद्वीपदर्शनेन स्वरूपसुखं व्यज्यते। न तु सर्वम्। येन ज्ञानोत्तरं प्रयत्नाधिक्यं कृतं तस्य तेन कर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोतीति यावदभिव्यक्तिरेवाधिक्यम्। तदनभिव्यक्तिरेव ह्रासः। तत्र ज्ञानोत्तरं प्रयत्नाकरणं कारणम्। तदुक्तमीशावास्यभाष्ये -

'.......................... कृष्णोपास्तिमकुर्वतः।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ।। इति । (ई.भा.२)

विस्तरस्त्वस्मत्परमगुरुयादवाचार्यकृतसुधाटिप्पण्यां ।। १५३-१५४ ।।

**मङ्गाली—** श्रवणादिष्वधिकारिण आह— **अज्ञस्येति ।।** यद्वा श्रवणादिष्वपि

अवान्तरतारतम्यं सयुक्तिकमाह– **अज्ञस्येति ।।** शास्त्रार्थज्ञानशून्यस्याचार्यात्सच्छास्त्रश्रवणं मुख्यम् । तस्य मननाद्यनधिकारित्वात् । ज्ञातशास्त्रस्यायुक्तेः युक्त्यनुसन्धानशून्यस्य युक्तायुक्तसंशयवत इति यावत् । श्रवणापेक्षया श्रुतप्रमेयदार्ढ्याय मननं **तथा** श्रेष्ठं । श्रवणमननाभ्यां **निश्चितत्त्वस्य** दूरोत्सारिताज्ञानसंशयविपर्ययस्य निश्चितपरोक्षज्ञानवतः पुरुषस्य ध्यानं श्रेष्ठम् । **तस्मात्** ध्यानात् स्वयमेव शास्त्रावमर्शनं दशगुणं वरम् । ध्यानकाले बहुगुणानामप्रतिभासात् शास्त्रावमर्शनेन तदुक्तानामनेकेषां प्रतिभासादिति भावः।।

**तस्मादे**काकिना स्वयमेव क्रियमाणात् शास्त्रावमर्शनात् एकस्य शिष्यस्यापीति शेषः । ब्रह्मसूत्रन्यायैः सच्छास्त्रस्य **व्याख्या** व्याख्यानं **शतोत्तरा** शतगुणेनाधिका ।

आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ।।

इत्युक्तेर्व्याख्यानतो विशेषगुणप्रतिपत्तेरिति भावः । एकस्यापि भगवद्गुणस्य शिष्यान् प्रति व्याख्येत्यप्याहुः। व्याख्यानस्योत्तमत्वमेव हेतुसूचनेन विवृणोति– **अपरोक्षेति ।।** व्याख्यानसाध्यापरोक्षज्ञानरूपफलवतापि व्याख्यानस्य विष्णुप्रीत्यर्थत्वेन कर्तव्योक्तेः सर्वश्रैष्ठ्यमिति भावः ।। १५३,१५४ ।।

व्याख्यानस्योत्तमत्वे गीताप्रमाणाभिधानम्

**तं.सा.** **य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ।। १५५ ।।**

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ।। १५६ ।।**

**त.क.**— अत्रैव गीतां प्रमाणयति— **इदमिति ।।**प्रियकृत्तम इति तमशब्देनातितुष्टिदत्वं सूचयति ।। ।। १५५,१५६ ।।

**अ.सं.**– व्याख्यानस्योत्तमत्वे हेतुत्वेनोक्तं फलाधिक्यं गीतावाक्येन द्रढयति ।

**गुह्यं** रहस्यशास्त्रम् । **अभिधास्यति** व्याख्यास्यति । **तस्मात्** व्याख्यातुः **कश्चित्** अन्यः **प्रियकृत्तमः** अतिशयेन प्रियकारी । **तस्मात्** व्याख्यातुः अन्यः **प्रियतरः** अतिशयेन प्रीतिविषयः। अत्र कृष्णेन व्याख्यातुः 'मामेवेष्यति' इति स्वप्राप्तिरूपफलाभिधानात् 'प्रियकृत्तम' इत्यनेन व्याख्यातुः अयं तस्य प्रियकारित्वोक्तेश्च 'प्रियतर' इत्यनेन तस्यातिशयेन स्वप्रीतिविषयत्वोक्तेश्च व्याख्यानस्योत्तमत्वं सिद्ध्यतीति ज्ञेयम् ।। १५५५,१५६ ।।

**गु.दी.**— उक्तमर्थं गीतावाक्येन द्रढयति— **य इममिति ।।** अत्र व्याख्यातुः स्वप्राप्तिरूपफलाभिधानात्कृष्णेन स्वस्यातिशयप्रियकृत्त्वप्रियत्वोक्तेश्च उक्तार्थोऽवसीयते ।। १५५,१५६ ।।

**मङ्गाली**— व्याख्यानस्योत्तमत्वे हेतुत्वेनोक्तं गीतावाक्येन फलाधिक्यं द्रढयति— **य इति ।। गुह्यं** रहस्यशास्त्रं । **अभिधास्यति** व्याख्यास्यति । **तस्मात्** व्याख्यातुः अन्यः **प्रियतरः** अतिशयेन प्रीतिविषयः । अत्र कृष्णेन व्याख्यातुः 'मामेवैष्यति' इति स्वप्राप्तिरूपफलाभिधानात् 'प्रियकृत्तमः' इत्यनेन व्याख्यातुरत्यन्तं स्वप्रियकारित्वोक्तेश्च । 'प्रियतरः' इत्यनेन तस्यातिशयेन स्वप्रीतिविषयत्वोक्तेश्च व्याख्यानस्योत्तमत्वं सिद्ध्यतीति ज्ञेयम् ।। १५५,१५६ ।।

शौचासनयोः सर्वधर्माङ्गत्वात् पृथक् धर्मकारणत्वं नास्ति, प्राणायाममारभ्य ध्यानपर्यन्तं संख्यागणनपुरस्सरं आधिक्यकथनम् च

**तं.सा.** **शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् ।**
**प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ।। १५७ ।।**

**स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः ।**
**पूजा तत्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः ।। १५८ ।।**

**त.क.**— शौचासनयोः सर्वावरत्वमुक्तम् । तदुपपादयति— **शौचासन इति ।। अङ्गमात्रं** इतिकर्तव्यतामात्रम् । सर्वकर्मणां साधारणाङ्गम् । **न पृथग्धर्मकारणं** स्वातन्त्र्येण धर्मकारणं न । अतः सर्वावरमेवेत्यर्थः । शौचाद्यनन्तरमेवाऽसनमिति

क्रमं सूचयितुं विपरीतनिर्देशः। तत्र प्राणायामादिहरिपूजान्तं ध्यानस्याङ्गमुक्तम्। उत्तरोत्तरतोऽधिका इति चोक्तम्। तदाधिक्यमेव व्यवस्थया विवृणोति— **प्राणायामेति ॥** प्राणायामाऽपरिग्रहब्रह्मचर्याऽस्तेयसत्याहिंसातपस्तुष्टयोऽष्टौ पूर्वपूर्वस्मात् द्विगुणाधिकाः। **अतः** तुष्टिपर्यन्तात् साधनात् **स्वाध्यायः** विष्णुस्मृतिरहिताधीतिरूपः कोटिगुणाधिको भवति। **ततः** स्वाध्यायात् प्रतिमादौ हरेः पूजा अनन्तगुणाधिका भवति। तत्साध्यं ध्यानं तु तत्त्रिगुणाधिकम्। तस्माच्छास्त्रावमर्शनं शतगुणमधिकम्। तस्माद्व्याख्या शतगुणाधिका इति साधनानां क्रमः स्मृतः। प्रमाणैरिति शेषः। तेन मन्त्रार्थावमर्शनमन्त्रव्याख्यानयोरेवमत्युत्कृष्टत्वान्मन्त्रोद्धारोऽप्यत्यावश्यक इति सूचितम् ॥ १५७,१५८ ॥

**अ.सं.—** आसनादीनामुत्तरोत्तराधिक्यकथनेन प्रतीयमानशौचासनयोः प्राणायामादिवत् पृथग्धर्मकारणत्वं वारयति— **शौचेति ॥** शौचासनयोः सर्वधर्माङ्गत्वात्प्रधानफलेनैव फलवत्त्वम्। न स्वातन्त्र्येण फलजनकत्वमिति भावः। प्राणायामादीनामुक्ताधिक्यं विशदयति— **प्राणायामादय इति ॥** प्राणायामापरिग्रहाहिंसासत्यास्तेयब्रह्मचर्यतपस्तुष्टय इत्यर्थः। एते पूर्वस्मादुत्तरोत्तरतः द्विगुणाधिका ज्ञेया इत्यर्थः ॥

**अतस्तुष्टेः** स्वाध्यायः कोटिगुणः। **ततः** स्वाध्यायात् हरेः पूजा अनन्तगुणा। **तत्त्रिगुणं** तस्याः हरिपूजायाः त्रिगुणं ध्यानम्। **धर्मक्रमः** धर्महेतूनां क्रमस्तारतम्यक्रमः। ध्यानात्स्वयमेव सततशास्त्रावमर्शनं दशगुणम्। तस्माद्व्याख्यानं शतगुणमिति ध्यानादूर्ध्वं स्वयमेव शास्त्रावमर्शनव्याख्यानयोस्तारतम्येन फलाधिक्यस्योक्तत्वादत्र ध्यानान्तमेव तारतम्यमुक्तम् ॥ १५७,१५८ ॥

**गु.दी.—** 'आसा शौचं प्राणयामः' (तं.सा.४-१५१) इत्यत्र उत्तरोत्तराधिक्यकथनेन आसाशौचयोरपि प्राणायामादिवत्पृथग्धर्मकारणत्वप्रतीतिः स्यात्। अतस्तां निवारयति— **शौचेति ॥** प्राणायामादीनां धर्मसाधनत्वमेव विशदयति— **प्राणायामादय इति ॥** प्राणायामापरिग्रहाहिंसासत्यास्तेयब्रह्मचर्यतपस्तुष्टयः पूर्वस्मात्पूर्वस्मात् **उत्तरतोत्तरतः द्विगुणाधिका** इति द्विगुणाधिका ज्ञेयाः। **अतः** तुष्टेः। **ततः** स्वाध्यायात्। हरेः पूजा अनन्तगुणा।

उत्तमाधिकारिमात्रविषयत्वादस्य वाक्यस्य न दोषः। **तत्त्रिगुणं** तस्याः पूजायाः त्रिगुणं ध्यानमिति **धर्मक्रमः** धर्मसाधनेषु तारतम्यक्रमः **स्मृतः** प्रसिद्धः। ध्यानाच्छास्त्रावमर्शनं दशगुणोत्तमं तस्मादपि व्याख्यानं शतोत्तरमिति तु प्रागेवोक्तम्। अतो ध्यानान्तरस्यैव तारतम्यमत्र कथितमिति द्रष्टव्यम् ॥ १५७,१५८ ॥

**मङ्गाली–** आसनादीनां मध्ये उत्तरोत्तराधिक्यकथनेन प्रतीयमानमासनशौचयोः प्राणायामादिवत् पृथक् धर्मकारणत्वं व्यावर्तयति– **शौचेति** ॥ शौचासनयोः सर्वधर्माङ्गत्वात् प्रधानफलेनैव फलवत्त्वं न स्वातन्त्रेण फलजनकत्वमिति भावः। प्राणायामादीनामुक्ताधिक्यं विशदयति– **प्राणायामादय इति** ॥ प्राणायामापरिग्रहाहिंसासत्यास्तेयब्रह्मचर्यस्तपस्तुष्टय इत्यर्थः। एतेषां पूर्वस्मात् पूर्वस्मादुत्तरोत्तरः द्विगुणाधिको ज्ञेयः इत्यर्थः ॥

**अतस्तुष्टेः** स्वाध्यायः कोटिगुणः। ततः स्वाध्यायात् हरेः पूजा अनन्तगुणा। **तन्त्रिगुणं** तस्या हरिपूजायाः त्रिगुणं ध्यानम्। **धर्मक्रमः** धर्महेतूनां क्रमः तारतम्यक्रमः। ध्यानात्स्वयमेव सततशास्त्रावमर्शनव्याख्यानयोस्तारतम्येन फलाधिक्यस्योक्तत्वात् अत्र ध्यानान्तमेव तारतम्यमुक्तम् ॥ १५७,१५८ ॥

वीरपद्मस्वस्तिकासनानां लक्षणाभिधानम्, रेचकादिप्राणायामकालकथनं च

**तं.सा.** **ऊर्वोरधः पदोरूर्ध्वं विभागेनेति च त्रिधा।**
**आसनत्रयमुद्दिष्टं मन्त्रस्मरणपूर्वकम्** ॥ १५९ ॥

**द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु।**
**मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते** ॥ १६० ॥

**त.क.–** 'वीरपद्मे च स्वस्तिकाद्यानि चाऽसनं'(४-१४९) इति प्रकृतासनानां लक्षणान्याह— **ऊर्वोरिति** ॥ **पदोः** पादयोः ऊर्वोरधः प्रतिष्ठितिरिति वीरासनम्। पादयोरेवोर्वोरूर्ध्वं प्रतिष्ठितिः पद्मासनम्। पादयोरेव विभागेन अधः एकपादः ऊर्वोरुपर्येकः पाद इति विभागेन प्रतिष्ठितिः स्वस्तिकासनम्। **त्रिधा**

त्रिविधमासन**मुद्दिष्टं** लक्षितं शास्त्रेष्वित्यर्थः। यद्वा, पादयोरूर्वोरधः प्रतिष्ठितिः स्वस्तिकासनमित्यादि व्युत्क्रमेण योज्यम्। तुशब्देनाऽसनान्तराणामपि लक्षणानि, लक्षणान्तराणि च सन्तीति सूचयति। तेन न पूर्वोदाहृतवचन-विरोधः। एवं यमनियमासनप्राणयामाख्यचत्वार्यङ्गान्युद्दिश्य, यमनियमासनानि सप्रपञ्चं निरूप्य प्राणायामोऽपि त्रिधा विभक्तः। 'रेचकः पूरकश्चैव कुम्भकश्च त्रिधा मतः'(४-१४९) इति त्रिविधोऽपि प्राणायामः विष्णुस्मरणपूर्वकश्चेत् ध्यानमेवेति चोक्तम्। तत्र कियत्कालपर्यन्तं कर्तव्यमित्यत अह— **मन्त्रस्मरणेति ।।** वर्णमालास्मरणपूर्वकं चेत्यर्थः। मन्त्राणां षोडशादिकालमारभ्य द्विगुणोत्तरं रेचकादित्रयं कर्तव्यमिति सम्बन्धः। षोडशमात्राकालपर्यन्तं दक्षिणनासापुटेन देहस्थवायोः बहिर्निर्यापनं रेचकम्। द्वात्रिंशन्मात्राकालपर्यन्तं वहिःस्थवायोर्वामनासापुटेनान्तर्ग्रहणं पूरकम्। चतुःषष्ठिमात्राकालपर्यन्तं वहिर्गृहीतस्य वायोरन्तःस्थवायोश्चान्तरेव स्थापनं कुम्भकमिति विवेक्तव्यम्। मात्राकाललक्षणमाह— **ह्रस्वेति ।। ह्रस्ववर्णस्य** अकारस्य कालः तदुच्चारणकाल इति यावत्, मात्रेति शब्देन कथ्यत इति सम्बन्धः ।। १५९,१६० ।।

**अ.सं.–** वीरपद्मे च स्वतिकाद्यासनमित्युक्तम्। वीरपद्मस्वस्तिकाद्यासनत्रयस्य लक्षणमाह– **ऊर्वोरिति ।। पदोः** पादयोः ऊर्वोरधोऽवस्थानं स्वस्तिकासनम्। पादयोरूर्ध्वमुपर्यवस्थानं पद्मासनम्। एकपादस्य ऊरोरुपरि अन्यस्य पादस्योरोरधः इत्येवं विभागेनावस्थानं वीरासनमिति विवेकः। तदुक्तं पञ्चरात्रे–

ऊर्वोरधस्तात्सम्यक् च कृत्वा पादतले शुभे।
ऋजुकायो विशेद्योगी स्वस्तिचक्रं प्रचक्षते ।।

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले शुभे।
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ।।

एकपादमधः कृत्वा विन्यस्योरौ तथेतरम्।
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ।। इति।

आद्यशब्देन गृहीतानामासनानां लक्षणान्युक्त्वा त्रयाणामेव लक्षणकथनं तु

लोके बहुलमुपलम्भात् । आसनेष्वत्युत्तमत्वाचेति ज्ञेयम् । तदुक्तं याज्ञल्केन– 'आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम्' इति। तच्चासनं पृथिव्यादि-मन्त्रस्मरणपूर्वकं कार्यम् ॥

रेचकादिप्राणायामे कालावधिमाह– **द्विगुणोत्तरमिति ॥ द्विगुणोत्तरं** उत्तरोत्तरं पूर्वस्मात्पूर्वस्मात् द्विगुणाधिकं यथा भवति तथा। रेचकादि कर्तव्यमित्यर्थः। **आदि**शब्देन कुम्भकपूरकौ ज्ञेयौ। तत्रापि इतिकर्तव्यताप्रतिपादकत्वेन मन्त्रस्मरणपूर्वकमित्येतत्सम्बध्यते। मन्त्रोच्चारणस्य श्वासनिरोधसमयेऽशक्यत्वा-न्मन्त्रस्मरणपूर्वकमित्युक्तम्। ननु रेचकस्य कियत्कालमनुष्ठानं रेचकपरिणाम-मारभ्य पूर्वस्मात्पूर्वस्मादुत्तरोत्तरस्य द्विगुणितत्वं ज्ञेयमित्यतस्तत्परिमाणमाह– **षोडशेति ॥** मात्राणां षोडशादिक्रमेण द्विगुणोत्तरं रेचकादि कर्तव्यमिति सम्बन्धः। **आदिपदेन** द्वात्रिंशत् चतुःषष्ठिसङ्ख्ययोः परिग्रहः । उक्तं च गौतमीतन्त्रे–

रेचयेद्दक्षिणे विद्वान् मात्राषोडशकेन च ।
द्वात्रिंशन्मात्रयाऽऽपूर्य चतुःषष्ठ्या च धारयेत् ॥ इति ।

केयं मात्रेत्यत आह– **ह्रस्वेति ॥** ह्रस्वाकाराद्युच्चारणकाल इति भावः। मात्राकालज्ञापकमुक्तं वायुपुराणे–

जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलीस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता ॥ इति ॥ १५९-१६० ॥

**गु.दी.**– मृदादिनाऽङ्गशोधनं शौचमिति प्रसिद्धत्वात् तल्लक्षणमनुक्त्वा 'वीरपद्मे' (तं.सा.४-१४९) इत्युक्तासनत्रयलक्षणानि व्युत्क्रमेणाह— **ऊर्वोरिति ॥** ऊर्वोरधोभागे **पदोः** पादयोरवस्थानं स्वस्तिकासनम्। तथा ऊर्वोरूर्ध्वभागे पादयोरवस्थानं पद्मासनम्। विभागेन एकस्य पदस्योर्वोरुपरि अन्यस्य अध इत्येवं विभागेनावस्थानं वीरासनम्। तथा चोक्तं पञ्चरात्रे—

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे ।
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥

ऊर्वोरधस्तात् सम्यक् च कृत्वा पादतले उभे ।
ऋजुकायो विशेद्योगी स्वस्तिकं तस्य चक्षते ।।

एकपादमधः कृत्वा विन्यस्योरौ तथेतरे ।
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ।। इति ।।

इदानीं रेचकादिलक्षणमाह— **मन्त्रेति ।।** मन्त्रस्मरणपूर्वकं तद्वाच्यदेवतास्मरणपूर्वकं वा । मात्राणां षोडशादिक्रमेण द्विगुणोत्तरं यथा भवति तथा रेचकादि कर्तव्यमित्यर्थः । केयं मात्रेत्यत आह— **ह्रस्वेति ।।** अ इत्यादिलघुवर्णोच्चारणस्य यः कालः स मात्रेत्यर्थः ।। १५९-१६० ।।

**मङ्गाली–** 'वीरपद्मे च स्वस्तिकाद्यानि चासनं'(४-१४९) इत्युक्तवीरपद्मस्वस्तिकाख्यासनत्रयस्य लक्षणमाह– **ऊर्वोरिति ।। पदोः** पादयोः ऊर्वोरधोऽवस्थानं स्वस्तिकासनम् । पादयो ऊर्वोरूर्ध्वं उपरि स्थापनं पद्मासनम् । एकपादस्य ऊरोरुपरि अन्यस्य पादस्य ऊरोरध इत्येवं विभागेनावस्थानं वीरासनमिति विवेकः । तदुक्तं पञ्चरात्रे–

ऊर्वोरधस्तात्सम्यक् च कृत्वा पादतले उभे ।
ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ।।

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले शुभे ।
पद्मासनमिति प्रोक्तं योगिनां हृदयंगमम् ।।

एकपादमधः कृत्वा विन्यस्योरौ तथोत्तरम् ।
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ।। इति ।

'आसनान्युत्तमान्यष्टौ त्रयं तेषूत्तमोत्तमम्' इति याज्ञवल्क्यवचनात् त्रयाणामेवोत्तमत्वात् प्रासङ्गादाद्यब्दगृहीतासनान्तराणां लक्षणानुक्तिरिति ज्ञेयम् । तच्चासनं 'पृथिवी' इत्यादि मन्त्रस्मरणपूर्वकं कार्यम् ।।

रेचकादिप्राणायामे कालावधिमाह– **द्विगुणोत्तरमिति ।। द्विगुणोत्तरं** उत्तरोत्तरं पूर्वस्मात् पूर्वस्मात् द्विगुणाधिकं यथा भवति तथा रेचकादि कर्तव्यमित्यर्थः । अत्रादिशब्देन पूरककुम्भकौ ज्ञेयौ । तत्रापीतिकर्तव्यताप्रतिपादकत्वेन मन्त्रस्मरण-

पूर्वकमित्येतत् सम्बध्यते। मन्त्रोच्चारणस्य श्वासनिरोधसमयेऽशक्यत्वान्मन्त्रस्मरणपूर्वकमित्युक्तम्। ननु रेचकस्य कियत्कालमनुष्ठानं, येन रेचकपरिमाणरभ्य पूर्वपूर्वस्मात् उत्तरोत्तरस्य द्विगुणितत्वं ज्ञेयमित्यतस्तत्परिमाणमाह– **षोडशेति ॥** मात्राणां षोडशादिक्रमेण द्विगुणोत्तररेचकादि कर्तव्यमिति सम्बन्धः। आदिपदेन द्वात्रिंशत्चतुष्षष्ठिसङ्ख्ययोः परिग्रहः। उक्तं च गौतमीतन्त्रे–

रेचयेद्दक्षिणे विद्वान् मात्राषोडशकेन च।
द्वात्रिंशन्मात्रया पूर्य चतुःषष्ठया च धारयेत् ॥ इति।

केयं मात्रेत्यत आह– **ह्रस्वेति ॥** ह्रस्वाकाराद्युच्चारणकाल इति भावः। मात्राकालज्ञापकमुक्तं वायुपुराणे–

जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम्।
अङ्गुलीस्फोटनं कुर्यात् सा मात्रेति प्रकीर्तिता ॥ इति ॥ १५९-१६० ॥

क्रमेण प्राणायामाभ्यासः कार्यः, रेचकादि करणप्रकारश्च

**तं.सा. क्रमेणैवाभ्यसेन्मात्रां वृद्धिमेकाग्रधीः पुनः।**
**रेचयित्वा दक्षिणतः पूरयित्वा च वामतः ॥ १६१ ॥**
**कुम्भकं च सुषुम्नायां विष्णुं वायुं च संस्मरेत्।**

**त.क.–** षोडशमात्राकालपर्यन्तं रेचनं, द्वात्रिंशन्मात्राकालपर्यन्तं पूरणं चेत्यादि कर्तुमशक्यमित्याशङ्क्य, सत्यमादावेवमशक्यं, तथाप्येकमात्रामवधीकृत्य एकमात्राकालेन रेचनं, द्विमात्राकालेन पूरणं, चतुर्मात्राकालेन कुम्भकमेकस्मिन् दिने कृत्वा दिनान्तरे द्विमात्राकालेन रेचयित्वा, चतुर्मात्राकालेन पूरयित्वा अष्टमात्राकालेन कुम्भयेत्। एवं दिनान्तरे द्विगुणाधिक्येनाभ्यासे सुशक्यमेवेत्याह— **क्रमेणैवेति ॥** नैतावता अलमित्याह— **सुषुम्नायामिति ॥** विष्णुं, वायुं, सुषुम्नानाडीं च संस्मरेदित्यर्थः ॥ १६१ ॥

**अ.सं.–** षोडशादिक्रमोऽभ्यासेन साधनीय इत्याह– **क्रमेणेति ॥** प्रथममेव षोडशादिक्रमेण कर्तुमशक्तौ **एकाग्रधीः** एकाग्रचित्तः सन् **क्रमेणैव** द्व्यादिक्रमेण

षोडशादिमात्रापर्यन्तं वर्धयेत् । अभ्यासे सति ततोऽप्यधिकं मात्रकालानां वृद्धिं संपादयेदित्यर्थः । तदुक्तं तिलके– 'मात्रावृद्धिः क्रमेणैव सम्यक् द्वादश षोडश' इति । रेचनादिकं कथं कार्यमित्यत आह– **रेचयित्वेति ।।** दक्षिणतः वामतः इत्युभयत्रापि नासापुटादिति शेषः । सुषम्नायां कुम्भकः वायुनिरोधश्च कार्य इत्यर्थः । उक्तं च नारदीये–

दक्षेन रेचयेद्वायुं रेचनाद्रेचकं स्मृतम् ।
वामेन पूरयेद्वायुं पूरणात्पूरकः स्मृतः ।।

स्वदेहे पूरितं वायुं निगृह्य न विमश्चति ।
सम्पूर्णकुम्भवत्तिष्ठेत् कुम्भकः स हि विश्रुतः ।। इति ।

कुम्भके इतिकर्तव्यताविशेषमाह– **विष्णुमिति ।।** अयं भावः । षोडषह्रस्वाकारोच्चारणकालपर्यन्तं मन्त्रस्मरणपूर्वकं दक्षिणनासारन्ध्रेण श्वासवायोर्बहिर्निःसारणाख्यं रेचनं कुर्यात्। द्वात्रिंशन्मात्रोच्चारणकालपर्यन्तं पूर्ववत् वामनासारन्ध्रेण श्वासस्य अन्तःप्रवेशनाख्यपूरणं कुर्यात् । ततः चतुःषष्ठिमात्रापर्यन्तं सुषुम्नायां विष्णुवायुस्मरणपूर्वकं नासापुटद्वयमङ्गुलीभिर्बध्वा श्वासवायुनिरोधरूपं कुम्भकं कुर्यादिति । अपरिग्रहादीना यमनियमादिप्रभेदानां शब्दार्थज्ञानेनैव लक्षणज्ञानसम्भवात् न तल्लक्षणमुक्तम् ।। १६१ ।।

**गु.दी.–** षोडशादिक्रमः अनभ्यासदशायामिति भावेनाह– **क्रमेणेति ।। एकाग्रधीः** स्वनासाग्रमवलोकमानः क्रमेणैव मात्रावृद्धिमभ्यसेत् ।

इदमुक्तं भवति । एकलघ्वक्षरोच्चारणकालो मात्रा । तादृशषोडशमात्राकालं रेचकः । द्वात्रिंशन्मात्राकालपर्यन्तं पूरकः । चतुःषष्ठिमात्राकालपर्यन्तं कुम्भकोऽनुष्ठेयः । तथा द्वात्रिंशन्मात्राकालं चतुःषष्ठिमात्राकालमष्टाविंशोत्तरशतमात्राकालं रेचकादित्रयमित्यादिक्रमेण मात्रावृद्धिमभ्यसेदिति ।।

एवं प्राणायामे कालेयत्तामभिधायेदानीं रेचकपूरककुम्भकानां स्थानं वदन् प्राणायामसमये सुषुम्नानाडीस्थयोः विष्णुवाय्वोः स्मृतिमपि निरूपयति— **रेचयित्वेति ।। दक्षिणतः** दक्षिणघ्राणरन्ध्रात् रेचयित्वा स्वदेहस्थं वायुं

बहिर्विसृज्य **वामतः** वामघ्राणरन्ध्रात् वायुं देहान्तः पूरयित्वा पूर्णकुम्भवत् संस्थानरूपकुंभकश्च कर्तव्य इति शेषः। यथाह याज्ञवल्क्यः—

रेचकः सृजते वायुं पूरकः सन्निरोधकः।
समेन सुस्थितिर्या सा कुम्भकः परिगीयते ॥ इति।

वायुपुराणे च–

नासिकापुटमङ्गुल्याऽऽपीड्यैकेन परेण तु।
औदरं रेचयेद्वायुं यत् ततो रेचकः स्मृतः ॥

बाह्येन मरुता देहं दृतिवत्परिपूरयेत्।
नासापुटेनापरेण पूरणात्पूरकं मतम् ॥

न मुञ्चति न गृह्णाति वायुमन्तर्बहिस्स्थितम्।
सम्पूर्णकुम्भवत्तिष्ठेदचलः स तु कुम्भकः ॥ इति।

अत्र छत्रिन्यायेन कुम्भकसाहचर्येण कुम्भकार्थत्वेन वा इतरयोः प्राणायामत्वोपचारः। 'रेचकपूरकयोः कुम्भकार्थत्त्वेन पृथक् प्राणायामत्वाभावाच्च' इति (गी.भा.टी.४-२९) गीताभाष्यटीकोक्तेः। अत्रापि रेचयित्वा पूरयित्वेति रेचकपूरकयोः कुम्भकार्थत्वं स्फुटमभिहितम्। अनेन त्रयाणामपि प्राणायामत्वं मूलाभिप्रेतमिति वदन्तो निरस्ताः। अपरिग्रहादीनां सुप्रसिद्धत्वात् तल्लक्षणानामत्रानुक्तिरिति द्रष्टव्यम् ॥ १६१ ॥

**मङ्गली–** षोडशादिक्रम अभ्यासेन साधनीय इत्याह– **क्रमेणेति** ॥ प्रथममेव षोडशादिक्रमेण कर्त्तुमशक्तौ एकाग्रचित्तः सन् **क्रमेण** द्व्यादिक्रमेण षोडशादिमात्रापर्यन्तं वर्धयेत्। रेचनादिकं कथं कार्यमित्यत आह– **रेचयित्वेति** ॥ **दक्षिणतः वामतः** इत्युभयत्रापि नासापुटादिति शेषः। सुषुम्नायां कुम्भकः वायुनिरोधश्च कार्य इत्यर्थः। उक्तं च नारदीये–

दक्षिणे रेचयेद्वायुं रेचनाद्रेचकः स्मृतः।
वामेन पूरयेद्वायुं पूरणात्पूरकः स्मृतः ॥

स्वदेहे पूरितं वायुं निगृह्य न विमुंचति ।
संपूर्णकुम्भवत्तिष्ठेत्कुम्भकः स हि विश्रुतः ।। इति ।

कुम्भके इतिकर्तव्यताविशेषमाह– **विष्णुमिति ।।** अपरिग्रहादीनां शब्दार्थ-ज्ञानेनैव लक्षणज्ञानसम्भवात् न तल्लक्षणमुक्तम् ।। १६१ ।।

सप्रभेदं सुषुम्नानाडीनिरूपणम्

त.सा. **मूलाधारं समारभ्य त्वामूर्धानमृजुःस्थिता ।। १६२ ।।**
**मध्ये सुषुम्ना विज्ञेया वज्रिकाऽऽर्या प्रकाशिका(ऽवभासिनी)।**
**वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ।। १६३ ।।**

**त.क.—** सुषुम्नास्मरणस्य तज्ज्ञानं विनाऽसम्भवात् तदवस्थितिप्रकारं सप्रपञ्चं निरूपयति— **मूलाधारमिति ।।** मूलाधारं कन्दाख्यमारभ्योर्ध्वपर्यन्तं देहमध्ये स्थिता ऋजुभूता नाडी सुषुम्नेति विज्ञेया। 'कन्दस्थानं मनुष्याणां देहमध्यं नवांगुलम्' इत्युक्तेः। सैव सुषुम्ना वज्रिका, आर्या, प्रकाशिनी, वैद्युता ब्रह्मनाडीति पञ्चधा तिष्ठति ।। ।। १६२-१६३ ।।

**अ.सं.–** केयं सुषुम्ना कथंभूता कुत्र तिष्ठतीत्यत आह– **मूलाधारमिति ।। मध्ये** शरीरमध्ये **मूलाधारं** मूलस्य वृषणस्याधारमधोभागं समारभ्य **आमूर्धानं** शिरःपर्यन्तं **ऋजुस्थिता** ऋजुतया अवक्रतया स्थिता नाडी सुषुम्ना विज्ञेया। तदुक्तम्–

गुदध्वजान्तरे कन्दमुत्सेधाद्व्यङ्गुलं विदुः ।
तस्माद्द्विगुणविस्तारं वृत्तरूपेण शोभितम् ।
नाड्यस्तत्र समुद्भूताः................. ।। इति ।

गुदध्वजान्तरे गुदं अपानद्वारं ध्वजः वृषणः तयोरन्तरे अन्तराळे व्यङ्गुलदीर्घं चतुरङ्गुलविस्तारं वर्तुलाकारं कन्दमस्ति । तत्र नाड्यो उद्भूता इति प्रमाणार्थः ।

तत्प्रभेदमाह– **वज्रिकेति ।।** सैव एका सुषुम्ना नाडी वज्रिका आर्या प्रकाशिनी वैद्युता ब्रह्मनाडीति **पञ्चप्रभेदिनी** पञ्चभेदयुक्ता ।। १६२-१६३ ।।

**गु.दी.–** केयं सुषुम्नेत्यतस्तल्लक्षणं तद्विभागान् तदन्तर्गतभगवद्रूपाणि तेषामधिष्ठानभूतपद्मानि च सप्रपञ्चं निरूपयति— **मूलाधारमित्यादिना ।।** **मूलाधारो** वृषणाधोदेशः । गुदप्रदेशं समारभ्य **आमूर्धानं** शिरःपर्यन्तं **तु** विशेषेण **ऋजुस्थिता** ऋजुतया स्थिता । **मध्ये** इडापिङ्गलेत्यादिनाडीमध्ये । सुषुम्ना 'ऋजुः स्थिता' इति पाठे तनुशब्दवदुकारान्तस्त्रीलिङ्गोऽयमृजुशब्दः । **ऋजुः** ऋज्वी अवक्रा । **मध्ये** देहमध्ये स्थितेत्यन्वयः । **सैव** सुषुम्नैव **पञ्चप्रभेदिनी** वज्रिकादिप्रभेदसंयुतेत्यर्थः ।। १६२-१६३ ।।

**मङ्गाली–** केयं सुषुम्ना? कथं भूता ? कुत्र तिष्ठतीत्यत आह– **मूलाधारमिति ।। मध्ये** शरीरमध्ये । **मूलाधारं** मूलस्य वृषणस्याधारम् । अधोभागं समारभ्य **आमूर्धानं** शिरःपर्यन्तं **ऋजुस्थिता** ऋजुतया अवक्रतया स्थिता नाडी सुषुम्ना विज्ञेया । तत्प्रभेदमाह– **वज्रिकेति ।। सैव** एकापि सुषुम्नानाडी वज्रिका आर्या प्रकाशिनी वैद्युता ब्रह्मनाडीति **पञ्चप्रभेदिनी** पञ्चसंज्ञायुक्ता ।। १६२-१६३ ।।

' सुषुम्नानाडीप्रभेदानां स्थानकथनम्, तेषां वर्णकथनम्, नाडीषु ध्येयरूपकथनं च

**तं.सा.** **पृष्ठवामाग्रदक्षान्तर्भेदास्तेषु(भेदत्ते च) क्रमेण तु ।**
**हरिन्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ।।**
**प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ।। १६४ ।।**

**त.क.–** तदवस्थितिप्रकारमेव प्रदेशोक्त्या विवृणोति— **पृष्ठेति ।।** उद्देशक्रमानुसारेण मध्यस्थितायाः ब्रह्मनाड्याः पृष्ठभागे वज्रिका, वामपार्श्वे आर्या, पुरतः प्रकाशिनी, दक्षभागे वैद्युता । ब्रह्मनाडी सर्वान्तः तिष्ठतीत्यर्थः । विष्णुं वायुं स्मरेदित्युक्तम् । तत्र रूपविशेषान् वर्णविशेषोक्तिपूर्वकमाह— **हरिदिति ।।** हरिद्वर्णः प्रद्युम्नः वज्रिकायाम् । नीलवर्णोऽनिरुद्धः आर्यायाम् । सितवर्णः सङ्कर्षणः प्रकाशिन्याम् । पिङ्गलवर्णो वासुदेवः वैद्युतायाम् । लोहितवर्णो नारायणः ब्रह्मनाड्याम् । एवं प्रद्युम्नादिस्वरूपेण पञ्चरूपः केशवः पञ्चधा भिन्नायां **अत्र** सुषुम्नानाड्यां तत्तदभीष्टप्राप्तिमिच्छता ध्येय इत्यर्थः ।। १६४ ।।

**अ.सं.**– ननु एकस्या एव पञ्चत्वं किंरूपेणेत्यनोऽवयवभेदादित्याह– **पृष्ठेति ।।** एकस्या अपि सुषुम्नामायाः पञ्चभागाः सन्ति । पृष्ठवामाग्रदक्षान्तर्भेदात्। ततश्च एकस्या अपि सुषुम्नायाः पृष्ठभागस्य वज्रिकेति संज्ञा । वामभागस्य आर्येति । पूर्वभागस्य प्रकाशिनीति । दक्षिणभागस्य वैद्युतेति । मध्यमभागस्य ब्रह्मनाडीति । एवं पृष्ठादिप्रदेशानां पञ्चत्वेन तत्तदेकदेशावच्छेदेन वाज्रिकादिशब्दैः पञ्चत्वेन व्यवह्रियत इति भावः । 'पृष्ठवामाग्रदक्षान्तर्भेदाः' इति पाठे पृष्ठवामाग्रदक्षान्तर्लक्षणभेदकयुक्ताः न तु स्वतो भिन्नाः । तेन सुषुम्नायाः पृष्ठादिपञ्चप्रदेशा एव वज्रिकादिपञ्चशब्दैः व्यवह्रियंत इत्यर्थ इत्युक्तं भवति । तेषु वज्रिकादिसंज्ञेषु पञ्चसु सुषुम्नाप्रदेशेषु ध्येयरूपाण्याह– **तेष्विति ।। सिद्धिं** इष्टप्राप्तिमभीप्सता पुरुषेण **तेषु** वज्रिकादि पञ्चप्रदेशेषु क्रमेण **प्रद्युम्नादिस्वरूपेण** प्रद्युम्नानिरूद्धवासुदेवसङ्कर्षणनारायणस्वरूपेण पञ्चरूपः केशवः ध्येयः ।।

तेषां रूपाणां क्रमेण वर्णानाह– **हरिदिति ।।** वज्रिकाख्ये पृष्ठभागे हरिद्वर्णः प्रद्युम्नः । आर्याख्ये वामपार्श्वे नीलरूपोऽनिरुद्धः । प्रकाशिनीसंज्ञे पुरोभागे शुक्लवर्णो वासुदेवः । वैद्युताभिधे दक्षिणपार्श्वे पिङ्गलवर्णः सङ्कर्षणः । ब्रह्मनाडीनाम्नि मध्यभागे रक्तरूपो नारायणोऽधितिष्ठतीति सुषुम्नापञ्चप्रदेशेषु पञ्चरूपं केशवं ध्यायेदिति भावः ।। १६४ ।।

**गु.दी.**— ते च प्रभेदाः कुत्र तिष्ठन्तीत्यत आह— **पृष्ठेति ।।** प्रकृतत्वानुसन्धानार्थस्तुशब्दः । तथा च सर्वेषां पृष्ठे वज्रिका । वामभागे आर्या । अग्रभागे प्रकाशिनी । दक्षिणभागे वैद्युता । अन्ते मध्ये ब्रह्मनाड्यपरनाम्नी सुषुम्नैवास्तीति क्रमो ज्ञेयः । यदर्थमिदं नाडीप्रभेदकथनं तदिदानीमाह— **हरिदिति ।। अत्र** पञ्चप्रभेदयुक्तनाड्याम् । प्रद्युम्नानिरुद्धवासुदेवसङ्कर्षणनारायणरूपेण **ध्येयः** चिन्त्य इत्यर्थः ।

तत्रायं विवेकः । पृष्ठभागस्थवज्रिकायां हरिद्वर्णः प्रद्युम्नोऽस्ति । वामभागे स्थितायामिडेत्यपरनामिकायामार्यानाड्यां नीलरूपोऽनिरुद्धस्तिष्ठति । पुरःस्थित-नान्दिनीत्यपरनामिकायां प्रकाशिन्यां शुक्लवर्णो वासुदेवो वर्तते ।

दक्षभागस्थपिङ्गलापरनामकवैद्युतायां पिङ्गलवर्णः सङ्कर्षणोऽस्ति। मध्ये ब्रह्मनाड्यां रक्तवर्णो नारायणोऽधितिष्ठतीति। तदुक्तं छान्दोग्यभाष्ये—

नारायणाख्यं सौषुम्नमध्यस्थं रक्तवर्णकम्।
शुक्लं तु वासुदेवाख्यं नान्दिन्यामग्रतः स्थितम्॥

पिङ्गलायां पिङ्गलं च रूपं सङ्कर्षणाभिधम्।
पश्चिमे वज्रिकायां तु पीतं प्रद्युम्ननामकम्॥
इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम्॥ इति (छा.भा.८-६-६)।

शुक्लं तु वासुदेवाख्यमनिरुद्धं सुनीलकम्।
साङ्कर्षणं पिङ्गलं च प्राद्युम्नं हरितं तथा।
नारायणं लौहितं स्यात् पञ्चरूपाण्यजे हरौ॥ इति बृहद्भाष्ये च
(बृ.भा. ४.शारीरब्राह्मणम्)॥ १६४॥

**मङ्गाली–** नन्वेकस्या एव पञ्चत्वं किं रूपेणेत्यतोऽवयवभेदादित्याह– **पृष्ठेति॥** एकस्या अपि सुषुम्नायाः पञ्चभागाः सन्ति पृष्ठवामाग्रदक्षान्तर्भेदात्। ततश्च एकस्या अपि सुषुम्नायाः पृष्ठभागस्य वज्रिकेति संज्ञा। वामगस्यार्येति। पुरोभागस्य प्रकाशिनीति। दक्षिणभागस्य वैद्युतेति। मध्यभागस्य ब्रह्मनाडीति। 'पृष्ठवामाग्रदक्षान्तर्भेदाः' इति पाठे पृष्ठवामाग्रदक्षान्तर्लक्षणभेदकयुक्ताः न तु स्वतो भिन्नाः। तेन सुषुम्नायाः पञ्च प्रदेशा एव वज्रिकादिपञ्चशब्दैर्व्यवह्रीयन्त इत्युक्तं भवति। तेषु वज्रिकादिसंज्ञेषु पञ्चसु सुषुम्नाप्रदेशेषु ध्येयरूपाण्याह– **तेष्विति॥ सिद्धिं** इष्टप्राप्तिमभीप्सता पुरुषेण **तेषु** वज्रिकादिपञ्चप्रदेशेषु **क्रमेण प्रद्युम्नादिरूपेण** प्रद्युम्नानिरुद्धवासुदेवसङ्कर्षणनारायणस्वरूपेण पञ्चरूपः केशवः ध्येयः॥

तेषां रूपाणां क्रमेण वर्णानाह– **हरिदिति॥** वज्रिकाख्ये पृष्ठभागे हरिद्वर्णः प्रद्युम्नः। इडेत्यपरनाम्नि आर्याख्ये वामपार्श्वे नीलरूपोऽनिरुद्धः। नन्दिनीत्यपरनामके प्रकाशिनीसंज्ञके पुरोभागे शुक्लवर्णो वासुदेवः। वैद्युताभिधे पिङ्गलापरनामके दक्षिणपार्श्वे पिङ्गलवर्णः सङ्कर्षणः। ब्रह्मनाडीनाम्नि मध्यभागे

रक्तरूपो नारायणोऽधितिष्ठतीति सुषुम्नापञ्चप्रदेशेषु पञ्चरूपं केशवं ध्यायेदिति भावः । तदुक्तं छान्दोग्योपनिषद्भाष्ये–

नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् ।
शुक्लं तु वासुदेवाख्यं नादिन्यामग्रतः स्थितम् ।।

पिङ्गलायां विपङ्गलं च रूपं सङ्कर्षणाभिधम् ।
पश्चिमे वज्रिकायां तु पीतं प्रद्युम्नानामकम् ।।
इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् ।। इति ।। १६४ ।।

(छा.भा.८-६-६)

नाडीस्थानां पद्मानां स्थानवर्णकथनपुरस्सरं पद्मेषु ध्येयरूपकथनम्

**तं.सा. मूले च नाभौ हृदयेन्द्रयोनिभ्रूमध्यमूर्ध्नि(र्ध)द्विषडन्तकेषु ।**
**चतुःषडष्टद्विचतुर्द्विषट्कदलेषु पद्मेषु सितारुणेषु ।। १६५ ।।**

**पञ्चात्मकोऽसौ भगवान् सदैव ध्येयो हृदन्तान्यरुणानि तानि ।**
**त्रिकोणवह्नौ च षडश्रवायौ द्विस्तावदत्ररविवृत्तशशि(स्थ)त्रिवह्नौ**
**।। १६६ ।।**

**वृत्ते विधावपि विचिन्त्यमिदं दशार्ध-**
**रूपं सितं तदखिलं हृदयात् परस्थम् ।। १६७ ।।**

**त.क.–** सुषुम्नाप्रभेदब्रह्मनाडीस्थस्य नारायणाख्यस्य रूपस्य प्रद्युम्नादिरूपेण पञ्चधा विभक्तस्य नाड्यामवस्थाप्रकारमधिष्ठानान्तरोक्तिपूर्वमाह— **मूले च नाभाविति श्लोकद्वयेन ।।** मूर्ध्निद्विषडन्तकमित्यलुक्समासः । मूर्धानमारभ्य द्वादशांगुलपरिमितप्रदेशः एकं स्थानमनेनोच्यते । हृदयादिशब्दैर्द्वन्द्वश्च समासः । तेन हृदयेत्यादिना स्थानचतुष्टयमुक्तम् । तेनामुना हि द्वादशान्तपर्यन्तेषु षट्सु स्थानेषु ब्रह्मनाडीस्थितेषु पञ्चात्मकोऽसौ नारायणो ध्येय इत्यर्थः । ब्रह्मनाडीदेशाः न साक्षाद्भगवतोऽधिष्ठानमित्यभिप्रेत्याधिष्ठानान्तराण्याह— **चतुरिति ।।** दलशब्दः

प्रत्येकं सम्बद्ध्यते। चत्वारि दलानि यस्येति ब्रहुव्रीहिः। ततश्चतुर्दलं च षड्दलं चाष्टदलं च द्विदलं च चतुर्दलं च द्विषट्कदलं चेति द्वन्द्वः। सितारुणेष्विति व्यवस्थायां केषाञ्चित् सितत्वं केषाञ्चिदरुणत्वमिति भावेन व्यवस्थां दर्शयति— **हृदन्तानीति ॥** हृच्छब्देन तत्स्थं पद्ममुच्यते। मूलाधारस्थितपद्ममारभ्य तानि त्रीणि पद्मान्यरुणानि। हृदयात् परस्थपद्ममारभ्य द्वादशांगुलस्थपद्मान्तं पद्मत्रयं **सितं** श्वेतवर्णमिति सम्बन्धः। पद्मान्यपि न साक्षादधिष्ठानमित्याह— **त्रिकोणेति ॥** त्रयः कोणा यस्य वह्निमण्डलाख्यस्य स तथोक्तः। षडश्राणि यस्य वायुमण्डलस्य तत्तथोक्तम्। तावदिति षट्सङ्ख्योच्यते। द्विशब्देन तस्य द्विगुणितत्वमुच्यते। द्विगुणितषट्सङ्ख्याकानि द्वादशान्यश्राणि यस्य रविमण्डलस्य तत्तथोक्तम्। शशिशब्देन शशिमण्डलमुच्यते। वृत्तश्चासौ शशी चेति विग्रहः। शशिपदमावर्तनीयम्। शशिस्थश्चासौ वह्निश्च। ततः द्विस्तावदत्ररविश्च तत्स्थ-वृत्तशशी च तत्स्थवह्निश्चेति समाहारद्वन्द्वः। हृत्पद्म एवैषां रविशशिवह्निमण्डलानां त्रयाणामवस्थानमिति समाहारद्वन्द्वः कृतः। इन्द्रयोन्यादिस्थितपद्मे मण्डलमाह— **वृत्त इति ॥** अत्रापि विधुशब्दः तन्मण्डलोपलक्षकः। इदं दशार्धं रूपं प्रद्युम्नादिरूपेण पञ्चधा विभक्तं नारायणाख्यं रूपं विशेषतः चिन्त्यमित्यर्थः ॥ १६५-१६७ ॥

**अ.सं.–** तत्र ब्रह्मनाड्यां विशेषमाह– **मूल इति ॥ मूले** गुदप्रदेशे। इन्द्रयोनिशब्देन कण्ठे पुरोभागे स्तनवदवलम्बमानः तालुनामकप्रदेश उच्यते। तदुक्तं तैत्तिरीये– 'अन्तरेण तालुके। य एषः स्तन इवावलम्बते सेन्द्रयोनिः' (तै.उ.१-१५) इति। द्वाभ्यां गुणिताः षट् द्विषट्, द्वादशेत्यर्थः। मूर्ध्नि द्विषडेव अन्तो अन्तरं यस्य तत् द्विषडन्तकम्। मूर्धानमारभ्य द्वादशाङ्गुलोपरिस्थिता-मित्यर्थः। भ्रूमध्यादुपरि द्वादशाङ्गुलव्यवहितमूर्धोपरिप्रदेश इति भावः। एके तु– मूर्ध्नि द्विषडन्तकम्। मूर्धानमारभ्य द्वादशाङ्गुलोपरिस्थानमित्यप्याहुः। तदुक्तम्–

शारीरादधिकः प्राणः द्वादशाङ्गुलमानतः।
चतुर्दशाङ्गुलं केचित् वदन्ति मुनिसत्तमाः।
द्वादशाङ्गुल एवेति वदन्ति ज्ञानिनो नराः ॥ इति वचनादिति।

हृदयमिन्द्रयोनिश्च भ्रूमध्यं च मूर्ध्निद्विषडन्तकश्चेति विग्रहः। मूलादिषट्सु स्थानेषु स्थितेषु षट्सु पद्मेषु पञ्चात्मको भगवान् ध्येय इत्यन्वयः। एके तु– षट्पद्मेषु मूलादिक्रमेण एकैकत्र एकैकमेव प्रद्युम्नादिरूपमस्ति। तत्र एकं रूपं स्थानद्वये ध्येयमित्याहुः ॥

तत्र तत्पद्मानां दलसङ्ख्यामाह– **चतुरिति** ॥ द्वन्द्वान्ते श्रूयमाणो दलशब्दः प्रत्येकं सम्बद्ध्यते। तथा चतुर्दलषड्दलाष्टदलद्विदलचतुर्दलद्विषड्दलेष्वित्यर्थः। मूले चतुर्दलं पद्मम्। नाभौ षड्दलम्। हृदयेऽष्टदलम्। इन्द्रयोनौ द्विदलम्। भ्रूमध्ये चतुर्दलम्। मूर्ध्नि द्विषडन्तके द्वादशदलं पद्मं ज्ञेयमिति भावः। पद्मानां वर्णमाह– **सितारुणेष्विति** ॥ कानि पद्मानि शुक्लवर्णानि कानि च रक्तवर्णानीत्यत आह– **हृदन्तानीति** ॥ हृदयान्तानि मूलनाभिहृदयस्थितानि त्रीणि पद्मानि अरुणानि। **हृदयात्परस्थं** हृदयस्थानापेक्षयोपरितनेन्द्रयोन्यादिस्थानत्रयगतम्। अखिलमपि तत्पद्मत्रयं सितमेवेत्यन्वयः ॥

तेषु पद्मेषु विद्यमानानि मण्डलानि तद्गतध्येयरूपाणि चाह– **त्रिकोणेति** ॥ **त्रिकोणवह्नौ** त्रिकोणवह्निमण्डले **षडस्रवायौ** षट्कोणवायुमण्डले। द्विगुणितानि तावन्ति षट्सङ्ख्यकानि अस्राणि कोणानि यस्य स तथोक्तः। स चासौ रविश्च द्विस्तावदस्ररविः द्वादशकोणसूर्यमण्डलमित्यर्थः। वृत्तश्चासौ शशी च वर्तुलमण्डलमित्यर्थः। त्र्यस्रश्चासौ वह्निश्च त्रिकोणमण्डलमित्यर्थः। एतेषां समाहारः द्विस्तावदस्ररविवृत्तशशित्रिवह्निः, तस्मिन्। **वृत्ते विधौ** वर्तुलचन्द्रमण्डलेऽपि एवं क्रमेण षट्पद्मगतषण्मण्डलेषु इदं **दशार्धरूपं** प्रद्युम्नादिपञ्चरूपं ब्रह्म **चिन्त्यं** ध्येयमित्यर्थः ॥ १६५-१६७ ॥

**गु.दी.**— अथ नाड्यां स्थानगतपद्मान्याह— **मूले चेति** ॥ **मूले** मूलाधारे गुदप्रदेशे। **नाभौ** नाभिस्थाने। हृदयं च इन्द्रयोनिश्च भ्रूमध्यं च मूर्धद्विषडन्तकं च हृदयेन्द्रयोनिभ्रूमध्यमूर्धद्विषडन्तकानि। तेष्विति विग्रहः। **इन्द्रयोनिः** अणुजिह्वा। 'य एषस्तन इवावलम्बते। सेन्द्रयोनिः' (तै.उ.१-१५) इति तैत्तिरीये प्रयोगात्। **मूर्धा** शिरोमध्यप्रदेशः। द्विगुणिताः षट् द्विषट्। द्विषडेवान्तकं स्थानं द्विषडन्तकम्। ततश्च नासाग्रमारभ्य द्विषडन्तप्रदेशे मूर्ध्नेवेत्यर्थः।

केचित्तु मूर्धोपरि द्वादशाङ्गुलव्यवहितमूर्धोपरिप्रदेशः मूर्धद्विषडन्तकशब्देन 'मूर्ध्नः द्विषडन्तकं' व्युत्पत्त्योच्यत इति व्याचक्षते। तेषां

परमात्मा चतूरूपः सर्वप्राणिशरीरगः ।
विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ।। (मा.भा.१-६)

इति तुरीयस्य शरीरेऽवस्थानप्रतिपादकमाण्डूकभाष्यविरोधः। नाडीस्थपद्मकथनावसरे तदुक्त्ययोगाच्च ।

विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।

इति तत्पूर्ववाक्यमपि नासिकामारभ्य द्वादशान्त इति व्याख्येयम्। षण्णां पद्मानां पत्राण्याह– **चतुरिति ।।** अत्र द्वन्द्वान्ते श्रूयमाणो दलशब्दः प्रत्येकमभिसम्बध्यते। मूले चतुर्दलम्। नाभौ षड्दलम्। हृदयेऽष्टदलम्। इन्द्रयोनौ द्विदलम्। भ्रूमध्ये चतुर्दलम्। नासिकाग्रमारभ्य द्वादशाङ्गुलपरिमिते शिरोमध्यप्रदेशे मूर्धद्विषडन्तकाख्ये द्विषट्कदलं द्वादशदलं पद्मम्। सामान्यतो वर्णमाह– **सितेति ।।** सितानि च अरुणानि च सितारुणानि। तेषु सितारुणेषु। सितेषु त्रिषु अरुणेषु त्रिषु पश्चात्मकः प्रद्युम्नाद्यात्मकोऽसौ भगवान् तुरीय इति षड्रूपो ध्येय इत्यर्थः। तत्र कानि सितानि कान्यसितानीत्यत आह— **हृदन्तानीति ।।** हृदन्तस्स्थानगतानि मूलनाभिहृदयस्थितानि अरुणानि। एतेन तदुपरिस्थानगतानि पद्मानि सितानीति लभ्यते ।।

इदानीं षण्णां पद्मानां स्थानभूतानि षण्मण्डलानि क्रमेणाह— **त्रिकोणेति ।।** अत्र वह्न्यादिशब्दैः तत्तन्मण्डलान्युच्यन्ते । तथा च **त्रिकोणवह्नौ** वह्निमण्डले। **द्विस्तावदस्ररविवृत्तशशित्रिवह्नौ** तावच्छब्देन पूर्वोक्तषट्सङ्ख्या परामृश्यते। तावदस्रम् षडस्रम्। द्विगुणितानि तावदस्राणि दलानि कोणानि यस्य स द्विस्तावदस्रः। द्विस्तावदस्रश्चासौ रविश्च। वृत्तश्चासौ शशी च ताभ्यां सहितः त्रिः त्रिकोणवान् वह्निश्च तेषां समाहारः तस्मिन्। **वृत्ते विधौ** वर्तुले चन्द्रमण्डले च। **इदं दशार्धरूपं** प्रद्युम्नादिरूपपञ्चकं चिन्त्यमित्यर्थः। इन्द्रयोन्यादिस्थपद्मानां वर्णमाह— **सितमिति ।।** हृदयात्परस्थं तालुभ्रूमध्यमूर्धस्थितं पद्मत्रयं **सितं** श्वेतमित्यर्थः ।।

अयमत्र समुदायार्थः। मूलाधारे त्रिकोणं वह्निमण्डलं वर्तते। तस्मिन् मण्डले चतुर्दलमरुणं पद्मम्। तयोः प्रद्युम्नो ध्येयः। नाभिप्रदेशे षट्कोणं वायुमण्डलम्। तत्र षड्दलमरुणं पद्मम्। तयोरनिरुद्धो ध्येयः। हृदये द्वादशकोणं रविमण्डलम्। तत्राष्टदलमरुणं पद्मम्। तयोर्वासुदेवो ध्येयः। तालुस्थाने वर्तुलं चन्द्रमण्डलम्। तत्र द्विदलं सितं पद्मम्। तयोः सङ्कर्षणो ध्येयः। भ्रूमध्ये त्रिकोणं वह्निमण्डलम्। तत्र चतुर्दलं सितं पद्मम्। अनयोर्नारायणो ध्येयः। मूर्ध्नि वर्तुलं विधुमण्डलम्। तत्र द्वादशदलं सितं पद्मम्। तयोस्तुरीयो ध्येय इति। यद्वा 'पञ्चात्मकोऽसौ' इत्यत्र प्रद्युम्नादिपञ्चकमेव ग्राह्यम्। ननु तर्हि षण्मण्डलेषु पद्मेषु च कथं पञ्चरूपाणां ध्यानमिति चेन्न। मूलाधारभ्रूमध्यस्थानद्वयगतत्रिकोणवह्निमण्डलगतः तद्गतचतुर्दलपद्मयोः स्थितश्च प्रद्युम्न एक एव मध्ये ध्येय इत्यङ्गीकारान्नानुपपत्तिः ॥

'द्विस्तावदस्त्ररविवृत्तशशिस्थवह्नौ' इति पाठे त्वयमर्थः। द्विगुणितानि तावन्ति षट्सङ्ख्याकानि यस्य स तथोक्तः। स चासौ रविश्च द्विस्तावदस्त्ररविः। वृत्तश्चासौ शशी च। द्विस्तावदस्त्ररवौ वृत्तशशी। तस्मिन् तिष्ठतीति शशिस्थः। स चासौ वह्निश्च। तस्मिन् द्वादशास्त्रे सूर्यमण्डले स्थितं यच्चन्द्रमण्डलं तत्रस्थिते वह्निमण्डले इत्यर्थः। उपर्युपरि स्थितमेतन्मण्डलत्रयं च हृदयस्थानगताष्टपत्रोपेतपद्मगतमिति बोध्यम्। यथोक्तं प्रणवकल्पे—

अष्टपत्रे तु हृत्पद्ममध्ये सूर्येन्दुवह्निगम्। इति। (य.प्र.क.७)

भागवते च–

'हृत्पुण्डरीकमष्टपत्रम्' इत्युक्त्वा 'कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम्' (भा.११-१४-३७) इत्यभिहितम्।

वृत्तं चन्द्रमण्डलमिन्द्रयोनिभ्रूमध्यमूर्धाख्यस्थानत्रयगतपद्मेषु पृथक् पृथक् स्थितमिति मन्तव्यम्। अस्मिन् पाठे पापपुरुषदहनाय सर्वैः पठ्यमानं हृदयेऽग्निमण्डलमनुकूलितं भवति। प्राचीनपाठे हृदये रविमण्डलप्राप्त्या तदनानुकूल्यमिति द्रष्टव्यम्।

नन्वत्र मूलाधारेण सह षट्स्थानान्यभिहितानि ।

स्वपार्ष्णिनाऽपीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः ।
नाभ्यां स्थितं हृद्यवरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ।।

ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ।
तस्माद्भ्रुवोरन्तरमुन्नयीत निरुद्धसप्ताश्वपथोऽनपेक्षः ।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिः निर्भिद्य मूर्धन् विसृजेत्परं गतः ।।

(भा.२-२-२२)

इति द्वितीयस्कन्धे द्वितीयाध्याये गुदसाहित्येन स्थानसप्तकमुक्तमिति तद्विरोधोऽस्येति चेन्न । द्वितीयस्कन्धोक्तं स्थानसप्तकं वायुधारणाविषये । न तद्ध्याने । अत एव तत्र षट्सु स्थानेषु अनिलमुन्नयेदित्युक्तम् । अत्र तु उरआख्यस्थानस्य हृदयताल्वोर्मध्यस्थस्य कण्ठकूप एवान्तर्भावमभिप्रेत्य गुदाख्यमलेन सह स्थानषट्कमभिधाय तत्र पद्मानि मण्डलानि चोक्त्वा विचिन्त्यमिदं दशार्धं रूपमिति भगवद्रूपध्यानमुक्तम् ।। १६५-१६७ ।।

**मङ्गाली–** पञ्चस्वपि नाडीषु तेषां स्थानविशेषमाह– **मूल इति ।।** यद्वा तत्र ब्रह्मनाड्यां विशेषमाह– **मूल इति ।। मूले** गुदप्रदेशे । इन्द्रयोनिशब्देन आस्यान्तः कण्ठसमप्रदेशे स्तन इव लम्बमानो मांसविशेष उच्यते । तदुक्तं तैत्तिरीये– 'य एषस्तन इवावलम्बते सेन्द्रयोनिः'(तै.उ.१-१५) इति । गलस्य पुरतः स्तन इव योऽवलम्बते स इन्द्रयोनिरित्यन्ये । द्वाभ्यां गुणिता षट् द्विषट् द्वादशेत्यर्थः । द्विषडेव अन्तो अन्तरं यस्य तत् द्विषडन्तकं । मूर्धनि द्विषडन्तकं मूर्धद्विषडन्तकम् । भ्रूमध्यादुपरि द्वादशांगुलव्यवहितमूर्धोपरिप्रदेश इति यावत् । एके तु मूर्ध्नः द्विषडन्तकम् । मूर्धानमारभ्य द्वादशाङ्गुलोपरि स्थानमित्यर्थ इत्याहुः । हृदयं च इन्द्रयोनिश्च भ्रूमध्यं च मूर्धद्विषडन्तकं चेति विग्रहः । मूलादिषट्सु स्थानेषु विद्यमानेषु षट्सु पद्मेषु पञ्चात्मको भगवान् ध्येय इत्यन्वयः । एके तु षट्पद्मेषु मूलादिक्रमेणैकैकत्र एकैकमेव प्रद्युम्नादिरूपमस्ति । तत्रैकं रूपं स्थानद्वये ज्ञेयमित्याहुः । तत्तत्पद्मानां दलसङ्ख्यामाह– **चतुरिति ।।**

द्वन्द्वान्ते श्रूयमाणो दलशब्दः प्रत्येकं सम्बध्यते। तथा च चतुर्दलषड्दलाष्टदलद्विदलचतुर्दलद्विषट्दलेष्वित्यर्थः । मूले चतुर्दलं पद्मं, नाभौ षड्दलं पद्मं, हृदयेऽष्टदलं, इन्द्रयोनौ द्विदलं, भ्रूमध्ये चतुर्दलं, मूर्ध्नि द्विषडन्तकं द्वादशदलं पद्मं ज्ञेयमिति भावः। पद्मानां वर्णमाह– **सितारुणेष्विति**॥ कानि पद्मानि शुक्लवर्णानि कानि च रक्तवर्णानीत्यत आह– **हृदन्तानीति**॥ मूलनाभिहृदयस्थितानि त्रीणि पद्मान्यरुणानि। हृदयात्परस्थं हृदयस्थानापेक्षयोपरितनेन्द्रयोन्यादिस्थानत्रयगतमखिलमपि तत् पद्मत्रयं सितमेवेत्यन्वयः। हृदंतान्यरुणानि तानीत्युक्त्या परिशेषात् तदुपरिगतस्थानस्थितानि सितानीति लभ्यत इत्यन्ये ॥

तेषु पद्मेषु विद्यमानानि मण्डलानि तद्गतध्येयरूपाणि चाह– **त्रिकोणेति**॥ **त्रिकोणवह्नौ** त्रिकोणे वह्निमण्डले। **षडस्रवायौ** षट् अस्राणि कोणानि यस्य सः षडस्रः। स चासौ वायुश्च तस्मिन् षट्कोणवायुमण्डले। द्विः द्विगुणितानि तानि तावन्ति षट्सङ्ख्याकानि अस्राणि यस्य स तथोक्तः। स चासौ रविश्च द्विस्तावदस्ररविः। द्वादशकोणं सूर्यमण्डलमित्यर्थः। वृत्तश्चासौ शशी च वर्तुलं चन्द्रमण्डलमित्यर्थः। त्रिः त्र्यस्रश्चासौ वह्निश्च त्रिवह्निः। त्रिकोणं वह्निमण्डलमित्यर्थः। एतेषां समाहारः द्विस्तावदस्ररविवृत्तशशित्रिवह्नि तस्मिन्। **वृत्ते विधावपि** वर्त्तुलचन्द्रमण्डलेऽपि एवं क्रमेण षट्पद्मगतषण्मण्डलेषु इदं **दशार्धरूपं** प्रद्युम्नादिपञ्चरूपं ब्रह्म **चिन्त्यं** ध्येयमित्यर्थः।

अन्ये तु 'द्विस्तावदस्ररविवृत्तशशिस्थवह्नौ' इति पाठमभ्युपगम्य द्विस्तावदस्रो यो रविः तादृशं यत्सूर्यमण्डलं तस्मिन् स्थितो यो वृत्तः शशिः तादृशं यच्चन्द्रमण्डलं तस्मिन् स्थितो यो वह्निः वह्निमण्डलं तस्मिन् उपर्युपरिस्थितमेतन्मण्डलत्रयं हृदयस्थानगताष्टपत्रोपेतपद्मगतमिति वर्णयन्ति। तत्र च प्रमेयेऽष्टपत्रेषु तु हृदयपद्ममध्ये सूर्येन्दुवह्निगमिति प्रणवकल्पगं वचनं तथा तृतीयस्कन्धगतं च 'हृत्पुण्डरीकमष्टपत्रं' इत्युक्त्वा 'कर्णिकाया न्यासेत्सूर्यसोमाग्नीनुत्तरोत्तरम्' इत्यभिहितमिति भागवतवचनं च प्रमाणयन्ति। वृत्ते विधावपीत्युक्तं चन्द्रमण्डलं इन्द्रयोनिभ्रूमध्यमूर्धाख्यस्थानत्रयगतपद्मेषु पृथक्

पृथक्स्थितमिति योजयन्ति । एतेषां पक्षे द्विस्तावदस्रवित्तशशित्रिवह्नाविति पाठोऽपि द्विस्तावदस्ररवौ यो वृत्तः शशी तस्मिन् स्थितो यस्त्रिवह्निस्तस्मिन्निति योजयितुं शक्यते । हृदन्तान्यरुणानि तानीत्युक्त्यैवेन्द्रयोन्यादिस्थानगतपद्मानां सितत्वस्य लाभेन सितं तदखिलं हृदयात्परस्थमिति मूलं न तदर्थं प्रवृत्तमित्यभिप्रेत्य 'हरिन्नीलः' इत्यत्रोक्तहरिदादिवर्णाः मूलनाभिहृदयेषु स्थितरूपपञ्चकस्यैव इन्द्रयोनिभ्रूमध्यमूर्धाख्यस्थानत्रये पृथक् पृथक् स्थितं रूपपञ्चकं स्वाधिष्ठानशुक्लपद्मचन्द्रमण्डलानुसारेणाखिलमपि शुक्लवर्णमेवेत्या- हेत्यवतार्य हृदयात्परस्थं इन्द्रयोन्यादिस्थानगतपद्मगतचन्द्रमण्डलस्थं अखिलं सकलमपि तत् प्रद्युम्नादिरूपपञ्चकं सितं शुक्लमिति व्याचक्षते ।

तथा चायं समुदायार्थः । मूलस्थाने वज्रिकाद्यासु पञ्चस्वपि नाडीषु चतुर्दलानि रक्तवर्णानि पद्मानि वर्तन्ते । तेषु त्रिकोणं वह्निमण्डलपञ्चकमस्ति । तत्रोक्तक्रमेण हरिदादिवर्णयुक्तानि प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवनारायणाख्यानि रूपाणि 'पृष्ठवामाग्र'इत्युक्तप्रकारेण वर्तन्ते । नाभावपि नाडीस्थरक्तवर्णषड्दलोऽपि तत्पद्मपञ्चकेस्थितषडस्रवायुमण्डलेषु रक्तवर्णानि प्रद्युम्नादिरूपाणि सन्ति । एवं हृदयगतनाडीस्थानि अष्टदलानि रक्तवर्णानि पञ्चपद्मानि तिष्ठन्ति । तत्र द्वादशास्रं रविमण्डलमेवेत्येकेषां पक्षः । अपरेषां तु तत्र उपर्युपरिस्थितेषु द्वादशास्रवृत्तत्रिकोणेषु सूर्यसोमहुताशनमण्डलेषु रक्तवर्णानि प्रद्युम्नादिरूपाणि तिष्ठन्ति । तत्र मध्यगतब्रह्मनाडिगताष्टदलपद्मे उपर्युपरिस्थिते वह्निमण्डले दिव्यं पीठम् । पीठोपरि पुनः किञ्चित् पद्मम् । तत्कर्णिकायां नारायणः स्थित इति ज्ञेयम् । अष्टपत्रे तु हृत्पद्ममध्ये सूर्येन्दुवह्निगं पीठं तन्मध्यपद्मस्थं नारायणमनामयमिति भगवत्पादैरन्यत्रोक्तत्वात् इन्द्रयोन्यां च विद्यमानेषु द्विदलशुक्लवर्णपद्मेषु स्थितवृत्तचन्द्रमण्डलपञ्चके पूर्वोक्तवर्णोपेतानि प्रद्युम्नादिरूपाणि वर्तन्त इत्येकेषां पक्षः । अन्येषां तु शुक्लवर्णानि प्रद्युम्नादिरूपाणीति पक्षः । भ्रूमध्यगतचतुर्दलपद्मेषु त्रिकोणानि वह्निमण्डलानि तत्रोक्तवर्णोपेतानि प्रद्युम्नादिरूपाणीत्येकेषां पक्षः । अन्येषां तु भ्रूमध्यगतशुक्लवर्णचतुर्दलपद्मेषु वर्त्तुलेन्दुमण्डलानि तेषु शुक्लवर्णानि प्रद्युम्नादिरूपाणीति पक्षः । भ्रूमध्यापेक्षया

द्वादशांगुलिव्यवहितशिरोमध्यनाडीपञ्चकगतशुक्लद्वादशास्रपद्मेषु वर्तुलेन्दु-मण्डलपञ्चके उक्तवर्णानि प्रद्युम्नादिरूपाणि वर्तन्ते इत्येकेषां पक्षः । अन्येषां तु शुक्लवर्णानीति । तत्र ब्रह्मनाड्यां विशेषमाहेत्यवतारिकापक्षे उक्तानि मलाधारादिस्थलेषु विद्यमानानि पद्मानि अग्न्यादिमण्डलानि च ब्रह्मनाड्यामेव । न तु वज्रिकाद्यासु नाडीषु 'पञ्चात्मक' इत्युक्तमूलाधारादिक्रमेण ब्रह्मनाड्यामेवानि-रुद्धादिरूपावस्थानमभिप्रेत्य प्रवृत्तेति ज्ञातव्यम् ।। १६५-१६७ ।।

सुषुम्नायाः परितः विद्यमानेडादिनर्डाचतुष्टयनिरूपणं तत्र ध्येयरूपकथनं च

**तं.सा.** **इडा च पिङ्गला चैव वज्रिका धारिणी तथा ।**
**सुषुम्नायाश्चतुर्दिक्षु विज्रिकाद्यासु तत्र च ।**
**चतुर्मूर्तिः स भगवान् हृदये संव्यवस्थितः ।। १६८ ।।**

**त.क.**— एवं प्रद्युम्नादिनारायणान्तं पञ्चरूपस्य भगवतो ध्यानं साधिष्ठानमुक्त्वा प्रद्युम्नादिवासुदेवान्तस्य चतुर्मूर्तेः साधिष्ठानं ध्यानप्रकारमाह— **इडा चेति ।।** चतुर्दिक्षु स्थितासु इडाद्यासु नाडीषु, तत्र स्थितेषु पद्मेषु तत्र स्थिताग्न्यादिमण्डलेषु चतुर्मूर्तिर्भगवान् **स** नारायण एव ध्येय इति सम्बन्धः ।

अत्र वज्रकादित्वेन ग्रहणं सुषुम्नानाडिप्रभेदवज्रिकात इयमन्वेति ज्ञापानाय । 'हृदये संव्यवस्थितः' इत्यनेन इडादिनाडीषु मूलनाभ्यादिप्रदेशे पद्मानि न सन्ति, किन्तु हृदयप्रदेश एवेति सूचितम् ।। १६७,१६८ ।।

**अ.सं.**— एवं पञ्चप्रभेदोपेतायाः सुषुम्नायाः परितः चतुर्दिक्षु विद्यमाना अन्याः नाडीराह— **इडेति ।।** सुषुम्नायाश्च**तुर्दिक्षु** पश्चिमादिदिक्षु वज्रिका इडा धारिणी पिङ्गला इत्येताश्चतस्रो नाड्यः क्रमाद्वर्तन्ते । तदुक्तम्—

इडा वामस्थिता नाडी पिङ्गला दक्षिणा मता ।
तयोर्मध्यगते नाड्यौ सुषुम्नां च समाश्रिते ।। इति ।

एतासु विद्यमानभगवद्रूपाण्याह— **वज्रिकाद्यास्विति ।।** वज्रिकेडाधारिणी-पिङ्गलासु चतुसृषु नाडीषु **तत्र च** सुषुम्नायां च पञ्चसु नाडीषु चतुर्मूर्तिः

प्रद्युम्नानिरुद्धवासुदेवसङ्कर्षणाख्याश्चतस्रो मूर्तयो यस्य स **चतुर्मूर्तिः**। प्रद्युमादिचतुर्मूर्तिभिः सहित इति यावत्। **स** नारायणाख्यो भगवान् संव्यवस्थितः। एवं पञ्चरूपो भगवान् **हृदये** हृदयावच्छिन्नप्रदेशस्थितनाडीपञ्चके ध्येय इति शेषः । इडादिक्रमेण प्रद्युम्नाद्यवस्थानभ्रान्तिं वारयितुं 'वज्रिकायासु' इति वज्रिकादिक्रम उक्तः। तथा च सुषुम्नायाः पश्चिमदिशि वज्रिकायां प्रद्युम्नः। उत्तरदिशि इडायामनिरुद्धः। पूर्वदिशि नन्दिनीत्यपरनामिकायां धारिण्यां वासुदेवः। दक्षिणस्यां पिङ्गलायां संकर्षणः । मध्ये सुषुम्नायां नारायणः वर्तत इति भावः। एतेषां वर्णाश्च

हरिर्नीलः सितः पिङ्गलोहितश्चात्र केशवः ।
प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ।। (तं.सा.४-१६४)

इत्युक्त प्रकारेण ध्येयः । तदुक्तं छान्दोग्योपनिषद्भाष्ये–

स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः ।
विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु ।।

नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् ।
शुक्लं तु वासुदेवाख्यं नन्दिन्यामग्रतः स्थितम् ।।

पिङ्गलायां पिङ्गलं च रूपं सङ्कर्षणाभिधम् ।
पश्चिमे वज्रिकायां च पीतं प्रद्युम्ननामकम् ।
इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् ।। इति ।। १६८ ।।

(छ.भा.८.६.६)

**गु.दी.–** इदानीं सुषुम्नायाः परितो विद्यमाननाडीचतुष्टयमाह— **इडेति ।।** सुषुम्नायाः नाड्याः चतुर्दिक्षु सुषुम्नायाः दिक्षणतः पिङ्गला। वामे इडा । पूर्वतः धारिणी। पश्चिमायां वज्रिकेति क्रमेण वर्तते। यथोक्तम्—

इडा वामे स्थिता नाडी पिङ्गला दक्षिणा मता ।
तयोर्मध्यगते नाड्यौ सुषुम्नां च समाश्रिते ।। इति ।

एतेषु कानि रूपाणि कुत्र वर्तन्त इत्यत आह— **वज्रिकायास्विति ।।**

वज्रिकाइडाधारिणीपिङ्गलासु **तत्र** सुषुम्नायां च **चतुर्मूर्तिः** प्रद्युम्नादिचतुर्भिः सहितः **स भगवान्** नारायणः **हृदये** हृत्प्रदेशगतनाडीपञ्चके संव्यवस्थितः । तथा चोक्तं छान्दोग्यभाष्ये—

स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः ।
विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु ।।
नारायणाख्यं सौषुम्नम्.........।। (छा.भा.८-६-६) इत्यादि ।

न च तत्र धारिण्या अनुक्तिः, नान्दिनीपदेनैव तल्लाभात् । धारिण्या एव नान्दिनीति नामान्तरमिति साम्प्रदायिकाः ।। १६८ ।।

**मङ्गाली–** एवं पञ्चप्रभेदोपेतायाः सुषुम्नायाः परितश्चतुर्दिक्षु विद्यमाना अन्या नाडीराह– **इडेति ।। सुषुम्नायाश्चतुर्दिक्षु** पश्चिमादिदिक्षु वज्रिका इडा धारिणी पिङ्गला इत्येताश्चतस्रो नाड्यः क्रमाद्वर्तन्ते । तदुक्तम्–

इडा वामस्थिता नाडी पिङ्गला दक्षिणा मता ।
तयोर्मध्यगते नाड्यौ सुषुम्नां च समाश्रिते ।। इति ।

एतासु विद्यमानरूपाण्याह– **वज्रिकाद्यास्विति ।।** वज्रिकेडाधारिणीपिङ्गलासु चतसृषु नाडीषु, **तत्र च** सुषुम्नायां चेति पञ्चसु नाडीषु **चतुर्मूर्तिः** प्रद्युम्नानिरुद्धवासुदेवसङ्कर्षणाख्याश्चतस्रो मूर्तयो यस्य स चतुर्मूर्तिः । प्रद्युम्नादिचतुर्मूर्तिभिः सहित इति यावत् । **सः** नारायणाख्यो भगवान् **हृदये** हृदयावच्छिन्नप्रदेशस्थितनाडिपञ्चके संव्यवस्थितो ध्येय इति शेषः । यद्वा न केवलं पञ्चमूर्तिस्सन् स भगवान् वज्रिकाद्यासु सुषुम्नावान्तरनाडीषु वर्तते । किन्तु तत्र च इडाद्यासु च चतुर्मूर्तिः सन् हृदये वर्तत इत्यर्थः । इडादिक्रमेण प्रद्युम्नाद्यवस्थानभ्रान्तिं वारयितुं 'वज्रिकाद्यासु' इति वज्रिकादिक्रम उक्तः । तथा च सुषुम्नायाः पश्चिमदिशि वज्रिकायां प्रद्युम्नः । उत्तरदिशि इडायामनिरुद्धः । पूर्वदिशि नन्दिनीत्यपरनामिकायां धारिण्यां वासुदेवः । दक्षिणस्यां पिङ्गलायां सङ्कर्षणः । मध्ये सुषुम्नायां नारायणो वर्तत इति भावः । अत्रार्थे प्रमाणं 'नारायणाख्यं सौषुम्न्यं मध्यस्थं रक्तवर्णकम्' इत्यादि छान्दोग्यभाष्यागतं वचनं प्रागेव लिखितम् ।। १६८ ।।

द्वाशाप्ततिसहस्रनाडीष्वपि भागवान् ध्येयः

**तं.सा. द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः ।**
**बृहतीसहस्र(वर्णानां)स्पर्शानामृचां वाच्योऽत्र केशवः**
**।। १६९ ।।**

**त.क.**– एवं नवनाडीषु ध्यानमुक्त्वाऽधिष्ठानान्तरेऽपि ध्यानमाह— **द्वासप्ततीति।।**

सङ्ख्यातुं नैव शक्यन्ते स्थूलमूलाः पृथग्विधाः ।
यथाऽश्वत्थदले सूक्ष्माः स्थूलाश्च विततास्तथा ।।

इत्यादिनाऽसङ्ख्यातत्वोक्तेः कथं द्वासप्ततिसहस्रसङ्ख्योच्यत इत्यत आह— **प्रधानत इति ।।** बृहतीछन्दोबद्धऋक्सहस्रगतानां ककारादिमकारान्तानां स्पर्शानामकारादि-ककारान्तानामचां च प्रतिपाद्यः केशवः रूपविशेषेण द्वासप्ततिसहस्रनाडीषु ध्यातव्य इत्यर्थः ।। १६९ ।।

**अ.सं.**– अपरा अपि नाडीराह– **द्वासप्ततीति ।। प्रधानतः** प्रधानाभ्यः सुषुम्नादिनाडीभ्यः **अन्याः** व्यतिरिक्ताः प्रतिशाखानाड्यः द्वासप्ततिसहस्राणि देहे सन्तीत्यर्थः । तदुक्तं षट्प्रश्नोपनिषद्भाष्यटीकायां– 'एवं च सम्भूय प्रतिशरीरे तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात्' इति । यद्वा द्वासप्ततिसहस्राणि **अन्याः** पूर्वोक्तनाडीभ्यः अपराः **प्रधानतः** प्रधाना इत्यर्थः । अनेन पूर्वोक्तसुषुम्नाद्यपेक्षया अपरासां द्वासप्ततिनाडीनां प्राधान्य-कथनेनैतदपेक्षयाऽन्या अपि अप्रधाना अवान्तरनाड्यः सन्तीति ज्ञायते । यद्वा ननु 'शतं चैका च हृदयस्य नाड्यः'(छा.उ.६.६) इत्यादौ एकशतनाडीनामेवोक्तेः कथं द्वासप्ततिसहस्रणीत्युच्यत इत्यत आह– **अन्यास्तु प्रधानत इति ।। अन्याः** द्वासप्ततिसहस्रापेक्षया एकशतादित्वेनोक्ताः नाड्यः **प्रधानतः** सार्वविभक्तिकत्वात्तसेः प्रधाना इत्यर्थः । अन्यत्र एकशतादित्वनोक्तिस्तासां प्राधान्याभिप्रायेणेति भावः ।।

तदधिष्ठितरूपविशेषमाह– **बृहतीति** ।। बृहतीसहस्रे बृहतीसहस्राख्ये स्तोत्रे स्पर्शः सम्बन्धः यासां बृहतीसम्बन्धिनीनां ऋचां **वाच्यः** प्रतिपाद्यः केशवः **अत्र** द्वासप्ततिनाडीषु ध्येय इति शेषः ।

अयमाशयः । द्वासप्ततिसहस्रनाडीषु मध्ये षट्त्रिंशत्सहस्रनाड्यः शरीरे दक्षिणपार्श्वे तिष्ठन्ति । षट्त्रिंशत्सहस्रनाड्यो वामभागे तिष्ठन्ति । षट्त्रिंशदक्षरोपेता हि बृहतीनामकच्छन्दोबद्धा ऋक् । तादृशानां बृहतीसंज्ञकानां सहस्रसंख्याकानां ऋचां वर्णाश्च षट्त्रिंशत्सहस्रसंख्याकाः षट्त्रिंशदक्षरोपेतसहस्रऋक्षु एकैकवर्णस्य सहस्रत्वेन षट्त्रिंशदक्षराणां षट्त्रिंशत्सहस्रं भवति । ते च वर्णाः द्विविधाः। षट्त्रिंशत्सहस्रसङ्ख्याकाः स्वराः। षट्त्रिंशत्सहस्रसङ्ख्याकानि व्यञ्जनानि। स्वरव्यञ्जनभेदात्। एवञ्च मिलित्वा वर्णाः द्वासप्ततिसहससङ्ख्याका भवति। पुरुषायुःपरिमाणभूतस्य शतसंवत्सरस्याहोरात्राण्यपि द्वासप्ततिसहस्राणि वर्तन्ते। तेषु षट्त्रिंशत्सहस्रसङ्ख्याकानामह्नां नियामकानि भगवतः षट्त्रिंशत्सहस्रसङ्ख्यानि पुरुषरूपाणि सन्ति । तान्येव बृहतीसंहस्रस्य षट्त्रिंशत्सहस्रस्वरप्रतिपाद्यानि। एतान्येव दक्षिणभागतः षट्त्रिंशत्सहस्रनाडीषु वर्तन्ते। एवमेव षट्त्रिंशत्सहस्रसङ्ख्याकानां रात्रीणां नियामकानि षट्त्रिंशत्सहस्रसङ्ख्याकानि भगवतः स्त्रीरूपाणि सन्ति। तान्येव बृहतीसहस्रस्य षट्त्रिंशत्सहस्रव्यञ्जनप्रतिपाद्यानि। एतान्येव वामभागगतषट्त्रिंशत्सहस्रनाडीषु वर्तन्त इति । एतच्च ऐतरेयभाष्ये स्पष्टम्–

षट्त्रिंशद्रूपवान् विष्णुः व्यञ्जनेषु च संस्थितः ।
तान्येव विष्णुरूपाणि रात्रीणामपि देवताः ।।

षट्त्रिंशत्सहस्राणि स्वरगाणि हरेरपि ।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ।।

द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः ।
शताब्दानामहोरात्रदैवतान्युत्तमानि च ।।

द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः ।
बृहतसिहस्रसंस्थानि स्वरव्यञ्जनभेदतः ॥
तान्येव पुरुषस्थानि....... ॥ इति । (ऐ.भा.२-२)

षट्त्रिंशत्सहस्राणि बृहत्युक्तार्णगानि तु ।
स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु ॥
सूर्यरूपेषु पूर्णानि पुमाकाराणि सर्वशः ॥ इति । । १६९ ॥(ऐ.भा.२-३)

**गु.दी.–** अपरा अपि नाडीस्तत्र विद्यमानभगवद्रूपाणि चाह— **द्वासप्ततीति ॥** देहे सन्तीति शेषः । ननु 'शतं चैका च हृदयस्य नाड्यः' (का.उ. २-३-१६) 'अत्रैतदेकशतं नाडीनाम्' (ष.उ.३-५) इत्यादौ एकशतनाडीनामेवोक्तेः कथं द्वासप्ततिसहस्राणि इत्युक्तमित्यत आह— **अन्यास्तु प्रधानत इति ॥** अन्यत्रैकशतादित्वेनोक्तिस्तु तासां प्राधान्याभिप्रायेणेति भावः । यद्वा द्वासप्ततिसहस्रनाड्योऽप्रधानाः **अन्याः** वज्रिकाद्यास्तु प्रधाना इत्यर्थः । सम्प्रदायस्तु– प्रधानेन विष्णुना वायुना च **अन्याः** अननीयाः चेष्टनीयाः प्रेर्या इत्यर्थः, 'अन चेष्टायाम्' (धा.पा.१०७०) इति धातोरिति भावः । **प्रधानत** इति सार्वविभक्तिकतसः प्रधानेन इत्यर्थः । तेन वज्रिकादीनां सुषुम्नातो व्यतिरेके तासामपि प्रतिशाखानाडीकथने नाडीनां द्वासप्ततिसहस्रत्वभङ्ग इत्याद्यपास्तम् । प्रधानतोऽन्या इत्यस्याप्रधाना इत्यर्थानभ्युपगमात् । वायुना हरिणा च अननीयाश्चेष्टनीया इत्यर्थाङ्गीकारादिति । तत्प्रकारमेवाह— **बृहतीसहस्रस्पर्शा-नामिति ॥** बृहतीसहस्रस्य स्पर्शः सम्बन्धो यासां तासामृचो बृहतीसहस्रस्य समन्धिनीनामृचां वाच्यः केशवः **अत्र** नाडीषु वर्तत इति शेषः । अत्र द्वासप्ततिसहस्रनाडीषु षट्त्रिंशत्सहस्रनाड्यो दक्षिणभागस्थाः । षट्त्रिंशत्सहस्र-नाड्यो वामभागस्थिताः । बृहतीसहस्रसम्बन्धिऋचां वर्णाश्च षट्त्रिंशत्सहस्रसङ्ख्या-काः । तथा च बृहतीसहस्रस्य व्यञ्जनाक्षराणि षट्त्रिंशत्सहस्राणि स्वराक्षराण्यपि तावन्ति । एवं मिलित्वा द्वासप्ततिसहस्राणि भवन्ति । एवं च पुरुषायुषमानभूतस्य शतसंवत्सरस्य अह्नां षट्त्रिंशत्सहस्रसङ्ख्याकानां नियामकानि यानि भगवतः षट्त्रिंशत्सहस्रपुंरूपाणि तान्येव बृहतीसहस्रस्थस्वराक्षरप्रतिपाद्यानि । तान्येव

दक्षिणभागस्थनाडीषु वर्तन्ते। यानि षट्त्रिंशत्सहस्रसङ्ख्याकानां शतसंवत्सररात्रीणां नियामकानि भगवतः षट्त्रिंशत्सहस्रस्त्रीरूपाणि तान्येव बृहतीसहस्रव्यञ्जनप्रतिपाद्यानि। तान्येव वामभागस्थितषट्त्रिंशत्सहस्रनाडीषु वर्तन्त इति भावः। एतदुक्तमैतरेयोपनिषदि तद्भाष्ये च।

'तद्वा इदं बृहतीसहस्रं सम्पन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशदक्षराणां सहस्राणि भवन्ति। तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति। व्यंञ्जनैरेव रात्रीराप्नुवन्ति। स्वरैरहानि' इति। (ऐ.उ.२.७.५)

एकैकं च सहस्रं तद् व्यञ्जनेषु च रात्रिषु।
रूपं विष्णो स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा॥ इत्यादि।

बृहतीसहस्ररीतिस्तु तत्रैव। यावन्तीभिरृग्भिः शंसिताभिः षट्त्रिंशतिसहस्राक्षराणि भवन्ति यस्मात्कस्मादपि छन्दसः तावत्य ऋचः शंसित्वा तदा बृहतीसहस्रत्वानुसन्धानं कार्यम्। तदा सम्पादितं बृहतीसहस्रं भवति।

यावत् सहस्रं वृहती तावच्छंसेदनुष्टुभाम्।
छन्दसां वा तदन्येषां वृहतीत्वं स्मरेत् ततः॥ इति।

'वृहतीसहस्रवर्णानामृचां' इति पाठे ऋचां यद्बृहतीसहस्रं तस्य वर्णानामित्यर्थः। नित्यसापेक्षत्वात्समासः। बृहतीसहस्रवर्णानामृचां च वाच्य इति वा। 'बृहतीसहस्रस्पर्शानामृचां वाच्योऽत्र केशवः' इति पाठे कादिमावसानानां स्पर्शाक्षराणामकारादिस्वराणां च केशव एव वाच्य इत्यर्थः॥ १६९॥

**मङ्कली–** अपरा अपि नाडीराह– **द्वासप्ततीति॥ प्रधानतः** पञ्चम्यास्तसिः। प्रधानाभ्यः सुषुम्नादिनाडीभ्योऽ**न्याः** व्यतिरिक्ताः प्रतिशाखानाड्यः द्वासप्ततिसहस्राणि देहे सन्तीत्यर्थः। तदुक्तं षट्प्रश्नोपनिषद्भाष्यटीकायां– 'एवं च सम्भूय प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात्' इति। ननु 'शतं चैका च हृदयस्य नाड्यः'(छा.उ.६.६) 'अत्रैतदेकशतं नाडीनां' इत्यादौ एकशतनाडीनामेवोक्तेः कथं द्वासप्ततिसहस्राणीत्युक्तमित्यत आह– **अन्यास्तु प्रधानत इति॥** अन्यत्र एकशतत्वेनोक्तिस्तु तासां प्राधान्याभिप्रायेणेति भावः।

यद्वा द्वासप्ततिसहस्राणि **अन्याः** पूर्वोक्तनाडीभ्योऽपराः **प्रधानतः** सार्वविभक्तिकत्वात्तसेः प्रधाना इत्यर्थः । अनेन पूर्वोक्तसुषुम्नाद्यपेक्षया अपरासां द्वासप्ततिनाडीनामपि प्राधान्यकथनेन एतदन्या अपि अप्रधाना अवान्तरनाड्यः सन्तीति ज्ञायते । तदधिष्ठातृरूपविशेषमाह– **बृहतीति** ।। बृहतीसहस्राख्यस्तोत्रे स्पर्शः सम्बन्धः यासां तासां बृहतीसहस्रसम्बन्धिनीनां ऋचां **वाच्यः** प्रतिपाद्यः केशवः **अत्र** द्वासप्ततिसहस्रनाडीषु मध्ये, ध्येय इति शेषः ।

अयमाशयः । द्वासप्ततिसहस्रनाडीषु मध्ये षट्त्रिंशत्सहस्रनाड्यः शरीरे दक्षिणपार्श्वे तिष्ठन्ति। षट्त्रिंशत्सहस्रनाड्यो वामभागे तिष्ठन्ति । षट्त्रिंशदक्षरोपेता हि वृहतीनामकछन्दोबद्धा ऋक् । तादृशानां बृहतीसंज्ञानां सहस्रसङ्ख्यानां ऋचां वर्णाश्च षट्त्रिंशत्सहस्रसङ्ख्याकाः । षट्त्रिंशदक्षरोपेतसहस्रऋक्षु एकैकवर्णस्य सहस्रत्वेन षट्त्रिंशदक्षराणां षट्त्रिंशत्सहस्रत्वं भवति । ते च वर्णाः द्विविधाः । षट्त्रिंशत्सङ्ख्याकास्स्वराः षट्त्रिंशत्सहस्रसङ्ख्याकानि व्यञ्जनानीति भेदात् । एवं च मिलित्वा वर्णाः द्वासप्ततिसहस्रसङ्ख्याका भवन्ति । पुरुषायुःपरिमाणभूतस्य शतसंवत्सरस्याहोरात्राण्यपि द्वासप्ततिसहस्राणि वर्तन्ते । तेषु षट्त्रिंशत्सहस्रसङ्ख्याकानामह्नां नियामकानि भगवतः षट्त्रिंशत्सहस्रसङ्ख्याकानि पुरुषरूपाणि सन्ति । तान्येव बृहतीसहस्रस्य षट्त्रिंशत्सहस्रस्वरप्रतिपाद्यानि एतान्येव दक्षिणभागगतषट्त्रिंशत्सहस्रनाडीषु वर्तन्ते। एवमेव षट्त्रिंशत्सहस्रसङ्ख्याकानां रात्रीणां नियामकानि षट्त्रिंशत्सहस्रसङ्ख्यानि भगवतः स्त्रीरूपाणि सन्ति। तान्येव बृहतीसहस्रस्य षट्त्रिंशत्सहस्रव्यञ्जनप्रतिपाद्यानि । एतान्येव वामभागगतषट्त्रिंशत्सहस्रनाडीषु वर्तन्त इति । एतच्च ऐतरेयभाष्यादौ स्पष्टम् ।

षट्त्रिंशद्रूपवान् विष्णुः व्यञ्जनेषु च संस्थितः ।
तान्येव विष्णुरूपाणि रात्रीणामपि देवताः ।।

षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि ।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ।।

द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः ।
बृहतीसहस्रसंस्थानि स्वरव्यञ्जनभेदतः ।।
तान्येव पुरुषस्थानि............ ।। इति । (ऐ.भा.२.२)

षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु ।
स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु ।।
सूर्यरूपेषु पूर्णानि पुमाकाराणि सर्वशः ।। इति ।। १६९ ।।(ऐ.भा.२-३)

द्वासप्ततिस्थरूपाणां लक्षणानि रहस्यत्वात् ग्रन्थगौरवाच्च नोच्यन्ते

**तं.सा. रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।**
**विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ।। १७० ।।**

**त.क.–** कथंविधानि तानि रूपाणीत्यत आह— **रूपाणामिति ।।** नन्वेतासु नाडीषु तावन्ति रूपाणि सन्ति । इदमेतेषां लक्षणम्, एवमेतेषां ध्यानमित्यत्रैव प्रमाणं न पश्याम इत्यत आह— **विष्णुनेति ।।** यतो विष्णुना ब्रह्मणे प्रोक्तमिदं लक्षणादिकमतः प्रामाणिकमेवेत्यर्थः । तथेति हेत्वन्तरम् । ग्रन्थसङ्कोचनापेक्षयापि न कथ्यत इत्यर्थः । नन्वत्र पाद्मतन्त्रादौ कन्दस्थितिवह्न्यादिमण्डलस्थितिः, तेषु प्राणादिदशवायूनां सञ्चारः, द्वादशरविमण्डले द्वादशमूर्तीनां स्थितिरित्यादिबहुप्रमेयं विष्णुना ब्रह्मणे प्रोक्तमस्ति । तत् कुतो न संगृहीतमित्यत आह— **विष्णुनेति ।।** यद्यपि,

देहमानं स्वांगुलीभिः षण्णवत्यंगुलायतम् ।
प्राणः शरीरादधिको द्वादशांगुलमानतः ।।

देहस्थमनिलं देहसमुद्भूतेन वह्निना ।
न्यूनं समं वा योगेन कुर्वन् ब्रह्मविदिष्यते ।।

देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ।
त्रिकोणं द्विपदामन्यच्चतुरश्रं चतुष्पदम् ।।

वृत्तं विहङ्गमानां तु षडश्रं जलजन्मनाम् ।
अष्टाश्रं स्वेदजानां तु तस्मिन् दीपवदुज्ज्वलः ।।

वैश्वानरोग्निः पचति प्राणापानसमायुतः ।
कन्दस्थानं मनुष्याणां देहमध्यं नवांगुलम् ।।

तुन्दमध्यं तदिष्टं वै तन्मध्यं नाभिरिष्यते ।
तत्र चक्रं द्वादशारमाहुर्मासानराणि तु ।।

विष्ण्वादिमूर्तयस्तेषु द्वादश द्वादशस्वपि ।
अहं तत्र स्थितं चक्रं भ्रामयामि स्वमायया ।।

अरेषु भ्रमते जीवः क्रमेण कमलासन ।
तन्तुपञ्जरमध्यस्था यथा भ्रमति लूतिका ।।

प्राणारूढश्चरति यो जीवस्तेन विना न हि ।
तस्योर्ध्वे कुण्डलिस्थानं नाभेस्तिर्यगथोर्ध्वतः ।।

अष्टप्रकृतिरूपा सा चाष्टधा कुण्डली कृता ।
यथावद्वायुचारं च ज्वलनादि च नित्यशः ।।

परितः कन्दपार्श्वे तु निरुद्ध्यैव सदा स्थिता ।
मुखेनैव समावेष्ट्य ब्रह्मारन्ध्रमुखं तथा ।।

योगकाले च मरुता साग्निना बोधिता सती ।
स्फुरिता हृदयाकाशे नागरूपा महोज्ज्वला ।।

वायुर्वायुमुखेनैव ततो याति सुषुम्नया ।
कन्दमध्यस्थिता नाडी सुषुम्नासु प्रतिष्ठिता ।।

पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्वप्रवर्तनी ।
ब्रह्मणो विवरं यावत् विद्युदाभा सनालिका ।।
वैष्णवी ब्रह्मनाडी च निर्वाणप्राप्तपद्धतिः ।

विद्युदाभा सनालिकेत्यनेन वैद्युता प्रकाशिनी चोच्यते। वैष्णवीत्यार्या। निर्वाणप्राप्तपद्धतिरिति वज्रिका चोच्यते।

शुद्धा च पिङ्गला चैव तस्याः सव्येतरस्थिते। शुद्धेतीडोच्यते।
शुद्धा समुत्थिता कन्दाद्वामनासापुटावधि।
पिङ्गला चोत्थिता तस्मादन्यनासापुटावधि।
गान्धारी हस्तजिह्वा च द्वे चान्ये नाडिके स्थिते।

अत्र गान्धारीशब्देन वज्रिका, हस्तिजिह्वाशब्देन धारिणी गृह्यते।

पुरतः पृष्ठतस्तस्या वामेतरदृशौ प्रति ॥
पूषा यशस्विनी नाड्यौ तस्मादेव समुत्थिते।

सव्येतरश्रुत्यवधि पायुमूला त्वलम्बुसा।
अधो गता गुह्यनाडी मेढ्रान्तावधिरायता ॥

पादांगुष्ठावधिः कन्दाद्यथा याता च कौशिनी।
दशप्रधानभूतास्ताः कथिताः कन्दसम्भवाः ॥

तन्मूला वहवो नाड्यः स्थूलाः सूक्ष्मास्तु नाडिकाः।
द्वासप्ततिसहस्राणि स्थूलाः सूक्ष्मास्तु पद्मज ॥

प्राणोऽपानः समानश्च उदानो व्यान एव च।
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ॥

चरन्ति दशनाडीषु दश प्राणादिवायवः।
प्राणादिपञ्चकं तेषु प्रधानं तत्र च स्वयम् ॥

प्राण एवाथवा श्रेष्ठो जीवात्मानं बिभर्ति यः।
आस्यनासिकयोर्मध्यं हृदयं नाभिमण्डलम् ॥

पादांगुष्ठामिति प्राणस्थानानि कमलासन।
अपानश्चरति ब्रह्मन् गुदमेढ्रोरुजानुषु ॥

समानः सर्वगात्रेषु सर्वव्यापी व्यवस्थितः ।
उदानः सर्वसन्धिस्थः पादयोरुभयोरपि ।।

व्यानः श्रोत्रोरुकट्यां च गुल्फस्कन्धगलेषु च ।
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।।

तुन्दस्थं नीरमन्नं च रसानि च समीकृतम् ।
तुन्दमध्यगतः प्राणस्तानि कुर्यात् पृथक् पृथक् ।।

इत्यादिचेष्टया प्राणः करोति वपुषः स्थितिम् ।
अपानवायुर्मूत्रादेः करोति च विसर्जनम् ।।

प्राणापानादिचेष्टादि क्रियते व्यानवायुना ।
उदीर्यते शरीरस्थमुदानेन नभस्वता ।।

पोषणादि शरीरस्य समानः कुरुते सदा ।
उद्गारादिक्रिया नागः कूर्मोऽक्ष्यादिनिमीलनम् ।।

कृकलस्तु क्षुतः कर्ता दत्तो निद्रादिकर्मकृत् ।
मृतगात्रस्य शोभादिर्धनञ्जय उदाहृतः ।।

नाडीभेदं मरुद्भेदं मरुतां स्थानमेव च ।
चेष्टाश्च विविधास्तेषां ज्ञात्वैव कमलासन ।।

शुद्धौ यतेत नाडीनां वक्ष्यमाणेन वर्त्मना ।
हस्तेन दक्षिणेनैव पीडयेन्नासिकापुटम् ।।

शनैः शनैरथ बहिः क्षिपेत् पिङ्गलयाऽनिलम् ।
द्वात्रिंशन्मात्रया कुक्षौ पूरयेदिडयाऽनिलम् ।।

सम्पूर्णकुम्भवद्देहं कुम्भयेन्मातरिश्वना ।
पूरयेन्नाडयः पूर्वाः पूर्यन्ते मातरिश्वना ।।

एवं कृते सति ब्रह्मन् चरन्ति दशवायवः ।
हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् ।।

पूरणेन तथा कुम्भीकरणादुन्मुखं स्थितम् ।
नालं तालनिभं तस्य दलाष्टकसमन्वितम् ।।

कदलीपुष्पसङ्काशं चन्द्रकान्तसमप्रभम् ।
सन्ध्ययोर्मध्यरात्रे च प्राणायामांस्तु षोडश ।।

एकाहमाचं कुर्वाणः सर्वपापैः प्रमुच्यते ।
किमन्यैर्बहुभिः प्रोक्तैः प्राणायामपरायणाः ।।

निर्धूतसर्वपाप्मानो वत्सरत्रयपूरणे ।
पश्यन्ति मामपि ब्रह्मन् हृदयाम्भोरुहे स्थितम् ।।

संवत्सरत्रयादूर्ध्वं प्राणायामपरो नरः ।
योगसिद्धो भवेद्योगी वायुजिद्विजितेन्द्रियः ।।

अल्पाशी स्वल्पनिद्रश्च तेजस्वी बलवान् भवेत् ।
अपमृत्युमतिक्रम्य दीर्घमायुरवाप्नुयात् ।।

इत्यादिना पञ्चरात्रादौ ब्रह्माणं प्रति विष्णुना प्रोक्तं बहुप्रमेयमस्ति। तथापि ग्रन्थसङ्कोचमपेक्ष्य रहस्यत्वाच्च न तदत्र कथितमित्यर्थः ।।

अयमत्र समुदायार्थः— षण्णवत्यंगुलो देहः। तत्र मूर्ध्नि उपरि द्वादशांगुलपरिमितोदेशः देहान्तर्गत एव। तत्र नवांगुलपरिमितः कन्दाख्यः गुदाधःप्रदेशः मूलाधारशब्दितः। तमाधारीकृत्य मूर्धपर्यन्तं व्याप्ता सुषुम्ना नाडी अस्ति। तत्पृष्ठभागे वज्रिका तद्वामभागे आर्या। तत्पुरोभागे प्रकाशिनी दक्षभागे वैद्युता। एताभिश्चतसृभिर्नाडीभिः परिवृता ब्रह्मनाडी मध्ये तिष्ठति। एताः पञ्च सुषुम्नेत्यैवोच्यन्ते। तत्र ब्रह्मनाड्यां मूलाधारप्रदेशे द्विदलं पद्मम्। तच्छुक्लम्। भ्रूमध्यप्रदेशे चतुर्दलं पद्मम्। तदपि शुक्लम्। मूर्ध्नि उपरि द्वादशांगुलप्रदेशे द्वादशदलं पद्मम्। तदपि शुक्लम्। एवं मूलाधारप्रदेशस्थचतुर्दले रक्तपद्मे त्रिकोणं वह्निमण्डलम्। तदुपरि शेषः। तत्र हरिद्वर्णः प्रद्युम्नः प्राणायामादिकाले ध्यातव्यः। नाभिप्रदेशस्थषड्दलरक्तपद्मे षडश्रं वायुमण्डलम्। तदुपरि कर्णिकास्थानीये शेषे नीलवर्णोऽनिरुद्धः। एवं हृदयप्रदेशस्थेऽष्टदलरक्तपद्मे द्वादशारं रविमण्डलम्। तत्र

प्रत्येकमरेषु मासनियामकाः केशवाद्या द्वादशमूर्तयः। तदुपरि वर्तुलाकारं वह्निमण्डलम्। तदुपरि कर्णिकास्थः शेषः। सोऽपि पद्मशब्देनैवोच्यते। तत्र श्वेतवर्णो वासुदेवः। एतेन—

अष्टपत्रे रक्तपद्मे मध्ये सूर्येन्दुवह्निगम्।
पीठं तन्मध्यपद्मस्थं नारायणमनामयम्॥

इत्युक्तेः वह्निमण्डले पीठम्। तत्र पद्मान्तरमस्तीति प्रत्युक्तम्। पद्मशब्देन शेषस्यैवोक्तेः। एवमिन्द्रयोनिप्रदेशस्थषड्दलरक्तपद्मे वृत्तं शशिमण्डलम्। तदुपरि कर्णिकायां शेषः। तत्र पिङ्गलवर्णः सङ्कर्षणः। एवं भ्रूमध्यप्रदेशस्थचतुर्दलश्वेतपद्मे वर्तुलं चन्द्रमण्डलम्। तदुपरि शेषः। तत्र लोहितो नारायणः। एवं द्वादशांगुलप्रदेशस्थद्वादशदलश्वेतपद्मे वर्तुलं चन्द्रमण्डलम्। तत्र श्वेतवर्णो वासुदेवो ध्यातव्यः। एवं वायुरपि प्राणादिपञ्चरूपो यथाक्रमं षट्सु नाडीषु पद्मेषु ध्यातव्यः।

एवं सुषुम्नानाड्याश्चतुर्दिक्षु स्थितासु वज्रिकादिनाडीषु प्रद्युम्नाद्याश्चतस्रो मूर्तयः। द्वासप्ततिसहस्रनाडीषु द्वासप्ततिसहस्ररूपाणि स्पर्शादिवाच्यानि ध्यातव्यानि। तत्रायं विवेकः— बृहतीसहस्रर्क्षु षट्त्रिंशत्सहस्रसङ्ख्याका अज्रूपा वर्णाः षट्त्रिंशत्सहस्रसङ्ख्याकानि रूपाणि दक्षिणभागस्थितषटट्त्रिंशत्सहस्रनाडीषु वर्तन्ते। व्यञ्जनवाच्यानि रात्रिनियामकानि षटट्त्रिंशत्सहस्रसङ्ख्याकानि स्त्रीरूपाणि वामभागस्थासु षट्त्रिंशत्सहस्रसङ्ख्याकासु नाडीषु वर्तन्ते। एवमिडाऽपि पञ्चाशत्प्रकारेण भिन्ना वापार्श्वकन्दसमुद्भवा दक्षिणनासानेत्रश्रोत्राणि व्याप्नोति। तत्र पञ्चाशत्सङ्ख्या उत्तरायणनामकाः सूर्यरश्मयः। एवं पिङ्गलाप्रभेदपञ्चाशत्सङ्ख्या नाड्यः दक्षिणपार्श्वकन्दसमुद्भूतवामनासानेत्रश्रोत्राणि व्याप्नुवन्ति। तासु च दक्षिणायननामकाः पञ्चाशत्सङ्ख्याकाः सूर्यरश्मयः सन्ति। मध्ये स्थितसुषुम्नानाडी तु पञ्चधा भिन्नेति प्रागेवोक्तम्। आहत्येमाः 'शतं चैका च हृदयस्य नाड्यः' इति श्रुत्युक्ता हृदयस्था प्रधाननाड्यः। द्वासप्ततिसहस्रनाड्यः तत्प्रधाना इति विवेक्तव्यम्॥ १७०॥

**अ.सं.**– तेषां रूपाणां कानि लक्षणानीत्यत आह– **रूपाणामिति ।।** तर्हि केनापि न कथितं किमित्यत आह– **विष्णुनेति ।।** एतेनोत्तमाधिकारित्वेन तदतिरिक्तानां तत्रानधिकारत्वं रहस्यत्वे निमित्तमित्युक्तत्वं भवति । अल्पाधिकारिणः प्रति रहस्यत्वेऽपि विशिष्टाधिकारिणः प्रति लक्षणानि वक्तव्यानीत्यत आह– **ग्रन्थेति ।। ग्रन्थसङ्केचतः** एतद्ग्रन्थस्य सङ्कुचितत्वाच्च न कथ्यते न तु लक्षणाभावादिति भावः ।। १७० ।।

**गु.दी.**– तेषां लक्षणं कुतो नोच्यत इत्यत आह— **रूपाणामिति ।।** रहस्यत्वादेवाकथनं नाज्ञानादिति भावः । रहस्यत्वे हेतुमाह— **विष्णुनेति ।।** तथा च उत्तमाधिकारिव्यतिरिक्तानां तल्लक्षणज्ञानानधिकारित्वेन रहस्यत्वमिति भावः । तथा च न कथ्यत इत्यर्थः ।। १७० ।।

**मङ्गली**– तेषां रूपाणां कानि लक्षणानीत्यत आह– **रूपाणामिति ।।** तर्हि केनापि न कथितं किं इत्यत आह– **विष्णुनेति ।।** एतेनोत्तमाधिकारिकत्वेन तदतिरिक्तानां तत्रानधिकारित्वं रहस्यत्वे निमित्तमित्युक्तं भवति । अल्पाधिकारिणः प्रति रहस्यत्वेऽपि विशिष्टाधिकारिणः प्रति लक्षणानि वक्तव्यानीत्यत आह– **ग्रन्थेति ।। ग्रन्थसंकोचतः** एतद्ग्रन्थस्य सङ्कुचितत्वाच्च न कथ्यते । न तु लक्षणाभावादिति भावः ।। १७० ।।

सप्रभेदं निधिध्यासनायाः लक्षणकथनम्, समाधिसततशास्त्रवमर्शयोः
अपरोक्षज्ञानसाधनत्वकथनं च

**तं.सा** **खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।**
**अप्रयत्नात् समाधिश्च दर्शनं चिरयाऽनया(तथा) ।। १७१ ।।**

**अथवा सततं शास्त्रविमर्शेन भविष्यति ।।**

**त.क.**– नन्वथापि ध्यानस्य चत्वार्यङ्गानीत्ययुक्तम् । धारणसमाध्योरपि सद्भावादित्यत आह— **खण्डस्मृतिरिति ।।** ध्यानं नाम मानसावलोकनरूप-स्मृतिरेव । सा च यदा मध्ये खण्डितोत्पद्यते तदा धारणेत्युच्यते । यदा तु

तैलधारावदखण्डितोत्पद्यते बहुप्रयत्नवशात् तदा ध्यानमुच्यते। यदा त्वप्रयत्नादेरेवाखण्डितोत्पद्यते तदा समाधिरित्युच्यत इति हि वस्तुस्थितिः। यदा च प्राणायामस्य 'सुषुम्नायां वायुं विष्णुं च संस्मरेत्' इत्यादिना स्मरणगर्भत्वोक्तिः तदा खण्डस्मृतिरूपधारणायाः प्राणायामेऽन्तर्भावसम्भवान्नाङ्गचतुष्टयोक्तिविरोधः। समाधेस्त्वप्रयत्नादखण्डस्मृतिरूपत्वेन ध्यानान्नातीव भेद इति। ध्यानान्तर्भावान्नोक्तविरोध इति भावः। ननु—

द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम्।
एकं ध्यानं हरेरन्यत्.................... ॥ (तं.सा.४-१४६)

इति निदिध्यासनशब्दिताया उपासनाया उक्तं द्वैविध्यमनुपपन्नम्। धारणासमाध्योरपि सत्त्वेन चातुर्विध्यस्य वक्तव्यत्वादित्यत आह– **खण्डस्मृतिरिति** ॥ खण्डस्मृतिर्हि धारणा। सा चोक्तरीत्या ध्यानांगप्राणायामरूपा। समाधिस्तु ध्यानात्मकैव। अतो द्वैविध्यमेव युक्तमिति भावः। नन्वथापि विष्णुशास्त्रावमर्शनध्यानयोरुपासनाप्रभेदत्वमनुपपन्नम्। उपासनाकार्यज्ञानं प्रत्यसाधनत्वात्। घटसाधनप्रभेदत्वं घटरूपकार्यं प्रति साधनयोरेव हि दृष्टं, नान्यथेत्याशङ्क्य तदपि तयोरस्तीत्याह— **दर्शनमिति** ॥ चिरकालीनानुवर्तमानया ध्यानादनतिभिन्नया **तया समाध्या** भगवद्दर्शनं भवति। सततं शास्त्रविमर्शेन वा भवति यतोऽतो युक्तं तत्प्रभेदत्वमिति भावः ॥ १७१ ॥

**अ.सं.–** एवं ध्यानाङ्गं यमनियमादिकं प्रसङ्गतः सविस्तरं निरूप्य ध्यानरूपोपासनायाः स्मृतिविशेषत्वाल्लक्षणकथनपूर्वकं स्मृतिविभागमाह– **खण्डस्मृतिरखण्डस्मृतिश्चेति** ॥ अखण्डस्मृतिर्द्वेधा। ध्यानरूपा समाधिरूपा चेति। तत्र **खण्डस्मृतिः** खण्डस्यैकैकावयवस्य स्मृतिः धारणा स्यात्। तदुक्तं द्वितीयस्कन्धे– (२-२-१३)

एकैकशोऽङ्गानि धियाऽनुभावयेत्पादादि यावद्धसितं गदाभृतः।
जितं जितं स्थानमपोह्य धारयेत्परं परं शुध्यति धीर्यथा यथा ॥ इति।

**अखण्डा** समग्रावयवविषयिणी स्मृतिर्ध्यानमित्युच्यत इत्यर्थः। अथवा

**खण्डस्मृतिः** खण्डा विच्छिन्नस्मृतिः । किंचित्कालं स्मृतिः किंचित्कालं तदभाव इति यावत् । धारणा स्यात् । खण्डध्यानार्थं प्रयत्नकरणे बहुकालानुवृत्ता स्मृतिः ध्यानमित्युच्यत इत्यर्थः । 'नैरन्तर्यं मनोवृत्तेध्यानमित्युच्यते बुधैः' (ब्र.सू.भा.४-१-८) इति सूत्रभाष्योक्तेः ।।

**अप्रयत्नात्** ध्यानार्थं प्रयत्नमकृत्वाऽपि प्राप्ता सततानुवृत्ता विशिष्टाङ्गस्मृतिः समाधिरित्यर्थः । 'समाधिरप्रयत्नेन मनसः संसृतिर्भवेत्' (भागा.ता.३-२८-६) इति कौर्मोक्तेः । तत्र धारणाध्यानयोः समाधिद्वारैवापरोक्षज्ञानसाधनत्वम् । समाधिस्तु साक्षादेवेत्या-शयेनाह– **दर्शनमिति ।। चिरया** प्रयत्नं विनैव बहुकालमनुवृत्तया समाधिसंज्ञया स्मृत्या **दर्शनं** अपरोक्षज्ञानं भवतीत्यर्थः । ननु धारणादीनां वासनामयवस्तु-विषयत्वेन तैस्तदन्यब्रह्मविषयापरोक्षज्ञानं कथम् । श्रवणमननधारणादीना-मेकविषयत्वं च कथम् । श्रवणमननयोर्ब्रह्मविषयत्वात् । धारणादीनां वासनामयप्रतिमाविषयत्वादिति चेत् । सत्यम् ।

पश्यन्ति परमं ब्रह्म चित्तेयत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ।
तदुपासनं च भवति प्रतिमोपासनं यथा ।। (ब्र.सू.भा.३-२-३७)

इति वचनात् प्रतिबिम्बस्यान्यत्वेऽपि तत्रत्यबिम्बमादाय ब्रह्मविषयत्वं फलप्रदत्वमेकविषयत्वं युज्यते ।

एवं निदिध्यासनादिविशेषध्यानस्यापरोक्षसाधनस्यापि अपरोक्षज्ञानसाधनत्वं समुपपादितम् । इदानीं निदिध्यासनाविशेषस्य विष्णुशास्त्रावमर्शनरूपस्याप्य-परोक्षज्ञानसाधनत्वमितिकर्तव्यताकथनपूर्वकमाह– **अथवेति ।। सततं** अविच्छेदेन **शास्त्रावमर्शनेन** शास्त्रावलोडनेन । दर्शनमित्यनुवर्तते । अधिकारिविशेषपरमिदम् ।। १७१ ।।

**गु.दी.–** निदिध्यासनया अपरोक्षदृशिर्भवेदित्युक्तम् । सा च निदिध्यासना त्रिविधा । धारणा ध्यानं समाधिश्चेति । तेषां त्रयाणां क्रमेण लक्षणान्याह— **खण्डस्मृतिरित्यादिना ।। खण्डा** विच्छिन्ना कादाचित्केति यावत् । किञ्चित्कालं

स्मृतिः किञ्चित्कालं विस्मृतिरित्यर्थः। खण्डस्य एकैकाङ्गस्य स्मृतिश्च धारणा स्यात्। **स्मृतिः** मानसापरोक्षज्ञानम्। 'मानसप्रत्यक्षजा स्मृतिः' इत्युक्तेः (प्र.ल.)। तथा च श्रवणादिजनितवासनामयैकैकावयवस्य विच्छिन्नमानसापरोक्ष-ज्ञानं धारणेति लक्षणमुक्तं भवति। यथोक्तं भागवते- 'स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम्' इति (भा.३-२९-६)। स्वस्य स्वतन्त्रस्य धिष्ण्यानां अवयवानामेकदेशे इन्द्रियधारणं धारणेति तदर्थः ॥ **अखण्डेति** ॥ अविच्छिन्ना प्रयत्नानन्तरं बहुकालानुवृत्तेति यावत्। समग्रावयवविषयिणी **स्मृतिः** मानसापरोक्षं ध्यानमित्यर्थः। 'नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः' (ब्र.सू.भा. ४-१-८) इति भाष्यात्। ज्ञानमेव ध्यानम्। तच्च परोक्षमपरोक्षं च। यथोक्तं तत्त्वप्रकाशिकायां 'अविच्छिन्नापरोक्षज्ञानसन्ततिर्हि ध्यानम्' इति। 'श्रवणवासनादिजनितमानसवासनामयस्य वस्तुनो मनसा अवलोकनं ध्यानमित्यङ्गीकारात्' इति सुधायां च। न चैकस्य परोक्षत्वापरोक्षत्वव्याघातः। व्यवसायानुव्यवसायन्यायेन वासनामयवस्त्वंशे अपरोक्षस्यैव ब्रह्मांशे परोक्षत्वोपपत्तेः।

अत्र केचित्। मनःस्पन्दो ध्यानमिति। तन्न। उक्तवचनविरोधात्। ऐन्द्रियकत्वविरोधात् सविषयकत्वविरोधाच्च। कथं तर्हि 'पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवत्' (ब्र.सू.३-३-४६) इति सूत्रनिर्देशः? 'ध्यानं हि मानसी क्रिया' इति टीकाकृदुक्तिश्च इति चेत्। न। क्रियाशब्दस्य कार्यार्थत्वात्। अन्यथा 'सङ्कल्पः कर्म मानसम्' (अ.को.१-५-९३) इति वचनात् तस्यापि क्रियात्वापत्तौ 'सङ्कल्पादेव च तच्छ्रुतेः' इति (ब्र.सू.४-४-८) सूत्रविरोधात्।

॥ **अप्रयत्नादिति** ॥ ध्यानार्थं प्रयत्नमकृत्वाऽपि प्राप्ता समग्राङ्गस्मृतिः समाधिरित्यर्थः। यथोक्तं तृतीयस्कन्धभागवततात्पर्ये– 'समाधिरप्रयत्नेन मनसः संस्थितिर्भवेत्' (भा.ता.३-१९-६) इति। न चात्र 'ध्यानसमाध्योरनति-भिन्नत्वाद्ध्यानशब्देन समाधिरपि गृह्यते' इति उपासनापादीयसुधाविरोधः शङ्क्यः। अखण्डस्मरणस्योभयत्राविशिष्टतयाऽभेदोक्तिस्तत्र। वस्तुतस्तु भेद एव। अत एवानतिभिन्नत्वादिति तत्रोक्तम्। अन्यथाऽभिन्नत्वादित्येवावक्ष्यदिति ज्ञेयम्।

निदिध्यासनाविशेषध्यानस्यापरोक्षज्ञानसाधनत्वमुपसंहरन् निदिध्यासनाविशेषयोर्धारणाध्यानयोस्तद्(निदिध्यासना)विशेषसमाधिद्वारैवापरोक्षसाधनत्वं समाधेस्तु बहुकालानुवृत्तायाः साक्षादेवेत्याशयेनाह– **दर्शनमिति।।** **चिरया** बहुकालानुवृत्तया **अनया** समाध्याऽप्रयत्नस्मृत्या दर्शनं भविष्यतीति सम्बन्धः। ननु 'तथाऽन्यत्' इति (ब्र.सू.३-२-३७) सूत्रे चित्ते प्रतीतस्य प्रतिबिम्बस्य ब्रह्मत्वप्रतिषेधेन 'नेदं यदिदमुपासते' इति श्रुत्या च ब्रह्मणो ध्यानविषयत्वप्रतिषेधादन्यविषयैर्धारणादिभिरन्यविषयकमपरोक्षज्ञानरूपफलं कथमिति चेत्, न। प्रतिबिम्बस्याब्रह्मत्वेऽपि तत्रत्यस्य ब्रह्मत्वात् तदादाय समानविषयत्वं सम्भवति। यथोक्तम्—

ब्रह्मैव प्रतिबिम्बे यतिस्तेषां फलप्रदम्।
तदुपासनं च भवति प्रतिमोपासनं यथा ।। इति (ब्र.सू.भा.३-२-३७)।

पूर्वं 'तस्माच्छास्त्रावमर्शनम्' (तं.सा.४-१३८) इति शास्त्राभ्यासस्य ध्यानादुत्तमत्वमुक्तम्। तदयुक्तम्। तस्य ध्यानाङ्गत्वादिति केचिद्वदन्ति। तन्न। तदङ्गत्वेऽपि स्वतन्त्रोपासनत्वस्याप्यङ्गीकारात्।

सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी।
ध्यानरूपा परा चैव.........।। (अनु.व्या.३-३-श्लो३६) इति वाक्यात्।

ननु तर्हि शास्त्राभ्यासे ध्यानसाधारणं धारणादिव्यावृत्तं किमुपासनाशब्दप्रवृत्तौ निमित्तं, यद्योगात् तत्रोपासनाशब्दो मुख्य इत्यत आह— **अथवेति ।।** निरन्तरशास्त्रार्थविचारेण भविष्यति दर्शनमिति वर्तते। ब्रह्मसाक्षात्कारहेतुत्वमुपासनाशब्दप्रवृत्तौ निमित्तम्। इदं चाधिकारिविशेषाभिप्रायेण। उपलक्षणं चैतत्। चित्तवृत्तिनिरोधत्वं च द्रष्टव्यम्। इदं च सर्वसाधारणमुपासनाशब्दप्रवृत्तिनिमित्तं शास्त्राभ्यासेऽस्तीति तस्योपासनाशब्दवाच्यत्वमिति भावः ।। १७१ ।।

**मङ्काली—** एवं ध्यानाङ्गं यमनियमादिकं प्रसङ्गतस्सविस्तरं निरूप्य ध्यानरूपोपासनायाः स्मृतिविशेषत्वाल्लक्षणकथनपूर्वकं स्मृतिविभागमाह– **खण्डस्मृतिरिति ।।** श्रवणदर्शनादिजनितवासनामयवस्तुनः मनसाऽवलोकनं स्मृतिः। तादृशी स्मृतिर्द्वेधा खण्डस्मृतिरखण्डस्मृतिश्चेति। अखण्डस्मृतिर्द्वेधा ध्यानरूपा

समाधिरूपा चेति। तत्र **खण्डस्मृतिः** खण्डस्यैकैकावयवस्य स्मृतिर्धारणा स्यात्। तदुक्तं द्वितीयस्कन्धे– (२-२-१३)

एकैकशोंगानि धिया विभावयेत् पादादि यावद्धसितं गदाभृतः ।
जितं जितं स्थानमपोह्य धारयेत्परं परं शुद्ध्यति धीर्यथा यथा ।। इति ।

**अखण्डा** समग्रावयवविषयिणी स्मृतिर्ध्यानमित्युच्यत इत्यर्थः। अथवा **खण्डस्मृतिः** खण्डा विच्छन्ना स्मृतिः । किञ्चित्कालं स्मृतिः किञ्चित्कालं तदभाव इति यावत् । **धारणा स्यात्** अखण्डध्यानार्थं प्रयत्नकरणे बहुकालानुवृत्ता स्मृतिः ध्यानमित्युच्यत इत्यर्थः। 'नैरंतर्यं मनोवृत्तेः ध्यानमित्युच्यते बुधैः' (ब्र.सू.भा.४-१-८) इति सूत्रभाष्योक्तेः । **अप्रयत्नात्** ध्यानार्थं प्रयत्नमकृत्वापि प्राप्ता सततानुवृत्ता विशिष्टाङ्गस्मृतिः समाधिरित्यर्थः। 'समाधिरप्रयत्नेन मनसः संस्मृतिर्भवेत्' (भागा.ता.३.२८.६) इति कौर्मोक्तेः। तत्र धारणाध्यानयोः समाधिद्वारैवापरोक्षज्ञानसाधनत्वं समाधेस्तु साक्षादेवेत्याशयेनाह– **दर्शनमिति ।। चिरया** प्रयत्नं विनैव बहुकालमनुवृत्तया समाधिसंज्ञया स्मृत्या **दर्शनम**परोक्षज्ञानं भवतीत्यर्थः। ननु धारणादीनां वासानामयवस्तुविषयत्वेनैतैस्तदन्यब्रह्मविषयकापरोक्षज्ञानं कथम् ? श्रवणमननधारणादीनामेकविषयकत्वं च कथं ? श्रवणमननयोः ब्रह्मविषयकत्वात्। धारणादीनां वासनामयप्रतिमाविषयकत्वादिति चेत्सत्यम् ।

पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिविम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ।।
तदुपासनं च भवति प्रतिमोपासनं यथा ।। (ब्र.सू.भा.३-२-३७)

इति वचनात् प्रतिबिम्बस्यान्यत्वेऽपि तत्रत्यबिम्बमादाय ब्रह्मविषयकत्वं फलप्रदत्वमेकविषयकत्वं च युज्यते। एवं निदिध्यासनाविशेषविष्णुशास्त्रावमर्शनस्याप्यपरोक्षज्ञानसाधनत्वमितिकर्तव्यताकथनपूर्वकमाह– **अथवेति ।। सततम**विच्छेदेन शास्त्रावमर्शनेन शास्त्रावलोकनेन दर्शनमित्यनुवर्तते। अधिकारिविशेषपरमिदम् ।। १७१ ।।

भगवद्भक्तेरेव अपरोक्षज्ञान-भोग-मोक्षान् प्रति परमसाधनत्वकथनम्

**तं.सा. परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् ।**
**सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः ।। १७२ ।।**

**त.क.–** ननु तथापि 'अपरोक्षदृशिर्निदिध्यासनया भवेत्' इति न युक्तम् । भक्तेरेव तत्साधनत्वेनोक्तेरित्याशङ्कामङ्गीकारेण परिहरति— **परमेति ।।** भक्तिर्ज्ञानस्य साधनं भवेदेव । अङ्गीकृतमेवेति यावत् । ननु 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत्'(अनु.३.३.१) इति भक्तेरुपासनासाधनत्वमेवोक्तं, न ज्ञानसाधनत्वमित्यतोऽत्र विवक्षितं भक्तिस्वरूपमाह— **परमेति ।।** परमस्नेहसंयुक्तयथार्थज्ञानमेव भक्तिरिति विज्ञेया । सा तु ज्ञानं प्रत्येव साधनम् । परमभक्तित्वात् । या त्वपरमभक्तिः सा निदिध्यासनादीन् प्रत्येवेति न विरोध इति भावः ।। १७२ ।।

**अ.सं.–** ननु शास्त्रावमर्शिनामपि मीमांसकादीनां तदभावात् कथं दर्शनसाधनत्वमस्येत्यत आह– **परमेति ।।** अथवा अपरोक्षज्ञानस्य निदिध्यासनाऽमुख्यं साधनम् । मुख्यसाधनं तु श्रीहरिभक्तिरेवेति भावेनाह– **परमेति ।।** सुदृढस्नेहयुतयथार्थमाहात्म्यज्ञानादित्यर्थः । भवेद्दर्शनमित्यनुवर्तते । तर्हि भक्तिसाध्यत्वोक्तिविरोध इत्यत आह– **सेति ।।** यत् परमस्नेहसंयुक्तयथार्थज्ञानं सा भक्तिरिति विज्ञेया । अतो न विरोधः । न केवलं दर्शनस्यैव मुख्यसाधनं भक्तिः । किन्तु तत्साध्यमोक्षस्य तद्गतानन्दभोगस्यापीत्याह– **साधनमिति ।। एषैव** भक्तिरेव भोगमोक्षयोर्मुख्यं साधनमित्यन्वयः ।। १७२ ।।

**गु.दी.—** ननु शास्त्रावमर्शेन दर्शनं भवतीत्युक्तम् । तदयुक्तम् । निरन्तरशास्त्रार्थविचारकाणां मीमांसकानां तददृष्टेरित्याशङ्क्य परमस्नेहसंयुक्तयथार्थज्ञानिनामेवात्र विवक्षितत्वात्तेषां च निरीश्वरवादित्वेन तदभावादित्यभिप्रेत्य भक्तिस्वरूपकथनपूर्वकं भक्तिरेव ज्ञाने प्रधानसाधनमित्याह— **परमेति ।।** भवेद्दर्शनमिति वर्तते । सेति विधेयलिङ्गम् ।। 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इतिवत् । **सा** यथार्थज्ञानमेव भक्तिरिति विज्ञेया । न केवलं दर्शनस्यैव

मुख्यसाधनं भक्तिः, किन्तु तत्साध्यमोक्षस्य मुक्तावानन्दभोगस्यापीत्याह— **साधनमिति ।।** एषैव भोगमोक्षयोर्मुख्यसाधनमिति सम्बन्धः ।। १७२ ।।

**मङ्गाली–** ननु शास्त्रावमर्शिनामपि मीमांसकानां तदभावात्कथं दर्शनसाधनत्वमेवस्येत्यत आह– **परमेति ।।** अथवाऽपरोक्षज्ञानस्य निधिध्यासनाऽमुख्यं साधनम् । मुख्यसाधनं तु श्रीहरिभक्तिरेवेति भावेनाह– **परमेति ।।** सुदृढस्नेहयुतयथार्थमाहात्म्यज्ञानात् इत्यर्थः । भवेत् दर्शनमित्यनुवर्तते । तर्हि भक्तिसाध्यत्वोक्तिविरोध इत्यत आह– **सेति ।।** यत् परमस्नेहयुतयथार्थज्ञानं सा भक्तिरिति विज्ञेया । अतो न विरोधः । न केवलं दर्शनस्यैव मुख्यसाधनं भक्तिः किन्तु तत्साध्यमोक्षतज्ज्ञनान्दभोगयोरपीत्याह– **साधनमिति ।। एषैव** भक्तिरेव भोगमोक्षयोः मुख्यसाधनमित्यन्वयः ।। १७२ ।।

परमभक्तेः साधनेषु उत्तमत्वसमर्थनम्

तं.सा. **मुख्यमेषैव नान्यत् स्यात् सर्वं व्यर्थं तया विना ।**
**सैकाऽप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ।। १७३ ।।**

**दर्शनं च तया हीनं व्यर्थमन्यत् किमुच्यते ।**
**योग्यं तु दर्शनं नैव तया हीनं भविष्यति ।। १७४ ।।**

**त.क.–** ननु तर्हि—

अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।
सम्यङ् निश्चिततत्त्वस्य निदिध्यासनया भवेत् ।। (तं.सा.४-१४५,१४६)

इत्येतत् कथं न व्याहतमित्यत आह– **मुख्यमिति ।। एषा** भक्तिर्**मुख्यं साधनं** प्रधानं साधनमेव, न तु निदिध्यासनवदप्रधानसाधनम् । तथाच यज्ञादिक्रियापेक्षया श्रवणादित्रिकं मुख्यं साधनम् । तदपेक्षया भक्तिरेव मुख्यसाधनम् । अमुख्यसाधनेषु श्रवणादित्रिकं साधनमुक्तम् । भक्तिस्तु मुख्यं साधनमिति न व्याहतिः । यद्यपि—

श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।
साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।। (ब्र.सू.भा.१-१-१)

इत्यादौ भक्तेः समकक्ष्यत्वमेवोच्यते । तथापि परमस्नेहसंयुक्तमाहात्म्यज्ञानरूपा भक्तिस्तत्र नोच्यते । किन्तु स्नेहमात्रघटिता । सा तु न मुख्यसाधनम् । तदिदमाह – **नान्यत् स्यादिति ।।** श्रवणादेर्विवक्षितभक्त्यपेक्षयाऽमुख्यत्वेऽपि यज्ञाद्यपेक्षया मुख्यत्वाच्च ।

कैमुतिकन्यायेन भक्तेः सर्वसाधनोत्तमत्वं साधयति— **भोगमोक्षयोरिति ।।** भोगकाले मोक्षकालेऽप्येषा भक्तिरनुवर्तते, फलरूपत्वात् तदा किमु वक्तव्यं साधनोत्तमत्व इति भावः । अन्वयव्यतिरेकाभ्यां च मोक्षहेतुत्वोक्त्या साधनोत्तमत्वं साधयति— **सर्वमिति ।।** वैराग्यादि ज्ञानान्तं सर्वसाधनं परमभक्त्या विना **व्यर्थम्** मोक्षसाधनं न भवति । सैकेत्यन्वयोक्तिः । असहायाऽपि भक्तिरभीष्टफलदा । तदेवोपपादयति— **मोक्ष इति ।।** यद्यपि दर्शनयुक्तया मोक्षो भवति । तथापि दर्शनं तया हीनं चेद् व्यर्थमेव । अतोऽसहायैव भक्तिर्मोक्षदेत्युच्यते । दर्शनस्यावर्जनीयसन्निधिमात्रत्वेन भक्तेरेव मुख्यतः प्रयोजकत्वादिति भावः । अतो वैराग्यादिसाधनं तया हीनं चेद् व्यर्थमेवेति किमुच्यत इत्यर्थः । ननु 'दर्शनं च तया हीनं व्यर्थम्' इत्ययुक्तम् । भक्तिहीनस्य दर्शनस्यैवानुपपत्तेरित्यत आह— **योग्यमिति ।। योग्यं दर्शनं** स्वबिम्बापरोक्षं **तया** परमभक्त्या हीनं न भवतीत्येव । न तु दर्शनमात्रम् । अपक्वभक्तेरपि सामान्यदर्शनमुपपन्नमेव । 'सामान्यदर्शनाल्लोकाः' (ब्र.सू.भा.३-३-५३) इत्युक्तेः । महरादिलोकप्राप्तिसाधनापरोक्षस्यापरिपक्वभक्त्याऽपि सम्भवेन तया लोकमात्रप्राप्तावपि परिपक्वभक्त्या विना सामान्यदर्शनस्य विवक्षितलिङ्गभङ्गाद्यसाधनत्वात् व्यर्थमित्युक्तमिति भावः । एतेन शास्त्रावमर्शनशीलानां मीमांसकादीनां ज्ञानानुदयाच्छास्त्रावमर्शनस्य तत्साधनत्वमयुक्तमिति चोद्यं निरस्तम् । तेषां भक्तिमात्रस्याप्यभावेन सुतरां परमभक्तिशून्यत्वात् । तदेवं मन्त्रार्थावमर्शनस्य विष्णुशास्त्रावमर्शनरूपत्वात्, तस्य च ध्यानसमकक्ष्यत्वात्, परमभक्तिव्यतिरिक्तसाधनेष्वुत्तमत्वाच्च मन्त्रोद्धारणमत्यावश्यकमिति सिद्धम् ।। १७३,१७४ ।।

**अ.सं.**– मुख्यत्वमेव व्यतिरेकेणान्वयेन विवृणोति– **नान्यदिति ।। अन्यत्** भक्तेरन्यत् मुख्यं साधनं न । तद्विवृणोति– **सर्वमिति ।। तया** भक्त्या विना भक्त्यभावे इति यावत् । **सर्वं** कर्मादिकं **व्यर्थं** निष्फलं भवेदिति शेषः । **सा** भक्तिरेकाऽप्यभीष्टफलदा स्यात् । तदुक्तं बृहद्भाष्ये–

> ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः ।
> तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ।।
>
> द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम् ।
> सर्वं भक्त्यर्थमुद्दिष्टं निष्फलं यत्तया विना ।
> विष्णुभक्तियुतो मुक्तिं याति नान्यः कथञ्चन ।। इति । (बृ.उ.भा.३-५-३)

भक्तेर्मुक्तिसाधनत्वं यदुदितं तत्केवलायाः किमित्यतो नेति भावेनाह– **मोक्ष इति ।। दर्शनयुक्तया** अपरोक्षज्ञानयुक्तया भक्त्या मोक्षो भवेदित्यर्थः ।।

भक्तियुक्तदर्शनस्यैव मोक्षसाधनत्वं न केवलस्येत्याह– **दर्शनं चेति ।। तया** भक्त्या हीनं **दर्शनं च** अपरोक्षज्ञानमपि द्वेषिणामवतारापरोक्षदर्शनमिव व्यर्थम् । **अन्यत्** कर्मादिकं **किमुच्यते** व्यर्थमिति किं वक्तव्यमित्यर्थः । ननु भक्त्यभावेऽपरोक्षज्ञानमेव नोत्पद्यते । तत्कथमुच्यते 'दर्शनं च तया हीनं' इत्यत आह– **योग्यमिति ।। तया** भक्त्या हीनं चेत् तस्य योग्ययावद्भक्त्यभाव इति यावत् । **योग्यं तु दर्शनं** योग्यापरोक्षं नैव भविष्यतीत्यर्थः । तथाच सामान्यदर्शनं स्वयोग्ययावद्भक्त्यभावेऽपि संभवतीति भावः । यद्वा अवतारदर्शनमिव योग्य-दर्शनमपि भक्त्या विना भवति किं? नेत्याह– **योग्यं त्विति** ।। १७३,१७४ ।।

**गु.दी.**– मुख्यत्वमेव व्यतिरेकेणोपपादयति— **नान्यदिति ।।** मुख्यं साधनमिति वर्तते । ननु कर्मण एव मुख्यसाधनत्वान्नान्यदिति कथमित्याशङ्कां परिहरन्नेतदेव विवृणोति— **सर्वमिति ।। तया** भक्त्या विना **सर्वं** सर्वकर्मादि **व्यर्थं** विगतार्थं विरुद्धार्थं चेत्यर्थः । परमस्नेहरूपभक्त्यभावे मोक्षाभावाद्विगतार्थं नरकाद्यनर्थहेतुत्वाद्विरुद्धार्थं चेति भावः । ननु किं भक्तिरपि कर्मादिना विना व्यर्थेत्याशङ्कामपनुदन् प्रसङ्गाद्भक्तेः सर्वाभीष्टसाधनत्वमप्याह— **सैकाऽपीति ।।**

**एका** कर्मादिनिरपेक्षा अभीष्टफलदाऽपीति सम्बन्धः। भक्तेर्मोक्षे मुख्यसाधनत्वमुदितम्। तत्किं केवलाया इत्यतः नेति भावेनाह– **मोक्ष इति ॥** भवेदिति शेषः। **दर्शनयुक्तया।** दर्शनं योग्यबिम्बसाक्षात्कारः बिम्बैक्य-साक्षात्कारश्च। तद्युक्तया भक्त्या मोक्षो भवेदित्यर्थः। सर्वेषां बिम्बसाक्षात्कारा-भावश्चोपासनापादीयभावबोधे 'न सामान्यादप्युपलब्धेः' (ब्र.सू.३-३-५३) इति नये स्फुटः।

ननु किमनया भक्त्या? भगवद्दर्शनमात्रेण वा उपासनादिना वा मोक्षः किं न स्यात्? इति चेत्, सत्यम्। किं नाम भगवद्दर्शनं यद् भक्तिहीनं मुक्तिसाधनं स्यात्? अवतारसाक्षात्काररूपं योग्यसाक्षात्काररूपं वा? नाद्य इत्याह— **दर्शनं त्विति ॥ तया** भक्त्या हीनं **व्यर्थं** विगतार्थं विरुद्धार्थं च।

अयं भावः। अवतारदर्शनं तावन्न मोक्षसाधनम्। 'सामान्यदर्शनाल्लोकाः' (ब्र.सू.भा.३-३-५३) इति वचनात्। इतरलोकहेतुत्वमपि तस्य भक्तिसाहित्येनैव। तया हीनं तु मोक्षेतरप्रयोजनादेरप्यहेतुरिति विगतार्थम्। 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' (भ.गी.९-११) इत्यादिना स्नेहविरुद्धद्वेषसहितस्य तमआद्यनर्थहेतुत्वाद्विरुद्धार्थं च। दृष्टं चैतद्दुर्योधनादाविति। उक्तं च भागवते– 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्' इति (भा.१२-१२-५१)। एवं भक्तिरहितस्यावतारज्ञानिनोऽपि यदा न मोक्षाशा किमुपासनामात्रं कुर्वत इत्याह— **अन्यत्किमिति ॥** उपासनादिकं तया हीनं व्यर्थं मोक्षाख्यप्रयोजनसाधनं नेति किमु वक्तव्यम्। 'नैष्कर्म्यमप्यच्युतभाववर्जितम्' इति (भा.१२-१२-५१) वचनात्। अनेन उपासनादिना वा मोक्षः किं न स्यादिति साधनान्तरशङ्काऽपास्ता। अस्तु तर्हि बिम्बदर्शनं भक्तिरहितं मोक्षहेतुरिति द्वितीयः पक्ष इत्यत आह— **योग्यं त्विति ॥ योग्यं दर्शनं** बिम्बापरोक्षज्ञानं **तया** स्वयोग्यया यावद्भक्त्या **हीनं** रहितं न भविष्यति। तथा च बिम्बदर्शनस्य भक्त्यविनाभूतत्वेन भक्तिहीनं बिम्बदर्शनं मोक्षसाधनमिति व्याहतत्वान्न युक्तमिति भावः ॥ १७३,१७४ ॥

**मङ्गाली–** मुख्यत्वमेव व्यतिरेकान्वयाभ्यामुपपादयति– **नान्यदिति** ।। **अन्यत्** भक्तेरन्यत् मुख्यसाधनम् । तद्विवृणोति– **सर्वमिति** ।। **तया** भक्त्या विना । भक्त्याभावे इति यावत् । **सर्वं** कर्मादिकं **व्यर्थं** निष्फलं भवेदिति शेषः । **सा** भक्तिरेकाप्यभीष्टफलदा स्यात् । तदुक्तं बृहद्भाष्ये–

ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः।
तीर्थकृतजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ।।

द्वादश्यादि व्रतं चैव तुलस्यादेरथार्चनम् ।
सर्वभक्त्यर्थमुद्दिष्टं निष्फलं तत्तया विना ।।
विष्णुभक्तियुतो मुक्तिं याति नान्यः कथंचन ।। इति ।।(बृ.उ.भा.३-५-३)

भक्तेः मुक्तिसाधनत्वं यदुदितं तत्केवलायाः किमित्यतो नेति भावेनाह– **मोक्ष इति** ।। **दर्शनयुक्तया** अपरोक्षज्ञानयुक्तया भक्त्या मोक्षो भवेदित्यर्थः ।।

भक्तियुक्तदर्शनस्यैव मोक्षसाधनत्वं न केवलस्येत्याह– **दर्शनं चेति**।। **तया** भक्त्या हीनं **दर्शनं च** अपरोक्षज्ञनमपि द्वेषिणामवतारापरोक्षदर्शनमिव व्यर्थं । **अन्यत्** कर्मादिकं **किमुच्यते** व्यर्थमिति किं वक्तव्यमित्यर्थः । ननु भक्त्यभावेऽपरोक्षज्ञानमेव नोत्पद्यते । तत्कथमुच्यते दर्शनं च तयाहीनमित्यत आह– **योग्यमिति** ।। **तया** भक्त्या हीनं चेत् स्वयोग्ययावद्भक्त्यभावे इति यावत् । **योग्यं तु दर्शनं** योग्यापरोक्षज्ञानं नैव भवतीत्यर्थः । तथा च सामान्यदर्शनं स्वयोग्ययावद्भक्त्यभावेऽपि सम्भवतीति भावः । यद्वा, अवतारदर्शनमिव योग्यदर्शनमपि भक्त्या विना भवति किं नेत्याह– **योग्यं त्विति** ।। १७३,१७४ ।।

साधनतारतम्येन हरेः फलदातृकथनम्

**त.सा.** **आनन्दचित्सदिति पूर्वगुणैः समस्तैः**
**मर्त्यादिभिर्विधिपरैर्भगवान् क्रमेण ।**
**ध्यातोऽधिकैरधिगुणोऽधिकमेव सौख्यं**
**मुक्तौ ददाति सततं परमस्वरूपः** ।। १७५ ।।

**त.क–** ननु मन्त्रार्थावमर्शनस्य ध्यानरूपत्वं चास्तीति ध्यानं किं ब्रह्मैक्येन ? भेदपक्षेऽपि किं सर्वैरेकेनैव गुणेन ? किमुक्तसर्वगुणैर्वा ? किं वा कैश्चिदल्पैः ? कैश्चित्सकलैः ? अल्पैरित्यत्रापि किं सङ्ख्यानिर्देशेन क्लृप्तैः ? किं वाऽक्लृप्तैः ? इत्याशंक्याह— **आनन्देति ।। मर्त्यो** मनुष्योत्तमः। **विधिश्चतुर्मुखः।** मनुष्योत्तममारभ्य चतुर्मुखान्तैरधिकारिभिः क्रमेणानन्दज्ञानसुखादिभिः समस्तैर्वेदोक्तैर्गुणैः **अधिगुणः** सम्पूर्णगुणोऽपि भगवान् तत्तद्योग्यताक्रमेण **ध्यातः** शास्त्रेऽवमृष्टेऽधिकमेव सान्तत्वसातिशयितत्वादिदोषरहितं वैषयिकसुखाद्विलक्षणमेव सौख्यं मुक्तौ हरिर्ददातीत्यर्थः। अत्र 'अधिगुणः' इत्यनेनैक्यध्यानस्य, 'समस्तगुणैः' इत्यनेन सर्वैरेकेनैवेत्यस्य पक्षस्य, 'क्रमेण' इत्यनेन सर्वैः सर्वैरपीत्यस्य पक्षस्य निषेधः। 'मर्त्यादिभिः' इत्यनेन

सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः ।
यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ।। (अणु.भा.३-४)

इत्युक्तव्यवस्थां सूचयति। अनेनात्रोद्धृतानां मन्त्राणां कलावप्युद्रिक्तवीर्यत्वे क्वचित् फलानुपलम्भः गुरुशिष्ययोरयोग्यत्वात्, गुरुवृत्तेरपूर्तितः, अभ्यासाभावात्, यमाभावात्, नियमाभावात्, आसनाभावात्, प्राणायामाभावात्, प्राणधारणमात्रेऽपि तत्तन्नाडीस्मरणाभावात्, तत्तद्भगवद्रूपस्मरणाभावात्, खण्डस्मृतिरूपधारणासद्भावेऽप्यखण्डस्मृतिरूपध्यानाभावात्, समाध्यभावात्, परमस्नेहाभावाद्वा उपपन्न इति सिद्धमेतेषां मन्त्राणामुक्तफलत्वमित्युक्तं सर्वमुपपन्नमेव ।। १७५ ।।

**अ.सं.–** तारतम्येण गुणोपसंहारपूर्वकं ध्यायतामधिकारिणां भगवान्नारायणो तारतम्येन मुक्तौ परमसुखं प्रददातीत्याह– **आनन्देति ।।** भगवान् मुक्तौ सौख्यं ददातीत्यन्वयः। तत्सर्वेषां सामान्येन ददाति किमित्यतो नेत्याह– **क्रमेणाधिकमिति ।।** तर्हि वैषम्यनैर्घृण्ये स्यातामित्यत उक्तम्– **मर्त्यादिभिः विधिपरैरिति ।।** समस्तैरधिकारिभिः क्रमेणाधिकं ध्यात इति । **विधिपरैः** चतुर्मुखान्तैरित्यर्थः। **ध्यातः** उपासित इत्यर्थः। केन प्रकारेण उपासित इत्युक्तम्– **आनन्देति ।।** आनन्दः चित् ज्ञानं सत् सत्वं निर्दुष्टत्वमात्मत्वं च

ग्राह्यम् । तदर्थं स्वामित्वमित्येते गुणा एव पूर्वे एषां गुणानां तैर्गुणैः क्रमेणाधिकैः बहुभिः सहितत्वेन ध्यात इत्यर्थः । मनुष्योत्तमैः सच्चिदानन्द आत्मेति चतुर्भिर्गुणैः ध्यातः तदुत्तमैस्तु क्रमेण स्वस्वयोग्यबहुगुणैर्ध्यातः । ब्रह्मणा त्वखिलवेदोक्त-गुणैरुपासित इति विवेको ज्ञेयः । तथा च साधनानुसारेण फलदातृत्वादी-श्वरस्योपासालक्षणसाधनस्य च क्रमिकत्वात् न भगवतो वैषम्यादिदोष इति भावः । ननु साधनतारतम्यस्यापीश्वरायत्तत्वाद्वैषम्यादि-तादवस्थ्यमित्यतः **क्रमेणाधिकैरि**ति विशेषणम् । तथा चाधिकारापरनामकयोग्यतायास्तेषु तारतम्येन विद्यमानत्वात् तदनुसारेण फलदातुर्हरेनोक्तदोष इति भावः । तादृशयोग्यताया अपि तदधीनत्वेन पुनर्वैषम्यादितादवस्थं तु–

वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् ।
नाङ्गीकार्यमतोऽयं तु न वैषम्यादिनामकम् ।। (अनु.२-१-११२)

इत्यनुव्याख्याने निरस्तम् । ननु मोक्षानन्दस्य नित्यत्वादपुरुषार्थत्वं स्यात् इत्यतः **सततम्** अविनाशीति सौख्यविशेषणम् । सततं ददातीति वा सम्बन्धः । ननु तस्य तादृशगुणाभावे कथं ध्यानमित्यत आह– **अधिगुणो इति** ।। अधिकाः सर्वोत्कृष्टाः गुणाः ज्ञानानन्दादयो यस्य स तथोक्तः । नन्वीश्वरस्य कथं गुणा इत्यत आह– **परमेति** ।। परमं स्वस्वरूपभूतं शरीरं यस्य स तथोक्तः ।। १७५ ।।

**गु.दी.–** एवमुक्तैः भक्त्यादिभिः साधनैः प्रसन्नो भगवानेव मोक्षादिप्रद इत्येतमर्थमुपपादयन्न सर्वेषामधिकारिणां साम्येनानन्दः किन्तु तरतमभावेनेति सहेतुकं दर्शयति– **आनन्देति** ।। भगवानेव मर्त्यादिभिः ब्रह्मान्तैः क्रमेणाधिकैः अधिकारिभिः **आनन्दचित्सदितिपूर्वगुणैः** आनन्दः सुखं चित् ज्ञानं सत् सत्वं निर्दुष्टत्वमित्येते गुणा एव पूर्वे येषां गुणानां तैः स्वामित्वादिगुणैः **ध्यातः** गुणसहितत्वेन ध्यातः सन्मुक्तौ तेषां क्रमेणाधिकमेव सौख्यं **सततं** सर्वकालेष्वपि ददाति । अत्र मर्त्यशब्दोक्तमनुष्योत्तमैरानन्दचित्सदिति गुणाः, **आदि**शब्दोक्तेषु स्वामित्वमेकमित्येवं गुणचतुष्टयमुपास्यम् । तथा चोक्तम् 'आनन्दादयः

प्रधानस्य' (ब्र.सू.३-३-१२) इत्युपासनापादीयसूत्रभाष्ये– 'सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता' इति । 'सत्वं निर्दोषत्वम् । तच्च ज्ञानानन्दादौ सर्वापेक्षितं फलम् । आत्मपदोदितस्वामित्वं तु स्वसम्बन्धानुस्मरणस्य भगवत्प्रीति-साधनत्वादुपास्यम्' इति तत्त्वप्रकाशिकायां च । एतेनात्मत्वमात्रोपासकस्य स्वामित्वाभावात् किं तदुपासनेनेति शङ्काऽपहस्तिता । तदुत्तमैः सर्वैः क्रमेणाधिकैः वहुगुणैः ब्रह्मणा त्वखिलश्रुत्युक्तैस्तदनुक्तैः सम्प्रदायागताखिलगुणैश्च ध्यात इति विवेकः ।। तदुक्तम्–

सर्वैर्गुणैर्ब्रह्मणा च समुपास्यो हरिः सदा ।
आनन्दो ज्ञः सदात्मेति ह्युपास्यो मानुषैर्हरिः ।।
यथाक्रमं गुणोद्रेकात् तदन्यैराविरिञ्चतः ।।

(म.ता.नि. १-९२,९३) इति भारततात्पर्यनिर्णये ।

तृतीयाध्यायगीताभाष्ये च–

अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।
सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायागताश्च ये ।।

सर्वैस्तैः सह विज्ञाय ये पश्यन्ति जनार्दनम् ।
तेषामेव भवेन्मुक्तिः.........।। इति (गी.भा.३-४३) ।

'वेदाद्यनुक्ता अपि भगवत्सम्प्रदायागताः' (गी.भा.प्र.दी.३-४३) इति प्रमेय-दीपिकायाम् ।

सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः ।
यथाक्रमं वहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ।। (अणु.भा.३-४) इति चान्यत्र।

अत्र गुणग्रहणं क्रियारूपयोरुपलक्षणम् । ब्रह्मा सर्ववेदोदितैर्गुणक्रियारूपैरुपास्ते । सरस्वती सर्ववेदोक्तगुणोपेततयाऽनन्तरूपं हरिमुपास्ते । त्रिविक्रमत्वादिक्रिया नित्यविक्रान्त्यादिष्वन्तर्भावयति । रुद्रः समस्तरूपाण्युपास्ते । गुणान् क्रियांश्च सङ्कोचयति । शक्रादयः सर्वे रूपाणि गुणान् क्रियाश्च सङ्कोचयन्तीति द्रष्टव्यम् ।

यथोक्तमनुव्याख्याने—

ब्रह्मा सर्वगुणैश्चैव क्रियासामान्यतश्च गीः ।

गुणसामान्यतो रुद्रो रूपसामान्यतः परे ।। (अनु.व्या.३-३-२९) इति ।

भगवत एव तद्दातृत्वं कुत इत्यतस्तस्य सर्वोत्तमत्वादित्याह— **अधिगुण इति ।।** सवोत्तमत्वं च कादाचित्कं चेत्तर्हि कदाचिदेव तस्य मोक्षदातृत्वं स्यादित्यतः **सततमिति** अधिगुणस्यापि विशेषणम् । **सततं** सन्ततम् अधिगुणः । न राजादेर्द्रव्यादिदानवत्परमात्मनः सुखदानं किन्त्वतिविलक्षणमित्येतदर्थं सततमित्येतद्ददातीत्यनेनापि सम्बध्यते । तथा च **सततं ददाति** प्रतिक्षणं ददाति । प्रतिक्षणमपि सुखादिसत्तानियमनपूर्वकं तस्यानुभूयमानत्वादिकं ददातीति भावः ।

नन्वीश्वरस्य देहोऽस्ति न वा? द्वितीये ज्ञानादिगुणाभावेनाधिगुणत्वायोगः । ज्ञानस्येन्द्रियापेक्षत्वात् । इन्द्रियाणां च शरीरसंयुक्तत्वनियमात् । अस्ति चेज्जननमरणादिमत्त्वेन मौक्तसुखदानानुपपत्तिरित्यत उक्तं— **परमस्वरूप इति ।।** प्रकृत्याद्यकार्यत्वेन परमं स्वं स्वाभिन्नं रूपं विग्रहः यस्य स **परमस्वरूपः ।** तथा च देहवत्त्वादिधगुणस्तस्य च देहस्य प्रकृत्याद्यकार्यत्वेन तदभिन्नत्वाज्जननादिदोषाभावश्चेति भावः ।। १७५ ।।

**मङ्गाली–** तारतम्येन गुणोपसंहारापूर्वकं ध्यायतामधिकारिणां भगवान् तारतम्येन मुक्तौ परमसुखं प्रददातीत्याह– **आनन्देति ।।** भगवान् मुक्तौ सौख्यं ददातीत्यन्वयः । सर्वेषां साम्येन ददाति किमित्यतो नेत्याह– **क्रमेणाधिकं यथा भवति तथा ददातीति ।।** तर्हि वैषम्यनैर्घृण्ये स्यातामित्यत उक्तम्– **मर्त्यादिभिः विधिपरैः समस्तैरधिकारिभिः क्रमेणाधिकं ध्यात इति ।। विधिपरैश्च**-तुर्मुखान्तैरित्यर्थः । **ध्यातः** उपासित इत्यर्थः । केन प्रकारेणोपासित इत्यत उक्तम्– **आनन्देति ।।** आनन्दः चित् ज्ञानं सत् सत्वं निर्दुष्टत्वं आत्मत्वं च ग्राह्यं । तदर्थः स्वामित्वं एत्येते गुणा एव पूर्वे एषां गुणानां तैर्गुणैः क्रमेणाधिकैर्बहुभिः सहितत्वेन ध्यात इत्यर्थः । मनुष्योत्तमैः सच्चिदानन्द

आत्मेति चतुर्भिर्गुणैर्ध्यातः । तदुत्तमैस्तु क्रमेण स्वस्वयोग्यबहुगुणैर्ध्यातः । ब्रह्मणा तु अखिलवेदोक्तैर्गुणैरुपासित इति विवेकः । तथा च साधनानुसारेण फलदातृत्वादीश्वरस्य उपासनालक्षणस्य साधनस्य च क्रमिकत्वात् न भगवतो वैषम्यादिदोष इति भावः । ननु साधनतारतम्यस्यापीश्वरायत्तत्वाद्वैषम्यादि तादवस्थ्यमित्यतः **क्रमेणाधिकैः**रित्यधिकारिविशेषणम् । तथा चाधिकारापर-नामकयोग्यतायाः तेषु तारतम्येन विद्यमानत्वात् तदनुसारेण फलदातुर्हरेर्नोक्तदोष इति भावः । तादृशयोग्यताया अपि तदधीनत्वेन पुनर्वैषम्यादितादवस्थ्यं तु–

वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् ।
नाङ्गीकार्यमतोऽन्यं तु न वैषम्यादि नामकम् ।। (अनु.२-१-११२)

इत्यनुव्याख्याने निरस्तम् । ननु मोक्षानन्दस्य नित्यत्वादपुरुषार्थत्वं स्यादित्यतः सततमविनाशीति सौख्यविशेषणम् । सततं ददातीति वा सम्बन्धः । ननु तस्य तादृशगुणाभावे कथं ध्यानमित्यत आह– **अधिगुण इति** ।। अधि अधिकाः सर्वोत्कृष्टाः गुणाः ज्ञानानन्दादयो यस्य स तथोक्तः। नन्वशरीरस्य कथं गुणा इत्यत आह– **परमेति** । परमं स्वं स्वरूपभूतं रूपं शरीरं यस्य स तथोक्तः ।। १७५ ।।

तन्त्रसारग्रन्थस्य आप्तिमूलत्वसमर्थम्

**तं.सा.** **निर्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।**
**ब्रह्मणे कथितात्तन्त्रसारादुद्धृत्य सादरम् ।। १७६ ।।**

**आनन्दतीर्थमुनिना कृतो ग्रन्थोऽयमञ्जसा ।**
**ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।**
**किमु ज्ञानादनुष्ठानादुभयस्मात् पुनः किमु ।। १७७ ।।**

**त.क.–** तन्त्रसारोक्तत्वाच्चोक्तं सर्वं श्रद्धेयमिति भावेन तस्य प्रामाण्य-मुपपादयन्नेव स्वग्रन्थस्यापि तदुपपादयति— **निर्दोषेति सार्धश्लोकद्वयेन ।।** मन्त्रान् कांश्चिद्वाक्यविशेषानेवोद्धृत्य ग्रन्थोऽयं कृतः । अतोऽञ्जसा

प्रामाण्यमेतस्येति शेषः। विप्रलम्भकत्वादिदोषाभावो जडसाधारण इति **सम्पूर्णगुणेनेति**। विवक्षादिगुणशालिनेत्यर्थः। **स्वयं हि हरिणा** साक्षान्मूलरूपेण। तेनावतारे मोहादिप्रदर्शनेन तद्वत्त्वशङ्कासम्भवेऽपि न मूलरूपे तदवकाश इति सूचयति। तेन वक्तृदोषनिबन्धनो दोषो निरस्तः। **ब्रह्मण** इत्यनेन श्रोतृदोषनिबन्धनः। **सादरं** तदुद्धारे प्रीतिपूर्वकम्। कथितादित्यनेन प्रसङ्गदोषनिबन्धनः, संसारादुद्धारप्रकारस्य प्रार्थिततत्वेन प्रसङ्गदोषायोगादिति भावः।

नन्वस्तु तन्त्रसारो दोषत्रयनिबन्धनदोषत्रयशन्यः। तथापि नायमसावेव। 'अस्य संक्षेपशास्त्रत्वात्' 'ग्रन्थसङ्कोचतस्तथा' 'तन्त्रसारादुद्धृत्य ग्रन्थोऽयं कृतः' इत्यादि स्वोक्तिविरोधात्। तथाच तत्संग्राहकस्य तवैव दोषोक्तिः किं न स्यात् इत्यत उक्तम्– **आनन्देति**॥ न हि मुनिर्भ्रान्त्यादिमानिति भावः। दधीच्यादिनां भ्रान्तिदर्शनमस्ति। तद्व्यावृत्तये **आनन्दतीर्थेति**। आनन्दयतीत्यानन्दम्। पचाद्यच्। आनन्दं तीर्थं यस्येति विग्रहः। न हि दधीच्यादयः सुखसाधनशास्त्रकारिणः। प्रत्युत तमस्साधनशास्त्रकारिण एवेति हि पुराणादौ प्रसिद्धमिति भावः। इतोऽप्ययं ग्रन्थः नाप्रामाण्यशङ्कार्ह इत्याह— **ग्रन्थोऽयमिति**॥ अत्र चार्थावधारणं व्यावर्त्यते। **ज्ञानमर्थावधारणम्**। **अनुष्ठानं** तत्पूर्वकमन्त्रोच्चारणम्। होमाद्यनुष्ठानं वा। **उभयस्मात्** पाठध्यानाभ्यां, ध्यानानुष्ठानाभ्यां वा पाठध्यानपूर्वक्रानुष्ठानाद्वा इत्यर्थः। यद्यपीदं प्रामाण्यादिसमर्थनं प्रथमत एव कर्तव्यम्। तथापि शिष्यस्य मन्त्रोद्धाराकांक्षाया उत्कटत्वादत्रापि सङ्गतत्वाच्च न दोषः॥ १७६-१७७॥

**अ.सं.–** एवं कृततन्त्रसारसङ्ग्रहो भगवानस्मिन् ग्रन्थे अधिकारिणामादरजननाय पुनराप्तिपूर्वकत्वं सूचयन् स्वनाम कथयति– **निर्दोषेति**॥ सर्वज्ञेन मया कृतत्वादत्राविश्वासो न कर्तव्यमिति भावेनोक्तम्– **आनन्दतीर्थमुनिनेति**॥ मनु अवबोधन इति धातोः। **मुनिनेत्यस्य** सर्वज्ञेनेत्यर्थः। यस्तु स्वस्वरूपं जानाति तं प्रति तस्य ग्रन्थस्य फलमाह– **तन्त्रसारादुद्धृत्येति**॥ ननु तस्यैव ग्रन्थस्य प्रामाण्यं कुत इत्यतो

हरिप्रोक्तत्वादिति भावेनाह– **निर्दोषेति** ।। **स्वयं हरिणा** मूलरूपेण । निर्दोषेत्यनेनापटुकरणत्वादिदोषरहितत्वमुच्यते । गुणशब्देन विवक्षितार्थतत्त्वज्ञानादिकमुच्यते । कथितादित्यनेन विवक्षा । ब्रह्मणे सादरं कथितादित्यनेनाविप्रलम्भकत्वम् । एवञ्च परमाप्तश्रीहरिकृततन्त्रसारमूलकत्वादविश्वासो न कर्तव्य इति भावः ।।

एतद्ग्रन्थस्य महाफलहेतुत्वादवश्यमभ्यसनीयोऽयमित्याशयेनाह– **ग्रन्थोऽयमिति ।। पाठमात्रेण** अर्थानुसन्धानरहितपठनेन । **ज्ञानात्** केवलं ग्रन्थार्थज्ञानात्सकलाभीष्टसिद्धिः भवतीति किमु वक्तव्यमित्यर्थः । ततोऽप्य**नुष्ठानात्** तत्रोक्तकर्मानुष्टानात् किं वक्तव्यमित्यर्थः । **उभयस्मात्** ज्ञानादनुष्ठानाच्च पुनः किं वक्तव्यम् । अथवा ज्ञानादनुष्ठानादित्यस्य ज्ञानपूर्वकानुष्ठानादित्यर्थः । उभयस्मादित्यस्य तु पाठात् ज्ञानपूर्वकानुष्ठानाच्चेत्यर्थः ।। १७६-१७७ ।।

**गु.दी.–** एवं सर्वेषामत्यावश्यकमन्त्रादिकमभिधायात्राधिकारिणामतिशयेनादरजननाय 'विधिं विधाय सर्गादौ' (तं.सा.१-२) इत्यत्रोपपादितमपि तन्त्रसारस्याप्तिमूलकतया प्रामाण्यमतिविस्मरणशीलानां मन्दानां हृदि न सम्यक् तिष्ठतीति मन्दाननुजिघृक्षुः पुनराप्तिमूलकत्वं सूचयन् स्वज्ञानस्यापि महफलहेतुत्वात्स्वनामकथनपूर्वकं स्वकृतग्रन्थस्य नाम स्थापयति— **निर्दोषेति ।।** निर्दोषश्चासावखिलसम्पूर्णगुणश्च तेन हरिणा, **ब्रह्मणे** चतुराननाय **कथितात्** उपदिष्टात् तन्त्रसारात् उद्धृत्य, एकदेशमिति शेषः । अयं ग्रन्थः **कृतः** प्रणीतः । तेन 'तन्त्रसारसङ्ग्रहः' इति 'तन्त्रसारोद्धारः' इति वा नाम स्थापितं भवति । ननु ब्रह्मणे तन्त्रसारोपदेष्टृत्वमनुपपन्नं हरेः प्रयोजनाभावादित्यतः **स्वय**मित्युक्तम् । साक्षात्प्रयोजनानपेक्षयेति यावत् । तदभावेऽपि कृपापारवश्येन उपदेशोपपत्तेरिति भावः । ननु मूलतन्त्रसारगतार्थास्फुरणे कथं तदुद्धारो युक्तः स्यादित्यत उक्तं— **सादरमिति ।।** सादरमुद्धृत्येति सम्बन्धः । न हि तत्रादरवतः तदर्थास्फुरणमिति युज्यते । यो हि यत्रादरवान् तस्यैव तद्वस्तु सोपपादकं स्फुरतीति व्याप्तेः । न तन्त्रसारमूलकत्वमात्रेणायं ग्रन्थ आदरणीयः, अपि तु सुरवरावतारेण मया कृतत्वाच्चेत्याह— **आनन्दतीर्थेति ।।** कालिदासादय इव

नाहं पामरमनोरञ्जनार्थं ग्रन्थकर्ता येनाविद्यमानार्थवर्णनशङ्केत्याह– **मुनिनेति** ।। न हि मुनेः कर्म पामरमनोरञ्जन नारदादावदर्शनादिति भावः। तथापि नायमादरणीयोऽतिगहनार्थत्वादित्यत आह– **अञ्जसेति** ।। सुगमार्थतयेत्यर्थः ।।

एतद्ग्रन्थाभ्यासोऽत्रोक्तमन्त्रजपादिकं च कर्तव्यमित्याशयेन एतद्ग्रन्थार्थज्ञानादिना सकलाभीष्टसिद्धिर्भवतीति कैमुत्यन्यायेन उपपादयति— **ग्रन्थोऽयमिति** ।। **किमु ज्ञानादिति** ।। ग्रन्थार्थज्ञानात्सकलाभीष्टसिद्धिर्भवतीति किमु वक्तव्यमित्यर्थः। **अनुष्ठानात्** सर्वार्थज्ञानाभावेऽपि तत्रतत्रोपयुक्तयत्किञ्चिदनुष्ठेयज्ञानमात्रेणानुष्ठानात् किम्विति सम्बध्यते। **उभयस्मात्** सर्वार्थज्ञानात् तत्पूर्वककर्मानुष्ठनाच्चेत्युभयस्मात् किमु पुनः। वक्तव्यमिति शेषः। यद्वा **ज्ञानादनुष्ठानादिति** ज्ञानपूर्वकानुष्ठानादित्यर्थः। 'उभयस्मात्' इति पाठात् ज्ञानपूर्वकानुष्ठानाच्चेत्युभयस्मादित्यर्थः। ततश्चाधिकारिणस्त्रिविधाः। उत्तमा मध्यमा अधमाश्च। तत्रोत्तमानां 'आनन्दतीर्थमुनिना' इत्यत्र मुनिप्रणीतत्वोक्त्या प्रामाण्यनिश्चयः। मध्यमानां तु 'निर्दोषाखिलसम्पूर्णे'त्यत्रोक्तसर्वोत्तमप्रमाणतन्त्रसारमूलकत्वात्प्रामाण्यनिश्चयः। 'ग्रन्थोऽयं पाठमात्रेण' इत्युक्त्यैहिकामुष्मिकफलसंवादित्वयुक्त्या अधमानां प्रामाण्यनिश्चय इत्युक्तं भवति ।। १७६-१७७ ।।

**मङ्गाली–** एवं कृततन्त्रसारसङ्ग्रहो भगवानस्मिन् ग्रन्थेऽधिकारिणामादरजननाय पुनराप्तिसूचयन् स्वनाम कथयति– **निर्दोषेति** ।। सर्वज्ञेन मया कृतत्वात् अत्राविश्वासो न कर्तव्य इति भावेनोक्तम्– **आनन्दतीर्थमुनिनेति** ।। मनु अवबोधन इति धातोर्मुनिनेत्यस्य सर्वज्ञेनेत्यर्थः। यस्तु स्वस्वरूपं न जानाति तं प्रति स्वग्रन्थस्य मूलमाह– **तन्त्रसारादुद्धृत्येति** ।। ननु तस्यैव ग्रन्थस्य प्रामाण्यं कुत इत्यतो हरिप्रोक्तत्वादिति भावेनाह– **निर्दोषेति** ।। स्वयं हरिणा मूलरूपेण निर्दोषेत्यनेनापटुकरणत्वादिदोषरहितत्वमुच्यते। गुणशब्देन विवक्षितार्थतत्त्वज्ञानादिकमुच्यते। कथितादित्यनेन विवक्षा। ब्रह्मणे सादरं कथितादित्यनेनाविप्रलम्भकत्वं। एवं च परमाप्तहरिकृततन्त्रसारमूलकत्वादविश्वासो न कर्तव्य इति भावः ।।

एतद्ग्रन्थस्य महाफलहेतुत्वादवश्यमभ्यसनीयत्वमित्याशयेनाह– **ग्रन्थोऽय-**

**मिति ।। पाठमात्रेण** अर्थानुसन्धानरहितपठनेन । **ज्ञानात्** केवलं ग्रन्थार्थज्ञानात् सकलाभीष्टसिद्धिर्भवतीति किमु वक्तव्यमित्यर्थः । ततोऽ**प्यनुष्ठानात्** तत्रोक्तकर्मानुष्ठानात् । किमु वक्तव्यमित्यर्थः । **उभयस्मात्** ज्ञानादनुष्ठानाच्च पुनः किमु वक्तव्यम् । अथवा ज्ञानादनुष्ठानादित्यस्य ज्ञानपूर्वकानुष्ठानादित्यर्थः । उभयस्मादित्यस्य तु पाठात् ज्ञानपूर्वकानुष्ठानाच्चेत्यर्थः ।। १७६-१७७ ।।

स्वस्वरूपकथनपुरस्सरं स्वकृतग्रन्थस्य भगवति समर्पणम्

**तं.सा.** **यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ।।१७८ ।।**

**त.क.–** 'सुषुम्नायां विष्णुं वायुं च संस्मरेत्'(४-१६२) इत्युक्त्वा प्रद्युम्नादिरूपेण विष्णोः स्मरणप्रकार उक्तः । वायोः स्मरणप्रकारो वक्तव्यः । आनन्दतीर्थेति नाम्नो रूढत्वेनाप्युपपत्तेरभ्रान्तत्वे हेत्वन्तरं वाच्यम् । ग्रन्थश्चायं भगवति समर्पणीयः । अन्यथा 'न चार्पितं कर्म यदप्यकारणम्'(भाग.१-५-१२) इति वैय्यर्थ्यं स्यात् । अतस्त्रयं करोति– **यस्येति ।। यस्य** वायोः त्रीणि रूपाणि उदितानि अमुना वायुना ग्रन्थः कृतः इत्यनेन, हनुमद्भीममध्वानां, अन्तर्यामिरूपाणां प्राणापानादीनां, मूलरूपस्य वायोश्चात्यन्ताभेदेन स्मरणं वायोः कर्तव्यमिति सूचितम् । 'इत्थमेव निहितं' इत्यादिना मूलरूपस्य स यथाऽस्मानमित्यादेरभ्रान्तत्वात्,तथैवावतारोक्तेरभ्रान्ता- त्यन्तसदृशावतारत्वात् अयं मुनिरभ्रान्त इत्यनुमानान्तरमुक्तम् । 'केशवेऽमुना कृतोऽयं ग्रन्थोऽर्पितोऽस्तु, इत्यनेनार्पणं कृतमिति वेदितव्यम् ।। १७८ ।।

**अ.सं.–** एवं च समापितग्रन्थो भगवान् सर्वदेवचूडामणिः विज्ञान-महादिवाकरः श्रीमदानन्दतीर्थाचार्यवर्यः आनन्दतीर्थमुनिनेति अस्य ग्रन्थस्य परमाप्तिमूल(क)त्वं सूचयति । तत्समर्थनाय यथा भगवत्स्वरूपज्ञानं

मोक्षाद्यशेषपुरुषार्थसाधनं तथा स्वस्वरूपज्ञानस्याप्यशेषपुरुषार्थान्तरङ्गसाधनत्वेन बळित्थेत्यादिसकलश्रुतिस्मृतिप्रसिद्धमाहात्म्यस्वरूपं ज्ञानाधिकारिणामाविष्कुर्वन् स्वकृतं ग्रन्थप्रवरं सर्वसत्कर्मसम्पूज्ये भगवति जगज्जननीपतौ श्रीनारायणे समर्पयति– **यस्येति** ।। **यस्य** वायोः । **देवस्य** दिव्यानि क्रीडादिगुणयुक्तानि त्रीणि रूपाणि **वेदवचने** 'बळित्था तद्वपुषे धायि दर्शतं' इत्यादिवेदवचने **उदितानि** प्रतिपादितानि । **एतत्** एतस्य यत् तृतीयं **वपुः** रूपं **अमुना** तृतीयेण रूपेण **केशवे** केशवविषये **ग्रन्थः** तन्त्रसाराख्यः कृत इत्यन्वयः । कीदृशं तस्य मूलरूपं कानि च त्रीणि रूपाणि किंभूतानि तानि चेत्यत आह– **तदिति** ।। तत् वायोः मूलरूपं **अलं बट्** पूर्णबलात्मकं **दर्शतं** ज्ञानपूर्णं **भर्गः** जगद्भरणगमनकर्तृ **महत्** पूज्यं श्रेष्ठं वा । **इत्थमेव** अवतारार्थमेव **निहितं** भगवता प्रेरितं रूपत्रयेणावतीर्णं च । तत्र रूपेषु **प्रथमकं** हनुमदाख्यं **वपुः** रूपं **रामवचोनयं** रामस्य सीतापतेः वचांसि सन्देशरूपाणि सीतां प्रति नीतवत् । रामं प्रति सीतावचनानि नीतवद्वा । अथवा रामस्य वचांसि रामचरितविषयकाणि मूलरामायणादिरूपाणि वचनानि शिष्येषु नयति अतिदिशति व्याख्यातीति यावत् । शिष्येषु रामप्रतिपादकमूलरामायणादिग्रन्थव्याख्यानकृदिति भावः । **द्वितीयं** भीमनामकं **पृक्षः** कुरुपृतनाक्षयकरः । तृतीयं वपुः **मध्वः** आनन्दरूपहरिप्रतिपादकशास्त्रनिर्मातृत्वात् मध्वाभिधम्-

मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः ।। इत्युक्तेः ।

मधोः आनन्दरूपस्य हरेः वं तीर्थं शास्त्रं यस्मात्स मध्व इति विग्रहः । भूर्भुवःसुवरित्यत्र सुवरित्यत्र स्वरितिवत् मधुव इत्यस्य मध्व इत्यपि निर्देशः साधुः । अतः परमाप्तप्रणीतत्वादयं ग्रन्थः सकलसज्जनैरादरेणाङ्गीकार्य इति भावः ।। १७८ ।।

**गु.दी.**– एवं समापिततन्त्रसारसङ्ग्रहाख्यग्रन्थो भगवान् नाकनायकाधिनायक-पिनाकिमुखभक्तजनाभीप्सितसकलपुरुषार्थप्रवर्षककल्पद्रुमः श्रीमदाचार्यवर्यः

भगवत्स्वरूपज्ञानमिव स्वस्वरूपज्ञानस्याप्यशेषपुरुषार्थान्तरङ्गकारणत्वेन श्रुत्यादिसकलप्रमाणसिद्धत्वात्स्वस्वरूपं ज्ञानाधिकारिणामाविष्कुर्वन् स्वकृतं ग्रन्थं भगवति समर्पयति— **यस्येति** ।। **यस्य** वायोर्देवस्य बळित्थेत्यादिवेदवचने **दिव्यानि** क्रीडादिगुणसंयुक्तानि त्रीणि रूपाण्युदितानि **अमुना** वायुना अयं ग्रन्थः केशवे कृत इत्यन्वयः । तस्य वायोर्मूलरूपं **अलं** सम्यक् **बट्** बलात्मकं **दर्शतं** ज्ञानरूपं **भर्गः** परमात्मानं बिभर्ति गच्छति चेति, 'भारतिज्ञानरूपत्वात्' (ऋ.भा.अ१-सू१-श्लो३) इति ऋग्भाष्योक्तरीत्या भारतिज्ञानरूपत्वाद्वा । मुद्गगर्गादिशब्दवत्कर्तरि गप्रत्ययविधानात् । भरणकर्तृत्वाद्वा । **महत्** पूज्यम् । न केवलमेवं मूलरूपमपि तु यस्यावतारेषु निहितं रूपम् **इत्थमेव** बलाद्यात्मकमेव । तत्र प्रथमकं रूपं रामवचोनयं द्वितीयं वपुः **पृक्षः** पृषोदरादित्वात् तकारलोपः । यस्य यत्तृतीयं वपुः एतन्मध्व इति । आनन्दरूपस्य हरेः प्रतिपादकशास्त्रनिर्मातृमध्वाभिधमिति ।। १७८ ।।

**मङ्गाली**— एवं समापितग्रन्थो भगवान् सर्वदेवचूडामणिः श्रीमदानन्दतीर्थाचार्यवर्यः आनन्दतीर्थमुनिनेति स्वग्रन्थस्य यदाप्तिमूलत्वं सूचितं तत्समर्थनाय यथा भगवत्स्वरूपज्ञानं मोक्षाद्यशेषपुरुषार्थसाधनं तथा स्वस्वरूपज्ञानमपि अशेषपुरुषार्थान्तरङ्गकारत्वेन बळित्थेत्यादिसकलश्रुतिस्मृतिप्रसिद्धमित्यात्मस्वरूपं ज्ञानाधिकारिणामाविष्कुर्वन् स्वकृतं ग्रन्थप्रवरं सर्वसत्कर्मसंपूज्ये भगवति जगज्जननीपतौ श्रीमन्नारायणे समर्पयति— **यस्येति** ।। **यस्य** वायोर्देवस्य **दिव्यानि** क्रीडादिगुणयुक्तानि त्रीणि रूपाणि **वेदवचने** बळित्थेत्यादिवेदवचने **उदितानि** प्रतिपादितानि । **एतत्** एतस्य यत्तृतीयं **वपुः** रूपं । **अमुना** तृतीयेन रूपेण **केशवे** केशवविषये **ग्रन्थः** तन्त्रसराख्यः कृत इत्यन्वयः । कीदृशं तस्य मूलरूपं कानि च त्रीणि रूपाणि किं भूतानि चेत्यत आह— **अलमिति** ।। **तत्** वायोः मूलं **अलं बट्** पूर्णबलात्मकं **दर्शतं** ज्ञानपूर्णं **भर्गः** जगद्भरणनकर्तृ **महत्** पूज्यं श्रेष्ठं वा । **इत्थमेव** अवतारार्थमेव एवमेव **निहितं** भगवता प्रेरितं रूपत्रयेणावतीर्णं च । तत्र रूपेषु प्रथमकं हनुमदाख्यं

**वपुः** रूपं **रामवचोनयं** रामस्य सीतापतेः वचांसि सन्देशरूपाणि सीतां प्रति **नीतवत्** रामं प्रति सीतावचनानि नीतवद्वा । अथवा रामस्य वचांसि रामचरितविषयकाणि मूलरामायणादिरूपाणि वचनानि शिष्येषु नयति उपदिशति व्याख्यातीति यावत् । शिष्येषु रामप्रतिपादकमूलरामायणादिग्रन्थव्याख्यानकृदिति भावः । द्वितीयं भीमनामकं **पृक्षः** कुरुपृतनाक्षयकरं । तृतीयं वपुः **मध्वः** आनन्दरूपहरिप्रतिपादकशास्त्रनिर्मातृत्वात् मध्वाभिधं ।

मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थस्स्यात् तृतीया मारुतीतनुः ।। इत्युक्तेः ।

मधोरानन्दरूपस्य हरेः वं तीर्थं शास्त्रं यस्मात्समध्व इति विग्रहः । भूर्भुवः सुवरिति अत्र सुवरित्यस्य स्वरितिवत् मधुव इत्यस्य मध्व इत्यपि निर्देशः साधुः । अतः परमाप्तप्रणीतत्वादयं ग्रन्थः सकलसज्जनैरादरेणाङ्गीकार्य इति भावः।।१७८ ।।

अन्तिममङ्गलम्

**तं.सा.** **अशेषदोषोज्झितपूर्णसद्गुणं सदा विशेषोपगतो(षावगतो) रुरूपम् ।**
**नमामि नारायणमप्रतीपं सदा प्रियेभ्यः प्रियमादरेण।।१७९।।**

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे
चतुर्थोऽध्यायः सम्पूर्णः ।।

**त.क.–** ग्रन्थान्ते मङ्गलमाचरति— **अशेषेति ।।** पूर्णसद्गुणमित्यनेन तत्तन्मन्त्रप्रतिपाद्यमन्त्रविशेषशालित्वं समर्थितम् । मन्त्रजाप्यानां बहुत्वात् प्रतिपाद्यस्य चैकत्वात् तद्ध्यानानुपपत्तिरिति शङ्कां वारयति— **उरुरूपमिति ।।** अत एव भेदं वारयति— **विशेषोपगतेति ।।** भेदप्रतिनिधिना विशेषेणोपगतमुरुरूपम् । न तु भेदेनेत्यर्थः । अप्रतीपमित्यनेन तत्तन्मन्त्रोक्तफलदातुरेव तत्प्रतिपाद्यता । भगवतः प्रतीपकृद्विहितविघ्नपरिहारासामर्थ्यान्न युक्ता प्रतिपाद्यतेति शङ्का निरस्ता । प्रतीपस्याभावात् । अत एवासामर्थ्याद्यशेषदोषोज्झि-

तमित्युक्तमिति भावः। 'प्रियेभ्योऽप्यादरेण प्रियं' इत्यनेन तत्र ग्रन्थसमर्पणे निमित्तमुक्तम्। आदरेण नमामीति वा सम्बन्धः। प्रियत्वमौपाधिकं, कादाचित्कं च न भवतीत्याह— **सदेति**॥ न ममान्येषामिव वन्दनं कार्योपाधिकमित्याह 'सदा नमामि' इत्यनेन। सर्वमतिमङ्गलम्।

यथाशक्ति व्यापृतया बुद्ध्या निर्मितया मया।
व्याकृत्या तन्त्रसारस्य प्रीयतां शेषसंस्तरः॥

यैर्हृदिस्थैर्महाचार्यैर्व्याख्या देवैर्विनिर्मिता।
येषामनुग्रहाद्वाऽपि प्रीयन्तां ते तया भृशम्॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां
लक्ष्मीनारायणपूज्यपादानां शिष्येण रघुनाथयतिना कृतायां
तन्त्रसारसंग्रहटीकायां तत्त्वकणिकायां चतुर्थोऽध्यायः॥

श्रीमद्व्यासमुनीशहंसविलसत्तद्वंशसत्पद्मिनी
प्रोद्यच्छ्रीरघुनाथतीर्थयतिराट्पङ्केरुहादुद्भवा।
पूर्णप्रज्ञविनिर्मिताखिलमहातन्त्रोद्धृतेदीपिका
विन्यस्ता विदुषा सुतत्त्वकणिका भूयाद्धरेः प्रीतये॥

('श्रीमत्परमहंस' इत्यादिसमाप्तिवचनानन्तरं मातृकायामेकस्यां परिदृश्यमानोऽयं श्लोकः प्रायशः लिपिकारेण केनचन विदुषा विरच्य अन्ते निवेशित इति भाति।)

**अ.सं.–** स्वस्वरूपप्रकटनेन ग्रन्थसमाप्तिमरोचयमानः भगवन्माहात्म्यमुपदर्शयन् प्रणमति– **अशेषेति**॥ अशेषदोषोज्झितश्चासौ पूर्णसद्गुणश्चेति विग्रहः। **सदा** सर्वदा, विशेषः परप्रतियोगिकोत्कर्षापकर्षरूपः अपगतः येभ्यः तानि ऊरूणि रूपाणि यस्य तं वा। आहिताग्न्यादित्वात् अपगतशब्दस्य परनिपातः। अन्योन्यं नीचोत्तमरहितानन्तरूपमिति भावः। 'सदाविशेषावगतोरुरूपं' इति पाठे विशिष्येते इति विशेषाः विशिष्टाः रमाब्रह्मादयः। तैर्विशेषेण

ज्ञानानन्दाद्यपरिमितविशेषवत्तया अवगतमुरु उत्कृष्टं पूर्णं वा रूपं स्वरूपं यस्य स तथोक्तः । विशेषेण साकल्येनावगतं विदितमुरु स्वरूपं येनेति वा तमित्यर्थः । **अप्रतीपं** अप्रतिद्वन्द्वमसदृशमिति यावत् । **प्रियेभ्यः** प्रीतिविषयेभ्यः देहादिसर्ववस्तुभ्यः सदा प्रियं नारायणमादरेण नमामीत्यशेषमतिमङ्गलम् ।।

मन्त्रवर्णपदैर्वाच्यं सर्वपूज्यं सुखप्रदम् ।
नरादिकान्तोपास्यं च वन्दे श्रीमध्ववल्लभम् ।।

इत्थं सत्यनिधिच्छल्लारिनरसिंहाचार्यशिष्येण वै
शेषेणारचितो दशप्रमतिजश्रीतन्त्रसारस्य तु ।।
व्याख्याः वीक्ष्य सदर्थसङ्ग्रह उरूः सत्सम्प्रदायगाताः
सम्पूर्णः समभूदनेन गुरुहृद्गः श्रीपतिः प्रीयताम् ।।

श्रीमद्धर्मपुरीवासिपुरुषोत्तमसंज्ञिनाम् ।
आचार्याणामात्मजेन निवृत्तिक्षेत्रवासिना ।।

च्छल्लारिनरसिंहार्यसत्यनिध्यार्ययोः कृतात् ।
शिष्येण शेषविदुषा तन्त्रसारार्थसङ्ग्रहात् ।
लब्धं पुण्यमवाप्नोतु स्वरूपोद्धारकृद्गुरुः ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तन्त्रसारसङ्ग्रहे
श्रीमत्सत्यनिधितीर्थश्रीमच्छलारि नरसिंहाचार्याणां शिष्येण शेषेण
विरचिते चतुर्थोऽध्यायः ।। ४ ।।

**गु.दी.**– अथ तन्त्रसारसङ्ग्रहकर्ता विज्ञानमहादिवाकरः यं गुणगणार्णवत्तया प्रतिपादितवान् यस्मिंश्चात्मनो निरुपाधिकप्रीतिः तमेव स्तुवन् स्वस्वरूपप्रकटनेन ग्रन्थसमाप्तिमरोचयमानोऽन्ते भगवन्माहात्म्यमुपदर्शयन् प्रणामेन प्रीणयति— **अशेषेति** ।। नारायणं नमामीत्युत्तमपुरुषप्रयोगादेवाहमिति कर्ता सिद्ध्यति । नानिर्धारितस्वरूपस्य वन्दनं युक्तम् । न च लक्षणेन विना निर्धारणमित्यतोऽध्यायचतुष्टयनिर्णीतलक्षणान्याह– **अशेषदोषोज्झितपूर्णसद्गुण-**

**मिति ।।** अशेषदोषोज्झितश्चासौ पूर्णसद्गुणश्च तम् । 'विशेषणं विशेष्येण बहुलम्' (पा.सू.२-१-५७) इत्यत्र बहुलग्रहणात् समासः । अत्र निर्दोषत्वग्रहणेन पारतन्त्र्यराहित्यादीनि । तदर्थमेवाशेषेत्युक्तम् । पूर्णगुणमित्यनेन परिपूर्णानन्दत्वादीनि चानन्तलक्षणानि सूचितानि । वैशेषिकादिभिर्दुःखादीनामपि गुणव्यवहारात् **सदिति** । ननु भगवतः शरीरमस्ति न वा ? आद्ये मरणादिदोषप्रसङ्गः । द्वितीये इन्द्रियविकलस्य ज्ञानादिगुणाभावप्रसङ्ग इत्यत उक्तम्— **विशेषेति ।। विशेषो** भेदः तस्मादपगतम् उरु सच्चिदानन्दरूपात्मकत्वादुत्कृष्टं रूपं शरीरं यस्य स तथा । अस्त्येवेशस्य शरीरम् । तच्च सच्चिदानन्दात्मकत्वेन तदभिन्नत्वेन चाक्षयमिति न कश्चिद्दोष इति । यथोक्तम्—

अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ।
तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित् ।। इति (अनु.व्या.३-२-८) ।

'सदाऽविशेषावगतोरुरूपम्' इति क्वचित्पाठः । **सदा** विद्यमाना यावल्लक्ष्यभाविनो ये **विशेषाः** जगज्जन्मादिकारणत्वाद्यसाधारणधर्माः तैरवगतं रूपं यस्येति वा । सदाऽविशेषितत्वेन परस्परमुत्कर्षरहितत्वेनावगतानि उरुरूपाणि अनन्तानि अवताररूपाणि अन्तर्यामिरूपाणि च यस्य तमित्यर्थः । न हि देवतावन्दनं व्यसनितया क्रियते किन्तु पुरुषार्थापेक्षितया । विशिष्टैव देवता तस्येष्टे इति विशिष्टत्वमुपपाद्य भक्त्याद्युपेतमेव हि वन्दनं सफलम् । तच्चेष्टायामेव देवतायामुपपद्यत इत्यभिप्रायेण इष्टत्वं प्रदर्शयति— **प्रियेभ्यः प्रियमिति ।। प्रियेभ्यः** आत्मादिभ्यः **सदा** संसारे मुक्तौ च **प्रियं** मुख्येष्टम् । ननु न तस्येष्टत्वमुपपन्नम्, पापादिकारयितृत्वेन तत्फलदातृत्वेन च सर्वविरोधित्वादित्यतः— **अप्रतीपमिति** । न विद्यते प्रतीपो विरोधो यस्यासौ अप्रतीपस्तम् । तत्कथमित्यतस्तत्रापि— **अप्रतीपमिति** । अप्रतिगताः आपः कर्माणि यस्मिन्निति अप्रतीपः तम् । कर्मसापेक्षमिति यावत् । 'आपो दंसः सूदं कर्म' इति कर्मनामसु पाठात् (निरुक्तम्) । 'तस्मिन्नपो मातरिश्वा दधाति' (ई.उ.४) इति प्रयोगाच्च । अनादिपूर्वकर्मादिकमपेक्ष्य पापादि कारयित्वा तत्फलदातृत्वान्न विरोधः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (पा.सू.६-३-९७) एभ्यः परस्य कृतसमासान्तस्य

अप्शब्दस्य ईत् स्यात्। द्विर्गताः आपो यस्मिन्निति द्वीपम्। अन्तर्गताः आपो यस्मिन्निति अन्तरीपम्। प्रतिगता आपो यस्मिन्निति प्रतीपम्। सम्यग्गता आपो यस्मिन्निति समीपम् इति समासप्रक्रियायां साधितत्वादप्रतीपशब्द उक्तार्थे साधुः। **आदरेण** श्रद्धातिशयेन इति श्रद्धादिसाहित्यलक्षणां प्रणामस्य समीचीनतामाह। तादृश एव हि प्रणामो भवत्यभिमतसिद्धेरङ्गम्। सदा नमामीत्युक्त्या न मम नरायणवन्दनं ग्रन्थप्रचयादिप्रयोजनोद्देशेन। किन्तु स्वभाव एवेति सूचितं भवतीत्यशेषमतिमङ्गलम् ॥

पराशराब्धिसम्भूतं वेदव्यासकलानिधिम् ।
ब्रह्मसूत्रादिसच्छास्त्रकौमुदीयुतमाभजे ॥ १ ॥

यच्छास्त्रश्रवणादेव भवन्ति विबुधा नराः ।
तं वन्दे श्रीमदाचार्यं तच्छास्त्रावृत्तयेऽन्वहम् ॥ २ ॥

श्रीयादवाचार्यसुपादिशष्यश्रीश्रीनिवासार्यगुरूपदिष्टः ।
अर्थो निबद्धोऽत्र विचार्य सद्भिरार्यैरुपेक्ष्यो न भवेदतोऽयम् ॥ ३ ॥

गृहीतुरिव दीपस्य स्खलनं स्यात् पदे पदे ।
तथापि मम तत्सन्तः शोधयन्तु कृपावशात् ॥ ४ ॥

श्रीनिवासार्यसूनूत्था तन्त्रसारार्थभासिका ।
सद्भार्जानन्ददात्रीयं भूयाद्गुर्वर्थदीधितिः ॥ ५ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारसङ्ग्रहस्य टीकायां श्रीमद्यदुपत्याचार्यच्छात्रवर्यश्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचितायां गुर्वर्थदीधितौ चतुर्थोऽध्यायः समाप्तः ॥

**मङ्गाली–** स्वस्वरूपककथनेन ग्रन्थसमाप्तिमरोचयमानः भगवन्माहात्म्यमुपदर्शयन् प्रणमति– **अशेषेति** ॥ अशेषदोषोज्झितश्चासौ पूर्णसद्गुणश्चेति विग्रहः। **सदा** सर्वदा, विशेषः परस्परप्रतियोगिकोत्कर्षरूपः अपगतो येभ्यः तानि रूपाणि यस्य तम्। आहिताग्न्यादित्वादपगतशब्दस्य परनिपातः। अन्योन्यं

नीचोच्चत्वरहितानन्तरूपमिति भावः। 'सदा विशेषावगतोरुरूपम्' इति पाठे विशिष्यन्त इति विशेषाः विशिष्टाः रमाब्रह्मादयः, तैर्विशेषेण ज्ञानानन्दाद्य-परिमितविशेषवत्तयाऽवगतम्। उरु उत्कृष्टं पूर्णं वं उरुस्वरूपं येनेति वा तमित्यर्थः। **अप्रतीपं** अप्रतिद्वन्द्वं असदृशमिति यावत्। **प्रियेभ्यः** प्रीतिविषयेभ्यः देहादिसर्ववस्तुभ्यः सदा प्रियं नारायणमादरेण नमामीत्यशेषमतिमङ्गलम्।

नरसिंहं रमानाथमनन्तगुणसागरम्।
अशेषदोषविधुरं वन्दे मन्त्रार्थमुत्तमम्॥ १॥

मङ्गलधर्मपुरिणा श्रीजनार्दनसूनुना।
यदकारि मया तेन तन्त्रसारार्थसङ्ग्रहः॥ २॥

यत्पुण्यं भावि तत्सर्वमवाप्नोतु गुरुर्मम।
प्रीयतां तेन सर्वात्मा सज्जनानां हृदि स्थितः॥ ३॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तन्त्रसारस्य तत्तट्टीकाकारोक्तार्थसङ्ग्रहरूपायां मङ्गलधर्माचार्यरचितायां टीकायां चतुर्थोऽध्यायः॥

॥ श्रीकृष्णार्पणमस्तु॥

# तन्त्रसारसङ्ग्रहश्लोकार्धानुक्रमणिका



भारतस्य प्राचीनतमशास्त्रेषु तन्त्रशास्त्रमन्यतमम् । अस्मत्प्राचीनानामलौकिकाया बुद्धिशक्तेः, अप्रतिमायाः सिद्धेः, अपूर्वायास्तत्त्वान्वेशणप्रज्ञायाश्च निदर्शनायमानं शास्त्रं तन्त्रशास्त्रम् । परमकारुणिकः परमात्मा समेषां सज्जनानां वाञ्छितार्थप्राप्तये विष्णुरूपेण तन्त्रसारसङ्ग्रहे सप्तकोटिमहामन्त्रानुपदिदेश । स च ग्रन्थराजः अस्मद्दौर्भाग्यादनुलपब्धः । अपि च तत्रोपदिष्टान् तान् सर्वान् जपुं सर्वे न प्रभवन्ति । अतः संसिद्धसप्तकोटिमहामन्त्राः श्रीमदानन्दतीर्थभगवत्पादाचार्यास्तेषु मन्त्रेषु सारभूतान् द्वासप्ततिसंख्याकानष्टसङ्ख्याकांश्च मन्त्रान् स्वीये तन्त्रसारसङ्ग्रहे उपदिदिशुः । सर्वाभीष्टदाः सर्वारिष्टनिवारकाश्चैते मन्त्राः । भगवतः षोडशोपचारपूजाविधानं होम-तदङ्गस्थण्डिलादिविधानं चक्राब्जादिमण्डलक्रममर्चानिर्माणप्रकारं देवालयनिर्माणप्रकारं च प्रत्यपीपदत्राचार्यवर्यः ।।

तन्त्रसारसङ्ग्रहग्रन्थोऽयमाचासम्बन्धिग्रन्थेषु मूर्धन्यतमः । श्रीमदाचार्यैर्विचिताः सदाचारस्मृति-श्रीकृष्णामृतमहार्णव-यतिप्रणवकल्प-सन्यासपद्धत्यादयोऽन्ये ग्रन्थाः तन्त्रसारसङ्ग्रहस्य पूरकाः तत्सम्बद्धानेकविषयस्फुटीकरणाय प्रवृत्ताः । श्रीमध्वाचार्याणामनुजैर्विष्णुतीर्थैर्विरचिता विष्णुतीर्थीयेत्यवेव प्रथां भजमाना सन्यासपद्धतिरपि तन्त्रसारसङ्ग्रहव्याख्यानरूपा एव । एवमेव नारायणपण्डिताचार्यैर्विरचिता योगदीपिका, श्रीमज्जयतीर्थमुनिविरचिता पद्यमाला चेत्यादयो नैके ग्रन्थाः तन्त्रसारसम्बद्धविषयप्रकाशनेन तद्व्याख्यानभूता एव ।।

ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ।
किमुज्ञानादनुष्ठानादुभयस्मात्पुनः किमु ।।

इत्याचार्यभणितेरव ग्रन्थस्य महत्वं द्योतयति । नारायणपण्डिताचार्या अपि मध्वविजये तन्त्रसारसङ्ग्रहमहत्वं प्रत्यपीपदन्–

कस्तन्त्रसारं सम्प्राप्य न स्यात् पर्याप्तवाञ्छितः ।
अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ।। इति ।

चतुरध्यायात्मकेऽस्मिन् ग्रन्थेऽष्टमहान्त्राः, इतरविष्णुमन्त्राः, अन्यदेवतामन्त्राः, देवपूजापद्धतिः, तत्त्वन्यासः, मातृकान्यासः, पीठपूजा, आवरणपूजा, कलशपूजाविधानं, होमकुण्डलक्षणं, होमविधानानि, हवनीयद्रव्याणि, प्रतिमानिर्माणं, प्रतिमानिर्माणप्रकारः, शिलाविचारः, शिलापरीक्षणविधिः, देवताप्रतिष्ठानं, अधिवासादि, अङ्कुरार्पणविधिः, सम्प्रोक्षणविधिः, जीर्णदेवालयोद्धारप्रकारः, वास्तुपूजाविधिः, यन्त्रलेखनप्रकारः, यम-नियम-प्राणायाम-प्रत्याहारादीनि, अष्टाङ्गयोगः, सषुम्नादिनीडीनां विवरणं इत्यादीनां समेषां तन्त्रशास्त्रसम्बद्धानां विषयानां समग्रपरिचयात्मकः निर्णयात्मकश्चायं ग्रन्थः 'तन्त्रसारसङ्ग्रहः' ।।